भवप्रपञ्चमात्मीयं तस्या बोधविधित्सया ।
उपमाद्वारतः प्राह तीव्रं संवेगकारणम् ॥८६॥
श्रुत्वा च तं प्रबुद्धोऽसौ लघुकर्मतया स्वयम् ।
पौण्डरीकः क्षणादेव प्रसंगश्रवणादपि ॥८७॥
सा पुनः कथितेऽप्युच्चैः प्राचीनमलदोषतः ।
अबुध्यमाना तेनैव भूयो भूयः प्रचोदिता ॥८८॥
अथ कृच्छ्रेण साप्येवं प्रबुद्धा विहितं ततः ।
सर्वैरेवात्मनः पथ्यं गतानि च शिवालयम् ॥८९॥
कथाशरीरमेतच्च धारणीयं स्वमानसे ।
प्रस्तावे चाष्टमे सर्वमिदं व्यक्तीभविष्यति ॥१००॥

एवं स्थिते ॥

यतः सर्वज्ञसिद्धान्तवचनामृतसागरात् ।
निष्यन्दबिन्दुभूतेयमाकृष्टा परमार्थतः ॥१॥
ततो दुर्जनवर्गोऽस्याः श्रवणं नाप्तुमर्हति ।
कालकूटविषं नैव युज्यतेऽमृतबिन्दुना ॥२॥
अतो दुर्जनवर्गस्य नेह दोषविचारणम् ।
क्रियते पापकारिण्या पापानां कथयाप्यलम् ॥३॥
स्तुतोऽपि दुर्जनः काव्ये दोषमेव प्रकाशयेत् ।
निन्दितस्तु विशेषेण युक्तातोऽस्यावधीरणा ॥४॥

अथवा ॥

निन्दायामात्मदौर्जन्यं स्तवेऽप्यनृतभाषणम् ।
भवेद्दुर्जनवर्गस्य ततो युक्तापकर्णना ॥५॥

ततोऽस्याल्पलघुकर्माणः क्षीरनीरधिसंनिभाः ।
गम्भीरहृदया भव्याः सज्जनाः श्रवणोचिताः ॥६॥
तेषामपि न कर्त्तव्या निन्दा नापि प्रशंसनम् ।
मौनमेव परं श्रेयस्तत्रेदं हन्त कारणम् ॥७॥
तन्निन्दाथा महापापमनन्तगुणशालिनाम् ।
स्तवोऽपि दुष्करस्तेषां मादृशैर्जडबुद्धिभिः ॥८॥

किंच ॥

अस्तुता अपि ते काव्ये पश्यन्ति गुणमञ्जसा ।
दोषमाच्छादयन्त्येवं प्रकृतिः सा महात्मनाम् ॥९॥
अतस्तेषां स्तवेनालं केवलं ते महाधियः ।
अभ्यर्थनीयाः श्रवणे तेनेदमभिधीयते ॥१०॥
भो भव्याः सुमनीभूय कर्णं दत्वा निबोधत ।
यूयं मदनुरोधेन वक्ष्यमाणं मया क्षणम् ॥११॥
अनन्तजनसंपूर्णमस्ति लोके सनातनम् ।
अदृष्टमूलपर्यन्तं नाम किंचिन्महापुरम् ॥१२॥

तच्च कीदृशम् ॥

अभ्रोत्तुङ्गमनोहारिसौधपङ्क्तिसंकुलम् ।
अलब्धमूलपर्यन्तं हट्टमार्गविराजितम् ॥१३॥
अपारैर्भूरिविस्तारैर्नानापण्यैः प्रपूरितम् ।
पण्यानां मूल्यभूताभिराकीर्णं रत्नकोटिभिः ॥१४॥
विचित्रचित्रविन्यासैर्भ्राजते देवमन्दिरैः ।
आचित्तयालहृदयैर्निश्चलीकृतलोचनैः ॥१५॥

शीतोष्णदंशमशकक्षुत्पिपासाद्युपद्रवैः ।
बाध्यमानो महाघोरनारकोपमवेदनः ॥२७॥
कृपास्पदं सतां दृष्टो हास्यस्थानं समानिनाम् ।
बालानां क्रीडनावासो दृष्टान्तः पापकर्मणाम् ॥२८॥
अन्येऽपि बहवः सन्ति रोरास्तत्र महापुरे ।
केवलं तादृशः प्रायो नास्ति निर्भाग्यशेखरः ॥२९॥
तस्य तस्य गृहे लप्स्ये भिक्षामित्यादि चिन्तयन् ।
ध्यानमापूरयन् रौद्रं विकल्पाकुलमानसः ॥३०॥
स किंचिन्नैव लभते केवलं परिताम्यति ।
कदन्नलेशमात्रं तु राज्यवत्प्राप्य तुष्यति ॥३१॥
अवज्ञया जनैर्दत्तं भुञ्जानस्तत्कदन्नकम् ।
शक्रादपि बिभेत्युच्चैरयमेतद्ग्रहीष्यति ॥३२॥
तृप्तिस्तेनापि नैवास्य बुभुक्षा वर्द्धते परम् ।
जीर्यत्तत्पीडयत्येनं कृत्वा वातविसूचिकाम् ॥३३॥
अन्यच्च सर्वरोगाणां निदानं तदुदाहृतम् ।
तदेव पूर्वरोगाणामभिवृद्धिकरं परम् ॥३४॥
स च तन्मन्यते चारु वराकोनान्यदीक्षते ।
सुस्वादुभोजनास्वादो न स्वप्नेऽप्यस्य गोचरः ॥३५॥
उच्चावचेषु गेहेषु नानाकारासु वीथिषु ।
सकृद्भ्रष्टस्तत्पुरं तेन भ्रान्तमश्रान्तचेतसा ॥३६॥
एवं पर्यटतस्तस्य महापापहतात्मनः ।
न ज्ञायते कियान् कालो दुःखग्रस्तस्य संचितः ॥३७॥

अथ तत्र पुरे राजा सुस्थितो नाम विश्रुतः ।
समस्तसत्त्वसंघस्य स्वभावादतिवत्सलः ॥३८॥
अटाट्यमानोऽसौ रङ्कः संप्राप्तस्तस्य मन्दिरम् ।
स्वकर्मविवरो नाम तत्रास्ते द्वारपालकः ॥३९॥
स द्वारपालस्तं रोरं दृष्ट्वातिकरुणास्पदम् ।
प्रावेशयत् कृपालुत्वादपूर्वं राज्यमन्दिरम् ॥४०॥

तच्च कीदृशम् ॥

रत्नराशिप्रभाजालैस्तमोबाधाविवर्जितम् ।
रणन्नूपुराद्युत्थभूषणारावसुन्दरम् ॥४१॥
देवदूष्यांशुकोल्लोचलोलमौक्तिकमालिकम् ।
ताम्बूलवासिताशेषलोकवक्त्रमनोहरम् ॥४२॥
विचित्रभक्तिविन्यासैर्गन्धोद्धुरसुवर्णकैः ।
आकीर्णं प्राङ्गणं माल्यैः कलालिकुलगीतिभिः ॥४३॥
विलेपनविमर्देन कर्दमीकृतभूमिकम् ।
प्रहृष्टसत्त्वसंदोहवादितानन्दमर्दलम् ॥४४॥
अनन्तस्पन्दसम्भारतेजःप्रलयीभूतशत्रुभिः ।
बहिःप्रशान्तव्यापारै राजवृन्दैरधिष्ठितम् ॥४५॥
साक्षाद्भूतजगच्चेष्टैः प्रज्ञावज्ञातवैरिकैः ।
समस्तनीतिशास्त्रज्ञैर्मन्त्रिभिः परिपूरितम् ॥४६॥
पुरः परेतभर्त्तारं येऽभिवीक्ष्य रणाङ्गणे ।
न क्षुभ्यन्ति महायोधास्तैरसंख्यैर्निषेवितम् ॥४७॥

कोटीकोटीः पुराणां ये पालयन्ति निराकुलाः।
ग्रामकरानसंख्यांश्च व्याप्तं तादृग्नियुक्तकैः ॥४८॥
येऽत्यन्तवत्सला भर्तुर्गाढं विक्रमशालिनः।
आकीर्णं तादृशैरन्तः सूरिभिस्तलवर्गिकैः ॥४९॥
प्रमत्तप्रमदालोकनिवारणपरायणैः।
निवृत्तविषयासंगे राजते स्थविराजनैः ॥५०॥
अनेकभटसंघातैराकीर्णं तत्समंततः।
लसद्विलासिनीसार्थैर्निर्जितामरधामकम् ॥५१॥
कलकण्ठैः प्रयोगज्ञैर्गायद्भिर्गायनैः परैः।
वीणावेणुरवोन्मिश्रैः श्रोत्रानन्दविधायकम् ॥५२॥
विचित्रचित्रविन्यासैश्चित्ताक्षेपविधायिभिः।
सद्रूपैरतिसौन्दर्याक्षिप्तलीलातलोचनम् ॥५३॥
चन्दनागरुकर्पूरमृगनाभिपुरःसरैः।
अतिगन्धोद्धुरैर्द्रव्यैर्घ्राणमोदनकारणम् ॥५४॥
कोमलांशुकतूल्यादिललनालोकयोगतः।
स्पर्शप्रमुदिताशेषतद्योग्यजनवृन्दकम् ॥५५॥
मनःप्रीतिसमुत्पादकारणै रसनोत्सवैः।
स्वस्थीभूताखिलप्राणिसंघातं भोजनैः परैः ॥५६॥
समस्तेन्द्रियनिर्वाणकारणं वीक्ष्य तत्त्वतः।
स रङ्कश्चिन्तयत्येवं किमेतदिति विस्मितः ॥५७॥
योग्यादल्पास्य जानाति विशेषं तस्य तत्त्वतः।
तथापि हृदयाकूते स्फुरितं लब्धचेतसः ॥५८॥

यदिदं दृश्यते राजभवनं सततोत्सवम् ।
द्वारपालप्रसादेन न मया दृष्टपूर्वकम् ॥५८॥
अहं हि बहुशः पूर्वमस्य द्वारि परिभ्रमन् ।
द्वारपालैर्महापापैः प्राप्तः प्राप्तो निराकृतः ॥६०॥
सत्यं निष्पुण्यकोऽस्मीति येनेदं देवदुर्लभम् ।
न दृष्टं प्राग् न चोपायो दर्शनार्थं मया कृतः ॥६१॥
कदाचिन्नैव मे पूर्वं मोहोपहतचेतसः ।
जिज्ञासामात्रमप्यासीत् कीदृशं राजमन्दिरम् ॥६२॥
निर्भाग्यस्यापि कृपया चित्ताह्लादविधायकम् ।
अयं मे परमो बन्धुर्येनेदं दर्शितं मम ॥६३॥
एते धन्यतमा लोकाः सर्वद्वन्द्वविवर्जिताः ।
प्रहृष्टचित्ता मोदन्ते सततं येऽत्र मन्दिरे ॥६४॥
यावदस्य चिन्तयत्येवं द्रमको लब्धचेतनः ।
तावद्यत्तत्र संपन्नं तदिदानीं निबोधत ॥६५॥
प्रासादशिखरे रम्ये सप्तमे भूमिकातले ।
तत्रास्ते लीलयासीनः स राजा परमेश्वरः ॥६६॥
अधस्तादर्शि तत्सर्वं नानाव्यापारमञ्जुषा ।
नगरं सततानन्दं समन्तादवलोकयन् ॥६७॥
न किञ्चिन्नगरे तत्र यच्चिद्य खलु वर्त्तते ।
वस्तु यन्न भवेद्दृष्टेर्गोचरस्तस्य पश्यतः ॥६८॥
अतः प्रविष्टं तं रोरं गाढबीभत्सदर्शनम् ।
महारोगभराक्रान्तं शिष्टानां करुणास्पदम् ॥६९॥

कारुण्यादिव राजेन्द्रः स महात्मामलेक्षणः ।
स्वदृष्टिदृष्टिपातेन पूतपापमिवाकरोत् ॥७०॥
धर्मबोधकरो नाम महानसनियुक्तकः ।
स राजदृष्टिं तां तत्र पतन्तीं निरवर्णयत् ॥७१॥
अथासौ चिन्तयत्येव तदा साकूतमानसः ।
किमेतदद्भुतं नाम सांप्रतं दृश्यते मया ॥७२॥
यस्य दृष्टिं विशेषेण ददाति परमेश्वरः ।
तूर्णं त्रिभुवनस्यापि स राजा जायते नरः ॥७३॥
अयं तु द्रमको दीनो रोगग्रस्तशरीरकः ।
अलक्ष्मीभाजनं मूढो जगदुद्वेगकारणम् ॥७४॥
आलोच्यमानोऽपि कथं पौर्वापर्येण युज्यते ।
तदस्योपरि पातोऽयं स दृष्टेः पारमेश्वरः ॥७५॥
ऊं ज्ञातमेष एवात्र हेतुरस्य निरीक्षणे ।
स्वकर्मविवरेणात्र यस्मादेष प्रवेशितः ॥७६॥
स्वकर्मविवरश्चायं नापरीक्षितकारकः ।
तेनायं राजराजेन सम्यग्दृष्ट्या विलोकितः ॥७७॥
अन्यच्च पक्षपातोऽत्र भवने यस्य जायते ।
परमेश्वरपादानां स प्रियत्वं प्रपद्यते ॥७८॥
अयं च नेत्ररोगेण नितरां परिपीडितः ।
एतद्विदृक्षयात्यर्थमुन्मिषत्येव लोचने ॥७९॥
दर्शनादस्य महसा गाढबीभत्सदर्शनम् ।
प्रमोदादिदमं मन्ये लभते दर्शनीयताम् ॥८०॥

रोमाञ्चयति चाङ्गानि धूलीधूसरितान्ययम् ।
ततोऽनुरागो जातोऽस्य भवने तेन वीक्ष्यते ॥८१॥
तदयं द्रमकाकारं बिभ्राणोऽप्यधुना स्फुटम् ।
राजावलोकनादेव वस्तुत्वं प्रतिपत्स्यते ॥८२॥
इत्याकलय्य तस्यासौ करुणाप्रवणोऽभवत् ।
सत्यं तच्छ्रूयते लोके यथा राजा तथा प्रजाः ॥८३॥
अथादरवशात्तूर्णं तस्य मूलमुपागमत् ।
एह्येहि दीयते तुभ्यमित्येवं तमवोचत ॥८४॥
कदर्थनार्थमायाताः पश्चाल्लग्नाः सुदारुणाः ।
दुर्दान्तडिम्भा ये तस्य दृष्ट्वा तं ते पलायिताः ॥८५॥
भिक्षाचरोचिते देशे स तं नीत्वा प्रयत्नतः ।
धर्मबोधकरस्तस्मै दानाय जनमादिशत् ॥८६॥
अथास्ति तद्दया नाम दुहिता तस्य सुन्दरा ।
सा तद्वचनमाकर्ण्य संभ्रमेण समुत्थिता ॥८७॥
समस्तगदनिर्णाशि वर्णौजःपुष्टिवर्द्धनम् ।
सुगन्धि सुरसं स्निग्धं देवैरप्यतिदुर्लभम् ॥८८॥
महाकल्याणकं नाम परमान्नं मनोहरम् ।
सा तदादाय वेगेन तत्समीपमुपागता ॥८९॥
इतश्च नीयमानोऽसौ द्रमकः पर्यचिन्तयत् ।
तुच्छाभिप्रायवशतः शङ्कयाकुलमानसः ॥९०॥
यदयं मां समाहूय पुरुषो नयति स्वयम् ।
भिक्षार्थं किल मैवैतत् सुन्दरं मम भासते ॥९१॥

भिक्षायाः पूरितप्रायमिदं हि घटकर्परम् ।
तदेष विजने नीत्वा नूनमुद्दालयिष्यति ॥९२॥
तत् किं नश्यामि सहसा भक्षयाम्युपविश्य वा ।
न कार्यं भिक्षयेत्युक्त्वा यदा गच्छामि सत्वरम् ॥९३॥
इत्यनेकविकल्पैस्य भयं तस्य विवर्द्धते ।
तद्वशान्नैव जानीते क्वाहं यातः क्व च स्थितः ॥९४॥
गाढमूर्च्छाभिभूतत्वात्संरक्षणनिमित्तकम् ।
रौद्रध्यानं समापूर्य मीलिते तेन लोचने ॥९५॥
समस्तेन्द्रियवृत्तीनां व्यापारोपरतेः क्षणात् ।
भाषौ चेतयते किंचित् काष्ठवन्नष्टचेतनः ॥९६॥
गृहाणेति च जल्पन्तीं भूयोभूयः समाकुलाम् ।
ततोऽसौ द्रमकोऽपुण्यो न जानात्येव कन्यकाम् ॥९७॥
सर्वरोगकरं तुच्छं कदन्नं न भविष्यति ।
इति ध्यानेन नष्टात्मा तां सुधां नावबुध्यते ॥९८॥
प्रत्यक्षं तमसंभाव्यं वृत्तान्तं वीक्ष्य विस्मितः ।
स तदा चिन्तयत्येवं महानसनियुक्तकः ॥९९॥
किमेष द्रमकस्यारु दीयमानमपि स्फुटम् ।
परमान्नं न गृह्णाति ददात्यपि च मोत्तरम् ॥१००॥
विद्राणवदनोऽत्यन्तं निमीलितविलोचनः ।
हृतसर्वस्ववन्मोहात् संजातः काष्ठकीलवत् ॥१॥
तदयं मोषितो मन्ये परमान्नस्य पापभाक् ।
यदा नास्य वराकस्य दोषोऽयमुपलभ्यते ॥२॥

अयं हि रोगजालेन बहिरन्तश्च वेष्टितः।
वेदनाविकलो मन्ये न हि जानाति किंचन ॥३॥
अन्यथा कथमेतत्स्यात् कदन्नलवलम्पटः।
अमृतास्वादमप्येष न गृह्णीयात्सचेतनः ॥४॥
तदयं निर्गदो हन्त केनोपायेन जायते।
आ ज्ञातं विद्यते चारु मम तद् भेषजत्रयम् ॥५॥
यत्तावदिमलालोकं नाम मे परमाञ्जनम्।
समस्तनेत्ररोगाणां तदपाकरणक्षमम् ॥६॥
सूक्ष्मव्यवहितातीतभाविभावविलोकने।
परमं कारणं मन्ये प्रयुक्तं तद्विधानतः ॥७॥
तत्त्वप्रीतिकरं नाम यच्च तीर्थोदकं परम्।
विद्यते मम तत्सर्वरोगतानवकारणम् ॥८॥
विशेषात्पुनरुन्मादसूदनं तदुदाहृतम्।
दृष्टं च पटुदृष्टित्वे कारणं वर्णितं बुधैः ॥९॥
महाकल्याणकं नाम यच्चैतदुपढौकितम्।
परमान्नमिदं सर्वगदनिर्मूलनक्षमम् ॥१०॥
प्रयुज्यमानं विधिना वर्णं पुष्टिं धृतिं बलम्।
मनःप्रसादमौर्जित्यं वयःस्तंभं सवीर्यताम् ॥११॥
तथाजरामरत्वं च कुर्यादेतन्न संशयः।
नातः परतरं मन्ये लोकेऽपि परमौषधम् ॥१२॥
तदेनममुना सम्यक् क्रमेणापि तपस्विनम्।
व्याधिभ्यो मोचयामीति चित्ते तेनावधारितम् ॥१३॥

ततः शलाकामादाय विन्यस्याग्रे तदञ्जनम्।
तस्य धूनयतो ग्रीवामञ्जिते तेन लोचने ॥१४॥
अह्लादकत्वाच्छीतत्वादचिन्त्यगुणयोगतः।
तदनन्तरमेवास्य चेतना पुनरागता ॥१५॥
क्षणादुन्मीलितं चक्षुर्विनष्टा इव तद्गदाः।
मनागाह्लादितश्चित्ते किमेतदिति मन्यते ॥१६॥
तथापि च तदाकूतं भिक्षारक्षणलक्षणम्।
पूर्वाविधवशाच्चैव सम्यगस्य निवर्त्तते ॥१७॥
विजनं वर्त्तते हन्त स्वाशङ्ख्येनां व्यचिन्तयत्।
नष्टुकामो दिगन्तेषु दृष्टिं धत्ते पुनः पुनः ॥१८॥
अथाञ्जनवशाद्दृष्ट्वा पुरः संजातचेतनम्।
तं रोरं मधुरैर्वाक्यैर्धर्मबोधकरोऽब्रवीत् ॥१९॥
पिबेदमुदकं भद्र तापोपशमकारणम्।
येन ते स्वस्थता सम्यक् शरीरस्योपजायते ॥२०॥
स तु शंकाकुलाकूतः किमनेन भविष्यति।
न जाने इति मूढात्मा नोदकं पातुमिच्छति ॥२१॥
कृपापरीतचित्तेन हितत्वात्तदनिच्छतः।
बलादिदत्य वदने सलिलं तस्य गालितम् ॥२२॥
तच्छीतममृतास्वादं चित्ताह्लादकरं परम्।
गौरमौरितसंतापं पीत्वा स्वस्थ इवाभवत् ॥२३॥
नष्टप्रायमहोन्मादो जातान्यगदतामवः।
क्षणादिगतदाहार्त्तिस्ततोऽसौ समपद्यत ॥२४॥

सुप्रसन्नेन्द्रियग्रामः स्वस्थेनेवान्तरात्मना ।
सोऽचिन्तयदिदं चित्ते किंचिद्विमलचेतनः ॥२५॥
महामोहहतेनाहो नरोऽयमतिवत्सलः ।
मया महात्मा पापेन वञ्चकत्वेन कल्पितः ॥२६॥
ममाञ्जनप्रयोगेण विहितापद्दृष्टिता ।
अनेन तोयपानेन जनिता स्वस्थता परा ॥२७॥
तस्मान्महोपकारीति किमस्योपकृतं मया ।
महानुभावतां मुक्त्वा नान्यदस्य प्रवर्त्तकम् ॥२८॥
एवं चिन्तयतोऽप्यस्य मूर्च्छा तत्र कदन्नके ।
गाढं भावितचित्तत्वान्न कथंचिन्निवर्त्तते ॥२९॥
अथ तद्भोजने दृष्टिं पातयन्तं मुहुर्मुहुः ।
विदित्वा तदभिप्रायमितरस्तमभाषत ॥३०॥
अरे द्रमक दुर्बुद्धे किमिदं नावबुध्यसे ।
यदेषा कन्यका तुभ्यं परमान्नं प्रयच्छति ॥३१॥
भवन्ति रोराः प्रायेण बहवोऽन्येऽपि पापिनः ।
त्वत्समो नास्ति निर्भाग्यो मयैतत्परिनिश्चितम् ॥३२॥
यस्त्वं कदन्नलाम्पट्यात्सुधाकारमिदं मया ।
दाप्यमानं न गृह्णासि परमान्नमनाकुलः ॥३३॥
अन्येऽस्मात्सद्मनो बाह्याः सत्त्वास्तिष्ठन्ति दुःखिताः ।
तेषु नैवादरोऽस्माकं न ते राज्ञावलोकिताः ॥३४॥
यतस्त्वं भवनं दृष्ट्वा मनागाल्हादितो हृदि ।
तवोपरि नरेन्द्रस्य दयातोऽस्तीति गम्यते ॥३५॥

प्रिये प्रियं सदा कुर्युः स्वामिनः सेवका इति ।
यो न्यायस्तद्विधानार्थं वयं त्वयि दयालवः ॥३६॥
अमूढलक्ष्यो राजायं नापात्रे कुरुते मतिम् ।
अवष्टम्भः किलास्माकं स त्वया वितथीकृतः ॥३७॥
इदं हि मधुरास्वादं सर्वव्याधिनिवर्हणम् ।
नादत्से त्वं कथं तुच्छे कदन्ने बद्धमानसः ॥३८॥
अतस्त्यजेदं दुर्बुद्धे गृहाणेदं विशेषतः ।
यत्प्रभावादिमे पश्य मोदन्ते सद्मजन्तवः ॥३९॥
ततः संजातविश्वासस्तयाविर्भूतनिर्णयः ।
तत्त्यागवचनाद्दीनस्तं प्रतीदमवोचत ॥४०॥
यदेतद्गदितं नाथैस्तत्सत्यं मम भासते ।
किं तु विज्ञापयाम्येकं वचनं तन्निबोधत ॥४१॥
यदिदं भोजनं नाथ वर्तते कर्परोदरे ।
प्राणेभ्योऽपि विशेषेण स्वभावादतिवल्लभम् ॥४२॥
उपार्जितं च क्लेशेन काले निर्वाहकं तथा ।
इदं तु तावकं नाहं जानामि मम कीदृशम् ॥४३॥
तदिदं नैव मोक्तव्यं मया स्वामिन् कथंचन ।
यदि देयं महादानेन दापयस्व स्वभोजनम् ॥४४॥
इतरस्तु तदाकर्ण्य मनसा पर्यचिन्तयत् ।
पश्यताचिन्त्यसामर्थ्यं महामोहविजृम्भितम् ॥४५॥
यदयं द्रमको मोहात्सर्वव्याधिकरे रतः ।
अस्मिन् कदन्नके नैतत्तृणाय मम मन्यते ॥४६॥

तथापि किंचिद्भूयोऽपि शिक्षयामि तपस्विनम् ।
यदि मोहो विलीयेत स्यादस्मै हितमुत्तमम् ॥४७॥
इत्याकलय्य तेनोक्तं भद्र किं नावगच्छसि ।
एतन्निमित्तकाः सर्वे रोगास्तव शरीरके ॥४८॥
एतदिभक्षितं सर्वैः सर्वदोषप्रकोपनम् ।
जायते नितरां तेन त्यक्तव्यं शुद्धबुद्धिभिः ॥४९॥
तथापि भासते भद्र विपर्यासादिदं हृदि ।
यदि स्वादं पुनर्वेत्सि मामकाचस्य तत्त्वतः ॥५०॥
ततस्त्वं वार्यमाणोऽपि त्यजस्येवेदमात्मना ।
को नामामृतमास्वाद्य विषमापातुमिच्छति ॥५१॥
अन्यच्चाञ्जनसामर्थ्यं माहात्म्यं सलिलस्य च ।
किं न दृष्टं त्वया येन मद्वचो नानुतिष्ठसि ॥५२॥
यच्चोक्तमर्जितं क्लेशादिदं मुञ्चामि नो ततः ।
तत्रापि श्रूयतां सौम्य मोहं हित्वा त्वयाधुना ॥५३॥
येनैवोपार्जितं क्लेशात् क्लेशरूपं च वर्तते ।
क्लेशस्य च पुनर्हेतुस्तेनैवेदं विमुच्यते ॥५४॥
यच्चोक्तं न त्यजामीदं काले निर्वाहकं यतः ।
तत्राप्याकर्ण्यतां तावत्त्यक्त्वा तत्र विपर्ययम् ॥५५॥
अनन्तदुःखसंतानहेतुर्निर्वाहि यद्यपि ।
एतद्धि किं त्वया स्थेयं दुःखग्रस्तेन सर्वदा ॥५६॥
इदं तु तावकं नाहं जानामि मम कीदृशम् ।
यदुक्तं तत्र विश्रब्धो वक्ष्यमाणं मया शृणु ॥५७॥

क्लेशं विना सदाकालं प्रयच्छामि यथेच्छया ।
परमान्नमिदं तुभ्यं गृहाण त्वमनाकुलः ॥५८॥
समूलकाषं कषति सर्वव्याधीनिदं हि ते ।
तुष्टिं पुष्टिं बलं वर्णं वीर्यादीन् वर्द्धयत्यपि ॥५९॥
किं वानेनावयो भूत्वा सततानन्दपूरितः ।
यथायमास्ते राजेन्द्रः स्यास्त्वमेतद्बलात्तथा ॥६०॥
ततो मुञ्चायदं भद्र त्यजेदं रोगकारणम् ।
गृहाणेदं महानन्दकारणं परमौषधम् ॥६१॥
स प्राह त्यक्रमाचेऽस्मिन् म्रियेऽहं स्नेहविभ्रमात् ।
भट्टारक ततो देहि सत्यस्मिन्मे स्वभेषजम् ॥६२॥
ततो विज्ञाय निर्बन्धमितरः पर्यकल्पयत् ।
नैवास्य ग्रिचणोपायो विद्यते ऽन्योऽधुना स्फुटम् ॥६३॥
ततोऽच विद्यमानेऽपि दीयतामिदमौषधम् ।
पश्चाद्विज्ञातसद्भावः स्वयमेव विहास्यति ॥६४॥
इत्याकलय्य तेनोक्तो गृह्यतां भद्र सांप्रतम् ।
परमान्नमिदं सद्यो गृहीत्वा चोपयुज्यताम् ॥६५॥
एवं भवतु तेनोक्ते भक्षिता तेन तद्दया ।
दत्तं तया गृहीत्वा तत्तेन तत्रैव भक्षितम् ॥६६॥
ततस्तदुपयोगेन बुभुक्षा शान्तिमागता ।
नष्टा इव गदव्राता येऽस्य सर्वाङ्गसंभवाः ॥६७॥
याभावच्छन्नसंपाद्या या च सा मलिलोद्भवा ।
सुखासिका क्षणात्तस्य सानन्तगुणतां गता ॥६८॥

अथ प्रादुर्भवद्भक्तिर्नष्टाशंकः प्रमोदितः ।
स तं प्रत्याह नान्योऽस्ति नाथो मे भवतो विना ॥६९॥
यतोऽनुपकृतैरेव भवद्भिर्भाग्यवर्जितः ।
अहं सर्वाधमोऽप्येवमेतावदनुकंपितः ॥७०॥
इतरः प्राह यद्येवमुपविश्य क्षणं त्वया ।
श्रूयतां यदहं वच्मि श्रुत्वा तच्च समाचर ॥७१॥
अथोपविष्टे विश्रब्धं तस्मिन्स प्राह चाटुभिः ।
मनः प्रह्लादयंस्तस्य वचोभिर्हितकाम्यया ॥७२॥
यदभ्यधायि भवता नाथोऽन्यो नास्ति मेऽधुना ।
तच्च वाच्यं यतः स्वामी तव वर्यो नृपोत्तमः ॥७३॥
अयं हि भगवान्नाथो भुवनेऽपि चराचरे ।
विशेषतः पुनर्येऽत्र भवने सन्ति जन्तवः ॥७४॥
येऽस्य किंकरतां यान्ति नराः कल्याणभागिनः ।
तेषामल्पेन कालेन भुवनं किंकरायते ॥७५॥
येऽत्यन्तपापिनः सत्त्वा येनैव सुखभाजनम् ।
ते वराका नरेन्द्रस्य नामाप्यस्य न जानते ॥७६॥
ये भाविभद्रा दृश्यन्ते सदनेऽस्य महात्मनः ।
तेषां स्वकर्मविवरो ददात्यत्र प्रवेशकम् ॥७७॥
वस्तुतः प्रतिपद्यन्ते तेऽमुं नास्त्यत्र संशयः ।
विशेषाज्जानते मुग्धाः पश्चात्ते कथितं मया ॥७८॥
तदेष नाथस्ते भद्र जात एव नरेश्वरः ।
यतः प्रभृति पश्येऽस्मिन् प्रविष्टस्त्वं सुपुण्यतः ॥७९॥

केवलं तु विशेषेण मद्वचस्तः प्रपद्यताम् ।
यावज्जीवमयं नाथो भवता शुद्धचेतसा ॥८०॥
विशेषतः पुनर्येऽस्य गुणास्तानवभोत्स्यसे ।
यथा यथा गदा देहे यास्यन्ति तव तानवम् ॥८१॥
अयं च तानवोपायोऽमीषां नाशे च कारणम् ।
भेषजचितयस्यास्य परिभोगः चणे चणे ॥८२॥
तत्सौम्य स्वीयतामत्र भवने मुक्तसंशयम् ।
त्वया चयमिदं युक्त्या भुञ्जानेन प्रतिचणम् ॥८३॥
ततस्त्वं दलिताशेषरोगंप्रातो नरेश्वरम् ।
विशेषतः समाराध्य भवितासि नृपोत्तमः ॥८४॥
इयं च तद्दया तुभ्यं दास्यत्येतद्दिने दिने ।
किमत्र बहुनोक्तेन भोक्तव्यं भेषजचयम् ॥८५॥
ततः प्राह्लादितः स्वान्ते वचनैस्तस्य कोमलैः ।
स्वाकूतमुररीकृत्य स एवं द्रमकोऽब्रवीत् ॥८६॥
इदं नाद्यापि शक्नोमि पापस्त्यक्तुं कदन्नकम् ।
अन्यत्तु यन्मया किंचित् कर्त्तव्यं तत्समादिश ॥८७॥
तच्छ्रुत्वा स्फुरितं चित्ते धर्मबोधकरे तदा ।
भुंच्वेदं चयमित्युक्तः किमेवं वत भाषते ॥८८॥
आ ज्ञातमेष तुच्छत्वादेवं चिन्तयते हृदि ।
भोजनयाजनार्थो मे सर्वोऽयं विस्तरो गिराम् ॥८९॥
क्लिष्टचित्तो जगत्सर्वं मन्यते दुष्टमानसम् ।
शुद्धाभिसंधयः सर्वे शुद्धचित्तं विजानते ॥९०॥

ततो विहस्य तेनोक्तं मामेषोऽभद्र किंचन ।
नाधुना त्याजयामीदमन्नमेधि निराकुलः ॥९१॥
अहमत्याजयं पूर्वं तवैव हितकाम्यया ।
यदि नो रोचते तुभ्यं तूष्णींभावोऽत्र मे मतः ॥९२॥
यच्चैतदुपदिष्टं ते प्राक्कर्त्तव्यतया मया ।
तदत्र भवता किंचित् किं सम्यगवधारितम् ॥९३॥
सोऽब्रवीन्नैव तन्नाथ किंचित्संलक्षितं मया ।
केवलं पेशलालापैस्तावकैर्मोदितो हृदि ॥९४॥
अज्ञातपरमार्थापि सतां नूनं सरस्वती ।
चेतोऽतिसुन्दरत्वेन प्रीणयत्येव देहिनाम् ॥९५॥
अन्यच्च चेतसो न्यासे नयने तव संमुखे ।
विप्रत्येकेन कर्णेन वचो यातीतरेण मे ॥९६॥
यच्चात्र मनसो नाथ वैधुर्यं मम कारणम् ।
तत्त्वांमतं भयापायात् कथयामि निराकुलः ॥९७॥
यदा ह्याकारितः पूर्वं भवद्भिः करुणापरैः ।
अहमन्नप्रदानार्थं तदा मे हृदि वर्त्तते ॥९८॥
त्याजयत्येष कश्चिल्लीला मामकं भोजनं नरः ।
तदाकूतवशाद्गाढं ध्यात्वा चेतनतां गतः ॥९९॥
यदा प्रबोधितः पश्चादञ्जनेन सुवत्सलैः ।
भवद्भिश्चिन्तितं तूर्णं नश्यामीति तदा मया ॥१००॥
यदा तु तोयपानेन प्रीतीकृत्य वपुर्मम ।
कृतं संभाषणं नाथैस्तदा विश्रंभमागतः ॥१॥

चिन्तितं च मया योऽयं ममैवमुपकारकः ।
स महाभूतिसंपन्नः कथं स्याद्न्नहारकः ॥२॥
किमुश्चेदं गृहाणेदं यदा नाथैः प्रजल्पितम् ।
तदा किं करवाणीति चिन्तेनाकुलतां गतः ॥३॥
नैष तावत्स्वयं लाति त्याजयत्येव केवलम् ।
त्यक्तुं नैतच्च शक्नोमि किं वदामि तदुत्तरम् ॥४॥
सत्यस्मिन् देहि मे भोज्यमित्युक्ते दापितं त्वया ।
तदास्वादात्पुनर्ज्जातं ममायमतिवत्सलः ॥५॥
तत् किमस्य वचः कुर्वन् मुञ्चामीदं स्वभोजनम् ।
मरिष्ये न तु मुक्तेऽस्मिन् मूर्च्छयाकुलचेतनः ॥६॥
अयं वक्ति हि तत्त्वेन शक्तोऽस्म्यस्य न मोचने ।
अहो व्यसनमापन्नं ममेदमतिदुस्तरम् ॥७॥
एवमाकुलचित्तस्य यन्नाथैर्बहुभाषितम् ।
तन्मे भूतघटस्येव लुठिता पार्श्वतो गतम् ॥८॥
नाधुना त्याजयामीति भवद्भिर्ज्ञातमानसैः ।
इदानीं पुनरादिष्टे मनाग् जातो निराकुलः ॥९॥
तद् ब्रूत सांप्रतं नाथाः कर्त्तव्यं पापकर्मणा ।
यन्मयेदृशचित्तेन येनाहमवधारये ॥१०॥
तदाकर्ण्य दयाढ्येन यदुक्तं प्राक् समासतः ।
सविस्तरतरं तस्मै तत्पुनः प्रतिपादितम् ॥११॥
ततोऽन्नजलाम्नानां नरेन्द्रस्य विशेषतः ।
प्रायोऽज्ञातगुणं ज्ञात्वा तं प्रतीदमभाषत ॥१२॥

अहं तात नरेन्द्रेण प्रागादिष्टो यथा त्वया ।
योग्येभ्य एव दातव्यं मदीयं भेषजत्रयम् ॥१३॥
अयोग्यदत्तं नैवैतदुपकारं प्रकल्पयेत् ।
प्रत्युतानर्थसंतानं विदधाति विशेषतः ॥१४॥
मया पृष्टं तदा नाथ कथं ज्ञास्यामि तानहम् ।
ततः प्रत्युक्तवान् राजा तेषामाख्यामि लक्षणम् ॥१५॥
ये तावदस्य नाद्यापि रोगिणो योग्यतां गताः ।
स्वकर्मविवरस्तेषां न गृहेऽत्र प्रवेशकः ॥१६॥
सोऽप्यादिष्टो मया पूर्वं ये योग्या भेषजत्रये ।
प्रवेशनीयास्ते नान्ये भवनेऽत्र त्वया नराः ॥१७॥
प्रविष्टा अपि ते दृष्ट्वा मोदन्ते नैव मद्गृहम् ।
तेषां न मामिका दृष्टिर्विशेषेण निरीक्षिका ॥१८॥
ते ह्यन्यद्वारपालेन स्युः कथंचित्प्रवेशिताः ।
त्वयापि लिङ्गतो ज्ञात्वा वर्जनीयाः प्रयत्नतः ॥१९॥
ये मन्मन्दिरमालोक्य जायन्ते हृष्टचेतनाः ।
रोगिणो भाविभद्रत्वान्निरीक्षेऽहं विशेषतः ॥२०॥
स्वकर्मविवरानीता ये मया च विलोकिताः ।
ते ज्ञेयास्तितयस्यास्य पात्रभूतास्त्वया नराः ॥२१॥
तेषां तु निकषस्थानमिदमेवौषधत्रयम् ।
प्रयुज्यमानं स्वगुणैः संग्रहेतरकारकम् ॥२२॥
येभ्योऽदो रोचते चित्ते प्रयुक्तं गुणकारकम् ।
अक्लेशतो विशेषेण ते सुसाध्याः प्रकीर्त्तिताः ॥२३॥

ये नादितः प्रपद्यन्ते बलाद्येषां विगाल्यते ।
कालक्षेपेण ते ज्ञेयाः कृच्छ्रसाध्याख्ययानुगाः ॥२४॥
येभ्यो न रोचतेऽत्यर्थं न क्रामति नियोजितम् ।
द्वेष्टारो दायकेऽप्यस्य ते त्वसाध्या नराधमाः ॥२५॥
तदेतद्राजराजेन मम यत्त्वंप्रदायितम् ।
तेन ते कृच्छ्रसाध्यत्वं लक्षणेन विभाव्यते ॥२६॥
अन्यच्च ये प्रपद्यन्ते भवतोऽमुं नरेश्वरम् ।
यावज्जीवं विशेषेण नाथं निःशंकमानसाः ॥२७॥
अचिन्त्यवीर्यसंपूर्णा निःशेषगदवर्हिणी ।
तेषामेव गुणं धत्ते मदीया भेषजक्रिया ॥२८॥
अतस्त्वं प्रतिपद्यस्व नाथत्वेन नृपोत्तमम् ।
भाववारं महात्मानो भक्तिग्राह्या यतः स्मृताः ॥२९॥
अनन्तास्तात रोगार्त्ता भक्तितोऽमुं नृपोत्तमम् ।
प्रपद्य स्वामिभावेन दृष्टा जाताः कृतक्रियाः ॥३०॥
बलिनस्तावका रोगा अपथ्ये लम्पटं मनः ।
महायत्नं विना नात्र लक्ष्यते गदसंक्षयः ॥३१॥
तदत्र प्रयतो भूत्वा कृत्वा स्वं निश्चलं मनः ।
स्थित्वा निराकुलोऽचैव वितते राजमन्दिरे ॥३२॥
आदाय कन्यकाहस्तात्प्रयुञ्जानः क्षणे क्षणे ।
भेषजत्रयमेतत्त्वं कुरुष्वारोग्यमात्मनः ॥३३॥
ततस्तथेति भावेन गृहीतं तेन तद्वचः ।
तेनापि तद्दया तस्य विहिता परिचारिका ॥३४॥

ततः खलैकदेशेन भिक्षापात्रमनारतम् ।
तदेव पालयन् कालं कियन्तमपि स स्थितः ॥२५॥
ददाति तद्दया तस्मै वितथं तदहर्निशम् ।
कदन्ने मूर्च्छितस्यास्य केवलं तत्र नादरः ॥२६॥
प्रायेण बहु भुङ्क्तेऽसौ तन्मोहेन कुभोजनम् ।
यत्पुनस्तु दयादत्तं तद्रसजत्युपदंशताम् ॥२७॥
अञ्जनं च तया प्राज्ञो निधत्ते नेत्रयोः क्वचित् ।
तत्र तीर्थोदकं पातुं तद्वचसः प्रवर्त्तते ॥२८॥
महाकल्याणकं दत्तं संभ्रमेण तया बहु ।
भुक्त्वाल्पं हेलया शेषं कर्परे निदधाति सः ॥२९॥
तत्सांनिध्यगुणात्तस्य तस्यान्नं संप्रवर्द्धते ।
अदतोऽहर्निशं तस्मान्निष्ठां नैव प्रपद्यते ॥४०॥
ततो गाढतरं तुष्टो वृद्धिं दृष्ट्वा स्वभोजने ।
मन्यमानो तद्दिशानीते यन्माहात्म्येन वर्द्धते ॥४१॥
केवलं तत्र रद्वात्मा वितये शिथिलादरः ।
जानन्नपि न जानाति कालं नयति मोहितः ॥४२॥
अहर्निशमपथ्यं तद्भुञ्जानः कुचिमानतः ।
वितयेऽनादरात्स्वादो न रोगोच्छेदभाजनम् ॥४३॥
तावन्मात्रेण भुक्तेन किन्तु तस्य गुणो महान् ।
कृतक्षयेण ते रोगा आनीता तेन याप्यताम् ॥४४॥
तथाप्यात्मज्ञताभावादुल्बणलादपथ्यतः ।
कचिद्विकारमात्मीयं दर्शयन्ति शरीरके ॥४५॥

क्वचिच्छूलं क्वचिद्दाहः क्वचिन्मूर्च्छा क्वचिज्ज्वरः ।
क्वचिच्छर्दिः क्वचिज्जाड्यं क्वचिद्धृत्पार्श्ववेदना ॥४६॥
क्वचिदुन्मादसन्तापः पथ्ये क्वचिदरोचकः ।
तैः रोगैर्विक्रियापन्नैः शरीरस्य प्रजायते ॥४७॥
कदाचित्तद्दया दृष्ट्वा तं विकारैरुपद्रुतम् ।
आक्रन्दन्तं कृपोपेता संचिन्त्येत्यमभाषत ॥४८॥
कथितं तात तातेन यदन्नं तव वल्लभम् ।
एतन्निमित्तकाः सर्वे रोगास्तवशरीरके ॥४९॥
तथापि दृष्टवृत्तान्ता माभूदाकुलता तव ।
तद्भक्षयन्तं दृष्ट्वापि भवन्तं नैव वारये ॥५०॥
परमस्वास्थ्यहेतौ ते शैथिल्यं भेषजत्रये ।
एतत्तु रोचते तुभ्यं सर्वसन्तापकारणम् ॥५१॥
अधुना क्रन्दतो नास्ति हेतुः स्वास्थ्यस्य कारकः ।
अपथ्येऽत्यर्थं सक्तानां न लगत्येव भेषजम् ॥५२॥
अपवादो ममाप्यत्र यतस्ते परिचारिका ।
प्रत्यहं न च शक्नोमि कर्तुं स्वास्थ्यं तवाधुना ॥५३॥
इतरः प्राह यद्येवं वारणीयस्त्वयासुतः ।
अभिलाषातिरेकेण न त्यक्तुं स्वयमुत्सहे ॥५४॥
कदाचित्त्वत्प्रभावेन स्तोकस्तोकं विमुञ्चतः ।
सर्वत्यागेऽपि शक्तिर्मे कदन्नस्य भविष्यति ॥५५॥
साधु साधूदितं भद्र युक्तमेतद्भवादृशाम् ।
इत्युक्त्वाधिकमश्नन्तं सा कदन्नं न्यवारयत् ॥५६॥

ततस्तत्परिहारेण रोगा यान्त्यस्य तानवम् ।
न जायतेऽधिका पीडा लगत्यङ्गे च भेषजम् ॥५७॥
केवलं सा यदाभ्यर्णे तदा पथ्येन तिष्ठति ।
अपथ्यमल्पमश्नाति जायते तेन याप्यता ॥५८॥
यदा तु सा विदूरस्था लाम्पट्यात्तत्कदन्नकम् ।
भूरि निर्भेषजं सोऽत्ति तेनाजीर्णेन पीड्यते ॥५९॥
इतश्च तद्दया तेन धर्मबोधकरेण सा ।
प्रागेवाशेषलोकस्य पालकत्वे नियोजिता ॥६०॥
सानन्तसत्त्वसङ्घातव्यापारकरणोद्यता ।
तन्मूले क्वचिदेवास्ते शेषकालं समुत्कलः ॥६१॥
अपथ्यभक्षणासक्तः स केनचिदवारितः ।
विकारैर्बाध्यते भूयस्ते दरास्ते च भेदकाः ॥६२॥
कदाचित्पीडितो दृष्टो धर्मबोधकरेण सः ।
सोऽवादीत् किमिदं भद्र स चाशेषं न्यवेदयत् ॥६३॥
इयं हि तद्दया नित्यं न मत्पार्श्वेऽवतिष्ठते ।
तद्वैकल्याच्च मे रोगाः प्रभवन्ति विशेषतः ॥६४॥
तस्मान्नाथास्तया यूयं कुरुध्वं यत्नमुत्तमम् ।
यथा पीडा न मे देहे स्वप्नान्तेऽप्युपजायते ॥६५॥
स प्राह वत्स ते पीडा जायतेऽपथ्यसेवनात् ।
इयं तु तद्दया व्यग्रा कर्मान्तरनियोगतः ॥६६॥
या वारणं विधत्ते ते सदैवापथ्यमश्नतः ।
यदि त्वत्तादृशी काचित् क्रियते परिचारिका ॥६७॥

केवलं त्वमनात्मज्ञः पथ्यसेवापराङ्मुखः ।
कदन्नभक्षणोद्युक्तस्तस्य किं करवाणि ते ॥६८॥
इतरस्त्वाह मामेवं नाथावदत सांप्रतम् ।
नैवाहं युष्मदादेशं लङ्घयामि कथञ्चन ॥६९॥
तदाकर्ण्य मनाग् ध्यात्वा क्षणमात्रमवोचत ।
धर्मबोधकरस्तस्मै हितायोद्यतमानसः ॥७०॥
अस्ति मे वचनायत्ता सद्बुद्धिर्नाम दारिका ।
तां ते करोमि निर्व्यग्रां विशेषपरिचारिकाम् ॥७१॥
सा हि संनिहिता नित्यं पथ्यापथ्यविवेचिका ।
तुभ्यमेव मया दत्ता माकार्षीश्चित्तवैक्लवम् ॥७२॥
केवलं सा विशेषज्ञा वैपरीत्यविधायिनाम् ।
अनादरवतां पुंसां नोपकाराय वर्त्तते ॥७३॥
यदि तेऽस्ति सुखाकाङ्क्षा दुःखेभ्यो यदि ते भयम् ।
ततः सा वक्ति यत्किञ्चित् कर्त्तुं युक्तं तदेव ते ॥७४॥
एष एव ममादेशो यत्तदादेशवर्त्तनम् ।
तस्यै न रोचते यत्तु नैव मह्यं स रोचते ॥७५॥
अनेकाचरणयुक्तापि तद्दया क्वचिदेत्य ते ।
प्रतिजागरणं भद्र करिष्यत्यन्तरान्तरा ॥७६॥
केवलं परमार्थस्ते कथ्यते हितकाम्यया ।
सद्बुद्धौ सततं यत्नः कर्त्तव्यः सुखमिच्छता ॥७७॥
ये मूढाः सम्यगाराध्य मत्प्रसादां न कुर्वते ।
एनां तेषां न राजेन्द्रो नाहं नान्यः प्रसीदति ॥७८॥

अप्रमादहता नित्यं जायन्ते दुःखभाजनम् ।
ते यतोऽन्यो न लोकेऽपि हेतुरस्ति सुखप्रदः ॥७९॥
स्वाधीना वर्त्तते यस्माद्दूरस्था मदिधादयः ।
तवेयं सुखहेतुत्वे तस्मादाराद्धुमर्हसि ॥८०॥
एवं भवतु तेनोक्ते कृता सा परिचारिका ।
ततः प्रभृति निश्चिन्तो धर्मबोधकरोऽभवत् ॥८१॥
यावदास्ते दिनान्येषा कतिचित्तस्य पार्श्वगा ।
तावद्यत्तत्र संपन्नं तदिदानीं निबोधत ॥८२॥
अतिलौल्येन यः पूर्वं खादन्नपि न तृप्यति ।
कदन्नं भूरि नैवास्ति तस्य चिन्तापि तद्गता ॥८३॥
पूर्वाभ्यासात् क्वचिद्भुङ्क्ते केवलं तृप्तिकारणम् ।
जायते न च तत्स्वास्थ्यं विहन्याद् गृद्ध्यभावतः ॥८४॥
योऽकार्षीदुपरोधेन महता भेषजचयम् ।
स्वयं तस्य यत्नात्तस्मिन् अभिलाषोऽभिवर्द्धते ॥८५॥
अच्छिते गृद्ध्यभावेन हिते चाभिनिवेशतः ।
यत्तदा तस्य संपन्नं तच्चैतदभिधीयते ॥८६॥
बाधन्ते नैव ते रोगाः शरीरं जाततानवाः ।
यापि पीडा भवेत् कापि सापि शीघ्रं निवर्त्तते ॥८७॥
विज्ञातश्च सुखास्वादो नष्टा बीभत्सरूपता ।
गाढं च वर्त्तते तोषः स्वस्थत्वात्तस्य चेतसि ॥८८॥
अन्यदात्यन्तहृष्टेन मनसा रहसि स्थितः ।
सद्बुद्ध्या सार्द्धमेवं स जल्पति स्म निराकुलः ॥८९॥

भद्रे किमिदमाश्चर्यं शरीरं मम वर्त्तते।
एतद्दुःखाकरं पूर्वं यत्सुखाकरतां गतम् ॥८०॥
सा प्राह जातमेतत्ते सम्यक्पथ्यनिषेवणात्।
समस्तदोषमूलेऽस्मिन्नहिते सौख्यवर्जनात् ॥८१॥
मन्यान्निधाय ते भद्र भुञ्जानस्य कदन्नकम्।
प्रागभ्यासवशाच्चित्ते लज्जात्यर्थं प्रजायते ॥८२॥
लज्जया तस्य सम्भोगोऽकार्यरूपः प्रकाशते।
ततश्च रह्ययोगेन कामचारो निवर्त्तते ॥८३॥
ततस्तद्भुक्तमप्यङ्गे नात्यर्थं रोगवर्द्धनम्।
तेनैषा ह्लादसंवेद्या जाता तव सुखासिका ॥८४॥
इतरस्त्वाह यद्येवं सर्वथापि त्यजाम्यहम्।
अदः कदन्नं मे येन जायते सुखमुत्तमम् ॥८५॥
सा त्वाह युज्यते किन्तु सम्यगालोच्य संत्यज।
माभूत्ते स्नेहदोषेण प्रागिवाकुलता पुनः ॥८६॥
यदि त्यक्ते पुनस्तेऽच स्नेहावन्धोऽनुवर्त्तते।
ततोऽत्यागो वरः कस्मात् स्नेहोऽस्मिन्रोगवर्धकः ॥८७॥
अन्याल्पमश्नतोऽप्येतद्भेषजत्रयसेवनात्।
सांप्रतं याप्यता तेऽस्ति सापि चात्यन्तदुर्लभा ॥८८॥
सर्वत्यागं पुनः कृत्वा यस्त्यात्तदभिलाषुकः।
याप्यतामपि नाप्नोति स महामोहदोषतः ॥८९॥
तदेतत्सम्यगालोच्य यदि चेतसि भासते।
ततोऽस्य सर्वथा त्यागो युज्यते कर्तुमुत्तमैः ॥१००॥

सद्बुद्धेस्तद्वचः श्रुत्वा मनाग् दोलायितं मनः ।
तस्य किं करवाणीति नास्ति सम्यग् विनिश्चयः ॥१॥
अन्यदा परिभुञ्ज्योच्चैर्महाकल्याणकं बहु ।
तत् कदन्नं ततस्तेन प्राशितं लीलया किल ॥२॥
ततः सदन्नतृप्तत्वात् सद्बुद्धेः सन्निधानतः ।
ततश्च तैर्गुणैश्चित्ते तदानीं प्रतिभासते ॥३॥
अहो कुथितमत्यर्थं लज्जनीयं मलाविलम् ।
बीभत्सं विरसं निन्द्यं सर्वदोषौघभाजनम् ॥४॥
इदं मे भोजनं मोहस्तथापि न निवर्त्तते ।
नैतत्त्यागादृते मन्ये निर्व्यग्रं सुखमाप्यते ॥५॥
त्यक्तेऽपि पूर्वलौल्येन कदाचिन्मे स्मृतिर्भवेत् ।
सद्बुद्ध्या सापि दुःखौघकारिणीति निवेदितम् ॥६॥
अत्यक्ते दुःखजलधौ सर्वदा स्थेयमञ्जसा ।
तदत्र किं करोमीति पापोऽहं सत्त्ववर्जितः ॥७॥

अथवा ॥

किमेतैः क्रियते मोहादालजालविचिन्तनैः ।
मुञ्चामि सर्वथापीदं यद्भाव्यं तद्भविष्यति ॥८॥
यद्वा किमत्र यद्भाव्यं न भवत्येव मे क्षतिः ।
को नाम राज्यमासाद्य स्मरेच्चण्डालरूपताम् ॥९॥
एवं निश्चित्य तेनोक्ता सद्बुद्धिः चालयस्व मे ।
भद्रे भाजनमेतत्त्वं हित्वा सर्वकदन्नकम् ॥१०॥

तयोक्तं पृच्छ्यतां तावद्धर्मबोधकरस्त्वया ।
कालेन विक्रियां याति सम्यगालोच्य यत् कृतम् ॥११॥
ततः सहैव सद्बुद्ध्या धर्मबोधकरान्तिके ॥
गत्वा सर्वोऽपि वृत्तान्तस्तेन तस्मै निवेदितः ॥१२॥
साधु साधु कृतं भद्र धर्मबोधकरोऽब्रवीत् ।
केवलं निश्चयः कार्यो येन नो याचि हास्यताम् ॥१३॥
सोऽवादीत् किमिदं नाथो भूयो भूयो विकथ्यते ।
एष मे निश्चयस्तस्मिन्मनोऽपि प्रवर्त्तते ॥१४॥
ततोऽशेषजनैः सार्द्धं पर्यालोच्य विचक्षणः ।
अत्याजयत्स तत्पात्रं सज्जलैः पर्यशोधयत् ॥१५॥
महाकल्याणकस्थोचैस्ततपुनः पर्यपूरयत् ।
प्रमोदातिशयात्तत्र दिने वृद्धिमकारयत् ॥१६॥
धर्मबोधकरोद्धृष्टस्तद्दया प्रमदोद्धुरा ।
सद्बुद्धिर्वर्द्धितानन्दा मुदितं राजमन्दिरम् ॥१७॥
प्रवृत्तश्च जने वादो योऽयं राज्ञावलोकितः ।
धर्मबोधकरेणेष्टस्तद्दयापरिपालितः ॥१८॥
सद्बुद्ध्याधिष्ठितो नित्यमपथ्यत्यागकारकः ।
भेषजत्रयसेवित्वाद्रोगौघैर्मुक्तकल्पकः ॥१९॥
स नो निष्पुण्यकः किन्तु महात्मैष सपुण्यकः ।
ततस्तदेव संजातं नामास्येति सपुण्यकः ॥२०॥
कुतः पुण्यविहीनानां सामग्री भवतीदृशी ।
जन्मदारिद्र्यभाग् नैव चक्रवर्त्तित्वभाजनम् ॥२१॥

सद्बुद्धिसद्द्यायोगात्तिष्ठते राजमन्दिरे ।
ततः प्रभृति यत्तस्य संपन्नं तन्निबोधत ॥२२॥
अपथ्याभावतो नास्ति पीडा देहे परिस्फुटा ।
कचित्सूक्ष्माल्पकाला च यदि स्यात्पूर्वदोषजा ॥२३॥
ततः स्वयं गताकाङ्क्षो लोकव्यापारशून्यधीः ।
विधत्ते विमलालोकं नेत्रयोरञ्जनं सदा ॥२४॥
तत्त्वप्रीतिकरं तोयं पिबत्यश्रान्तमानसः ।
महाकल्याणकं भुङ्क्ते तत्सदन्नमनारतम् ॥२५॥
ततो बलं धृतिः स्वास्थ्यं कान्तिरोजः प्रसन्नता ।
बुद्धिपाटवमक्षाणां वर्द्धते ऽस्य प्रतिक्षणम् ॥२६॥
नाद्यापि सम्यगारोग्यं बहुत्वाद्रोगसन्ततेः ।
जायते केवलं देहे विशेषो दृश्यते महान् ॥२७॥
यः प्रेतभूतः प्रागासीद्गाढं बीभत्सदर्शनः ।
स तावदेष संपन्नो मानुषाकारधारकः ॥२८॥
ये रोरभावे भावाः प्रागभूवंस्तास्ते न सन्ततम् ।
तुच्छता क्लीवता लौल्यं शोकमोहभ्रमादयः ॥२९॥
यथोपभोगात्ते सर्वे नष्टप्रायतया तदा ।
न बाधका मनाग् जातास्तेनासौ स्फीतमानसः ॥३०॥
अन्यदात्यन्तहृष्टात्मा सद्बुद्धिं परिपृच्छति ।
भद्रे त्रयमिदं लब्धं मयैतत् केन कर्मणा ॥३१॥
तयोक्तं तात लभ्यन्ते सर्वेऽर्था दत्तपूर्वकाः ।
इति वार्त्ताजने तेन दत्तमेतत् कचित्त्वया ॥३२॥

ततः सञ्चिन्तयत्येवं वितीर्णं यदि लभ्यते ।
इदं सकलकल्याणकारणं भेषजत्रयम् ॥२३॥
इदानीं पात्रपात्रेभ्यः प्रयच्छामि विशेषतः ।
पुनर्जन्मान्तरे येन संपद्येतेदमक्षयम् ॥२४॥
तस्य चायमवष्टम्भो राजराजावलोकितः ।
धर्मबोधकरस्येष्टस्तद्दयापरिपूजितः ॥२५॥
श्लाघितः सर्वलोकेन सद्बुद्धेर्गाढवल्लभः ।
अहं सपुण्यकस्तेन लोके वर्त्ते किलोत्तमः ॥२६॥

ततश्च ।

यदि मां कश्चिदागत्य प्रार्थयिष्यति मानवः ।
तद्दास्यामीति मन्वानो दित्सुरप्येष तिष्ठति ॥२७॥
अत्यन्तं निर्गुणोऽप्यत्र महद्भिः कृतगौरवः ।
नूनं संजायते गर्वी यथायं द्रमकाधमः ॥२८॥
तत्र ये मन्दिरे लोकास्ते सर्वे त्रयभोजनाः ।
तद्वलादेव निश्चिन्ताः संजाताः परमेश्वराः ॥२९॥
प्रविष्टमात्रा विद्यन्ते तादृशा येऽपि निःस्वकाः ।
तेऽन्येभ्य एव तद् भूरि लभन्ते भेषजत्रयम् ॥४०॥
ततो न कश्चित्तन्मूले तदर्थमुपतिष्ठते ।
स दित्सु निष्पिंसचुर्याचमानं प्रतीक्षते ॥४१॥
स्थित्वापि कालं भूयांसमलब्धप्रार्थकस्ततः ।
सद्बुद्धिं पुनरप्येष तदर्थं परिपृच्छति ॥४२॥
सा प्राह भद्र निर्गत्य घोषणापूर्वकं त्वया ।

दीयतां यदि गृह्णीयुः केचित्स्यादतिसुन्दरम् ॥४३॥
ततोऽसौ घोषयत्युच्चैर्मदीयं भेषजत्रयम् ।
लोका गृह्णीत गृह्णीत गृह्णे तन्निःशटाय्यते ॥४४॥
ततः पूत्कुर्वतस्तस्माद्‌गृह्णीयुरतितुच्छकाः ।
ये तत्र तद्विधाः केचिदन्येषां तु हृदि स्थितम् ॥४५॥
अहो प्राग् दृष्टदारिद्र्यो रोरोऽयं मत्ततां गतः ।
राजवर्णवर्णनास्मान् ग्राहयत्यात्मभेषजम् ॥४६॥
ततः केचिद्धसन्त्युच्चैः केचिदुत्प्रासयन्ति तम् ।
अन्ये पराङ्मुखीभूय तिष्ठन्ति विगतादराः ॥४७॥
अथ तं तादृशं वीक्ष्य दानोत्साहविबाधकम् ।
जनव्यापारमागत्य सद्‌बुद्धिः कथयत्यसौ ॥४८॥
गृह्णन्ति द्रमका भद्रे न गृह्णन्ति महाजनाः ।
ममेच्छा यदि सर्वेषामेतेषामुपयुज्यते ॥४९॥
पर्यालोचे दृढं पटवी वर्त्तसे विमलेक्षणे ।
तदत्र हेतुर्विवेत ग्राहणेऽस्य महात्मनाम् ॥५०॥
तदाकर्ण्य महाकार्ये नियुक्ताहमनेन भोः ।
चिन्तयन्ती महाध्यानं प्रविष्टा सा विचक्षणा ॥५१॥
अथ निश्चित्य गर्भार्थं कार्यस्येत्यमभाषत ।
एक एवात्र हेतुः स्याद् ग्राहणे सर्वसंश्रयः ॥५२॥
राजाजिरे विधायेदं. काष्ठपात्र्यां जनाकुले ।
वस्तुत्रयं. विशालायां तिष्ठ विश्रब्धमानसः ॥५३॥
स्वयमेव ग्रहीष्यन्ति शून्यं दृष्ट्वा तदर्थिनः ।

स्मरन्तो रोरभावं हि लत्कारान्तं न गच्छते ॥५४॥
आदद्यात् कश्चिदेकोऽपि यदि तत्सगुणो नरः।
तेन स्यात्तारितो मन्ये चत एतदुदाहृतम् ॥५५॥
किञ्चिज्ज्ञानमयं पात्रं किञ्चित्पात्रं तपोमयम्।
आगमिष्यति तत्पात्रं यत्पात्रं तारयिष्यति ॥५६॥
ततोऽसौ वर्द्धितानन्दस्तस्या वचनकौशलैः।
विधत्ते तत्तथैवेति तच्चेदमभिधीयते ॥५७॥
प्रयुक्तं तादृशेनापि ये ग्रहीष्यन्ति मानवाः।
ते भविष्यन्ति नीरोगा यच्चयं तत्र कारणम् ॥५८॥

अन्यच्च।

यावदर्थं निस्पृहत्वाद् ग्रहणे तदनुग्रहात्।
अनुकम्पापरस्तच्च सर्वस्मात्तमर्हति ॥५९॥
एष तावत्समासेन दृष्टान्तः प्रतिपादितः।
अधुनोपनयं यूयं कथ्यमानं निबोधत ॥६०॥
अदृष्टमूलपर्यन्तं यदत्र कथितं पुरम्।
सोऽयं संसारविस्तारोऽदृष्टपारः प्रतीयताम् ॥६१॥
महामोहहतोऽनन्तदुःखाघ्रातो विपुण्यकः।
पूर्वं मदीयजीवोऽयं स रोर इति गृह्यताम् ॥६२॥
भिक्षाधारतया ख्यातं यत्तस्य घटकर्परम्।
तदायुर्गुणदोषाणामाश्रयस्तदिवर्त्तते ॥६३॥
डिम्भाः कुतीर्थिका याच्या वेदनाक्लिष्टचित्तता।
रोगा रागादयो ज्ञेया अजीर्णं कर्मसञ्चयः ॥६४॥

भोगाः पुत्रकलत्राद्या यच्च संसारकारणम् ।
तज्जीववर्गवृद्धिहेतुत्वात् कदन्नमभिधीयते ॥६५॥
यश्चासौ सुस्थितो नाम महाराजः प्रकाशितः ।
जानीत परमात्मानं सर्वज्ञं तं जिनेश्वरम् ॥६६॥
यच्च तज्जनितानन्दं गदितं राजमन्दिरम् ।
अनन्तभूतिसंपन्नं तज्ज्ञेयं जिनशासनम् ॥६७॥
स्वकर्मविवरो नाम यः प्रोक्तो द्वारपालकः ।
आत्मीयकर्मविच्छेदो यथार्थोऽसावुदाहृतः ॥६८॥
ये चान्ये सूचितास्तत्र द्वारपालप्रवेशकाः ।
ते मोहाज्ञानलोभाद्या विज्ञेयास्तलचिन्तकैः ॥६९॥
आचार्यास्तत्र राजान उपाध्यायाः सुमन्त्रिणः ।
गीतार्थवृषभा योद्धा गणचिन्तानियुक्तकाः ॥७०॥
सामान्यभिक्षवः सर्वे विज्ञेया मूलवर्गिकाः ।
आर्यास्तु तत्र सद्गेहे प्रशान्ताः स्थविरा जनाः ॥७१॥
भटौघाः श्राद्धसङ्घातास्तद्भावबद्धमानसाः ।
ज्ञेया विलासिनीसङ्घा भक्तास्तत्प्रमदागणाः ॥७२॥
शब्दादिविषयानन्दवर्णनं पुनरत्र यत् ।
तदेवमर्थं सद्धर्माज्जायन्ते तेऽपि सुन्दराः ॥७३॥
धर्मबोधकरो ज्ञेयः सूरिर्यो मत्प्रबोधकः ।
तद्दया तस्य या जाता ममोपरि महाकृपा ॥७४॥
ज्ञानमञ्जनमुद्दिष्टं सम्यक्त्वं जलमुच्यते ।
चारित्रमत्र विज्ञेयं परमान्नं मनीषिभिः ॥७५॥

सद्बुद्धिः शोभना बुद्धिः सन्मार्गे या प्रवर्त्तिका ।
काष्ठपात्री यथाकारा वक्ष्यमाणा कथोच्यते ॥७६॥
एषा समासतस्तावत् कृता सामान्ययोजना ।
विशेषयोजनाव्यक्तं गद्येनोदाहरिष्यते ॥ ४७७॥

तत्रेह तावत्तत्त्वविदुषामेष मार्गो यदुत तेषां कल्याणाभिनिवेशितया निष्प्रयोजनो विकल्पो न चेतसि विवर्त्तते। अथ कदाचिद् भावितावस्थायां विवर्त्तेत तथापि ते न निर्निमित्तं भाषन्ते। अथ कदाचित्तत्त्वज्ञजनान्तर्गततया भाषेरन् तथापि न निर्हेतुकं चेष्टन्ते यदि पुनस्ते निष्कारणं चेष्टेरन् ततोऽतत्त्वज्ञजनसार्थादविशिष्टतया तत्त्वविदत्ता विशीर्येत तस्मात्तत्त्ववेदिभ्यात्मनोन्तर्भावमभिलषता सकलकालं सर्वेण स्वविकल्पजल्पाचरणानां सार्थकत्वं यत्नतः परिचिन्तनीयम्। तद्वेदिनां च पुरतः कीर्त्तनीयम् ते हि निरर्थकेष्वप्यात्मविकल्पजल्पव्यापारेषु सार्थकत्वबुद्धिं कुर्वन्तमनुकम्पया वारयेयुरिति। अतो मयापि स्वप्रवृत्तेः सार्थकत्वमावेदयता मामुपमितिभवप्रपञ्चाभिधानां कथामारब्धुकामेन कथानकं दृष्टान्तद्वारेण निवेदितं तदेतद्यथावधारितं भो भव्यास्ततो मदनुरोधेन विहाय विक्षेपान्तरमस्य दार्ष्टान्तिकमर्थमाकर्णयत। तत्र यत्तावददृष्टमूलपर्यन्तं नाम नगरमनेकजनाकुलं सदास्थायुकमाख्यातं सोऽयमनादिनिधनोऽविच्छिन्नरूपोऽनन्तजन्तुव्रातपूरितः संसारो द्रष्टव्यः।
तथाहि।

युज्यतेऽस्य नगरस्य नगरता कल्पयितुं यतोऽत्र धवलगृहायन्ते देवलोकादिस्थानानि। हट्टमार्गायन्ते परापरजन्मपद्धतयः।

विविधपण्यायन्ते नानाकारसुखदुःखानि । तदनुरूपमूल्यायन्ते बहुविधपुण्यापुण्यानि । विचित्रचित्रोज्ज्वलदेवकुलायन्ते सुगतकणभक्षाक्षपादकपिलादिप्रणीतकुमतानि । पौर्वापर्यपर्यालोचनविकलमुग्धजनचित्ताक्षेपकारितया महर्षप्रबलकलकलोपेतदुर्दान्तबालकशापायन्ते। क्रोधादयः कषायाः सकलविवेकिमहालोकचित्तोद्वेगहेतुतया तुङ्गप्राकारायन्ते। महामोहलंघ्यतया वेष्टकतया च महापरिखायते रागद्वेषात्मिका तृष्णा । विषयजलदुष्पूरतयाऽतिगम्भीरतया च विस्तीर्णमहासरायन्ते शब्दादयो विषयाः। प्रबलजलकल्लोलाकुलतया विपर्यस्तजनशकुनाधारतया च गम्भीरान्धकूपायन्ते प्रियविप्रयोगानिष्टसंयोगस्वजनमरणधनहरणादयो भावाः। त्रासहेतुतया अदृष्टमूलतया च विशालारामकाननायन्ते जन्तुदेहाः। हृषीकमनस्सञ्चरीकनिलयनकारणतया स्वकर्मविविधविटपिकुसुमफलभरपूरिततया चेति ।

यस्तु तत्र नगरे निष्पुण्यको नाम द्रमकः कथितः सोऽत्र संसारनगरे सर्वज्ञशासनप्राप्तेः पूर्वं पुण्यरहिततया यथार्थाभिधानो मदीयजीवो द्रष्टव्यः। यथासौ द्रमको महोदरः तथायमपि जीवो विषयकदशनदुष्पूरत्वान्महोदरः । यथाऽसौ द्रमकः प्रलीनबन्धुवर्गस्तथायमपि जीवोऽनादौ भवभ्रमणे केवलो जायते केवलो म्रियते केवलश्च स्वकर्मपरिणतिढौकितं सुखदुःखमनुभवति । इत्यतो नास्य परमार्थतः कश्चिद्बन्धुरस्ति। यथाऽसौ रोरो दुष्टबुद्धिस्तथायमपि जीवोऽतिविपर्यस्तो यतोऽनन्तदुःखहेतून् विषयानासाद्य परितुष्यति परमार्थशत्रून् कषायान् बन्धूनिव सेवते। परमार्थतोऽन्धत्वमपि

नगरेऽपरापरजन्मलचणेषु उच्चावचेषु गेहेषु विषयकदन्नाशापाश-वशीकृतोऽनारतं भ्रमतीति। यत्पुनस्तस्य भिक्षाधारं घटखर्पर-माख्यातं तदस्य जीवद्रमकस्यायुष्कं विज्ञेयं यतस्तदेव तदुपभोग्यस्य विषयकदन्नादेस्तारिचमहाकल्याणकादेश्चाश्रयो वर्त्तते। यतश्च तदेव गृहीत्वा भूयोभूयोऽस्मिन् संसारनगरेऽयं जीवः पर्यटतीति। ये तु तस्य द्रमकस्य दुर्दान्तडिम्भसंघाता यष्टिमुष्टिमहालोष्ट-प्रहारैः क्षणे क्षणे ताडयन्तः शरीरं जर्जरयन्तीति निदर्शितास्तेऽस्य जीवस्य कुविकल्पास्तत्संपादकाः कुतर्कग्रन्थास्तत्प्रणेतारो वा कुतीर्थिका विज्ञेयाः। ते हि यदा यदाऽमुं जीवं वराकं पश्यन्ति तदा तदा कुहेतुशतमुद्गरघातपातैरस्य तत्त्वाभिमुखरूपं शरीरं जर्जरयन्ति। ततश्च तैर्जर्जरितशरीरोऽयं जीवो न जानीते कार्याकार्यविचारं न लक्षयति भक्ष्याभक्ष्यविशेषं न कलयति पेयापेयस्वरूपं नाववुध्यते हेयोपादेयविभागं नावगच्छति स्वपरयोर्गुणदोषनिमित्तमिति ततोऽसौ कुतर्कभ्रान्तचित्तश्चिन्तयति नास्ति परलोको न विद्यते कुशलाकुशलकर्मणां फलं न संभवति खल्वयमात्मा नोपपद्यते सर्वज्ञः न घटते तदुपदिष्टो मोक्षमार्ग इति। ततोऽसावतत्त्वाभिनिविष्ट-चित्तो हिनस्ति प्राणिनो भाषतेऽलीकमादत्ते परधनं रमते मैथुने परदारेषु वा गृह्णाति परिग्रहं न करोति चेच्छापरिमाणं भक्षयति मांसमास्वादयति मद्यं न गृह्णाति सदुपदेशं प्रकाशयति कुमार्गं निन्दति वन्दनीयान् वन्दत्यवन्दनीयान् गच्छति स्वपरयो-र्गुणदोषनिमित्तमिति वदति परावर्णवादमाचरति समस्तपातका-नीति। ततो बध्नाति निविडं भूरिकर्मजालं पतत्येव जीवो

नरकेषु। तत्र च पतितः पच्यते कुंभीपाकेन विपाद्यते क्रकचपाटनेन आरोह्यते वज्रकण्टकाकुलासु शौल्मलीषु पाय्यते सन्दंशकैर्मुखं विदृत्य कलकलायमानं तप्तं त्रपु भक्ष्यते निजमांसानि भृज्यतेऽत्यन्तसन्तप्तभ्राष्ट्रेषु तार्यते पूयवसारुधिरक्लेदमूत्रान्त्रकलुषां वैतरणीं छिद्यतेऽसिपत्रवनेषु स्वपापभरप्रेरितैः परमाधार्मिकसुरैरिति।

तथा समस्तपुद्गलराशिभक्षणाऽपि नोपशाम्यति बुभुक्षा। निःशेषजलधिपानेऽपि नापगच्छति तर्षः। अभिभूयते शीतवेदनया कदर्थ्यते तापातिरेकेण तथोदीरयन्ति च तदन्यनारका नानाकाराणि दुःखानि। ततस्त्वायं जीवो गाढतापानुगतो हा मातर्हा नाथास्त्रायध्वं त्रायध्वमिति विक्लवमाक्रोशति न चास्य तत्र गात्रत्रायकः कश्चिद्विद्यते।

कथञ्चिदुत्तीर्णोऽपि नरकाद्विबाध्यते तिर्यक्षु वर्त्तमानः। कथं वाह्यते भारं कुट्यते लकुटादिभिः छिद्यन्तेऽस्य कर्णपुच्छादयः खाद्यते कृमिजालैः सहते बुभुक्षां म्रियते पिपासया तुद्यते नानाकारयातनाभिरिति।

ततः कथञ्चिदवाप्तमनुष्यभावोऽप्येष जीवः पीड्यत एव दुःखैः। कथं तदुच्यते। क्लेशयन्त्येनं रोगव्राताः जर्जरयन्ति जराविकाराः दोदूयन्ते दुर्जनाः विक्लवयन्तीष्टवियोगाः परिदेवन्त्यनिष्टसंप्रयोगाः विसंस्थुलयन्ति धनहरणानि आकुलयन्ति स्वजनमरणानि विक्लवयन्ति नानाव्यसनानीति।

तथा। कथञ्चिल्लब्धविबुधजन्माप्येष जीवो ग्रस्यत एव नानावेदनाभिः। तथा हि। आज्ञाप्यते विवशः शक्रादिभिः खिद्यते

परोत्कर्षदर्शनेन जीर्यते प्राग्भवकृतप्रमादस्मरणेन दन्दह्यतेऽस्वाधीनामरसुन्दरीप्रार्थनेन शल्यते तन्निदानचिन्तनेन निन्द्यते महर्द्धिकदेववृन्देन विलपत्यात्मनश्च्यवनदर्शनेन आक्रन्दति गाढप्राप्तासन्नमृत्युः पतति समस्ताशुचिनिदाने गर्भकलमल इति ।

एवं स्थिते । यद्रमकं वर्णयताऽभ्यधायि यदुत सर्वाङ्गीणमहाघाततापानुगतचेतनः हा मातस्त्रायतामित्थं दैन्यविक्रोशविक्लव इति । तदस्यापि जीवस्य तुल्यमेव द्रष्टव्यम् । तस्मादस्याः सर्वस्या महानर्थपरम्परायाश्चात्मगताः कुविकल्पास्तत्सम्पादकाः कुदर्शनग्रन्थास्तत्प्रणेतारश्च कुतीर्थिकाः कारणमिति । यत्तून्मादादयस्तस्य द्रमकस्य रोगा निर्दिष्टास्तस्य जीवस्य महामोहादयो विज्ञेयाः । तत्र मोहो मिथ्यात्वं तदुन्माद इव वर्त्तते समस्ताकार्यप्रवृत्तिहेतुतया ज्वर इव रोगः सर्वाङ्गीणमहातापनिमित्ततया शूलमिव द्वेषो गाढहृदयवेदनाकारणतया पामेव कामस्त्रीमविषयाभिलाषकण्डूकारितया गलत्कुष्ठमिव भयशोकारतिसम्पाद्यं दैन्यम् । जनजुगुप्साहेतुतया चित्तोद्वेगविधायितया च नेत्ररोग इवाज्ञानं विवेकदृष्टिविघातनिमित्ततया जलोदरमिव प्रमादः सदनुष्ठानोत्साहघातकतयेति । ततश्चायं जीवो मिथ्यात्वादिभिरेतैर्भावरोगैर्विह्वलीकृतो न किञ्चिच्चेतयते । ततश्च यदेतत् साम्प्रतमेव न जानीते भक्ष्याभक्ष्यमित्याद्यनध्यवसायरूपं महातमः प्रतिपादितम् । ये च नास्ति परलोक इत्यादयो विपर्यासविकल्पाः प्रतिपादितास्तेऽस्य दयस्याप्युत्पत्तौ बाह्याः कुतर्कग्रन्थादयः सहकारिकारणभावेनोत्पादकाः । एते तु रागद्वेषमोहादय आन्तरा उपादान-

कारणभावेन जनकास्तस्मात्पूर्वोक्ता सर्वानर्थपरम्परा परमार्थतो गाढतरमेतज्जन्यापि विज्ञेया । किञ्च कुशास्त्रसंस्कारादयः कादाचित्का एते तु रागादयस्तदुत्पादने सकलकालभाविनः । अन्यच्च । कुदर्शनश्रवणादयो भवन्तोऽपि भवेयुर्वानर्थपरंपराकारणं न वेति व्यभिचारिणः । एते तु रागादयो भवन्तोऽवश्यतया महानर्थगर्त्तपातं कुर्वन्त्येव नास्त्यत्र व्यभिचारो यतस्तैरभिभूतोऽयं जीवः प्रविशति महातमोऽज्ञानरूपं विधत्ते नानाविधविपर्यासविकल्पान् अनुतिष्ठति कदनुष्ठानशतानि सञ्चिनोति गुरुतरकर्मभारं ततस्तत्परिणत्या क्वचिज्जायते सुरेषु क्वचिदुत्पद्यते मानुषेषु क्वचिदासादयति पशुभावं क्वचित्पतति महानरकेषु । ततश्च । तदेव प्राक्प्रतिपादितस्वरूपं महादुःखसन्तानमनवरतमरघट्टघटीयन्त्रन्यायेनानन्तशोऽनुभवद्वारेण परावर्त्तयतीति । एवञ्च स्थिते यत्तद्रमकवर्णने प्रत्यपादि यदुत शीतोष्णदंशमशकक्षुत्पिपासाद्युपद्रवैर्बाध्यमानो महाघोरनरकोपमवेदन इति । तदत्र जीवरोरे समर्गलतरं मन्तव्यमिति । अत एव च यदुक्तं यदुतासौ द्रमकः ।

कृपास्पदं सतां दृष्टो हास्यस्थानं स मानिनाम् ।
बालानां क्रीडनावासो दृष्टान्तः पापकर्मणाम् ॥

तदत्रापि जीवे सकलं योजनीयम् । तथाहि । सततमसातसंनिपातग्रस्तोऽयं जीवो दृश्यमानोऽत्यन्तसात्मीभूतप्रशमसुखरसानां भगवतां सत्साधूनां भवत्येव कृपास्थानं क्लिश्यमानेषु सकलकालं करुणाभावनाभावितचित्तत्वात्तेषां तथा मानिनामिव वीररसवशेन तपश्चरणकरणोद्यतमतीनां सरागसंयतानां भवत्येवायं जीवो हास्य-

स्थानं धर्माख्यपुरुषार्थसाधनविकलस्य कीदृशी खल्वस्य पुरुषतेति तेषामनादरदृष्टिः। तथा।

बालानां मिथ्यात्वाध्मातचेतसां तथाविधलोकानां कथञ्चिद्वा-प्तविषयसुखलवानां भवत्येवायं पापिष्ठजीवः क्रीडनावासो दृश्यन्ते हि धनगर्वोद्धुरचित्तैस्तथाविधकर्मकरादयो नानाप्रकारं विडम्ब्य-मानाः। तथा पापकर्मणां फलप्ररूपणावसरे भवत्येवं विधो जीवो दृष्टान्तः। तथा हि। भगवन्तः पापकर्माणि दर्शयन्तो भव्यजन्तूनां संवेगजननार्थमीदृशजीवानेव दृष्टान्तयन्तीति। यत्पुनरवाचि यदुत।

अन्येऽपि बहवः सन्ति रोरास्तत्र महापुरे।
केवलं तादृशः प्रायो नास्ति निर्भाग्यशेखरः॥

तदेतदात्मीयजीवस्यात्यन्तविपरीतचारितामनुभवताभिहितं म-या। योऽयं मदीयजीवोऽधरितजात्यन्धभावोऽस्य महामोहोऽप-हसितनरकतापोऽस्य रागः। उपमागोचरातीतोऽस्य परेषु द्वेषः। अपहसितवैश्वानरोऽस्य क्रोधो लघूकृतमहाशैलराजोऽस्य मानो विनिर्जितभुजगवनितागतिरस्य माया दर्शितस्वयम्भूरमणसागर-लघुभावोऽस्य लोभः स्वप्नपिपासाकारस्य विषयलाम्पट्यं भगव-द्धर्मप्राप्तेः प्रागासीत्स्वसंवेदनसिद्धमेतत्। अहमेवं तर्कयामि नैव-मुत्कटदोषतप्रायोऽन्यजीवानां यथा चैतत्तोपपत्तिकं भवति तथो-त्तरत्र प्रतिबोधावसरे विस्तरेणाभिधास्यामः।

यच्चोक्तं यथाऽसौ रोरस्तावदृष्टमूलपर्यन्ते नगरे प्रतिभवनं भिक्षा-मटन्नेवं चिन्तयति। यदुत अमुकस्य देवदत्तस्य बन्धुमित्रस्य जिन-दत्तस्य च गृहेऽहं स्निग्धां दृष्टां पक्वीं, सुसंस्कृतां भिक्षां लप्स्ये तथाहं

तूर्णमादाय यथान्ये द्रमका न पश्यन्ति तथैकान्ते यास्यामि। तत्र कियतीमपि भोच्ये शेषामन्यदिनार्थं स्थापयिष्यामि। ते तु द्रमकाः कदाचित्कुतश्चिन्निमित्तान्मां लब्धलाभं ज्ञास्यन्ति ततश्चागत्य याचमाना मामुपद्रवयिष्यन्ति। ततश्च म्रियमाणेनापि मया न दातव्या सा तेभ्यः। ततस्ते बलामोटिकया ग्रहीष्यन्ति। ततोऽहं तैः सह योद्धुं प्रारप्स्ये। ततस्ते मां यष्टिमुष्टिलोष्टादिभिस्ताडयिष्यन्ति। ततोऽहं महामुद्गरमादाय तानेकैकं चूर्णयिष्यामि क्व यान्ति दृष्टास्ते मया पापा इत्येवमलीकविकल्पजालमालाकुलीकृतमानसः केवलं प्रतिक्षणं रौद्रध्यानमापूरयिष्यति न पुनरसौ वराकः प्रतिगृहमटाट्यमानोऽपि किञ्चिद्भोजनजातमासादयति। प्रत्युत हृदयखेदमात्मनोऽनन्तगुणं विधत्ते। अथ कथञ्चिद्दैववशात्कदन्नलेशमात्रमाप्नोति तदा महाराज्याभिषेकमिवासाद्य हर्षातिरेकाज्जगदप्यात्मनोऽधस्तान्मन्यते। तदेतत्सर्वमत्राऽपि जीवे योजनीयम्। तथाह्यस्य संसारेऽहर्निशं पर्यटतो य एते शब्दादयो विषया यच्चैतद्वन्धुवर्गधनकनकादिकं यच्चान्यदपि क्रीडाविकथादिकं संसारकारणं तद्वृद्धिहेतुतया रागादिभावरोगकारणत्वात् कर्मसञ्चयरूपमहाजीर्णनिमित्तत्वाच्च कदन्नं विज्ञेयं ततश्चायमपि महामोहग्रस्तो जीवश्चिन्तयति। यदुत परिणेष्याम्यहमनल्पयोषितः ताश्च रूपेण पराजेष्यन्ति त्रिभुवनं सौभाग्येनाभिमुखयिष्यन्ति मकरध्वजं विलासैः क्षोभयिष्यन्ति मुनिहृदयानि कलाभिरुपहसिष्यन्ति बृहस्पतिं विज्ञानेन रञ्जयिष्यन्ति अतिदुर्विदग्धजनचित्तानीति। तासां चाहं भविष्यामि सुतरां हृदयवल्लभः न सहिष्यन्ते ताः पर-

पुरुषगन्धमपि न लंघयिष्यन्ति मम कदाचिदाज्ञां करिष्यन्ति मे सततं चित्तानन्दातिरेकं प्रसादयिष्यन्ति मां दर्शितकृत्रिमकोपविकारं विधास्यन्ति कामोत्कोचकरणबहूनि चाटुशतानि प्रकटयिष्यन्तीङ्गिताकारैर्मे हृदयसद्भावं हरिष्यन्ति नानाविकारविब्बोकैर्ममानसं हनिष्यन्ति मामनवरतं ताः परस्परेर्ष्यया साभिलाषं कटाक्षविक्षेपैरिति । तथा भविष्यति मे विनीतो दक्षः शुचिः सुवेषोऽवसरज्ञो हृदयग्राही मय्यनुरक्तः समस्तोपचारकुशलः शौर्यौदार्यसम्पन्नः सकलकलाकौशल्योपेतः प्रतिपत्तिनिपुणोऽपहसितशक्रपरिकरः परिकर इति । तथा । भविष्यन्ति मे निजयशःशुभ्रसुधाधवलतया स्वचित्तसन्निभा अत्युच्चतया च हिमगिरिसङ्काशा विविधचित्रोज्ज्वला वितानमालोपशोभिताः शालभञ्जिकाद्यनेकनयनानन्दकारिरूपरचनाकलिता बहुविधशाला विशाला नानाप्रकारप्रकोष्ठविन्यासा अतिविस्तीर्णानेकाकारस्थानमण्डपपरिकरिताः समंतान्महाप्राकारपरिक्षिप्ता अपहसितविबुधाधिपावासाः सप्तभूमिकादयो भूयांसः प्रासादाः । तथा करिष्यन्ति मे भवने सततं प्रकाशं मरकतेन्द्रनीलमहानीलकर्केतनपद्मरागवज्रवैडूर्येन्दुकान्तसूर्यकान्तचूडामणिपुष्परागादिरत्नराशयः । तथा विराजिष्यन्ते मम मन्दिरे समन्तात्पीतोद्योतमादर्शयन्तो हाटककूटाः । तथा भविष्यन्ति मम सदनेऽनन्ततया हरिणधान्यकुप्यादिकमनाम्नास्थानम् । तथा नन्दयिष्यन्ति मे हृदयं मुकुटाङ्गदकुण्डलप्रालम्बादयो भूषणविशेषाः । तथा जनयिष्यन्ति मे चित्तरतिं चीनांशुकपट्टांशुकदेवांशुकप्रमुखयो वस्त्रविस्ताराः । तथा वर्द्धयिष्यन्ति मे मानसानन्दं मणि-

कनकविचित्रभक्तिमण्डितराजतक्रीडापर्वतककलितानि दीर्घिकागुञ्जालिकायन्त्रवापिकाद्यनेकविधजलाशयमनोहराणि बकुलपुन्नागनागाशोकचम्पकप्रभृतिविविधविटपिजातिविस्ताराणि पञ्चवर्णगन्धबन्धुरकुसुमभरानम्रशाखापर्यन्तानि कुमुदकोकनदादिजलरुहचारूणि भ्रमद्भृङ्गझङ्कारसारतारोपगीतानि प्रासादसमीपवर्त्तीनि लीलोपवनानि प्रमोदयिष्यन्ति मां निर्जितदिनकरस्यन्दनसौन्दर्या रथसङ्घाताः । हर्षयिष्यन्ति मामपहस्तितसुराधिपहस्तिमाहात्म्यानां वरकरिणां कोटयः । तोषयिष्यन्ति मामधरितविबुधपतिहरिरया हयकोटिकोटयः । समुल्लासयिष्यन्ति मे मनसि प्रमदातिरेकं पुरतो धावन्तोऽनुरक्ता अपरपराकरणपटवः परस्परमविभिन्नचेतसो न चात्यन्तसंहतासङ्ख्यातीताः पदातिसङ्घाताः । रञ्जयिष्यन्ति मे प्रतिदिनं प्रणतिलालसानि राजवृन्दानि किरीटमणिमरीचिजालैश्चरणारविन्दम् । भविष्याम्यहं भूरिभूमिमण्डलाधिपतिः । तन्त्रयिष्यन्ति मे समस्तकार्याणि प्रज्ञावज्ञातसुरमन्त्रिणोऽमात्यसत्तमाः । तदिदं सुसंस्कृतभिक्षालाभेच्छातुल्यं विज्ञेयम् । पुनश्च चिन्तयति । ततोऽहमतिसमृद्धतया निश्चिन्ततया च परिपूर्णसमयसामग्रीकः करिष्यामि विधिना कुटीप्रावेशिकं रसायनं ततस्तदुपयोगात् संपत्स्यते मे वलीपलितखालित्यव्यङ्गादिविकलं जरामरणविकाररहितं देवकुमाराधिकतरद्युतिवितानं निःशेषविषयोपभोगभाजनं महाप्राणं शरीरम् । तदिदं लब्धभिक्षस्यैकान्तगमनमनोरथसममवगन्तव्यम् । भूयश्च मन्यते । ततोऽहमतिप्रमुदितचेता गम्भीररतिसागरावगाढस्तेन ललनाकलापेन सार्द्धं ललमानः खल्वेवं करिष्ये ।

यदुत क्वचिदनवरतप्रवृत्तमदनरसपरवशोऽनारतसुरतविनोदेन स्पर्शनेन्द्रियं प्रीणयिष्ये। क्वचिद्रसनेन्द्रियोत्सवद्वारेण स्वच्छीकृताशेषद्रवीकवर्गान्मनोज्ञरसानास्वादयिष्ये। क्वचिदतिसुरभिकर्पूरानुविद्धमलयजकश्मीरजकुरङ्गमदादिविलेपनद्वारेण च पञ्चसुगन्धिकतांबूलास्वादनव्याजेन चाहं घ्राणेन्द्रियं तर्पयिष्ये। क्वचिदनारतताडितमरुजध्वनिसनाथममरसुन्दरीविभ्रमललनालोकसम्पादितमनेकाकारकरणाङ्गहारमनोहरं प्रेक्षणकमीक्षमाणश्चक्षुरिन्द्रियानन्दं विधास्ये। क्वचित्कलकण्ठतत्प्रयोगविशारदजनप्रयुक्तं वेणुवीणामृदङ्गकाकलीगीतादिस्वनमाकर्णयन् श्रोत्रेन्द्रियमाह्लादयिष्ये। क्वचित्पुनरखिलकलाकलापकौशलोपेतैः समानवयोभिः समर्पितहृदयसर्वस्वैः शौर्यौदार्यवीर्यधैर्यैरपहसितमकरध्वजसौन्दर्यैर्मित्रवर्गैः सार्द्धं नानाविधक्रीडाविलासै रममाणः समग्रेन्द्रियग्राममाह्लादातिरेकमास्कन्दयिष्यामीति। तदिदमेकान्तेभिचाभचणाकांचामदृशमवसेयम्। चिन्तयति च ततो मामेवं निरतिशयसुखानुभवद्वारेण तिष्ठतो भूयांसं कालं समुत्पत्स्यन्ते सुरकुमाराकारधारकाणि रिपुसुन्दरीहृदयदाहदायकानि च समाह्लादितसमस्तबन्धुवर्गप्रणयिजननानाप्रकृतीनि मत्प्रतिबिम्बकसंकाशानि सुतशतानि। ततोऽहं सम्पूर्णाशेषमनोरथविस्तारः प्रत्यस्तमितप्रत्यूहसमूहोऽनन्तकालं यथेष्टचेष्टया विचरिष्यामि। सोऽयं भूरिदिनार्थं स्थापनमनोरथ इव वर्त्तते। यत्पुनराशोचयति।

यदुत। अथ कदाचित्तं तथाभूतं मामकीनं संपत्प्रकर्षं शेषनृपतयः श्रोष्यन्ति। ततस्ते मत्पराघातचेतसः सर्वेऽपि संभूय मदि-

पर्येषूपप्लवं विधास्यन्ति। ततोऽहं तेषामुपरि चतुरङ्गसेनया विजेषेण यास्यामि ततस्ते स्वबलावलेपवशेन मया सह सङ्ग्रामं करिष्यन्ति। ततो भविष्यति प्रभूतकालिको महारणविमर्द्दः। ततस्ते परस्परं संहततया भूरिसाधनतया च मनाग् मामाक्रमिष्यन्ति ततोऽहमभिवर्द्धितक्रोधवन्धतया प्रादुर्भूतप्रबलरणोत्साहस्तानेकैकं सबलं चूर्णयिष्ये। नास्ति समस्तानामपि पातालेऽपि प्रविष्टानां मया बद्धानां मोक्ष इति। तदिदं रौररणाकाण्डविड्वरसमानमत्रोद्द्यम्। भूयश्च भावयति। ततोऽहमवजितसमस्तपृथिवीभाविराजवृन्दलालस्ये चक्रवर्त्तिराज्यमहाभिषेकम्। ततो नास्ति वस्तु तत्त्रिभुवने यन्मे न सम्पत्स्यत इति। एवमेष जीवो राजपुत्राद्यवस्थायां वर्त्तमानो बहुशो निष्प्रयोजनविकल्पपरम्परयात्मानमाकुलयति।

ततश्च। रौद्रध्यानमापूरयति ततो बध्नाति निविडं कर्म ततः पतति महानरकेषु न चेह तथापि खिद्यमानोऽपि पूर्वोपार्जितपुण्यविकलः स्वहृदयतापं विमुच्यापरं कञ्चनार्थमासादयति। तदनेनैतल्लक्षणीयं यदा खल्वेष जीवो नरपतिसुताद्यवस्थायामतिविशालचित्ततया किलापकर्णिततुच्छवस्तुगोचरमनोरथो दृहदर्थप्रार्थकतया स्वबुद्ध्यैव महाभिप्रायस्तदापि विदितप्रशमामृतास्वादनसुखरसानां विज्ञातविषयविपाकदारुणभावानां भिद्धिवधूसम्बन्धबद्धाध्यवसायानां भगवतां सत्साधूनां क्षुद्रद्रमकप्रायः प्रतिभासते किम्पुनः शेषास्ववस्थास्विति।

तथा हि। द्विजातिवणिजकाभीरान्त्यजादिभावेषु वर्त्तमानोऽ जीवोऽदृष्टतत्त्वमार्गो वराकस्तुच्छाभिप्रायतया क्वचिद्विचाणामपि

क्षुद्रग्रामाणां लाभं चक्रवर्त्तित्वं मन्यते । क्वचित्क्षेत्रखण्डमात्रप्रभुत्व-मपि महामण्डलिकत्वमाकलयति । क्वचिज्जारकुलटामप्यमरसुन्दरीं कल्पयति । क्वचिद्बीभत्सविरूपमप्यात्मानं मकरध्वजं चिन्तयति । क्वचिन्मातङ्गपाटकाकारमप्यात्मपरिजनं शक्रपरिवारमिव पश्यति । क्वचिद्द्रविणस्य त्रिचतुराणां सहस्राणां शतानां विंशतीनां रूप-काणामपि लाभं कोटीश्वरत्वमवगच्छति । क्वचित्पञ्चषाणामपि धान्यद्रोणानामुत्पत्तिं धनदविभवतुल्यां लक्षयति । क्वचित्स्वकुटुम्ब-भरणमपि महाराज्यमवबुध्यते । क्वचिद्दुष्पूरोदरदरीपूर्णमपि महो-त्सवाकारं जानीते । क्वचिद्भिक्षावाप्तिमपि जीवितावाप्तिं निश्चि-नोति । क्वचिदन्यं शब्दादिविषयोपभोगनिरतमुद्वीक्ष्य राजा-दिकं शक्रोऽयं देवोऽयं धन्योऽयं पुण्यभागयं महात्मायं पुरुषो यदि ममाप्येवं सम्पद्यन्ते विषयास्ततोऽहमप्येवं विलसामीति चिन्त-यन्परिताम्यति । तथाविधाकूतविडम्बितश्च तदर्थङ्करोति भूभुजां सेवां पर्युपास्ते तान् सर्वदा दर्शयति विनयं वदत्यनुकूलं शोका-क्रान्तोऽपि हसति तेषु हसत्सु सञ्जातजातसुपुत्रहर्षप्रकर्षोऽपि रोदिति तेषु रुदत्सु निजशत्रूनपि स्तौति तदभिमतान् स्वपरम-सुहृदोऽपि निन्दति तद्द्विषो धावति पुरतो रात्रिंदिवं मर्दयति खिन्नदेहोऽपि तच्चरणान् क्षालयत्यशुचिस्थानानि विधत्ते तद्वच-नात्सर्वजघन्यकर्माणि प्रविशति कृतान्तवदनकुहर इव रणमुखे समर्-पयति करवालादिघातानामात्महृदयं म्रियते धनकामोऽपूर्ण-काम एव वराकः । तथा प्रारभते कृषीं खिद्यते सर्वमहोरात्रं वाहयति हलं अनुभवत्यटव्यां पशुभावं विमर्दयति नानाप्रकारान्

प्राणिनः परितप्यते तृष्णाभावेन बाध्यते बीजनाशेन तथा विधत्ते वाणिज्यं भाषतेऽलीकं मुष्णाति विश्रब्धमुग्धलोकान् याति देशान्तरेषु सहेत शीतवेदनां घमते तापसन्तापं तितिक्षते बुभुक्षां न गणयति पिपासामनुभवति चाघायासादीनि दुःखशतानि प्रविशति महारौद्रसमुद्रे प्रलीयते यानपात्रभङ्गेन भवति भक्ष्यं जलचराणां तथा भ्रमति गिरिकन्दरोदरेषु आस्कन्दत्यसुरविवराणि निभालयति रसकूपिकाः भक्ष्यते तदा रक्षराक्षसैः तथाऽवलम्बते महासाहसं याति रात्रौ श्मशानेषु वहति मृतकलेवराणि विक्रीणाति महामांसं साधयति विकलवेतालं निपात्यते तेन कुपितेन । तथाऽभ्यस्यति खन्यवादं निरीक्ष्यते निधानलक्षणानि तुष्यति तद्दर्शनेन ददाति रात्रौ तद्ग्रहणार्थं भूतबलिं दूयते तदङ्गारभृतभाजनवीक्षणेन । तथानुशीलयति धातुवादं समुपचरति नरेन्द्रवृन्दं गृह्णाति तदुपदेशं मीलयति मूलजालानि समाहरति धातुमृत्तिकाः समुपढौकयति पारदं क्लिश्यते तस्य जारणचारणमारणकरणेन धमते रात्रिन्दिवं पूत्करोति प्रतिक्षणं क्षुभ्यति पीतश्वेतक्रिययोर्लेशसिद्धौ खादत्यहर्निशमाशामोदकान् व्ययीकरोति तदर्थं शेषमपि धनलवं मार्यते दुःसाधितकर्मविभ्रमेण । तथा विषयोपभोगसम्पत्तये धनार्थमेव चायं जीवः कुरुते चौर्यं रमते द्यूतमाराधयति यक्षिणीं परिजपति मन्त्रान् गणयति ज्योतिषं प्रयुङ्क्ते निमित्तं आवर्जयति लोकहृदयं अभ्यस्यति सकलं कलाकलापं किं बहु तन्नास्ति यन्न करोति तन्न विद्यते यन्न वदति तन्न सम्भवति यन्न चिन्तयति न च तथाप्ययमनवरतमितश्चेतश्च

तदर्थं बंभ्रम्यमाणः प्राग्विहितपुण्यशून्यः समभिलषितार्थस्य तिल-तुषविभागमात्रमपि प्राप्नोति केवलं स्वचित्तसन्तापमार्त्तरौद्रध्याने गुरुतरकर्मभारं तद्द्वारेण दुर्गतिं चात्मनोऽभिवर्द्धयतीति। यदि पुनः कथञ्चित्पूर्वविहितपुण्यलवः स्यात् ततोऽयं जीवस्तदुदयेन धनसहस्रादिकं वा अभिमतभार्यां वा स्वशरीरसन्दर्यं वा विनीतपरिजनं वा धान्यसञ्चयं वा कतिचिद्ग्रामप्रमुखं वा राज्यादिकं वा प्राप्नुयादपि। ततश्च। यथाऽसौ द्रमकः कदन्नलेशमात्रलाभात्तुष्टस्तथायमपि जीवो माद्यति हृदये मदसन्निपातग्रस्तहृदयश्च नाकर्णयति विज्ञापनानि न पश्यति शेषलोकं न नामयति ग्रीवां न भाषते प्रगुणवचनैः अकाण्ड एव निमीलयति चक्षुषी अपमानयति गुरुसंहतिमपि अतोऽयमेवंविधतुच्छाभिप्रायहतस्वरूपो जीवो ज्ञानादिरत्नभरपरिपूर्णतया परमेश्वराणां भगवतां मुनिपुङ्गवानां क्षुद्रद्रमकेभ्योप्यधमतमः कथं न प्रतिभासते। यदा पशुभावे नरकेषु वा वर्त्ततेऽयं जीवस्तदा विशेषतो द्रमकोपमामतिलंघयति यतो विवेकधनानां महर्षीणां य एते किल शक्रादयो देवा महर्द्धयो महाद्युतयो निरुपचरितशब्दादिविषयोपभोगभाजनं द्राघीयःस्थितिकास्तेऽपि यदि सम्यक्दर्शनरत्नविकलाः स्युस्तदा महादारिद्र्यभराक्रान्तमूर्त्तयो विद्युल्लताविलसितचटुलजीविताश्च प्रतिभासन्ते किं पुनः शेषाः संसारोदरविवरवर्त्तिनो जन्तव इति। यथा चासौ द्रमकोऽवज्ञया जनैर्दत्तं तत्कदन्नं भुञ्जानः शक्रादपि शङ्कते यदुतायं ममैतद्दहापयिष्यति। तथायमपि जीवो महामोहोपहतमाद्द्रविणकलत्रादिकं कथञ्चित्तावता क्लेशजालेनोपार्जितं यदानुभवति तदा बिभेति

तस्करेभ्यः चलति नरपतिभ्यः कम्पते भयेन दायादेभ्यः उद्विजते याचकेभ्यः किं बहुनाच जल्पितेनात्यन्तनिःस्पृहमुनिपुङ्गवेभ्योऽपि शङ्कते। यदुतैते महता वचनरचनाटोपेन मां प्रतार्य नूनमेतद्ग्रहीतुमिच्छन्ति तथाविधगाढमूर्च्छाविषाभिभूतचित्तश्चिन्तयत्येवं हन्त धक्ष्यते ममैतद्द्रविणजातं चित्रभानुना प्लावयिष्यते वा सलिलप्रवाहेन ह्रियिष्यते वा चौरादिभिः अतः सुरचितं करोमि ततोऽसहायः शोषजनाविश्रम्भितया राचावुत्थाय खनत्यतिदूरं भूतलं निधत्ते तत्तच निभृतसञ्चारः पुनः पूरयित्वा गर्त्तं कुरुते समं भूतलं विकिरति तस्योपरि धूलिकचवरादिकं सम्पादयति किलालक्ष्यं स्वाकूतेन मा पुनर्न ज्ञास्यामि स्वदेशमिति विधत्ते विविधानि चिह्नानि प्रयोजनान्तरेण तद्देशेन सञ्चरन्तमपरं जनं मुहुर्मुहुर्निभालयति कथञ्चित्तद्देशे यान्तीं तद्दृष्टिं शङ्कते अ ज्ञातमेतेनातो मूर्च्छादन्दह्यमानमानसो न लभते राचौ निद्रां पुनरुत्थाय तत्प्रदेशात्तदुत्खनति निधत्ते च प्रदेशान्तरं निरीक्षते पुनःपुनर्दिगन्तरेषु सभयं निक्षिपंश्चक्षुः। यदुत मां कश्चिद्द्रक्ष्यतीति व्यापारान्तरमपि स केवलं कायेन करोति चेतस्तु तत्प्रतिबन्धबन्धनबद्धं ततः स्थानादन्यत्र पदमपि न चलतीति। अथ कथञ्चित्तथाविधयत्नशतैरपि तेन रक्ष्यमाणमपरो लक्षयेत् गृह्णीयाच्च ततोऽसावकाण्डवज्रपातनिर्दलितशरीर इव हा तात हा मातर्हा भ्रातरिति विक्लवमाराध्यमानः सकलविवेकिलोकं करुणापरीतचित्ततां प्रापयति। अतिमूर्च्छाव्याप्राघ्रातचेतनो म्रियते वा। तदिदं धनलवप्रतिबद्धचेतोवृत्तीनां विलसितमुपदर्शितम्। तथा गृहिणीप्रतिबन्धग्रहगृहीतवि-

ग्रहोऽपीर्ष्याग्रन्थ्यवितुद्यमानमानसः खल्वेष जीवस्तस्याः परवीक्षणरक्षणाक्षणिकः सन्न निःसरति गेहात् । न स्वपिति रजन्यां त्यजति मातापितरौ शिथिलयति बन्धुवर्गान् न ददाति परमसुहृदोऽपि स्वगृहे ढौकम् । अवधीरयति धर्मकार्याणि न गणयति लोकवचनीयतां केवलं तस्या एव मुखमनवरतमीक्षमाणस्तामेव च परमात्ममूर्त्तिमिव योगी निवृत्ताशेषव्यापारो ध्यायन्नेवास्ते । तस्य च यदेव सा कुरुते तत्सुन्दरं यदेव सा भाषते तदेवानन्दकारि यत्सा चिन्तयति तदेवेङ्गिताकारैर्विज्ञायासौ सम्पादनार्हं मन्यते । एवञ्चाकलयति मोहविडम्बितेन मनसा । यदुतेयं ममानुरक्ता हितकारिणी न चान्येदृशी सौन्दर्यौदार्यसौभाग्यादिगुणकलापकलिता जगति विद्यते । अथ कदाचित्तां मातेति भगिनीति देवतेत्यपि मन्यमानः परो वीक्ष्यते ततोऽसौ मोहात् क्रुध्यतीव विह्वलीभवतीव मूर्च्छतीव म्रियत इव किं करोमीति न जानीते । अथ सा वियुज्यते म्रियते वा ततोऽसावत्याक्रन्दति परिदेवते म्रियते वा अथ सा कथञ्चिद्दुःशीलतया परपुरुषचारिणी स्यात् परपुरुषा वा बलात्तां समाक्रम्य गृह्णीयुः । ततोऽसौ महामोहविह्वलो यावज्जीवं हृदयदाहेन जीर्यते प्राणैर्वा वियुज्यते दुःखासिकातिरेकेणेति । तदेवमेकैकवस्तुप्रतिबन्धबद्धहृदयोऽयं जीवो दुःखपरम्परामासादयति । तथापि । विपर्यस्ततया तद्रक्षणप्रवणमनाः सर्वथा शङ्कते सर्वेदमयं हरिष्यतीति । यथा च तस्य चौरस्य तेन कदन्नेनोदरपूरंपूरितस्यापि न तृप्तिः संपद्यते । प्रत्युत प्रतिक्षणं सुतरां बुभुक्षाभिवर्धत इत्युक्तम् । तथास्यापि

जीवस्यानेन धनविषयकलत्रादिना कदन्नप्रायेण पूर्यमाणस्यापि नाभिलाषविच्छेदः किन्तर्हि गाढतरमभिवर्द्धते तत्तर्षः । तथाहि यदि कथञ्चिद्द्रविणशतं सम्पद्यते ततः सहस्रमभिवाञ्छति । अथ तदपि सञ्जायते ततो लक्षमाकांक्षति तत्सम्पत्तावपि कोटीमभिलषति तल्लाभे राज्यं प्रार्थयति । अथ राजा जायते ततश्चक्रवर्त्तीत्वं मृगयते तत्सम्भवेऽपि विबुधत्वमन्विच्छति । अथ देवत्वमप्यास्कन्देत्ततः शक्रत्वमन्वेषयते । अथेन्द्रतामपि लभते ततोऽप्युत्तरोत्तरकल्पाधिपतित्वपिपासापर्यासितचेतसो नास्त्येवास्य जीवस्य मनोरथपरिपूर्त्तिः । यथा हि गाढग्रीष्मे समन्ताद्दवदाहतापितशरीरस्य पिपासाभिभूतचेतनस्य मूर्च्छया पतितस्य कस्यचित्पथिकस्य तत्रैव स्वप्नदर्शने सुबहून्यपि प्रबलकल्लोलमालाकुलानि महाजलाशयकदम्बकानि पीयमानान्यपि न तर्षापकर्षकं मनागपि सम्पादयन्ति । तथास्यापि जीवस्य धनविषया दीनि । तथाह्यनादौ संसारे विपरिवर्त्तमानेनानन्तशःप्राप्तपूर्वादेव भवेषु निरुपचरितशब्दाद्युपभोगाः आसादितान्यनन्तानर्घेयरत्नकूटानि विलसितं खण्डितरतिविभ्रमैः सह विलासिनीसार्थैः क्रीडितं त्रिभुवनातिशायिनीभिर्नानाक्रीडाभिः । तथाप्ययं जीवो महाबुभुक्षाक्षामोदर इव शेषदिनभुक्तवृत्तान्तं न किञ्चिज्जानाति केवलं तदभिलाषेण शुष्यतीति । यत्तूक्तं यदुत तत्कदन्नं तेन द्रमकेन लौल्येन भुक्तं जीर्यति जीर्यमाणं पुनर्वातविषूचिकां विधाय तं रोरं पीडयतीति । तदेवं योजनीयम् । यदा रागादिपरीतचित्तोऽयं जीवो धनविषयकलत्रादिकं कदन्नकल्पं स्वीकरोति तदास्य कर्मसञ्च-

यल्लक्षणमजीर्णं सम्पद्यते । तच्च । यदा यदुदयद्वारेण जीर्यति तदा नारकतिर्यङ्नरामरभवभ्रमणलक्षणां वातविसूचिकां विधायैनं जीवं नितरां तत्कदर्थयति । यथा च तत्कदन्नं तस्य सर्वरोगाणां निदानं पूर्वोत्पन्नरोगाणां चाभिवृद्धिकारणमत्यर्थमभिहितं तथेदमपि रागग्रस्तचित्तेनानेन जीवेनोपभुज्यमानं विषयादिकं महामोहादिलक्षणानां प्रागुपवर्णितानां समस्तरोगाणां भविष्यतां कारणं पूर्वनिर्वर्णितानां पुनरभिवृद्धिहेतुभूतं वर्त्तते । यथा च स रोरस्तदेव कुभोजनं चारु मन्यते सुस्वादभोजनास्वादं तु स्वप्नेऽपि वराको नोपलभत इत्युक्तम् । तथायमपि जीवो महामोहग्रस्तचेतोवृत्तितया यदिदमशेषदोषराशिदूषितमुपवर्णितस्थित्या विषयधनादिकं तदेवातिसुन्दरमात्महितञ्च चेतसि कल्पयति यत्पुनः पारमार्थिकं स्वाधीननिरतिशयानन्दसन्दोहदायकं महाकल्याणभूतमहारिचरूपं परमान्नं तदयं वराको महामोहनिद्रातिरोहितसद्विवेकलोचनयुगलो न कदाचिदासादयति । तथा हि यद्ययमनादौ भवभ्रमणे पूर्वमेव तत् क्वचिदलप्स्यत ततोऽशेषक्लेशराशिच्छेदलक्षणमोक्षावाप्तिर्मयन्तं कालं यावत्संसारगहने पर्यटिष्यत्तदायमद्यापि वंभ्रमीति। ततो नामेन मदीयजीवेन महारणरूपं सद्भोजनं प्रागवाप्तमिति निश्चीयते । यत्पुनरभ्यधायि । यथा तददृष्टमूलपर्यन्ते नगरगृहावलेपु गेहेषु त्रिकचतुष्कचत्वरादिषु नानारूपासु च रथ्यासु पर्यटतोऽनवरतमश्रान्तचेतसाऽनेन रोरेणानन्तशः परावर्त्तितमिति । तदपि सर्वमत्र विज्ञेयं यतोऽमुनापि जीवेन नानादितया [illegible] भ्रमतानन्तपुद्गलपरावर्त्ताः पर्यन्तं नीताः ।

१

यथा च तस्य भ्रमतो द्रमकस्य तत्र नगरे न ज्ञायते कियान् कालो लंघित इत्युक्तं तथा जीवभवभ्रमणकालकलनमपि न प्रतीतिगोचरचारितामनुभवति निरादितया तत्परिच्छेदस्य कर्त्तुमशक्तेरिति। तदेवमत्र संसारनगरोदरे मदीयजीवरोरोऽयं कुविकल्पकुतर्ककुतीर्थिकलक्षणैर्दुर्दान्तडिम्भसंघातैस्तत्त्वाभिमुख्यरूपे शरीरे विपर्यासस्संपादनलक्षणया ताडनया प्रतिक्षणं ताडयमाने महामोहादिरागशातग्रस्तशरीरस्तद्दशेन नरकादियातनास्थानेषु महावेदनोदयदलितस्वरूपोऽत एव विवेकविमलीभूतचेतसां कृपास्थानं पौर्वापर्यपर्यालोचनविकलान्तःकरणतया तत्त्वावबोधविप्रकृष्टोऽत एव प्रायः सर्वजीवेभ्यो जघन्यतमोऽत एव धनविषयादिरूपकदन्नदुराशापाशवशीकृतः कथंचित्तल्लेशलाभतुष्टोऽपि तेनाढ्यचेतास्तदुपार्जनवर्द्धनसंरक्षणप्रतिबद्धान्तःकरणस्तद्द्वारेण च गृहीतनिबिडगुरुतराष्टप्रकारकर्मभाररूपानिष्ठितापथ्यपाथेयस्तदुपभोगद्वारेण विवर्द्धमानरागादिरोगगणपीडितस्तथापि विपर्यस्तचित्ततया तदेवानवरतं भुञ्जानोऽप्राप्तमहाचारित्ररूपपरमान्नास्वादोऽरघट्टघटीयन्त्रन्यायेनानन्तपुद्गलपरावर्त्तनसमस्तयोनिस्थानास्कन्दनद्वारेण पर्यटित इति। अधुना पुनरस्य यत्सम्पन्नं तदभिधीयते। इह च। त्रिकालविषयतयाऽस्य व्यतिकरस्य विवक्षया समस्तकालाभिधायिभिरपि प्रत्ययैरत्र सर्वत्रापि कथाप्रबन्धे निर्देशः सङ्गतो द्रष्टव्यः। यतो विवक्षया कारकवत्कालोऽपि वस्तुस्थित्यैकस्वरूपेऽपि वस्तुनि नानारूपः प्रयुक्तो दृष्टोऽभीष्टश्च शब्दविदाम्। यथा योऽयं मार्गो गन्तव्यः आपाटलिपुत्रात् तत्र कूपोऽभूद्भवत्र बभूव भविष्यति भवितेति वा एते सर्वेऽपि कालनिर्देशा एकस्मिन्नपि कूपाख्ये

वस्तुनि विवचावशेन साधवो भवन्तीत्यलमप्रस्तुतविस्तरेणेति । तत्र योऽसौ तत्स्वभावतया समस्तभूतसंघातात्यन्तवत्सलहृदयः प्रख्यातकीर्त्तिस्तस्मिन्नगरे सुस्थिताभिधानो महानरेन्द्रो दर्शितः स इह परमात्मा जिनेश्वरो भगवान् सर्वज्ञो विज्ञेयः । स एव हि प्रक्षीणाशेषक्लेशराशितयानन्तज्ञानदर्शनवीर्यतया निरुपचरितस्वाधीननिरतिशयानन्तानन्दसन्दोहस्वरूपतया च परमार्थेन सुस्थितो भवितुमर्हति न शेषा अविद्यादिक्लेशराशिवशवर्त्तिनोऽतिदुःस्थितत्वात्तेषाम् । स एव च भगवान् समस्तभूतसंघातस्यापि सूक्ष्मरक्षणोपदेशदायितयाक्षेपमोक्षप्रापणप्रवणप्रवचनार्थप्रणेतृतया च स्वभावेनैवातिवत्सलहृदयः । स एव च प्रख्यातकीर्तिः निःशेषामरनरविसरनायकैः पुरुहूतचक्रवर्त्त्यादिभिः । यतः स एव प्रशस्तमनोवाक्कायव्यापारपरायणैरनवरतमभिष्टूयते । अत एव चासावेवाविकलं महाराजशब्दमुद्वोढुमर्हति । यथा च स रोरः पर्यटंस्तस्य मन्दिरद्वारं कथञ्चित्प्राप्तः। तत्र च स्वकर्मविवरो नाम द्वारपालस्तिष्ठति तेन च कृपालुतया तत्र राजभवने प्रवेशित इत्युक्तम् । तदेवमिह योजनीयम् । तत्र यदास्य जीवस्यानादिमता यथाप्रवृत्तसंज्ञेन करणेन कथञ्चिद् घर्षणघूर्णनन्यायेनायुष्कवर्जितानां सप्तानां कर्मप्रकृतीनां स्थितेः समस्ता अपि सागरोपमकोटीकोटयः पर्यन्तवर्त्तिनीमेकां सागरोपमकोटीकोटिं विहाय क्षयमुपगता भवन्ति । तस्या अपि कियन्मात्रं क्षीणं तदाऽयं जीवस्तस्यात्मनृपतेः सम्बन्धि यदेतदाचारादिदृष्टिवादपर्यन्तद्वादशाङ्गपरमागमरूपं तदाधारभूतचतुर्वर्णश्रमणसंघलक्षणं वा मन्दिरं तस्य द्वारि प्राप्तोऽभिधीयते । तत्र च

प्रवेशनप्रवणः स्वस्यात्मीयस्य कर्मणो विवरो विच्छेदः स्वकर्मविवरः स एव यथार्थाभिधानो द्वारपालो भवितुमर्हति । अन्येऽपि राग-द्वेषमोहादयस्तत्र द्वारपाला विद्यन्ते केवलं तेऽस्य जीवस्य प्रतिब-न्धका न पुनस्तत्र प्रवेशकाः । तथा ह्यनन्तवाराः प्राप्तः प्राप्तोऽयं जीवस्तैर्निराक्रियते । यद्यपि क्वचिदवसरे तत्र तेऽपि प्रवेशयन्त्येनं तथापि तैः प्रवेशितो न परमार्थतः प्रवेशितो भवति रागद्वेषमोहा-द्याकुलितचित्ता यद्यपि यतिश्रावकादिचिह्नाः क्वचिद्भवन्ति तथापि ते सर्वज्ञशासनभवनाद्बहिर्भूता द्रष्टव्या इत्युक्तं भवति । ततश्चायं जीवस्तेन स्वकर्मविवरद्वारपालेन तावतीं भुवं प्राप्तो ग्रन्थिभेद-द्वारेण सर्वज्ञशासनमन्दिरे प्रवेशित इति युक्तमभिधीयते । यथा च तेन कथानकोक्तेन तद्राजभवनमदृष्टपूर्वमनन्तविभूतिसंपन्नं राजा-मात्यमहायोधनियुक्तकतलवर्गिकैरधिष्ठितं स्थविराजनसनाथं सुभ-टसंघाताकीर्णं विलसद्विलासिनीसार्थं निरुपचरितशब्दादिविष-योपभोगविमर्दसुन्दरं सततोत्सवं दृष्टं तथानेनापि जीवेन बहु-बहुर्भेदोऽभिन्नपूर्वश्च संसारे यः क्लिष्टकर्मग्रन्थिस्तद्भेदद्वारेण स्वकर्म-विवरप्रवेशितेनेदं सर्वज्ञशासनमन्दिरं तथाभूतविशेषणमेव सकलम-वलोक्यते । तथा हि । दृश्यन्तेऽत्र मौनीन्द्रे प्रवचनेऽपास्ताज्ञानतमः-पटलप्रसरा विविधरत्ननिकराकारधारका विलसदमलालोकप्रका-शितभुवनभवनोदरा ज्ञानविशेषाः । तथा विराजन्तेऽत्र भागवते प्रवचने सम्पादितमुनिपुङ्गवशरीरशोभनतया मनोहरमणिरचितवि-भूषणविशदाकारतां दधानाः स्वल्पामर्शौषध्यादयो नानर्द्धिविशेषाः। तथा कुर्वन्ति सुजनहृदयाक्षेपमत्र जिनमतेऽतिसुन्दरतया विचित्र-

वस्त्रविस्ताराकारस्वङ्कविधतपोविशेषाः । तथा जनयन्ति चित्ता-
ह्लादातिरेकमत्र पारमेश्वरे मते लोलोज्ज्वलांशुकोलोचावलम्बिमौ-
क्तिकावचूलरूपतामाबिभ्राणो रचनासौन्दर्ययोगितया चरणकरण-
रूपा मूलोत्तरगुणाः । तथाविधेऽत्र जैनेन्द्रदर्शने वर्त्तमानानां धन्यानां
वस्त्रसौष्ठवगन्धोत्कर्षचित्तानन्दातिरेकमुदारतामूलसन्निभं सत्यवच-
नम् । तथा व्याप्नुवन्ति स्वसौरभोत्कर्षेण दिक्चक्रवालमत्र भाग-
वते मते मुनिमधुकरनिकरप्रमोदहेतुतया विचित्रभक्तिविन्यास-
घटिततया मनोहारिकुसुमप्रचयाकारधारकाण्यष्टादशशीलाङ्गसह-
स्राणि । तथा निर्वापयति मिथ्यात्वकषायसन्तापानुगतानि भव्य-
सत्त्वशरीराणि गोशीर्षचन्दनादिविलेपनसन्दोहदेश्यतां दधानमत्र
पारमेश्वरदर्शने सम्यग् दर्शनं यतश्चात्र सर्वज्ञोपज्ञे सज्ज्ञानदर्शनचा-
रित्रप्रधाने प्रवचने वर्त्तन्ते ये जीवास्तैर्महाभागधेयैः स्थगितो नर-
कान्धकूपः । भग्नस्तिर्यग्गतिचारकावासः । निर्दलितानि कुमानुष-
त्वदुःखानि । विमर्दिताः कुदेवत्वमानससन्तापाः । प्रलयं नीतो
मिथ्यात्ववेतालः । निष्पन्दीकृता रागादिशत्रवः । जरितप्रायं कर्म
निचयाजीर्णम् । अपकर्णिता जराविकाराः । अपहस्तितं मृत्युभ-
यम् । करतलवर्त्तीनि संपादितानि स्वर्गापवर्गसुखानि । अथवा-
ऽवधीरितानि तैर्भगवन्मतस्थैर्जीवैः सांसारिकसुखानि । गृहीतो
हेयबुध्या समस्तोऽपि भवप्रपञ्चः । कृतं मोक्षैकतानमन्तःकरणम् ।
न च तेषां परमपदप्राप्तिं प्रति व्यभिचाराशङ्का । न ह्युपाय उपे-
यव्यभिचारी । उपायश्चाप्रतिहतशक्तिकः परमपदप्राप्तेः सज्ज्ञानदर्श-
नचारित्रात्मको मार्गः । स च प्राप्तोऽस्माभिरिति । सञ्जाते च

तल्लाभे तेषामिति निश्चिता बुद्धिर्नास्त्यतः परं प्राप्तव्यमित्याकलय्य विहितं प्रतिपूर्णमनोरथं चेतः। अत एव तेषां पारमेश्वरमतवर्त्तिनां जन्तूनां नास्त्येव शोको न विद्यते दैन्यं प्रलीनमौत्सुक्यं व्यपगतो रतिविकारः जुगुप्सनीया जुगुप्सा असम्भवी चित्तोद्वेगः अतिदूरवर्त्तिनी तृष्णा समूलकाषंकषितः सन्त्रासः किन्तर्हि तेषां मनसि वर्त्तते धीरता हृतास्पदा गम्भीरता अतिप्रबलमौदार्यं निरतिशयोऽवष्टम्भः स्वाभाविकप्रशमसुखामृतानवरतास्वादनजनितचित्तोत्सवानां च तेषां प्रवलरागकलाविकलानामपि प्रवर्द्धते रतिप्रकर्षः विनिहतमदगदानामपि विवर्त्तते चेतसि हर्षः समवासी चन्दनकल्पानामपि न सम्भवत्यानन्दविच्छेदः। ततश्च जैनेन्द्रशासनस्थायिनो भव्यसत्वाः स्वाभाविकहर्षप्रकर्षामोदितहृदयतया गायन्ति प्रतिक्षणं पञ्चप्रकारस्वाध्यायकरणव्याजेन नृत्यन्त्याचार्यादिदशविधवैयावृत्त्यानुष्ठानद्वारेण वल्गन्ति जिनजन्माभिषेकसमवसरणपूजनयात्रादिसम्पादनव्यापारपरतया उत्कृष्टसिंहनादादीनि चित्तानन्दकार्याणि दर्शयन्ति परप्रवादिनिराकरणचातुर्यमाविभ्राणाः। क्वचिदवसरे चानन्दमर्हलमन्दोद्दान् वादयन्त्येव भगवतामवतरणजन्मादीक्षाज्ञाननिर्वाणलक्षणेषु पञ्चसु महाकल्याणकालेषु। तस्मादिदं मौनीन्द्रं प्रवचनं सततानन्दं प्रक्षीणाशेषसन्तापं न चानेन जीवेन क्वचिदपीदं प्राप्तपूर्वं भावसारतया भवभ्रमणसद्भावादेवेदं निश्चीयते। भावसारेणलाभे हि प्रागेव मोक्षप्राप्तिः संपद्येत तदनेन यत्तद्राजभवनस्य कथानकोक्तस्य सविशेषणद्वयमकारि। यदुतादृष्टपूर्वमनन्तविभूतियुक्तमपमिति। तदप्यपि सर्वज्ञशासनमन्दिरस्य दर्शितम्। साम्प्रतं

पुनरत्र जैनेन्द्रशासनभवने सामान्यभिक्षवो ज्ञातव्याः। यतस्ते दत्ताव-
धानाः संपादयन्त्याचार्यादेशं कुर्वन्त्युपाध्यायाज्ञां विदधति गीतार्थ-
वृषभविनयं न लङ्घयति गणचिन्तकप्रयुक्तमर्यादां नियोजयन्त्या-
त्मानं गच्छकुलगणसङ्घप्रयोजनेषु स्वजीवितव्ययेनापि निर्वहन्ति
तेषामेव गच्छादीनामशिवाद्यपायव्यतिकरेषु। अत एव ते शूरता-
भक्ताविनीतताखभावादलं तल्लवर्गिकशब्दवाच्याः। यतश्चेदं मौनी-
न्द्रशासनभवनमनुज्ञातं सूरीणां चिन्त्यते। सदुपाध्यायै रक्ष्यते।
गीतार्थवृषभैः परिपुष्टिं नीयते। गणचिन्तकैर्विहितनिश्चिन्तसमस्त-
व्यापारं सामान्यसाधुभिरतस्तैरनधिष्ठितमित्युच्यते। साम्प्रतं यदुक्तं
स्थविराजनसनाथमिति। तदत्रापि जिनसङ्घसदने योजनीयम्।
तत्रेह स्थविरा जनाः स्वल्पार्या लोका मन्तव्याः। तथा हि।
ते तत्र राजमन्दिरे प्रमत्तप्रमदालोकनिवारणपरायणा निवृत्तविष-
याभङ्गाश्च व्यावर्णिताः। एतच्चोभयमपि निरुपचरितमार्यलोकाना-
मेव घटामाटीकते। यतस्त एव धर्मकार्येषु प्रमादपरतन्त्रतया
सीदन्तं श्रमणोपासककललनालोकमात्मीयशिष्यिकावर्गं च परोपका-
रकरणव्यसनितया भगवदागमाभिहितं महानिर्जराकारणं साध-
र्मिकवात्सल्यं चानुपालयन्तः स्मारणवारणचोदनादानद्वारेण कापथ-
प्रस्थितमनवरतं निवारयन्ति सन्मार्गे चावतारयन्ति। त एव च
विदितविषयविषविषमविपाकतया विषयेभ्यो निवृत्तचित्ताः सन्तो
रमन्ते संयमे क्रीडन्ति तपोविशेषविधानैः रज्यन्तेऽनारतस्वाध्याय-
करणे न सेवन्ते प्रमादवृन्दं समाचरन्ति निर्विचारमाचार्यादेश-
मिति। यथोक्तम्। सुभटसंघाताकीर्णं तद्राजभवनमिति। तेऽप

भगवच्छासने सुभटसंघाताः श्रमणोपासकसमूहा द्रष्टव्याः। यतस्त एव समस्तमपीदं व्याप्नुवन्त्यतिप्रचुरतया। तथा ह्यसंख्येया विद्यन्ते देवेषु संख्येयाः सन्ति मनुजेषु भूरिप्रकाराः सङ्कीतास्ते तिर्यक्षु बहवः सन्ति नरकेष्विति। त एव शौर्यौदार्यगाम्भीर्ययोगितया भगवच्छासनप्रत्यनीकानां मिथ्यात्वात्ममत्तरूपाणां योधसंघातानामुच्चाटनचातुर्यं बिभ्राणा निरुपचरितप्रवृत्तिनिमित्तं सुभटशब्दं स्वीकुर्वते। यतश्चैते सदा ध्यायन्ति सर्वज्ञमहाराजं समाराधयन्ति सूरिराजवृन्दानि समाचरन्त्युपाध्यायामात्योपदेशं प्रवर्तन्ते गीतार्थवृषभमहायोधवचनेन सर्वधर्मकार्येषु वितरन्ति विधिना सदात्मानुग्रहधिया नियुक्तस्थानीयेभ्यः साधुवर्गापग्रहनिरतेभ्यो गणचिन्तकेभ्यो वस्त्रपात्रभक्तपानभेषजासनसंस्तारकवसत्यादिकं नमस्कुर्वन्ति विशुद्धमनोवाक्कायैस्तलवर्गिककल्पमध्यदीचितादिभेदभिन्नं सकलमपि सामान्यसाधुजनं वंदन्ते भक्तिभरनिर्भरहृदयाः स्थविराजनस्थानीयमार्यालोकं प्रोत्साहयन्ति समस्तधर्मकार्येषु विलासिनीसार्थस्थानीयं श्राविकाजनमनुशीलयन्ति सकलकालं जिनजन्माभिषेकनन्दीश्वरवरद्वीपजिनयात्रावासर्यलोकपर्वस्नात्रादिलक्षणानि। तत्र जिनशासनसद्‌ने नित्यनैमित्तिकानि। किं बहुनोक्तेन। ते हि भावतः सर्वज्ञशासनं विमुच्य नान्यत्किञ्चित्पश्यन्ति नाकर्णयन्ति न जानन्ति न श्रद्दधते न रोचयन्ति नानुपालयन्ति किन्तर्हि तदेव सकलकल्याणकारणं मन्यन्त इति। अतोऽतिभक्तितया सर्वज्ञमहाराजादीनामभिप्रेता इति कृत्वा तस्यैव मन्दिरस्य मध्यवासिनो विनीतमहर्द्धिकमहाकुटुम्बिकलोकास्ते द्रष्टव्याः। अन्यादृशां कुतस्तत्र

भवने वास इति । तथा यदुक्तं विलसद्विलासिनीसार्थं तन्नृपति-गृहमिति । तदत्रापि मौनीन्द्रदर्शने दर्शनीयं तत्रेह विलसद्वि-लासिनीसार्थाः सम्यग्दर्शनधरणाणुव्रतचरणजिनसाधुभक्तिकरणपरा-यणतया विलासवन्त्यः श्राविका लोकसंघाता विज्ञेयाः । यतश्च ता अपि श्रमणोपासिकाः श्रमणोपासकवत् सर्वज्ञमहाराजाद्याराधन-प्रवणान्तःकरणाः सत्यं कुर्वन्ति सदाज्ञाभ्यासं वासयन्ति दृढतरमा-त्मानं दर्शनेन धारयन्त्यणुव्रतानि गृह्णन्ति गुणव्रतानि अभ्यस्यन्ति शिक्षापदानि समाचरन्ति तपोविशेषान् रमन्ते स्वाध्यायकरणे वितरन्ति साधुवर्गाय स्वानुग्रहकरमुपष्टम्भदानं कुर्वन्ति गुरुपादवन्द-नेन तुष्यन्ति सुसाधुनमस्करणेन मोदन्ते साध्वीधर्मकथासु पश्यन्ति सुबन्धुवर्गादधिकतरं साधर्मिकजनमुद्विजन्ते साधर्मिकविकलदेश-वासेन न प्रीयन्तेऽसंविभागितभोगेन संसारसागरादुत्तीर्णप्रायमात्मानं मन्यन्ते भगवद्धर्मसेवनेनेति । तस्मात्ता अपि तस्य मौनीन्द्रप्रवचन-मन्दिरस्य मध्ये पूजोपकरणाकारास्तेषामेव श्रमणोपासकानां प्रति-बद्धा मुत्कला वा निवसन्ति । याः पुनरेवंविधा न युक्ता यद्यपि कथञ्चित्तन्मध्याध्यासिन्यो दृश्येरन् तथापि परमार्थतस्ताो बहि-र्भूता विज्ञेयाः । भावपात्रं हीदं भागवतशासनभवनं नाथ बहिश्छायया प्रविष्टः परमार्थतः प्रविष्टो भवतीति विज्ञेयं तथा यथा तद्राजभवनं निरुपचरितशब्दादिविषयोपभोगविमर्दसुन्दरं तथेदमपि विज्ञेयम् । तथा हि । सर्वेऽपि देवेन्द्रास्तावदेतन्मध्य-पातिनो वर्त्तन्ते । ये चान्येऽपि महर्द्धिकामरसंघातास्तेऽपि प्रायो न भगवन्मतभवनाद्बहिर्भूता भवितुमर्हन्ति । ततश्च । तथाविध-

विबुधाधारभूतस्यास्य निरुपचरितशब्दादिविषयोपभोगविमर्द्दसुन्दरता न दुरुपपादा । तद्वर्णनेन चैतत्सूचयणीयं यदुत भोगास्तावत्पुण्योदयेन संपद्यन्ते किन्तु तदेव पुण्यं द्विविधं पापानुबन्धि पुण्यानुबन्धि च। तत्र ये पुण्यानुबन्धिपुण्योदयसम्पाद्याः शब्दाद्युपभोगास्त एव सुसंस्कृतमनोहरपथ्यान्नवत्सुन्दरविपाकतया निरुपचरितशब्दादिभोगवाच्यतां प्रतिपद्यन्ते। ते हि भुज्यमानाः स्फीततरमाशयं संपादयन्ति ततश्चोदाराभिप्रायोऽसौ पुरुषो न तेषु प्रतिबन्धं विधत्ते । ततश्चासौ तान् भुञ्जानोऽपि निरभिष्वङ्गतया प्राग्बद्धपापपरमाणुसञ्चयं शिथिलयन्ति पुनश्चाभिनवं शुभतरविपाकं प्राग्पुण्यभारमात्मन्याधत्ते स चोदयप्राप्तो भवविरागसम्पादनद्वारेण सुखपरम्परयोत्तरक्रमेण मोक्षकारणत्वं प्रतिपद्यत इति हेतोः सुन्दरविपाकास्तेऽभिधीयन्ते । ये तु पापानुबन्धिपुण्योदयजनिताः शब्दादिविषयानुभवास्ते सद्योघातिविषोपदिग्धमोदकवद्दारुणपरिणामतया तत्वतो भोगा एव नोच्यन्ते यतस्ते मरुमरीचिकाजलकल्लोला इव तदुपभोगार्थं धावतः पुरुषस्य विफलश्रमसम्पादनेन गाढतरं तृष्णामभिवर्द्धयन्ति न तु संपद्यन्ते। कथञ्चित्सम्प्राप्ता अपि ते भुज्यमानाः क्लिष्टमाशयं जनयन्ति । ततश्च । तुच्छाभिप्रायोऽसौ पुरुषोऽन्धीभूतबुद्धिस्तेषु नितरां प्रतिबन्धं विधत्ते । ततस्तान् कतिपयदिवसभाविनो भुञ्जानस्तत्सम्पादकं प्राग्उपनिबद्धं पुण्यलवं व्ययकलयति । पुनश्चोदग्रगुरुतरपापभरमात्मन्याधत्ते । ततश्च तेनोदयप्राप्तेनामन्दुःखजलचराकुलं संसारसागरमनन्तकालं स जीवः परावर्त्तते । तेन ते पापानुबन्धिपुण्यसम्पाद्याः शब्दादयो

दारुणपरिणामा इत्यभिधीयन्ते। येषां तु संसारोदरविवरवर्त्तिनां जन्तुसंघातानामवश्यतया ये शब्दादिविषयोपभोगाः सुन्दरपरिणामास्ते नियमतो भगवच्छासनमन्दिरादुक्तन्यायेन न बहिर्भूता वर्त्तन्ते। तस्मादन्यैरपि प्रेक्षापूर्वकारिभिराक्षेपेण मोक्षप्रापकेऽत्र भगवन्मन्दिरे भावतः स्थेयम्। अत्र स्थितानामनुषङ्गत एव तेऽपि सुन्दरतया भोगादयः संपद्यन्ते न तेषामपि समादन्योऽन्यो हेतुरित्युक्तं भवति। अत एव चेदं परमेश्वरदर्शनसदनमप्रतिपातिसुखपरम्पराकारणतया सततोत्सवमभिधीयते। तदेवं यथा यावद्विशेषणकलापयुक्तं च तद्राजमन्दिरं तेन कथानककेनावलोकितं तथा तावद्विशेषणकलापोपेतमेवानेनापि जीवेनेदं सर्वज्ञशासनसदनमवलोक्येति स्थितम्। यथा च स कथानककः सततानन्दं तद्राजभवनमुपलभ्य किमेतदिति विस्मितश्चिन्तयति न चासौ सोन्मादतया तद्विशेषगुणांस्ततो जानातीत्युक्तम्। तथायमपि जीवः सर्वज्ञशासनं सञ्जातकर्मविवरः कथञ्चिदुपलभ्य किमेतदिति जिज्ञासते न चायं मिथ्यात्वांशैरुन्मादकल्पैरनुवर्त्तमानैस्तस्यामवस्थायामस्य जिनमतस्येमे विशेषगुणास्तांस्ततो जानीते। यथा च तस्य कथानककस्य तात्पर्यवशेन लब्धचेतसः सतो हृदयाकूतिः परिस्फुरितं यदुत यदेतद्राजमन्दिरं सकलाश्चर्यधामास्य स्वकर्मविवरद्वारपालस्य प्रसादेन मयाधुना दृश्यते। लग्नं नूनमेतच्च मया कदाचित्पूर्वं दृष्टम्। प्राप्तोऽहमस्य द्वारदेशे बहुशः पूर्वं केवलं मम मन्दभाग्यतया येऽन्ये द्वारपालाः पापप्रकृतयस्तत्राभूवंस्तैरहं प्राप्तः प्राप्तः कदर्थयित्वा निर्धाटित इति। तदेतत्सर्वं जीवेऽपि समानम्। तथा हि। भव्यस्य

प्रत्यासन्नभविष्यद्भद्रस्य कथञ्चिदुपलभ्य सर्वज्ञशासनमविदिततद्गुणविशेषस्यापि मार्गानुसारितया भवत्येवंविधोऽभिप्रायः। यदुतात्यद्भुतमिदमर्हद्दर्शनं यतोऽत्र तिष्ठन्ति ये लोकास्ते सर्वेऽपि सुहृद इव बान्धवा इवैकप्रयोजना इव समर्पितहृदया इवैकात्मका इव परस्परं वर्त्तन्ते। तथामृततृप्ता इव निरुद्वेगा इव निरौत्सुक्या इव सोत्साहा इव परिपूर्णमनोरथा इव समस्तजन्तुसंघातहितोद्यतचेतसश्च सकलकालं दृश्यन्ते। तस्मात्सुन्दरमिदमद्य मया विज्ञातं न पूर्वं विमर्शाभावात्। अन्यच्चायं जीवोऽनन्तवारायन्थिप्रदेशं यावत्प्राप्तो न चाऽनेन तद्भेदद्वारेण क्वचिदपि सर्वज्ञशासनमवलोकितं यतो रागद्वेषमोहादिभिः क्रूरद्वारपालकल्पैर्भूयो भूयो निरस्त इत्येतावतांशेनेदमुपदर्शितं न पुनस्तस्यामवस्थायाममुं विभागमद्याप्ययं जीवो जानीते चिन्तयति वा। यथा च। तस्य कथानकोक्तस्य पर्यालोचनपरायणवृत्तेः सतः पुनरिदं परिस्फुरितं यदुत येन मया पूर्वमिदं नयनानन्दकारि राजसदनं न दृष्टं न वास्य दर्शनार्थं कश्चिदुपायः प्राग्विहितः सोऽहं सत्यं निष्पुण्यक एव। कीदृशं राजमन्दिरमिति जिज्ञासामात्रमपि ममाऽधन्यस्य कदाचिदपि पूर्वं नासीत्। येन चानेन महात्मना स्वकर्मविवरद्वारपालेन कृपापरीतचेतसा भाग्यकलाविकलस्यापि ममेदं दर्शितं सोऽयं मे परमबन्धुभूतो वर्त्तते। एते च धन्यतमा जना येऽत्र राजमन्दिरे सदा निःशेषद्वन्द्वरहिताः प्रमुदितचेतसोऽवतिष्ठन्ते तदेतदपि समस्तमत्र जीवे योजनीयम्। तथा हि। शुभध्यानविशुध्यमानाध्यवसायस्यास्यापि जीवस्य विवर्त्तते चेतसीदं सर्वं सर्वज्ञदर्शनगोचरं

कचिदवसरे समवसरणदर्शनेन वा जिनस्नात्रविलोकनेन वा वीतरागबिम्बनिरीक्षणेन वा प्रशान्ततपस्विजनसाक्षात्करणेन वा सुश्रावकसङ्गतेन वा तदनुष्ठानप्रतिभासेन वा द्रावितमिथ्यात्वतया मृदूभूतभावस्य तथा स्युपपद्यते। तदा तद्विचारेणास्य प्रीतिः। शोचति प्रागविचारकमात्मानम्। गृह्णाति मार्गादेशकम्। बन्धुबुद्ध्या बहु मन्यते सद्धर्मनिरतिचित्तांश्चान्यलोकान् सद्भावनयेति तदियता प्रपञ्चेन लघुकर्मणः सन्मार्गाभ्यर्णवर्त्तिनोऽभिन्नकर्मग्रन्थेर्भिन्नकर्मग्रन्थेर्वा पुरस्कृतसम्यग्दर्शनस्य कियन्तमपि कालं भद्रकभावे वर्त्तमानस्यास्य जीवस्य यो व्यतिकरो भवति स व्यावर्णितः। तदनन्तरमिदानीं सकलकल्याणाक्षेपकारणभूतां परमेश्वरावलोकनां प्राप्नुवतोऽस्य यः प्रपद्यते तत्र योऽसौ कथानकोक्तो रोरो लब्धचेतनो यावदित्थं विप्रकीर्णं चिन्तयति तावद् वृत्तान्तान्तरमपरं महाराजावलोकनक्षणमापतितम्। तथेहापि यदायं जीवः सञ्जातस्वकर्मलाघवतया सन्मार्गाभिमुखो भद्रकभावे वर्त्तते तदाऽस्य योग्यतया परमात्मावलोकनक्षणोऽयमपरो वृत्तान्तः संपत्स्यते। तत्र। योऽसौ सुन्दरे प्रासादशिखरे सप्तमे भूमिकातले निविष्टमूर्त्तिरधस्ताद्वर्त्तमानं तद्दृष्टमूलपर्यन्तं नगरं समस्तं समस्तव्यापारकलापोपेतं सकलकालं समन्तान्निरीक्ष्यमाणस्तस्माद्बहिरपि सर्वत्राप्रतिहतदर्शनशक्तिः सततानन्दो लीलया ललमानो महानरेन्द्रो दर्शितः। स इह निष्कलावस्थायां वर्त्तमानः परमात्मा भगवान् सर्वज्ञो विज्ञेयः। स एव यतो मर्त्यलोकापेक्षया या उपर्युपरिस्थायिन्यो भूमिकाकल्पाः सप्तरज्जवः तदात्मको यो लोकप्रासादस्त-

च्छिखरे वर्त्तते । स एव हि परमेश्वरो युगपदमुं समस्तसंसार-
विस्तारं विचित्रनगरव्यापाराकारमलोकाकाशञ्च तद्वहिर्भागकल्पं
केवलालोकेन करतलगतामलकन्यायेनावलोकयति । स एव चान-
न्तवीर्यसुखपरिपूर्णतया सततानन्दो लीलया ललते नापरो भव-
गर्त्तमध्यपतितजन्तुलीलाललनस्य परमार्थतो विडम्बनारूपत्वात् ।
यथा च स कथानकोक्तस्तेन महाराजेन महारोगभराक्रान्ततया
गाढबीभत्सदर्शन इति कृत्वा करुणया विशेषेणावलोकित इत्युक्तम् ।
तदत्रैव द्रष्टव्यम् । यदायमात्मा निजभव्यतादिपरिपाकवशादेता-
वतीं कोटिमध्यारूढो भवति तदास्य भवत्येव भगवदनुग्रहः न
तद्व्यतिरेकेण यतो मार्गानुसारिता संपद्यते । तदनुग्रहेणैव भवति
भावतो भगवति बहुमानो नान्यथा । स्वकर्मक्षयोपशमादीनां शेष-
हेतूनामप्रधानत्वात् । ततोऽयमात्मा तस्यामवस्थायां वर्त्तमानो-
ऽमुमर्थमाकलय्य भगवता विशेषेणावलोकित इत्युच्यते । स एव
परमेश्वरोऽचिन्त्यशक्तियुक्ततया परमार्थकरणैकतानतया चास्य जीव-
स्य मोक्षमार्गप्रवृत्तेः परमो हेतुरित्युक्तं भवति । समस्तजगद-
नुग्रहप्रवणं हि भावतो निष्कलमपि रूपमिति परिभावनीयं
केवलं तथापि तज्जीवभव्यता कर्मकालस्वभावनियत्यादिकं च
सहकारिकारणकलापमपेक्ष्य जगदनुग्रहे व्याप्रियते तेन स यौग-
पद्येन समस्तप्राणिनां संसारोत्तार इत्यालोचनीयमेतदागमानुसारे-
णेति । तस्माद्भवत्येव भाविकल्याणस्य भद्रकभावे वर्त्तमानस्यास्य
जीवस्य भगवदवलोकना । यथा च तां महाराजदृष्टिं तत्र रोरे
निपतन्तीं धर्मबोधकराभिधानो महानसनियुक्तो निरीक्षितवानि-

त्युक्तं तथा परमेश्वरावलोकनां मज्जीवे भवतीं धर्मबोधकरणशीलो धर्मबोधकर इति यथार्थाभिधानो मन्मार्गोपदेशकः सूरिः स निरीचते स्म । तथा हि । सज्ज्ञानबलेन विमलीभूतात्मानःपर-हितैकनिरतचित्ता भगवन्तो ये योगिनः पश्यन्त्येव देशकालव्यव-हितानामपि जन्तूनां छद्मस्थावस्थायामपि वर्त्तमाना दत्तोपयोगा भगवदवलोकनाया योग्यतां पुरोवर्त्तिनां पुनः प्राणिनां भगवदा-गमपरिकर्मितमतयोऽपि योग्यतां लचयन्ति तिष्ठन्तु विशिष्टज्ञाना इति । ये च मम सदुपदेशदायिनो भगवन्तः सूरयस्ते विशिष्ट-ज्ञाना एव यतः कालव्यवहितैरनागतमेव तैर्ज्ञातः समस्तोऽपि मदीयवृत्तान्तः स्वसंवेदनसंसिद्धमेतदस्माकमिति । यत्पुनस्तेन धर्म-बोधकरेण साकूतमानसेन सता तदनन्तरं चिन्तितं यदुत किमेत-दाश्चर्यं मयाधुना दृश्यते यतोऽयं सुस्थितो महानरेन्द्रो यस्योपरि विशेषेण दृष्टिं पातयति स पुरुषस्त्रिभुवनस्यापि द्रागेव प्रभुः सञ्जायत इति सुप्रसिद्धमेतत् । अयं पुनर्योऽधुनास्य राज्ञो दृष्टेर्गोचरचारितामनुभवन्नुपलच्यते स द्रमको दैन्योपहतो रोग-ग्रस्तदेहोऽलक्ष्मीभाजनभूतो मोहोपहतात्मातिबीभत्सदर्शनो जग-दुद्वेगहेतुस्तत्कथं समस्तदोषराशेरस्य परमेश्वरदृष्टिपातेन सार्द्धं सम्बन्धः पौर्वापर्येण विचार्यमाणो न युज्यते न कदाचनापि दौर्ग-तदौर्गत्यभाजिनां गेहेषु अनर्घ्यरत्नवृष्टयो निपतितुमुत्सहन्ते । तत्कथमेतदिति विस्मयातिरेकाकुलं चेतः । तदिदं सर्वमत्रापि जीवविषयं मद्धर्माचार्यचेतसि वर्त्तमानं योजनीयम् । तथा हि । यदाऽयं जीवो नितरां गुरुकर्मतया प्रागवस्थायां समाचरति सम-

सपातकानि भाषते निःशेषासभ्यालीकवचनानि न मुच्यतेऽनवरतं रौद्रध्यानेन स एव चाकाण्ड एव कुतश्चिन्निमित्ताच्छुभसमाचार इव सत्यप्रियंवद इव प्रशान्तचित्त इव पुनर्लक्ष्यते तदा भवत्येव पौर्वापर्यपर्यालोचनचतुराणां विवेकिनां मनसि वितर्को यदुत न तावत्सुन्दरा मनोवाक्कायप्रवृत्तिः सद्धर्मसाधिका भगवदनुग्रह-व्यतिरेकेण कस्यचित्संपद्यते अयं चेह भव एवातिक्लिष्टमनोवाक्काय-प्रसरोऽवधारितोऽस्माभिः । तदिदं पूर्वापरविरुद्धमिव प्रतिभासते । यतः कथमेवंविधपापोपहतसत्त्वे भगवदवलोकना प्रवर्त्तते । सा हि प्रवर्त्तमाना जीवस्य मोक्षमप्यादकालेन त्रिभुवननाथत्वमचिरेण जन-यति। तस्मान्नात्र तस्याः सम्भवो लक्ष्यते। यतश्चास्य सुन्दरमनोवाक्का-यप्रवृत्तिलेशो दृश्यते ततोऽन्यथानुपपत्त्या भगवदवलोकनायाः सद्भा-वोऽपि निश्चीयते। तदिदमवलम्ब्य सन्देहविच्छेदकारणम् । अस्माकं मनो दोलायते किमिदमाश्चर्यमित्याकूते । यथा च। तेन तात्प-र्येण पर्यालोचयता महानसनियुक्तकेन पश्चान्निश्चितम्। यदुत सम्भवतोऽस्य द्रमकस्य द्वे कारणे महानरेन्द्रावलोकनायामपि युक्ति-युक्त एवास्य परमेश्वरस्य पारमेश्वरो दृष्टिपातस्तत्र । यस्मादेष सुपरीक्षितकारिणा स्वकर्मविवरेण द्वारपालेनाच भवने प्रवेशितः तेनोचित एवायं विशेषदृष्टेरित्येकं कारणं यथा यश्चैतद्भवनमा-लोकय नरस्य मनःप्रमादो जायते स महानरेन्द्रस्यात्यन्तवल्लभ इति प्रागेव विनिश्चितमिदं मया संजातश्चास्य मनःप्रमादो लक्ष्यते यतो नेत्ररोगपीडाभराक्रान्ते अपि लोचने भवनदिदृक्षया प्रतिक्षण-मयमुन्मीलयति तद्दर्शनेन बीभत्सदर्शनमप्यस्य वदनं सहसा प्रसाद-

त्मकोऽयं जीवः पञ्चभूतात्मको वा विज्ञानमात्रं चेदं सर्वं शून्यरूपं वा न विद्यते वा कर्म महेश्वरवशादिदं सर्वं नानारूपं वर्त्तत इत्यादयस्ते सर्वेऽपि भीममहाघोधदर्शनात्संग्रामशिरसि प्रत्यनीककातरनरा इव निवर्त्तन्ते। ततश्चायं तदा जीवो मन्यते यदेते महात्मानो मह्यं कथयन्ति तत्सर्वमुपपद्यते मत्तोऽधिकतरं परीक्षितं वस्तुतत्त्वमेत एव जानन्ति। ततश्च यदुक्तं कथानकं कथयता यदुत

कदर्थनार्थमायाताः पश्चात्मत्राः सुदारुणाः।

दुर्दान्तडिम्भा ये तस्य दृष्ट्वा तं ते पलायिता इति॥

तदपि योजितं विज्ञेयम्। यतः कुविकल्पा एव दुर्दान्तडिम्भास्त एव जीवं कदर्थयन्ति तन्निवृत्तिश्च सुगुरुसम्पर्केणेति तदेवमपगतेषु सकलेषु कुविकल्पेषु यदायं जीवः सद्धर्मगुरूणां तद्वचनाकर्णनस्पृहया मनागभिमुखो भवति तदा ते परहितकरणैकव्यसनितया सन्मार्गदेशनां कुर्वाणाः खल्वेवमाचक्षते यदुताकर्णय भो भद्र संसारे पर्यटतोऽस्य जीवस्य धर्म एवातिवत्सलहृदयः पिता धर्म एव गाढस्नेहबन्धुरा जननी धर्म एवाभिन्नहृदयाभिप्रायो भ्राता धर्म एव सदैकस्नेहरसवशा भगिनी धर्म एव समस्तसुखखनीभूतानुरक्ता गुणवती भार्या धर्म एव विद्यास्थानमेकरसमनुकूलं सकलकलाकलापकुशलं मित्रं धर्म एव सुरकुमाराकारधारकचित्तामन्दातिरेकहेतुस्तनयः धर्म एव शीलसौन्दर्यगुणलब्धजयपताकाकुलोन्नतिनिमित्तभूता दुहिता धर्म एवाव्यभिचारी बन्धुवर्गः धर्म एव विनीतः परिकरः धर्म एव नरेश्वरता धर्म एव चक्रवर्त्तित्वं धर्म एव विबुधभावः धर्म एवामरेश्वरता धर्म एव वज्राकारो

लावण्यापकर्षितभुवनो जरामरणविकारविकलः कायः धर्म एव समस्तशास्त्रार्थशुभशब्दग्रहणचतुरं श्रोत्रं धर्म एव भुवनालोकनक्षमे कल्याणदर्शने लोचने धर्म एव मनःप्रमोदहेतवोऽनर्घ्या रत्नराशयः धर्म एव चित्ताह्लादविधायिनो विषघातनाद्यष्टगुणोपेताः कनककूटाः धर्म एव परनिराकरणदक्षं चतुरङ्गं बलं धर्म एवानन्तरतिसागरावगाहनहेतुभूतानि विलासस्थानानि । किं बहुना जल्पितेन धर्म एवैको निर्विघ्नानन्तसुखपरंपराकारणं नापरं किंचिदपीत्येवं च कथयति मधुरभाषिणि भगवति धर्मसूरौ भगवत्यस्य जीवस्य मनाग् चित्ताक्षेपः तद्वशेन विस्फारयतीक्षणयुगलं दर्शयति वदनप्रसन्नतां त्यजति विकथादीनि विक्षेपान्तराणि क्वचिद्भावितहृदयो विधत्ते सस्मितं वक्त्रकुहरं ददाति नखस्फोटिकां ततो भगवन्तः सूरयो मनाग् प्रविष्टरसं तमाकलय्येत्यमभिदधते। यदुत सौम्य स धर्मश्चतुर्विधो भवति। तद्यथा दानमयः शीलमयस्तपोमयो भावनामयश्चेति । अतो यदि भवतोऽस्ति सुखाकाङ्क्षा ततोऽयमनुष्ठातुं चतुर्विधोऽपि युज्यते। भवता दीयतां सुपात्रेभ्यो यथाशक्त्या दानं क्रियतां समस्तपापेभ्यो वा स्थूलपापेभ्यो वा प्राणातिपाताद्वा मृषावादाद्वा चौर्यकरणाद्वा परदारगमनाद्वा अपरिमितग्रहणाद्वा रात्रिभोजनाद्वा मद्यपानाद्वा मांसभक्षणाद्वा सजीवफलास्वादनाद्वा मित्रद्रोहाद्वा गुर्वङ्गनागमनाद्वा अन्यस्मादाशक्यपरिहाराद्विरतिः तथा विधीयतां यथाशक्ति कश्चित्तपोविशेषः भाव्यतामनवरतं शुभभावना भवता येन ते संपद्यन्ते निःसंशयमिहामुत्र च सकलकल्याणानीति । तदनेन यत्तदुक्तमासील्कथानकं यथा महानमनि-

युक्तकस्तं रोरं समाहूय भिक्षाचरोचिते भूभागे स्थापितवान्। ततस्तद्भिक्षादानार्थं परिजनमादिष्टवान्। तदनन्तरं तद्दया नाम तद्दुहिता सा परमान्नमादायातिसुन्दरं त्वरया तद्दानार्थमुपस्थितेति तत्सर्वं योजितं विज्ञेयम्। तथा हीह धर्मगुणवर्णनं जीवस्याकारणकल्पं विज्ञेयं तच्चित्ताक्षेपो भिक्षाचरोचितभूभागस्थापनतुल्यो द्रष्टव्यः धर्मभेदवर्णनं परिजनादेशसमानं मन्तव्यं तस्यैव गुरोर्या जीवस्योपरि कृपा सैव तद्दया नाम्नी दुहिता विज्ञेया। चतुर्विधधर्मानुष्ठानकारणं सुन्दरपरमान्नग्रहणसमानं विज्ञेयं तच्च सद्धर्माचार्यानुकम्पयैव जीवं प्रत्युपढौकयति नापरो हेतुरिति विज्ञेयम्। यत्पुनरभिहितं यदुताकारणसमनन्तरं तं तथाभूतमत्यादरमालोक्य स रोरश्चिन्तयति स्म यथा मामन्यदा भिक्षां प्रार्थयमानमपि लोका निराकुर्वन्ति तिरस्कारपूर्वं वा किञ्चिद्ददति। अधुना पुनरेषः सुवेषो नरेन्द्राकारः पुरुषः स्वयमागत्य मामाकारयति भिक्षा ते दीयत इति च मामुपप्रलोभयति तत्किमिदमाश्चर्यं ततस्तुच्छाभिप्रायवशेन पर्यालोचयतस्तस्य चेतसि परिस्फुरितं हन्त नैवैतत्सुन्दरं मम प्रतिभासते मन्मोषणार्थः खल्वेष आरम्भो यतो भृतप्रायमिदं भिक्षाया भाजनं मामकीनं तदेष विजने नीत्वा मां निश्चितमेतद्दालयिष्यति। एवञ्च स्थिते किं मयाधुना विधेयं किमित एव स्थानात् सहसा नश्यामि उतोपविश्य तावद्भक्षयामीदं भाजनस्थं भोजनं आहोस्विच्च कार्यं मम भिक्षयेति प्रतिषेधं विधाय पदमपि न चलामि किं वा वञ्चयित्वेनं पुरुषं कुत्रचित् मलरं प्रविशामि कथं कुर्वतो ममास्मान्मोक्षो भविष्यतीति

न जाने यावदेवं निश्चितकुविकल्पमालाकुलचेताश्चिन्तयति ताव-त्तस्य प्रवर्त्तते प्रबलं भयं प्रसर्पति तृष्णा शुष्यति हृदयं विक्लवीभ-वत्यन्तरात्मा तृष्णातिरेकाभिभूतचित्तवृत्तेः संरक्षणानुबन्धि प्रादुर्भूतं महारौद्रध्यानं निरुद्धः करुणाग्रामप्रसरः मीलिते विलोचने नष्टा चेतना न जानीते क्वाहं नीतः कुत्र वा स्थितः केवलं निखात काष्ठकील इवोर्द्ध्वाकारोऽवतिष्ठते सा तु तद्दया गृहाणेदं भोज-नमिति भूयो भूयः समाकुला व्याहरति स्म । तथापि स निष्पु-ण्यको द्रमकः सर्वरोगकरं तुच्छं यत्तदात्मीयं कदशनं तत्संरक्षणा-नुबन्धेन नष्टात्मा तां कन्यकां समस्तरोगहरामृतास्वादपरमान्नदा-नार्थं व्याहरन्तीं वराको नावबुध्यते तदिदं समस्तं जीवेऽपि समा-नमवगन्तव्यम् । तथा हि । यदाऽस्य हितचिकीर्षया भगवन्तः सद्धर्मगुरवो विस्तरेण धर्मगुणानुपवर्ण्य पुनश्चतुर्विधधर्मानुष्ठानमुप-दिशन्ति तदाऽयं जीवो मिथ्याज्ञानमहातमःकाचपटलतिमिर-कामलावलेपलुप्तविवेकलोचनयुगलदीधितिप्रसरोऽनादिभवाभ्यस्तम-हामिथ्यात्वोन्मादसन्तापविधुरितहृदयः प्रबलचारित्रमोहनीयरोग-कदम्बकविक्लवचेतनस्तत्र विषयधनकलत्रादिकया गाढमूर्छयाभिभूत-चित्तवृत्तिः सन्नेवं चिन्तयति यावदहं पूर्वं धर्माधर्मविचारपर्यवणां नाकर्षं तावदेते श्रमणाः क्वचिदुपलभ्यमाना अपि न मम वार्त्तामपि पृष्टवन्तो यद्यपि कथञ्चित् क्वचिदवसरे मां धर्मगोचरं किञ्चिद् मूचुः तथाप्यनादरेण वचनं वा द्वे वा इदानीं पुनर्मां धर्माधर्म-जिज्ञासापरमवगम्य गतोयमस्माकमादेशगोचरमिति मत्वा स्वगल-तालुशोषमवगणय्योच्चैर्ध्वनिना महता वचनरचनाटोपेन स्वयमपृष्ट

एवैष लोकप्रकाशः श्रमणो मम पुरतो धर्मगुणाननुपवर्णयति मांचाचिप्तचित्तमुपलभ्य दानं दापयति शीलं ग्राहयति तपश्चा-रयति भावनां भावयति तदियतोऽकाण्ड एव स्फुटाटोपस्यास्य हन्त को गर्भार्थः अज्ञातमस्ति मे सुन्दरकलत्रसङ्गहः विद्यते नानाकारो द्रविणनिचयः सम्भवति भूरिरूपो धान्यप्राग्भारः समस्ति सम्पूर्णं चतुष्पदकुप्यादिकं नूनं तज्ज्ञातमेतेन तदेषोऽत्र तात्पर्यार्थो यदुत दीचा ते दीयते रजस्ते पात्यते बीजदाहस्ते क्रियते कुरु लिङ्गपूरणं विधेहि गुरुपादपूजनम् निवेदय स्वकलत्र-स्वधनकनकादिकं समस्तसर्वस्वं गुरुपादेभ्यः। पुनस्तैरनुज्ञातमनु-भवितैतत्स्वमेवं विदधानः पिण्डपातेन शिवीभविष्यसीत्येवं वचन-रचनया विप्रतार्य शैवाचार्य इव मामेष श्रमणको मुमुषिषति यदि वा भूरिफलं सुवर्णदानं महोदयं गोदानमचय्यं पृथिवीदानं अतुलं पूर्तधर्मकरणमनन्तगुणं वेदपारगे दानं यदि पुनर्गौर्वि-ज्ञायमाना निर्गतवत्सखुरमुखा सचेला कनकशृङ्गी रत्नमण्डिता सोपचारा द्विजेभ्यो दीयते ततश्चतुरुदधिमेखला सग्रामनगराकरा सशैलकानना पृथिवी तेन दत्ता भवति सा चाचय्यफला संपद्यत इत्येवं मुग्धजनवञ्चनपरैः कूटश्लोकरचितग्रन्थैर्मां विप्रलभ्य द्विजा-तिरिव नूनमेष श्रमणो मे द्रविणजातं जिहीर्षति। अथ वा। कारय रमणीयतरान् विहारान् वासय तेषु बहुश्रुतान् पूजय संघं प्रयच्छ भिक्षुभ्यो दक्षिणां मीलय सङ्घसम्बन्धिनि कोशे स्वीयं द्रविणजातं निक्षिप सङ्घसम्बन्धिन्येव कोष्ठागारे स्वधान्यसञ्चयं समर्पय सङ्घसम्बन्धिन्यामेव संज्ञातौ स्वकीयं चतुष्पदवर्गं भव

बुद्धधर्मसङ्घशरणः एवं ते कुर्वतोऽचिराद् बुद्धपदं भविष्यतीत्येवं
वाचालविरचितमायाजालेनात्मीयशास्त्रसन्दर्भेण रक्तभिक्षुरिव मां
विसंवाद्य निश्चितमेष श्रमणो मदीयसर्वस्वं लातुमभिकाङ्क्षति।
यद्वा। क्रियतां सङ्घभक्तं भोज्यन्तामृषयो दीयन्तां सुन्दरखाद्यानि
उपनीयन्तां मुखक्षेपणानि दानमेव गृहस्थस्य परमो धर्मः तत एव
संपद्यते संसारोत्तार इत्येवं मामुपप्रलोभ्य स्वशरीरपोषणपरो
दिगम्बर इव मदीयधनशेषं श्रमणो निर्वाहयिष्यति। अन्यथा
कथमेवंविधोऽस्य ममोपरि प्रपञ्चकथनरूपोऽत्यादरः स्यात्तदिदमिह
तत्त्वं तावदेवैते सुन्दराः श्रमणा यावन्नोपलभ्यन्ते यावच्चैतेषां न
वशवर्त्तिभिर्भूयते वशवर्त्तिनं पुनर्मुग्धजनं श्रद्धालुमवगम्यैते माया-
विनो नाना वचनरचनया विप्रतार्य मदीयसर्वस्वमपहरन्ति नास्त्यत्र
सन्देहः। ततो मयाऽधुनानेन श्रमणेन प्रारब्धेन सता किं विधेय-
मित्यालोचयामि। किमदत्तप्रतिवचनः समुत्थाय गच्छामि। उत
नास्त्येव धर्मानुष्ठानकरणे मम शक्तिरिति दीपयामि। आहोस्वि-
च्चौरहरणादिभिः प्रक्षीणं मे द्रव्यजातं नास्त्येवाधुना किञ्चिद्
दीयते याचेभ्य इत्येवं प्रत्युत्तरयामि। उताहो न कार्यं मे तावक-
धर्मानुष्ठानेन न पुनर्मया किञ्चिद्भवता कथनीयमित्येवमेनं श्रमणं
निराकरोमि किं वा अकाण्डकथनजनितक्रोधप्रकाशिकां भ्रुकुटिं सम-
पादयामीति। न जाने कथमेष श्रमणो मद्वचनश्रवणमना निरपांशा-
दुरध्वमायामाश मोक्षं दास्यतीति। न पुनरसौ वराको गाढमूढा-
त्मतया लक्षितमवयति यदेते भगवन्तः षड्गांचाषां विदितगुप-
शुद्धिनिःसारसंसारभावा अनुपमशीलावगमप्रशमाःकरणा भवगत-

विषयविषविषमविपाका मोक्षकाङ्क्षितानेन चेतसा सर्वत्र समवृत्त-तयाऽत्यन्तनिःस्पृहतया च सन्मार्गोपदेशदाने प्रवर्त्तमानाः सन्तो न देवेन्द्रद्रमकयोर्विशेषं लक्षयन्ति न महर्द्धिविबुधनिर्द्धनपुरुषयोर्विभागं कल्पयन्ति न चक्रेश्वररोरयोरन्तरं दर्शयन्ति नोदारपरमेश्वर-कृपणनरयोरादरानादराभ्यां प्रवर्त्तन्ते समानमेषां चेतसि विवर्त्तते परमैश्वर्यं दारिद्र्येण तुल्या महार्हरत्नराशयो जरठपाषाणनिकरेण सदृशा उत्तप्तहाटककूटा लोष्टपूगेन सदृशा हिरण्यस्तोमा धूलि-पुञ्जेन सन्निभो धान्यनिचयः क्षारराशेस्तुल्यं चतुष्पदकुप्यादिकं निःसारकचवरेण न विशेषो निर्जितरतिरूपाभिरपि ललितलल-नाभिः सह जरत्काष्ठस्तम्भानामिति। एवञ्च स्थिते। नैतेषां परहितकरणैकव्यसनितां विमुच्यापरसदुपदेशदाने प्रवर्त्तमानानां कारणमुपलभ्यते। यतः स्वार्थसम्पादनमपि परमार्थतः स्वाध्याय-ध्यानतपश्चरणकरणादिना द्वारान्तरेणैव सम्पद्यत एव। न तदर्थ-मप्येतेषामत्र प्रवृत्तिः। दुरापास्तावकाशा लाभादिका शेषाकाङ्क्षा। न चैतदेषकोऽन्ध्याम्भीकृतबुद्धिर्जानीते। ततोऽयं जीवोऽनवगतसद्गुरु-दाराशयोऽत्यन्ततुच्छस्वचित्तदुष्टताऽनुमानेन तच्चित्तमपि तथारूपं परिकलयन् महामोहवशेन तानलदर्शनैः शैवद्विजातिभी रक्तभिक्षु-दिगम्बरादिभिस्तुल्यान् कल्पयति। सम्भवन्ति च भिन्नकर्मग्रन्थेरपि दर्शनमोहनीयपुञ्जत्रयकरणेन यदा पुनर्मिथ्यात्वपुञ्जे वर्त्ततेऽयं जीवस्तदैवंविधाः कुविकल्पा इति। ततश्च। तैराकुलीकृतहृदयस्यास्य जीवस्य पुनः प्रसर्पति मिथ्यात्वविषं ततस्तद्वशगोऽयं जीवः शिथिल-यति मौनीन्द्रदर्शनपक्षपातं विमुञ्चति पदार्थजिज्ञासामवधीरयति

सद्धर्मनिरतं जनं वञ्चमन्यते निर्विचारकलोकं प्रमादयति प्राग् प्रवृत्तं सत्कर्त्तव्यलेशं परित्यजति भद्रकभावं रज्यते नितरां विषयेषु पश्यति तत्त्वबुद्धा तत्साधनं धनकनकादिकं गृह्णाति तथोपदिशन्तं गुरुं वञ्चकबुद्धा नाकर्णयति तद्वचनं भाषते धर्मावर्णवादान् उद्घट्टयति धर्मगुरूणां मर्मस्थानानि लगति प्रतीपं कूटवादेन निराक्रियते पदे पदे गुरुभिः। ततश्चासौ चिन्तयति सुरचित-ग्रन्थप्रपञ्चा एते श्रमणा न निराकर्त्तुं मादृशैः पार्यन्ते ततो मामलीकविकल्पजालेन विप्रतार्य पुनः करिष्यन्त्येते मायावितथात्मभक्ष्य-स्थानमतो दूरत एव मयैते वर्जनीयाः खगहाद्वारणीया दृष्टा अपि न सम्भाषणीया नामापि न सोढव्यमेतेषामित्येवं कदन्नकल्प-धनविषयकलत्रादिके मूर्च्छितहृदयस्तत्संरक्षणप्रवणोऽयं जीवः सदुप-देशदायकान् महामोहवशगो वञ्चकत्वेन कल्पयन् रौद्रध्यानमा-पूरयति ततो नष्टविवेकचेतनत्वेः सद्धर्माचार्यैरूर्ध्वाकारनिखातकाष्ठ-कीलककल्पो लक्ष्यते। अत एव च तेषां सम्बधिन्या दयया दीय-मानं तदानीं सुन्दरपरमान्नकल्पं सदनुष्ठानोपदेशं वराकोऽयं जीवो न जानीते न चेतःपरं विवेकिनां विस्मयकरमस्ति। यदेष जीवो महानरकगर्भपातहेतौ धनविषयादिके गृह्वात्मानन्तसुखमोक्षाक्षेप-कारणं सदनुष्ठानं सद्गुरुदयोपनीतमवधीरयति। यथा च तेन महानसनियुक्तकेन तत्तथाभूतमसंभाव्यं व्यतिकरमवलोक्य चिन्तितं यदुत किं पुनरेष रोरो दीयमानमादरेणेदं परमान्नं न गृह्णाति नूनमयमस्य पापोपहतात्मतया न योग्य इति। तदत्रापि तुल्यं विज्ञेयम्। तथा हि। सद्गुरूणामपि तं तथाविधं विस्तरधर्मोप-

देशनयाऽन्यथा वा विनष्टभद्रकभावं विपरीतचारिणं जीवमुपलभ्य भवत्येवम्भूतो भावो यदुत न भाजनमेषोऽकल्याणभाजनतया भगवद्धर्मस्य नोचितो कुगतिगामितया सुगतिगमनस्य न परिकर्मणीयो दुर्दलकल्पतया सद्धर्मचेतसां ततोऽत्र मोहोपहतचेतसि विफलो मे परिश्रम इति। यथा च पुनर्विमृशता तेन रसवतीपतिना निश्चितं यदुत नास्य वराकस्यायं दोषः यतो बहिरन्तश्चायं रोगजालेन परिवेष्टित इति कृत्वा वेदनाविह्वलो न किञ्चिच्चेतयति। यदि पुनरेष नीरोगः स्यात् ततो योऽयं कदन्नलवलाभेनापि तुष्यति सोऽमृतास्वादमेतत्परमान्नं दयीमानं कथन्न गृह्णीयादिति। तदेतदाचार्यस्यापि पर्यालोचयतो मनसि वर्त्तत एवेति। यदुत। यदेष जीवो गृध्यति विषयादिषु गच्छति कुमार्गेण नादत्ते दीयमानं सदुपदेशं नैषोऽस्य वराकस्य दोषः किं तर्हि मिथ्यात्वादीनां भावरोगाणां तैर्विसंस्थुलचेतनोऽयं न किञ्चिज्जानीते यदि पुनरेष तद्विकलः स्यात् तत्कथमात्मनो हितं विमुच्यात्माहिते प्रवर्त्तेत। यच्च तेन महानसनियुक्तेन पर्यचिन्ति। यथा कथं पुनरेष रोरो नीरोगः स्यात् ततो मनसि निरूपयता तेन पुनः पर्यकल्पि। अये विद्यत एवास्य रोगनिराकरणोपायः। यतोऽस्ति मम चारुभेषजत्रयं तद्यथा एकं तावदिमलालोकं नाम परमाञ्जनं तद्विधानेन प्रयुज्यमानं समस्तनेत्ररोगान्नाशयति सूक्ष्मव्यवहितातीतभाविभावविलोकनदक्षं चक्षुः संपादयति। तथा द्वितीयं तत्त्वप्रीतिकरं नाम सत्तीर्थोदकं तत्पुनर्विधिना पाद्यमानं समस्तगदमातताननं विधत्ते। दृष्टेयाविपरीतार्थग्रहणचतुरतां कुरुते विशेषतः पुनरुन्मादमुद्दल-

यति तृतीयं पुनरेतदेव कन्यकोपनीतं महाकल्याणकं नाम पर-
मान्नमेतत्पुनः सम्यङ् निषेव्यमानं निःशेषरोगगणं समूलकाषं कषति ।
तथा पुष्टिं जनयति धृतिं वर्द्धयति बलमुज्ज्वलयति वर्णमुत्कर्षयति
मनःप्रसादं संपादयति वयस्तंभं विधत्ते सवीर्यतां करोति श्रौर्जित्यं
प्रवणयति किम्बहुना अजरामरत्वमपि निःसन्देहमेतत्सन्निधापयति
तस्मादनेनौषधत्रयेण सम्यगुपक्रम्यैनं तपस्विनं व्याधिभ्यो मोचया-
मीति तेन मनसि सिद्धान्तः स्थापितः । तदेतत्सद्धर्माचार्योऽपि
जीवगोचरं समस्तं चिन्तयत्येव । तथा हि । यदा निश्चितं तेन
प्राक्प्रवृत्तिदर्शनेन यथा भव्योऽयं जीव. केवलं प्रबलकर्मकला-
कुलितचेताः सन्मार्गात्परिभ्रष्टस्तदा भवति गुरोरयमभिप्रायः यथा
कथं पुनरेषोऽस्माद्रोगस्थानीयात् कर्मजालान्मोच्यते पर्यालोचयतश्च
तात्पर्यपर्याकुलेन चेतसा सुदूरमपि गत्वा पुनरेतदेव ज्ञानदर्शन-
चारित्ररूपत्रयं भेषजत्रयकल्पं तन्मोचनोपायः प्रतिभासते नापरः ।
तत्रेह ज्ञानमञ्जनं विज्ञेयं तदेव परिस्फुटदर्शितया विमलालोक-
मुच्यते तदेव च नयनगदसन्दोहकल्पमज्ञानमुन्मूलयति तदेव च
भूतभवद्भाविभावस्वभावाविर्भावनचतुरं जीवस्य विवेकचक्षुः संपाद-
यति दर्शनं पुनः सत्तीर्थोदकं बोद्धव्यं तदेव जीवादिपदार्थगोचर-
श्रद्धानहेतुतया तत्प्रीतिकरमभिधीयते । यतश्च तदुदयसमये
सर्वकर्मणामन्तःसागरोपमकोटीकोटिमात्रमवतिष्ठते समुत्पन्नं पुनः
प्रतिक्षणं तत्तानि तनूकुरुते तेन समस्तगदतानवकारकं कर्मणामिह
रोगकल्पत्वात् तदेव दृष्टिप्रत्ययस्य ज्ञानस्य यथावस्थितार्थग्रहणचातुर्य-
माधत्ते । तदेव च महोन्मादकल्पं मिथ्यात्वमुन्मूलयतीति । चारित्रं

पुनश्च परमान्नमवगन्तव्यं तदेव सदनुष्ठानं धर्मः सामयिकं विरतिरित्यादयः पर्यायाः। तदेव मोक्षलक्षणमहाकल्याणव्यवस्थितकारणतया महाकल्याणकमिति गीयते। तदेव च रागादिमहाव्याधिकदम्बकं समूलघातं हन्ति। तदेव च वर्णपुष्टिधृतिबलमनःप्रसादौर्जित्यवयःस्तंभसवीर्यतातुल्यानात्मगुणान् समस्तानाविर्भावयति। तथाहि। तज्जीवे वर्त्तमानं प्रभावो धैर्यस्य कारणमौदार्यस्याकरो गांभीर्यस्य शरीरं प्रशमस्य स्वरूपं वैराग्यस्यातुलहेतुर्वीर्योत्कर्षस्याश्रयो निर्द्वन्द्वतायाः कुलमन्दिरं चित्तनिर्वाणस्य उत्पत्तिभूमिरिदंयादिगुणरत्नानां किं बहुना यत्तदनन्तज्ञानदर्शनवीर्यानन्दपरिपूर्णमक्षयमव्ययमव्याबाधं धाम तदपि तत्सम्पाद्यमेवेति अतोऽजरामरत्वमपि तज्जनयतीत्युच्यते। तस्मादेनमनेन ज्ञानदर्शनचारित्रत्रयेण सम्यगुपक्रम्य जीवं क्लिष्टकर्मकलाजालान्मोचयामीति सद्धर्मगुरुरपि चित्तेऽवधारयति। ततो यथा तेन रसवतीपतिना शलाकाग्रे तदञ्जनं विन्यस्य तस्य द्रमकस्य गाढमाधूनयतो ग्रीवामञ्जिते लोचने तदनन्तरमेव तेन प्रह्लादकतया शीततयाऽचिन्त्यगुणयोगितया चाञ्जनस्य पुनश्चेतना लब्धा ततश्चोन्मीलितं चक्षुः प्रशान्ता मनाङ्नेत्रबाधा विस्मितेन च तेन किमेतदिति चिन्तितम्। तदेवं योजनीयं यदाऽयं जीवः प्रथमं प्रतिपद्य भद्रकभावं रोचयित्वा भगवच्छासनं नमस्कृत्यार्हद्बिम्बानि पर्युपास्य साधुलोकं विधाय धर्मपदार्थजिज्ञासां कृत्वा दानादिप्रवृत्तिमुत्पाद्य धर्मगुरूणामात्मविषयां पात्रबुद्धिं पुनः क्लिष्टकर्मोदयेन विस्तरधर्मदेशनादिकं किञ्चिन्निमित्तमासाद्य परिभ्रष्टपरिणामो भवति। ततश्च न गच्छति

चैत्यालये नालीयते साधूपाश्रये न वन्दते दृष्टमपि साधुलोकं नामन्त्रयति श्रावकजनं निवारयति स्वगृहे दानादिप्रवृत्तिं पलायते दूरदृष्टेभ्योऽपि धर्मगुरुभ्यः विधत्ते पृष्ठतस्तदवर्णवादादिकं ततस्तं तथाभूतं नष्टविवेकचेतनमवगम्य गुरवः स्वबुद्धिशलाकायां तत्प्रतिबोधोपायाञ्जनं निदधते। कथं बहिर्भूम्यादौ कथञ्चिदकाण्डदृष्टस्य कुर्वन्ति प्रियसंभाषणं दर्शयन्ति हितबुद्धिं प्रख्यापयन्त्यात्मस्वभावमुत्पादयन्त्यविप्रतारकप्रत्ययं पुरुषविशेषं तद्भावं चोपलक्ष्य वदन्ति च भद्र किं नागम्यते साधूपाश्रये किन्न विधीयते भवतात्महितं किं विफलीक्रियते मनुष्यभवः किन्न विज्ञायते शुभाशुभविशेषः किमेत्यनुभूयते पशुभावो भवता वयं हि भवत एवेदं पथ्यमिति भूयोभूयोऽभिदध्महे तदिदं सर्वं शलाकाञ्जनस्थापनकल्पं विज्ञेयं सज्ज्ञानहेतुतया कारणकार्योपचारादिति। तदेतदाकर्ण्य ततोऽसावष्टोत्तराणि विरचयन्नेवं ब्रूयात् भो भो श्रमणा गाढमक्षणिकोऽहं न सरति मे भगवत्समीपमागच्छतो निर्व्यापाराणां हि धर्मचिन्ता भवति मादृशां पुनरन्यचगतानां सीदति कुटुम्बादिकं न प्रवर्त्तते गृहेऽतिकर्त्तव्यतेति न वहति वाणिज्यं न संपद्यते राजसेवा विस्तरयति कृषिकर्मादिकमिति। तदेतत्समस्तं शिरोधूननमभिधीयते। ततस्तद्वचनमाकर्ण्य करुणापरीतहृदयाः सद्धर्मगुरवो यास्यत्येष वराकोऽकृतपुण्यकर्मा दुर्गतिमित्यतो नोपेक्षणीयः इत्यालोच्येत्थमाचक्षीरन् वत्स यद्यप्येवं तथापि मदनुरोधेन क्रियतां यदहं वच्मि। तद्वचनमेकं द्रष्टव्यास्त्वयाहोरात्रमध्येऽवश्यं तयोपाश्रयमागत्य सकृत्साधव इति। गृह्यतामभिग्रहो नान्यदहं किञ्चिदपि भवन्तं भणि-

ष्यामि। ततोऽसौ का गतिः प्रतिप्रवेशे पतित इत्यालोच्य तमभिप्रहं गृह्णीयात्। तदिदं सद्गुरुवचनप्रतिपत्तिकरणं प्राग्वल्लोचनाञ्जनपातनतुल्यं बोद्धव्यं ततस्तत्प्रभृति तदुपाश्रयं गच्छतः प्रतिदिनं सुसाधुसंपर्केण तेषां निष्कृत्रिमानुष्ठानदर्शनेन निस्पृहतादिगुणानालोकयतो निजपापपरमाणुदलनेन च तस्य याविवेककला संपद्येत सा नष्टा सती चेतना पुनरागता इत्यभिधीयते। यत्तु। भूयो भूयो धर्मपदार्थजिज्ञासनं तन्नयनोन्मीलनकल्पं विज्ञेयं यस्तु प्रतिक्षणमज्ञानविलयः स नेत्ररोगबाधोपशमतुल्यो मन्तव्यः। यः पुनर्बोधसद्भावे मनाक् चित्ततोषः स विस्मयाकारोऽवगन्तव्यः। यथा च तावति व्यतिकरे सम्पन्नेऽपि यत्तस्य द्रमकस्य तद्भिचारचपलचणमाकूतं बहुकालाभ्यासाभिनिवेशनप्रवर्त्तमानं न निःशेषतयाद्यापि निवर्त्तते। तदशीभूतचित्तस्य तं पुरुषं तद्भाहितया पुनः पुनः शङ्कते तनो नष्टुमभिलषति तदिहापि सम्भवतीत्यवगन्तव्यम्। तथा हि। यावदेषोऽद्यापि जीवः प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणं नाधिगमजसम्यग्दर्शनमाप्नोति तावद्व्यवहारतः श्रुतमात्रप्राप्तावपि स्वल्पविवेकतयाद्याच धनविषयकलत्रादिके कदन्नकल्पे परमार्थबुद्धिर्न व्यावर्त्तते तदभिभूतचेतनश्च स्वचित्तानुमानेनातिनिःस्पृहहृदयानपि मुनिपुङ्गवानमीमेते प्रत्यासन्नवर्त्तिनं किञ्चिन्मृगयिष्यन्त इत्येवं मुहुर्मुहुराशङ्कते ततस्तैः सह गाढपरिचयं परिजिहीर्षन्न तत्समीपे चिरं तिष्ठतीति। यत्पुनरभिहितं यदुत स महानसनियुक्तकस्तं द्रमकमञ्जनमाहात्म्येन संजातचेतनमुपलभ्याभिहितवान् भद्र पिबेदमुदकं येन ते स्वस्थता सम्पद्यते स तु न जानेऽनेन

पीतेन मम किं संपत्स्यत इति शङ्काकुलाकूतस्तत्समस्ततापोपशम-
कारणमपि तत्प्रीतिकरं तोयं न पातुमिच्छति स्म । ततस्तेन
कृपापरीतचित्तेन बलात्कारेणापि हितं विधेयमिति मत्वा
स्वसामर्थ्येन मुखमुद्घाट्य तस्य तत्सलिलं गालितं ततस्तदास्वादन-
समनन्तरं तस्य मद्योन्मादो नष्ट इव शेषरोगास्तानवं गता इव
दाहार्त्तिरुपशान्ता चेति कृत्वा स्वस्थचित्त इवासौ विभाव्यते स्म
तदिदं जीवेऽपि समानमवगन्तव्यम् । तत्र यदा गृहीतचर्णं सुसा-
धूपाश्रयमागच्छन्तं तत्सद्दृष्टेन संपन्नद्रव्यश्रुतमात्रतया सञ्जातविवेक-
स्तवं विशिष्टतत्त्वश्रद्धानविकलं धनविषयादिषु परमार्थदर्शिनं
तन्मूर्च्छया सुसाधूनपि तन्मार्गणतया शङ्कमानमत एव प्रबन्धधर्म-
कथाकर्णनं परिहरन्तमेनं जीवमुपलभन्ते धर्मसूरयः । तदा तेषां
दयालुतया भवेदभिसन्धिः यद्येष विशिष्टतरगुणभाजनं संपद्यते
ततस्ते क्वचित्समीपवर्तिनं तमवगम्य तस्याकर्णयतोऽन्यं जनमुद्दिश्य
सम्यग्दर्शनगुणान् वर्णयन्ति तस्य च दुर्लभतां प्रख्यापयन्ति तदङ्गी-
कुर्वतां स्वर्गापवर्गादिकं फलमुपदर्शयन्ति इह लोकेऽपि परमचित्त-
निर्वाणकारणतां तस्य सूचयन्ति तदेतत्सर्वं सञ्जातचैतन्यस्योदक-
निमन्त्रणकल्पं विज्ञेयं ततोऽसौ तद्धर्मगुरुवचनं निशम्य दोलाय-
मानबुद्धिरेवं चिन्तयेदेष श्रमणो वक्रस्तावदीयसम्यग्दर्शनस्य गुण-
जातमुपवर्णयति केवलं यदीदमहमङ्गीकरिष्ये ततो मामात्म-
वशवर्त्तिनमवबुद्ध्य धनान्नादिकं प्रार्थयिष्यति ततः किं प्रयोजनं
ममानेनादृष्टाशयादृष्टत्यागलक्षणेनात्मवञ्चनेनेति विचिन्त्याकर्णश्रुतं
कृत्वा तन्नाङ्गीकुरुते तदिदमुदकनिमन्त्रितस्य तत्पानानिच्छासमान-

मवबोद्धुम्। ततो धर्मगुरवश्चिन्तयन्ति कः पुनर्बोधोपायोऽस्य भविष्यतीति। ततः पर्यालोचयन्तः निजहृदये विनिश्चित्यैवं विदधते। क्वचिदवसरे तं साधूपाश्रयमागामुकमवगम्य जनान्तरोद्देशेनाभिमतरां प्रारभते मार्गदेशनां यदुत भो भो लोका विमुच्य विक्षेपान्तरमाकर्णयत यूयम्। इह चत्वारः पुरुषार्था भवन्ति तद्यथा अर्थः कामो धर्मो मोक्षश्चेति। तत्रार्थ एव प्रधानः पुरुषार्थ इति केचिन्मन्यन्ते। अत्रान्तरे स आगच्छेत्ततस्तस्याकर्णयतो वदन्ति गुरवः। तथा हि। अर्थनिचयकलितः पुरुषो लोके जराजीर्णशरीरोऽपि उन्मत्तपञ्चविंशतिकतरुणनराकारः प्रतीयते। अतिकातरहृदयोऽपि महासमरसङ्घट्टनिर्व्यूढसाहसोऽतुलबलपराक्रम इति गीयते। सिद्धमातृकापाठमात्रशक्तिविकलबुद्धिरपि समस्तशास्त्रार्थावगाहनचतुरमतिरिति बन्दिभिः पठ्यते। कुरूपतया नितरामदर्शनीयोऽपि चाटुकरणपरायणैः सेवकनरैरवजितमकरकेतुरिति हेतुभिः स्लाघ्यते। अविद्यमानप्रभावगन्धोऽपि समस्तवस्तुसाधनप्रवणप्रभावोऽयमिति सर्वत्र तद्धनलुब्धबुद्धिभिः प्रकाश्यते। जघन्यघटदासिकातनयोऽपि प्रख्यातोन्नतमहावंशप्रसूतोऽयमिति प्रणयिजनैः स्तूयते। आमप्रमकुलबन्धुतासम्बन्धविकलोऽपि परमबन्धुबुद्ध्याध्यारोपणसमस्तलोकैर्गृह्यते तदिदं समस्तमर्थस्य भगवतो विलसितम्। किञ्च। समाने पुरुषत्वे समसंख्यावयवाः पुरुषा यदेते दृश्यन्ते लोके यदुत एके दायकाः अन्ये तु याचकाः तथैके नरपतयोऽन्ये पदातयः तथैके निरतिशयशब्दाद्युपभोगभाजनमन्ये तु दुष्पूरोदरदरीपूरणकरणेऽप्यशक्ताः तथैके पोषका अन्ये पोष्या इत्यादयो

निःशेषविशेषा निजसद्भावासद्भावाभ्यामर्थेनैव संपाद्यन्ते तस्मादर्थ एव प्रधानः पुरुषार्थः ।

अत एवोच्यते ॥

अर्थाख्यः पुरुषार्थोऽयं प्रधानः प्रतिभासते ।
तृणादपि लघुं लोके धिगर्थरहितं नरम् ॥

तदेतदाचार्यवदनविनिर्गतमर्थवर्णनमनुश्रुत्य स जीवश्चिन्तयेत् अये शोभनः प्रस्तावः प्रारब्धः कथयितुं ततोऽवहितः शृणुयात् शृण्वन् बुध्येत बुध्यमानः स्वबोधसूचनार्थं ग्रीवां चालयेत् लोचने विस्फारयेत् वदनं विकाशयेत् चारु चाह्वकमिति शनैः शनैरभिदध्यात् । ततस्तैर्लिङ्गैः संजातमस्यश्रवणकुतूहलमिति भगवन्तो धर्मगुरवस्तं लक्षयेयुः । ततः सादरतरं पुनस्ते ब्रूयुः भो भो लोकाः काम एव प्रधानः पुरुषार्थ इत्यन्ये मन्यन्ते । तथा हि । न खलु ललितललनावदनकमलमकरन्दास्वादनचतुरचञ्चरीकताचरणमन्तरेण पुरुषः परमार्थतः पुरुषतां स्वीकुरुते । किं चार्थनिचयस्य कलाकौशल्यस्य धर्मार्जनस्य जन्मनश्च काम एव वस्तुतः परमं फलम् । कामविकलैः पुनः किमेतैः सुन्दरैरपि क्रियते । अन्यच्च । कामासेवनप्रवणचेतसां पुरुषाणां तत्सम्पादका धनकनककलत्रादयो योग्यतया स्वत एवोपतिष्ठन्ते संपद्यन्ते भोगिनां भोगा इति गोपालबालाबलादीनां सुप्रसिद्धमिदम् ।

अपिच ॥

स्मितं न लक्षेण वचो न कोटिभि-
र्न कोटिलक्षैः सविलासमौचितम् ।

अवाप्यते ऽन्यैरदयोपगूहनं
न कोटिकोटयापि तदस्ति कामिनाम् ॥

अतः किन्न पर्याप्तं तेषां तस्मात्काम एव प्रधानः पुरुषार्थः ।
अत एवाभिहितम् ॥

कामाख्यः पुरुषार्थोऽयं प्राधान्येनैव गीयते ।
नीरसं काष्ठकल्पं हि धिक्कामविकलं नरम् ॥

तदेतदाकर्ण्य स जीवो हर्षप्रकर्षेण स्वहृदयादुत्कलितः प्रकाशमेवं ब्रूयात् साधु साधूदितं भट्टारकैः बहोः कालादद्य सुन्दरं व्याख्यानमारब्धं यद्येवं दिने दिने कथयथ ततो वयमवन्धिका अपि सन्तोऽवहितचित्ततयाकर्णयाम इति । तदेतद्धर्मगुरुभिः स्वसामर्थ्येन तस्य जीवस्य मुखमुद्घाटितमित्यवगन्तव्यम् । एवं च वदति तस्मिन् जीवे धर्मगुरूणामिदं मनसि वर्त्तते । यदुत पश्यताहो महामोहविजृंभितं यदेते तदुपहताः प्राणिनः प्रसङ्गकथितयोरप्यर्थकामकथयो रज्यन्ते न पुनर्यत्नतोऽपि कथ्यमानायां धर्मकथायाम् । तथा ह्येतास्माभिरर्थकामप्रतिबद्धचेतसां क्षुद्रप्राणिनामभिप्रायो वर्णितः । अयं तु वराकस्तत्रैव सुन्दरताबुद्धिं विधत्ते । तथाप्यस्य श्रवणाभिमुखीकरणेन सफलोऽस्मत्परिश्रमः सर्वथा मच्चिन्तितप्रतिबोधोपायबीजेन मुक्तोऽङ्कुरो भविष्यत्यस्य मार्गावतार इत्येवं स्वचेतस्यवधार्य तैरभिधीयते । भद्र वयं यथावस्थितवस्तुस्वरूपप्रकाशनं कुर्म एव नालीकं जल्पितुं जानीमः । ततोऽसौ प्रत्याथितचित्ततया ब्रूयादेवमेतद्भगवन्नास्त्यत्र सन्देहः गुरवोऽभिदध्युः यद्येवं भद्र तत्किमवधारितं भवतार्थकामयोर्माहात्म्यं सोऽभिदधीत

बाढमवधारितं ततो गुरवो वदेयुः सौम्यैते चत्वारः पुरुषार्थाः कथयितुं प्रक्रान्ताः तत्रैव द्वयोः स्वरूपमभिहितमधुना तृतीयस्या-भिधीयते तदेकचित्तेन भवताकर्णनीयं स वदेदेष दत्ताव-धानोऽस्मि कथयन्तु भगवन्तः। ततो गुरवो ब्रूयुः। भो लोका धर्म एव प्रधानः पुरुषार्थ इत्यन्ये मन्यन्ते। तथा हि। तुल्ये जीवत्वे किमित्येके पुरुषाः कुलक्रमागतद्रविणोपचितेषु गुरुतर-चित्तानन्दसन्दर्भधामसु निःशेषजगदभ्यर्हितेषु कुलेषूपजायन्ते किमिति चान्ये पुरुषा एव धनगन्धसम्बन्धविकलेषु समस्तदुःख-भरभाजनेषु सर्वजननिन्दनीयेषु कुलेषूत्पद्यन्ते। तथा किमित्येक-जननीजनकतया सहोदरयोर्यमलयोश्च द्वयोः पुरुषयोरेष विशेषो दृश्यते यदुतैकस्तयोर्मध्ये रूपेण मीनकेतनायते प्रशान्ततया मुनि-जनायते बुद्धिविभवेनाभयकुमारायते गंभीरतया क्षीरनीरेश्वरायते स्थिरतया सुमेरुशिखरायते शौर्येण धनञ्जयायते धनेन धनदायते दानेन कर्णायते नीरोगतया वज्रशरीरायते प्रमुदितचित्ततया महर्द्धिविबुधायते। ततश्चैवं निःशेषगुणकलाकलापकलितोऽसौ सकलजननयनमनोनन्दनो भवति। द्वितीयः पुनर्बीभत्सदर्शनतया भुवनमुद्वेजयति दुष्टचेष्टतया मातापितरावपि सन्तापयति मूर्ख-शेखरतया पृथ्वीं विजयते तुच्छतयार्कशाल्मलीतूलमतिशेते चपलतया वानरलीलां विडम्बयति कातरतया मूषककदम्बकमधरयति निर्द्धन-तया रोराकारमाबिभर्त्ति कृपणतया टक्कजातीयानतिलङ्घयति महारोगभराक्रान्ततया विक्लवं क्रन्दमानो जगतोऽप्यात्मनि कारुण्य-मुत्पादयति दैन्योद्वेगशोकाद्युपहतचित्ततया घोरमहानरकाकारं

सन्तापं स्वीकुरुते ततश्चैनं समस्तदोषभाजनतया लोकैः पापिष्ठो-ऽदृष्टोऽयमिति निन्द्यते ।

अन्यच्च ॥

द्वयोः पुरुषयोरनुपहतसत्वबुद्धिपौरुषपराक्रमयोर्निःशेषविशेषै-स्तुल्यकचयोरर्थोपार्जनार्थं प्रवर्त्तमानयोः किमित्येको यद्यदारभते कृषिं पाशुपाल्यं वाणिज्यं राजोपसेवामन्यद्वा तदर्थं कर्म तत्तत्स-फलतामुपगच्छति । इतरस्य पुनस्तदेव कर्म न केवलं विफलं संपद्यते किन्तर्हि पूर्वपुरुषोपार्जितमपि धनलवं वैपरीत्यापत्त्या प्रत्युत निःशेषयति । अन्यच्चेदमपि चिन्तनीयं यदुत द्वयोरेव पुरुषयो-र्निरुपचरिताः पञ्चप्रकाराः शब्दादिविषयाः क्वचिदुपनमन्ते तत्र तयोरेकः प्रबलशक्तिः प्रवर्द्धमानप्रीतिस्ताननवरतमनुभवति । द्विती-यस्य पुनरकाण्ड एव किमिति कार्पण्यरोगादिकं कारणमुत्पद्यते येन वाञ्छन्नपि तानेव भोक्तुं न शक्नोतीति । न ह्येवंविधानां विशेषाणां जीवेषु जायमानानां परिदृष्टं किञ्चित्कारणमुपलभ्यते न चाकारणं किञ्चिद्भवितुमर्हति यदि पुनरकारणा एवंविधा विशेषा भवेयुः ततः सर्वदा भवेयुः यथाकाशं न वा कदाचिद्भवेयुर्यथाशशविषा-णादयो यतश्चैते क्वचिद्भवन्ति क्वचिन्न भवन्ति तस्मान्नैते निष्कारणा इति गम्यते । अत्रान्तरे गृहीतार्थः स जीवो ब्रूयात् भगवन् किं पुनरेतेषामुत्पादकं कारणं ततो धर्मगुरवो वदेयुः भद्राकर्णय समस्तानामपि जीवगतानां सुन्दरविशेषाणां धर्म एवान्तरङ्गं कारणं भवति । स एव हि भगवानेनं जीवं सुकुलेषूत्पादयति निःशेष-गुणमन्दिरतां नयति समस्तानुष्ठानान्यस्य सफलयति उपनतभोगा-

ननवरतं भोजयति अन्यांश्च समस्तशुभविशेषान् संपादयति तथा सर्वेषामपि जीवगतानामशोभनविशेषाणामधर्म एवान्तरङ्गं कारणं स एव हि दुरन्तोऽमुं जीवं दुष्कुलेषूत्पादयति निःशेषदोषनिवासतां प्रापयति सर्वव्यवसायानस्य विफलयति उपनतभोगोपभोगविघ्नभूतं शक्तिवैकल्यं जनयति अपरांश्चामनोज्ञाननन्तान् विशेषानस्य जीवस्याधत्ते तस्माद्यद्वलेनैताः समस्तसम्पदः स एव धर्मः प्रधानः पुरुषार्थः अर्थकामौ हि वाञ्छतामपि पुरुषाणां न धर्मव्यतिरेकेण संपद्येते धर्मवतां पुनरतर्कितौ स्वत एवोपनमेते। अतोऽर्थकामार्थिभिः पुरुषैः परमार्थतो धर्म एवोपादातुं युक्तस्तस्मात्स एव प्रधान इति यद्यप्यनन्तज्ञानदर्शनवीर्यानन्दात्मकजीवस्वरूपावस्थानलक्षणश्चतुर्थोऽपि मोक्षरूपः पुरुषार्थो निःशेषक्लेशराशिविच्छेदरूपतया स्वाभाविकस्वाधीनानन्दात्मकतया च प्रधान एव तथापि तस्य धर्मकार्यत्वात् तत्प्राधान्यवर्णनेनापि परमार्थभूतः सत्सम्पादको धर्म एव प्रधानः पुरुषार्थ इति दर्शितं भवति । तथा चाभ्यधायि भगवता धनदो धनार्थिनां धर्मः कामार्थिनां सर्वकामदो धर्म एवापवर्गस्य पारम्पर्येण साधक इति । नातः प्रधानतरं किञ्चिदस्तीत्युच्यते ।

धर्माख्यः पुरुषार्थोऽयं प्रधान इति गम्यते ।
पापग्रस्तं पशोस्तुल्यं धिग् धर्मरहितं नरम् ॥

तदिदमाकर्ण्य स जीवोऽभिदधीत भगवन्नेतौ तावदर्थकामौ साक्षादुपलभ्येते योऽयं पुनर्भगवद्भिर्धर्मो वर्णितः स नास्माभिः कश्चिद्दृष्टः। ततो निदर्श्यतामस्य यत्स्वरूपमिति। ततो धर्मसूरिराचक्षीत। भद्र मोहान्धाः खल्वेनं न पश्यन्ति विवेकिनां पुनः

प्रत्यक्ष एव धर्मः। तथा हि। सामान्येन तावद्धर्मस्य त्रीण्येव रूपाणि द्रष्टव्यानि भवन्ति। तद्यथा। कारणं स्वभावः कार्यं च। तत्र सदनुष्ठानं धर्मस्य कारणं तद् दृश्यत एव। स्वभावः पुनर्द्विविधः साश्रवोऽनाश्रवश्च। तत्र साश्रवो जीवे शुभपरमाणूपचयरूपः। अनाश्रवस्तु पूर्वोपचितकर्मपरमाणुविलयमात्रलक्षणः। स एष द्विविधोऽपि धर्मस्वभावो योगिभिर्दृश्यते अस्मादृशैरप्यनुमानेन दृश्यत एव। कार्यं पुनर्धर्मस्य यावन्तो जीवगताः सुन्दरविशेषास्तेऽपि प्रतिप्राणिप्रसिद्धतया परिस्फुटतरं दृश्यन्त एव। तदिदं कारणस्वभावकार्यरूपत्रयं पश्यता धर्मस्य, किं न दृष्टं भवता येनोच्यते न दृष्टो मया धर्म इति। यस्मादेतदेव त्रितयं धर्मध्वनिनाभिधीयते केवलमेष विशेषो यदुत, सदनुष्ठानं कारणे कार्योपचाराद्धर्म इत्युच्यते। यथा तन्दुलान् वर्षति पर्जन्य इति। स्वभावस्तु यः साश्रवो निगदितः स पुण्यानुबन्धिपुण्यरूपो विज्ञेयः। यः पुनरनाश्रवः स निर्जरात्मको मन्तव्यः। स एष द्विविधोऽपि स्वभावो निरुपचरितः साक्षाद्धर्म एवाभिधीयते।

यत्तश्ची जीववर्त्तिनः समस्ता अपि सुन्दरविशेषास्ते कार्ये कारणोपचाराद्धर्मशब्देन गीयन्ते यथा ममेदं शरीरं पुराणं कर्मेति। ततः पुनरेष जीवो ब्रूयात् भगवन्नत्र त्रये कतमत्पुनः पुरुषेणोपादेयं भवति। ततो धर्मगुरुरभिदधीत। भद्र सदनुष्ठानमेव तस्येतरद्वयसम्पादकत्वात्। स ब्रूयात्। किं पुनस्तत्सदनुष्ठानम्। ततः सद्धर्मसूरयोऽभिदधीरन्। सौम्य साधुधर्मो गृहिधर्मश्च। तस्य पुनर्द्विविधस्यापि मूलं सम्यग्दर्शनम्। ततोऽयं जीवो वदेत्।

भगवद्भुपदिष्टमासीदेतत्सम्यग्दर्शनं प्राग्भवता किन्तु तदा मया नावधारितं तदधुना कथयत किमस्य स्वरूपमिति। ततः सङ्क्षेपेण प्रथमावस्थोचितमस्य पुरतो धर्मगुरवः सम्यग्दर्शनस्वरूपं वर्णयेयुः। यथा भद्र यो रागद्वेषमोहादिरहितोऽनन्तज्ञानदर्शनवीर्यानन्दात्मकः समस्तजगदनुग्रहप्रवणः सकलनिष्कलरूपः परमात्मा स एव परमार्थतो देव इति बुध्या तस्योपरियद्भक्तिकरणं तथा तेनैव भाषिता ये जीवा जीवपुण्यपापाश्रवसंवरनिर्जरा बन्धमोक्षाख्या नवपदार्थास्ते अवितथा एवेति या प्रतिपत्तिस्तथा तदुपदिष्टे ज्ञान-दर्शनचारित्रात्मके मोक्षमार्गे ये प्रवर्त्तन्ते साधवस्त एव गुरवो वन्दनीया इति या बुद्धिस्तत्सम्यग्दर्शनं तत्पुनर्जीवे वर्त्तमानं प्रशम-संवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणैर्बाह्यलिङ्गैर्लक्ष्यते तथा तद-ङ्गीकृत्य जीवेन सत्त्वगुणाधिकक्लिश्यमाना विनयेषु मैत्रीप्रमोदका-रुण्यमाध्यस्थ्यानि समाचरणीयानि भवन्ति तथा स्थिरता भगवदा-यतनसेवा आगमकुशलता भक्तिः प्रवचनप्रभावना इत्येते पञ्चभावाः सम्यग्दर्शनं दीपयन्ति। तथा शङ्काकाङ्क्षाविचिकित्सापरपाषण्ड-प्रशंसासंस्तवश्चेते तु तदेवं दूषयन्ति तदेष सकलकल्याणावहो दर्शनमोहनीयकर्मक्षयोपशमादिनाविर्भूतः स्वात्मपरिणाम एव विशुद्धसम्यग्दर्शनमभिधीयते। एवञ्च कथय। भगवता धर्मसूरिणा सम्यक्प्रत्यायितमानसस्तदनुभावादेव विलीनक्लिष्टकर्ममलः सो ऽयं जीवः सम्यग्दर्शनं प्रतिपद्येत। ततश्चैतत्तत्त्वौषधोदकमिव तत्त्वप्रीति-करं धर्मगुरुभिर्बलाद्गालितमित्यवसेयं यतश्च तत्प्रभृति तत्प्रतिपत्तौ मिथ्यात्वं यदुदीर्णमासीत् तत्क्षीणं यत्पुनरनुदीर्णं तदुपशान्तावस्थां

गतं केवलं तदपि प्रदेशानुभवेनानुभूयते तदेव चाच महोन्माद-स्तस्मात्स नष्टप्रायो नैकान्ते नाद्यापि नष्ट इति बोद्धव्यं यतश्च सम्यग्दर्शनलाभे समस्तान्यपि शेषकर्माणि तनुतां गच्छन्ति तान्येव च गदभूतानि। अतोऽयं जीवस्तत्प्राप्तौ संजातान्यगदतानव इत्युच्यते। यतश्चराचरजन्तुसंघातदुःखदाहदलनत्वादत्यन्तशीतः सम्यग्दर्शनपरिणामोऽयमतस्तत्सम्पत्तावयं जीवो विगतदाहार्त्तिः स्वस्थमानसो लचत इति। यथा च तेन रोरेण स्वस्थीभूतचेतसा चिन्तितं यदुतायं पुरुषो ममात्यन्तवत्सलो महानुभावस्तथापि मया मोहोपहतेन पूर्ववञ्चकोऽयं हरिष्यत्यनेन प्रपञ्चेन मामकं भोजनमिति कल्पितस्ततो धिङ्मां दुष्टचिन्तकम्। तथा हि। यद्ययं हितोद्यतमतिर्न स्यात् ततः किमित्यञ्जनप्रयोगेण मम पटुदृष्टितां विहितवान् किमिति वा तोयपानेन स्वस्थतां संपादितवान् न चायं मत्तः कथञ्चिदुपकारमपेचते किं तर्हि महानुभावतैवैकास्य प्रवर्त्तिकेत्युक्तं तदेतज्जीवोऽपि संजातसम्यग्दर्शनः सद्धर्माचार्यगोचरं चिन्तयत्येव। तथा हि। यथावस्थितार्थदर्शितया तदायं जीवो विमुञ्चति रौद्रतां रहयति मदान्धतां परित्यजति कौटिल्यातिरेकं विजहाति गाढलोभिष्टतां शिथिलयति रागप्रकर्षं न विधत्ते द्वेषोत्कर्षः अपचिपति महामोहदोषम्। ततोऽस्य जीवस्य प्रसीदति मानसं विमलीभवत्यन्तरात्मा विवर्द्धते मतिपाटवं निवर्त्तते धनकनककलचादिभ्यः परमार्थबुद्धिः संजायते जीवादितत्त्वेष्वभिनिवेशः तनूभवन्ति निःशेषदोषाः ततोऽयं जीवो विजानीते परगुणविशेषं लचयति स्वकीयदोषजातमनुस्मरति प्राचीनामात्मावस्थामवबुध्यते तत्काल-

भाविनं गुरुविहितप्रयत्नमवगच्छति तन्माहात्म्यजनितामात्मयोग्यतां ततो यो जीवो मादृशः प्रागत्यन्तक्लिष्टपरिणामतया धर्मगुर्वादिविषयेऽप्यनेककुविकल्पकरणपरोऽभूत् स तदा लब्धविवेकश्चिन्तयति यदुताहो मे पापिष्ठता अहो मे महामोहान्धता अहो मे निर्भाग्यता अहो मे कार्पण्यातिरेकः अहो ममाविचारकत्वं येन मयात्यन्ततुच्छधनलवादिप्रतिबद्धान्तःकरणेन सता य एते भगवन्तः सर्वदा परहितकरणनिरतमतयो निर्दोषसन्तोषपोषितवपुषो मोक्षसुखलक्षणानि धनधनार्जनप्रवणान्तःकरणास्तपसुष्टिनिःसारसंसारविस्तारदर्शिनः स्वशरीरपञ्जरेऽपि ममत्वबुद्धिरहिता मदीयधर्मगुरुप्रभृतयः साधवः किं ते हरिष्यन्ति ममानेन धर्मकथादिप्रपञ्चेन शठतया मां विप्रतार्य नूनमेते धनकनकादिकमिति प्रागनेकशः परिकल्पिताः । ततो धिङ् मामधमाधमदुष्टविकल्पकमिति । यदि ह्येते भगवन्तो मां प्रति परमोपकारकरणपरायणा न स्युस्ततः किमिति सुगतिनगरगमनसम्बन्धबन्धुरमव्यभिचारिणं मार्गमादेशयन्तः सम्यग्ज्ञानदानव्याजेन महानरकवर्त्तनीप्रवृत्तचेतोवृत्तिं मां निवारयन्ति स्म किमिति वा विपर्यासपर्यासितचेतसो मे सम्यग्दर्शनसम्पादनद्वारेण निजशेमुष्या निःशेषदोषमोषविशेषं विशेषतो विदधति स्म । न चैते निस्पृहतातिशयेन समलोष्टहाटकाः परहिताचरणव्यसनितया प्रवर्त्तमानाः कदाचिदुपकार्यात्मकाशात् क्वचित्प्रत्युपकारमपेक्षन्ते । न चैतेषां परमोपकारकारिणां भगवतां मादृशैः स्वजीवितव्ययेनापि प्रत्युपकारः कर्त्तुं पार्यते आस्तां धनधान्यादिनेति । तावदेष जीवस्तदा संजातसम्यग्भावः पूर्वविहित-

स्वकीयदुश्चरितानुस्मरणेन पश्चात्तापमनुभवति सन्मार्गदायिनां च गुरूणामुपरि विपरीतशङ्कां विरहयति तदानेनैतदुक्तं भवति। इमे खल्वमी कुविकल्पाः प्राणिनो भवन्ति। तत्रयैके कुशास्त्रश्रवणवासनाजनिताः। यदुताण्डसमुद्भूतमेतत्त्रिभुवनं ब्रह्मादिकृतं प्रकृतिविकारात्मकं चणविनश्वरं विज्ञानमात्रं शून्यरूपं वा इत्यादयस्ते ह्यभिसंस्कारिका इत्युच्यन्ते। तथान्ये सुखमभिलषन्तो दुःखं द्विषन्तो द्रविणादिषु परमार्थबुद्ध्यवसायिनोऽत एव तत्संरक्षणप्रवणचेतसोऽदृष्टतत्त्वमार्गस्यास्य जीवस्य प्रवर्तन्ते यैरेष जीवोऽशङ्कनीयानि शङ्कते अचिन्तनीयानि चिन्तयति अभाषितव्यानि भाषते अनाचरणीयानि समाचरति। ते तु कुविकल्पाः सहजा इत्यभिधीयन्ते तत्राभिसंस्कारिकाः प्रथमसुगुरुसंपर्कप्रभावादेव कदाचिन्निवर्त्तेरन्नेते पुनः सहजा यावदेष जीवो मिथ्यात्वोपप्लुतबुद्धिस्तावन्न कथञ्चिन्निवर्तन्ते। यदि परमधिगमजसम्यग्दर्शनमेव प्रादुर्भूतमेतान्निवर्त्तयतीति। यत्पुनरभिहितं यदुत तस्य द्रमकस्य तस्मिन्नञ्जनसलिलदायके पुरुषे सञ्जातविस्रम्भस्यापि महोपकारितां चिन्तयतस्तथापि तत्रात्मीये कदन्नके यात्यन्तमूर्च्छा सा गाढं भावितत्वान्न कथञ्चिन्निवर्तत इति। तदेतज्जीवेऽपि योजनीयम्। तथाहि। यद्यपि क्षयोपशमगतं ज्ञानावरणं दर्शनमोहनीयं च समुत्पन्नं सम्यग्ज्ञानं सम्यग्दर्शनं च। अतएव निवृत्ता भवप्रपञ्चगोचरा तत्त्वबुद्धिः संजातो जीवादितत्त्वाभिनिवेशः गृहीताः परमोपकारकारितया सम्यग्ज्ञानदर्शनदायिनो भगवन्तः सद्धर्मगुरवः। तथाप्यस्य जीवस्य यावत्ते समुदीर्णं कषायद्वादशकं यावच्च प्रबलमद्यापि

नो कषायनवकं तावदनादिभवाभ्यासवासनापाटवपरायत्ततया प्रवर्त्तमानामेतेषु धनविषयकलत्रादिषु कदन्नकल्पेषु मूर्च्छामेष जीवो न निवारयितुं पारयति यतोऽस्य जीवस्य कुशास्त्रश्रवणसंस्कारजा मह्माण्डसमुद्भूतं त्रिभुवनमेतदित्यादयो मोहवितर्काः प्रवर्त्तन्ते। ये च सहजा अपि धनादिषु परमार्थदर्शितया तत्संरक्षणगोचरा अशङ्कनीयेभ्यपि गुर्वादिषु शङ्काकारिणो मिथ्यादर्शनोदयप्रभवाः कदभिप्रायाः प्रादुर्भवन्ति ते मरुमरीचिकावल्गुच्चुम्बिन इव जल-कल्लोलमालाप्रतिभासिनो मिथ्याज्ञानविशेषाः। तत्प्रत्यनीकार्थोप-स्थापकेन प्रमाणान्तरेण बाध्यमानाः सम्यग्दर्शनोत्पत्तिकाले निव-र्त्तन्ते। यः पुनरेष धनविषयादिषु मूर्च्छालक्षणो मोहः सोऽपूर्वरूपो यतोऽयं दिङ्मोह इव तत्त्वधियापि सार्द्धमव्याहत एवास्ते। अनेन हि मोहितोऽयं जीवो जानन्नपि सकलं कुशास्त्रसम्भ्रमसत्त्ववतरलं न जानीते। पश्यन्नपि धनहरणस्वजनमरणादिकं न पश्यतीव। पटु-प्रज्ञोऽपि जडबुद्धिरिव चेष्टते। समस्तशास्त्रार्थविशारदोऽपि महा-मूर्खचूडामणिरिव वर्त्तते। ततश्चास्य जीवस्य प्रतिभाति मुक्तस्व-चारिता रोचते तस्मै यथेष्टचेष्टा बिभेत्ययं व्रतनियमनियन्त्रणायाः किमङ्गनोक्तेन न शक्नोत्ययं जीवस्तदा काकमांसभक्षणादपि निवृत्तिं विधातुमिति। एवं च स्थिते यत्तदुक्तं यदुत रोरं मूर्च्छातिरेकेण पुनः पुनः स्वभोजनभाजने दृष्टिं पातयन्तमुपलभ्य स धर्मबोधकरा-भिधानो रसवतीपतिस्तस्याभिप्रायमवगम्य मनाक् सपरुषमित्य-भिहितवान् अरे द्रमक दुर्बुद्धे केयं भवतो विपरीतचारिता किमितीदं परमान्नं कन्यकया प्रयत्नेनापि दीयमानं त्वं नावबुध्यसे

भवन्त्यन्येऽपि पापिनो रोराः केवलं भवता मद्भाग्योऽन्यो निर्भाग्यो नास्तीति मे वितर्कः। यस्त्वमत्र तुच्छे कदन्नके प्रतिबद्धचित्तः सन्नमृतास्वादमेतन्मया दाप्यमानमपि परमान्नं न गृह्णाति। अन्यच्च। यतस्त्वमत्र भवने प्रविष्टस्तथेदं दृष्ट्वा मनागाल्हादितः परमेश्वरेण चावलोकितः तेन कारणेन भवन्तं प्रत्यादरोऽस्माकं ये पुनरस्मात्सद्मनो बहिर्वर्त्तन्ते जन्तवो ये चेदं विलोक्यमानं मोदन्ते ये च राजराजेन न निरीक्षितास्तेषां वयं न वार्तामपि पृच्छामो वयं हि सेवकधर्ममनुवर्त्तमानाय एव कश्चिन्महानृपतेर्वल्लभस्तस्यैव वात्सल्यमाचरामः। अयं चास्माकमवष्टंभोऽभक्तिस्लामूढलक्ष्योऽयं राजा न कदाचनापात्रे मतिं कुरुते यावता सोऽप्यस्मदवष्टंभोऽधुना भवता विपरीतचारिणा वितथ इव सम्पादितः। तदिदमवगम्य त्यजेदं वैपरीत्यं क्षिपेदं कदन्नं गृहाणेदं परमान्नं यन्महात्म्येनैते पश्य सर्वेऽत्र सद्मनि वर्त्तमाना जन्तवोऽमृततृप्ता इव मोदन्त इति एतदपि समस्तमत्र जीवव्यतिकरे सुगुरुराचरत्येव। तथाहि। यदायं जन्तुराविर्भूतज्ञानदर्शनोऽपि कर्मपरतन्त्रतया न स्तोकमात्रमपि विरतिं प्रतिपद्यते तदामुं तथाभूतं विषयेषु गाढं मूर्छितचित्ततयाभिरममाणमुपलभ्य सद्धर्मगुरूणां भवत्येवंविधोऽभिसन्धिः। यदुत केयमस्यात्मवैरिता किमित्ययं रत्नद्वीपप्राप्तनिर्भाग्यपुरुष इवानिर्घेयरत्नराशिसदृशानि व्रतनियमाचरणान्यवधीर्य जरत्काचशकलकल्पेषु विषयेषु प्रतिबन्धं विधत्ते। ततस्ते गुरवः प्रादुर्भूतप्रणयकोपा इव तं प्रमादपरं जीवमित्यमाचक्षते। अयि ज्ञानदर्शनविदूषक केयं भवतोऽनात्मज्ञता किमिति प्रतिक्षणमस्माना-

ऽयमनेकसत्त्वेषु सुनिश्चितोऽप्यस्माभिरुपायो विपरीतमाचरता व्यभिचारितो वर्तते। ततो भो दुर्मते मैवं विधेहि कुरुष्वाधुनापि यदहं वच्मि परित्यजेदं दौःशील्यं विहाय दुर्गतिपुरीवर्तनीकल्पामविरतिमुररीकुरु निर्द्वन्द्वानन्दसन्दोहदायिकां सर्वज्ञोपज्ञां ज्ञानदर्शनयोः फलभूतां विरतिमितरथा परमार्थतो ज्ञानदर्शने अपि निष्फले संपत्स्येते। इयं हि भागवती गृहीता सम्यक्पाल्यमाना सकलकल्याणपरम्परां संपादयति। यदि वा तिष्ठन्तु तावत् पारलौकिककल्याणानि किं न पश्यति भवानिदानीमेवैते भगवदुक्तविरतिरतचित्ताः सुसाधवो यदनल्पामृतरससदृशा इव स्वस्थाः सदा मानसेनावेदयितारो विषयाभिलाषजनितानां कामविकल्पनौत्सुक्यप्रियविरहवेदनानामनभिज्ञातारो लोभमूलानां निष्कषायतया धनार्जनरक्षणनाशदुःखानां वन्दनीयास्त्रिभुवनस्य संसारसागरादुत्तीर्णमेवात्मानं मन्यमानाः सदा मोदन्ते। तदेवं भूतगुणेयं विरतिः किमात्मवैरितया नादीयते भवतेति। तदेतद्धर्मगुरुवचनमाकर्ण्य यथासौ द्रमकस्तस्मिन्पुरुषे संजाताविश्वासोऽपि तथाविर्भूतनिर्णयोऽपि यथात्यन्तहितकारी ममायं पुरुष इति। तथापि तस्य कदन्नस्य त्याजनवचनेन विक्लवीभूतो दैन्यमालम्ब्येत्यमभिहितवान्। यदुत यदेतद्भदितं नाथैस्तत्समस्तमवितथं प्रतिभाति मे चेतसि। केवलमेकं वचनं विज्ञापयामि तदाकर्णयत यूयं यदेतन्मां भोजनं त्याजयथ भवन्तस्तत्प्राणेभ्योऽप्यभीष्टतमं नाहमेतद्विरहे क्षणमपि जीवामि महता च क्लेशेन मयेदमुपार्जितं किं च कालान्तरेऽपि निर्वाहकं ममैतद्भवदीयस्य पुनर्भोजनस्य

न जानेऽहं स्वरूपं किं चानेन ममैकदिनभाविनेति। तत्किमत्र बहुना जल्पितेन एष मे निश्चयो नैवेदं भोजनं मोक्तव्यं यदि विद्यमानेऽप्यस्मिन्नात्मीयं भवद्भिर्भोजनं दातुं युक्तं ततो दीयतामितरथा विनैव तेन मरिष्यतीति। तथायमपि जीवः कर्मपरतन्त्रतया विद्यमानचरणपरिणामस्सद्धर्मगुरूणामग्रतः समस्तमपीदृशं जल्पत्येव यद्यपि तदास्य गुरुषु विश्रंभः सञ्जातो ज्ञानदर्शनलाभेन संप्रत्ययः। तथापि न निवर्तते धनादिभ्यो गाढमूर्च्छा धर्मगुरवश्चारित्रं ग्राहयन्तस्तत्त्यागं कारयन्ति। ततोऽस्य जीवस्य संजायते दैन्यं ततोऽयं ब्रूते सत्यमेतत्सर्वं यदाज्ञापयन्ति भगवन्तः। किन्तु श्रूयतां भवद्भिरेका मदीया विज्ञप्तिका दुष्टोऽयमात्मा मदीयो गाढं धनविषयादिषु न शक्यते तेभ्यः कथञ्चिन्निवर्त्तयितुं म्रियेऽहं त्यागे नूनमेतेषाम्। महता च क्लेशेन मयैते समुपार्जितास्तत्कथमहमेतानकाण्ड एव मुञ्चामि। किं च। मादृशाः प्रमादिनो न युष्माभिरुपदिष्टाया विरतेः स्वरूपमवबुध्यन्ते। किन्तर्हि मादृशामिदमेव कालान्तरेऽपि धनविषयादिकं चित्ताभिरतिकारणं युष्मदीयं पुनरनुष्ठानं राधावेधकल्पं किं तेन मादृशां भगवतामप्यस्थान एवायं निर्बन्धः। तथाहि।

महतापि प्रयत्नेन तत्त्वे शिष्टेऽपि पण्डितैः।

प्रकृतिं यान्ति भूतानि प्रयासस्तेषु निष्फलः॥ १॥

अथैवमपि स्थिते भगवतामाग्रहः ततो दीयतामेतेषु धनविषयादिषु विद्यमानेषु यदि देयमात्मीयं चारित्रमितरथा पर्याप्तं ममानेनेति। ततश्चैवं वदति सत्यस्मिन् जीवे यथा तेन रसवती-

पतिना तं द्रमकं परमान्नग्रहणपराङ्मुखमवलोक्य चिन्तितं यदुत पश्यताहो मोहसामर्थ्यं यदेष रोरः सर्वव्याधिकरेऽत्र कदन्नके सक्तबुद्धिर्मामकं परमान्नमवधीरयति निश्चितं च प्रागेव मया यथा नास्य वराकस्यायं दोषः किं तर्हि चित्तवैधुर्यकारिणां रोगाणाम्। अतः पुनरेनं शिक्षयामि विशेषेण वराकं यद्ययं प्रत्यागतचित्तः परमान्नमिदं गृह्णीयात् ततोऽस्य महानुपकारः संपद्येतेति। तथा सद्धर्मगुरवोऽपि चिन्तयन्ति यदुतापूर्वरूपोऽयमस्य जीवस्याहो महामोहः यदायमनन्तदुःखहेतौ रागादिभावरोगवृद्धिकरेऽस्मिन्विषयधनादिके विनिविष्टबुद्धिर्जानन्नपि भगवद्वचनमजानान इव श्रद्दधानोऽपि जीवादितत्त्वमश्रद्दधान इव न मयोपदिश्यमानां निःशेषक्लेशविच्छेदकारिकां विरतिमुररीकुरुते। यदि वा नास्यायं तपस्विनो दोषः किन्तर्हि कर्मणामिति। तान्येवैनं जीवं विसंस्थुलयन्ति। अतो नास्माभिरेतत्प्रतिबोधनप्रवृत्तैरस्याविधेयतामुपलभ्य निर्वेदः कार्यः।

तथाहि।

> अनेकशः कृता कुर्याद्देशना जीवयोग्यताम्।
> यथा स्थानमाधत्ते शिलायामपि मृद्घटः॥१॥
> यः संसारगतं जन्तुं बोधयेज्जिनदेशिते।
> धर्मे हितकरस्तस्मान्नान्यो जगति विद्यते॥२॥
> विरतिः परमो धर्मः सा चेन्मत्तोऽस्य जायते।
> ततः प्रयत्नसाफल्यं किं न लब्धं मया भवेत्॥३॥

अन्यच्च।

महान्तमर्थमाश्रित्य यो विधत्ते परिश्रमम् ।
तत्सिद्धौ तस्य तोषः स्यादसिद्धौ वीरचेष्टितम् ॥४॥
तस्मात्सर्वप्रयत्नेन पुनः प्रत्याय्य पेशलैः ।
वचनैर्बोधयाम्येनं गुरुश्चित्तेऽवधारयेत् ॥५॥

ततो यथा तेन सूपकारेण तस्मै भिक्षाचराय निवेदिताः पुनर्विशेषतः कदन्नदोषा उपपादिता तस्य युक्तितस्त्याज्यरूपता दूषितं कालान्तरे तदभिप्रेतं तस्य निर्वाहकत्वं प्रशंसितमात्मीयं परमान्नं प्रकटितं तस्य सर्वदा दानं समुत्पादितो महाप्रभावाञ्जनसलिलदायकत्वनिदर्शनेनात्मविश्रंभातिरेको ऽभिहितश्चासौ द्रमकः किं बहुनानेन मुञ्चेदं स्वभोजनं गृहाणेदममृतकल्पं मदीयमन्नमिति । तथा सद्धर्मसूरयोऽपि सर्वं कुर्वन्ति ।
तथाहि ।

तेऽपि जीवाय निवेदयन्ति धनविषयकलत्रादेः रागादिहेतुतां दीपयन्ति कर्मसञ्चयकारणतां प्रकाशयन्ति दुरन्तानन्तसंसारनिमित्ततां वदन्ति च यथा भद्र यत एव क्लेशेनापार्ज्यन्ते रक्ष्यन्ते धनविषयादयः क्लेशेन चानुभूयन्ते पुनश्चागामिनः क्लेशस्य कारणभावं भजन्ते । अत एवैते परित्यागमर्हन्ति । अन्यच्च । भद्र तवाप्येते मोहविपर्यासितचेतसि सुन्दरबुद्धिं जनयन्ति यदि पुनस्त्वं चारित्ररसमास्वादयसि ततोऽस्माभिरनुक्त एव नैतेभ्यो मनागपि स्पृहसे को हि सकर्णकोऽमृतं विहाय विषमभिलषति यत्पुनरस्मदीयोपदेशसंपाद्यस्य चारित्रपरिणामस्य कादाचित्कत्वेनानिर्वाहकत्वं धनविषयकलत्रादेस्तु प्रकृतिभावगमनेन सदा भावितया च निर्वाह-

कलं मन्यसे तदपि मा मंस्थाः यतो धनादयोऽपि धर्मरहितानां न सकलकालभाविनो भवन्ति भवन्तोऽपि न प्रेक्षापूर्वकारिणा निर्वाहकतयाङ्गीकर्तव्या न हि समस्तरोगप्रकोपनहेतुरपथ्यान्नं सकलकालभावुकमपि निर्वाहकमित्युच्यते सर्वानर्थसार्थप्रवर्त्तकाश्चैते धनादयः तस्मान्नैतेषु सुन्दरा निर्वाहकत्वबुद्धिः न चेयं प्रकृति-र्जीवस्य यतोऽनन्तज्ञानदर्शनवीर्यानन्दरूपोऽयं जीवः। अयं तु धन-विषयादिषु प्रतिबन्धोऽस्य जीवस्य कर्ममलजनितो विभ्रम इति तत्त्ववेदिनो मन्यन्ते। अत एव चारित्रपरिणामोऽपि तावत्कादा-चित्को यावज्जीववीर्यं नोल्लसति तदुल्लासे पुनः स एव निर्वाहको भवितुमर्हतीत्यतो विदुषा तत्रैव यत्नो विधेयः। तद्बलेनैव महा-पुरुषा अपहस्तयन्ति परीषहोपसर्गान् अवधीरयन्ति धनादिकं निर्दलयन्ति रागादिगणं उन्मूलयन्ति कर्मजालं तरन्ति संसारसागरं तिष्ठन्ति सततानन्देऽनन्तकालं शिवधाम्नीति। किं च। मत्संपादि-तेन ज्ञानेन किं न जनितस्तवाज्ञानतमोविलयः किं वा दर्शनेन नापास्तो विपर्यासवेतालो येन मद्वचनेऽप्यविश्रब्धबुद्धिरिव विकल्पं कुरुषे तस्माद्भद्र विमुच्येदं भववर्द्धनं धनादिकमङ्गीकुरु मम दय-योपनीतमेतच्चारित्रं येन संपद्यते ते निःशेषक्लेशराशिविच्छेदः प्राप्नोषि च शाश्वतं स्थानमिति। ततो यथा महाप्रयत्नेनापि ब्रुवाणे तस्मिन् रसवतीपतावितरेणाभिहितं यदुत न मयेदं स्वभोजनं मोक्तव्यं यच्च भवतेव दीयते ततो दीयतामात्मभोजन-मिति। तथायमपि जीवः सद्धर्मगुरुभिरेवं भूयो भूयोऽभिधीय-मानोऽपि गलिरिव बलीवर्दः पादप्रसारिकामवलम्ब्येत्यमाचष्टीत।

भगवन्नाहं धनविषयादिकं कथञ्चन मोक्तुं पारयामि यच्च विद्यमानेऽपि भवति किञ्चिद्वारिचं तन्मे दीयतामिति। ततो यथा विज्ञाय तस्य रोरस्याग्रहविशेषं स सूरिश्चिन्तयति स्म नास्येदानीमन्यः शिक्षणोपायोऽस्ति ततोऽस्मिन् सत्येव दीयतां पश्चाज्ज्ञातमदीयान्नगुणः स्वयमेवैतत्कदन्नमेष विहास्यति। एवं च विचिन्त्य दापितं तत्तेन भुक्तमितरेण तदुपयोगेन शान्ता बुभुक्षा तनूभूता रोगाः प्रवर्द्धितमन्नजलसलिलजनितादधिकतरं सुखं जातो मनःप्रसादः प्रादुर्भूता तद्दायके तत्र पुरुषे भक्तिः अभिहितश्चासौ तेन यथा भवानेव मे नाथो येनाहं भाग्यविकलोऽप्येवमनुकम्पित इति। तथा धर्मगुरवोऽप्येवं बह्वाग्रहलेनामुञ्चति धनविषयादिकमत्र जीवे परिकलयन्ति न शक्यते तावदयमिदानीं सर्वविरतिं ग्राहयितुं तदेवं स्थिते देशविरतिस्तावदस्मै दीयतां तत्पालनेनोपलब्धगुणविशेषः स्वयमेव सर्वसङ्गपरित्यागं करिष्यतीत्याकलय्य तथैव कुर्वन्ति तदनेनैतदुक्तं भवति।

अयमत्र क्रमः प्ररूप्य प्रथमं प्रयत्नतः सर्वविरतिं ततः सर्वथा तत्करणपराङ्मुखमुपलभ्य जीवं देशविरतिः प्ररूपणीया देया वा प्रथमं पुनर्देशविरतिप्ररूपणे क्रियमाणे तस्यामेव प्रतिबन्धं विदध्यादयं जीवः साधोश्च सूक्ष्मप्राणातिपातादावनुमतिः स्यादिति ततस्तस्या देशविरतेः पालनं परमार्थलेशभक्षणतुल्यं विज्ञेयं तदुपयोगेनैवास्य जीवस्य प्रशाम्यति मनाग् विषयाकाङ्क्षालक्षणा बुभुक्षा तनूभवन्ति रागादयो भावरोगाः प्रवर्द्धते ज्ञानदर्शनसंपादितात् समर्गलतरं स्वाभाविकस्वास्थ्यरूपं प्रशमसुखं संजायते

सद्भावनया मनःप्रसादः प्रादुर्भवति तद्दायकेषु गुरुषु परमोपकारिणो ममैत इति भावयतो भक्तिः अभिधत्ते च तानेष जीवस्तदानीम् । यदुत यूयमेव मे नाथा यैरहमेवं दुर्दारुकल्पतया गाढसकर्मणोऽपि स्वसामर्थ्येन कर्मण्यतां प्राप्य गुणभाजनतां नीत इति ।

ततस्तदनन्तरं यथा तेन सूदेन तं वनीपकमुपवेश्य मधुरवचनैस्तस्य मनःप्रल्हादयता वर्णिता महाराजगुणा दर्शितश्चात्मनोऽपि तद्भृत्यभावः याचितः सोऽपि विशेषतस्तदनुचरत्वं समुत्पादितं तस्य महानृपतेरेव विशेषगुणेषु कुतूहलं कथितस्तत्परिज्ञानहेतुर्व्याधितनुभावः प्रकाशितं तस्यापि कारणं भेषजत्रयं समादिष्टः प्रतिक्षणं तस्य परिभोगः दीपितं तत्परिभोगबलेन महानरेन्द्राराधनं प्रतिपादितं महानरेन्द्राराधकानां तत्समानमेव महाराज्यमिति । तथा धर्मगुरवोऽपि ज्ञानदर्शनसंपन्नं प्रतिपन्नदेशविरतिमप्येनं जीवमुपलभ्य विशिष्टतरस्थैर्यसम्पादनार्थं समस्तमेतदाचरन्त्येव ।

तथाहि। ते तं प्रत्येवं ब्रूयुः यथा भद्र यदुक्तं भवता यदुत यूयमेव मे नाथा इति युक्तमेतद्भवादृशां किन्तु साधारणं नैवं वक्तव्यं यतो भवतोऽस्माकं च परमात्मा सर्वज्ञ एव भगवान् परमो नाथः स एव हि चराचरस्यास्य त्रिभुवनस्य पालकतया नाथो भवितुमर्हति विशेषतः पुनर्ये तत्प्रणीतेऽच ज्ञानदर्शनचारित्रप्रधाने दर्शने वर्त्तन्ते जन्तवस्तेषामसौ नाथः । अस्यैव किङ्करभावं प्रतिपद्य महात्मानः केवलराज्यप्रसादेन भुवनमप्यात्मकिङ्करं कुर्वन्ति । ये पुनः पापिष्ठाः प्राणिनस्तेऽस्य भगवतो नामापि न जानते । भाविभद्रा एव सत्त्वाः

स्वकर्मविवरेणास्य दर्शनमासादयन्ति । यतश्च त्वमेतावतीं कोटि-
मध्यारूढोऽतस्त्वया प्रतिपन्न एव भावतो भगवान् । केवलं तार-
तम्यभेदेन सङ्ख्यातीतानि तस्य प्रतिपत्तिस्थानानि तेन विशेषप्रति-
पत्तिनिमित्तमेषोऽस्माकं यत्नः यतः सामान्येन जानतेऽप्येनं भगवन्तं
जन्तवः । सुगुरुसम्प्रदायमन्तरेण न विशेषतो जानते तदेवं ते
गुरवस्तस्य जीवस्य पुरतो भगवद्गुणान् वर्णयन्ति तथात्मानमपि
तत्किङ्करं दर्शयन्ति तं च जीवं विशेषतो भगवन्तं नाथतया
ग्राहयन्ति भगवद्विशेषगुणेषु तस्य कौतुकमुत्पादयन्ति तज्ज्ञानो-
पायभूतं रागादिभवरोगतानवं कथयन्ति तस्यापि कारणं ज्ञान-
दर्शनचारित्ररूपचयं दीपयन्ति तस्य च प्रतिक्षणमासेवनमुपदिशन्ति
तदासेवनेन भगवदाराधनं निवेदयन्ति भगवदाराधनेन परमपद-
प्राप्तिं महाराज्यावाप्तिकल्पां प्रतिपादयन्ति । एवमपि कथयति
हितकारिणि गृहीतगुणस्थिरताविधायिनि भगवति धर्मसूरौ
यथाऽसौ वनीपकः सूपकारवचनमवगम्यात्मीयाकूतवशेनेदमभिहि-
तवान् । यथा नाथाः किमनेनोक्तेन न शक्नोम्यहं कथञ्चनेदं कदन्नं
मोक्तुमिति । तथायमपि जीवश्चारित्रमोहनीयेन कर्मणा विह्वली
भूतबुद्धिरेवं चिन्तयेत् । अये यदेवं महता प्रयत्नेन पुनः पुनरेते
भगवन्तो मम धर्मदेशनां कुर्वन्ति तन्नूनं मां धनविषयकलत्रादि-
कमेतद्देते त्याजयन्ति न चाहं त्यक्तुं शक्नोमि तत्कथयाम्येषां सद्भावं
येन निष्कारणं भूयो भूयो भगवन्तःस्वगलतालुशोषमेते विदधते
ततस्तथैव स जीवः स्वाभिप्रायं गुरुभ्यः कथयेदिति । ततो यथा
तेन रसवतीपतिना चिन्तितं न मयायं स्वभोजनत्यागं कारितः

किन्तर्हीदं भेषजत्रयमासेवस्वेत्युक्तस्तत्किमेवमेष भाषते। अये स्वाभिप्रायविडम्बितोऽयं जानीते मदीयान्नत्याजननिमित्तमेतत् समस्तं वागाडम्बरमिति। ततो विहस्य तेनोक्तं भद्र निराकुलो भव नाधुना भवन्तं किञ्चित्त्याजयामि तवैव पथ्यमेतत्त्यजनमितिकृत्वा वयं ब्रूमो यदि पुनर्भवते रोचते ततोऽचार्थे अतः प्रभृति तूष्णीमासिष्यामहे यत्पुनरेतदनन्तरमेव तव पुरतोऽस्माभिर्महाराजगुणवर्णनादिकं विहितं कर्त्तव्यतया च तव किञ्चित्समादिष्टं तत्त्वया किं किञ्चिदवधारितं वा न वेति। तथा धर्मगुरवोऽपि सर्वमिदं चिन्तयन्ति वदन्ति च तच्च स्पष्टतरमिति स्वबुध्यैव योजनीयं ततो यथाऽसौ वनीपकोऽवादीत् यथा नाथ न मया किंचिदत्र भवत्कथितमुपलक्षितं तथापि तावकैः कोमलालापैरुल्लसितो मनाग् मनसि प्रमोदः निवेदितश्च तेन वनीपकेन नाधुना किञ्चित्त्याजयामीदं भवन्तं भोजनमिति सूदवचनश्रवणान्नष्टभयाकूतेन सता स्वचेतसो वैधुर्यकारणभूतस्तस्य सूदस्य समचमादितः प्रभृति समस्तोऽप्यात्मवृत्तान्तः अभिहितश्चासौ सूपकारो यदुतैवं स्थिते यन्मया विधेयं तदाज्ञापयन्तु नाथा येनाधुनावधारयामीति। तथाचापि विदिततच्चित्ता यदा धर्मगुरवो वदन्ति। यदुत न वयं भवन्तमप्रकुर्वन्तं सर्वसङ्गत्यागं कारयामः केवलं यदिदं भवतः स्थिरीकरणार्थमनेकशो भगवद्गुणवर्णनादिकं वयं कुर्मः। यच्च सम्यग्दर्शनज्ञानादेप्रचारित्राणामङ्गीकृतानामेव भवता सातत्यमनुपालनादिकमुपदिशामः। तदत्र भवान् किञ्चिदवधारयति वा न वेति। तदा वदत्येवं जीवो भगवधाहं मन्यक्किञ्चिदवधारयामि। तथापि यौष्माकीण-

पेशलवचनैर्मोदितचित्तो यदा यदा कथयन्ति भगवन्तस्तदा तदा शून्यहृदयोऽपि विस्फारितेक्षणः किल बुध्यमान इवेत्याकर्णयंस्तिष्ठामि कुतः पुनर्मादृशां विशिष्टतत्त्वाभिनिवेशो यतोऽहं महतापि प्रयत्नेन तत्त्वमार्गं व्याचक्षाणेषु भगवत्सु सुप्त इव मत्त इवोन्मत्त इव सन्मूर्च्छनज इव शोकापन्न इव मूर्च्छित इव सर्वथा शून्यहृदयो न किञ्चिन्निश्चयामि। यच्च मे चेतसो वैसंस्थुल्यकारणं तदाकर्णयन्तु भगवन्तः। ततः संजातपश्चात्तापोऽयं जीवो गुरुसमक्षं गर्हते स्वदुश्चरितानि जुगुप्सते स्वदुष्टभाषितानि प्रकटयति पूर्वकाल-भाविनः समस्तानपि कुविकल्पान् निवेदयत्यादितः प्रभृति निःशेषमात्मवृत्तान्तमिति। वदति च जानाम्यहं भगवन्तो मम हितकरणलालसाः सन्तो बहुशो निन्दन्ति विषयादिकं वर्णयन्ति सङ्गत्यागं प्रशंसन्ति तच्चस्थानां प्रशामसुखातिरेकं श्लाघन्ते तत्कार्यभूतं परमपदं तथापि कर्मपरतन्त्रतयाहं भक्षितबहुनाक्षिपदधिष्ठन्ताकसंघात इव निद्रां पीतामन्तपूततौसविष इव विह्वलतां धनविषयादिध्वनादिभवाभ्यासवशेन भवन्तीं मूर्च्छां न कथञ्चिन्निवारयितुं पारयामि। तथा च विह्वलीभूतचेतसो मे भगवतां सम्बन्धिनी धर्मदेशना महानिद्रावष्टब्धहृदयस्येव पुरुषस्य प्रतिबोधकनरोच्चारिता शब्दपरंपरा ममाकर्णयतोऽपि गाढमुद्वेगकारिणीव प्रतिभासते। अथ च। तस्या माधुर्यं गाम्भीर्यमुदारतां परिणामसुन्दरतां च पर्यालोचयतः पुनरन्तरान्तरा चित्ताह्लादोऽपि संपद्यते। एतदपि पूर्वोक्तं यद् भगवद्भिरभ्यधायि यदुत नागकुवन्तं भवन्त वयं सङ्गत्यागं कारयाम इति। ततो मया नष्टभयवैधुर्येण भगवतां पुरतः कथयितुं

शकितमितरथा यदा यदा भगवन्तो देशनायां प्रवर्त्तन्ते स्म तदा तदा मम चेतसि विकल्पः प्रादुरभूत्। अये स्वयं निस्पृहास्तावदेते केवलं मां धनविषयादिकं त्याजयन्ति न चाहं हातुं शक्नोमि तदेष व्यर्थकः प्रयासोऽमीषामित्येवं चिन्तयन्नपि भयातिरेकान्न स्वाकूतमपि प्रकटयितुं पारितवानिति। तदेवं स्थिते यन्मया विधेयमेवंविधशक्तिना तत्र भगवन्तः प्रमाणमिति। ततो यथासौ पौरोगवस्तस्मै वनीपकाय पुनः प्रयत्नतो निवेद्य प्राचीनमशेषमर्थं ततः स्वकीयभेषजत्रयस्य योग्यायोग्यविभागं पूर्वं महानरेन्द्रसंप्रदायितमाचचक्षे। तं चोवाच यथा भद्र कृच्छ्रसाध्यस्त्वमतो महायत्नमन्तरेण न रोगोपशमस्ते दृश्यते तस्मादत्रैव राजमन्दिरे प्रयतो भूत्वा ध्यायन्ननवरतमेनं समस्तगदोद्दलनचमवीर्यातिशयं महाराजेन्द्रं भेषजत्रयोपभोगं चाहर्निशं कुर्वाणस्तिष्ठ। इयं च तद्दया तव परिचारिका ततः प्रतिपन्नं समस्तं तेन स्थितः कियन्तमपि कालं विधायैकदेशे तद्भिक्षाभाजनमनारतं तदेव पालयन्निति तदिदमत्रेवं योजनीयम्। यदायं जीवः प्रागुक्तन्यायेन निवेद्य स्वाभिप्रायं गुरुभ्यः पुनरुपदेशं याचते तदा ते तदनुकम्पया पूर्वोक्तं पुनरपि समस्तं प्रतिपाद्य पश्चात्तस्य व्युत्पादनार्थं येनायं कालान्तरेणापि न व्यभिचरतीति धर्मसामग्र्याः सुदुर्लभतां दर्शयन्तो रागादीनां च भावरोगाणामतिप्रयत्नतां ख्यापयन्तः स्वान्तस्थपरिजिहीर्षया चात्मनः सांशयमित्यमाचचते यथा भद्र यादृशी सामग्री भवतः संपन्ना माधन्यानामीदृशी कथञ्चन संपद्यते न हि वयमपात्रे प्रयासं कुर्मो यतो भागवतीयमाज्ञा योग्येभ्य एव

जीवेभ्यो ज्ञानदर्शनचारित्राणि देयानि नायोग्येभ्यः अयोग्यदत्तानि हि तानि न स्वार्थसंसाधकानि संजायन्ते प्रत्युत वैपरीत्यापत्त्यानर्थसन्ततिं वर्द्धयन्ति ।

तथा चोक्तम् ।

धर्मानुष्ठानवैतथ्यात्प्रत्यपायो महान् भवेत् ।
रौद्रदुःखौघजनको दुःप्रयुक्तादिवौषधात् ॥१॥

ज्ञातं चास्माभिर्भगवदादिष्टं सुगुरुपारम्पर्यात् ज्ञातं भगवत्प्रसादादेव तदुचितानुचितानां जीवानां लक्षणं एतान्येव हि ज्ञानदर्शनचारित्राणि भगवता तेषां जीवानां सङ्क्लेशपरिच्छेदकारकाणि प्रतिपादितानि तत्र येषामाद्यावस्थायामपि कथ्यमानानि तानि प्रीतिं जनयन्ति तत्त्वेविनस्थान्ये प्रतिभासन्ते ये च सुखेनैव तानि प्रतिपद्यन्ते येषां सेव्यमानानि च द्रागेव विशेषं दर्शयन्ति ते लघुकर्माणः प्रत्यासन्नमोक्षाः सुदारुवद्रूपनिर्माणस्य तेषां योग्यास्तथा भावरोगोच्छेदं प्रति सुसाध्यास्ते विज्ञेयाः । येषां पुनराद्यावसरे प्रतिपद्यमानानि तानि न प्रतिभान्ति तदनुष्ठानपराङ्मुखांश्चान्यान् येऽवधीरयन्ति बहुतरविहितमहाप्रयत्नेन च ये प्रतिबुध्यन्ते । तथा सेव्यमानानि तानि येषां कालक्षेपेण विशेषं दर्शयन्ति पुनःपुनरतिचारकानिश्चयेन ते गुरुकर्माणो व्यवहितमोक्षा मध्यमदारुवद्रूपनिर्माणस्य बहुतरपरिशीलनया ते योग्यतां प्रतिपद्यन्ते । तथा भावरोगोपशमं प्रति ते कृच्छ्रसाध्या मन्तव्याः । येभ्यः पुनरेतानि निवेद्यमानानि न कथञ्चन रोचन्ते प्रयत्नशतैरपि संपाद्यमानानि येषु न क्रमन्ते तदुपदेष्टारमपि प्रत्युत ये द्विषन्ति ते

महापापा अभव्या अत एवैकान्तेन तेषामयोग्याः। तथा भाव व्याधिनिबर्हणं प्रत्यसाध्यास्तेऽवगन्तव्या इति। तदिदं सौम्य, यद् भगवत्पादप्रसादेनास्माभिर्लक्षणमवधारितमनेन लक्षणेन यथा त्वमात्मस्वरूपं कथयसि यथा च वयं भवत्स्वरूपं लक्षयामः तथा त्वं परिशीलनागम्यः, कृच्छ्रसाध्ये वर्त्तसे एवं च स्थिते न भवतो महाप्रयत्नव्यतिरेकेण रागादिरोगोपशमसुपलभामहे तस्माद्यद्यद्यापि न भवतः सर्वसङ्गत्यागशक्तिर्विद्यते ततोऽत्र वितते भागवते प्रवचने कृत्वा भावतोऽविचलमवस्थानं विहायाशेषकाङ्क्षाविशेषान् भगवन्तमेवाचिन्त्यवीर्यातिशयपरिपूर्णतया निःशेषदोषशोषणसहिष्णुमनवरतं चेतसि गाढभक्त्या व्यवस्थापयन् देशविरत एवावतिष्ठस्व केवलमनवरतमेतदेव ज्ञानदर्शनचारित्ररूपत्रयमुत्तरोत्तरक्रमेण विशिष्टं विशिष्टतरं विशिष्टतमं भवता यत्नेनासेवनीयमेवमाचरतस्तेन भविष्यति रागादिरोगोपशमो नान्यथेति। या चेयमीदृशी सदुपदेशदाने प्रवर्त्तमानानां भगवतां सद्धर्मगुरूणामस्य जीवस्योपरि दया सैवात्रस्य परमार्थतः परिपालनक्षमा परिचारिका विज्ञेया। ततोऽयं जीवः प्रतिपद्यते तदानीं तद्गुरुवचनं करोति यावज्जीवं मयैतदेवं कर्त्तव्यमिति निश्चयं तिष्ठति, देशविरतः कियन्तमपि कालमत्र भगवन्मतमन्दिरे पालयति धनविषयकुटुम्बाद्याधारभूतं भिक्षापात्रकल्पं जीवितव्यं तस्मिन्नवसरे। एवं च तिष्ठतस्तस्य यो वृत्तान्तः सोऽधुना प्रतिपाद्यते। तत्र यदुक्तम्। यदुत सा तद्दया ददाति तस्मै तच्चितयमहर्निशं केवलं तत्र कदन्ने मूर्च्छितस्य वनीपकस्य न तस्मिन्नादर इति। तदिहापि तुल्यमेवा-

वसेयम्। तथा हि। गुरोः सम्बन्धिनी दया समादयत्येवास्य जीवस्यानारतं विशेषतो ज्ञानादीनि। तथापि कर्मपरतन्त्रतया धनादिषु मूर्च्छितचित्तोऽयं न तानि सम्यग् बहु मन्यते।

अन्यच्च।

यथासौ कथानकोक्तो मोहवशेन तत् कुभोजनं भूरि भुङ्क्ते तद्दयादत्तं पुनः परमान्नमुपदंशकल्पं कल्पयति। तथायमपि जीवो महामोहाध्मातमानसो धनोपार्जनविषयोपभोगादिषु गाढमाद्रीयते गुरुदययोपनीतं तु व्रतनियमादिकमनादरेणान्तरान्तरा सेवते वा न वा। यथासौ तद्दयोपरोधेन तदञ्जनं क्वचिदेव नेत्रयोर्निधत्ते तथायमपि जीवः सद्गुरुभिरनुकम्पया प्रेर्यमाणोऽपि यदि परं तदनुरोधेनैव प्रवर्त्तते तथा ज्ञानमभ्यस्यति तदपि क्वचिदेव न सर्वदा यथा चासौ तत्तीर्थोदकं पातुं तद्वचनेनैव प्रवर्त्तते तथायमपि जीवः प्रमादपरायत्ततयानुकम्पापरगुरुचोदनयैव सम्यग्दर्शनमुत्तरोत्तरविशेषैरुद्दीपयति न स्वोत्साहेनेति। यत्तु विशेषेण पुनरभिहितं यथा स वनीपकः संभ्रमेण तद्दयया भूरि वितीर्णं तत्परमान्नं स्तोकं भुक्त्वा शेषमनादरेण स्वभाजने विधत्ते तत्सान्निध्येन तत्कदन्नमभिवर्द्धते ततस्तद्भक्षयतोऽपि दिवानिशं न निष्ठां याति ततोऽसौ तुष्यति न च जानीते कस्येदं माहात्म्यं केवलं तत्र गृद्धात्मा भेषजत्रयस्य परिभोगं शिथिलयन् कालं नयति। तथा चापथ्यभोजिनस्तस्य ते रोगा नोच्छिद्यन्ते केवलं यदन्तरान्तरा तद्दयोपरोधेन तत्परमान्नादिकमसौ मनाग् प्राशयति तावन्मात्रेण ते रोगा याप्यावस्थां गतास्तिष्ठन्ति यदा पुनरनात्मज्ञतया भृशतर-

मपथ्यं सेवते तदा ते रोगाः क्वचिदात्मीयं विकारं दर्शयन्तः शूलदाहमूर्च्छारोचकादीनि जनयन्ति ततस्तैरसौ बाध्यत इति। तदत्रापि जीवे समानमवबोद्धव्यम्।

तथा हि। यथा क्वचिदवसरे चातुर्मासकादौ दयापरीतचित्ता गुरवोऽस्य जीवस्य पुरतो विशिष्टतरविरतिग्राहणार्थमणुव्रतविधिं विस्तारयन्ति तदायं जीवः प्रबलचारित्रावरणतया मन्दवीर्योल्लासस्तीव्रसंवेगेन कानिचिदेव व्रतानि गृह्णाति तदिदं वह्नोर्दत्तस्य स्तोकभक्षणमभिधीयते। कानिचित्पुनर्व्रतानि दयापरीतगुरूपरोधेन मनसोऽनभिप्रेतान्यप्यङ्गीकरोति सोऽयं शेषस्य भोजने निक्षेपो द्रष्टव्यः। तच्च व्रताङ्गीकरणं मन्दसंवेगेनापि क्रियमाणमनुषङ्गत एव विषयधनादीन्यत्र भवे भवान्तरे वाभिवर्द्धयति तदिदं परमान्नसन्निधानेनेतरस्याभिवर्द्धनमभिहितम्। ते च तत्प्रभावसंपन्ना विषयादयो दृढकारणतयानवरतं भुञ्जानस्याप्यस्य जीवस्य न निष्ठां प्रतिपद्यन्ते। ततोऽयं जीवः सुरनरभवेषु वर्त्तमानस्तां तथाभूतामात्मविभूतिमुपलभ्य हर्षमुद्वहति। न चायं वराको लक्षयति यथैते धनविषयादयो धर्ममाहात्म्येन ममोपनमन्ते तत्किमत्र हर्षेण स एव भगवान् धर्मः कर्त्तुं युक्त इति ततोऽयमलक्षितसद्भावस्तेषु विषयादिषु प्रतिबद्धचित्तो ज्ञानदर्शनदेशचारित्राणि शिथिलयति। केवलं जानन्नप्यजानान इव मोहदोषेण निरर्थकं कालमतिवाहयति। एवं चास्य वर्त्तमानस्य द्रविणादिषु प्रतिबद्धमानसस्य धर्मानुष्ठाने मन्दादरस्य भूयसापि कालेन रागादयो भावरोगा नैव संक्षियन्ते किं तु तावतापि सदनुष्ठानेन गुरूपरोधतो

मन्दमंवेगतयापि विधीयमानेनैतावान् गुणः संपद्यते। यदुत ते भावरोगा याप्यतां नीयन्त इति। य - - - रयं जीवोऽनात्मज्ञतया गाढतरं विषयधनादिषु गृद्धिं विधत्ते ततश्चादत्ते भूरिपरिग्रहं समारभते महाजालकल्पं वाणिज्यं समाचरति कृष्यादिकं विधापयति तथाविधानन्यांश्च महारंभान् तदा ते रागादयो भावरोगाः प्रबलसहकारिकारणकलापमासाद्य नानाकारान् विकारान् दर्शयन्त्येव नानादरविहितमनुष्ठानमात्रं तत्र त्राणम्। ततश्चायं जीवः क्वचित्पीड्यते अकाण्डशूलकल्पया धनव्ययचिन्तया क्वचिद्दन्दह्यते परेर्ष्यादाहेन क्वचिन्मुमूर्षुरिव मूर्च्छामनुभवति सर्वस्वहरणेन क्वचिद्बाध्यते कामज्वरसन्तापेन क्वचिच्छर्दिमिव कार्यते बलादुत्तमर्णैर्गृहीतधननिर्यातनां क्वचिज्जाड्यमिव संपद्यते जानतोऽप्यस्यैवंविधा प्रवृत्तिरिति प्रवादेन लोकमध्ये मूर्खत्वं क्वचित्ताम्यति हृत्पार्श्ववेदनातुल्यया इष्टवियोगानिष्टसम्प्रयोगादिपीडया क्वचित्प्रभवति प्रमत्तस्य पुनरपि मिथ्यात्वोन्मादसन्तापः क्वचिद्भवति सदनुष्ठानलक्षणे पथ्ये भृशतरमरोचकः तदेवमेवंविधैर्विकारैस्तावतीं कोटिमध्यारूढोऽपि खल्वेष जीवोऽपथ्यसेवनाशक्तो बाध्यत इति। ततस्तदनन्तरं यदवाचि यदुत स वनीपकस्तथा विकारैरुपद्रुतो दृष्टस्तद्दयया ततोऽपथ्यभोजितामधिकृत्योपलब्धस्तथा तेनोक्तं नाहमभिलाषातिरेकेण स्वयमेतत्परिहर्तुमुत्सहे ततोऽमुतोऽपथ्यसेवमादारणीयोऽहं भवत्या प्रतिपन्नं तया ततस्तद्वचनकरणेन जातस्तस्य मनाग् विशेषः केवलं सा यदाऽभ्यर्णे तदैवासौ तदपथ्यं परिहरति नान्यदा सा चानेकसत्त्वप्रतिजागरणाकुलेति न सर्वदा तत्सन्निधौ

भवति। ततोऽसौ मुत्कलोऽपथ्यमासेवमानः पुनरपि विकारैः पीड्यत एव। तदेतदत्थच जीवव्यतिकरे सदृशं वर्त्तते केवलं गुरोर्या जीवस्योपरि दया सैव प्राधान्यात्पार्थक्येन कर्त्री विवक्षिता। ततश्चायं परमार्थस्ते गुरवो दयापरीतचित्ताः प्रमादिनमेनं जीवमुपलभ्यानेकपीडापर्याकुलतया क्रन्दन्तमेवमुपालभन्ते यथा भोः कथितमेवेदं प्रागेव भवतो न दुर्लभाः खलु विषयासक्तचित्तैर्मनः सन्तापाः। न दूरवर्त्तिन्यो धनार्जनरक्षणप्रवणानां नाना व्यापदः। तथापि भवतस्तत्रैव गाढतरं प्रतिबन्धः। यत्पुनरेतद्ग्रेषक्लेशराशिमहाऽजीर्णविरेककारितया परमस्वास्थ्यकारणं ज्ञानदर्शनचारित्रत्रयं तदनादरेणावलोकयसि त्वं तदत्र किं कुर्मो वयं यदि किञ्चिद् ब्रूमस्ततो भवानाकुलीभवति ततो दृष्टवृत्तान्ता वयं भवन्तमनेकोपद्रवैरुपद्रूयमानं पश्यन्तोऽपि तूष्णीमास्महे न पुनराकुलताभयाद्भवन्तममार्गे प्रस्थितमपि वारयामः। आदरवतामेव पुंसां विरुद्धकर्माणि परिहरतां ज्ञानदर्शनदेशचारित्राण्यनुतिष्ठतां तानि विकारनिवारणयालं नानादरवताम्। यदा चास्माकं पश्यतामपि त्वं रागादिरोगैरभिभूयसे तदा भवद्गुरव इति कृत्वा वयमप्युपालंभभाजनं लोके भविष्याम इति। सोऽयं तद्दयाविहितस्तदुपालंभ इत्युच्यते। ततोऽयं जीवो गुरूनभिदधीत भगवन्ननादिभवाभ्यस्ततया मां मोहयन्ति मे तृष्णालौल्यादयो भावाः ततस्तद्वशगोऽहं न सदारंभपरिग्रहं जानन्नपि तद्दोषविपाकं मोक्तुं शक्नोमि। ततो भगवद्भिर्नाहमुपेक्षणीयो निवारणीयो यत्नतोऽसत्प्रवृत्तिं कुर्वाणः कदाचिद्भवन्माहात्म्येनैव मे स्तोकस्तोकां

दोषविरतिं कुर्वतः परिणतिविशेषेण सर्वदोषत्यागेऽपि शक्तिः संपत्स्यत इति । ततः प्रतिपद्यन्ते तद्वचनं गुरवः । चोदयन्ति प्रमाद्यन्तं क्वचिदवसरे संपद्यते प्राक् प्रवृत्तिपीडोपशमः तद्वचनकरणेन प्रवर्द्धन्ते ज्ञानादयो गुणास्तत्प्रसादेन सोऽयं तद्दयावचनकरणेन मनागारोग्यलक्षणः संजातो विशेष इत्युच्यते । केवलमयं जीवो विशिष्टपरिज्ञानविकलतया यदैव ते चोदयन्ति तदैव स्वहितमनुचेष्टते तच्चोदनाभावे पुनः शिथिलयति सत्कर्त्तव्यं प्रवर्त्तते निर्भरं भूयो सदारंभपरिग्रहकरणे । ततश्चोल्लसन्ति रागादयो जनयन्ति मनःशरीरविविधबाधाः । ततस्तदवस्थैव विह्वलतेति तेषां तु भगवतां गुरूणाम् । यथायं प्रस्तुतजीवः सच्चोदनादानद्वारेण परिपाल्यस्तथा बहवोऽन्येऽपि तथाविधा विद्यन्ते । ततश्च समस्तानुग्रहप्रवणास्ते कदाचिदेव विवक्षितजीवचोदनामाचरन्ति शेषकालं तु मुक्तलतया स्वाहितमनुतिष्ठन्तमेतं न कश्चिद्वारयति । ततश्चायमनन्तरोक्तोऽनर्थः संपद्यत इति । सोऽयं तद्दयासन्निधानविरहादपथ्यसेवनेन पुना रोगविकाराविर्भाव इत्यभिधीयते । ततो यथा पुनस्तेन द्रमकेण तस्मै सूदाय स्ववृत्तान्तं निवेदितमभिहितं यदुत नाथास्तथा यतध्वं यथा न मे स्वप्नान्तेऽपि पीडा जायते ततस्तेनोक्तम् । इयं तद्दया व्यग्रतया न सम्यक् तवापथ्यनिवारणं विधत्ते ततः करोम्येनां निर्व्यग्रां तव परिचारिकां केवलं तद्वचनकारिणा भवता भाव्यं ततः प्रतिपन्नं तत्तेन दत्ता तस्मै निःसाधारणा सद्बुद्धिर्नामपरिचारिका सूदेन । ततस्तद्गुणेन निवृत्तं तस्यापथ्यलाम्पट्यं ततस्तनूभूता रोगा निवृत्तप्रायास्तद्विकाराः संपन्ना मनाग् शरीरे

सुखासिका वर्द्धितश्चानन्द इति तथैव व्यतिकरो जीवेऽपि समानो वर्त्तते ।

तथा हि ।

यथा धावन्नन्धो भित्तिस्तम्भादौ लब्धास्फोटो वेदनाविक्लवस्तामास्फोटवेदनां परस्मै कथयति । तथायमपि जीवो यदा गुरुनिवारिताचरणेन दृष्टापायत्वात् संजातप्रत्ययो भवति तदा तानेकप्रकारानपायान् गुरुभ्यो निवेदयति । यदुत भगवन्नहं यदा युष्मन्निवारणया न गृह्णामि स्तेनाहृतं न करोमि विरुद्धराजातिक्रमं नाचरामि वेश्यादिगमनं नानुतिष्ठामि तथाविधमन्यदपि धर्मलोकविरुद्धं न रज्यामि महारंभपरिग्रहयोः तदा मां लोकः साधुतया गृह्णाति मयि विश्रंभं विधत्ते श्लाघां चाचरति तथा न जानामि शरीरायासजनितं दुःखं संपद्यते हृदयस्वास्थ्यं धर्मश्चैवं तिष्ठतां सुगतिप्रापको भवतीति भावनया भवति चित्तानन्द इति । यदा तु युष्मन्निवारणा न भवति भवन्तो वा तामनपेक्ष्य निबन्धतया न जानन्ति मां गुरव इत्यभिप्रायेण धनमूर्च्छनया गृह्णामि स्तेनाहृतादिकं विषयलौल्येन गच्छामि वेश्यादिकं समाचरामि तादृशमन्यदपि भगवन्निवारितं तदा लोकादश्लाघां राजकुलात्सर्वस्वहरणं शरीरखेदं मनस्तापमपरांश्च समस्तानर्थानिह लोक एव प्राप्नोमि। पापंच दुर्गतिगर्त्तपातहेतुरेवं वर्त्तमानानां भवतीति चिन्तया दन्दह्यमानहृदयः क्षणमपि सुखं न लभेऽहमिति । तस्मान्नाथास्तथा कुरुध्वं यूयं यथाहमनवरतं युष्मद्वचनाचरणप्रसादेन सततमेतस्मादनर्थप्ररजालाद्रक्षितो भवामीति । ततस्तदाकर्ण्य गुरवो ब्रूयुः भद्र

यदेतत्परप्रत्ययेनाकार्यवर्जनं कादाचित्कमेतत् केवलं तथापि क्रियमाणश्च तस्येतरस्य च दृष्ट एव भवता विशेषः। वयं चानेकमल्लोपकारकरणव्यग्रा न सदा सन्निहिता भवन्तं वारयितुं पारयामः। एवं च स्थिते न यावद्भवतः स्वकीया सद्बुद्धिः संपन्ना तावदेयास्वनिवारिताचरणनिबन्धनानर्थपरम्परा भवन्तो न विनिवर्त्तते सद्बुद्धिरेव हि परप्रत्ययमनपेक्ष्य स्वप्रत्ययेनैव जीवमकार्यान्निवारयति। ततो मुच्यते ऽनर्थेभ्य इति। ततोऽयं जीवो ब्रूयात्। नाथाः सापि भवत्प्रसादादेव यदि परं मम संपत्स्यते नान्यथा। ततो गुरवोऽभिदध्युः भद्र दीयते सद्बुद्धिः वचनायत्ता हि सा मादृशां वर्त्तते केवलं दीयमानापि सा पुण्यभाजामेव जन्तूनां सम्यक् परिणमति नेतरेषां यतः पुण्यभाज एव तस्यामादरवन्तो जायन्ते नापरे तदभावभाविनो हि देहिनां सर्वेऽनर्थाः तदायत्तान्येव सकलकल्याणानि तस्यामेव च ये महात्मानो यतन्ते। त एव भगवन्तं सर्वज्ञमाराधयन्ति नेतरे तत्संपादनार्थः कल्पेष मादृशां वचनप्रपञ्चः। सद्बुद्धिविकलानां हि पुरुषाणां व्यवहारतः संज्ञातान्यपि ज्ञानादीनि नासंज्ञातेभ्यो विशिष्यन्ते स्वकार्याकरणात्। किंवहुनोक्तेन सद्बुद्धिविकलः पुरुषो न पशूनतिशेते तस्माद्यदि तेऽस्ति सुखाकाङ्क्षा दुःखेभ्यो वा यदि बिभेषि ततोऽस्यामस्माभिर्दीयमानायां सद्बुद्धौ यत्नो विधेयः। तस्यां हि यत्नवता समाराधितं वचनं सद्भगवतो भुवनभर्त्तुः परितोषिता वयमङ्गीकृतं लोकोत्तरयानं परित्यक्ता लोकसंज्ञा समासेविता धर्मचारिता मसृत्तारितो भवोदधिरात्मा भवतेति। ततो भगवतां सद्धर्मगुरूणामेवंविधवचोऽमृत-

प्रवाहप्रच्छादितहृदयोऽयं जीवस्तद्वचनं तथेति प्रतिपद्यते। ततस्ते तस्मै दद्युरुपदेशं यदुत सौम्येदमेवात्र परमगुह्यं सम्यगवधारणीयं भवता यदुत यावदेष जीवो विपर्यासवशेन दुःखात्मकेषु धनविषयादिषु सुखाध्यारोपं विधत्ते सुखात्मकेषु वैराग्यतपःसंयमादिषु दुःखाध्यारोपं कुरुते तावदेवास्य दुखसम्बन्धः। यदा पुनरनेन विदितं भवति विषयेषु प्रवृत्तिर्दुःखं धनाद्याकाङ्क्षानिवृत्तिः सुखं तदायमशेषेच्छाविच्छेदेन निराकुलतया स्वाभाविकसुखाविर्भावात् सततानन्दो भवति।

अन्यच्च। भवतोऽयं परमार्थः कथ्यते यथा यथायं पुरुषो निःस्पृहो भवति तथा तथास्य पात्रतया सकलाः संपदः संपद्यन्ते। यथा यथा संपदभिलाषी भवति तथा तथा तदयोग्यतामिव निश्चित्य तास्ततो गाढतरं दूरीभवन्ति। तदिदं निश्चित्य भवता सर्वत्र सांसारिकपदार्थसार्थे नास्था विधेया। ततस्ते स्वप्नदशायामपि पीडागन्धोऽपि मनःशरीरयोर्नैव संपत्स्यत इति। ततोऽयं जीवस्तमुपदेशममृतमिव गृह्णीयात्। ततस्ते धर्मगुरवः संपन्ना सद्बुद्धिरस्येति ज्ञात्वा नेदानीमेषोऽन्यथा भविष्यतीति तं प्रति निश्चिन्ता भवेयुरिति। ततः प्रादुर्भूतसद्बुद्धिरयं जीवो यद्यपि श्रावकावस्थायां वर्त्तमानः कुरुते विषयोपभोगमादत्ते धनादिकं तथापि यस्तत्राभिष्वङ्गोऽत्यन्तविकारणभूतः स न भवति ततो ज्ञानदर्शनदेशचारित्रेषु प्रतिबद्धान्तःकरणस्य तस्य ते द्रविणभोगादयो यावन्त एव संपद्यन्ते तावन्त एव सन्तोषमुत्पादयन्ति। ततोऽयं सद्बुद्धिप्रभावादेव तदानीं यथा ज्ञानादिषु यतते न तथा धनादिषु ततोऽपूर्वा न वर्द्धन्ते रागादयः तनूभवन्ति प्राचीनाः। तथा पूर्वोपचितकर्मपरिणतिवशेन

यद्यपि क्वचिदवसरे काचिच्छरीरमनसोर्बाधा संपद्यते तथापि सा निरनुबन्धतया न चिरमवतिष्ठते ततो ज्ञानीते तदायं जीवःसन्तोषासनोपयोगेगुणदोषविशेषं संजायते चोत्तरगुणास्कन्दनेन चित्तप्रमोद इति ।

ततो यथा तेन वनीपकेन तया सद्बुध्या परिचारिकया सह पर्यालोचितं भद्रे किन्निमित्तः खल्वेष मम देहचेतसोः प्रमोदः । तथा च कदन्नलौल्यवर्जनं भेषजचर्यासेवनं च तस्य कारणमाख्यातं तत्र युक्तिश्चोपन्यस्ता तदिहापि समानमेव ।

तथा हि । सद्बुध्यैव सह पर्यालोचयन्नेष जीवो लक्षयति । यदुत यदेतत्स्वाभाविकं देहमनोनिर्वृत्तिरूपं सुखमाविर्भूतं ममास्य निबन्धनं विषयादिष्वभिष्वङ्गत्यागो ज्ञानाद्याचरणं च । तथा हि । प्रागभ्यासवशेन विषयादिषु प्रवर्त्तमानोऽप्येष जीवः सद्बुद्धिकलितः सन्नेवं भावयति न युक्तमीदृशं विधातुं मादृशां ततो गृद्धिविकलतया निवर्त्तते चेतसोऽनुबन्धः ततः संपद्यते प्रशमसुखासिकेत्ययमत्र युक्तेरुपन्यासो विज्ञेय इति । ततो यदुपलब्धसुखरसेन तेन रोरेण तस्याः परिचारिकायाः पुरतोऽभिहितं यदुत भद्रे सर्वथाधुना मुञ्चामीदं कदन्नं येनात्यन्तिकमेतत्सुखं मे संपद्यत इति । तयोक्तं चाविदं केवलं *सम्यगालोच्य मुच्यतां भवता यतस्तेऽत्यन्तवल्लभमेतद्* ततो यदि मुक्तेऽपि तवात्र स्नेहसंबन्धोऽनुवर्त्तते तदरतरमस्य त्याग एव यतस्तौव्रलौल्यविकलतया भुञ्जानस्यापीदं भेषजचर्यासेवनगुणेनाधुना याप्यता ते विद्यते साधि चात्यन्तदुर्लभा यदि पुनरस्य सर्वत्यागं विधाय त्वमेतद्गोचरं स्मरणमपि करिष्यसि ततो

रोगा भूयोऽपि कोपं यास्यन्ति तद्वचनमाकर्ण्य तस्य दोलायिता बुद्धिः किं करवाणीति न संजातो मनसि निश्चय इति तदिदमत्रापि जीवे तुल्यं वर्त्तते ।

यथा हि । यदायं सांसारिकार्थेषु चित्तानुबन्धत्रोटनेन ज्ञानाद्याचरणे दृढमनुरक्ततया गृहस्थावस्थायामपि वर्त्तमानो विज्ञातसंतोषसुखस्वरूपो भवति तदास्याविच्छिन्नप्रशमसुखवाञ्छया प्रादुर्भवत्येव सर्वसङ्गत्यागबुद्धिः पर्य्यालोचयति चात्मीयसद्बुध्या सार्द्धं यदुत किमहमस्य विधाने समार्थो न वेति । ततः सद्बुद्धिप्रसादादेवेदमेष लचयत्येव यथानादिभवाभ्यासवशेन स्वरसप्रवृत्तिरेष जीवो विषयादिषु ततो यदि निःशेषदोषनिवृत्तिलचणां भागवतीमपि दीचामुररीकृत्य पुनरयं तामनादिरूढकर्मजनितां प्रकृतिमनुवर्त्तमानो विषयादिस्पृहयात्मानं विडम्बयिष्यति । ततोऽस्यादित एव तदनङ्गीकरणं श्रेयस्करं यतस्तीव्राभिष्वङ्गरहितो विषयादिषु वर्त्तमानो गृहस्थोऽपि द्रव्यस्तवं ज्ञानाद्याचरणप्रधानं कुर्वाणः कर्माजीर्णजरणेन रागादिभावरोगतनुतामधिकृत्य याप्यतां लभते न चेयमप्यनादौ भवभ्रमणे क्वचिदवाप्तपूर्वानेन जीवेनातोऽत्यन्तदुर्लभेयं यदि तु प्रव्रज्यां प्रतिपद्य पुनर्विषयाद्यभिलाषं विधत्ते ततः प्रतिज्ञाताकरणेन दृढतरचित्तसंक्लेशप्राप्तेर्गुरुतररागाद्युद्रेकेण तामपि याप्यतां न लभते ततो यावदेवं निरूपयत्ययं जीवः तावदस्य चारित्रमोहनीयकर्मांशैरनुवर्त्तमानैर्विधुरिता सती पूर्वं प्रवृत्तापि सर्वसङ्गत्यागबुद्धिः पुनर्दोलायते ततः संपद्यते वीर्यहानिः ततोऽवलम्बते खल्वयमेवंविधानि कदालम्बनानि । यदुत सीदति

तावदधुना ममेदं कुटुम्बकं मन्मुखनिरीक्षकं चेदं न वर्त्तते मद्विरहे। अतः कथमकाण्ड एव मुञ्चामि यदि वाद्यप्यसंजातबलोऽयं तनयः अपरिणितेयं दुहिता प्रोषितभर्तृकेयं भगिनी मृतपतिका वा अतः पालनीया ममेयं तथा नाद्यापि गृहधूर्धरणक्षमोऽयं भ्राता जराजर्जरितशरीराविमौ मातापितरौ स्नेहकातरौ च गर्भवतीयं भार्या दृढमनुरक्तहृदया च न जीवति मद्विरहिता। अतः कथमेवं विसंस्थुलं परित्यजामि यदि वा विद्यते मे भूरिधननिचयः सन्ति बहवोऽधमर्णाः। अस्ति च सुपरीक्षितभक्तिर्भूयान् परिकरो बन्धुवर्गश्च तदयं पोष्यो मे वर्त्तते तस्मादुद्ग्राह्यद्रविणं लोकेभ्यः कृत्वा बन्धुपरिकराधीनं विधाय धर्मद्वारेण धनविनियोगमनुज्ञातः स्वरभसेन सर्वैर्मातापित्रादिभिर्विहिताशेषगृहस्थकृत्य एव दीक्षामङ्गीकरिष्ये किमनेनाकाण्डविड्वरेणेति।

अन्यच्च। यदिदं प्रव्रजनं नाम साक्षाद्बाहुभ्यां तरणमेतत् स्वयंभूरमणस्य वर्त्तते प्रतिस्रोतोगमनमेतद्गङ्गायाः चर्वणमेतद्योयवानां भक्षणमेतद्योगोलकानां भरणमेतत्कूर्मपवनेन कम्बलमुत्कोल्याः भेदनमेतत् शिरसा सुरगिरेः मानग्रहणमेतत्कुशाग्रेण नीरनिधेः नयनमेतद्विन्दुपातं धावता योजनशतं तैलापूर्णपात्र्या ताडनमेतत् सव्यापसव्यभ्रमणशीलाष्टचक्रविवरगामिना शिलीमुखेन वामलोचने पुत्रिकायाः भ्रमणमेतदनपेक्षितपादपातं निशातकरवालधारायामिति यतोऽत्र परिसोढव्याः परिषहाः निराकर्त्तव्या दिव्याद्युपसर्गाः विधातव्या समस्तपापयोगनिवृत्तिः वोढव्यो यावत्कथं सुरगिरिगुरुः शीलभारो वर्त्तयितव्यः सकलकालं माधुकर्या

वर्त्तनयात्मा निष्टप्तव्यो विकृष्टतपोभिर्देहः स्वात्मीभावमानितव्यः संयमः समुन्मूलयितव्या रागादयो निरोद्धव्यो हार्दतमप्रसरः। किंबहुना । निहन्तव्योऽप्रमत्तचित्तैर्मोहमहावेताल इति मृदुशयनाहारलालितपालितं च मामकं शरीरं तथापरिकर्मितमद्यापि चित्तं तन्नैतावतः प्रायेण महाभारस्योद्वहने सामर्थ्यम् ।

अथ वैतदप्यस्ति न यावत्सकलद्वन्द्वविच्छेदद्वारेण भागवती दीक्षाभ्युपगता न तावत्सम्पूर्णं प्रशमसुखमशेषक्लेशविच्छेदलक्षणो वा मोक्षोऽवाप्यत इति । न जानीमः किं कुर्महे ततोऽयमेवं जीवो ऽनवाप्तकर्त्तव्यनिर्णयः सन्देहदोलारूढहृदयः कियन्तमपि कालं चिन्तयन्नेवावतिष्ठते ।

ततो यदुक्तं यदुतान्यदा तेन वनीपकेन महाकल्याणकापूर्णोदरेण तत्कदन्नं लीलया कथञ्चित्प्राशितं ततस्तृप्युत्तरकाले भुक्तत्वात्तस्य यथावस्थितैरेव गुणैः कुथितत्वविरसत्वनिन्द्यत्वादिभिस्तदपि प्रतिभातं ततः संजातोऽस्य तस्योपरि व्यलीकीभावः ततस्त्याज्यमेवेदं मयेति सिद्धान्तीकृत्य स्वमनसा तत्त्यागार्थमादिष्टा सद्बुद्धिः। तयाभिहितं धर्मबोधकरेण सार्द्धं पर्यालोच्य मुच्यतामेतदिति। ततस्तदन्तिके गत्वा निवेदितः स्वाभिप्रायो वनीपकेन तेनापि निकाचनापूर्वं त्याजितोऽसौ तत्कदन्नं क्षालितं विमलजलैस्तद्भाजनं पूरितं परमान्नेन विहितस्तद्दिने महोत्सवः जातं जनप्रवादवशेन तस्य वनीपकस्याभिधानं सपुण्यक इति। तदिदं वृत्तान्तान्तरमस्यापि जीवस्य दोलायमानबुद्धेस्तया गृहस्थावस्थायां वर्त्तमानस्य क्वचित्संभवतीत्यवगन्तव्यम् ।

तथा हि। यदायं जीवो विदितप्रशमसुखास्वादो भवति भवप्रपञ्चाद्विरक्तचित्तस्तथापि केनचिदालम्बनेन गृहमधिवसति तदा करोत्येव विशिष्टतरं तपोनियमाभ्यासं स एष परमात्माभ्यवहारोऽभिधीयते। यत्तु तस्यामवस्थायामनादरेणार्थोपार्जनं कामासेवनं वा तच्छीलया कदन्नप्राशनमिति विज्ञेयम्।

ततो यदा भार्या वा व्यलीकमाचरेत् पुत्रो वा दुर्विनीततां कुर्यात् दुहिता वा विनयमतिलंघयेत् भगिनी वा विपरीतचारितामनुचेष्टेत भ्राता वा धर्मद्वारेण धनव्ययं विधीयमानं न बहु मन्यते जननीजनकौ वा गृहकर्त्तव्येषु शिथिलोऽयमिति जनसमक्षमाक्रोशेतां बन्धुवर्गो वा व्यभिचारं भजेत परिकरो वाज्ञां प्रतिकूलयेत् स्वदेहो वानिलालितपालितोऽपि खलजनवद्रोगादिकं विकारमादर्शयेत् धननिचयो वा अकाण्ड एव विद्युल्लताविलसितमनुविदध्यात् तदास्य जीवस्य परमान्नदत्तस्येव कुभोजनमेष समस्तोऽपि संसारविस्तरः सुतरां यथावस्थितस्वरूपेण मनसि प्रतिभासयेत्। ततस्तदायं विविक्तेन चेतसा प्रादुर्भूतसंवेगस्त्वेवं भावयेत्। अये यदर्थमहं विज्ञातपरमार्थोऽपि स्वकार्यमवधीर्य सदनमधिवसामि तदास्य स्वजनधनादेरेवंविधः परिणामः तथापि ममापर्यालोचितकारिणो नास्योपरि स्नेहमोहः प्रवर्त्तमानो निवर्त्तते। नूनमविद्याविलसितमेवेदं यदीदृशेऽप्यत्र चेतसः प्रतिबन्धः तत्किमर्थमनर्थव्यामूढहृदयः स्वस्वहमात्मानं वञ्चयामि। तस्मान्मुञ्चामीदं सकलं जम्बालकल्पं कोशिकाकारकीटस्येवात्मबन्धनमात्रफलं बहिरन्तरङ्गसङ्गकदम्बकं यद्यपि यदा यदा पर्यालोच्यते तदा तदा विषय-

स्नेहकलाकुलितचेतसि दुष्करोऽस्य त्यागः प्रतिभासते। तथापि त्यक्तव्यमेवेदं मया पश्चाद्यद्भाव्यं तद्भविष्यति। अथवा किमत्र यद्भाव्यं न भविष्यत्येव मे किञ्चित्परित्यक्तेऽस्मिन्नसुन्दरं किन्तर्हि निरुपमश्चित्तप्रमोद एव संजनिष्यते। ततो यावदेष जीवोऽत्र परिग्रहकर्दमे गज इव निमग्नोऽवसीदति तावदेवास्यायमतिदुस्त्यजः प्रतिभासते यदा पुनरयमेतस्मान्निर्गतो भवति तदायं जीवः सति विवेके नास्य धनविषयादेः संमुखमपि निरीक्षते को हि नाम सकर्णको लोके महाराज्याभिषेकमासाद्य पुनश्चाण्डालभावमात्मनोऽभिलषेत्। तदेवमेष जीवस्त्यक्तव्यमेवेदं मया नास्ति त्यजतः कश्चिदपाय इति स्थितपक्षं करोति। ततश्च पुनः सद्बुध्या पर्यालोचयन्नेवं निश्चिनुते। यदुत प्रष्टव्या मयात्र प्रयोजने सद्धर्मगुरवः। ततो गत्वा तत्समीपे तेभ्यः सविनयं स्वाकूतं निवेदयति ततस्ते तमुपबृंहयन्ति साधु भद्र सुन्दरस्तेऽध्यवसायः केवलं महापुरुषक्षुण्णोऽयं मार्गः त्रासहेतुः कातरनराणां ततोऽत्र प्रवर्त्तितुकामेन भवता गाढमवलम्बनीयं धैर्यं न खलु विशिष्टचित्तावष्टम्भविकलाः पुमांसोऽस्य पर्यन्तगामिनः संपद्यन्ते सेयं निकाचना विज्ञेया ततोऽयं जीवस्तद्गुरुवचनं तथेति भावतः प्रतिपद्यते। ततो गुरवः सम्यक् परीक्ष्य सन्निहितगीतार्थैश्च सार्द्धं पर्यालोच्य योग्यतामेनं प्रव्राजयेयुरिति। ततश्च समस्तसङ्गत्यागकारणं कद्‌न्नत्याजनतुल्यं वर्त्तते। आजन्मालोचनादापनपुरस्सरं प्रायश्चित्तेन तज्जीवितव्यस्य विशोधनं विमलजलैर्भाजनक्षालनकल्पं विज्ञेयम्। चारित्रारोपणं तु तस्यैव परमान्नपूरणमदृशमवगन्तव्यमिति। भवति च सद्गुरूपदेशप्रसादादेवास्य जीवस्य दीक्षाग्रहणकाले भव्यप्र-

मोदहेतुश्चैत्यसंघादिपूजाप्रधानोऽन्येषामपि सन्मार्गप्रवृत्तिकारणभूतो महानुत्सव इति। तथा संजायते गुरूणामपि समुत्तारितोऽस्माभिरयं संसारकान्तारादिति भावनया चित्तपरितोषः। ततः प्रवर्द्धते तेषामस्योपरि गुरुतरा दया तत्प्रसादादेवास्य जीवस्य विमलतरीभवति सद्बुद्धिः ततस्तादृशसदनुष्ठानविलोकनेन लोकतो वर्णवादोत्पत्तिः संपद्यते प्रवचनोद्भासना। ततस्तेद तेन समानं विज्ञेयं यदवाचि कथानके। यदुत।

धर्मबोधकरो दृष्टस्तद्दयाप्रमदोद्धुरा।
सद्बुद्धिर्वर्द्धितानन्दा मुदितं राजमन्दिरम्॥

ततोऽङ्गीकृतमन्दराकारविरतिमहाभारमेनं जीवं तदा श्लाघन्ते भक्तिभरनिर्भरतया रोमाञ्चाञ्चितवपुषो भव्यलोकाः। यदुत धन्यः कृतार्थोऽयं सुलब्धमस्य महात्मनो जन्म यत्रास्य सम्प्रवृत्तिदर्शनेन निश्चीयते संजाता भगवदालोकना संपन्नः सद्धर्मसूरिपादप्रसादः तत एवाविर्भूता सुन्दरबुद्धिः ततः कृतोऽनेन बहिरन्तरङ्गसङ्गत्यागः स्वीकृतं ज्ञानादित्रयं निर्दलितप्राया रागादयः महापुण्यवतामेष व्यतिकरः संभवति। ततोऽयं जीवः सपुण्यक इति जनैस्तदा सयुक्तिकमभिधीयत इति। ततस्तदनन्तरं यदुक्तं यथा तस्य वनीपकस्यापथ्याभावेनास्ति परिस्फुटा देहे रोगपीडा यदि स्यात्पूर्वदोषजा कचिदवसरे सापि सूक्ष्मा भवति तथा झटिति निवर्त्तते तच्च चारुभेषजत्रयमनवरतमासेवते ततस्तस्य धृतिबलादीनि वर्द्धन्ते केवलं बहुत्वाद्रोगसन्ततेर्नाद्यापि नीरोगो भवति विशेषस्तु महान् संपन्नः।

तथा हि।

य: प्रेतभूतः प्रागासीद्गाढं बीभत्सदर्शनः।

न तावदेष संपन्नो मानुषाकारधारकः॥

तदत्रापि जीवे तुल्यं वर्त्तते। तथा हि। भावसारं परिमुक्तग्रहादिद्वन्द्वस्यास्य कारणाभावान्न भवत्येवाभिव्यक्ता काचिद्रागादिबाधा। अथ कथंचित् प्रागुपचितकर्मोदयवशेन संजायते तथापि सा सूक्ष्मैव भवति न चिरकालमवतिष्ठते. ततोऽयं लोकव्यापारादिनिरपेक्षोऽनवरतं वाचनाप्रच्छनापरावर्त्तनानुप्रेक्षाधर्मकथालक्षणपञ्चप्रकारस्वाध्यायविधानद्वारेण ज्ञानमभिवर्द्धयति प्रवचनोन्नतिकरशास्त्राभ्यासादिना सम्यग्दर्शनं स्थिरतां लंभयति विशिष्टतरतपोनियमाद्यनुशीलनया चारित्रमपि सात्मीयभावं नयति तदिदं भावतो. भेषजत्रयसेवनमभिधीयते.। ततस्तत्परिणत्या प्रादुर्भवन्त्येवास्य धीधृतिस्मृतिबलाधानादयो. गुणविशेषाः केवलमनेकभवोपात्तकर्मप्रचयप्रभवा भूयांसः खलु रागादयो भावरोगाः। ततो नायमद्यापि नीरोगः संपद्यते किं तु रोगता न च विशेषो दृष्टतमः संजातः। तथा हि। योऽयं जीवो गाढमनार्यकार्याचरणरतिः स्वसंवेदनेन प्रागनुभूतः सोऽधुना धर्माचरणेन प्रीतिमनुभवन्ननुभूयत इति। ततो यथा भेषजत्रयोपभोगमाहात्म्येनैव रोरकालाभ्यस्ततुच्छताक्लीबतालौल्यशोकमोहभ्रमादीन् भावान् विरहय्य स वनीपको मनागुदारचित्तः संपन्न इत्युक्तं तथायमपि जीवो ज्ञानाद्यभ्यासप्रभावेनैवानादिकालपरिचितानपि तुच्छतादिभावानवधीर्य किञ्चिन्मात्रं स्फीतमानस इव संजात इत्युक्तमिति लक्ष्यते। यत्पुन-

रभिहितं यदुत तेन वनीपकेन सा सद्बुद्धिः पृष्टा हृष्टेन यथा भद्रे केन कर्मणा मयैतद्भेषजत्रयमवाप्तं तयोक्तं स्वयं दत्तमेवाच लोके लभ्यते तदेतज्जन्मान्तरे कश्चिद्दत्तपूर्वं त्वयेति। ततस्तेन चिन्तितं यदि दत्तं लभ्यते ततः पुनरपि महता यत्नेन सत्पात्रेभ्यः प्रयच्छामि येनेदं सकलकल्याणहेतुभूतं जन्मान्तरेऽपि ममाचय्यं संपद्यत इति। तदिदमत्रापि जीवे समानं वर्त्तते। तथा हि। ज्ञानदर्शनचारित्राचरणजनितं प्रशमानन्दं वेदयमानोऽयं जीवः सद्बुद्धिप्रसादादिदमाकलयति। यदुत यदिदं ज्ञानादित्रयमशेषकल्याणपरम्परासंपादकमतिदुर्लभमपि मया कथंचिदवाप्तं नेदं प्राचीनाशुभाचरणव्यतिरेकेण घटते तदस्यानुगुणं विहितं मया प्रागपि किंचिद्वदातं कर्म येनेदमासादितमिति ततश्चेयमाविर्भवत्यस्य चिन्ता। यदुत कथं पुनरेतत्सकलकालमविच्छेदेन मया लप्स्यते ततोऽयमेतद्दानमेवास्य लाभकारणं निश्चिनुते ततोऽवधारयत्येवं प्रयच्छामीदमधुना यथाशक्ति सत्पात्रेभ्यो येन संपद्यते मे समीहितसिद्धिरिति। यथा चासौ द्रमकस्तथा चिन्तयन्नपि महाराजाद्यभिमतोऽहमित्यवलेपेनेदं मन्यते। यदुत यदि मां कश्चिदागत्य प्रार्थयिष्यति ततोऽहं दास्यामि नेतरथेत्यभिप्रायेण च दित्सुरपि याचकं प्रतीक्षमाणश्चिरकालमवतिष्ठते स्म तत्र च मन्दिरे ये लोकास्तेषां तद्भेषजत्रयं चारुतरमस्त्येव। येऽपि तत्र तत्कालप्रविष्टतया तेन विकलास्त एव तद्भूरि लभन्ते। ततोऽसौ वनीपको दिशो निभालयन्नास्ते न कश्चित्तन्निष्टचया तत्समीपमुपतिष्ठत इति। तथायमपि जीवश्चिन्तयति। यदुत विद्यते मे भगवदव-

लोकना यङ्कमतोऽहं धर्मसूरिपादानां नूनमनवरतमनुवर्त्तते ममोपरि यदनुग्रहप्रवणा तद्या समुन्मीलिता मे मनसि लेशतः सद्बुद्धिः साधितोऽहं समस्तलोकैस्तद्वारेण ततः सपुण्यतया किल लोकोत्तमो वर्त्तेऽहमिति । अतो मिथ्याभिमानं वितनुते भवति चात्यन्तनिर्गुणस्यापि जन्तोर्महद्भिः कृतगौरवस्य चेतसि गर्वातिरेकोऽत्र चेदमेवोदाहरणम् । अन्यथा कथमयं जीवः समस्तजघन्यतामात्मनो विस्मृत्येत्थं प्रगल्भते ततोऽयं भावयति यदि मां विनयपुरस्सरं कश्चिदर्थितया ज्ञानादिस्वरूपं प्रक्ष्यिष्यति ततोऽहं तत्तस्मै प्रतिपादयिष्यामि नापरथा । ततस्तादृगाकूतविडम्बितोऽयं भूयांसमपि कालमवतिष्ठमानोऽत्र मौनीन्द्रप्रवचनेन कथंचित्ताथाविधं प्रयच्छकमासादयति यतोऽत्र भावतो वर्त्तन्ते ये जीवास्ते स्वत एव ज्ञानदर्शनचारित्रत्रयं सुन्दरतरमाबिभ्रते नैवंविधसम्बन्धिनमुपदेशमुपेचन्ते यद्यप्यधुनैव लब्धकर्मविवराः सन्मार्गाभिमुखचित्तवृत्तयोऽद्यापि विशिष्टज्ञानादिरहिता विद्यन्तेऽत्र केचिज्जीवास्तेऽप्यमुष्य प्रस्तुतजीवस्य सम्मुखमपि निरीचन्ते यतोऽत्र भगवन्मते विद्यन्ते भूरितमा महामतयः सद्बोधादिविधानपटवोऽन्य एव महात्मानो येभ्यस्ते प्राणिनस्तज्ज्ञानदर्शनचारित्रत्रयमपरिक्लेशेन यथेच्छया प्राप्नुवन्ति ततोऽयं जीवोऽनासादिततदर्थी व्यर्थकमात्मगुणोत्सेकमनुवर्त्तमानश्चिरमथासीत् न कथञ्चन स्वार्थं पुष्णीयादिति । ततस्तदनन्तरं यथा तेन सपुण्यकेन सा सद्बुद्धिस्तद्दानोपायं परिपृष्टा तया चोक्तं भद्र निर्गत्य घोषणापूर्वकं भवता दीयतामिति । ततोऽसौ तत्र राजकुले घोषयन्नुच्चैःशब्देन । यदुत मदीयं भेषजत्रयं भो

लोका तात तातेत्येवं पर्यटितः। ततस्तस्मात्पूकुर्वतः केचित्तथा-
विधास्तुच्छप्रकृतयो गृहीतवन्तोऽन्येषां पुनर्महतां भवानग्राथः प्रति-
भासते स्म। हीलितश्चानेकाकारं ततो निवेदितस्तेन सद्बुद्धे-
र्वृत्तान्तः तयाभिहितं भद्र भवतो रोरभावं स्मरन्तः खल्वेते लोका
भद्रमनादरेणावलोकयन्ति तेन न गृह्णन्ति भवता दीयमानं ततो
यदि भद्रस्य समस्तजनग्राहणाभिलाषः ततोऽयं तदुपायो ममैक
श्चेतसि परिस्फुरति। यदुत निधायेदं भेषजत्रयं विशालायां
काष्ठपात्र्यां ततस्तां महाराजसदनाजिरे यत्र प्रदेशे समस्तजनाः
पश्यन्ति तस्मिन् विमुच्य ततो विश्रब्धमानसोऽवतिष्ठस्व का ते
चिन्ता यतोऽज्ञातस्वामिभावाः साधारणमेतदिति बुद्ध्या तथाकृतं
सर्वेऽपि ग्रहीष्यन्ति किं वा तेन यद्येकोऽपि सद्गुणः पुरुषस्तदाद-
द्यात् ततो भविष्यति ते मनोरथपूर्त्तिरिति। ततस्तथैव कृतं समस्तं
तत्तेनेति तथायमपि जीवोऽनासादितज्ञानादिनिचेपपात्रः सद्बुद्धि-
पर्यालोचादेवेदं जानीते। यदुत न मौनमालम्बमानैः परेषां
ज्ञानाद्याधानं विधातुं पार्यते न च ज्ञानादिसंपादनं विहायान्यः
परमार्थतः परोपकारः संभवति। अवाप्तसन्मार्गेण च पुरुषेण
जन्मान्तरेऽपि तस्या विच्छेदनमभिलषता परोपकारकरणपरेण
भवितव्यं तस्यैव पुरुषगुणोत्कर्षाविर्भावकत्वात्। यतः परोपकारः
सम्यक् क्रियमाणो धीरतामभिवर्द्धयति दीनतामपकर्षति उदार-
चित्ततां विधत्ते आत्मंभरितां मोचयति चेतोवैमल्यं वितनुते
प्रभुत्वमाविर्भावयति ततोऽसौ प्रादुर्भूतवीर्योल्लासः प्रणष्टरजोमोहः
परोपकारकरणपरः पुरुषो जन्मान्तरेष्वप्युत्तरोत्तरक्रमेण चारुतरं

सन्मार्गविघ्नेपमासादयति न पुनस्ततः प्रतिपततीति तदिदमवेत्य स्वयमुपेत्यापि ज्ञानादिस्वरूपप्रकाशने यथाशक्ति प्रवर्त्तितव्यं न पराभ्यर्थनमपेचणीयमिति ततोऽयं जीवोऽच भगवन्मते वर्त्तमानो देशकालाद्यपेचयापरापरस्थानेषु परिभ्रमन् महता प्रपञ्चेन कुरुते भवेभ्यो ज्ञानदर्शनचारित्ररूपमार्गप्रतिपादनं सेयं घोषणा विज्ञेया। ततस्तथा कथयतोऽस्मात् प्रस्तुतजीवाद्ये मन्दतरमतयस्ते तदुपदिष्टानि ज्ञानादीनि कदाचिद् गृह्णीयुः ये पुनर्महामतयस्तेषामेष दोषपुञ्जतां प्राक्तनीमस्यानुस्मरतां हास्यप्रायः प्रतिभासते हीलोचितश्च तेषामयं जीवः। यत्तु न हीलयन्ति स तेषामेव गुणो न पुनरस्येति। ततोऽयं चिन्तयति कथं पुनरयं ज्ञानाद्युपदेशः सर्वानुग्राहको भविष्यतीति। ततः सद्बुद्धिबलादेवेदं लक्षयति। यदुत न साक्षान्मया दीयमानोऽयममीषां समस्तलोकानामुपादेयतां प्रतिपद्यते। तस्मादेवं करिष्ये। यदुत यान्येतानि ज्ञानदर्शनचारित्राणि भगवन्मतसारभूतानि प्रतिपाद्यानि वर्त्तन्ते तान्येकस्यां ग्रन्थपद्धतौ ज्ञेयश्रद्धेयानुष्ठेयार्थविरेचने विषयविषयिणोरभेदोपचारद्वारेण व्यवस्थाप्य ततस्तां ग्रन्थपद्धतिमत्र मौनीन्द्रे प्रवचने भव्यजनसमक्षं मुत्कलां मुञ्चामि ततस्तस्यां वर्त्तमानानि तानि समस्तजनादेयानि भविष्यन्ति।

किं च।

यद्येकस्यापि जन्तोस्तानि भावतः परिणमेयुः ततस्तत्कर्त्तुर्मे किं न पर्याप्तमिति। तदिदमवधार्यानेन जीवेनेयमुपमितिभवप्रपञ्चानाम कथा यथार्थाभिधाना प्रकृष्टपदार्थविकलतया सुवर्णपात्र्यादि-

व्यवच्छेदेन काष्ठपात्रीस्थानीयाभिहितज्ञानदर्शनचारित्रभेषजत्रया-त्मयैव विधास्यते। तच्चैवं स्थिते भो भव्याः श्रूयतां भवद्भिरियमभ्यर्थना। यथा तेनापि रोरेण तथा प्रयुक्तं तद्भेषजत्रयमुपादाय ये रोगिणः सम्यगुपभुञ्जते ते नीरोगतामास्कन्दन्ति युज्यते च तत्तेषां ग्रहीतुं तस्य ग्रहणे रोरोपकारसंपत्तेः। तथा मादृशापि भगवदवलोकनयावाप्तसद्गुरुपादप्रसादेन तदनुभावाविर्भूतसद्बुद्धितया यदस्यां कथायां विरचयिष्यते ज्ञानादित्रयं तच्छ्रास्यन्ति ये जीवास्तेषां तद्रागादिभावरोगनिबर्हणं संपत्स्यत एव न खलु वक्तृगुणदोषावुपेक्ष्य-वाच्याः पदार्थाः स्वार्थसाधने प्रवर्त्तन्ते। तथा हि। यद्यपि स्वयं बुभुक्षाक्षामः पुरुषः स्वामिसंबन्धिनमाहारविशेषं तदादेशेनैव तदुचितपरिजनाय प्रकटयन् भोजनायोत्सङ्गे कलयति तथाप्यसावाहारविशेषस्तं परिजनं तर्पयत्येव न वक्तृदोषेण स्वरूपं विरहयति तथेहापि योजनीयम्। तथा हि। स्वयं ज्ञानाद्यपरिपूर्णनापि मया भगवदागमानुसारेण निवेदितानि ज्ञानादीनि ये भव्यसत्वा ग्रहीष्यन्ति तेषां रागादिबुभुक्षोपशमेन स्वास्थ्यं करिष्यन्त्येव स्वरूपं हि तत्तेषामिति।

किं च।

यद्यपि भगवत्सिद्धान्तमध्यमध्यासीनमेकैकं पदमाकर्ण्यमाणं भावतः सकलं रागादिरोगजालं समुन्मूलयितुं पटिष्ठमेव स्वाधीनं च तदाकर्णनं भवतां तथा यद्यपि चिरन्तनमहापुरुषोपनिबद्धकथा-प्रबन्धश्रवणेनापि सद्भावनया क्रियमाणेन रागादित्रोटनं सुन्दरतरं संभवत्येव तथाप्यसुनोपायेन संसारसागरं तरितुकामे मयि परम-

करुणैकरसाः सन्तः प्रस्तुतकथाप्रबन्धमपि सर्वेऽपि भवन्तः श्रोतुमर्हन्तीति। तदेवमेतत्कथानकं प्रायः प्रतिपदमुपनीतं यत्पुनरन्तरान्तरा किञ्चिन्नोपनीतं तत्राप्यनेनैवानुसारेण स्वबुद्धैवोपनयः कार्यः। भवत्येव गृहीतसङ्केतानामुपमानदर्शनादुपमेयप्रतीतिरत एवेदं कथानकमादावस्यैवार्थस्य दर्शनार्थमुपन्यस्तं यतोऽस्यां कथायां न भविष्यति प्रायेण निरूपनयः पदोपन्यासस्ततोऽत्रश्रिचितानां सुखेनैव तदवगतिर्भविष्यतीत्यलमतिविस्तरेणेति।

इह हि जीवमपेक्ष्य मया निजं
यदिदमुक्तमदः सकले जने।
जगति संभवमात्रतया त्वहो
गदितमात्मनि चारु विचार्यताम् ॥
निन्दात्मनः प्रवचने परमः प्रभावो
रागादिदोषगणदौष्ट्यमनिष्टता च।
प्राक्कर्मणामतिबहुश्च भवप्रपञ्चः
प्रख्यापितं सकलमेतदिहाद्यपीठे ॥
संसारेऽत्र निरादिके विचरता जीवेन दुःखाकरे
जैनेन्द्रं मतमाप्य दुर्लभतरं ज्ञानादिरत्नत्रयम्।
लब्धे तत्र विवेकिनादरवता भाव्यं सदा वर्द्धते
तस्यैवाद्य कथानकेन भवतामित्येतदावेदितम् ॥

## इत्युपमितिभवप्रपञ्चायां कथायां पीठबन्धो नाम प्रथमः प्रस्तावः समाप्तः।

---

# अथ द्वितीयः प्रस्तावः।

अस्तीह लोके सुमेरुरिवाकालप्रतिष्ठा नीरनिधिरिव महासत्त्वसेविता कल्याणपरम्परेव मनोरथपूरणी जिनप्रणीतप्रव्रज्येव सत्पुरुषप्रमोदहेतुः समरादित्यकथेवानेकवृत्तान्ता निर्जितत्रिभुवनेव लब्धश्लाघा सुसाधुक्रियेवापुण्यैरतिदुर्लभा मनुजगतिर्नाम नगरी। सा च कीदृशी। उत्पत्तिभूमिर्धर्मस्य मन्दिरमर्थस्य प्रभवः कामस्य कारणं मोक्षस्य स्थानं महोत्सवानामिति। यस्यामुत्तुङ्गानि विशालानि विचित्रकनकरत्नभक्तिचित्राणि अतिमनोहारितया परमदेवाध्यासितानि मेरुरूपाणि देवकुलानि। यस्यां चानेकाद्भुतवस्तुस्थानभूतलेनापहसितामरनिवासाः क्षितिप्रतिष्ठितादनेकपुरकलिता भरतादिवर्षरूपाः पाटकाः अत्युच्चतया कुलशैलाकाराः पाटकपरिक्षेपाः। यस्याश्च मध्यभागवर्ती दीर्घतराकारो विजयरूपावपनपंक्तिभिर्विराजितो महापुरुषकदम्बकसङ्कुलः शुभाशुभमूल्यानुरूपपण्यलाभहेतुर्महाविदेहरूपो विपणिमार्गः। यस्याश्च निरुद्धादित्यचन्द्रादिगतिप्रसरतयातीतः परचक्रलङ्घनाया मानुषोत्तरपर्वताकारः प्राकारः। तस्मात्परतो यस्यां विस्तीर्णगम्भीरा समुद्ररूपा परिखा। यस्यां च सदा विबुधाध्यासितानि भद्रशालवनादिरूपाणि नानाकाननानि। यस्यां च बहुविधजन्तुसङ्घातजलपूरवाहिन्यो महानदीरूपा महारथ्याः। यस्यां च समस्तरथ्यावताराधारभूतौ लवणकालोदसमुद्ररूपौ द्वावेव महाराजमार्गौ। यस्यां च महाराजमार्गप्रविभक्तानि जम्बूद्वीपधातकीषण्डपुष्करवरद्वीपार्धरूपाणि वसन्ति

चीर्णेव पाटकमण्डलानि। यस्यां च लोकसुखहेतवः समुचित-स्थानस्थायिनः कल्पद्रुमरूपा भूयांसः स्थानान्तरीयनृपतय इति।

अपि च।

तस्याः कः कोटिजिह्वोऽपि गुणसम्भारगौरवम्।
शक्तो वर्णयितुं लोके नगर्याः किमु मादृशः॥
यस्यां तीर्थकृतोऽनन्ताश्चक्रिकेशवसीरिणः।
संजाताः संजनिष्यन्ते जायन्तेऽद्यापि केचन॥
या चेह सर्वशास्त्रेषु लोके लोकोत्तरेऽपि च।
अनन्तगुणसंपूर्णा दुर्लभत्वेन गीयते॥
उच्चावचेषु स्थानेषु हिण्डित्वा श्रान्तजन्तवः।
प्राप्ताः खेदविनोदेन लभन्ते यत्र निर्वृतिम्॥
विनीताः शुचयो दक्षा यस्यां धन्यतमा नराः।
न धर्मपक्षाद्यान्यन्नूनं चेतसि कुर्वते॥
यस्यां नार्यः सदानार्यकार्यवर्जनतत्पराः।
पुण्यभाजः सदा धर्मं जैनेन्द्रं पर्युपासते॥
किं वाच बहुनोक्तेन वस्तु नास्ति जगत्त्रये।
तस्यां निवसतां सम्यक् पुंसां यन्नोपपद्यते॥
सा हि रत्नाकरैः पूर्णा सा विद्याभूमिरुत्तमा।
सा मनोनयनानन्दा सा दुःखौघविनाशिका॥
साखिलाश्चर्यभूयिष्ठा सा विशेषसमन्विता।
सा मुनीन्द्रसमाकीर्णा सा सुश्रावकभूषिता॥
सा जिनेन्द्राभिषेकादितोषिताखिलभव्यका।

सापवर्गाय भव्यानां सा संसाराय पापिनाम् ॥
जीवोऽजीवस्तथा पुण्यं पापाद्याः सन्ति नेति वा ।
अयं विचारः प्रायेण तस्यामेव विशेषतः ॥
यस्तस्यामपि संप्राप्तो नगर्यां पुरुषाधमः ।
न युज्यते गुणैर्लोकैः सोऽधन्य इति गद्यते ॥
तां विमुच्य न लोकेऽपि स्थानमस्तीह मानवाः ।
संपूर्णं यत्र जायेत पुरुषार्थचतुष्टयम् ॥१२॥

तस्यां च मनुजगतौ नगर्यामतुलबलपराक्रमः स्ववीर्याक्रान्त-भुवनत्रयः शक्रादिभिरप्रतिहतशक्तिप्रसरः कर्मपरिणामो नाम महानरेन्द्रः ।

यो नीतिशास्त्रमुल्लंघ्य प्रतापैकरसः सदा ।
तृणतुल्यं जगत्सर्वं विलोकयति हेलया ॥
निर्दयो निरनुक्रोशः सर्वावस्थासु देहिनाम् ।
स चण्डशासनो दण्डं पातयत्यनपेक्षया ॥
स च केलिप्रियो दुष्टो लोभादिभटवेष्टितः ।
नाटकेषु परां काष्ठां प्राप्तोऽत्यन्तविचक्षणः ॥
नास्ति मत्तो जगत्यन्यो मसेति मदविह्वलः ।
स राजोपद्रवं कुर्वन्न धनायति कस्यचित् ॥
ततो हास्यपरो लोकान् नानाकारैर्विडम्बनैः ।
सर्वान्विडम्बयन्नुच्चैर्नाटयत्यात्मनोऽग्रतः ॥
तेऽपि लोका महान्तोऽपि प्रतापमसहिष्णवः ।
तस्य यद्यदसौ वक्ति तत्तत्सर्वं प्रकुर्वते ॥

ततश्च ।

काँश्चिन्नारकरूपेण क्रोशतो वेदनातुरान् ।
नर्तयत्यात्मनः प्रीतिं मन्यमानो मुहुर्मुहुः ॥
यथा यथा महादुःखैर्विक्लवांस्तानुदीक्षते ।
तथा तथा मनस्युच्चैरत्यन्तमेष तोषतः ॥
काँश्चिद्दर्पोद्धुरो भूत्वा स इत्थं बत भाषते ।
भयविह्वलचित्तत्वादाज्ञानिर्देशकारकान् ॥
अरे रे तिर्यगाकारं गृहीत्वा रङ्गभूमिषु ।
कुरुध्वं नाटकं तूर्णं मम चित्तप्रमोदकम् ॥

ततश्च ।

काकरासभमार्जारमूषकाकारधारकाः ।
सिंहचित्रकशार्दूलमृगवेषविडम्बकाः ॥
गजोष्ट्राजबलीवर्दकपोतश्येनरूपिणः ।
यूकापिपीलिकाकीटमत्कुणाकारधारिणः ॥
अनन्तरूपास्तिर्यञ्चो भूत्वा तच्चित्तमोदनम् ।
ते नाटकं महाहास्यकारणं नाटयन्ति वै ॥
कुब्जवामनमूकान्धदद्रुव्याधिविसंगतैः ।
तथान्यन्मानुषैः पात्रैर्नाटकं नाटयत्यसौ ॥
ईर्ष्याशोकभयद्वेषैर्देववेषविडम्बकैः ।
विहितं नाटकं दृष्ट्वा स तुष्टो बत जायते ॥
तथा यथेष्टचेष्टोऽसौ पुनस्तानेव सुन्दरैः ।
आकारैर्योजयत्युच्चैर्लोकाम्नाटककाम्यया ॥

विडम्ब्यमानास्ते तेन प्राणिनः प्रभविष्णुना ।
त्रातारमात्मनः कंचिन्न लभन्ते कदाचन ॥
स हि विज्ञापनातीतः स्वतन्त्रो यच्चिकीर्षति ।
तत्करोत्येव केनापि न निषिद्धो निवर्तते ॥

ततश्च ।

क्वचिदिष्टवियोगार्तं क्वचित्सङ्गमसुन्दरम् ।
क्वचिद्रोगभराक्रान्तं क्वचिद्दारिद्र्यदूषितम् ॥
क्वचिदापद्गतानेकसत्त्वसङ्घातदारुणम् ।
क्वचित्सम्यक्त्वसुद्भूतमहानन्दमनोहरम् ॥
विलंघ्य कुलमर्यादां प्रधानकुलपुत्रकैः ।
अनार्यकार्यकारित्वात् क्वचिद्दर्शितविस्मयम् ॥
क्वचिदनुरक्तभर्तारं मुञ्चद्भिः कुलटागणैः ।
नीचगामिभिराश्चर्यं दधानं सुकुलोद्गतैः ॥
क्वचित् कृतचमत्कारं नृत्यद्भिर्हास्यहेतुभिः ।
स्वागमोत्तीर्णकर्तव्यासक्तपाषण्डमण्डलैः ॥
तदेवंविधवृत्तान्तप्रतिबद्धमनाकुलम् ।
संसारनाटकं चित्रं नाटयत्येष लीलया ॥
रागद्वेषाभिधानौ द्वौ मुरजौ तत्र नाटके ।
दुष्टाभिसन्धिनामा तु तयोरास्फालको मतः ॥
मानक्रोधादिनामानो गायनाः कलकण्ठकाः ।
महामोहाभिधानस्तु सूत्रधारप्रवर्तकः ॥
भोगाभिलाषसंज्ञोऽत्र नान्दीमङ्गलपाठकः ।

अनेकविब्बोककरः कामनामा विदूषकः ॥
कृष्णादिलेश्यानामानो वर्णकाः पात्रमण्डनाः।
योनिः प्रविश्यत्पात्राणां नेपथ्यं व्यवधायकम् ॥
भयादिसंज्ञा विज्ञेयाः कंग्रिकास्तत्र नाटके ।
लोकाकाशोदरा नाम विशाला रङ्गभूमिका ॥
पुद्गलस्कन्धनामानः शेषोपस्करसञ्चयाः ।
इत्थं समग्रसामग्रीयुक्ते नाटकपेटके ॥
नानापात्रपरावृत्त्या सर्वलोकविडम्बनाम् ।
अपरापररूपेण कुर्वाणोऽसौ प्रमोदते ॥
किं वात्र बहुनोक्तेन नास्ति तद्दस्तु किंचन ।
यदसौ मनसोऽभिष्टं न करोति महानृपः ॥

तस्य चैवंभूतस्य चिरगण्डगलितवनहस्तिन इव सर्वत्रास्खलितप्रसरतया यथेष्टचेष्टया विचरतो यथाभिरुचितकारिणः कर्मपरिणाममहानृपतेः समस्तान्तःपुरकुलतिलकभूता ऋतुलक्ष्मीणामिव शरल्लक्ष्मीः शरल्लक्ष्मीणामिव कुमुदिनी कुमुदिनीनामिव कमलिनी कमलिनीनामिव कलहंसिका कलहंसिकानामिव राजहंसिका बह्वीनां नियतियदृच्छाप्रभृतीनां देवीनां मध्ये निजरूपलावण्यवर्णविज्ञानविलासकलादिभिर्गुणै रमणीयत्वेन प्रधानतमा कालपरिणतिर्नाम महादेवी। सा च तस्य नृपतेर्जीवितमिवात्यन्तवल्लभा आत्मीयचित्तवृत्तिरिव सर्वकार्येषु यत्कृतप्रमाणा सुमन्त्रिसंहतिरिव स्वयमपि किंचित् कुर्वता तेन प्रष्ट्या सुमित्रसन्ततिरिव विश्वासस्थानं। किं बहुना। तदायत्तं हि तस्य सकलसमाधिराज्य-

मिति । अत एव चन्द्रिकामिव शशधरो रतिमिव मकरध्वजो लक्ष्मीमिव केशवः पार्वतीमिव त्रिनयनस्तां कालपरिणतिं महादेवीं स कर्मपरिणामो महानरेश्वरो विरहकातरतया न कदाचिदेकाकिनीं विरहयति किं तर्हि सर्वत्र गच्छंस्तिष्ठंश्चात्मसंनिहितां धारयति । सापि च दृढमनुरक्ता भर्तरि न तद्वचनं प्रतिकूलयति । परस्परानुकूलतया हि दम्पत्योः प्रेम निरन्तरं संपद्यते नान्यथा । ततस्तया वर्तमानयोस्तयोर्गाढं निरूढिमागतं प्रेम विच्छिन्ना तद्विचलनाशङ्का । ततश्चासौ कालपरिणतिर्गुरुतया महाराजप्रसादस्योन्मादकारितया यौवनस्य तुच्छतया स्त्रीहृदयस्य चञ्चलतया तत्स्वभावानां कुतूहलहेतुतया तथाविधविडम्बनस्य सर्वत्र लब्धप्रसराहं प्रभवामीति मन्यमाना युक्ता सुषमदुःषमादिभिः शरीरभूताभिः प्रियसखीभिः परिवेष्टिता समयावलिकामुहूर्तप्रहरदिनाहोरात्रपक्षमासर्त्वयनसंवत्सरयुगपल्योपमसागरोपमावसर्पिण्युत्सर्पिणीपुद्गलपरावर्तादिना परिकरेण विविधकार्यकरणक्षमास्मि लोकेऽहमिति संजातौत्सुक्या तस्मिन्नेव कर्मपरिणाममहाराजप्रवर्तिते चित्रसंसारनाटके तस्यैव राज्ञो निकटोपविष्टा सती साहङ्कारमेवं निमन्त्रयति । यदुत यान्येतानि योनिजवनिकाव्यवहितानि पात्राणि तिष्ठन्ति मद्वचनेन निर्गच्छन्तु शीघ्रमेतानि निर्गतानि चोपरतरुदितव्यापाराणि ग्टह्णन्तु मातुः स्तनं पुनर्धूलीधूसराणि रङ्गन्तु भूमौ पुनर्लुठमानानि पदे पदे परिस्खलन्तु चरणाभ्यां कुर्वन्तु मूत्रपुरीषविमर्दनबीभत्समात्मानं पुनरतिक्रान्तबालभावानि धारयन्तु कुमारतां क्रीडन्तु नानाविधक्रीडाविब्बोकैः

तथाहि । कर्मपरिणामस्य संसारनाटकान्तर्भूतजन्तुसन्तानापरापररूपकरणगोचर एव प्रभावः । तस्याः पुनः कालपरिणतेः संसारनाटकव्यतिकरातीतरूपेष्वपि निर्वृतिनगरीनिवासिलोकेषु क्षणे क्षणेऽपरापरावस्थाकरणचातुर्यं समस्त्येवेति । अतः सा संजातोत्सेकातिरेका किं न कुर्यादिति । तदेवमनवरतप्रवृत्तेन परमाद्भुतभूतेन तेन नाटकेन तयोर्देवीनृपयोर्विलोकितेन संपद्यते मनःप्रमोदः । तद्दर्शनमेव तौ स्वराज्यफलमवबुध्येते इति ।

तयोश्च तिष्ठतोरेवमन्यदा रहसि स्थिता ।
सहर्षं वीक्ष्य राजानं सा देवी तमवोचत ॥
भुक्तं यन्नाथ भोक्तव्यं पीतं यत्पेयमञ्जसा ।
मानितं यन्मया मान्यं साभिमानं च जीवितम् ॥
नास्त्येव तत्सुखं लोके यस्य नास्वादितो रसः ।
प्राप्तं समस्तकल्याणं प्रसादाद्देवपादयोः ॥
दृष्टं द्रष्टव्यमप्यत्र लोके यन्नाथ सुन्दरम् ।
किं तु पुत्रसुखं देव मया नाद्यापि वीक्षितम् ॥
यदि तद्देवपादानां प्रसादादेव जायते ।
ततो मे जीवितं श्लाघ्यमन्यथा जीवितं वृथा ॥

नरपतिरुवाच ।

साधु साधूदितं देवि रोचते मह्यमप्यदः ।
समदुःखसुखो देव्या वर्तेऽहं सर्वकर्मसु ॥

किं च ।

न विषादोऽत्र कर्तव्यो देव्या यस्मात्प्रयोजने ।

आवयोरेकचित्तत्वं यत्र तज्जायते ध्रुवम् ॥

कालपरिणतिरुवाच ।

चारु चारूदितं नाथैर्विहितो मदनुग्रहः ।
भविष्यतीत्यमेवेदं बद्धो ग्रन्थिरयं मया ॥
आनन्दजलपूर्णाक्षी भर्तुर्वाक्येन तेन सा ।
ततः संजातविश्रम्भा सतोषा समपद्यत ॥
अन्यदा पश्चिमे यामे रजन्याः शयनं गता ।
स्वप्ने कमलपत्राक्षी दृष्ट्वेवं सा व्यबुध्यत ॥
वदनेन प्रविष्टो मे जठरे निर्गतस्ततः ।
नीतः केनापि मित्रेण नरः सर्वाङ्गसुन्दरः ॥
ततो हर्षविषादाभ्यां वहन्ती रसमुत्थिता ।
तं स्वप्नं नरनाथाय साचचक्षे विचक्षणा ॥

नरपतिरुवाच ।

स्वप्नस्यास्य फलं देवि मम चेतसि भासते ।
भविष्यत्युत्तमः पुत्रस्तवानन्दविधायकः ॥
केवलं न चिरं गेहे तावके स भविष्यति ।
धर्मसूरिवचोबुद्धः स्वार्थसिद्धिं करिष्यति ॥

कालपरिणतिरुवाच ।

*आयतां पुत्रकस्तावत्पर्याप्तं तावतैव मे ।*
करोतु रोचते तस्मै यत्तदेव ततः परम् ॥
तदद्याविरभूद्गर्भस्तं वहन्त्या प्रमोदतः ।
अथ मासे तृतीयेऽस्याः संजातोऽयं मनोरथः ॥

अभयं सर्वसत्त्वेभ्यः सर्वार्थिभ्यो धनं तथा।
ज्ञानं च ज्ञानशून्येभ्यस्तेयच्छामि यथेच्छया॥
तथाविधविकल्पं तं निवेद्य वरभूभुजे।
संपूर्णेच्छा ततो जाता दृष्टेष्टं तदनुज्ञया॥
अथ संपूर्णकालेन मुहूर्ते सुन्दरेऽनघा।
सा दारकं शुभं सूता सर्वलक्षणसंयुतम्॥

ततः ससम्भ्रममुपगम्य निवेदितं दारकस्य जन्म नरपतये प्रियनिवेदिकाभिधानया दासदारिकया। दत्तं च तेनाह्लादातिरेकसंपाद्यमनाख्येयमवस्थान्तरमनुभवता तस्यै मनोरथाधिकं पारितोषिकं दानं। दत्तश्चानन्दपुलकोद्भेदसुन्दरं देहं दधानेन महत्तमानामादेशः। यदुत भो भो महत्तमाः देवीपुत्रजन्माभ्युदयमुद्दिश्य घोषणापूर्वकं ददध्वमनपेक्षितसारासाराधारविचाराणि महादानानि पूजयत गुरुजनं संमानयत परिजनं पूरयत प्रणयिजनं मोचयत बन्धनागारं वादयतानन्दमर्दलसन्दोहं नृत्यत यथेष्टमुद्दामतया पिबत पानं सेवध्वं दयिताजनं मा ग्रहीत शुल्कं मुञ्चत दण्डं आश्वासयत भीतलोकं वसन्तु सुस्थचित्ताः समस्ताः प्रजाः नास्ति कस्यचिदपराधगन्धोऽपीति। ततो यदाज्ञापयति देव इति विनयनतोत्तमाङ्गैः प्रतिपद्य संपादितं तद्राजशासनं महत्तमैः। निर्वर्तितो ऽशेषजनचमत्कारकारी जन्मदिनमहोत्सवः। प्रतिष्ठापितं च समुचिते काले दारकस्य नरनाथेन स्वचित्तेनैवं पर्यालोच्य यतोऽस्य गर्भावतारकाले जननी सर्वाङ्गसुन्दरं नरं वदनेन प्रविशन्तं दृष्टवती ततो ऽस्य भवतु भव्यपुरुष इति नाम। ततस्तदाकर्ण्य

देवी राजानमुवाच। देवाहमपि पुत्रकस्य किंचिन्नाम कर्तुमभिलषामि तदनुजानातु देव इति। नृपतिराह। देवि कः कल्याणेषु विरोधः अभिधीयतां समीहितमिति। ततस्तयोक्तं। यतोऽत्र गर्भस्थे मम कुशलकर्मकरणपक्षपातिनी मतिरभूत्ततोऽस्य भवतु सुमतिरित्यभिधानं। ततो ऽहो चौरे खण्डक्षेपकल्पमेतद्देवीकौशलेन संपन्नं यद्भव्यपुरुषस्य सतः सुमतिरित्यभिधानान्तरमिति ब्रुवाणः परितोषमुपागतो राजा विशिष्टतरं नामकरणमहोत्सवं कारयामास॥

इतश्चास्ति तस्यामेव मनुजगतौ नगर्यामगृहीतसङ्केता नाम ब्राह्मणी। सा जनवादेन नरपतिपुत्रजन्मनामकरणवृत्तान्तमवगम्य सखीं प्रत्याह। प्रियसखि प्रज्ञाविशाले पश्य यच्छ्रूयते महाश्चर्यं लोके यथा कालपरिणतिर्महादेवी भव्यपुरुषनामानं दारकं प्रसूतेति। ततः प्रज्ञाविशालयोक्तं। प्रियसखि किमत्राश्चर्यं। अगृहीतसङ्केताह। यतो मयावधारितमासीत्। किलैष कर्मपरिणाममहाराजो निर्बी-ः स्वरूपेण इयमपि कालपरिणतिर्महादेवी वन्ध्येति। इदानीं पुनरनयोरपि पुत्रोत्पत्तिः श्रूयत इति महदेव तदाश्चर्यं। प्रज्ञाविशालाह। अयि मुग्धे सत्यमगृहीतसङ्केतासि यतो न विज्ञातस्त्वया परमार्थः। अयं हि राजा अविवेकादिभिर्मन्त्रिभिरतिवत्सबीज इति मा भूद्दुर्जनचक्षुर्दोष इति कृत्वा निर्बीज इति प्रकाशितो लोके। इयमपि महादेव्यनल्पापत्यजनयित्री तथापि दुर्जनचक्षुर्दोषभयादेव तैरेव मन्त्रिभिर्वन्ध्येति लोके प्रख्याप्यते। तथाहि। यावन्तः कश्चित्केचिज्जगति आदन्ते

तेषां सर्वेषामेतावेव देवीनृपौ परमवीर्ययुक्ततया परमार्थतया जननीजनकौ । अन्यच्च । किं न दृष्टं श्रुतं वा क्वचिदपि प्रियसख्या अनयोर्नाटकं पश्यतोर्यन्माहात्म्यं । यदुत राजा समस्तपापाणि यथेच्छया नारकतिर्यङ्नरामरगतिलक्षणसंसारान्तर्गतानेकयोनिलक्षप्रभवजन्तुरूपेण नाटयति । महादेवी पुनस्तेषामेव महाराजजनितनानारूपाणां समस्तपापाणां गर्भावस्थितबालकुमारतरुणमध्यमजराजीर्णमृतगर्भप्रविष्टनिष्क्रान्तादिरूपाण्यनन्तवाराः कारयतीति । अगृहीतसङ्केताह । प्रियसखि श्रुतमेतन्मया । किं तु यदि नाम कर्मपरिणामस्य राज्ञः समस्तपापपरावर्तने सामर्थ्यं कालपरिणतेर्वा महादेव्यास्तेषामेवापरापरावस्थाकरणे शक्तिः तत्किमेतावतैवानयोर्जननीजनकत्वं संभवति । प्रज्ञाविशालाह । अयि प्रियवयस्येऽत्यन्तमुग्धासि यतो गौरपीहार्थकथितमवबुध्यते त्वं पुनः परिस्फुटमपि कथ्यमानं न जानीषे । यतः संसार एवात्र परमार्थतो नाटकं । तस्य च यौ जनकावेतौ परमार्थतः सर्वस्य जननीजनकाविति । अगृहीतसङ्केताह । प्रियसखि यदि समस्तजगज्जननीजनकयोरपि देवीनृपयोर्देव्या वन्ध्यात्वं नृपस्य निर्बीजत्वं दुर्जनचक्षुर्दोषभयाद्विवेकादिभिर्मन्त्रिभिः प्रख्यापितं लोके तत्किमित्यधुनायं भव्यपुरुषोऽनयोः पुत्रतया महोत्सवकलकलेन प्रकाशित इति । प्रज्ञाविशालाह । समाकर्णयास्य प्रकाशने यत्कारणं । अस्यामेव नगर्यां शुद्धसत्यवादी समस्तसत्त्वसङ्घातहितकारी सर्वभावस्वभाववेदी अनयोश्च कालपरिणतिकर्मपरिणामयोर्देवीनृपयोः समस्तरहस्यस्थानेष्वत्यन्तभेदज्ञः सदागमो नाम

परमपुरुषः। अस्ति च तेन सार्धं मम घटना। स चान्यदा दृष्टो मया सहर्षः। पृष्टो निर्बन्धेन हर्षकारणं। तेनोक्तं। आकर्णय भद्रे यदि कुतूहलं। येयं कालपरिणतिर्महादेवी अनया रहसि विज्ञापितो राजा। यदुत निर्विण्णाहमनेनात्मनोऽलीकवन्ध्याप्रवादेन। यतोऽहमनन्तापत्यापि दुर्जनचक्षुर्दोषभयादविवेकादिभिर्मन्त्रिभिर्वन्ध्येति प्रख्यापिता लोके ममैवापत्यान्यन्यजनापत्यतया गीयन्ते। सोऽयं खेदजननिमित्तेन नाटकत्यागन्यायः। तदिदं वन्ध्याभावलक्षणं ममायशःकलङ्कं क्षालयितुमर्हति देवः। ततो नृपेणोक्तं। देवि ममापि निर्बीजतया समानमेतत्। केवलं धीरा भव। लब्धो मयायशःपङ्कक्षालनोपायः। देव्याह। कतमोऽसौ। प्रभुराह। देवि अस्यामेव मनुजगतौ महाराजधान्यां वर्तमानाया भवत्या मन्त्रिमण्डलवचनमनपेक्ष्य प्रकाश्यते प्रधानपुत्रस्य जन्म। क्रियते महानन्दकलकलः। ततश्चिरकालरूढमावयोर्निर्बीजत्ववन्ध्याभावलक्षणमयशःकलङ्कं क्षालितं भविष्यतीति। ततः सतोषया प्रतिपन्नं महाराजवचनं देव्या कृतं च यथालोचितं ताभ्यां। ततः प्रधानविशाले योऽयं भव्यपुरुषो जातः स ममात्यन्तवल्लभः। अस्य जन्मनाहमात्मानं सफलमवगच्छामीत्यतो हर्षमुपागत इति। ततो मयोक्तं। शोभनं ते हर्षकारणं। ततोऽयमनेन कारणेन भव्यपुरुषो देवीनृपपुत्रतया प्रकाशित इति। अगृहीतसङ्केतयोक्तं। साधु वयस्ये साधु सुन्दरमाख्यातं भवत्या नाशितो मे सन्देहः। यथा च त्वत्समीपमुपगच्छन्त्या मया रङ्गमार्गे समाकर्णितो लोकप्रवादस्तथा देवीनृपयोः क्षालितमेवायशः-

कलङ्कमवगच्छामि। प्रज्ञाविशालयोक्तं। किमाकर्णितं प्रियसख्या। तयोक्तं। दृष्टो मया तत्र बकुलोकमध्ये सुन्दराकारः पुरुषः। स च सविनयं पृष्टः पौरमहत्तमैः। भगवन् य एष राजदारको जातः स कीदृग्गुणो भविष्यतीति। तेनोक्तं। भद्राः शृणुत। समस्तगुणभारभाजनमेष वर्धमानः कालक्रमेण भविष्यतीति। अतो न शक्यन्तेऽस्य सर्वे गुणाः कथयितुं। कथिता अपि न पार्यन्तेऽवधारयितुं। तथापि लेशोद्देशतः कथयामि। भविष्यत्येष निदर्शनं रूपस्य निलयो यौवनस्य मन्दिरं लावण्यस्य दृष्टान्तः प्रश्रयस्य निकेतनमौदार्यस्य निधिर्विनयस्य सदनं गाम्भीर्यस्य आलयो विज्ञानस्य आकरो दाक्षिण्यस्य उत्पत्तिभूमिर्दाक्ष्यस्य इयत्तापरिच्छेदः स्थैर्यस्य प्रत्यादेशगोचरो लज्जायाः उदाहरणं विषयप्रागल्भ्यस्य सङ्कर्ता धृतिस्मृतिश्रद्धाविविदिषादिसुन्दरीणामिति। अन्यच्च अनेकभवाभ्यस्तकुशलकर्मतया बालकालेऽपि प्रवर्तमानोऽयं न भविष्यति केलिप्रियः दर्शयिष्यति जने वत्सलतां समाचरिष्यति गुरुविनयं प्रकटयिष्यति धर्मानुरागं न करिष्यति लोलतां विषयेषु विजेष्यते कामक्रोधादिकमान्तरमरिषड्वर्गं नन्दयिष्यति भवतां चित्तानीति। ततस्तदाकर्ण्य सभयं सहर्षं च दिशो निरीक्षमाणैस्तैरभिहितं। अहो विषमशीलतया समस्तजनविडम्बनाहेतुभूतयापि कालपरिणत्या कर्मपरिणामेन चेदमेकं सुन्दरमाचरितं यदाभ्यामस्यां सकलदेशविख्यातायां मनुजगतौ नगर्यामेष भव्यपुरुषः समतिर्जनितः। चालितान्येतज्जननेनाभ्यामात्मनः समस्तदुश्चरितान्यपुचलायशयेनि। तदिदं समस्तमवहितचित्तया मयाकर्णितं। तत एव संजातो मे मनसि वितर्कः।

कथं पुनरनपत्यतया प्रसिद्धयोर्देवीनृपयोः पुत्रोत्पत्तिः। को वैष पुरुषः सर्वज्ञ इव भविष्यत्कालभाविनीं राजदारकवक्तव्यतां समस्तां कथयतीति। ततश्चिन्तितं मया। प्रियसखीमेतद्द्वयमपि प्रश्नयिष्यामि। कुशला हि सा सर्ववृत्तान्तानां। तत्रापनीतो भवत्या प्रथमसन्देहः। साम्प्रतं मे द्वितीयमपनयतु भवती। प्रज्ञाविशालयोक्तं। वयस्ये कार्यद्वारेणाहमवगच्छामि स एव मम परिचितः परमपुरुषः सदागमनामा तदाचचाणोऽवलोकितो भवत्या। यतः स एवातीतानागतवर्तमानकालभाविनो भावान् करतलगतामलकमिव प्रतिपादयितुं पटिष्ठो नापरः। यतो विद्यन्तेऽस्यां मनुजगतौ नगर्यामन्येऽपि तादृशा अभिनिबोधावधिमनःपर्यायकेवलनामानश्चत्वारः परमपुरुषाः। केवलं न तेषां परं प्रति प्रतिपादनशक्तिरस्ति। मूका हि ते चत्वारोऽपि स्वरूपेण। तेषामपि स्वरूपं सत्पुरुषचेष्टितमवलम्बमानः परगुणप्रकाशनव्यसनितया लोकसमचमेष एव सदागमो भगवानुत्कीर्तयति। अगृहीतसङ्केतयोक्तं। वयस्ये किं पुनः कारणमेष राजदारकोऽस्य सदागमस्यात्यन्तवल्लभः। किं चैतज्जन्मात्मानमयं सफलमवगच्छतीति श्रोतुमिच्छामि। प्रज्ञाविशालयोक्तं। एष हि महापुरुषतया सततं परोपकारकरणपरायणः समस्तजन्तुभ्यो हितमाचरत्येव। केवलमेते पापिष्ठाः प्राणिनो नास्य वचने वर्तन्ते। ते हि न लचयन्ति वराका यदस्य भगवतो माहात्म्यं। ततस्तेभ्यो हितमुपदिशन्तमप्येनं सदागमं केचिद् दूषयन्ति केचिदपकर्णयन्ति केचिदुपहसन्ति केचित्तदुपदिष्टाकरणशक्तिमात्मनो दीपयन्ति केचित्तद्वचनाद् दूरत एव

चरन्ति केचित्तं प्रतारकधिया शङ्कन्ते केचित्तद्वचनमादित एव नाववुध्यन्ते केचित्तद्वचनं श्रुतमपि न रोचयन्ति केचित्तद्रोचितमपि नानुतिष्ठन्ति केचिदनुष्ठानमधिकृतमपि पुनः शिथिलयन्ति। ततश्चैवं स्थिते नास्य सम्यक् संपद्यते परोपकारकरणलक्षणा समीहितसिद्धिः। ततोऽयमनया सततं प्राणिनामपात्रतया गाढमुद्वेजितः। भवत्येव हि सद्गुरूणामपि निष्फलतया कुपात्रगोचरो महाप्रयासश्चित्तखेदहेतुः। अयं तु राजदारको भव्यपुरुष इति पात्रभूतोऽस्य प्रतिभासते। भव्यपुरुषः सन्नपि यदि दुर्मतिः स्यात् ततो न पात्रतां लभेत। अयं तु राजदारको यतः सुमतिरतः पात्रभूत एवेति कृत्वामुष्य सदागमस्यात्यन्तवल्लभः। अन्यच्च। अयं सदागमो मन्यते। यतोऽस्य दारकस्यैवंरूपतया जनकत्वादेव सुन्दरः कर्मपरिणामः जननीत्वादेव चानुकूला कालपरिणतिः ततोऽयं विमुक्तबालभावः सुन्दरतया निजस्वभावस्य प्रत्यासन्नतया कल्याणपारम्पर्यस्य प्रमोदहेतुतयैवंविधपुरुषाणां सद्दर्शनस्य मामुपलभ्य नियमेनास्य भविष्यति मनस्येवंविधो वितर्कः। यथा सुन्दरेयं मनुजगतिर्नगरी यस्यामेष सदागमः परमपुरुषः प्रतिवसति। ममाप्यस्ति प्रायेण योग्यता काचित्तथाविधा यया तेन सह मीलकः संपन्नः। ततोऽमुं परमपुरुषं विनयेनाराध्यास्य सम्बन्धि ज्ञानमभ्यस्यामि। ततो मदनुकूलत्वाज्जननीजनकयोस्ताभ्यां समर्पितो भविष्यति ममैष शिष्यः। ततोऽहमस्य संक्रामितनिजज्ञानः कृतकृत्यो भविष्यामीति बुद्ध्यायं सदागमोऽस्य सुमतेर्भव्यपुरुषस्य जन्मना सफलमात्मानमवगच्छतीति। अत एव संजातपरितोषतया

जनसमक्षं राजदारकगुणानेष वर्णयति ॥ अगृहीतसङ्केतयोक्तं : प्रियसखि किं पुनरस्य भगवतः सदागमस्य माहात्म्यं यदेते पापिष्ठसत्त्वा नावबुध्यन्ते ऽनवबुध्यमानाश्च नास्य वचने वर्तन्त इति । प्रज्ञाविशालयोक्तं । वयस्ये समाकर्णय । य एव सर्वथा-निवारितशक्तिप्रसरः कर्मपरिणामो महाराजो यथेष्टचेष्टया संसार-नाटकमावर्तयमानः सततमीश्वरान्दरिद्रयति सुभगान्दुर्भगयति सुरूपान् कुरूपयति पण्डितान्मूर्खयति शूरान् क्लीबयति मानिनो दीनयति तिरश्चो नारकयति नारकान्मनुष्ययति मनुष्यान्देव-यति देवान् पशुभावमानयति नरेन्द्रमपि कीटयति चक्रवर्तिन-मपि द्रमकयति दरिद्रादीनीश्वरादिभावान् प्रापयति किं बहुना । यथेष्टं भावपरिवर्तनं विदधानो न क्वचित्प्रतिहन्यते । अयमप्यस्य भगवतः सदागमस्य सम्बन्धिनोऽभिधानादपि बिभेति गन्धादपि पलायते । तथाहि । तावदेष कर्मपरिणाम एतान्समस्तलोका-न्संसारनाटकविडम्बनया विडम्बयति यावदयं सदागमो भगवान्न हुंकारयति । यदि पुनरेष हुंकारयेत्ततो भयातिरेकसस्त-समस्तगात्रो महासमरसङ्कटे कातरनर इव प्राणान् स्वयमेव समस्तानपि मुञ्चेत् । मोचितास्त्वनेनामुष्मादनन्ताः प्राणिनः ॥ अगृहीतसङ्केतयोक्तं । ते किमिति न दृश्यन्ते । प्रज्ञाविशालाह । अस्ति कर्मपरिणाममहाराजभुक्तेरतिक्रान्ता निर्वृतिर्नाम महानगरी । ततस्ते सदागमहुङ्कारेण कर्मपरिणामप्रभवत्वमात्मन्युपलभ्य मोचिता वयं सदागमेनेति मत्वा कर्मपरिणामशिरसि पाददान-दारेणोड्डीय तस्यां गच्छन्ति । गताश्च तस्यां सकलकालं समस्तो-

पद्रवत्राणरहिताः परमसुखिनस्तिष्ठन्ति। तेन कारणेन ते नेह दृश्यन्ते। अगृहीतसङ्केतयोक्तं। यद्येवं किमित्येष सर्वलोकान्न मोचयति। कदर्थिता ह्येते वराकाः सर्वेऽप्यनेनातिविषमशीलतया कर्मपरिणामराजेन। तत्र युक्तमस्य महापुरुषशेखरस्य सत्यामेवं-विधशक्तौ तत्कदर्थनस्योपेक्षणमिति। प्रज्ञाविशालाह। सत्यमेत-त्केवलं प्रकृतिरियमस्य भगवतः सदागमस्य यया वचनविपरीतका-रिषु कुपात्रेष्ववधीरणां विधत्ते। ततस्तेनावधीरिताः सन्तो नाथरहिता इति मत्वा गाढतरं कर्मपरिणामराजेन कदर्थ्यन्ते। ये तु पात्रभूततयास्य निर्देशकारिणो भवन्ति तानेव स्वां प्रकृति-मनुवर्तमानः कर्मपरिणामकदर्थनायाः सर्वथायं मोचयति। येऽपि लोका भगवतोऽस्य सदागमस्योपरि भक्तिमन्तोऽप्यस्य सम्बन्धि वचनं तथाविधशक्तिविकलतया संपूर्णमनुष्ठातुं न शक्नुवन्ति किं तर्हि तन्मध्याद्बहुतमं बहुतरं बहु स्तोकं स्तोकतरं स्तोकतमं वा कुर्वन्ति भक्तिमात्रकं वास्योपरि विदधति नाममात्रं वास्य गृह्णन्ति यदि वा येऽस्य भगवतः सम्बन्धिनि वचने वर्तन्ते महात्मानस्तेषामुपरि धन्याः कृतार्थाः पुण्यभाजः सुलब्धजन्मान एत इत्यादिवचनलिङ्ग-गम्यं पक्षपातं कुर्वन्ति यदास्य भगवतो ऽभिधानमात्रमप्यजानानाः प्रकृत्यैव ये भद्रका भवन्ति ततश्च मार्गानुसारिसदन्धन्यायेनाना-भोगतो ऽप्यस्य वचनानुसारेण वर्तन्ते तानप्येवंविधाननन्तविकल्पा-ल्लोकानेष कर्मपरिणामो महानरेन्द्रो यद्यपि संसारनाटके किय-न्तमपि कालं नाटयति तथापि सदागमस्याभिप्रेता एत इति मत्वा नाधमपात्रभावं नारकतिर्यक्कुमानुषकदमररूपं तेषां

विधत्ते । किं तर्हि केषांचिदनुत्तरसुररूपं दर्शयति केषांचिद् ग्रैवेयकामराकारं प्रकटयति केषांचिदुपरितनकल्पोपपन्नदेवरूपतां जनयति केषांचिदधस्तनकल्पोपपन्नमहर्द्धिलेखकरणिं कारयति केषांचिद्भुविभुरूपतां रचयति केषांचिच्चक्रवर्तिमहामण्डलिकादिप्रधानपुरुषभावं भावयति । सर्वथा प्रधानपात्ररूपतां विहाय न कदाचिद्रूपान्तरेण तान्नर्तयति । तत्पर्याप्तमेतावतास्य भगवतः सदागमस्य माहात्म्येन यदेवंविधसामर्थ्ययुक्तोऽप्येष कर्मपरिणामो महानृपतिरेतद्भयाक्रान्तहृदयः खल्वेवं वर्तते ।

अन्यच्च कथ्यते तुभ्यं कौतुकं यदि विद्यते ।
रूपं सदागमस्यास्य तद् बुध्यस्व मृगेक्षणे ॥
एष एव जगन्नाथो वत्सलः परमार्थतः ।
एष एव जगत्त्राणमेष एव सुबान्धवः ॥
एष एव विपद्गर्ते पततामवलम्बनम् ।
एष एव भवाटव्यामटतां मार्गदेशकः ॥
एष एव महावैद्यः सर्वव्याधिनिबर्हणः ।
एष एव गदोच्छेदकारणं परमौषधम् ॥
एष एव जगद्दीपः सर्ववस्तुप्रकाशकः ।
प्रमादराक्षसाच्चूर्णमेष एव विमोचकः ॥
एषोऽविरतिजाम्बालकल्मषक्षालनक्षमः ।
एष एव च योगानां दुष्टानां वारणोद्यतः ॥
शब्दादिचरटाक्रान्ते हृतधर्मधने जने ।
समर्थो भगवानेष नान्यस्तस्य विमोचने ॥

एष एव महाघोरनरकोद्धरणक्षमः।
पङ्गुलदुःखसङ्घातघातकोऽप्येष देहिनाम्॥
एष एव कुमानुष्यदुःखविच्छेदकारणम्।
एष एव कुदेवत्वमनःसन्तापनाशकः॥
अज्ञानतरुविच्छेद एष एव कुठारकः।
एष एव महानिद्राद्रावणप्रतिबोधकः॥
एष स्वाभाविकानन्दकारणत्वेन गीयते।
साताऽसातोदयोत्पाद्यमिथ्याबुद्धिविधूनकः॥
एष एव गुरुक्रोधवह्निविध्यापने जलम्।
एष एव महामानपर्वतोद्दलने पविः॥
एष मायामहाव्याघ्रीघातने शरभायते।
एष एव महालोभनीरधेः शोषणानिलः॥
एष हास्यविकारस्य गाढं प्रशमनक्षमः।
एष मोहोदयोत्पाद्यां रतिं निर्णाशयत्यलम्॥
एष एवारतिग्रस्ते जनेऽस्मिन्नमृतायते।
एष एव भयोद्भ्रान्तसत्त्वसंरक्षणक्षमः॥
एष शोकभराक्रान्तं सन्धीरयति देहिनम्।
एष एव जुगुप्सादिविकारं शमयत्यलम्॥
एष कामपिशाचस्य दृढमुच्चाटने पटुः।
एष एव च मार्तण्डो मिथ्यात्वध्वान्तसूदनः॥
एष एव चतुर्भेदजीवितोच्छेदकारणम्।
यतो जीवं ततोऽनीते नयत्येष शिवालये॥

प्रभेतरेण या नाम्ना कृता लोकविडम्बना ।
छिन्ते तामेष लोकानामनङ्गस्थानदानतः ॥
सर्वोत्तमत्वं भक्तानां विधायाचयमव्ययम् ।
एष एव छिनत्युच्चैर्नीचैर्गोत्रविडम्बनाम् ॥
एष एव च दानादिशक्तिसन्दोहकारणम् ।
एष एव महावीर्ययोगहेतुरुदाहृतः ॥
अन्यच्च ये महापापा निर्भाग्याः पुरुषाधमाः ।
न ते सदागमस्यास्य नामापि बत मन्वते ॥
ततोऽनेन नरेन्द्रेण ते पूर्वोक्तविधानतः ।
संसारनाटकेनोच्चैः कदर्थ्यन्ते निरन्तरम् ॥
य एव भाविकल्याणाः पुण्यभाजो नरोत्तमाः ।
ते सदागमनिर्देशं कुर्वन्ति विहितादराः ॥
ततोऽपकर्ण्य राजानं ते विडम्बनकारणम् ।
संसारनाटकान्मुक्ता मोदन्ते निर्वृतौ गताः ॥
राजभुक्तौ वसन्तोऽपि राजानं तृणतुल्यकम् ।
सदागमप्रसादेन मन्यन्ते ते निराकुलाः ॥
किं वाच बहुनोक्तेन नास्ति तदस्तु किंचन ।
सदागमेऽस्मिन् भक्तानां सुन्दरं यन्न जायते ॥
तदेतदस्य माहात्म्यं किंचिल्लेशेन वर्णितम् ।
विशेषतः पुनः कोऽस्य गुणानां वर्णनक्षमः ॥
ततः प्रज्ञाविशालाया वाक्यमाकर्ण्य विस्मिता ।
हृदये चिन्तयत्येवं सा मन्देहमुपागता ॥

यदिदं प्रियसख्या मे विहितं गुणवर्णनम्।
यदि सत्यमिदं तेन नास्ति तुल्यस्ततोऽपरः॥
अतः पश्यामि तं तावत्करोमि स्वविनिश्चयम्।
परप्रत्ययतो ज्ञाते न सन्देहो निवर्तते॥

ततश्चैवं विचिन्त्य तयागृहीतसङ्केतयाभिहिता प्रज्ञाविशाला। प्रियसखि सुनिश्चितसत्यवादिनीमपि भवतीमधुनाहमनेन सदागमस्यासंभावनीयगुणवर्णनेनात्यर्गलभाषिणीमिव परिकल्पयामि। भवन्ति च मे मनसि विकल्पाः। किल परिचितमिति कृत्वा एषा वर्णयति। अन्यथा कथं कर्मपरिणामो महानरेन्द्रः कुतश्चिद्बिभियात्। कथं वैकत्र पुरुषे एतावान् गुणसङ्घातः संभाव्येत। न च प्रियसखी कदाचन मां विप्रलम्भयति। ततः सन्देहापन्नं दोलायते मे मनः। अतस्तमात्मपरिचितं परमपुरुषं विशेषतो दर्शयितुमर्हति मे भवती। प्रज्ञाविशालाह। सुन्दरमेतदभिप्रेतमेव मे हृदयस्य अभिगमनीयो द्रष्टव्य एवासौ भगवान्॥

ततो गते द्वे अपि तन्मूलं। दृष्टश्च ताभ्यां तस्य महाविजयरूपावपनपङ्क्तिभिर्विराजितस्यानेकमहापुरुषाकीर्णस्य महाविदेहरूपस्य विपणिमार्गस्य मध्ये वर्तमानः प्रधानजनपरिकरितो भूतभवद्भविष्यद्भावस्वभावाविर्भावनं कुर्वाणो भगवान् सदागमः। ततः प्रत्यासन्नीभूय प्रणम्य तच्चरणयुगलमुपविष्टे ते तन्निकटे। तदाकृतिदर्शनादेव सबहुमानं मुहुर्मुहुर्विलोकनादगृहीतसङ्केतायाः प्रनष्ट इव सन्देहः वर्धितश्चित्तानन्दः समुत्पन्नो विश्रम्भः मतात्मनः कृतार्थता तद्दर्शनेनेति। ततः प्रज्ञाविशालां प्रत्यभिहितमनया। अपि च।

धन्यासि त्वं महाभागे सुन्दरं तव जीवितम् ।
यस्याः परिचयोऽनेन पुरुषेण महात्मना ॥
अहं तु मन्दभाग्यासं वञ्चितास्मि पुरा यया ।
न दृष्टोऽयं महाभागः पुरुषः पूतकल्मषः ॥
नाधन्याः प्राप्नुवन्तीमं भगवन्तं सदागमम् ।
निर्लक्षणनरो नैव चिन्तामणिमवाप्नुते ॥
संजाता पूतपापाहमधुना मृगलोचने ।
तव प्रसादाद् दृष्टेमं महाभागं सदागमम् ॥
त्वया कमलपत्राक्षि येऽस्य संवर्णिता गुणाः ।
ते तथैव मया सर्वे दर्शनादेव निश्चिताः ॥
नाहं विशेषतोऽद्यापि वेद्म्यस्य गुणगौरवम् ।
नास्त्यन्यः पुरुषोऽनेन तुल्य एतत्तु लक्षये ॥
आसीन्मे मन्दभाग्यायाः पुरेमं प्रति संशयः ।
गुणेषु दर्शनादेव साम्प्रतं प्रलयं गतः ॥
निगूढचरितासि त्वं सत्यं सद्भाववर्जिता ।
यया न दर्शितः पूर्वं ममैषः पुरुषोत्तमः ॥
तत्साम्प्रतं मयाप्यस्य भवत्या सह सुन्दरि ।
दिने दिने समागत्य कर्तव्या पर्युपासना ॥
गुणाः स्वरूपमाचारं चित्ताराधनसूचकैः ।
त्वयास्य सर्वं चार्वङ्गि ज्ञातं कालेन भूयसा ॥
अतो ममापि तत्सर्वं निवेद्यं वल्गुभाषिणि ।
येनाहमेनमाराध्य भवामि तव सन्निभा ॥

ततः प्रज्ञाविशालाह चारु चारूदितं प्रिये ।
यद्येवं कुरुषे हन्त सफलो मे परिश्रमः ॥
अहो विशेषविज्ञानमहो वचनकौशलम् ।
अहो कृतज्ञता गुर्वी तवेयं चारुलोचने ॥
सङ्केताभावतो भद्रे न जानीषे सदागमम् ।
तथापि परमार्थेन योग्यता तव विद्यते ॥
एवं च कुर्वती नित्यं मया सार्धं विचारणम् ।
अज्ञातपरमार्थापि ज्ञाततत्त्वा भविष्यसि ॥
ततः संजाततोषे ते नमस्कृत्य सदागमम् ।
प्रियसख्यौ गते तावत्स्वस्थानं तत्र वासरे ॥
एवं दिने दिने सख्योः कुर्वत्योः सेवनां तयोः ।
सदागमस्य गच्छन्ति दिनानि किल लीलया ॥

अथान्यदा विशालाक्षी प्रोक्ता सा तेन धीमता ।
प्रज्ञाविशाला सानन्दं पुरुषेण महात्मना ॥
एष सर्वगुणाधारो भवत्या स्नेहनिर्भरः ।
बालकालात्समारभ्य कर्तव्यो राजदारकः ॥
गत्वा राजकुलं भद्रे विधाय दृढसंगतम् ।
आवर्ज्य जननीचित्तं धात्री भव कथंचन ॥
त्वयि संजातविश्रम्भो येनायं राजदारकः ।
सुखं विवर्धमानोऽपि प्रयाति मम वश्यताम् ॥
ततो निश्चिप्य निःशेषमात्मीयज्ञानकौशलम् ।
सुपात्रेऽत्र भविष्यामि कृतकृत्योऽहमञ्जसा ॥

ततो यदादिशत्यार्य इत्युक्त्वा नतमस्तका ॥
प्रज्ञाविशाला तद्वाक्यमनुतस्थौ कृतादरा ॥
अथासौ भव्यपुरुषस्तां धात्रीं प्राप्य सुन्दराम् ।
लालमानः सुखेनास्ते देववद्दिवि लीलया ॥
क्रमात्संवर्धमानोऽसौ कल्पपादपसन्निभः ।
संजातः सर्वलोकानां लोचनानन्ददायकः ॥
ये ते सदागमेनोच्चैर्भाविनो वर्णिता गुणाः ।
आविर्भूताः समस्तास्ते कौमारे तस्य तिष्ठतः ॥
ततः परिचयं कर्तुं तया प्रज्ञाविशालया ।
नीतः सदागमाभ्यर्णे सोऽन्यदा राजदारकः ॥
स च तं वीक्ष्य पुण्यात्मा महाभागं सदागमम् ।
भाविभद्रतया धन्यः परं हर्षमुपागतः ॥
ततः प्रणम्य सद्भक्त्या निषण्णोऽसौ तदन्तिके ।
आकर्णितं मनोहारि तद्वाक्यमम्रतोपमम् ॥
आवर्जितो गुणैस्तस्य शशाङ्ककरनिर्मलैः ।
स भव्यपुरुषश्चित्ते ततश्चेदमचिन्तयत् ॥
अस्याहो वाक्यमाधुर्यमहो रूपमहो गुणाः ।
अहो मे धन्यता येन नरोऽयमवलोकितः ॥
धन्येयं नगरी यस्यां वसत्येष सदागमः ।
संजातः पूतपापोऽहं दर्शनादस्य धीमतः ॥
नूनमेष भवद्भूतभाविभावविभावकम् ।
भावतो भगवान्सर्वः करोत्येव सदागमः ॥

तदेष सदुपाध्यायो यदि संपद्यते मम।
ततोऽहमस्य नेदिष्ठो गृह्णामि सकलाः कलाः॥
ततः प्रज्ञाविशालायास्तेनाकूतं निवेदितम्।
जननीजनकयोर्गत्वा तयापि कथितं वचः॥
प्रादुर्भूतस्तयोस्तोषः प्रविधाय महोत्सवम्।
ततः समर्पितस्ताभ्यां सोऽन्यदा शुभवासरे॥
कथं।
कृतकौतुकसत्कारः परिपूज्य सदागमम्।
स भव्यपुरुषस्तस्य शिष्यत्वेन निवेदितः॥
सिताम्बरधरो धीरः सितभूषणभूषितः।
सितपुष्पभरापूर्णः सितचन्दनचर्चितः॥
ततो महाप्रमोदेन विनयेन विनेयताम्।
प्रपन्नस्तस्य पुण्यात्मा कलाग्रहणकाम्यया॥
ततो दिने दिने याति स पार्श्वं तस्य धीमतः।
सदागमस्य जिज्ञासुः सार्धं प्रज्ञाविशालया॥
अन्यदा हट्टमार्गेऽसौ लीलयास्ते सदागमः।
स भव्यपुरुषोऽभ्यर्णे युक्तः प्रज्ञाविशालया॥
स भूरिनरसङ्घातपरिवारितविग्रहः।
अशेषभावसद्भावं वदन्नास्ते सदागमः॥
अथागृहीतसङ्केता सख्याः पार्श्वं समागता।
नत्वा सदागमं सापि निषण्णा शुद्धभूतले॥
पृष्टा प्रियसखी वार्तां मानितो राजदारकः।

स्थिता सदागमसुखं पश्यन्ती स्तिमितेक्षणा ॥

इतश्चैककालमेवैकस्यां दिशि समुच्छलितो वाकलकलः श्रूयते विरसविषमडिण्डिमध्वनिः समाकर्ण्यते दुर्दान्तलोकहतोऽट्टहासः । ततः पातिता तदभिमुखा समस्तपर्षदा दृष्टिः । यावद्दिलिप्तसमस्तगात्रो भस्मना चर्चितो गैरिकहस्तकैः खचितस्तृणमषीपुण्ड्रकैर्विनाटितो लम्बमानया कणवीरमुण्डमालया विडम्बितो वक्षःस्थले घूर्णमानया शरावमालया धारितातपत्रो जरत्पिटकखण्डेन बद्धलोप्त्रो गलैकदेश आरोपितो रासभे वेष्टितः समन्ताद्राजपुरुषैः निन्द्यमानो लोकेन प्रकम्पमानशरीरः तरलतारमितश्चेतश्चातिकातरया भयोद्भ्रान्तहृदयो दशापि दिशो निरीक्षमाणो नातिदूरादेव दृष्टः संसारिजीवनामा तस्करः ।

तं च दृष्ट्वा संजाता प्रज्ञाविशालायाः करुणा । चिन्तितमनया । यदि परमस्य वराकस्यामुष्मात् सदागमात्सकाशात् त्राणं नान्यस्मात्कुतश्चित् । ततो गता तदभिमुखं । दर्शितोऽस्मै यत्नेन सदागमो ऽभिहितं च । भद्रामुं भगवन्तं शरणं प्रतिपद्यस्वेति । स च सदागममुपलभ्य सहसा संजाताश्वास इव किंचिच्चिन्तयन्ननाख्येयमवस्थान्तरं वेदयमानः पश्यतामेव लोकानां निमीलिताक्षः पतितो धरणीतले । स्थितः कियन्तमपि कालं निश्चलः । किमेतदिति विस्मिता नागरकाः । लब्धा कथंचिच्चेतना । ततः समुत्थाय सदागममुद्दिश्यासौ त्रायध्वं नाथास्त्रायध्वमिति महता शब्देन पूत्कृतवान् । ततो मा भैषीरभयमभयं तवेत्याश्वासितोऽसौ सदागमेन ।

ततस्तदाकर्ण्य प्रपन्नोऽयं सदागमस्य शरणं। अङ्गीकृतश्चानेन। अतो न गोचरोऽधुना राजशासनस्येति विचिन्त्य विदितसदागममाहात्म्याः सभयाः प्रत्यक्पदैरपसृताः प्रकम्पमानास्ते राजपुरुषाः स्थिता दूरदेशे। ततो विश्रब्धीभूतो मनाक् संसारिजीवः। पृष्टो ऽगृहीतसङ्केतया। भद्र कतमेन व्यतिकरेण गृहीतस्त्वमेभिः कृतान्तसदृशै राजपुरुषैरिति।

सोऽवोचत्। अलमनेन व्यतिकरेण। अनाख्येयः खल्वेष व्यतिकरः। यदि वा जानन्त्येवामुं व्यतिकरं भगवन्तः सदागमनाथाः। किमाख्यातेन। सदागमेनोक्तं। भद्र महत्कुतूहलमस्याः। अतस्तदपनोदार्थं कथयतु भवान्। को दोषः। संसारिजीवेनोक्तं। यदाज्ञापयन्ति नाथाः। केवलं जनसमक्षमात्मविडम्बनां कथयितुं न पारयामि। ततो विविक्तमादिशन्तु नाथा इति। ततः सदागमेन विलोकिता परिषत्। स्थिता गत्वा दूरदेशे। प्रज्ञाविशालाप्युक्तिछन्नो त्वमप्याकर्णयस्वेति भणित्वा धारिता सदागमेन। तस्याश्च निकटवर्त्ती सदागमवचनेनैव भव्यपुरुषोऽपि स्थित एव। ततस्तेषां चतुर्णामपि पुरतः केवलमगृहीतसङ्केतामुद्दिश्य प्रजल्पितोऽसौ संसारिजीवः।

अस्तीह लोके आकालप्रतिष्ठमनन्तजनाकुलमसंव्यवहारं नाम नगरं। तत्र सर्वस्मिन्नेव नगरेऽनादिवनस्पतिनामानः कुलपुत्रकाः प्रतिवसन्ति। तस्मिंश्चास्यैव कर्मपरिणामस्य महानरेन्द्रस्य सम्बन्धिनावत्यन्ताबोधतीव्रमोहोदयनामानौ सकलकालस्थायिनौ बलाधिकृतमहत्तमौ प्रतिवसतः। ताभ्यां चात्यन्ताबोधतीव्रमोहोदयाभ्यां तत्र

नगरे यावन्तो लोकास्ते सर्वेऽपि कर्मपरिणाममहाराजादेशेनैव सुप्ता इवास्पष्टचैतन्यतया मत्ता इव कार्याकार्यविचारशून्यतया मूर्छिता इव परस्परं लोलीभूततया मृता इव लक्ष्यमाणविशिष्टचेष्टाविकलतया निगोदाभिधानेष्वपवरकेषु प्रक्षिप्य संपिण्डिताः सकलकालं धार्यन्ते। अत एव च ते लोका गाढसंमूढतया न किंचिच्चेतयन्ति न भाषन्ते न विशिष्टं चेष्टन्ते नापि ते छिद्यन्ते न भिद्यन्ते न दह्यन्ते न शाव्यन्ते न कुट्टयन्ते न प्रतिघातमापद्यन्ते न व्यक्तां वेदनामनुभवन्ति नाप्यन्यं कंचन लोकव्यवहारं कुर्वन्ति। इदमेव च कारणमुररीकृत्य तन्नगरमसंव्यवहारमिति नाम्ना गीयते। तत्र नगरे संसारिजीवनामाहं वास्तव्यकुटुम्बिकोऽभूवं। गतश्च तत्र वसतो ममानन्तः कालः॥

अन्यदा दत्तास्थाने तीव्रमोहोदयमहत्तमे तन्निकटवर्तिनि चात्यन्ताबोधबलाधिकृते प्रविष्टा समुद्रवीचिरिव मौक्तिकनिकरवाहिनी प्रावृट्काललक्ष्मीरिव समुन्नतपयोधरा मलयमेखलेव चन्दनगन्धधारिणी वसन्तश्रीरिव रुचिरपत्रतिलकाभरणा तत्परिणतिर्नाम प्रतीहारी। तया चावनितलन्यस्तजानुहस्तमस्तकया विधाय प्रणामं विरचितकरपुटमुकुलया विज्ञप्तं। देवैष सुगृहीतनामधेयस्य देवस्य कर्मपरिणामस्य सम्बन्धी तन्नियोगो नाम दूतो देवदर्शनमभिलषन् प्रतीहारभूमौ तिष्ठति। तदेवमवस्थिते देवः प्रमाणमिति। ततो निरीक्षितं तीव्रमोहोदयेन ससंभ्रममत्यन्ताबोधवदनं। स आह। शीघ्रं प्रवेशयतु तं भवती। ततो यदाज्ञापयति देव इत्यभिधाय प्रवेशितः प्रतीहार्या तन्नियोगः। तेनापि सविनय-

सुपसृत्य प्रणतो महत्तमो बलाधिकृतश्च। अभिनन्दितस्ताभ्यां। दापितमासनं। उपविष्टोऽसौ। कृतोचिता प्रतिपत्तिः। ततो विमुच्यासनं बद्धा करमुकुलं कृत्वा ललाटतटे तीव्रमोहोदयेनोक्तं। अपि कुशलं देवपादानां महादेव्याः शेषपरिजनस्य च। तन्नियोगेनोक्तं। सुष्ठु कुशलं। तीव्रमोहोदयेनोक्तं। अनुग्रहोऽयमस्माकं यदत्रभवतः प्रेषणेनानुस्मृता वयं देवपादैरिति। अतः कथय यदागमनप्रयोजनमिति। तन्नियोगेनोक्तं। कोऽन्यो भवन्तं विहाय देवपादानामनुग्रहार्हः। आगमनप्रयोजनं पुनरिदं।

अस्ति तावदिदितैव भवतां विशेषेण माननीया प्रष्ठ्या सर्वप्रयोजनेष्वलङ्घनीयवाक्याचिन्त्यमाहात्म्या च भगवती लोकस्थितिर्नाम देवपादानां महत्तमा भगिनी। तस्याश्च तुष्टैर्देवपादैः सकलकालमेषोऽधिकारो वितीर्णः. यथास्ति तावदेषोऽस्माकं सर्वदा परिपन्थी कथंचिदुन्मूलयितुमशक्यः सदागमः परमशत्रुः। ततोऽयमस्मद्बलमभिभूय क्वचिदन्तरान्तरा लब्धप्रसरतयास्मदीयभुक्तेर्निस्सारयति कांश्चिल्लोकान् स्थापयति चास्माकमगम्यायां निर्वृतौ नगर्यां। एवं च स्थिते विरलीभविष्यत्येष कालेन लोकः। ततः प्रकटीकरिष्यत्यस्माकमयशः। तन्न सुन्दरमेतत्। अतो भगवति लोकस्थिते त्वयेदं विधेयं। अस्ति ममाविचलितरूपमेतदेव प्रयोजनमपेक्ष्य संरचणीयमसंव्यवहारं नाम नगरं। ततो यावन्तः सदागमेन मोचिताः सन्तो मदीयभुक्तेर्निर्गत्य निर्वृतिनगर्यां गच्छन्ति लोकास्तावन्त एव भगवत्या तस्मादसंव्यवहारनगरादानीय मदीयशेषस्थानेषु प्रचारणीयाः। ततः प्रचुरलोकतया सर्वस्थानानां सदागम-

मोचितानां न कश्चिद्वार्तामपि प्रश्नयिष्यति। यतो न भवत्यस्माकं छायाहानिरिति। ततो महाप्रसाद इति कृत्वा प्रतिपन्नः सोऽधिकारो लोकस्थित्या। अहं च यद्यपि देवपादोपजीवी तथापि विशेषतो लोकस्थितेः प्रतिबद्धः। अत एव तद्द्वारेण तन्नियोग इति प्रसिद्धोऽहं लोके। मोचिताश्च कियन्तोऽपि साम्प्रतं सदागमेन लोकाः। ततोऽहं भगवत्या लोकस्थित्या युष्मन्मूलं तावतां लोका नामानयनायेह प्रहित इति। एतदाकर्ण्य भवन्तः प्रमाणं।

ततो यदाज्ञापयति भगवतीति प्रतिपन्नं तच्छासनं महत्तमेन बलाधिकृतेन च। ततो महत्तमेनोक्तं। भद्र तन्नियोग तावदुत्तिष्ठ दर्शयामो भद्रस्यासंव्यवहारनगरलोकप्रमाणं येन गतः सन् निवेदयसि त्वं देवपादेभ्यः कालान्तरेऽपि येन न भवति तेषां लोकविरलीभवनचिन्ता। तन्नियोगेनोक्तं। यदाज्ञापयत्यार्यः। ततः समुत्थितास्त्रयोऽपि नगरं निरीक्षितुं। दर्शिताः समुच्छ्रितकरेण पर्यटता तीव्रमोहोदयेनासंख्येया गोलकनामानः प्रासादास्तन्नियोगस्य। तन्मध्यवर्तिनश्चासंख्येया एव दर्शिता निगोदनामानोऽपवरकाः। ते च विद्वद्भिः साधारणशरीराणीत्यभिधीयन्ते। तदन्तर्भूताश्च दर्शिता अनन्ता लोकाः। ततो विस्मितस्तन्नियोग उक्तो महत्तमेन। भद्र दृष्टं नगरप्रमाणं। स प्राह। सुष्ठु दृष्टं। ततः महत्तालमट्टहासेन विहस्य तीव्रमोहोदयेनोक्तं। पश्यत विमूढतां सदागमस्य। स हि किल सुगृहीतनामधेयस्य देवस्य कर्मपरिणामस्य सम्बन्धिनं लोकं निर्वाहयितुमभिलषति। न जानीते वराकस्तत्प्रमाणं। तथाहि। अत्र नगरे तावदसंख्येयाः प्रासादास्तेषु

प्रत्येकमसंख्येया एवापवरकाः । तेषु चैकैकस्मिन्ननन्तलोकाः प्रतिवसन्ति । अनादिरूढश्चास्य सदागमस्यायं लोकनिर्वाहणारूपो ग्रहः । तथापि तेनेयता कालेन निर्वाहयता यावन्तोऽनेकस्मिन्नपवरके लोकास्तेषामनन्तभागमात्रं निर्वाहितं । ततः केयं देवपादानां लोकविरलीभवनचिन्ता । तन्नियोगेनोक्तं । सत्यमेतदस्त्येव चायं देवस्याप्यवष्टम्भः । विशेषतः पुनर्युष्मद्वचनमेतदहं कथयिष्यामि । अन्यच्च । उक्तं भगवत्या लोकस्थित्या यथा न भवता कालक्षेपः कार्यः । तत्संपाद्यतां शीघ्रं तदादेश इति ।

ततः स्थिताबुत्थारके महत्तमबलाधिकृतौ । महत्तमेनोक्तं । केऽत्र प्रस्थापनायोग्या इति । अत्यन्ताबोधः प्राह । आर्य किमत्र बहुनालोचितेन । स्थाप्यतामेष व्यतिकरो नागरलोकानां दीयतां पटहकः क्रियतां घोषणा । यथा । देवकर्मपरिणामादेशेन कियद्भिरपि लोकैरितः स्थानात्तदीयशेषस्थानेषु गन्तव्यं । अतो येषामस्ति भवतां तत्र गमनोत्साहस्ते स्वयमेव प्रवर्तन्तामिति । ततोऽनुकूलतया शेषस्थानानामासुत्संकलिता वयमिति च मत्वा भूयांसो लोकाः स्वयमेव प्रवर्तिष्यन्ते । ततो विशेषतो नेयलोकसंख्यां पृष्ट्वा तन्नियोगं तेषां मध्याद्येऽग्रभ्यं रोचिष्यन्ते तानेव तावत्संख्यान् प्रेषयिष्याम इति । महत्तमेनोक्तं । भद्र स्वयमपि परिचितस्य भक्तिं न जानीषे त्वं । यतोऽमीभिर्लोकैर्न कदाचिदृष्टं स्थानान्तरं अतो न जानन्ति तत्स्वरूपमपि किं पुनस्तस्यानुकूलतां । अनादिसंवासेन चामीत्र वसन्तो रतिमुपगताः खल्वेते । तथानादिसम्बन्धेनैव दृढस्नेहाः परस्परं नेच्छन्ति वियोगं । तथाहि । पश्यतु भद्रो येऽत्र

लोका एकैकस्मिन्नपवरके वर्तन्ते ते ऽतिस्निग्धतयात्मनो गाढं सम्बन्धमुपदर्शयन्तः समकमुच्छ्वसन्ति समकं निःश्वसन्ति समकमा- हारयन्ति समकं निर्हारयन्ति एकस्मिन्म्रियमाणे सर्वे म्रियन्ते एकस्मिञ्जीवति सर्वेऽपि जीवन्ति। तत्कथमेते स्थानान्तरगुणज्ञान- रहिता एवंविधप्रेमबद्धात्मानश्च स्वयमेव प्रवर्तिष्यन्ते। तस्मादपरः कश्चित्प्रस्थानोचितलोकपरिज्ञानोपायश्चिन्त्यतां भवतेति। ततः पर्याकुलीभूतो यत्नाधिष्ठतः किमत्र विधेयमिति।

इतश्चास्ति भवितव्यता नाम मम भार्या। सा च ग्रन्थिका- बद्धः सुभटो वर्तते यतोऽहं नाममात्रेणैव तस्या भर्तेति प्रसिद्धः। परमार्थतः पुनः सैव भगवती मदीयगृहस्य शेषलोकगृहाणां च सम्बन्धिनीं समस्तामपि कर्तव्यतां तन्त्रयति। यतः सा अचिन्त्य- माहात्म्यतया स्वयमभिलषितमर्थं घटयन्ती नापेक्षतेऽन्यसम्बन्धिनं पुरुषकारं सहायतया न विचारयति पुरुषानुकूलप्रतिकूलभावं न गणयत्यवसरं न निरूपयत्यापद्गतं न निवार्यते सुरगुरुणापि बुद्धि- विभवेन न प्रतिस्खल्यते विबुधपतिनापि पराक्रमेण नोपलभ्यते योगिभिरपि तस्याः प्रतिविधानोपायः। अत्यन्तमसंभावनीयमप्यर्थं सा भगवती स्वकरतलवर्तिनमिव लीलया संपादयति। लक्षयति च प्रत्येकं समस्तलोकानां यस्य यदा यत्र यथा यावच्च प्रयोजनं कर्तव्यं ततस्तस्य तदा तत्र तथैव तावत्तदेव प्रयोजनं रचयन्ती न त्रिभुवनेनापि निवारयितुं पार्यते। किं च। यदि शक्रचक्रवर्त्या- दीनामपि कथ्यते यथा भद्रिका भवतामुपरि भवितव्यतेति तत- स्तेऽपि तुष्यन्ति हृदये दर्शयन्ति मुखप्रसादं विस्फारयन्ति लोचने

ददति कथकाय पारितोषिकं कुर्वन्त्यात्मनि यत्नमानं कारयन्ति महोत्सवं वादयन्त्यानन्ददुन्दुभिं चिन्तयन्त्यात्मनः कृतकृत्यतां मन्यन्ते सफलं जन्मेति किं पुनः शेषलोका इति। अथ तेषामपि शक्र-चक्रवर्त्यादीनां कथ्यते यथा न भद्रिका भवतामुपरि भवितव्यतेति ततस्ते कम्पन्ते भयातिरेकेण प्रतिपद्यन्ते दीनतां कुर्वन्ति क्षणेन कृष्णमुखं निमीलयन्ति वीक्षणे दृश्यन्ति कथकाय समध्यास्यन्ते चिन्तया गृह्यन्ते रणरणकेन परित्यजन्ति शोकातिरेकेणेतिकर्तव्यतां आलोचयन्ति तत्प्रसादार्थमनेकोपायान् — किं बहुना — न लभन्ते तस्यामतुष्टायां मनागपि चित्तनिर्वृतिं कथमेषापि पुनः प्रगुणी-भविष्यतीत्युद्वेगेन किं पुनः समान्यजना इति। सा पुनर्भगवती यदात्मने रोचते तदेव विधत्ते न परं विज्ञापयन्तं विलपन्तं प्रतिकुर्वन्तं वापेक्षते। अहमपि तद्भयोद्भ्रान्तचित्तो यदेव सा किंचित्कुरुते यथेष्टया चेष्टया तदेव बहु मन्यमानस्तस्याः पतिरपि कर्मकर इव जय देवि जय देवीति ब्रुवाणस्तिष्ठामि। अपि च।

सा सर्वत्र कृतोद्योगा सा ज्ञातभुवनोचिता।
सा जागर्ति प्रसुप्तेषु सा सर्वस्य निरूपिका॥
सा केवलं जगत्यत्र विचरन्ती निराकुला।
न कुतश्चिद्बिभेत्युच्चैर्मत्तवद्गन्धहस्तिनी॥
सा कर्मपरिणामेन महाराजेन पूजिता।
यतोऽनुवर्तयत्येव तामेषोऽपि प्रयोजने॥
तथान्येऽपि महात्मानः कुर्वन्ति स्वं प्रयोजनम्।
यान्तोऽनुकूलतां तस्या यत एतदुदाहृतम्॥

बुद्धिरुत्पद्यते यादृग् व्यवसायस्च तादृशः ।
सहायास्तादृशायैव यादृशी भवितव्यता ॥

तस्याश्च मदीयस्टहिण्या भवितव्यतायाः सम्बन्धिनमेनं गुण-
सन्दोहं जानात्येव सोऽत्यन्ताबोधो बलाधिकृतः। ततस्तस्य तदा
पर्यालोचयतश्चेतसि परिस्फुरितं। अये किमहमेवं सत्यभ्युपाये
चिन्तयात्मानमाकुलयामि। यतो जानात्येव सा संसारिजीवपत्नी
भवितव्यता येऽच प्रस्तापनोचिता लोकास्तेषां स्वरूपमिति। अतस्ता-
मेवाहूय पृच्छामि। ततः कथितस्तीव्रमोहोदयाय तेन स्वाभि-
प्रायः। सुन्दरमेतदिति वज्ञमतं तस्यापि तस्या आकारणं। ततः
प्रहितः पुरुषः। समाहूता भवितव्यता। समागता वेगेन प्रवेशिता
प्रतीहार्या। महाप्रभावेयं सर्वापि स्त्री किल देवतेति विचिन्त्य
कृतं तस्याः पादपतनं वाचिकं महत्तमबलाधिकृताभ्यां। अभि-
नन्दितौ तौ तयाशीर्वादेन। दापितमासनं। उपविष्टा भवित-
व्यता। ततो बलाधिकृताभिमुखं महत्तमेन चालिता भूलता।
ततस्तेन कथयितुमारब्धस्तस्यै तन्नियोगव्यतिकरः। ततो हसितं तया।
स प्राह। भद्रे किमेतत्। भवितव्यताह। न किंचित्। बलाधि-
कृतेनोक्तं। तत्किमकाण्डे हसितं। भवितव्यताह। अत एव यतो न
किंचिदिदं। बलाधिकृतेनोक्तं। कथं। भवितव्यताह। सत्यमत्यन्ता-
बोधोऽसि यस्त्वमेनमपि व्यतिकरं मह्यं कथयसि। कृतोद्योगाह-
मेवंविधेषु व्यतिकरेषु। लक्षयाम्यनन्तकालभाविनोऽपि सर्वव्यति-
करानहं किं पुनः साम्प्रतिकान्। अतो निष्प्रयोजनत्वान्न किंचिदे-
तत्त्वदीयकथनं ममेति। अत्यन्ताबोधः प्राह। सत्यमिदं। विस्मृतं मे

तावकं माहात्म्यं । सोढव्योऽयमेको ममापराधो भवत्या । अन्यच्च । प्रस्थापय त्वमेव येऽत्र प्रस्थापनोचिता लोकाः । किं मे व्यापारेण । भवितव्यतयोक्तं । एकस्तावद्देव एव मदीयो भर्ता प्रस्थापनयोग्यः तथान्ये च ये तज्जातीयाः । महत्ताधिकृतेनोक्तं । त्वमेव जानीषे किमत्रोक्तेन ॥

ततो निर्गता भवितव्यता । आगता मम समीपे । कथितो व्यतिकरः । मयोक्तं । यद्देवी जानीते । ततः समुच्छलितोऽहमन्ये च मज्जातीयास्तन्नियोगाभिप्रेतसङ्ख्यानुसारेण । उक्तौ च भवितव्यतया महत्तमबलाधिकृतौ । यदुत मया युवाभ्यां चामीभिः सह यातव्यं । यतो भर्तृदेवता नारीति न मोक्तव्यो मया संसारिजीवो यतश्चास्ति युवयोरपि प्रतिजागरणीयमेकाक्षनिवासं नाम नगरं—तत्रामीभिर्लोकैः प्रथमं गन्तव्यं—अतो युज्यते युवाभ्यां सहैवामीषां तत्रासितुं नान्यथा । ततो यद्भवती जानातीत्यभिधाय प्रतिपन्नं तद्वचनं महत्तमबलाधिकृताभ्यां । प्रवृत्ताः सर्वेऽपि समागतास्तदेकाक्षनिवासं नगरं ।

तत्र च नगरे महान्तः सन्ति पाटका विद्यन्ते । ततोऽहमेकं पाटकं करायेण दर्शयता तीव्रमोहोदयेनाभिहितः । भद्र संसारिजीव तिष्ठ त्वमत्र पाटके । यतोऽयं पाटकोऽसंव्यवहारनगरेण सङ्कृतरं तुल्यो वर्तते ततो भविष्यत्यत्र तिष्ठतो धृतिरिति । तथाहि । यथा तत्रासंव्यवहारनगरे गोलकाभिधानानां प्रासादानां मध्यवर्तिनो ये निगोदाभिधाना अपवरकास्तेषु ये लोकाः प्रत्येकमनन्ताः संपिण्डिताः स्वेहावस्थ्येन प्रतिवसन्ति अत्रापि पाटके सङ्-

तमा लोकास्तथैव प्रतिवसन्ति। केवलमसंव्यवहारनगरसम्बन्धिनो न कश्चिल्लोकव्यवहारेऽवतरन्तीति असांव्यवहारिका इत्युच्यन्ते। ते हि यदि परं यूयमिव भगवत्या लोकस्थितेरादेशेन सकृदेवान्यस्थानेषु गच्छन्ति, नान्यथा। एते पुनरस्य पाटकस्य सम्बन्धिनो लोकाः कुर्वन्ति लोकव्यवहारं समाचरन्ति शेषस्थानेषु गमागमं। तेन सांव्यवहारिका इत्यभिधीयन्ते। तथा, तेषामसंव्यवहारनगरसम्बन्धिनामनादिवनस्पतय इति सर्वेषामपि सामान्याभिधानं एतत्पाटकसम्बन्धिनां तु वनस्पतय इत्येतावान् विशेषः। तथा प्रत्येकचारिणोऽपि प्रासादापवरकन्यायरहिता मुत्कलचारेणाच विद्यन्ते तेऽसंख्येया लोकाः। ततस्तिष्ठ त्वमत्र पूर्वपरिचितनगरसमान एवायं पाटकस्तवेति। ततो मयोक्तं। यदाज्ञापयति देवः॥

ततः स्थापितोऽहमेकस्मिन्नपवरके। शेषलोकास्तु केचिन्मदीयविधानेनैव स्थापितास्तत्रैव पाटके केचिन्मुत्कलचारेण केचित्पुनर्नीताः पाटकान्तरेष्विति। ततोऽहं तत्र साधारणशरीरनाम्नि भद्रेऽपवरके पूर्वोक्तस्थित्यैव सुप्त इव मत्त इव मूर्छित इव मृत इवानन्तलोकैः संपिण्डितैः समकमुच्छ्वसन् समकं निःश्वसन् समकमाहारयन् समकं निर्हारयन् स्थितोऽनन्तकालमिति॥

अन्यदा कर्मपरिणाममहाराजादेशेनैवानुमतो महत्तमबलाधिकृताभ्यां निःसारितस्ततोऽपवरकन्यायाद् भवितव्यतया धारितस्तत्रैव पाटके पुनरसंख्यकालं प्रत्येकचारितयेति॥

इतश्च पूर्वमेव कर्मपरिणाममहाराजेन परिपृच्छ्य लोकस्थितिं समालोच्य सह कालपरिणत्या ज्ञापयित्वा नियतियदृच्छादीनाम-

नुमते भवितव्यतया अपेक्ष्य विचित्राकारं लोकस्वभावमात्मीयसामर्थ्यप्रभवैः परमाणुभिर्निष्पादिताः सर्वार्थकारिण्य एकभववेद्यसंज्ञाः प्रधानगुटिकाः । समर्पिता भवितव्यतायाः । सा चाभिहिता तेन । यथा भद्रे समस्तलोकव्यापारकरणोद्यता त्वं आन्तासि समस्तलोकानां क्षणे क्षणे नानाविधसुखदुःखादिकार्याणि संपादयन्ती ततो गृहाणामूर्गुटिकाः । ततस्त्वया तासामेकैकस्य सत्त्वस्य जीर्णायां जीर्णायामेकैकस्यां गुटिकायामन्या दातव्या । ततः संपादयिष्यन्त्येताः स्वयमेव विविधमप्येकत्र जन्मवासके वसत्सु प्रत्येकं सत्त्वेषु तवेष्टं सर्वं प्रयोजनमिति भविष्यति ते निराकुलता । ततः प्रतिपन्नं भवितव्यतया तद्राजशासनं । विधत्ते च सकलकालं समस्तसत्त्वानां तथैव सा तं गुटिकाप्रयोगं ।

ततोऽहं यदा तत्रासंव्यवहारनगरेऽभूवं तदा मम जीर्णायां जीर्णायामपरां सा गुटिकां दत्तवती । केवलं सूक्ष्ममेव मे रूपमेकाकारं सर्वदा तत्प्रयोगेण विहितवती । तत्र पुनरेकाक्षनिवासनगरे समागता तीव्रमोहोदयात्यन्ताबोधयोः कुटुम्बमिव दर्शयन्ती तेन गुटिकाप्रयोगेण ममानेकाकारं स्वरूपं प्रकटयति स्म । यतः स्तोऽहं तत्र पाटके वर्तमानः क्वचिदवसरे सूक्ष्मरूपः । तत्रापि क्वचित्पर्याप्तकरूपः क्वचिदपर्याप्तकरूपः । तथा क्वचिदवसरे विहितोऽहं बादराकारः । तत्रापि क्वचित्पर्याप्तकरूपः क्वचिदपर्याप्तकरूपः । तथा बादरः सन् क्वचिदपवरकवर्ती क्वचित्प्रत्येकचारी । अत्रापि क्वचिदङ्कुराकारधारः क्वचित्कन्दरूपः क्वचिन्मूलभाजी क्वचित्त्वक्चारी क्वचित् स्कन्धवर्ती क्वचिच्छाखाचरः क्वचित्प्रशाखागतः

क्वचित्प्रवालसञ्चरिष्णुः क्वचित्पत्राकारः क्वचित्पुष्पसंस्थः क्वचित्फलात्मकः क्वचिद्बीजस्वभावः तथा क्वचिन्मूलबीजः क्वचिदग्रबीजः क्वचित्पर्वबीजः क्वचित् स्कन्धबीजः क्वचिद्बीजरुहः। क्वचित्सम्मूर्छनजः तथा क्वचिद् वृक्षाकारः क्वचिद्गुल्मरूपः क्वचिल्लतात्मकः क्वचिद्वल्लीस्वभावः क्वचिद्धरितात्मक इति। तथारूपेण च वर्तमानं मामुपलभ्यान्यग्राममनगरसम्बन्धिनो लोकाः कम्पमानं भवितव्यतायाः समक्षमेव छिन्दन्ति भिन्दन्ति दहन्ति पिंषन्ति मोटयन्ति लुञ्चयन्ति तक्ष्णुवन्ति दृहन्ति नानाकदर्थनाभिः कदर्थयन्ति। तथापि भवितव्यता तत्रोपेक्षां कुरुते॥

ततोऽतिवाहिते तथाविधदुःखैरनन्तकाले जीर्णायां पर्यवसानकालदत्तायां गुटिकायां दत्ता भवितव्यतया ममान्या गुटिका। तत्प्रभावाद्गतोऽहं द्वितीयपाटके। तत्र च पार्थिवसंज्ञया लोकाः प्रतिवसन्ति। ततोऽहमपि तेषां मध्ये संपन्नः पार्थिवः। विडम्बितस्तत्रापि भवितव्यतयापरापरगुटिकादानद्वारेण सूक्ष्मबादरपर्याप्तकापर्याप्तकरूपतया कृष्णनीलश्वेतपीतलोहितवर्णादिरूपतया सिकतोपललवणहरितालमनःशिलाञ्जनशुद्धपृथिव्याद्याकारतया चासंख्येयं कालं। तितिक्षितानि च तत्र पाटके वसता मया भेदनदलनचूर्णनखण्डनदहनादीनि दुःखानि॥

ततः पर्यन्तगुटिकाजरणावसाने दत्ता भवितव्यतया ममान्या गुटिका। गतोऽहं तन्माहात्म्येन तृतीये पाटके। तत्र चाप्याभिधानाः कुटुम्बिनः प्रतिवसन्ति। ततो ममापि तत्र गतस्य संपन्नमाप्यरूपं। विगोपितस्तत्राप्यहं जीर्णायां जीर्णायामपरापरां गुटिकां दत्त्वा

रूपान्तरं संपादयन्त्या भवितव्यतया असंख्येयमेव कालं। तथाहि। कतोऽहमवश्यायहिममहिकाहरतनुशुद्धोदकाद्यनेकभेदरूपो रूपरसगन्धस्पर्शभेदेन विचित्राकारस्तया। सोढानि च तत्र पाटके वर्तमानेन मया शीतोष्णक्षारक्षत्राद्यनेकशस्त्रसंपाद्यानि नानादुःखानि॥

ततस्तत्कालपर्यन्ते जीर्णायामन्यगुटिकायां दत्ता ममापरा गुटिका भवितव्यतया। गतोऽहं तत्तेजसा चतुर्थे पाटके। तत्राप्यसंख्येयास्तेजस्कायनामानो ब्राह्मणाः प्रतिवसन्ति। ततोऽहमपि तेषां मध्ये भास्वरो वर्णेन उष्णः स्पर्शेन दाहात्मकः कायेन सूचिरूपः संस्थानेन संपन्नस्तेजस्कायो ब्राह्मणः। प्रवृत्ताश्च मम तत्र वसतो ज्वालाङ्गारमुर्मुरार्चिरलातशुद्धाग्निविद्युदुल्काद्यनिप्रभृतयो व्यपदेशाः। जातानि विध्यापनादितो नानादुःखानि। स्थितः सूक्ष्मबादरपर्याप्तकापर्याप्तकरूपतया विवर्तमानोऽसंख्येयं कालं॥

दत्ता च तदन्ते ममापरा गुटिका पयन्तगुटिकाजरणावसाने भवितव्यतया। गतोऽहं तदुपयोगेन पञ्चमपाटके। तत्राप्यसंख्येया वायवीयाभिधानाः क्षत्रियाः प्रतिवसन्ति। ततोऽहमपि तत्र गतो ऽनुष्णशीतः स्पर्शेन अलक्ष्यचक्षुष्मतां रूपेण पताकाकारः संस्थानेन संजातो वायवीयः क्षत्रियः। आहृतश्च तत्र वर्तमानोऽहमुत्कलिकावातो मण्डलिकावातो गुञ्जावातो झञ्झावातः संवर्तकवातो घनवातस्तनुवातः शुद्धवात इत्यादिभिरभिधानैः। समुद्भूतानि तत्र मे शस्त्राभिघातनिरोधादीनि नानादुःखानि। विनाटितस्तत्रापि सूक्ष्मबादरपर्याप्तकापर्याप्तकाकारतया घूर्णमानोऽसंख्येयं कालं भवितव्यतया॥

इतस्तदवसाने जाते पर्यन्तगुटिकाजरणे दत्त्वापरां गुटिकां पुनर्नीतोऽहं प्रथमपाटके भवितव्यतया। स्थितस्तत्र पुनरनन्तं कालं। ततः पुनरपरापरगुटिकाप्रयोगेणैवं प्रापितो द्वितीयादिपाटकेषु स्थितश्चैकैकस्मिन्नसंख्येयं कालं। ततश्चानेन प्रकारेण तस्मिन्नेकाक्षनिवासे नगरे कारितोऽहमनन्तवाराः समस्तपाटकपर्यटनविडम्बनं तीव्रमोहोदयात्यन्ताबोधयोः समक्षं भवितव्यतया॥

अन्यदा मनाक्प्रसन्नचित्तयाऽभिहितं। यथार्यपुत्र स्थितो भूयांसं कालं त्वमत्र नगरे। ततोऽपनयामि भवतः स्थानाजीर्णं नयामि भवन्तं नगरान्तरे। मयोक्तं। यदाज्ञापयति देवी। तत्र प्रयुक्ता गुटिका भवितव्यतया॥

इतश्चास्ति विकलाक्षनिवासं नाम नगरं। तत्र च त्रयः प्रधानपाटका विद्यन्ते। तस्य नगरस्य परिपालकः कर्मपरिणाममहाराजनियुक्तमार्गं एवोन्मार्गोपदेशो नाम महत्तमः। तस्य च माया नाम गृहिणी। ततोऽहं गुटिकामाहात्म्येन प्राप्तस्तत्र प्रथमे पाटके। तस्मिंश्च मत्तकुलकौटिल्यवर्तिनोऽसंख्येया द्विहृषीकाभिधानाः कुलपुत्रकाः प्रतिवसन्ति। ततोऽहमपि संपन्नस्तेषां मध्ये द्विहृषीकः। ततो ऽपगता मे सा सुप्तमत्तमूर्छितगृहरूपता। जातो मनागभिव्यक्तचैतन्यः। ततश्च

> इतोऽहं गुटिकादानद्वारेणैव तत्स्तया।
> हृमिरूपोऽशुचिस्थाने महापापः स्वभार्यया॥
> मूत्राम्यक्लेदजम्बालपूरिते जठरे स्थितम्।
> मां पत्न्नीं विज्ञाभाक्षी ततः सा परितुष्यति॥

कदाचित्सारमेयादिदुर्गन्धिव्रणकोटरे।
मामन्यक्रमिजालेन संयुतं वीक्ष्य मोदते॥
वर्चापघमराघेषु लोलमानं सुदुःखितम्।
मां दृष्ट्वा कृमिभावेन तुष्टाभूद्भवितव्यता॥
जलूकाभावमापाद्य गुटिकादानतस्तया।
ममेत्थं चाकरोद्दुःखं हसन्ती सह मायया॥
भाये पश्य मदीयस्य भर्तुः सामर्थ्यमीदृशम्।
त्वसुन्मार्गोपदेशेन भर्त्सतमीयेन गर्विता॥
क्षुधार्तो वारसे विप्रस्ततो निर्गत्य मत्पतिः।
निःशेषं कर्षयत्येष प्रणारिं वीर्ययोगतः॥
अन्यच्च त्यागसामर्थ्यं पश्य भर्तुर्ममेदृशम्।
यदेष रक्तसर्वस्वं ददते हस्तधारिणे॥
ततोऽगृहीतसङ्केते भद्रे भार्याविडम्बितः।
उपहासेन तेनाहं द्विगुणं दुःखमागतः॥
पुनश्च गुटिकां दत्त्वा कृत्वा शङ्खं महोदधौ।
मामेषा शाङ्खिकैश्छिन्नं रटन्तं वीक्ष्य तुष्यति॥
तदेवं पाटके तत्र वर्तमानः स्वभार्यया।
अपरापररूपेण संख्यातीतं विडम्बितः॥

अन्यदा पुनर्यथेष्टचेष्टयैव प्रयुक्ता भवितव्यतया ममान्यगुटिका। नीतोऽहं तत्सामर्थ्येन द्वितीये पाटके। तत्र चाष्टकुलकोटिलक्षसंख्यायिनोऽसंख्येयाक्षिकरणनामानो गृहपतयोऽधिवसन्ति। ततोऽहमपि तेषां मध्ये संपन्नस्त्रिकरणो गृहपतिः। ततश्च।

यूकामत्कुणमक्कोटकुन्थुरूपविवर्तिनम् ।
पिपीलिकादिरूपं च कृत्वा मां भवितव्यता ॥
पर्यटन्तं बुभुक्षार्तं पिष्यमाणं च बालकैः ।
दग्धं दृष्ट्वा तथा तोषादानन्दमवगाहते ॥
तदेवं पाटके तत्र गुटिकादानपूर्वकम् ।
असंख्यवाराः पापोऽहं कारितो ऽनेकरूपताम् ॥
अथान्यदा पुनर्दत्त्वा गुटिका मे ऽव[म?]हेलया ।
तृतीये पाटके नीतस्तयैवोचितहेलया ॥
कोटीलक्षाः कुलानां च वसन्ति नव तत्र ये ।
असंख्यास्तेषु विद्यन्ते चतुरक्षाः कुटुम्बिनः ॥
ततोऽहमपि संजातश्चतुरक्षः कुटुम्बिकः ।
पतङ्गमक्षिकादंशमशकाकारधारकः ॥
सोढानि तत्र दुःखानि नानाकाराणि तिष्ठता ।
निर्विवेकजनादिभ्यो मर्दनादिविधानतः ॥
जीर्णे जीर्णे पुनर्दत्त्वा गुटिकामपरापराम् ।
असंख्यरूपैस्तत्रापि पाटके नाटितस्तया ॥
भूयो भूयश्च तेष्वेव पाटकेषु विवर्तनम् ।
संख्यातीतानि वर्षाणां सहस्राणि विधापितः ॥

एवं च स्थिते

क्वचित्पर्याप्तरूपेण तथापर्याप्तरूपकः ।
तेषु त्रिष्वपि पल्याऽहं पाटकेषु विनाटितः ॥
अथान्यदा प्रहृष्टेन चेतसा भवितव्यता ।

ज्ञात्वा तदुचितं कालं ततः सेत्थमभाषत ॥
आर्यपुत्र भवन्तं किं नयामि नगरान्तरम्।
विकस्वचनिवासेऽत्र नगरे नास्ति ते धृतिः ॥
मयोक्तं देवि यत्तुभ्यं रोचते तद्विधीयताम्।
किमत्र बहुना त्वं मे प्रमाणं सर्वकर्मसु ॥
ततो जीर्णां मम ज्ञात्वा गुटिकामन्तवर्तिनीम्।
नगरान्तरयानाय प्रयुक्ता गुटिका तया ॥
अथोन्मार्गोपदेशस्य प्रतिजागरणे स्थितम्।
पञ्चाक्षपशुसंस्थानं नामास्ति नगरं परम् ॥
तत्र सार्धत्रिपञ्चाशत्कोटीलक्षप्रमाणके।
वसन्ति कुलसङ्घाते लोकाः पञ्चाक्षनामकाः ॥
जलस्थलनभश्चराः स्पष्टचैतन्यसंयुताः।
संज्ञिनस्तेऽभिधीयन्ते गर्भजा इति वा बुधैः ॥
ये पुनस्तत्र विद्यन्ते स्पष्टचैतन्यवर्जिताः।
असंज्ञिन इति ख्यातास्ते सम्मूर्छनजा जनाः ॥
ततोऽहं तेषु संजातः स्पष्टचैतन्यवर्जितः।
पञ्चाक्षो नाम विख्यातो गुटिकायाः प्रभावतः ॥
रटकुत्रैर्विना कार्यं दर्दुराकारधारकः।
केलिप्रियतया तत्र भार्ययाहं विनाटितः ॥

तत्र च सम्मूर्छनजमध्ये

रूपैरेवमसंख्येयैर्भ्रमयित्वा ततस्तया।
विहितो गर्भजाकारधारकोऽहं महेलया ॥

ततश्च जलचरेषु वर्तमानः

गृहीतो धीवरैस्तत्र बिभ्राणो मत्स्यरूपताम्।
छेदपाकादिभिर्दुःखं प्रापितोऽहं सहस्रशः॥

तथा चतुष्पदस्थलचरेषु वर्तमानस्य

शशसूकरसारङ्गरूपमाबिभ्रतो मम।
व्याधैर्भित्त्वा शरैर्गात्रं कृता नानाविकर्तनाः॥

तथा भुजपरिसर्पोरःपरिसर्पेषु वर्तमानेन

गोधाहिनकुलादीनां रूपं धारयता चिरम्।
अन्योन्यभक्षणाद् दुःखं प्राप्तं क्रूरतया मया॥

तथा।

काकोलूकादिरूपाणां पक्षिणां अध्यचारिणा।
संख्यातीतानि दुःखानि सोढानि सुचिरं मया॥
असंख्यजनसंकीर्णे तदेवं तत्र पत्तने।
जलस्थलनभश्चारी संजातोऽहं कुले कुले॥

अन्यच्च। तस्मिन् पञ्चाक्षपशुसंस्थाने नगरे

सप्ताष्ट वारा रूपाणि नैरन्तर्येण कारितः।
नीतस्ततोऽन्यस्थानेषु तत्रानीतः पुनस्तथा॥

एवं च स्थिते।

शेषेषु सर्वस्थानेषु गत्वा गत्वान्तरान्तरा।
मया तत्र पुरेऽनन्ताः कृता रूपविडम्बनाः॥

कालतस्तु

स्थितश्च नैरन्तर्येण परं पल्योपमत्रयम्।

अहं तत्र पुरे किंचित्साधिकं पूर्वकोटिभिः ॥
असंज्ञिसंज्ञिरूपेण पर्याप्तेतरभेदतः।
तदेवं नगरे तत्र नानाकारैर्विडम्बितः ॥

अन्यदा कुरङ्गरूपः संपादितोऽहं भवितव्यतया। स्थितो यूथमध्ये तरलिततारं भयेन निरीक्षमाणो दशापि दिश उत्प्लवमानस्तृणशिखराणीतश्चेतश्च पर्यटामि यावदेकेन लुब्धककुमारकेण कलध्वनिना प्रारब्धं गीतं। ततस्तेनाक्षिप्तं मृगयूथं। परित्यक्तमुत्प्लवनं। निरुद्धा चेष्टा। निश्चलीकृतानि लोचनानि। निवृत्तः शेषेन्द्रियव्यापारः। संजातः कर्णेन्द्रियमात्रनिमग्नोऽन्तरात्मा। ततो निष्पन्दमन्दीभूतं तत्तादृशं हरिणयूथमवलोक्याभ्यर्णीभूतो व्याधः। प्रगुणीकृतं कोदण्डं। सन्धितस्तत्र शिलीमुखः। बद्धमालीढस्थानकं। ईषदाकुञ्चिता कन्धरा। समाकृष्टो बाणः कर्णान्तं यावत्। ततो मुक्तेन तेनाराद्भागे वर्तमानोऽहं निर्भिद्य पातितो भूतले॥

अत्रान्तरे जीर्णा मे पूर्वदत्ता गुटिका। ततो जीर्णायां तस्यां हरिणभवनिबन्धनभूतायामेकभववेद्यायां गुटिकायां दत्ता ममान्या गुटिका भवितव्यतया। संपन्नस्तन्माहात्म्येनाहं करिवररूपः। वर्धितः कालक्रमेण संजातो यूथाधिपतिः। ततः स्वभावसुन्दरेषु नलवनेषु चाभीष्टतमेषु सल्लकीकिसलयेषु अत्यन्तकमनीयेषु वनविभागेषु परिकरितः करेणुकावृन्देन चित्तानन्दसन्दोहसागरमवगाहमानो यथेष्टचेष्टया विचरामि यावदेकदाकाण्ड एव संत्रस्तं तत्करियूथं। नश्यन्ति श्वापदानि। श्रूयते वेणुस्फोटरवः। संसर्पितं धूमवितानं। ततः किमेतदिति निरीक्षितो मया पश्चाद्भागो यावन्निकटीभूतो

ज्वालामालाकुलो दवानलः । ततः प्रादुर्भूतं मे मरणभयं परित्यक्तं पौरुषं अङ्गीकृतं दैन्यं समाश्रितात्मम्भरिता व्यपगतोऽहङ्कारः परित्यक्तं यूथं पलायितो गृहीत्वैकां दिशं गतः स्तोकं भूभागं । तत्र चासीच्चिरन्तनग्रामपद्रसम्बन्धी विशालः शुष्कोऽन्धकूपः । स च तटवर्तितृणव्यवहिततया भयाकुलतया च न लक्षितो मया धावता वेगेन । ततः प्रविष्टौ मम तत्रायपादौ । तन्निरालम्बनतया पर्यस्तः पश्चाद्भागः । ततः पतितोऽहमुत्तानशरीरस्तत्रान्धकूपे संचूर्णितो गात्रभारेण मूर्छितः चणमात्रं । लब्धा कथंचिच्चेतना । यावन्न चालयितुं शक्नोमि शरीरं प्रादुर्भूता च सर्वाङ्गीणा तीव्रवेदना ततः संजातो मे पश्चात्तापः । चिन्तितं च मया । यथेदृशमेव युज्यते मादृशानां ये प्रतिपन्नयूथभावं चिरकालपरिचितमुपकारकमापन्निमग्नमनुरक्तमात्मवर्गं परित्यज्य कृतघ्नतया कुचित्रारितामुररीकुर्वन्तः पलायन्ते । अहो मे निर्लज्जता । मय्यपि किल यूथाधिपतिशब्दो रूढः । तत्किमनेनाधुना । स्वचेष्टितानुरूपमेवेदं मम संपन्नं । अतो न मया मनसि खेदो विधेयः । ततो ऽनया भावनया प्रतिपन्नं मया मनाङ् माध्यस्थ्यं तितिक्षिता भवन्ती तीव्रापि वेदना । स्थितस्तदवस्थः सप्तरात्रं यावत् ॥

अत्रान्तरे तुष्टा ममोपरि भवितव्यता । ततस्तयाभिहितं । साध्वार्यपुत्र साधु । शोभनस्तेऽध्यवसायः । तितिक्षितं भवता परमं दुःखं । तुष्टाहमिदानीं भवतो ऽनेन चेष्टितेन । नयामि भवन्तं नगरान्तरे । मयाभिहितं । यदाज्ञापयति देवी । ततो दर्शितस्तया सुन्दराकारः पुरुषः । अभिहितश्चायं । यथार्यपुत्र तुष्टया मयाय-

मधुना भवतः सहायो निरूपितः पुण्योदयो नाम पुरुषः। तदनेन सह भवता गन्तव्यं। मयाभिहितं। यदाज्ञापयति देवी। अत्रान्तरे जीर्णा मे पूर्वदत्ता गुटिका। ततः प्रयुक्तान्या गुटिका भवितव्यतया। अभिहितं च तया। यथार्यपुत्र तव गतस्यायं पुण्योदयस्ते प्रच्छन्नरूपः सहोदरः सहचरश्च भविष्यतीति॥

एवं च वदति संसारिजीवे भव्यपुरुषः प्रज्ञाविशालायाः कर्णाभ्यर्णे स्थित्वेदमाह। यथाम्ब कोऽयं पुरुषः किं वानेन कथयितुमारब्धं कानि चामूनि असंव्यवहारादीनि नगराणि का चेयं गुटिका यैकैकवासके प्रयुक्ता सती नानाविधरूपाणि कारयति विविधसुखदुःखादिकार्याणि दर्शयति कथं वा पुरुषस्येयन्तं कालमेकस्यावस्थितिः कथं चासंभावनीयानि मनुष्यस्य सतः कृमिपिपीलिकारूपाणि जायेरन्। तदिदं सकलमपूर्वालजालकल्पमस्य तस्करस्य चरितं मम प्रतिभासते। तत्कथयाम्बिके कोऽस्य भावार्थ इति। प्रज्ञाविशालयोक्तं। वत्स यद्यपीदानीमन्नं विशेषरूपमुपलभ्यते तथानेन कथितं। किं तर्हि सामान्यरूपेण संसारिजीवनामायं पुरुषः। अतस्तदेवानेनात्माभिधानमाख्यातमनेन चात्मचरितं सर्वमिदं घटमानकमेव निवेदयितुं प्रक्रान्तं। तथाहि। असांव्यवहारिकजीवराशिरचासंव्यवहारनगरं। एकेन्द्रियजातयः पञ्चापि पृथिव्यप्तेजोवायुवनस्पतिरूपाः। तेषां स्थानं एकाचनिवासं। विकलेन्द्रियाणां द्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियलक्षणानां स्थानं विकलाचनिवासं। पञ्चेन्द्रियतिरश्चां निलयः पञ्चाचपशुसंस्थानं। एक-

जन्मप्रयोग्यं कर्मप्रकृतिजालमेकभववेद्या गुटिकेत्युच्यते। तदुदयेन भवन्त्येव नानाविधरूपाणि संपद्यन्त एव विविधसुखदुःखानि कार्याणि। अजरामरश्चायं पुरुषः। ततो युक्तमेवास्यानन्तमपि कालमवस्थानं। संसारिजीवस्य चात्र भवन्त्येव कृमिपिपीलिकादिरूपाणि। किमत्राश्चर्यं। अथवा मुग्धबुद्धिरद्यापि वत्सो न जानीते यदस्य स्वरूपं। वत्स न संभवत्येव भुवनोदरे तत्संविधानकं यदस्य संसारिजीवस्य सम्बन्धिनि चरिते नावतरति। तद्वत्स निवेदयतु तावदेष सर्वं यथावृत्तं। पश्चात्तवाहमस्य भावार्थं निराकुला कथयिष्यामि। भव्यपुरुषेणोक्तं। यदाज्ञापयत्यम्बेति॥

उत्पत्तिस्तावदस्यां भवति नियमतो वर्यमानुष्यभूमौ
भव्यस्य प्राणभाजः समयपरिणतेः कर्मणश्च प्रभावात्।
एतच्चाख्यातमत्र प्रथममलु ततस्तस्य बोधार्थमित्थं
प्रक्रान्तोऽयं समस्तः कथयितुमतुलो जीवसंसारचारः॥

स च सदागमवाक्यमपेक्ष्य भो
जडजमाय च तेन निवेद्यते।
बुधजनेन विचारपरायण-
स्तदनु भव्यजनः प्रतिबुध्यते॥

प्रस्तावेऽत्र निवेदितं तदतुलं संसारविस्फूर्जितं
धन्यानामिदमाकलय्य विरतिः संसारतो जायते।

येषां त्वेष भवो विमूढमनसां भोः सुन्दरो भासते।
ते नूनं पशवो न सन्ति मनुजाः कार्येण मन्यामहे ॥

इत्युपमितभवप्रपञ्चायां कथायां संसारि-
जीवचरिते तिर्यग्गतिवर्णनो नाम
द्वितीयः प्रस्तावः ॥ २ ॥

---

# तृतीयः प्रस्तावः।

भवप्रपञ्चस्तिर्यक्षु वर्तमानस्य देहिनः।
एष प्रोक्तो मनुष्यत्वे यस्मात्तदधुनोच्यते॥

संसारिजीव उवाच। ततोऽहं भद्रेऽगृहीतसङ्केते समाखादितैकभववेद्यगुटिकः प्रवृत्तो गन्तुं। इतश्चास्त्यत्रैव मनुजगतौ नगर्यां भरताभिधानः पाटकः। तस्य च विशेषकभूतमस्ति जयस्थलं नाम नगरं। तत्र च महानृपतिगुणसम्पदालिङ्गितमूर्तिः पद्मो नाम राजा। तस्य च रतिरिव मकरकेतनस्य नन्दा नाम प्रधानदेवी। ततोऽहं तस्याः कुक्षौ प्रवेशितो भवितव्यतया। स्थितस्तत्रोचितकालं। निर्गतः सह पुण्योदयेन। दृष्टो नन्दया। संपन्नस्तस्याः पुत्र मम जात इत्यभिमानः। निवेदितः प्रमोदकुम्भाभिधानेन दासदारकेण नरपतये। प्रादुर्भूतः सुतो मे इति समुत्पन्नस्तस्याप्यनुशयः। हर्षविशेषादुल्लसितो गात्रेषु पुलकोद्भेदः। दापितं निवेदकदारकाय पारितोषिकं। समादिष्टो मज्जन्ममहोत्सवः। ततो दीयन्ते महादानानि मुच्यन्ते बन्धनानि पूज्यन्ते नगरदेवताः क्रियन्ते हट्टद्वारशोभाः शोध्यन्ते राजमार्गाः आहन्यन्त आनन्दभेर्यः आगच्छन्ति विशेषोज्ज्वलनेपथ्या राजकुले नागरकलोकाः विधीयन्ते तदुपचाराः प्रयुज्यन्ते समाचाराः आस्फाल्यन्ते तूर्यसङ्घाताः गीयन्ते धवलमङ्गलानि नृत्यन्ति ललनालोकाः सह कञ्चुकिवामनकुब्जादिभिर्नरेन्द्रवृन्दैरिति। ततश्चैवं वृत्ते जन्ममहा-

नन्दे ऽतिक्रान्ते मासे तिरोधाय संसारिजीव इत्यभिधानं प्रतिष्ठितं मे नन्दिवर्धन इति नाम । जातो ममाप्यहममयोः पुत्र इत्यभिमानः । ततो जनयन्नानन्दं जननीजनकयोः पद्मभिधात्रीभिर्लालितः संपन्नोऽहं चिवार्षिकः ।

मम चासंव्यवहारनगरादारभ्य सकलं कालं द्विविधः परिकरोऽनुवर्तते । तद्यथा । अन्तरङ्गो बहिरङ्गश्च । तत्रान्तरङ्गपरिकरमध्ये ऽस्ति ममाविवेकिता नाम ब्राह्मणजातीया धात्री । सापि प्रसूता मज्जन्मदिने । जातो दारकः । प्रतिष्ठितं तस्य नाम वैश्वानर इति । स चादित एवारभ्यानभिव्यक्तरूपतयासीदेव । केवलमधुनाभिव्यक्तरूपः संपन्नः । ततो मयासौ धारयन् वैरकलहाभिधानौ विषमविस्तीर्णौ चरणौ दधानः परिस्थूलकठिनहूस्वे ईर्ष्यास्तेयाभिधाने जङ्घे ससुदहननुग्रयानुपशमनामानौ विषमप्रतिष्ठितावूरू बिभ्राणः पैशुन्यसंज्ञकमेकपार्श्वोन्नतं कटीतटं दर्शयन् परमर्सोद्दहनामकं वक्रविषमं लम्बमुदरं कलितोऽन्तस्तापनामकेनातिसङ्कटेनोरःस्थलेन युक्तः चारमत्सरसंज्ञाभ्यां विषमपरिहूस्वाभ्यां बाहुभ्यां विराजमानः क्रूरतारूपया वक्रया सुदीर्घया च शिरोधरया विडम्ब्यमानो ऽसभ्यभाषणादिरूपैर्विजितदन्तच्छदैर्विरलविरलैर्महद्भिर्दशनैर्विगोप्यमानश्चण्डतामहनलनामकाभ्यां शुषिरमात्ररूपकाभ्यां कर्णाभ्यामुपहास्यस्थानं तामसभावसंज्ञया स्थानमात्रेण लक्ष्यमाणयातिचिपिटया नासिकया विभ्रद्भासुरतां रौद्रत्वनृशंसत्वसंज्ञाभ्यामतिरक्ततया गुञ्जार्धसन्निभाभ्यां वर्तुलाभ्यां लोचनाभ्यां विनाट्यमानोऽनार्याचरणसंज्ञकेन महता चिकोणेन शिरसा यथार्थीकुर्वाणो वैश्वानरतां

परोपतापसंज्ञकेनातिपिङ्गलतया ज्वालाकलापकल्पेन केशभारेण दृष्टो वैश्वानरो ब्राह्मणदारक इति।

ततोऽनादिपरिचयादाविर्भूतो मम तस्योपरि स्नेहः। गृहीतो मित्रबुद्ध्या। न लक्षिता परमार्थशत्रुभूतता। अविवेकितापुत्रो ऽयमिति संपन्नास्योपरि गाढमन्तरङ्गपरिजनतया हितकारी ममायमिति बुद्धिः। ततो लक्षितस्तेन मदीयो भावः। अये करोत्येष ममोपरि राजपुत्रः प्रीतिं। तदेनमुपसर्पामि। ततः समागतो निकटे। समालिङ्गितोऽहं। दर्शितः स्नेहभावः। प्ररूढस्तावयोः प्रणयः। लग्ना मैत्री। ततो यत्र यत्र क्वचिदहं संचरामि गृहे बहिश्च तत्र तत्र न मामसौ क्षणमपि मुञ्चतीति। ततो हृष्टः स्वचित्तमध्ये ममोपरि पुण्योदयो वैश्वानरेण सह मैत्रीकरणेन। चिन्तितं च तेन। अये मम रिपुरेष वैश्वानरः। तथाप्येवमविशेषज्ञोऽयं नन्दिवर्धनो येन मामनुरक्तमवधीर्यानेन समस्तदोषराशिरूपेणात्मनोऽपि परमार्थवैरिणा सह मैत्रीं करोति। अथवा किमत्राश्चर्यं। न लक्षयन्त्येव मूढाः पापमित्रस्वरूपं नावबुध्यन्ते तत्सङ्गतेर्दुरन्ततां न बहु मन्यन्ते तत्सङ्गनिवारकं सदुपदेष्टारं परित्यजन्ति तत्कृते धर्ममित्राणि प्रतिपद्यन्ते तद्वशेन कुमार्गं। ते हि यदि परं धावन्तोऽन्धा इव कुड्यादौ गाढं स्फोटलाभेन पापमित्रसङ्गान्निवर्तन्ते न परोपदेशेनेति। मूढश्चायं नन्दिवर्धनकुमारो योऽनेनापि सह साङ्गत्यं विधत्ते। तत्किं ममानेन निवारितेन। निर्दिष्टश्चाहमस्य भवितव्यतया सहचरत्वेनावर्जितश्चाहमनेन करिरूपतायां वर्तमानेन वेदनामसुह्यतेऽपि निश्चलतया माध्यस्थभावनया।

तस्मादेव नन्दिवर्धनकुमारः पापमित्रसङ्गतिपरोऽपि नाकाण्ड एव मम तावन्मोक्तुं युक्त इति। पर्यालोच्यासौ पुण्योदयो दृष्टोऽपि मम पार्श्वे प्रच्छन्नरूपतया तदा तिष्ठत्येव।

जाताश्चान्येऽपि बहिरङ्गा मम बहवो वयस्याः। ततस्तैः सार्धमनेकक्रीडाभिः क्रीडन्नहं प्रवर्धितुं प्रवृत्तः। प्रस्तुते च क्रीडने मत्तो महत्तरा अपि डिम्भाः प्रधानकुलजा अपि पराक्रमवन्तोऽपि मां वैश्वानराधिष्ठितमवलोक्य भयेन कम्पन्ते गच्छन्ति च मम प्रणतिं कुर्वन्ति चाटुकर्माणि प्रतिपद्यन्ते पदातिभावं धावन्ति पुरतो न प्रतिकूलयन्ति मद्वचनं किं बहुना लिखितादपि मत्तो बिभ्यतीति। तत्र च सर्वस्यापि व्यतिकरस्याचिन्त्यमाहात्म्यतया प्रच्छन्नरूपोऽपि पुण्योदयः कारणं। मम तु महामोहवशात्तदा चेतसि परिस्फुरितं। यदुत यदेते वृद्धतमा अपि डिम्भा ममैवं कुर्वाणा वर्तन्ते सोऽयमस्य वरमित्रस्य वैश्वानरस्य गुणः। यतोऽयं सन्निहितः सन्नात्मीयसामर्थ्येन वर्धयति मम तेजस्वितां करोत्युत्साहं प्रोज्ज्वलयति बलं संपादयत्योजः स्थिरीकरोति मनः जनयति धीरतां विधत्ते शौण्डीरतां किं बहुना समस्तपुरुषगुणैर्मामेष योजयति। ततोऽनया भावनया संजातो वल्लभतरो मे वैश्वानरः॥

ततः संजातोऽहमष्टवार्षिकः। समुत्पन्ना पद्मनृपतेश्चिन्ता। ग्राहयितव्यस्तावदधुना कुमारः कला इति। ततो निरूपितः प्रशस्तदिवसः। समाहूतः प्रधानः कलाचार्यः। पूजितोऽसौ विधिना। कृतमुचितकरणीयं। समर्पितोऽहं तस्य पित्रा महतादरेणेति। समर्पिताश्च मदीयभ्रातरोऽन्येऽपि बहवो राजदारकाः प्रागेव तस्य

कलाचार्यस्य । ततस्तैः सार्धमहं प्रवृत्तः कलाग्रहणं कर्तुं । ततः संपूर्णतया सर्वोपकरणानां गुरुतया तातोत्साहनस्य हिततया कलाचार्यस्य निश्चिन्ततया कुमारभावस्य सन्निहिततया पुण्योदयस्योत्कटतया क्षयोपशमस्यानुकूलतया तदा भवितव्यताया अनन्यहृदयतया मया गृहीतप्रायः स्वल्पकालेनैव सकलोऽपि कलाकलापः। केवलमतिवल्लभतया सदा सन्निहितोऽसौ वैश्वानरः सनिमित्तमनिमित्तं वा करोति मम समालिङ्गनं । ततस्तेन समालिङ्गितोऽहं न स्मरामि गुरूपदेशं न गणयामि कुलकलङ्कं न बिभेमि तातमनःखेदस्य न लक्षयामि परमार्थं न जानाम्यात्मनोऽन्तस्तापं न वेद्मि कलाभ्यासनिरर्थकत्वं किं तु तस्यैव वैश्वानरस्यैकं प्रियं कृत्वा तदुपदेशेन गलत्स्वेदबिन्दू रक्तीकृतलोचनो भुग्नभृकुटिः करोमि समस्तदारकैः सह कलहं विदधामि सर्वेषां मर्मोद्घट्टनं उच्चारयाम्यसभ्यवचनानि न क्षमे तेषां मध्यस्थमपि वचनं ताडयामि प्रत्येकं यथासन्निहितेन फलकादिना । ततस्ते सर्वेऽपि वैश्वानरालिङ्गितं मामवलोक्य भयेन चलमानसाः सन्तो वदन्त्यनुकूलं कुर्वन्ति चाटूनि आराधयन्ति मां पादपतनैः किं बहुना मदीयगन्धेनापि ते वीर्यवन्तोऽपि राजदारका नागदमनीहृतप्रतापा इव विषधरा न स्वतन्त्रं चेष्टन्ते । ततस्ते समुद्विग्नाः कम्पमाना बन्धनागारगता इव महादुःखेन जननीजनकानुरोधेन कलाग्रहणं कुर्वन्तः कालं नयन्ति। न कथयन्ति तं व्यतिकरं कलाचार्याय मा भूत्सर्वेषां प्रलय इति भावनया । तथापि नित्यसन्निहितत्वात्स्वयमेव तन्मामकं चेष्टितं सकलं कलाचार्यः केवलं दारकेषु दृष्टविपाकतया भयेन समाहृदयो

ऽसावपि न मम संमुखमपि शिक्षणार्थं निरीचते। यदि पुनरन्यव्यपदेशेनापि मां प्रत्येष किंचिद् ब्रूयात्ततोऽहमेनमपि कलाचार्यमाक्रोशामि ताडयामि च। ततोऽसावपि मम राजदारकवद्वर्तते। ततो महामोहदोषेण मया चिन्तितं। अहो मे वरमित्रस्य माहात्म्यातिशयः अहो हितकारिता अहो कौशलं अहो वत्सलता अहो स्थिरानुरागः यदेष समालिङ्गनद्वारेण मम सवीर्यतां संपाद्य मामेवं सर्वथाप्रतिहताज्ञं जनयति न च मां क्षणमपि मुञ्चतीति। तदेष मे परमो बन्धुरेष मे परमं शरीरमेष मे सर्वस्वमेष मे जीवितमेष एव मे परं तत्त्वमिति। अनेन रहितः पुरुषोऽकिंचित्करतया तृणपुरुषान्न विशिष्यते। ततश्चैवंविधभावनया संजातो मम वैश्वानरस्योपरि स्थिरतरानुरागः॥

अन्यदा रहसि प्रवृत्ते तेन सह विश्रम्भजल्पे मयाभिहितं। वरमित्र किमनेन बहुना जल्पितेन। युष्मदायत्ता मम प्राणाः। तदेते भवता यथेष्टं नियोजनीया इति। ततश्चिन्तितं वैश्वानरेण। अये सफलो मे परिश्रमो यदेष मम वशवर्ती वर्तते। दर्शितो ऽनेनैवं वदता निर्भरोऽनुरागः। अनुरक्ताश्च प्राणिनः समाकर्णयन्ति वचनं गृह्णन्ति निर्विकल्पं प्रवर्तन्ते तत्र भावेन संपादयन्ति क्रियया। तदिदमत्र प्राप्तकालमिति विचिन्त्य तेनाभिहितं। कुमार एवमेतत्कः इत्यत्र सन्देहः। यत्र गृहीतहृदयमद्भावानामपि मादृशां पुरतः कुमारोऽप्येवं मन्त्रयति महाप्रसादोऽत्र कारणं। स हि स्वोत्कर्षाज्ज्ञातार्थमपि वाक्यं बलाद्भाणयति। तत्किमनेन। करोमि कुमारस्याहमचयान् प्राणान्। एष एवमेतन्नियोगः।

मयाभिहितं । कथं । तेनोक्तं । जानाम्यहं किंचिद्रसायनं । मयाभिहितं । करोतु वरवयस्यः । तेनोक्तं । यदाज्ञापयति कुमारः । ततः कृतानि तेन क्रूरचित्ताभिधानानि वटकानि । समुपनीतानि मे रहसि वर्तमानस्य । अभिहितश्चाहं । कुमार एतानि मदीयसामर्थ्यप्रभवाणि वर्तन्ते वटकानि । कुर्वन्त्युपयुज्यमानानि वीर्योत्कर्षसंपादनेन पुरुषस्य सर्वं यथेष्टं दीर्घतरं चायुष्कम् । तस्माद् गृहाण त्वमेतानि ।

अथान्तरे लघुध्वनिना कचान्तरस्थितेन केनाप्यभिहितं । भविष्यति तवाभिमते स्थाने कोऽत्र सन्देहः । न श्रुतं तन्मया । श्रुतं वैश्वानरेण । ततः संपत्स्यते मम समीहितं । यास्यत्येष वटकोपयोगेन महानरके । भविष्यति तत्र गतस्यास्य दीर्घमायुष्कं । कथमन्यथैवंविधः शब्दः । महानरक एव ममाभिमतं स्थानमिति भावनया तुष्टोऽसौ चित्तेन ।

मयाभिहितं । किं न संपद्यते मे भवादृशि वरमित्रेऽनुकूले । तदाकर्ण्य द्विगुणतरं परितुष्टोऽसौ । समर्पितानि वटकानि । गृहीतानि मया । अभिहितं च तेन । कुमारायमपरो मम प्रसादो विधेयः कुमारेण यदुत मयावसरे संज्ञितेन निर्विकल्पमेतेषां मध्यादेकं वटकं भक्षितव्यं कुमारेणेति । मयाभिहितं । किमत्र प्रार्थनया । निवेदित एवायमात्मा वरमित्रस्य । वैश्वानरेणाभिहितं । महाप्रसादोऽनुगृहीतोऽहं कुमारेणेति ॥

इतश्च तातेन सर्वत्र विश्वसनीयो नियुक्तो राजवल्लभो दारकः । यदुत परे विदुर समादिष्टो मया कुमारः । यथामन्यमनस्त्वेन

भवता कलाग्रहणं विधेयं। अहमपि न द्रष्टव्योऽहमेव भवन्तमागत्य द्रक्ष्यामि। तदेवं स्थिते मम राज्यकार्यव्याकुलतया कदाचित्त्वत्समीपे गमनं न संपद्यते। ततो भवता प्रतिदिनं कुमारशरीरवार्ता मम संपादनीया। विदुरेणोक्तं। यदाज्ञापयति देवः। ततः संपादयता तेन तद्राजशासनं लक्षितः स सर्वोऽपि मदीयो राजदारककलाचार्यकदर्थनव्यतिकरः। तथापि मनःक्षतिभयेन कियन्तमपि कालं न कथितोऽसौ ताताय। अतिभरमवलोक्य निवेदितोऽन्यदा। ततश्चिन्तितं तातेन। नैष विदुरस्तावदसत्यं भाषते। न चापि कुमारः प्रायेणैवंविधमाचरति। तत्किमत्र तत्त्वं भविष्यतीति न जानीमहे। यदि च कलाचार्यस्यापि कदर्थनं विधत्ते कुमारो निष्पन्नं ततः कलाग्रहणप्रयोजनं। इति चिन्तया समुद्विग्नो ऽभूत्तातश्चिरेण। पुनश्चिन्तितमनेन। इदमत्र प्राप्तकालं। पृच्छामि तावत्कलाचार्यमेव। यथावस्थितं ततो निश्चित्य वृत्तान्तं तन्निवारणोपाये यत्नं करिष्यामि। ततः प्रेषितस्तदाकारणाय सवकुमानं विदुरः। समागतः कलाचार्यः। अभ्युत्थितस्तातेन दापितमासनं विहिता परिचर्या। ततस्तदनुज्ञातविष्टरोपविष्टेन तातेनाभिहितं। आर्य बुद्धिसमुद्र अपि समुत्सर्पति कलाग्रहणं कुमाराणां। तेनाभिहितं। देव वाढमुत्सर्पति युष्मदनुभावेन। तातेनाभिहितं। किं परिणताः काश्चिन्नन्दिवर्धनकुमारस्य कलाः। कलाचार्येणाभिहितं। सुष्ठु परिणताः। देव निष्पन्न एव कलासु नन्दिवर्धनकुमारः। तथाहि। स्तोककालेनैव समस्तं लिपिविज्ञानं। स्वयं दृष्टमिव गणितं। उत्पादितमिवात्मना

बुद्धिसमुद्रेणोक्तं। देव सत्यमेव सर्वमिदं यदावेदितं वेदकेन तथाहि। वयमपि कुमारस्य पापमित्त्रसम्बन्धवारणे गाढमुद्युक्ताः सकलकालमास्महे। चिन्तितं चास्माभिः। यद्ययं कुमारोऽनेन वैश्वानरपापमित्त्रेण वियुज्येत ततः सत्यं नन्दिवर्धनः स्यात्। केवलमीदृशं कथंचिदनयोर्गाढनिरूढं प्रेम येन न शक्यतेऽधुना कुमारोऽनर्थभीरुतया वियोजनं विधातुमिति। अतोऽशक्यानुष्ठानरूपं कुमारस्य वैश्वानरेण सह मैत्त्रीवारणमिति मन्यामहे। तातेनाभिहितं। आर्य कः पुनरत्त्रोपायो भविष्यति। बुद्धिसमुद्रेणोक्तं। अतिगहनमेतद्वयमपि न जानीमः। विदुरेणाभिहितं। देव श्रूयतेऽत्त्र कश्चिदतीतानागतवर्तमानपदार्थवेदी समागतो जिनमतज्ञो नाम सिद्धपुत्त्रो महानैमित्तिकः। स कदाचिदत्त्रोपायं लक्षयति। तातेनाभिहितं। साध्वभिहितं भद्र साधु शीघ्रं समाहूयतां स भवता। विदुरेणाभिहितं। यदाज्ञापयति देव इति। निर्गतो विदुरः समागतो नैमित्तिकेन सह स्तोकवेलकया। दृष्टो नैमित्तिकस्तातेन। तुष्टचेतसा दापितमासनं कृतमुचितकरणीयं कथितो व्यतिकरः। ततो बुद्धिनाडीसञ्चारेण निरूप्य तेनाभिहितं। महाराज न विद्यतेऽत्त्रान्यः कश्चिदुपायः। एक एवात्त्र परमुपायो विद्यते दुर्लभश्चासौ प्रायेण। तातेनाभिहितं। कीदृशः स इति कथ्यतामार्यः। जिनमतज्ञेनाभिहितं। महाराजाकर्णय।

अस्ति रहितं सर्वोपद्रवैर्भिवासस्थानं समस्तगुणानां कारणं कल्याणपरम्परायाः दुर्लभं मन्दभागधेयैश्चित्तसौन्दर्यं नाम नगरं। तथाहि।

वसतां तत्र लोकानां नगरे पुण्यकर्मणाम् ।
रागादिचरटाः सर्वे जायन्ते नैव बाधकाः ॥
यतश्च क्षुत्पिपासाद्या बाधन्ते तत्र नो जनम् ।
ततस्तदुच्यते धीरैः सर्वोपद्रववर्जितम् ॥
ज्ञानादिभाजनं लोकस्तद्योगेनैव जायते ।
कलाकलापकौशल्यं न ततोऽन्यत्र विद्यते ॥
भवन्त्यौदार्यगाम्भीर्यधैर्यवीर्यादयो गुणाः ।
वसतां तत्र तत्सर्वगुणस्थानमतो मतम् ॥
यतश्च वसतां तत्र धन्यानां संप्रवर्तते ।
उत्तरोत्तरभावेन विशिष्टा सुखपद्धतिः ॥
न च संपद्यते तस्याः प्रतिपातः कदाचन ।
कल्याणपद्धतेर्हेतुरतस्तन्नगरं मतम् ॥
सर्वोपद्रवनिर्मुक्तं समस्तगुणभूषितम् ।
कल्याणपद्धतेर्हेतुर्यत एव च तत्पुरम् ॥
अत एव सदानन्दं तत्सपुण्यैर्निषेवितम् ।
नगरं चित्तसौन्दर्यं मन्दभाग्यैः सुदुर्लभम् ॥

तत्र च नगरेऽस्ति हितकारी सर्वलोकानां कृतोद्योगो दुष्टनिग्रहे दत्तावधानः शिष्टपरिपालने परिपूर्णः कोशदण्डसमुदयेन शुभपरिणामो नाम राजा ।

यतोऽसौ सर्वलोकानां चित्तसन्तापवारकः ।
तथा सम्पर्कमात्रेण महानन्दविधायकः ॥
सदनुष्ठानमार्गेऽपि जन्तूनां स प्रवर्तकः ।

व्याकरणं। चेत्रीभूतमस्य ज्योतिषं। सात्मीभूतमष्टाङ्गं महानिमित्तं। व्याख्यातमन्येभ्यश्छन्दोऽनेन। अभ्यस्तं नृत्तं। शिचितं गेयं। प्रणयिनीवास्य हस्तिशिचा। वयस्य इव धनुर्वेदः। मित्रमिव वैद्यकं। निर्देशकारीव धातुवादः। अनुचराणीव नरलक्षणादीनि आधेयविक्रयाणि पत्रच्छेद्यादीनि। किं बहुना। नास्ति सा काचित्कला या कुमारमासाद्य न प्राप्ता परां काष्ठामिति। ततः प्रादुर्भवदानन्दोदकपरिपूरितनयनयुगलेनाभिहितं तातेन। आर्य एवमेतत् किमत्राश्चर्यं। किं वार्ये कृतोद्योगे न संपद्यते कुमारस्य। धन्यः कुमारो यस्य युष्मादृशा गुरवः। बुद्धिसमुद्रेणोक्तं। देव मा मैवमादिश। केऽत्र वयं। युष्मदनुभावोऽयं। तातेनाभिहितं। आर्य किमनेनोपचारवचसा। युष्मत्प्रसादेनैवास्मदानन्दसन्दर्भदायिकां संप्राप्तः कुमारः सकलगुणभाजनतां। बुद्धिसमुद्रेणोक्तं। यद्येवं ततो देवकर्तव्येषु नियुक्तैरनुचरैर्न वञ्चनीयाः स्वामिन इति पर्यालोचनया किंचिद्देवं विज्ञपयितुमिच्छामि। तच्च युक्तमयुक्तं वा चन्तुमर्हति देवः। यतो यथार्थं मनोहरं च दुर्लभं वचनं। तातेनाभिहितं। वदत्वार्यः। यथावस्थितवचने कोऽवसरोऽत्रमायाः। बुद्धिसमुद्रेणोक्तं। यद्येवं ततो यदादिष्टं देवेन यथा सकलगुणभाजनतां संप्राप्तः कुमार इति तथैव स्वाभाविकं कुमारस्य स्वरूपं प्रतीत्य नास्त्यत्र सन्देहः। किं तु सकलमपि कुमारस्य गुणसन्दोहं कलङ्केनेव शशधरं कण्टकेनेव तामरसं कार्पण्येनेव वित्तनिचयं नैर्लज्ज्येनेव स्त्रीजनं भीरुत्वेनेव पुरुषवर्गं परोपतापेनेव धर्मं वैश्वानरसम्पर्केण दूषितमहमवगच्छामि। यतः सकलस्यापि कला-

कलापकौशलस्य प्रशमोऽन्तःकरणं । एष तु वैश्वानरः पापमित्रतया सन्निहितः सन्नात्मीयसामर्थ्येन तं प्रशमं कुमारस्य नाशयति । कुमारस्तु महामोहवशात्परमार्थवैरिणमप्येनं वैश्वानरं परमोपकारिणमाकलयति । तदनेनेदृशेन पापमित्रेण यस्य प्रतिहतं ज्ञानसारं प्रशमामृतं कुमारस्य तस्य निष्फलो गुणप्राग्भार इति ।

ततस्तदाकर्ण्य तातो वज्राहत इव गृहीतो महादुःखेन । ततस्तातेनाभिहितं । भद्र वेदक परित्यजेदं चन्दनरसमेकशीतलं तालवृन्तं न मामेव वह्निसापो बाधते । गच्छ समाकार्य कुमारं येनापनयामि तस्य पापमित्रसंसर्गवारणेन दुःसहसात्मनोऽन्तस्तापमिति । ततो विमुच्य तालवृन्तं क्षितिनिहितजानुकरमस्तकेन वेदकेनाभिहितं । यदाज्ञापयति देवः । किं तु महाप्रयोजनमपेक्ष्य भविष्याम्यहमस्थापितमहत्तमः । ततो न तत्र देवेन कोपः करणीयः । तातेनाभिहितं । भद्र हितभाषिणि कः कोपावसरः । वदतु विवक्षितं भद्रः । वेदकेनाभिहितं । देव यद्येवं ततः कुमारपरिषदादेवावधारितमिदं मया । यदुतायं वैश्वानरोऽन्तरङ्गभूतः कुमारस्य वयस्यो न शक्योऽधुना केनाप्यपसारयितुं । गृहीतः कुमारेणात्यर्थं हितमन्तुबुद्ध्या । न शक्नोति तद्विरहे क्षणमप्यासितुं कुमारः । यतो न लभते धृतिं गृह्यते रणरणकेन मन्यते क्षणतुच्छमनेन रहितमात्मानं । ततो यद्ययं कुमारो वैश्वानरसंसर्गत्यागं प्रति किंचिदुच्यते ततोऽहमेवं तर्कयामि महान्तमुद्वेगं कुर्यात् आत्मघातादिकं वा विदध्यात् चन्दना किंचिदकाण्डविद्वरादिकमनर्थान्तरं संपादयेदिति । यतो नाधावं किंचिदिदं कुमारस्येति देवः ।

अतो वीरजनैर्लोके हितकारी निगद्यते ॥
रागद्वेषमहामोहक्रोधलोभमदभ्रमाः ।
कामेर्ष्याशोकदैन्याद्या ये चान्ये दुःखहेतवः ॥
दुष्टचेष्टतया नित्यं लोकसन्तापकारिणः ।
तेषामुद्दलनं राजा स कुर्वन्नवतिष्ठते ॥
ज्ञानवैराग्यसन्तोषत्यागसौजन्यलक्षणाः ।
ये चान्ये जनताह्लादकारिणः शिष्टसंमताः ॥
तेषां स राजा सततं परिपालनतत्परः ।
आस्ते निःशेषकर्तव्यव्यापारविमुखः सदा ॥
धीधृतिस्मृतिसंवेगशमाद्यैः परिपूर्यते ।
भाण्डागारं यतस्तस्य गुणरत्नैः प्रतिक्षणम् ॥
दण्डश्च वर्धते तस्य चतुर्भेदबलात्मकः ।
शीलाङ्गलक्षणैर्नित्यं रथदन्तिहयादिभिः ॥
दुष्टानां निग्रहासक्तः शिष्टानां परिपालकः ।
कोशदण्डसमृद्धश्च तेनासौ गीयते नृपः ॥

तस्य च शुभपरिणामस्य राज्ञो गृहीतजयपताका शरीरसौन्दर्येण विनिर्जितभुवनत्रया कलाकलापकौशलेनापहसितरतिविभ्रमा विलासविस्तरेणाधरितारुन्धतीमाहात्म्यातिशया निजपतिभक्ततया निष्प्रकम्पता नाम महादेवी ।

एकत्र सर्वयत्नेन कृतालङ्कारवर्णनम् ।
सुरासुरनरस्त्रैणं यस्याश्चोकेऽतिसुन्दरम् ॥
शोभार्थं सुनिमग्नस्य कदाचिदुपतिष्ठते ।

अन्यस्यां दिशि संस्थाप्य सा देवी निष्प्रकम्पता ॥
आसक्तिर्मुनिचित्तानां तस्यामेवोपजायते ।
अतः शरीरसौन्दर्यात्मा गृहीतपताकिका ॥
रुद्रेन्द्रोपेन्द्रचन्द्राद्याः कलाकौशलशालिनः ।
ये चान्ये लोकविख्याता विद्यन्ते भुवनत्रये ॥
लोभकामादिभिः सर्वे जितास्ते भावशत्रुभिः ।
न कौशलमतस्तेषां विद्यते परमार्थतः ॥
तस्यास्तु देव्यास्तत्किंचित्कौशलं येन लीलया । ·
तान्पराजयते तेन साभिभूतजगत्त्रया ॥
रतेर्विलासाः कामस्य केवलं तोषहेतवः ।
मुनयस्तु पुनस्तेषां न वार्तामपि जानते ॥
तस्याः सक्ताः पुनर्देव्या व्रतनिर्वाहणादयः ।
विलासा मुनिलोकस्य मानसाक्षेपकारिणः ॥
अतोऽपहसिता सत्यं स्वविलासै रतिस्तया ।
यथा च भर्तुर्भक्ता सा तथेदानीं निगद्यते ॥
आपत्सिमग्नं भर्तारं प्रकाम्य निजजीवितम् ।
निर्वाहयति वीर्येण तेनासौ भर्तृवत्सला ॥
अरुन्धती पुनर्नैव पत्युः संरक्षणक्षमा ।
निष्प्रकम्पतया तस्माद् भर्तृभक्ततया जिता ॥
किं चेह सक्तेनोक्तेन राज्ञः कार्यप्रसाधनी ।
तस्य राज्ये परं सारा सा देवी निष्प्रकम्पता ॥
तयोश्च निष्प्रकम्पताशुभपरिणामयोर्देवीनृपयोरस्ति प्रकर्षः

सुन्दराणामुत्पत्तिभूमिराश्चर्याणां मञ्जूषा गुणरत्नराशेः वपुर्वैलक्षण्येन मुनीनामपि मनोहारिणी क्षान्तिर्नाम दुहिता।

यतः सा सततानन्ददायिनी पर्युपासिता।
स्मरणेनापि निःशेषदोषमोषविधायिनी॥
निरीक्षते विशालाक्षी यं नरं किल लीलया।
पण्डितैः स महात्मेति कृत्वा गाढं प्रशस्यते॥
आलिङ्गनं पुनस्तस्या मन्ये यो लप्स्यते नरः।
स सर्वनरवर्गस्य चक्रवर्ती भविष्यति॥
अतस्सारुतरं तस्या नान्या जगति विद्यते।
प्रकर्षः सुन्दराणां सा विद्वद्भिस्तेन गीयते॥
सद्ध्यानकेवलज्ञानमहर्द्धिप्रशमादयः।
लोकानामद्भुता भावा ये चमत्कारकारिणः॥
ते भवन्ति भविष्यन्ति भूताश्चानन्तशो यतः।
तत्प्रसादेन सत्त्वानां तामाराधयतां सदा॥
उत्पत्तिभूमिः सा तस्मादाश्चर्याणामुदाहृता।
यथा च रत्नमञ्जूषा तथेदानीं निबोधत॥
दानशीलतपोज्ञानकुलरूपपराक्रमाः।
सत्यशौचार्जवालोभवीर्यैश्वर्यादयो गुणाः॥
ये केचित्सुन्दरा लोके वर्तन्ते रत्नरूपिणः।
क्षान्तिरेव हि सर्वेषां तेषामाधारतां गता॥
तेनासौ रत्नमञ्जूषा विद्वद्भिः परिकीर्तिता।
क्षान्तिहीना गुणाः सर्वे न शोभन्ते निराश्रयाः॥

अथवा ।

क्षान्तिरेव महादानं क्षान्तिरेव महातपः ।
क्षान्तिरेव महाज्ञानं क्षान्तिरेव महादमः ॥
क्षान्तिरेव महाशीलं क्षान्तिरेव महाकुलम् ।
क्षान्तिरेव महावीर्यं क्षान्तिरेव पराक्रमः ॥
क्षान्तिरेव च सन्तोषः क्षान्तिरिन्द्रियनिग्रहः ।
क्षान्तिरेव महाशौचं क्षान्तिरेव महादया ॥
क्षान्तिरेव महारूपं क्षान्तिरेव महाबलम् ।
क्षान्तिरेव महैश्वर्यं क्षान्तिर्धैर्यमुदाहृता ॥
क्षान्तिरेव परं ब्रह्म सत्यं क्षान्तिः प्रकीर्तिता ।
क्षान्तिरेव परा मुक्तिः क्षान्तिः सर्वार्थसाधिका ॥
क्षान्तिरेव जगद्वन्द्या क्षान्तिरेव जगद्धिता ।
क्षान्तिरेव जगज्ज्येष्ठा क्षान्तिः कल्याणदायिका ॥
क्षान्तिरेव जगत्पूज्या क्षान्तिः परममङ्गलम् ।
क्षान्तिरेवौषधं चारु सर्वव्याधिनिबर्हणम् ॥
क्षान्तिरेवारिनिर्नाशं चतुरङ्गं महाबलम् ।
किं वात्र बहुनोक्तेन क्षान्तौ सर्वं प्रतिष्ठितम् ॥
अत एव तु सा कन्या मुनिलोकमनोहरा ।
कुर्यादीदृग्रूपायां को न चित्तं सचेतनः ॥

अन्यच्च ।

यस्य चित्तं समारोहेदिसमन्तौ स्वलीलया ।
सा कन्या धन्यतां प्राप्य सोऽपि तद्रूपतां भजेत् ॥

अतः सम्यग्गुणाकाङ्क्षी कः सकर्णो न तां हृदि ।
कुर्यात्कन्यां सदाकालं सर्वकामसमर्पिकाम् ॥

एवं च स्थिते ।

सा गुणोत्कर्षयोगेन कन्या सर्वाङ्गसुन्दरा ।
अस्य वैश्वानरस्योच्चैः प्रतिपक्षतया स्थिता ॥
तस्या दर्शनमात्रेण भीतभीतः सुविक्लवः ।
एष वैश्वानरो मन्ये दूरतः प्रपलायते ॥
निःशेषदोषपुञ्जोऽयं सा कन्या गुणमन्दिरम् ।
साक्षादग्निरयं पापः सा पुनर्हिमशीतला ॥
सहावस्थानमेवं हि नानयोर्विद्यते क्वचित् ।
विरोधभावात्तेनैवमस्माभिरभिधीयते ॥
यदैष कन्यां तां धन्यां कुमारः परिणेष्यति ।
अनेन पापमित्रेण तदा मैत्रीं विहास्यति ॥

अत्रान्तरे चिन्तितं विदुरेण । अये अनेन जिनमतज्ञेन नैमित्तिकेनेदमभिहितं । यथा चित्तसौन्दर्यं यः शुभपरिणामः तस्य या निष्प्रकम्पता तज्जनिता या क्षान्तिः सैवामुं नन्दिवर्धनकुमारस्यानेन पापमित्रेण वैश्वानरेण सह संसर्गं निवारयितुं समर्था नान्यस्तन्निवारणे कश्चिदुपाय इति । तत्सर्वमनेन युक्तमुक्तं । अथवा किमाश्चर्यं । न हि जिनमतज्ञः कदाचिदयुक्तं भाषते । ततस्तन्नैमित्तिकवचनमाकर्ण्य तातेनावलोकितं पार्श्ववर्तिनो मतिधनस्य महामन्त्रिणो वदनं । स्थितोऽसौ प्रह्वतरः । अभिहितस्तातेन । आर्य मतिधन श्रुतमेतद्भवता । मतिधनेनाभिहितं । देव श्रुतं । तातै-

नाभिहितं । आर्य यद्येवं ततो महदिदं मम चित्तोद्वेगकारणं यदेष विशिष्टजनस्पृहणीयोऽपि कुमारस्य गुणकलापः पापमित्र-सम्बन्धदूषितो निष्फलः संपन्न इति । तद् गच्छ शीघ्रं प्रेषय चित्तसौन्दर्यं वचनविन्यासकुशलान् प्रधानमहत्तमान् याह्य तद्ग्रामसभवीनि प्राभृतानि उपदिश गच्छतां तेषां निरन्तरसम्बन्धकरणपटून्युपचारवचनानि याचय कुमारार्थं शुभपरिणामं चान्निदारिकामिति । मतिधनेनाभिहितं । यदाज्ञापयति देव । इति निर्गन्तुं प्रवृत्तो मतिधनः । जिनमतज्ञेनाभिहितं । महाराज अलमनेनारम्भेण । न खल्वेवंविधगमनयोग्यं तन्नगरं । तातेनाभिहितं । आर्य कथं । जिनमतज्ञेनाभिहितं । महाराज समस्तान्येवात्र लोके नगरराजभार्यापुत्रमित्रादीनि वस्तूनि द्विविधानि भवन्ति । तद्यथा । अन्तरङ्गाणि बहिरङ्गाणि च । तत्र बहिरङ्गेष्वेव वस्तुषु भवादृशां गमनाज्ञापनादिव्यापारो नान्तरङ्गेषु । एतच्च नगरं राजा तापत्नी दुहिता च सर्वमन्तरङ्गं वर्तते । तत्र युज्यते तत्र महत्तमप्रेषणं । तातेनाभिहितं । आर्य कः पुनस्तत्र प्रभवति । जिनमतज्ञेनाभिहितं । योऽन्तरङ्ग एव राजा । तातेनाभिहितं । आर्य कः पुनरसौ । जिनमतज्ञेनाभिहितं । महाराज कर्मपरिणामः । तस्य हि शुभपरिणामस्य कर्मपरिणामेनैव भटभुक्त्या दत्तं तन्नगरं । अतस्तदायत्तोऽसौ वर्तते । तातेनाभिहितं । आर्य किं भवत्यसौ कर्मपरिणामो मादृशामभ्यर्थनाविषयः । जिनमतज्ञेनाभिहितं । महाराज नैतदेवं । न हि यथेष्टकारी सायेत नापेक्षते मत्पुरुषाभ्यर्थनां न रज्यते मदुपचारवचनेन न गृह्णते

परोपरोधेन नानुकम्पते दृष्टाप्यापद्गतं जनं । केवलमसावपि कार्यं विदधानः पृच्छति महत्तमभगिनीं लोकस्थितिं पर्यालोचयति स्वभार्यां कालपरिणतिं कथयत्यात्मीयमहत्तमाय स्वभावाय अनुवर्तते नन्दिवर्धनकुमारस्य समस्तभवान्तरानुयायिनीं प्रच्छन्नरूपां भार्यां भवितव्यतां बिभेति कियन्मात्रं नन्दिवर्धनकुमारवीर्यादपि स्वप्रवृत्तौ । ततश्चैवंविधमन्तरङ्गपरिजनं स्वमम्भावनया सम्मान्यैष कर्मपरिणाममहाराजः कार्यं कुर्वाणो न बहिरङ्गलोकं रटन्तमपि गणयति किं तर्हि यदात्मने रोचते तदेव विधत्ते । तस्मान्ना- यमभ्यर्थनोचितः । किं तु यदास्य प्रतिभासिष्यते तदा स्वयमेव कुमाराय दापयिष्यति शुभपरिणामेन चान्तिदारिकामिति । तातेनाभिहितं । आर्य हतास्तर्हि वयं । यतो न ज्ञायते कदापि तस्य प्रतिभासिष्यते अस्मिंश्चानपसारिते पापमित्रे कुमारस्य समस्त- गुणविफलतया न किंचिदस्माकं जीवतीति कृत्वा । जिनमत- ज्ञेनाभिहितं । महाराजालं विषादेन । किमत्र क्रियते यदीदृश- मेवेदं प्रयोजनमिति । तथाहि ।

नरः प्रमादी शक्येऽर्थे स्यादुपालम्भभाजनम् ।
अशक्यवस्तुविषये पुरुषो नापराध्यति ॥

अपि च ।

योऽशक्ये ऽर्थे प्रवर्तेत अनपेक्ष्य बलाबलम् ।
आत्मनश्च परेषां च स हास्यः स्यादिपश्चिताम् ॥
तदेवं स्थिते कार्ये यद्भविष्यतया परम् ।
भवतां त्यक्तचिन्तानामासितुं युज्यते ध्रुवम् ।

अन्यच्च कथ्यते किंचिच्चेतसः स्वास्थ्यकारणम् ।
निरालम्बनतामेत्य मा भूद्दैन्यं भवादृशाम् ॥

तातेनाभिहितं । आर्य साधूक्तं। समाश्वासिता वयमनेन भवतां पश्चिमवचनेन। तत्कथय किं तदस्माकं चेतसः स्वास्थ्यकारणमिति । जिनमतज्ञेनाभिहितं । महाराज अस्त्यस्य कुमारस्य प्रच्छन्न-रूपः पुण्योदयो नाम वयस्यः । स यावदस्य पार्श्ववर्ती तावदेष वैश्वानरः पापमित्रतया यं यमनर्थं कुमारस्य संपादयिष्यति स सोऽस्य प्रत्युतार्थरूपतया पर्यवस्यतीति । तदाकर्ण्य मनाक् स्वस्थी-भूतस्तातः ॥

अत्रान्तरे दिनकरमम्बरतलस्य मध्यभागमारूढं निवेदयन्नाडि-काछेदप्रहतपटहनादानुसारी समुत्थितः शङ्खशब्दः । पठितं कालनिवेदकेन ।

न क्रोधात्तेजसो वृद्धिः किं तु मध्यस्थभावतः ।
दर्शयन्निति लोकानां सूर्यो मध्यस्थतां गतः ।

तातेनाभिहितं। अये मध्याह्नसमयो वर्तते । ततः समुत्थात-व्यमिदानीमिति कृत्वा विसर्जितो राजलोकः । पूजितौ कलाचार्य-नैमित्तिकौ प्रस्थापितौ सबहुमानं। ततो नैमित्तिकवचनादशक्या-नुष्ठानमेतदिति जातनिर्णयेनापि तातेनातिमोहहेतुतयापत्यस्नेहस्य समादिष्टो विदुरः । यदुत परीक्षितव्यो भवता कुमाराभिप्रायः किं शक्यतेऽस्मात्पापमित्रादियोजयितुं कुमारो न वेति। विदुरे-णाभिहितं । यदाज्ञापयति देवः । ततः समुत्थितस्तातः । कृतं दिवसोचितं कर्तव्यं ॥

द्वितीयदिने समागतो मम समीपे विदुरः। विहितप्रणामो निषण्णो मदन्तिके। पृष्टो मया। भद्र ह्यः किं नागतोऽसि। विदुरेण चिन्तितं। अये समादिष्टस्तावदहं देवेन। यथा लक्षयितव्यो भवता कुमाराभिप्रायः। ततोऽहमस्मै यत् तत्साधुभ्यः सकाशादाकर्णितमासीन्मया दुर्जनसंसर्गदोषप्रतिपादकमुदाहरणं तत्कथयामि। ततो विज्ञास्यते खल्वेतदीयोऽभिसन्धिरिति। एवं विचिन्त्य विदुरेणाभिहितं। कुमार किंचिदाचष्टमभूत्। मयाभिहितं। कीदृशं। विदुरेणाभिहितं। कथानकमाकर्णितं। मयाभिहितं। वर्णय कीदृशं तत्कथानकं। विदुरेणाभिहितं। वर्णयामि। केवलमवहितेन श्रोतव्यं कुमारेण। मयाभिहितं। एष दत्तावधानोऽस्मि। विदुरेणाभिहितं॥

अस्त्यत्रैव मनुजगतौ नगर्यामस्मिन्नेव भरताभिधाने पाटके क्षितिप्रतिष्ठितं नाम पुरं। तत्रास्ति वीर्यनिधानभूतः कर्मविलासो नाम राजा। तस्य च द्वे अग्रमहिष्यौ शुभसुन्दरी अकुशलमाला च। तत्र शुभसुन्दर्याः पुत्रोऽस्ति मनीषी नाम बालोऽकुशलमालायाः। तौ च मनीषिबालौ संप्राप्तकुमारभावौ नानाकारेषु काननादिषु क्रीडारसमनुभवन्तौ यथेष्टचेष्टया विचरतः। अन्यदा स्वदेहाभिधाने कानने नातिदूरादेव दृष्टस्ताभ्यां कश्चित्पुरुषः। स च तयोः पश्यतोरेव समारूढस्तद्दुष्क्रियाभिधानं वल्मीकं। निबद्धस्तेन मूर्धनामकतरुशाखायां पाशको निमितः शिरोधरायां प्रवाहितयात्मा। ततो मा साहसं मा साहसमिति वदन्तौ प्राप्तौ ससम्भ्रमं तत्समीपं कुमारौ। छिन्नः पाशको बालेन। ततः

समोहविह्वलो भग्नलोचनश्च पतितोऽसौ पुरुषो भूतले। समाश्वा-दितो वायुदानेन कुमाराभ्यां। लब्धा चेतना उन्मीलिते लोचने निरीक्षिता दिशः दृष्टौ कुमारौ। अभिहितस्ताभ्यां। भद्र किमेतदधमपुरुषोचितं भवता व्यवसितं किं वा भद्रस्येदृशाध्यवसा-यस्य कारणमिति कथयतु भद्रो यद्यनाख्येयं न भवति। ततो दीर्घदीर्घं निःश्वस्य पुरुषेणाभिहितं। अलमस्मदीयकथया। न सुन्दरमनुष्ठितं भद्राभ्यां यदहमात्मदुःखानलं निर्वापयितुकामो भवद्भ्यां धारितः। तदधुनापि न कर्तव्यो मे विघ्न इति ब्रुवाणः समुत्थितः पुनरात्मानमुल्लम्बयितुमसौ पुरुषः। इतो बालेन अभि-हितश्च। भद्र कथय तावदस्माकमुपरोधेन स्ववृत्तान्तं। ततो यद्युलब्धप्रतीकारः स्यात्ततो यदुचितं तत्कुर्याः। पुरुषेणाभिहितं। यदि निर्बन्धस्ततः श्रूयतां। आसीन्मम शरीरमिव सर्वस्वमिव जीवितमिव हृदयमिव द्वितीयं भवजन्तुर्नाम मित्रं। स चातिस्ने-हनिर्भरतया न क्षणमात्रमपि मां विरहयति। किं तर्हि सकल-कालं मामेव लालयति पालयति पृच्छति च मां क्षणे क्षणे। यदुत भद्र स्पर्शेन किं तुभ्यं रोचते। ततो यद्यदहं वदामि तत्तदसौ भवजन्तुर्मम वयस्यो वत्सलतया संपादयति न कदाचि-न्मम्प्रतिकूलं विधत्ते। अन्यदा मम मन्दभाग्यतया दृष्टस्तेन सदा-गमो नाम पुरुषः। पर्यालोचितं च सह तेन किंचिदेकान्ते भव-जन्तुना। भावितश्चित्तेन दृष्ट इव लक्ष्यते। ततस्तत्कालादारभ्य शिथिलीभूतो ममोपरि स्नेहाबन्धः। न करोति तथा लालनां न दर्शयत्यात्मबुद्धिं न प्रवर्तते मदुपदेशेन न मम वार्तामपि

प्रश्नयति प्रत्युत मां वैरिकमेवं मन्यते दर्शयति विप्रियाणि सकलं प्रतिकूलमासेवते। ततो मया चिन्तितं। हा हन्त किमेतत्। न मया किंचिदस्य व्यलीकमाचरितं। किमित्ययमकाण्ड एव भवजन्तुः घटिकापरावर्तित इवान्यथा संवृत्तः। हा हतोऽस्मि मन्दभाग्य इत्याराराध्यमानो वज्राहत इव पिष्ट इव हृतसर्वस्व इव शोकभराक्रान्तमूर्तिः प्राप्तोऽहं दुःखातिरेकं। लचितं च कथंचित्पर्यालोचयता मया। अये सर्वोऽप्ययं सदागमपर्यालोचजनितोऽनर्थव्यतिकरः। विप्रतारितोऽयं मम वयस्योऽनेन पापेन। स चोन्मूलयन्निव मम हृदयं पुनः पुनस्तेन सदागमेन सह रहसि पर्यालोचयति। तन्निवारणार्थं रटन्तमपि मां नाकर्णयति। यथा यथा च भवजन्तोः सदागमपर्यालोचः सुतरां परिणमति तथा तथा मामेष नितरां शिथिलयति। ततः प्रवर्धते मे गाढतरं दुःखं। अन्यदा दृढतरं पर्यालोच्य सदागमेन सह किंचिदेकान्ते चोटितो मया सह सम्बन्धः सर्वथैव भवजन्तुना। परिच्छिन्नोऽहं चित्तेन। त्यक्तानि मम वल्लभानि मद्वचनेनैव गृहीतानि यानि पूर्वं कोमलतूलीगण्डपिधानादिसनाथानि शयनानि। विरहितानि चंमपक्ष्मादिपूरितान्यासनानि। मुक्तानि हृहतिकाप्रावाररसिकाचीनांशुकपट्टांशुकादीनि कोमलवस्त्राणि। प्रत्याख्यातानि मम सुखदायीनि शीतोष्णर्तुप्रतिकूलतया सेव्यानि कस्तूरिकागुरुचन्दनादीनि विलेपनानि। वर्जितः सर्वथा ममाह्लादातिरेकसम्पादकः कोमलतनुलताकलितो ललनासङ्गमः। ततःप्रभृति स भवजन्तुः करोति केशोत्पाटनं शेते कठिनभूमौ धार-

यति शरीरे मलं परिधत्ते जरच्चीवराणि वर्जयति दूरतः स्त्रीगात्रसङ्गं कथंचिदापन्ने तस्मिन् करोति प्रायश्चित्तं सहते माघमासे शीतं गृह्णाति ज्येष्ठाषाढयोरातपं सर्वथा परमवैरिक इव यद्यत्किंचिन्मे प्रतिकूलं तत्सर्वमाचरति। ततो मया चिन्तितं। परित्यक्तस्तावत्सर्वथाहमनेन गृहीतश्च शत्रुबुद्ध्या। तथाप्यामरणान्ताः प्रणयाः सज्जनानामिति वृद्धवादः। ततो यद्यप्ययमनेन सदागम-पापमित्रेण विप्रतारितो मामेवं कदर्थयति तथाप्यकाण्ड एव न मया मोक्तव्यः। यतो भद्रकोऽयं ममात्मीयप्रकृत्या लचितो बहुना कालेन कृतानि भूयांसि ममानुकूलानि। सदागमशीलकजनितो ऽयमस्य विपर्यासः। तत्कदाचिदपगच्छत्येष कालेन। ततो भवि-ष्यति ममोपरि पूर्ववदस्य स्नेहभावः। एवं पर्यालोच्य व्यवस्थितोऽहं बहिष्कृतोऽपि तेन भवजन्तुना तस्यैव सम्बन्धिनि शरीराभिधाने प्रासादे महादुःखानुभवेन कालमुदीचमाणो दुराशापाशावपाशितः सन् कियन्तमपि कालमिति। अन्यदा सदागमवचनमनुवर्तमान-स्तिरस्कृत्य मां परुषक्रियया निष्कास्य ततोऽपि प्रासादात्परमाधा-र्मिक इव निर्घृणतया मामाक्रन्दन्तमवगणय्य रुष्ट इव तत्र यास्यामि यत्र भवन्तं लोचनाभ्यां न द्रक्ष्यामीत्यभिधाय गतः कुत्रचित्। स चेदानीं निर्वृतौ नगर्यां प्राप्तः श्रूयते। सा च मादृशामगम्या नगरी। ततो मया चिन्तितं। किमधुना मया प्रियमित्रपरि-भूतेन तद्विरहितेन चाजागलस्तनकल्पेन जीवितेन। ततश्चेदमध्य-वसितमिति॥

बालेनाभिहितं। साधु स्पर्शन साधु। स्थाने भवतो व्यवसायः।

दुःसहं हि प्रियमित्रपरिभवदुःखं। तद्विरहसन्तापश्च न शक्यते ऽन्यथा यापयितुं । तथाहि ।

न शक्यः सहजात्सोढुं क्षमिणापि पराभवः ।
कनकेन हि निर्मुक्तः पाषाणोऽपि प्रलीयते ॥
मानिनां मित्रविरहे जीवितुं नैव युज्यते ।
इदं हि नश्यता तूर्णं वासरेण निवेदितम् ॥

अहो ते मित्रवत्सलता अहो स्थिरानुरागः अहो कृतज्ञता अहो साहसं अहो निर्मिथ्यभावतेति । भवजन्तोः पुनरहो क्षणरक्तविरक्तता अहो कृतघ्नता अहो अलौकिकत्वं अहो मूढता अहो खरहृदयत्वं अहो अनार्यानुष्ठानप्रवृत्तिरिति । केवलमेवमपि स्थिते ब्रवीम्यहमत्र किंचित्तदाकर्णयतु भद्रः । स्पर्शनेनाभिहितं । वदतु निर्विकल्पमार्यः । बालेनाभिहितं ।

अलब्धप्रतिकाराणामभिमानावलम्बिनाम् ।
स्नेहैकबद्धकचाणां युक्तमेतद्भवादृशाम् ॥

तथापि मदनुग्रहेण धारणीया भद्रेण प्राणाः । इतरथा ममापीयमेव गतिः । रञ्जितोऽहमनेन भवतो निष्कृत्रिममित्रवात्सल्येन । दाक्षिण्यमहोदधयश्च सत्पुरुषा भवन्ति । सत्पुरुषश्च भद्रः कार्यतो गम्यते । अतः कर्तव्यमेवैतन्निर्विचारं मामकं वचनं भद्रेण। यद्यपि चूतमनोरथा न क्षिक्षिणिकया पूर्यन्ते तथापि मदनुकम्पया भवता मत्सम्बन्ध एव भवजन्तुविरहदुःखप्रतीकारबुद्ध्या सम्बध्यः । स्पर्शनेनाभिहितं । साधु आर्य साधु । धारिता एव भवतास्मदुपकृतवत्सलेनातिस्निग्धवचनामृतसेकेनानेन स्वयमेव विलीयमाना

मदीयप्राणाः। किमत्र वक्तव्यं। नष्टो मेऽधुना शोकसन्तापः। विस्मारित इव भवता भवजन्तुः। शीतलीभूतं नयनयुगलं आह्लादितं चित्तं निर्वापितं मे शरीरं भवद्दर्शनेन। किं बहुना। त्वमेवाधुना भवजन्तुरिति। ततः संजातस्तयोर्निरन्तर-स्नेहभावः॥

मनीषिणा चिन्तितं। न खलु सहजोऽनुरक्तो वयस्यः केन-चिन्निचारपूर्वकारिणा पुरुषेण निर्दोषस्त्यज्यते। न च सदागमो निर्दोषं कदाचित्त्याजयति। स हि गाढं पर्यालोचितकारीति श्रुतमस्माभिः। तदत्र कारणेन भवितव्यं। न सुन्दरः खल्वेष स्पर्शनः प्रायेण। तदनेन सह मैत्रीं कुर्वता विरूपमाचरितं बालेन। एवं चिन्तयन्नेव मनीषी संभाषितः स्पर्शनेन। कृतं मनीषिणापि लोकयात्रानुरोधेन सम्भाषणं। संजाता तेनापि सह बहिश्छायया मैत्री स्पर्शनस्य॥

प्रविष्टाः सर्वेऽपि नगरे। संप्राप्ता राजभवनं। दृष्टो दत्ता-स्थानः कर्मविलासः सह महादेवीभ्यां। कृतं पादपतनं जननी-जनकानां। आनन्दितास्तैराशीर्वादेन। दापितान्यासनानि। नोपविष्टास्तेषु निषण्णा भूतले। दर्शितः स्पर्शनः। कथितस्त-द्वृत्तान्तः। प्रकाशितश्चात्मनश्च तेन सह मैत्रीभावः कुमाराभ्यां। परितुष्टः कर्मविलासः चिन्तितमनेन। मम तावदपथ्यासेवनमिव व्याधेरुपचयहेतुरेष स्पर्शनो दृष्ट एव मयानेकशः पूर्वं। तत्सुन्दर-मेतत्संपन्नं यदनेन सहानयोर्मैत्री संजातेति। केवलं प्रकृतिरियं ममानादिरूढा वर्तते। यदुत योऽस्यानुकूलस्तस्य मया प्रतिकूलेन

भवितव्यं। यः पुनरस्य प्रतिकूलो निरभिष्वङ्गतया मया तस्य सुन्दरं वर्तितव्यं। यः पुनरेनमेकान्ततस्त्यजति स मयापि सर्वथा मोक्तव्य एव। तदेवं स्थिते निरीक्ष्य निरीक्ष्य कुमारयोरेनं प्रति चेष्टितं यथोचितं करिष्यामीति। विचिन्त्याभिहितं कर्मविलासेन। भो वत्सौ सुन्दरमनुष्ठितं भवद्भ्यां यदेष स्पर्शनः प्राणत्यागं विदधानो धारितो मैत्रीकरणेन पुनः सुन्दरतरं। क्षीरखण्डयोगतुल्यो हि वत्सयोरनेन सार्धं सम्बन्धः॥

अकुशलमालया चिन्तितं। अहो मे धन्यता। भविष्यत्येतत्सम्बन्धेन मम यथार्थं नाम। यो ह्यस्य स्पर्शनस्यानुकूलः स ममात्यन्तवल्लभः। स एव च मां वर्धयति पालयति मदीयस्नेहफलं चानुभवति नेतरः। बहुशोऽनुभूतपूर्वमेतन्मया। एष च मदीयः सूनुरेनं प्रति सुखरागेण गाढमनुकूलो लक्ष्यते। ततो भविष्यति मनोरथपूर्तिरिति। विचिन्त्य तया बालं प्रत्यभिहितं। वत्स सुन्दरमनुष्ठितं। अवियोगो भवतु भवतः सुमित्रेणेति॥

शुभसुन्दर्या चिन्तितं। न सुन्दरः खल्वेष मम तनयस्य पापमित्रसम्बन्धः। रिपुरेष परमार्थेन कारणमनर्थपरम्परायाः। प्रचुरयं ममापि सदृशो वर्तते। कदर्थिताहमनेन बहुशः पूर्वं। नास्त्येव मयास्य च सहावस्थानं। केवलमेतावानत्र चित्तसन्धारणाहेतुः यदेष मदीयपुत्रोऽमुं प्रति मुखच्छायया दृष्टिविकारेण च विरक्त इव लक्ष्यते। ततो न प्रभविष्यति प्रायेण ममायं पापः। यदि वा न ज्ञायते किं भविष्यति। विषमः खल्वेष दुरात्मा। इत्याद्यनेकविकल्पमालाकुलमानसापि गम्भीरतया मौनेनैव स्थिता

शुभसुन्दरी ॥ अत्रान्तरे संजातो मध्याह्नः । उपसंहृतमास्थानं । गताः सर्वेऽपि स्वस्थानेषु ॥

ततस्तद्दिनादारभ्य प्रवर्धते बालस्य स्पर्शनेन सह स्नेहावन्धः । चकितस्तिष्ठति सर्वथा मनीषी । न गच्छति विश्रम्भं । स्पर्शनस्तु सदासन्निहिततया कुमारयोरन्तर्बहिश्च न पार्श्वं मुञ्चति । ततः पर्यटन्ति ते सहिता एव नानास्थानेषु क्रीडन्ति विविधक्रीडाभिः । ततो मनीषिणा चिन्तितं । कीदृशमनेन स्पर्शनेन सह विचरतां सर्वथाविश्रब्धचित्तानां सुखं । न चैष तावदद्यापि सम्यग् लक्ष्यते कीदृशस्वरूप इति । न चाज्ञातपरमार्थैरेष निर्धारयितुं संग्रहीतुं वा पार्यते । तदिदमत्र प्राप्तकालं । गवेषयामि तावदस्य मूलशुद्धिं । ततो विज्ञाय यथोचितमाचरिष्यामीति स्थापितः सिद्धान्तः । ततः समाहूतो रहसि बोधो नामाङ्गरक्षः । अभिहितश्चासौ । भद्र ममास्य स्पर्शनस्योपरि महानविश्रम्भः । तदस्य मूलशुद्धिं सम्यगवबुध्य शीघ्रमावेदय । बोधेनाभिहितं । यदाज्ञापयति कुमार इति । निर्गतो बोधः । ततोऽभ्यस्तसमस्तदेशभाषाकौशल्यो बहुविधवेषविरचनाचतुरः स्वामिकार्यसद्धकचो लब्धलक्ष्योऽनुपलक्ष्यश्च प्रहितस्तेनात्मीयः प्रभावो नाम पुरुषः प्रणिधिः । आदिष्टश्चासौ प्रस्तुतप्रयोजनं । ततो विविधदेशेषु कियन्तमपि कालं पर्यट्य समागतः सोऽन्यदा । प्रविष्टो बोधसमीपे । विहितप्रणामो निषण्णो भूतले । बोधेनापि विधायोचितां प्रतिपत्तिमभिहितो ऽसौ । भद्र वर्णयात्मीयवृत्तान्तं ।

प्रभावः प्राह । यदाज्ञापयति देवः । अस्ति तावदहमितो

निर्गत्य गतो बहिरङ्गेषु नानादेशेषु । न लब्धो मया तत्र प्रस्तुतप्रवृत्तिगन्धोऽपि । ततो गतोऽहमन्तरङ्गेषु जनपदेषु । तत्र च दृष्टमेकत्र मया भिल्लपल्लीकल्पमाकीर्णं समन्तात्कामादिचरटैर्निवासः पापिष्ठलोकानामाकरो मिथ्याभिमानस्य हेतुरकल्याणपरम्पराया: अवष्टब्धं सततं विततेन तमसा रहितं प्रकाशलेशेनापि राजसचित्तं नाम नगरं । तत्र च चूडामणिश्चरटचक्रस्य कारणं समस्तपापवृत्तीनां वज्रपातः कुशलमार्गगिरेः दुर्जयः शक्रादीनामतुलबलपराक्रमो रागकेसरी नाम नरेन्द्रः । तस्य च चिन्तकः सर्वप्रयोजनानां अप्रतिहताज्ञः समस्तस्थानेषु निपुणो जगद्वशीकरणे कृताभ्यासो जन्तुविमोहने पटुबुद्धिः पापनीतिमार्गेषु अनपेक्षः स्वकार्यप्रवृत्तौ परोपदेशानां निक्षिप्तसमस्तराज्यभारो विषयाभिलाषो नामामात्यः । ततस्तस्मिन्नगरे यावदहं राजकुलस्याभ्यर्णभूभागे प्राप्तस्तावदकाण्ड एव समुल्लसितो बहलः कोलाहलः । निर्गच्छन्ति घोषयता वन्दिवृन्देन सख्यापितमाहात्म्या लौल्यादिनरेन्द्राधिष्ठिता मिथ्याभिनिवेशादयो भूयांसः स्यन्दनाः । पूरयन्ति गलगर्जितेन दिगन्तराणि राजमार्गमवतरन्तो ममत्वादयः करिवराः । चलिता हेषारवेण बधिरयन्तो दिक्चक्रवालमज्ञानादयो वरवाजिनः । विराजन्ते गृहीतनानायुधा रणशौण्डीरतया वल्गमानाः पुरतो धावन्तश्चापलादयोऽसंख्येयाः पदातयः । ततः कन्दर्पप्रयाणकपटहशब्दाकर्णनमनन्तरं खरपवनप्रेरितमेघजालमिव क्षणमात्रेणैव विलासभ्रमभामाकुलं विब्बोकशङ्खकाहलाध्वनिपूरितदिगन्तरं मिलितमपरिमितं बलं । ततस्तदवलोक्य मया चिन्तितं ।

अये किमेतत् । गन्तुमिव प्रवृत्तः क्वचिदयं राजा लक्ष्यते । तत्किमस्य गमनप्रयोजनमिति । यावदितर्काकुलस्तिष्ठामि तावद्दृष्टो मया पर्यन्तदारुणः स्वरूपेणादर्शकः संसारवैचित्र्यस्य बोधकोऽविदुषां निर्वेदभूमिर्विवेकिनामविज्ञातस्वरूपो निर्विवेकैस्तस्यैव विषयाभिलाषस्य मन्त्रिणः सम्बन्धी विपाको नाम पुरुषः। ततः प्रियसम्भाषणपूर्वकं पृष्टोऽसौ मया । भद्र कथय किमस्य नरेन्द्रस्य प्रस्थानकारणं । कुतूहलं मे । विपाकेनाभिहितं । आर्य यद्येवं ततः समाकर्णय ॥

पूर्वमिह क्वचिदवसरे सुगृहीतनामधेयेन देवेन रागकेसरिणाभिहितोऽमात्यः । यदुत आर्य विषयाभिलाष तथा कथंचिद्विधेहि यथा मम समस्तमपि जगत् किङ्करतां प्रतिपद्यते । मन्त्रिणाभिहितं । यदाज्ञापयति देवः । ततो नान्यः कश्चिदस्य राजादिष्टप्रयोजनस्य निर्वर्तनक्षम इति मनसि पर्यालोच्य किं वाचान्येन साधनेन बहुना क्लेशितेन साधयिष्यन्त्येतान्येवाचिन्त्यवीर्यतया प्रस्तुतप्रयोजनमिति संजातावष्टम्भेन मन्त्रिणा गाढमनुरक्तभक्तानि विविधस्थानेषु निर्व्यूढसाहसानि स्वामिनि भक्ततया लब्धजयपताकानि जनहृदयाक्षेपकरणपटूनि प्रत्यादेशः शूराणां प्रकर्षस्थानं निकषभूमिः परवञ्चनचतुराणां परमकाष्ठा साहसिकानां निदर्शनं दुर्दान्तानामात्मीयान्येव स्पर्शनादीनि पञ्च गृहीतानि मानुषाणि प्रहितानि जगदशीकरणार्थं ॥ ततो मया चिन्तितं । अये सम्भं स्पर्शनस्य तावन्मूलोत्थानं ॥ विपाकेनाभिहितं । ततो वितते जगति विचरद्भिस्तैर्वशीकृतप्रायं भुवनं वर्तते साधितप्रायं

रागकेसरिकिङ्करतां । केवलं महासाम्राज्यसमुदायानामीतिविशेष इव तेषामुपद्रवकारी समुत्थितः श्रूयते किल कश्चित् सन्तोषो नाम चरटः । निर्वाहिताश्च तान्यभिभूय किल कियन्तोऽपि लोकास्तेन प्रवेशिताश्च देवभुक्तेरतिक्रान्तायां निर्वृतौ नगर्यामिति च श्रूयते ॥ ततो मया चिन्तितं । व्यभिचरति मनागयमर्थो यतोऽस्माकं समक्षमेव मनीषिबालयोः स्पर्शनेन निर्वृतौ नगर्यां भवजन्तोर्गमनं सदागमबलेनाख्यातं । अयं तु स्पर्शनादीन्यभिभूय सन्तोषेण निर्वाहिता लोकाः स्थापिताश्च निर्वृतौ नगर्यामिति कथयति । तत्कथमेतत् । अथवा किमनयाकाण्डपर्यालोचनया । अवहितस्तावदाकर्णयाम्यस्य वचनं । पश्चाद्विचारयिष्यामि ॥ विपाकेनाभिहितं । ततोऽयमाप्तलोकश्रुतेराकर्णितोऽद्य देवेन रागकेसरिणा स्पर्शनाद्यभिभवव्यतिकरः । ततोऽतिदुःसहमश्रुतपूर्वं च स्वपदातिपरिभववचनमाकर्ण्य कोपानलजनितरक्तलोचनयुगलेन विषमस्फुरिताधरेण करालभ्रुकुटिभङ्गकुटिलीकृतललाटपट्टेनाबद्धनिरन्तरस्वेदबिन्दुना निर्दयकराभिहतधरणीपृष्ठेन प्रलयज्वलनभासुरं रूपमाबिभ्रतामर्षवशपरिस्खलद्वचनेन देवेन रागकेसरिणाज्ञापितः परिजनः । अरे त्वरितास्ताडयत प्रयाणकपटहं सज्जीकुरुत चतुरङ्गं बलं । परिजनेनाभिहितं । यदाज्ञापयति देवः । ततस्तथा देवमायस्यमानसमवलोक्य विषयाभिलाषेणाभिहितं । देव अलमावेगेन । कियान्मात्रो वराकसन्तोषः । अस्थानमादरस्य । न खलु केसरी लीलादलितविगडगलितवरकरिनिकरो हरिणं व्यापादयतोद्दिग्नायमानचित्तो भवति । देवेनाभिहितं । सखे सत्यमिदं । केवलं युष्मा-

नुषकदर्थनां कुर्वता दृढमुद्देजितास्तेन पापेन सन्तोषेण । न खलु तमननुमूल्य मम मनसः सुखासिका संपद्यते । मन्त्रिणाभिहितं । देव स्तोकमेतत् । मुच्यतां संरम्भः । ततस्तद्वचनेन मनाक् स्वस्थीभूतो देवः । कृतमशेषं गमनोचितं । स्थापितः पुरतः स्नेहसलिलपूर्णः प्रेमावन्धाख्यः कनककलशः । उद्घोषितः केलिजल्पनामको जयजयशब्दः । गीतानि चाटुवचनादीनि मङ्गलानि । प्रहतं रतिकलहनामकमुद्दामातोद्यवृन्दं । निर्वर्तितान्यङ्गरागभूषणादीनि समस्तकौतुकानि । प्रवृत्तो रथावरोहणार्थं देवः । अत्रान्तरे स्मृतमनेन । अये न दृष्टो नाप्यापृष्टोऽद्यापि मया तातः । अहो मे प्रमत्तता अहो मे दुर्विनीतता अहो मे तुच्छत्वेन स्वल्पप्रयोजनेऽपि पर्याकुलता यत्तातपादवन्दनमपि विस्मृतमिति । ततो निवृत्य चलितस्तद्दर्शनार्थं देवः ॥

मयाभिहितं । भद्र कः पुनरस्य तातः । ततो विपाकेनाभिहितं । आर्य अतिमुग्धोऽसि यतस्त्वमेतावदपि न जानीषे । यतोऽस्य देवस्य रागकेसरिणो बालाबलादीनामपि सुप्रतीतोऽनेकाद्भुतकर्मा भुवनत्रयप्रकटिताभिधानो महामोहो जनकः । तथाहि ।

महामोहो जगत्सर्वं भ्रामयत्येष लीलया ।
शक्राद्यो जगन्नाथा यस्य किङ्करतां गताः ॥
अन्येषां लङ्घयन्तीह शौर्यावष्टम्भतो नराः ।
आज्ञां न तु जगत्यत्र महामोहस्य केचन ॥
वेदान्तवादिसिद्धान्ते परमात्मा यथा किल ।
चराचरस्य जगतो व्यापकत्वेन गीयते ॥

महामोहस्तथैवात्र स्ववीर्येण जगत्त्रये ।
द्वेषाद्यशेषलोकानां व्यापकः समुदाहृतः ॥
तत एव प्रवर्तन्ते यान्ति तत्र पुनर्लयम् ।
सर्वे जीवाः परे पुंसि यथा वेदान्तवादिनाम् ॥
महामोहात्प्रवर्तन्ते तथा सर्वे मदादयः ।
लीयन्तेऽपि च तत्रैव परमात्मा स वर्तते ॥

अन्यच्च ।

यज्ज्ञातपरमार्थोऽपि बुद्धा सन्तोषजं सुखम् ।
इन्द्रियैर्बाध्यते जन्तुर्महामोहोऽत्र कारणम् ॥
अधीत्य सर्वशास्त्राणि नराः पण्डितमानिनः ।
विषयेषु रताः सोऽयं महामोहो विजृम्भते ॥
जैनेन्द्रमततत्त्वज्ञाः कषायवशवर्तिनः ।
जायन्ते यन्नरा लोके तन्महामोहशासनम् ॥
अवाप्य मानुषं जन्म लब्ध्वा जैनं च शासनम् ।
यत्तिष्ठन्ति गृहासक्ता महामोहोऽत्र कारणम् ॥
विलंघ्य च महामोहः स्ववीर्येण निराकुलः ।
कांश्चिदिडम्बयत्युच्चैर्यतिभावस्थितानपि ॥
मनुष्यलोके पाताले तथा देवालयेष्वपि ।
विलसत्येष महामोहो गन्धहस्ती यथेच्छया ॥
सर्वथा मित्रभावेन गाढं विश्रब्धचेतसाम् ।
कुर्वन्ति वञ्चनं यत्र महामोहोऽत्र कारणम् ॥
विश्रब्धं निजभर्तारं परित्यज्य कुलस्त्रियः ।

परेषु यत्प्रवर्तन्ते महामोहस्य तत्फलम् ॥
विलंघ्य कुलमर्यादां पारदार्येऽपि यन्नराः ।
वर्तन्ते विलसत्येष महामोहमहानृपः ॥
यत एव समुत्पन्ना जातास्ते गुणभाजनम् ।
प्रतिकूला गुरोस्तस्य वशे येऽस्य नराधमाः ॥
अनार्याणि तथान्यानि यानि कार्याणि कर्हिचित् ।
चौर्यादीनि विलासेन तेषामेष प्रवर्तकः ॥
इत्थं प्रभूतवृत्तान्तः परिपाल्य जगत्त्रयम् ।
वृद्धोऽहमधुना युक्तं किं ममेति विचिन्त्य च ॥
पार्श्वस्थितोऽपि शक्नोमि वीर्येण परिरक्षितुम् ।
जगत्तेन स्वपुत्राय राज्यं यच्छामि साम्प्रतम् ॥
रागकेसरिणो दत्त्वा ततो राज्यं विचक्षणः ।
महामोहोऽधुना सोऽयं शेते निश्चिन्ततां गतः ॥
तथापीदं जगत्सर्वं प्रभावेण महात्मनः ।
तस्यैव वर्तते नूनं कोऽन्यः स्यादस्य पालकः ॥
तदेषोऽद्भुतकर्तव्यः प्रसिद्धोऽपि जगत्त्रये ।
महामोहनरेन्द्रस्ते कथं प्रष्टव्यतां गतः ॥

ततो मयाभिहितं । भद्र न कर्तव्योऽत्र भवता कोपः । पथिकः खल्वहं । अतस्तु मयापि महामोहः पूर्वं सामान्येन न पुनर्विशेषतो रागकेसरिजनकतया । तदधुनापनीतं ममाज्ञानं भद्रेण । तदुत्तर-वृत्तान्तमथाख्यातुमर्हति भद्रः ॥

विपाकेनाभिहितं । ततो गतो देवः शीघ्रं जनकपादमूलं ।

दृष्टोऽनेन तमःसंज्ञकेन लम्बमानेन भ्रूयुगलेन अविद्याभिधानया प्रकम्पमानया गात्रयष्ट्या जराजीर्णकायस्तृष्णाभिधानायां वेदिकायां विपर्यासनाम्नि विष्टरे महत्युपविष्टो महामोहः। ततः चितितल-विन्यस्तहस्तमस्तकेन कृतं देवेन पादपतनं। अभिनन्दितो महा-मोहेन। निषीदतश्च भूतले देवस्य दापितं महामोहेनासनं। उपविष्टस्तत्र जनकसम्भ्रमवचनेन देवः। पृष्टा शरीरकुशलवार्ता निवेदितश्च प्रस्तुतव्यतिकरः। ततो महामोहेनाभिहितं। पुत्र ममाधुना जरच्चीवरस्येव पश्चिमो धावो वर्तते। ततो मदीय-शरीरस्य पामापरिगतमूर्तेरिव करभस्य यद्वाह्यते तत्सारं। ततो न युक्तं मयि तिष्ठति भवतः प्रस्थानं कर्तुं। तिष्ठ त्वं विपुलं राज्यं विदधानो निराकुलचित्तः। अहमेव प्रस्तुतप्रयोजनं साधयिष्या-मीति। देवेन कर्णौ पिधायाभिहितं। तात मा मैवं वोचः। शान्तं पापं। प्रतिहतममङ्गलं। अनन्तकल्पस्थायि भवतु यौष्माकं शरीरं। न खलु युष्मदीयशरीरनिराबाधामात्रपरितोषिणि किङ्करजनेऽस्मिन्नेवमाज्ञपयितुमर्हति तातः। तत्किमनेन बहुना। गच्छाम्यहं अनुजानीत यूयं। महामोहः प्राह। जात मया तावद्गन्तव्यमेव भवतस्तु केवलमवस्थानेऽनुज्ञेत्यभिधायोत्थितो महा-मोहः। ततो विज्ञाय निर्बन्धं देवेनाभिहितं। तात यद्येवं ततोऽहमपि तातपादानुचरो भविष्यामि न प्रतिस्खलनीयस्तातेन। महामोहः प्राह। जात एवं भवतु। न खलु वयमपि भवन्तं मोक्तुं क्षणमपि पारयामः। केवलं गुरुतया प्रयोजनस्यैवं मन्त्रितम-स्माभिः। तदधुना सुन्दरमिदं जातेन जल्पितं। देवेनाभिहितं।

महाप्रसादः। ततस्तातोऽपि प्रस्थित इति ज्ञापितं समस्तनरेन्द्राणां देवेन। प्रवर्तितं निःशेषं विशेषतो बलं। ततः स्वयमेव महामोहनरेन्द्रो देवो रागकेसरी विषयाभिलाषादयश्च सर्वे मन्त्रिमहत्तमाः सर्वबलेन सन्तोषचरटस्योपरि विग्रहेण चलिता इति वार्तया चुभितमेतत् समन्ताद्राजसचित्तं नगरं समुल्लसितोऽयं बहलः कलकलः।

तदिदं भद्र अस्य नरेन्द्रस्य प्रस्थानप्रयोजनमिति। एतच्चातिकुतूहलिनं भवन्तमालोक्य मया निवेदितं। इतरथातिलरया मम वचनमात्रोच्चारणेऽपि नावसरोऽस्ति यतो ममापानीके नियमः। मयाभिहितं। आर्य किमत्र वक्तव्यं। परोपकारकरणव्यग्रा एव सत्पुरुषा भवन्ति। ते हि परे प्रियं कर्तुमुद्यताः शिथिलयन्ति स्वप्रयोजनं कुर्वन्ति स्वभुजोपार्जितद्रव्यव्ययं विषहन्ते विविधदुःखानि न गणयन्त्यात्मापदं ददति मस्तकं प्रक्रामन्ति प्राणान्। परप्रयोजनमेव हि ते स्वप्रयोजनं मन्यन्ते। ततश्चैवंविधैर्मदीयवचनैर्मनसि परितुष्टो नामयित्वा मदभिमुखमीषदुत्तमाङ्गं प्रजाम्यहमधुनेत्यभिधाय च कृतप्रणामो मया गतो विपाकः॥

मया चिन्तितं। साधितप्रायं मयाधुना राजकार्यं। यतः स्पर्शनस्य मूलशुद्धिमुपलभ्य भवतागन्तव्यमेतावानेव मम राजादेशः। तत्र यावन्तोऽनेन विपाकेन स्पर्शनादीनां गुणा वर्णितास्ते सर्वे तत्र स्पर्शने घटन्ते। ममानुभवसिद्धमेतत्। तस्मादितदुपवर्णितमानुषपञ्चकस्याद्योऽसौ भविष्यति। लब्धा मया तस्य मूलशुद्धिः। केवलमेकं सन्तोषव्यतिकरमद्यापि नावगच्छामि। एतावच्च वितर्क-

यामि । सदागमानुचर एवायं कश्चिद्भविष्यति । अन्यथा पूर्वापरविरुद्धमेतत्स्यात् । अथवा किमनेने । गच्छामि तावत् स्वामिपादमूलं । निवेदयामि यथोपलब्धवृत्तान्तं । ततो देव एवात्र यथोचितं विज्ञास्यतीत्यालोच्य समागतोऽहं । एतदाकर्ण्य देवः प्रमाणमिति । बोधेनाभिहितं । साधु प्रभाव साधु सुन्दरमनुष्ठितं भवता । ततः सहैव प्रभावेण प्रविष्टो बोधः कुमारसमीपं । कृतप्रणामेन च निवेदितः कुमाराय समस्तोऽपि प्रभावानीतवार्तावृत्तान्तः । परितुष्टो मनीषी पूजितः प्रभावः ॥

पृष्टोऽन्यदा मनीषिणा स्पर्शनः । यदुत भद्र किं भवतः सदागमेनैव तेन भवजन्तुना सुमित्रेण सह विरहः संपादित उत तत्र कश्चिदन्योऽप्यासीदिति । स्पर्शनेनाभिहितं । आर्य आसीत् । केवलमलं तत्कथया । न खल्वहं भयविह्वलतया तस्य क्रूरकर्मणो नामाप्युच्चारयितुं शक्नोमि । स हि सदागमस्तस्य केवलं भवजन्तोरुपदेशं ददाति मत्कदर्थनविषयं । स तु तस्यैवानुचरः क्रूरकर्मा नानायातनाभिः साक्षान्मां कदर्थयति भवजन्तुं मत्तो विमुखयति । तेनैव चाहं शरीरग्रामादाक्षिप्य निःसारितो भवजन्तुश्च निर्वृतौ नगर्यां प्रापितः । स एव तत्र कारणं पुरुषः । सदागमस्य केवलमुपदेशदाने व्यापारः ॥ मनीषिणाभिहितं । भद्र किं तस्याभिधानं । स्पर्शनः प्राह । कथितमिदमार्यस्य मया । नाहं भयाकुलतया तदभिधानमुच्चारयामि । अत एव पूर्वमपि मया न युष्माकं तदाख्यातं । किं चातिपापिष्ठोऽसौ । ततोऽलं तन्नामग्रहणेन । पापिष्ठजनकथा हि क्रियमाणा पापं वर्धयति यशो दूषयति

लाघवमाधत्ते मनो विश्लावयति धर्मबुद्धिं ध्वंसयतीति। मनीषिणाभिहितं। तथापि महत्कुतूहलं तदभिधानश्रवणेऽस्माकं। न चास्मदभ्यर्णे वर्तमानेन भवता तद्भयं विधातव्यं। न च नामग्रहणमात्रेण किंचित्पापं। न ह्यग्निरित्युक्ते मुखदाहः संपद्यते। ततो विज्ञाय निर्बन्धं तरलिततारं दृशापि दिशोऽवलोकयता स्पर्शनेनाभिचितं। आर्य यद्येवं ततः सन्तोष इति तस्य दुर्नामकस्य नाम॥ मनीषिणा चिन्तितं। सम्यगुपलब्धा मूलशुद्धिरस्य स्पर्शनस्य प्रभावेण। यतः सन्तोषव्यतिकर एवैकस्तत्राघटमानक आसीत्। सोऽप्यधुना घटितः। सम्यक् च मया पूर्वं वितर्कितं यथा न सुन्दरः खल्वेष स्पर्शनः प्रायेणेति यतो विषयाभिलाषप्रयुक्तोऽयं लोकवञ्चनप्रवणः पर्यटति। तदशोभन एवायं। तथापि प्रतिपन्नोऽयं मया मित्रतया। दर्शितो बहिश्छायया स्नेहभावः। क्रीडितमेकत्र बहुकालं। तस्मान्न युक्तोऽकाण्ड एव परित्यक्तुं। केवलं विज्ञातस्वरूपेणास्य मयाधुना सुतरां न कर्तव्यो विश्रम्भो नाचरितव्यमस्यानुकूलं न समर्पणीयमात्मस्वरूपं न निवेदनीयं गुह्यं नापि दर्शनीयो बहिर्भावः। विषमप्रकृतिरेष वर्तते। ततोऽनेन सह यापनया वर्तितव्यं पूर्वस्थित्यैव पर्यटितव्यं सर्वत्र सहितेन कर्तव्यं चात्मीयप्रयोजनाबाधकमस्य वचनं। केवलमभिष्वङ्गोऽस्योपरि न कार्यो मया यावदस्य सर्वथा परित्यागावसरो भवति। एवं च वर्तमानस्य मे न भविष्यत्येष बाधक इति। स्थापितो मनीषिणा स्वचेतसि सिद्धान्तः। ततः पूर्वस्थित्यैव विलसन्ति ते स्पर्शनमनीषिबाला नानास्थानेषु। व्रजन्ति दिनानि॥

अन्यदा स्पर्शनेन कृतो जल्पप्रस्तावः । अभिहितं च तेन । अरे किमत्र लोके सारं किं वा सर्वे जन्तवोऽभिलषन्ति । बालेनाभिहितं । वयस्य किमत्र ज्ञातव्यं । सुप्रसिद्धमिदं । स्पर्शनः प्राह । कथय किं तत् । बालो जगाद । वयस्य सुखं । स्पर्शनः प्राह । तत् किमिति तदेव सदा न सेव्यते । बालेनाभिहितं । कस्तस्य सेवनोपायः । स्पर्शनेनोक्तं । अहं । बालो जगाद । कथं । स्पर्शनः प्राह । अस्ति मे योगशक्तिः । तयाहं प्राणिनां शरीरमनुप्रविश्य बहिरन्तश्च त्वचि लीनस्तिष्ठामि । ततस्ते यदि भक्तिपुरःसरं मामेव ध्यायन्ति कोमलललितस्पर्शसम्बन्धं कुर्वन्ति ततो निरुपमं सुखं लभन्ते । तेनाहं सुखसेवनस्योपायः । मनीषिणा चिन्तितं । अये रचितोऽनेनावयोर्वञ्चनप्रपञ्चः । बालेनाभिहितं । वयस्य तत्किमियन्तं कालं नावेदितमिदमस्माकं । अहो वञ्चिता वयमधन्याः सत्यप्येवंविधे सुखोपाये तदनासेवनेन । अहो ते गम्भीरता यदेवंविधामपि योगशक्तिमात्मनो न प्रकटयसि । तदिदानीमपि कुरु प्रसादं दर्शय कुतूहलं व्यापारय योगशक्तिं भवावयोः सुखसेवनहेतुरिति । ततः किं क्रियतामेतदिति दृष्टिविकारेणैव दर्शयता साकूतेन निरीक्षितं मनीषिणो वदनं स्पर्शनेन । ततः पश्यामि किं तावत् करोतीति संचिन्त्य मनीषिणाभिहितं । वयस्य क्रियतां यान्नभाषितं कोऽत्र विरोधः । ततः स्पर्शनेन विरचितं पद्मासनं स्थिरीकृतः कायः परित्यक्तो बहिर्विक्षेपः नियमीकृता दृष्टिः समर्पिता नासिकाग्रे निरुद्धं चापौण्डरीके मानसं । एता धारणा । संजाता तत्प्रत्ययैकतानता । समापूरितं ध्यानं । निरुद्धाः करणव्यापाः ।

आविर्भूतः स्वरूपशून्य इवार्थनिर्भासः । संजातः समाधिः । विहितोऽन्तर्धानहेतुः संयमः । कृतमन्तर्धानं । अनुप्रविष्टो मनीषिबालयोः शरीरं । अधिष्ठितः स्वाभिहितप्रदेशः । विस्मितौ मनीषिबालौ । प्रवृत्ता द्वयोरपि कोमलस्पर्शेच्छा ॥

ततो बालो मृदूनि शयनानि सुखान्यासनानि कोमलानि वसनानि अस्थिमांसत्वग्रोमसुखदायीनि संवाहनानि ललितललनानामनवरतसुरतानि ऋतुविपर्यस्तवीर्याणि सुखस्पर्शविलेपनानि अन्यानि चोद्वर्तनस्नानादीनि स्पर्शनप्रियाणि गृद्धो मूर्छितः सततमासेवते । तच्च शयनादिकं भस्मकव्याधिरिव भक्तपानं स्पर्शनः समस्तमुपभुंक्ते । बालस्य तु गार्द्ध्यव्याधिविक्लवीभूतचित्तस्य सन्तोषरूपस्वास्थ्यविकलतया पामाकण्डूयनमिव परमार्थतस्तद्दुःखकारणमेव । तथाप्यसौ विपर्यासवशेन तदुपभोगे सति चिन्तयति । अहो मे सुखं अहो मे परमानन्दः । ततो मिथ्याभावनया परमसुखसन्दर्भनिर्भरः किलाहमिति वृथा निमीलिताक्षोऽनाख्येयं रसान्तरमवगाहते ॥

मनीषी पुनर्मृदुस्पर्शेच्छायां प्रवर्तमानायामेवं भावयति । अये स्पर्शनजनितोऽयं मम विकारो न स्वाभाविकः । परमरिपुश्चायं मम वर्तते । सुनिर्णीतमिदं मया । ततः कथमयं सुखहेतुर्भविष्यतीति मत्वा तदनुकूलं न किंचिदाचरति । अथ कथंचित्प्रतिपन्नोऽयं मित्रतयानुवर्तनीयस्तावदिति भावनया कालयापनां कुर्वाणस्तदनुकूलमपि किंचिदाचरति । तथापि तस्य लौल्यरोगविकलतया सन्तोषामृतस्वस्थीभूतमानसस्य रोगरहितशरीरस्येव सुपथ्यान्नं तच्छयनादिकमुपभुज्यमानं सुखमेवोत्पादयति । तथापि

नासौ तत्राभिष्वङ्गं विधत्ते। ततो न भवत्यागामिनोऽपि दुःखस्यानुबन्धः॥

अन्यदा प्रकटीभूतः स्पर्शनः। अभिहितोऽनेन बालः। अपि वयस्य मदीयपरिश्रमस्यास्ति किंचित्फलं संपन्नस्ते कश्चिदुपकारः।। बालः प्राह। सखेऽनुगृहीतोऽस्मि दर्शितो ममाचिन्त्याह्लाद-सम्पादनेन भवता साक्षात्स्वर्गः। अथवा किमत्राश्चर्यं। परार्थमेव निर्मितस्त्वमसि विधात्रा। तथाहि।

परार्थमेव जायन्ते लोके नूनं भवादृशाः।
मादृशानां तु सम्भूतिस्त्वत्प्रसादेन सार्थिका॥
इदं हि तेषां सौजन्यं यत्स्वभावेन सर्वदा।
परेषां सुखहेतुत्वं प्रपद्यन्ते नरोत्तमाः॥

स्पर्शनेन चिन्तितं। अये संपन्नस्तावदेष मे निर्व्यभिचारः किङ्करः प्रतिपद्यते मयादिष्टमेष कृष्णं श्वेतं श्वेतं कृष्णमिति निर्विचारं। एवं विचिन्त्य स्पर्शनेनाभिहितं। वयस्य इयतैव नः प्रयोजनं। चरितार्थोऽहमिदानीं भवदुपकारसंपत्त्येति।

ततो मनीषिसमीपमुपगम्याभिहितमनेन। सखे किं सार्थकः भवतोऽर्थसम्पादनेन मदीयः प्रयास उत नेति। मनीषिणोक्तं। भद्र किमपोद्यतां। अनाख्येयस्तावकोऽतिशयः। स्पर्शनेन चिन्तितं। अये साभिप्रायकमेतत्। दुष्टः खल्वेष मनीषी न शक्यते मादृशै रञ्जयितुं। लक्षितोऽहमनेन स्वरूपतः प्रायेण। तथाप्यलब्ध एव तावदास्तां। नात्र षड्विकत्थनं श्रेयस्करमिति। विचिन्त्य धूर्ततया हता स्पर्शनेन काकली न दर्शितो मुखविकारोऽपि स्थितो मौनेनेति॥

इतश्च बालेनापि स्वमातुरकुशलमालायाः कथितः समस्तोऽपि सरभसेन यो योगशक्तिदीपनपुरःसरं सुखसम्पादनसामर्थ्यलक्षणः स्पर्शनव्यतिकरः । अकुशलमालोवाच । जात सूचितमिदमादावेव मया यथा सुन्दरस्तवानेन वरमित्रेण सार्धं सम्बन्धः हेतुः सुखपरम्परायाः । किंच । अस्ति ममापीदृशी योगशक्तिरिति । दर्शयिष्याम्यहमपि जातस्य कुतूहलं । बालस्तूवाच । यद्येवं ततो पटुतरमम्बायाः प्रसादेनास्माभिरत्रापि द्रष्टव्यं । अकुशलमालोवाच । तत्कथनीयं भवता यदा प्रयुज्यते योगशक्तिरिति ॥

इतश्च मनीषिणापि स्वमातुः शुभसुन्दर्या निवेदितः सर्वोऽपि स्पर्शनवृत्तान्तः । तयाभिहितं । वत्स न चारुस्तवानेन पापमित्रेण सह संसर्गः । कारणमेष दुःखपद्धतेः । मनीषिणाभिहितं । सत्यमेतत् । केवलं न कर्तव्यमत्र भयमम्बया । लक्षितो मयायं स्वरूपेण । नाहमस्य यत्नवतोऽपि वञ्चनगोचरः । केवलमस्य परित्यागकालं प्रतिपालयामि । यतः प्रतिपन्नोऽयं मया मित्रतया नाकाण्ड एव हातुं युक्तः । शुभसुन्दर्युवाच । जात सुन्दरमिदमनुष्ठितं भवता । अहो ते लोकज्ञता अहो प्रतिपन्नवात्सल्यं अहो नीतिपरता अहो गम्भीरता अहो स्थैर्यातिरेकः । तथाहि ।

नाकाण्ड एव मुञ्चन्ति सदोषमपि सज्जनाः ।
प्रतिपन्नं ग्रहस्थायी तत्रोदाहरणं जिनः ॥
प्रतिपन्नमकाले तु सदोषमपि यस्त्यजेत् ।
स निन्द्यः स्यात्सतां मध्ये तन्नाशी स्वार्थसाधकः ॥
यस्तु मूढतया काले प्राप्तेऽपि न परित्यजेत् ।

सदोषं लभते तस्मात् स्वचयं नात्र संशयः ॥
हेयबुद्ध्या गृहीतेऽपि ततो वस्तुनि बुद्धिमान्।
तत्त्यागावसरापेक्षी प्रशंसां लब्धुमर्हति ॥

कर्मविलासराजस्तु महादेवीभ्यां सकाशात्तं कुमारव्यतिकरमाकर्ण्य परितुष्टो मनीषिणो रुष्टो बालस्य चित्तमध्ये। बालेनापि ततः प्रभृति गाढतरं कोमलशयनसुरताद्यासेवनानि स्पर्शनप्रियाणि दिवानिशमाचरता परित्यक्तो राजकुमारोचितः शेषव्यापारः परिहृतं देवगुरुपादवन्दनं विमुक्तं कलाग्रहणं शिथिलीकृता लज्जा अङ्गीकृतः पशुधर्मः। ततोऽसौ न गणयति लोकवचनीयतां न रक्षति कुलकलङ्कं न जानीते स्वस्योपहास्यतां नापेक्षते कुशलपक्षं न गृह्णाति सदुपदेशान्। केवलं यत्र क्वचिन् नारीशयनमासनमन्यद्वा किंचित्कोमलमुपलभते तत्र तत्राविचार्य तत्स्वरूपं लौल्यातिरेकेण प्रवर्तत एव। ततो मनीषी संजातकरुणस्तं शिक्षयति स्पर्शनस्य मूलशुद्धिमाचष्टे वञ्चकोऽयमिति दीपयति। भ्रातर्नास्य विश्वसनीयं परमरिपुरेष स्पर्शन इति तं बालं पुनः पुनश्चोदयति। बालः प्राह। मनीषिन्नलमनेनादृष्टार्थेन प्रलापेन। य एष मे वरवयस्योऽनन्तागाधसुखसागरावगाहने हेतुः स एव ते परमरिपुरिति कथा भाषा। मनीषिणा चिन्तितं। मूढः खल्वेष न शक्यते निवारयितुं। अतोऽलमेतन्निवारणेन। स्वरक्षणे मया यत्नो विधेयः। तथाहि।

अकार्यवारणोद्युक्तो मूढे यः परिखिद्यते।
वाग्विस्तरो वृथा तस्य भक्तन्यज्याकृतिर्यथा ॥
नोपदेशशतेनापि मूढोऽकार्यान्निवर्तते।

शीतांशुप्रमनात्केन राज्ञर्वाक्यैर्निवारितः ॥
अकार्ये दुर्विनीतेषु प्रवृत्तेषु ततः सदा ।
न किंचिदुपदेष्टव्यं सता कार्यावधीरणा ॥
इत्यालोच्य स्वयं चित्ते हित्वा बालस्य शिक्षणम् ।
स्वकार्यैकरणोद्युक्तो मनीषी मौनमाश्रितः ॥

इतश्च तत्रैव कर्मविलासस्य राज्ञोऽस्ति सामान्यरूपा नाम देवी। तस्यास्त्वाभीष्टतमोऽस्ति मध्यमबुद्धिर्नाम दारको वल्लभतमो मनीषिबालयोः। क्रीडितस्ताभ्यां सह भूयांसं कालं। स च प्रयोजनवशाद्राजादेशेनैव देशान्तरं गत आसीत् तदानीमागतः। दृष्टौ मनीषिबालौ सह स्पर्शनेन। आलिङ्गितस्ताभ्यां स्पर्शनेन च। ततः सकौतुकेन मध्यमबुद्धिना कर्णाभ्यर्णे निधाय वदनं पृष्टो बालः क एष इति। निवेदितो बालेनास्य यथा स्पर्शननामायमचिन्त्यप्रभावोऽस्मत्सहचर इति। मध्यमबुद्धिरुवाच। कथं। ततः कथितो बालेन सर्वोऽपि व्यतिकरः। संजातो मध्यमबुद्धेरपि स्पर्शनस्योपरि स्नेहभावः। बालेनाभिहितं। भद्र स्पर्शन दर्शयास्य स्वकीयं माहात्म्यं। स्पर्शनः प्राह। एष दर्शयामि। ततः प्रयुक्ता योगशक्तिः कृतमन्तर्धानं अधिष्ठितं मध्यमबुद्धेः शरीरं। विस्मितो मध्यमबुद्धिः। प्रवृत्ता कोमलस्पर्शेच्छा। उपभुक्तानि ललितशयनसुरतादीनि। संजातश्चित्ताह्लादः। प्रीणितो मध्यमबुद्धिः। प्रकटीभूतः स्पर्शनः। दृष्टं स्वप्रयासमाफल्यं। अनुगृहीतोऽहं भवतेति निवेदितं सरभसेन मध्यमबुद्धिना। ततः पात्रभूतोऽयमपि न दूरयायी वर्तत इति विचिन्तितं स्पर्शनेन ॥

मनीषिणा चिन्तितं। वशीकृतप्रायोऽयमपि मध्यमबुद्धिरनेन पापेन स्पर्शनेन। अतो यद्युपदेशं गृह्णाति ततः शिक्षयाम्येनं। मा भूदस्य मुग्धतया वराकस्य वञ्चनमिति॥ ततो रहसि मध्यमबुद्धिरभिहितो मनीषिणा। भद्र न भद्रकोऽयं स्पर्शनः। विषयाभिलाषप्रयुक्तोऽयं लोकानां वञ्चकः पर्यटति। मध्यमबुद्धिरुवाच। कथं। ततः कथिता मनीषिणा बोधप्रभावोपलब्धा समस्तापि तस्य स्पर्शनस्य मूलशुद्धिः। मध्यमबुद्धिना चिन्तितं। स्वानुभवसिद्धा मम तावदस्य स्पर्शनस्य सम्बन्धिनी वत्सलताचिन्त्यप्रभावता सुखहेतुता च। अयमपि च मनीषी नायुक्तभाषी। तन्न जानीमः किमत्र तत्त्वं। किं वा वयमेवं स्थिते कुर्म इति। अथवा किमनेन चिन्तितेन। तावदम्बां पृच्छामि। तदुपदिष्टमाचरिष्यामीति। विचिन्त्य गतः सामान्यरूपायाः समीपं। कृतं पादपतनं। अभिनन्दितस्तया निविष्टः क्षितितले। निवेदितो व्यतिकरः। सामान्यरूपयोक्तं। वत्स तावत्त्वयाधुना स्पर्शनमनीषिणोर्द्वयोरपि वचनमनुवर्तयतोभयाविरोधेन मध्यस्थतयैव स्थातुं युक्तं। कालान्तरे पुनर्य एव बलवत्तरः पक्षः स्यात् स एवाश्रयणीयः। तथाहि।

संशयापन्नचित्तेन भिन्ने कार्यद्वये सता।

कार्यः कालविलम्बोऽत्र दृष्टान्तो मिथुनद्वयम्॥

मध्यमबुद्धिरुवाच। अम्ब किं तन्मिथुनद्वयं। सामान्यरूपयोक्तं। पुत्राकर्णय॥

अस्ति तथाविधं नाम नगरं। तत्र ऋजुर्नाम राजा। तस्य प्रगुणा नाम महादेवी। तयोर्मकरध्वजाकारो मुग्धो नाम तनयः।

तस्य च रतिसन्निभा अकुटिला नाम भार्या। ततस्तयोर्मुग्ध-कुटिलयोरन्योन्यबद्धानुरागयोर्विषयसुखमनुभवतोर्व्रजति कालः। अन्यदा वसन्तसमये उपरितनप्रासादभूमिकावासभवने व्यवस्थितः प्रभातोत्थितो मुग्धकुमारो मनोहरविविधविकसितकुसुमवनराजिराजितं गृहोपवनमुपलभ्य संजातक्रीडाभिलाषो भार्यामुवाच। देवि अतिरमणीयेयमुपवनश्रीः। तदुत्तिष्ठ गच्छावः कुसुमोच्चयनिमित्तं आनयाव एनां। अकुटिलयाभिहितं। यदाज्ञापयत्यार्यपुत्रः। ततो गृहीत्वा मणिखचिते कनकशूर्पिके गते गृहोपवनं। प्रारब्धः कुसुमोच्चयः। मुग्धः प्राह। देवि पश्यावस्तावत्कः कनकशूर्पिकां झटिति पूरयति। मम तमन्यस्यां दिशि अहं तस्यां व्रजामीति। अकुटिलयाभिहितं। एवं भवतु। गतौ कुसुमोच्चयं कुर्वाणौ परस्परं दर्शनपथातीतयोर्गहनान्तरयोः। अत्रान्तरे कथंचित्तं प्रदेशमायातं व्यन्तरदेवमिथुनकं कालज्ञो देवो विचक्षणा देवी। तेन च गगनतले विचरतावलोकितं तन्मानुषमिथुनं। ततोऽचिन्त्यतया कर्मपरिणतेरतिसुन्दरतया तस्य मानुषमिथुनस्यापर्यालोचितकारितया मन्मथस्य मदनजननतया मधुमासस्यातिरमणीयतया तस्य प्रदेशस्य केलिबहुलतया व्यन्तरभावस्यातिचपलतयेन्द्रियाणां दुर्निवारतया विषयाभिलाषस्य चटुलचारितया मनोवृत्तेस्तथाभवितव्यतया च तस्य वस्तुनः कालज्ञस्याभूदकुटिलायां तीव्रोऽनुरागस्तथैव च मुग्धस्योपरि विचक्षणायाः। ततः किलैनां वञ्चयामीति बुद्ध्या कालज्ञेनाभिहिता विचक्षणा। देवि मम त्वमग्रतः तावद्यावदहमितो राजगृहोपवनाद्देवार्चननि-

मित्तं कतिचित्कुसुमान्यादायागच्छामि । सा तु मुग्धहृतहृद-
यतया स्थिता मौनेन । गतोऽकुटिलाभिमुखं कालज्ञः । अवतीर्णो
घनतरगहने । अदर्शनीभूतो विचक्षणायाः । चिन्तितमनेन । अये
किं पुनः कारणमाश्रित्येदं मिथुनं परस्परतो दवीयोदेशवर्ति
वर्तते । ततः प्रयुक्तमनेन विभङ्गज्ञानं । लक्षितं तयोर्दूरीभवन-
कारणं । ततोऽयमेवाचोपाय इति विचिन्त्य कृतमनेन देवशक्त्या-
त्मनो वैक्रियं मुग्धरूपं । निर्वर्तिता कनकशूर्पिका भृता कुसु-
मानां । गतोऽकुटिलासमीपं ससम्भ्रममाह च । जितासि प्रिये
जितासि । ततः कथमार्यपुत्रो झटित्येवायातो जिताहमिति
विलक्षीभूता मनागकुटिला । कालज्ञेनाभिहितं । प्रियेऽलं विषा-
देन स्वल्पमिदं कारणं । केवलं निर्वर्तितोऽधुना कुसुमोच्चयः ।
व्रजामोऽमुष्मिन्नुपवनविभूषणे कदलीलतागृहके । प्रतिपन्नमनया ।
ततो गत्वा कृतमाभ्यां तच पल्लवशयनीयं ॥ इतश्च विचक्षणया
चिन्तितं । अये गतस्तावदेष कालज्ञः । ततो यावदयं नागच्छति
यावच्चेयं नारी दूरे वर्तते तावदवतीर्य मानयाम्येनं रतिवियुक्त
मकरकेतनाकारं तरुणं । करोम्यात्मनो जन्मनः साफल्यं । लक्षि-
तश्चानयापि विभङ्गज्ञानेनैव तयोर्दूरीभवनहेतुः । ततो विधायाकु-
टिलारूपं कुसुमभृतकनकशूर्पिका गता मुग्धसमीपं । आह च ।
जितोऽस्यार्यपुत्र जितोऽसि । ततः ससम्भ्रमं तां निरीक्ष्य मुग्धः
प्राह । प्रिये सुष्ठु जितः किमधुना क्रियतां । विचक्षणयोक्तं ।
यदहं वदामि । मुग्धः प्राह । किं तत् । विचक्षणाह । व्रजामो
लताभवनं मानयामो विशेषतः मदुपवनश्रियं । प्रतिपन्नमनेन ।

ततो गतौ तौ विचक्षणमुग्धौ तत्रैव कदलीलतागृहके। दृष्टं तन्मिथुनं। निरीक्षितं विस्मिताभ्यां परस्पराभिमुखं मिथुनाभ्यां। न दृष्टस्तिलतुषत्रिभागमात्रोऽपि स्वेतरयोर्विशेषः। मुग्धेन चिन्तितं। अये भगवतीनां वनदेवतानां प्रसादेन द्विगुणोऽहं संपन्नो देवी च। तदिदं महदभ्युदयकारणं। तन्निवेदयामीदं तातायं। ततो निवेद्य स्वाभिप्रायमितरेषां गच्छामस्तावत्तातसमीपमित्यभिधायोत्थितो मुग्धः। चलितं चतुष्टयमपि प्रविष्टं श्वशुरास्थाने। तद्विलोक्य विस्मितो राजा महादेवी परिकरश्च। किमेतदिति पृष्टो मुग्धः। स प्राह। वनदेवताप्रसादः। श्वशुराह। कथं। ततः कथितो मुग्धेन व्यतिकरः। श्वशुरेण चिन्तितं। अहो मे धन्यता अहो मे देवतानुग्रहः। ततो हर्षातिरेकेण समादिष्टस्तेनाकालमहोत्सवो नगरे दापितानि महादानानि विधापितानि नगरदेवतापूजनानि। स्वयं च राजा राजमण्डलमध्यस्थः प्राह।

एकेन सुतेन सुतद्वयं वध्वा जातमथो वधूद्वयं।
खादत पिबताथ मज्जना गायत वादयताथ नृत्यत॥

ततः प्रगुणापि महादेवी एतदेव नरेन्द्रोक्तमनुवदन्ती वादितानन्दमर्दलमन्दोद्घधिरितदिगन्ता विहितोर्ध्वभुजा नर्तितुं प्रवृत्ता। द्विगुणाहं संपन्नेति गता हर्षमकुटिला। प्रनृत्ताः सेवान्तःपुरिकाः प्रमुदितं नगरं वृत्तो वृहता विमर्दन महानन्द इति॥

केलिप्रियतया दृष्टः कालज्ञः। केवलं चिन्तितमनेन। का पुनरेषा द्वितीया योषित् संजातेति। उपयुक्तो ज्ञाने। ज्ञातम-

नेन। मैवैषा मदीयभार्या विचक्षणेति। ततः संजातः क्रोधः। चिन्तितमनेन। मारयाम्येनं दुराचारं पुरुषं। एषा पुनरमरतया न शक्यते मारयितुं। तथाप्येवं पीडयामि यथा न पुनः परपुरुषगन्धमपि प्रार्थयते। एवं कृतनिश्चयस्याप्यस्य कालज्ञस्य तथाभवितव्यतया प्रवृत्ता पर्यालोचना। स्फुरितं चित्ते। यथा न सम्यक् चिन्तितमिदं मया। न पीडनीया तावद्विचक्षणा यतोऽहमपि न शुद्धाचारः। ममापि समानोऽयं दोषः। मारणमपि मुग्धस्य न युक्तं। यतो मारितेऽस्मिन्नन्यथाभावं विज्ञाय न भजते मामकुटिला विरज्यते सुतरां विचक्षणा। तत्किमकुटिलां गृहीत्वादृष्टस्वकलत्रधर्षण इतोऽपक्रामामि। एतदपि नास्ति। यतोऽकाण्डप्रस्थानेन न स्वाभाविकोऽयमिति लक्षितविकारा कदाचिदकुटिला मां न भजते। तथा रहितस्य पुनर्गमनमनर्थकमेव। तस्मादीर्ष्याधर्मं परित्यज्य कालविलम्ब एवात्र श्रेयानिति॥ विचक्षणयापि चिन्तितं। अये स एवायं मदीयभर्ता कालज्ञोऽनेन रूपेण स्थितः। कुतोऽन्यस्यात्र सम्भव इति। ततः कथमस्य पुरतः परपुरुषेण सह तिष्ठामीति संजातलज्जा अयमन्यां भजत इति समुत्पन्नेर्ष्या दुःशकमेवं स्थिते स्थातुमित्याविर्भूतकलुषभावा गताया अपि न काचिदर्थसिद्धिरिति स्थानेनात्मानं तोषयन्ती न चान्या गतिरस्तीति निरालम्बा मापि यद्भविष्यतया कालविलम्बमेवाश्रित्य तत्रैव स्थिता। तस्मात्यदर्शितवैक्रियौ परित्यक्तेर्ष्याधर्मौ देवमायया ममत्तमानुपकर्तव्यान्याचरन्तौ प्रत्येकं द्वयं भजमानौ स्थितौ विचक्षणाकालज्ञौ प्रभूतकालं॥

अन्यदा मोहविलयाभिधाने कानने सातिशयज्ञानादिरत्नाकरो वङ्कशिष्यपरिकरः समागतः प्रतिबोधको नामाचार्यः। निवेदितो नरेन्द्रायोद्यानपालेन। ततः सपौरजनो निर्गतस्तद्वन्दनार्थं राजा। भगवतोऽपि देवैर्विरचितं कनककमलं। दृष्टस्तत्रोपविष्टस्तेभ्यो धर्ममाचचाणो भगवान्नरपतिना। इलातलविलुलितमौलिना वन्दितं तत्पादारविन्दं शेषमुनयश्च। अभिनन्दितः कर्मविटपिपाटनपटिष्ठनिष्ठुरकुठारायमाणेन धर्मलाभाशीर्वादेन भगवता शेषयतिभिश्च। उपविष्टो भूतले। कालज्ञादयोऽपि प्रयुज्य समस्तं वन्दनादिविनयं यथास्थानमुपविष्टाः। प्रस्तुता भगवता विशेषतो धर्मदेशना दर्शिता भवनिर्गुणता वर्णिताः कर्मबन्धहेतवः निन्दितः संसारचारकावासः श्लाघितो मोक्षमार्गः ख्यापितः शिवसुखातिशयः कथिता विषयाभिष्वङ्गस्य भवभ्रमणहेतुः शिवसुखप्रतिरोधिका दुरन्तता। ततस्तद्भगवद्वचनामृतमाकर्ण्य विचक्षणाकालज्ञयोर्विदलितं मोहजालं आविर्भूतः सम्यग्दर्शनपरिणामः समुज्ज्वलितः कर्मेन्धनदहनप्रवणः सुदुश्चरितपश्चात्तापानलः॥ अत्रान्तरे तयोः शरीराभ्यां निर्गते रक्तरूपे परमाणुभिर्घटितशरीरा बीभत्सा दर्शनेन भीषणा स्वरूपेण उद्वेगहेतुर्विवेकिनां एका स्त्री भगवतः प्रतापं सोढुमक्षमा निर्गत्य पर्षदः पश्चान्मुखी स्थिता दूरवर्तिनि भूभागे। पश्चात्तापार्द्रीकृतहृदयतया गलदश्रुमलिनौ समकमेव विचक्षणाकालज्ञौ पतितौ भगवच्चरणयोः। कालज्ञेनाभिहितं। भगवन्नधमाधमोऽहं येन मया विप्रतारिता स्वभार्या आचरितं पारदार्यं लुब्धः सरलहृदयो मुग्धो जनितो नरेन्द्रम-

ह्रादेव्यादीनां व्यलीकसुतव्यामोहः वञ्चितोऽयं परमार्थेनात्मा। तस्य ममैवंविधपापकर्मणः कथं शुद्धिर्भविष्यतीति। विचक्षणयोक्तं। ममापि कथं। यतः समाचरितं पापिष्ठया मयापीदं सर्वं। किं वा निवेद्यते दिव्यज्ञानस्य। प्रत्यक्षमेवेदं समस्तं भगवतः। भगवानाह। भद्रौ न कर्तव्यो युवाभ्यां विषादः। न भद्रयोर्दोषोऽयं। निर्मलं भवतोः स्वरूपं। तावाहतुः। कस्य पुनर्दोषोऽयं। भगवानाह। येयं युष्मच्छरीरान्निर्गत्य दूरे स्थिता नारी तस्याः। तावाहतुः। भगवन् किंनामिकेयं। भगवताभिहितं। भद्रौ भोगतृष्णेयमभिधीयते। विचक्षणाकालज्ञाभ्यामभिहितं। भगवन् कथं पुनरियमेवंविधदोषहेतुः। भगवताभिहितं। भद्रौ श्रूयतां।

रजनीव तमिस्रस्य भोगतृष्णैव सर्वदा।
रागादिदोषवृन्दस्य सर्वस्यैषा प्रवर्तिका॥
येषामेषा भवेद्देहे प्राणिनां पापचेष्टिता।
तेषामकार्येषु मतिः प्रसभं संप्रवर्तते॥
तृणकाष्ठैर्यथा वह्निर्जलपूरैर्यथोदधिः।
तथा न तृप्यत्येषापि भोगैरासेवितैरपि॥
यो मूढः शमयत्येनां किल शब्दादिभोगतः।
जले निशीथिनीनाथं स हस्तेन जिघृक्षति॥
मोहादेनां प्रियां कृत्वा भोगतृष्णां नराधमाः।
संसारसागरे घोरे पर्यटन्ति निरन्तके॥
सदोषेयमिति ज्ञात्वा ये पुनः पुरुषोत्तमाः।
स्वदेहगेहान्निःसार्य चित्तद्वारं निरुन्धते॥

तदेषा भवतोः पापा पापकर्मप्रवर्तिका।
अतोऽस्या एव दोषोऽयं विद्यते नैव भद्रयोः॥
स्वरूपेण सदा भद्रौ निर्मलौ परमार्थतः।
एषैव सर्वदोषाणां कारणत्वेन संस्थिता॥
इह स्थातुमशक्निष्ठा एषा दूरस्थिताधुना।
भवन्तौ मत्समीपाच्च निर्गच्छन्तौ प्रतीक्षते॥

विचक्षणाकालज्ञाभ्यामभिहितं। कदा भगवन् पुनरस्याः सकाशादावयोर्मोक्षः। भगवानाह। भद्रौ नेह भवेऽद्यापि भवद्भ्यामियं सर्वथा त्यक्तुं शक्या। केवलमस्या निर्दलने महामुद्गरायमाणं प्रादुर्भूतं भवतोः सम्यग्दर्शनं। तदुद्दीपनीयं पुनः पुनः सुगुरुसन्निकर्षेण। नाचरणीयमस्या भोगतृष्णाया अनुकूलं। लक्षयितव्यो मनसि विवर्तमानो ऽस्याः सम्बन्धी विकारः। निराकरणीयोऽसौ प्रतिपक्षभावनया। ततः प्रतिक्षणं तनुतां गच्छन्ती न भविष्यतीयं शरीरेऽपि वर्तमाना भवतोर्बाधिका। भवान्तरे पुनरस्याः सर्वथा त्यागसमर्थौ भविष्यतो भवन्ताविति। तदाकर्ण्य ततो महाप्रसाद इति वदन्तौ विचक्षणाकालज्ञौ पतितौ भगवच्चरणयोः। ततोऽमुं व्यतिकरमालोक्य श्रुत्वा च भगवद्वचनं ऋजुप्रगुणामुग्धाकुटिलानामपि प्रादुर्भूतः पश्चात्तापेन सह विशुद्धाध्यवसायः। ऋजुप्रगुणाभ्यां चिन्तितं। अहो अलीकसुतवधूदिगुणताव्यामोहेन निरर्थकं विडम्बितं विहिता सुतवध्वोरुन्मार्गप्रवृत्तिराभ्यामिति। मुग्धेन चिन्तितं। अहो कृतं मया परस्त्रीगमनेन कुलस्य दूषणं। अकुटिलया चिन्तितं। यत संजातं शीलखण्ड-

नमिति। ततश्चतुर्णामपि स्थितमेतच्चित्ते। यदुत निवेदयाम एवंस्थितमेवेदं भगवतां। एत एवास्य दुश्चरितस्य प्रतिविधानमुपदेक्ष्यन्ति॥ अत्रान्तरे चतुर्णामपि शरीरेभ्यो निर्गतैः परमाणुभिर्घटितशरीरं शुक्लं वर्णेन परिगतं तेजसाह्लादकं लोचनानां प्रीणकं चेतसामुपलभ्यमानं मया रचितानि मया रचितानि यूयमिति ब्रुवाणमेकं डिम्भरूपं महर्षे भगवन्मुखमीक्षमाणं स्थितं सर्वेषां पुरतः। तावत्तदनुमार्गेणैव कृष्णं वर्णेन बीभत्समाकारेण उद्वेगहेतुः प्राणिनां तथैव निर्गतं द्वितीयं डिम्भरूपं। तस्माच्च तदाकाररूपधरमेव क्लिष्टतरं प्रकृत्या संजातमन्यदपि तृतीयं डिम्भरूपं। तच्च वर्धितुमारब्धं। ततः शुक्लडिम्भरूपेण मस्तके हस्ततलप्रहारं दत्त्वा तदर्धमानं निवार्य प्रकृत्या धारितं। निर्गते च भगवदवष्टम्भाद् द्वे अपि ते कृष्णे डिम्भरूपे। ततो भगवताभिहितं। भो भद्राणि यद्भवद्भिश्चिन्तितं यथा कृतमस्माभिर्विपरीताचरणमिति न तच्च भवद्भिर्विषादो विधेयः। यतो न भवतामेष दोषः निर्मलानि यूयं स्वरूपेण। तैरभिहितं। भगवन् कस्य पुनरेष दोषः। भगवानाह। यदिदं शुक्लानन्तरं भवच्छरीरेभ्यो निर्गतं कृष्णवर्णं डिम्भरूपमस्यायं दोषः। तान्याहुः। भगवन् किंनामकमिदं। भगवतोक्तं। अज्ञानमिदमुच्यते। तैरुक्तं। भगवन् यदिदमेतस्मादज्ञानाख्याद्भूतं द्वितीयं कृष्णडिम्भरूपमनेन च शुक्लरूपेणास्फोट्य वर्धमानं धारितमेतत् किंनामकं। भगवानाह। पापमिदं। तान्याहुः। अस्य शुक्लडिम्भरूपस्य तर्हि किमभिधानं। भगवतोक्तं। आर्जवमिदमभिधीयते। ततस्तान्याहुः।

भगवन् कीदृशमिदमज्ञानं कथं चेदं पापमेतस्माज्जातं किमिति चानेनार्जवेनेदं विवर्धमानं निवारितमिति सर्वं विस्तरतः श्रोतुमिच्छामः। भगवानाह। यद्येवं ततः समाकर्णयत यूयं।

यत्तावदिदमज्ञानं युष्मद्देहादिनिर्गतम्।
एतदेव समस्तस्य दोषवृन्दस्य कारणम्॥
अनेन वर्तमानेन शरीरे जन्तवो यतः।
कार्याकार्यं न जानन्ति गम्यागम्यं च तत्त्वतः॥
भक्ष्याभक्ष्यं न बुध्यन्ते पेयापेयं च सर्वथा।
अन्धा इव कुमार्गेण प्रवर्तन्ते ततः परम्॥
ततो निबध्य घोराणि कर्माण्यज्ञतयाऽखलाः।
भवमार्गे निरन्तेऽत्र पर्यटन्ति सुदुःखिताः॥
अज्ञानमेव सर्वेषां रागादीनां प्रवर्तकम्।
स्वकार्ये भोगतृष्णापि यतोऽज्ञानमपेक्षते॥
अज्ञानविरहे नैव भोगतृष्णा प्रवर्तते।
कथंचित्संप्रवृत्तापि झटित्येव निवर्तते॥
सर्वज्ञः सर्वदर्शी च निर्मलोऽयं स्वरूपतः।
अज्ञानमलिनो ह्यात्मा पाषाणाश्च विशिष्यते॥
याः काश्चिदेव मर्त्येषु निर्वाणे च विभूतयः।
अज्ञानेनैव ताः सर्वा हताः सन्मार्गरोधिना॥
अज्ञानं नरको घोरस्तमोरूपतया मतम्।
अज्ञानमेव दारिद्र्यमज्ञानं परमो रिपुः॥
अज्ञानं रोगसङ्घातो जराप्यज्ञानमुच्यते।

अज्ञानं विपदः सर्वा अज्ञानं मरणं मतम् ॥
अज्ञानविरहे नैव घोरसंसारसागरः ।
अत्रापि वसतां पुंसां बाधकः प्रतिभासते ॥
याः काश्चिदनवस्थाः स्युर्याश्चोन्मार्गप्रवृत्तयः ।
यच्चासमञ्जसं किंचिदज्ञानं तत्र कारणम् ॥
त एव हि प्रवर्तन्ते पापकर्मसु जन्तवः ।
प्रकाशाच्छादकं येषामेतच्चेतसि वर्तते ॥
येषां पुनरिदं चित्ताद्धन्यानां विनिवर्तते ।
शुभ्रीभूतान्तरात्मानस्ते सदाचारवर्तिनः ॥
वन्द्यास्त्रिभुवनस्यापि भूत्वा भावितमानसाः ।
अशेषकल्मषोन्मुक्ता गच्छन्ति परमं पदम् ॥
एतच्चाज्ञानमत्रार्थे सर्वेषां भवतां समम् ।
संजातं तेन दोषोऽयमस्त्येव न भवादृशाम् ॥
डिम्भरूपमनेनैव द्वितीयं पापनामकम् ।
सर्वत्र जन्यते तस्माद्वापि जनितं किल ॥
एतद्धि सर्वदुःखानां कारणं वर्णितं बुधैः ।
उद्वेगसागरे घोरे हठादेतत्प्रवर्तकम् ॥
मूलं संक्लिष्टजालस्य पापमेतदुदाहृतम् ।
न कर्तव्यमतः प्राज्ञैः सर्वं यत्पापकारणम् ॥
हिंसानृतादयः पञ्च तत्त्वाश्रद्धानमेव च ।
क्रोधादयश्च चत्वार इति पापस्य हेतवः ॥
वर्जनीयाः प्रयत्नेन तस्मादेते मनीषिणा ।

ततो न जायते पापं तस्मात्रो दुःखसम्भवः ॥
युष्माकं पुनरज्ञानाज्जातं पापमिदं यतः ।
अज्ञानमेव सर्वेषां हिंसादीनां प्रवर्तकम् ॥
वर्धमानमिदं पापमार्जवेन निवारितम् ।
यदत्र कारणं सम्यक् कथ्यमानं निबोधत ॥
आर्जवं हि स्वरूपेण शुद्धाशयकरं परम् ।
वर्धमानमतः पापं वारयत्येव देहिनाम् ॥
एतच्चार्जवमत्रार्थे सर्वेषां वर्तते समम् ।
अज्ञानजनितं पापं युष्माकममुना जितम् ॥
रचितानि मया यूयमत एव मुहुर्मुहुः ।
सहर्षमेतदाचष्टे डिम्भरूपं स्मिताननम् ॥
धन्यानामार्जवं येषामेतच्चेतसि वर्तते ।
अज्ञानादाचरन्तोऽपि पापं ते स्वल्पपापकाः ॥
यदा पुनर्विजानन्ति ते शुद्धं मार्गमञ्जसा ।
तदा विधूय कर्माणि चेष्टन्ते मोक्षवर्त्मनि ॥
आर्जवेन ततो धन्यास्ते शुभ्रीभूतमानसाः ।
निर्मलाचारविस्ताराः पारं गच्छन्ति संसृतेः ॥
तदेवंविधभावानां भद्राणां बुध्यतेऽधुना ।
अज्ञानपापे निर्धूय सम्यग्धर्मनिषेवनम् ॥
उपादेयो हि संसारे धर्म एव बुधैः सदा ।
विशुद्धो मुक्तये सर्वं यतोऽन्यद्दुःखकारणम् ॥
अनित्यः प्रियसंयोग इहेर्ष्याशोकवत्सलः ।

अनित्यं यौवनं चापि कुत्सिताचरणास्पदम् ॥
अनित्याः संपदस्तीव्रक्लेशवर्गसमुद्भवाः ।
अनित्यं जीवितं चेह सर्वभावनिबन्धनम् ॥
पुनर्जन्म पुनर्मृत्युर्हीनादिस्थानसंश्रयः ।
पुनः पुनश्च यदतः सुखमत्र न विद्यते ॥
प्रकृत्यसुन्दरं ह्येवं संसारे सर्वमेव यत् ।
अतोऽत्र वद किं युक्ता कचिदास्था विवेकिनाम् ॥
मुक्त्वा धर्मं जगद्वन्द्यमकलङ्कं सनातनम् ।
परार्थसाधकं धीरैः सेवितं शीलशालिभिः ॥

ततो भागवतं वाक्यं श्रुत्वेदममृतोपमम् ।
संसारवासात्सर्वैः स्वं स्वं चित्तं निवर्तितम् ॥
राजाह क्रियते सर्वं यदादिष्टं महात्मना ।
प्रगुणाह महाराज किमद्यापि विलम्ब्यते ॥
साह चाकूदितं तात सम्यगम्ब प्रजल्पितम् ।
युक्तमेतदनुष्ठानं सुधियैव प्रभाषितम् ॥
हर्षोत्फुल्लसरोजाक्षी तथापि गुरुलज्जया ।
तदुक्तं बहु मन्वाना वधूर्मौनेन संस्थिता ॥

ततः पतितानि सर्वाण्यपि भगवच्चरणयोः । श्वशुरात्रेणोक्तं । भगवन्संपादयामो यदादिष्टं भगवता । भगवानाह । उचितमिदं भवादृशभव्यानां । ततः पृष्टो भगवाननेन प्रशस्तदिनं राज्ञा । भगवतोक्तं । अद्यैव शुध्यतीति । ततस्तत्क्षणेनैव नरेन्द्रेण दापितानि महादानानि कारितानि देवपूजनानि स्थापितः शुभाशा-

राभिधानः स्वतनयो राज्ये जनितो नागरिकजनानां चित्तानन्द इति ।

ततो निर्वर्त्य कर्तव्यं प्रव्रज्याकरणोचितम् ।
गुरुणार्पितसद्भावं दीक्षितं तच्चतुष्टयम् ॥
ततस्ते कृष्णरूपे द्वे डिम्भे तूर्णं पलायिते ।
शुक्लरूपं पुनस्तेषां प्रविष्टं तनुषु क्षणात् ॥
कालज्ञेन ततश्चित्ते सभार्येण विचिन्तितम् ।
पश्याहो धन्यतामीषां सुलब्धं जन्मजीवितम् ॥
एतैर्भागवती दीक्षा यैः प्राप्ता पुण्यकर्मभिः ।
दुरन्तोऽप्यधुना मन्ये तैस्तीर्णोऽयं भवार्णवः ॥
चारित्ररत्नादेतस्मात्संसारोत्तारकारणात् ।
वयं तु देवभावेन व्यर्थकेनात्र वञ्चिताः ॥

अथवा ।

मिथ्यात्वोद्दलनं यस्मादस्माभिरपि साम्प्रतम् ।
दुर्लभं भवकोटीभिः प्राप्तं सम्यक्त्वमुत्तमम् ॥
अतोऽस्ति धन्यता काचिदस्माकमपि सर्वथा ।
नरो दारिद्र्यभाङ् नैव लभते रत्नपुञ्जकम् ॥
ततः सहर्षौ तौ सूरेः प्रणम्य चरणद्वयम् ।
तेनानुशिष्टौ स्वस्थानं संप्राप्तौ देवदम्पती ॥
प्रविष्टा भोगतृष्णापि शरीरे गच्छतोस्तयोः ।
शुद्धसम्यक्त्वमाहात्म्यात् केवलं सा न बाधिका ॥
विचक्षणाद कालज्ञमन्यदा रहसि स्थिता ।

आर्यपुत्र यदा दृष्टा त्वयाहं कृतवञ्चना ॥
तदा किं चिन्तितं सोऽपि स्वाभिप्रायं न्यवेदयत् ।
विचक्षणाह सत्यस्त्वं कालज्ञ इति गीयसे ॥
तेनापि पृष्टा सोवाच पर्यालोचं तदाननम् ।
कालज्ञः प्राह सत्यैव त्वमप्यत्र विचक्षणा ॥
यतः कालविलम्बेन क्रियमाणेन वल्लभे ।
भोगा भुक्ताः स्थिता प्रीतिर्जातं नाकाण्डविड्वरम् ॥
प्राप्तो धर्मो नृपादीनामुपकारः कृतो महान् ।
ततः कालविलम्बोऽयं फलितोऽत्यर्थमावयोः ॥
विचक्षणाह को वात्र सन्देहो नाथ वस्तुनि ।
किं वा न जायते चारु पर्यालोचितकारिणाम् ॥
ततः प्रीतिसमायुक्तौ संजातौ देवदम्पती ।
मद्धर्मलाभादात्मानं मन्यमानौ कृतार्थकम् ॥
इदं पुत्र मया तुभ्यं कथितं मिथुनद्वयम् ।
संदिग्धेऽर्थे विलम्बेन कालस्य गुणभाजनम् ॥
ततश्च ।
संदिग्धेऽर्थे विधातव्या भवता कालयापना ।
पश्चाद्बहुगुणं यच्च तदेवाङ्गीकरिष्यते ॥
मध्यमबुद्धिराह । यथाज्ञापयत्यम्बा ।
ततो मनीषिणो वाक्यं स्मरतो नास्य जायते ।
प्रीतिबन्धो दृढं तत्र स्पर्शने भाववैरिणि ॥
बालालापैः पुनस्तत्र चेष्टबुद्धिः प्रवर्तते ।

दोलायमानचित्तोऽसौ कुरुते कालयापनाम् ॥
ततश्च तेन बालेन सा प्रोक्ता जननी निजा।
अम्ब संदर्शयात्मीयं योगशक्तिबलं मम ॥
तयोक्तं दर्शयाम्येषा पुत्र त्वं सम्मुखो भव।
ततः सा ध्यानमापूर्य प्रविष्टा तच्छरीरके ॥
अथाकुशलमालायाः प्रवेशानन्तरं पुनः।
स बालः स्पर्शनेनापि गाढं हर्षादधिष्ठितः ॥
ततः शरीरे तौ तस्य वर्तमानौ क्षणे क्षणे।
अभिलाषं मृदुस्पर्शे कुरुतस्तीव्रवेदनम् ।
परित्यक्तान्यकर्तव्यस्तावन्मात्रपरायणः।
स बालः सुरतादीनि दिवा रात्रौ च सेवते ॥
✓ कुविन्दडोम्बमातङ्गजातीयास्वपि तद्वशः।
अतिलौल्येन मूढात्मा ललनासु प्रवर्तते ॥
ततोऽकर्तव्यनिरतं सत्कर्तव्यपराङ्मुखम् ।
तं बालं सकलो लोकः पापिष्ठ इति निन्दति ॥
अज्ञोऽयं गतलज्जोऽयं निर्भाग्यः कुलदूषणः।
एवं स निन्द्यमानोऽपि मन्यते निजचेतसि ॥
स्पर्शनाम्नाप्रमादेन ममास्मि सुखसागरः।
लोको यद्वक्ति तद्वक्तु किमेतज्जल्पचिन्तया ॥
अथाकुशलमालापि निर्गत्य परिपृच्छति।
कीदृशी मामकी जात योगशक्तिर्विभाति ते ॥
स प्राहामुष्टचीतोऽस्मि निर्विकल्पमयाम्बया।

सुखसागरमध्येऽत्र यथाहं संप्रवेशितः ॥
अन्यच्चास्य त्वया नित्यं मदनुग्रहकाम्यया।
न मोक्तव्यं शरीरं मे यावज्जीवं स्वतेजसा ॥
अथाकुशलमालाह यत्तुभ्यं वत्स रोचते।
तदेव सततं कार्यं मया मुक्तान्यचेष्टया ॥
स्वाधीनां तां निरीक्ष्यैवं बालेन परिचिन्तितम्।
स्वर्गोऽपि ममायत्तः सामग्री कार्यसाधिका ॥
अहो मे धन्यता लोके नास्त्यतो बत मादृशः।
ततोऽसौ गाढहृष्टात्मा स्वानुरूपं विचेष्टते ॥
अथ निन्दापरे लोके खेदविक्लवमानसः।
लोकापवादभीरुत्वान्मध्यबुद्धिः प्रभाषते ॥
बाल नो युज्यते कर्तुं तव लोकविरुद्धकम्।
अगम्यागमनं निन्द्यं सपापं कुलदूषणम् ॥
स प्राह विप्रलब्धोऽसि नूनं मित्र मनीषिणा।
स्वर्गे विवर्तमानं मां नेक्षसे कथमन्यथा ॥
ये मूढा जातिदोषेण कोमलं ललनादिकम्।
नेच्छन्ति ते महारत्नं मुञ्चन्ति स्वाज्ञदोषतः ॥
तदाकर्ण्य ततश्चित्ते हतं मध्यमबुद्धिना।
नैष प्रज्ञापनायोग्यो व्यर्थो मे वाक्परिश्रमः ॥

एवं च तिष्ठतां तेषां बालमध्यमनीषिणाम्।
अथान्यदा समायातो वसन्तः कृतमन्मथः ॥
संजाताः काननाभोगाः सुमनोभरपूरिताः।

भ्रमद्भ्रमरझङ्कारहारिगीतमनोहराः ॥
कामिनीहृदयानन्ददायकं प्रियसन्निधौ ।
विजृम्भते वनान्तेषु कलकोकिलकूजितम् ॥
प्रोत्फुल्लकिंशुकाग्रेषु पुष्पभारोऽतिरक्तकः ।
वियोगदलितस्त्रीणां पिशितप्रकरायते ॥
मञ्जर्यः सहकाराणामामोदितदिगन्तराः ।
दृष्टा वसन्तराज्येन धूलिक्रीडां प्रकुर्वते ॥
देवकिन्नरसम्बन्धिमिथुनैः कथिता वने ।
भ्रमेण नाकान्मर्त्यस्य तदानीं रमणीयता ॥
चर्चर्यो निर्भरीभूता बद्धा दोला गृहे गृहे ।
मदनोद्दीपनो मन्दः प्रवृत्तो मलयानिलः ॥
अथेदृशे वसन्तेऽसौ सह मध्यमबुद्धिना ।
क्रीडार्थं निर्गतो बालः कामकालप्रमोदितः ॥
जनन्या देहवर्तिन्या संयुक्तः स्पर्शनेन च ।
गतो लीलाधरं नाम सोद्यानं नन्दनोपमम् ॥
तत्रास्ति मध्यभूभागे शुभ्रशृङ्गो महालयः ।
जनतानयनानन्दः प्रासादस्तुङ्गतोरणः ॥
कामिनीहृदयाह्लादकारको रतिवल्लभः ।
जनैः प्रतिष्ठितस्तत्र देवो मकरकेतनः ॥
इतश्च तस्य देवस्य पूजासत्कारकारणम् ।
तिथिक्रमेण संजाता दिने तत्र चयोदशी ॥
कन्यका वरलाभाय वध्वः सौभाग्यवृद्धये ।

दुर्भगास्तु पतिप्रेममोहेन हृतमानसाः ॥
मोहान्धाः कामिनोऽभीष्टयोषित्सम्बन्धसिद्धये ।
गृहीतार्चनिकाः कामपूजनार्थं समागताः ॥
ततो बालो महारोलं तचाकर्ण्य सविस्मयः ।
प्रविष्टः कामसदनं सह मध्यमबुद्धिना ॥
दृष्टस्तेन रतेर्नाथः प्रणतो भक्तिपूर्वकम् ।
पूजितश्च प्रयत्नेन संस्तुतो गुणकीर्तनैः ॥
अथ प्रदक्षिणां तस्य ददानो देवसद्मनः ।
बालो ददर्श पार्श्वस्थं गुप्तस्थाने व्यवस्थितम् ॥
तस्यैव रतिनाथस्य देवस्य कृतकौतुकम् ।
संवासभवनं रम्यं मन्दमन्दप्रकाशकम् ॥
कुतूहलवशेनाथ द्वारि संस्थाप्य मध्यमम् ।
मध्ये प्रविष्टः सहसा स बालस्तस्य सद्मनः ॥
अथ तत्र सुविस्तीर्णां सपर्यङ्कां मसूरिकाम् ।
मृदूपधानसंपन्नां कोमलामलचेलिकाम् ॥
सुप्तेन रतियुक्तेन क्रान्तमध्यां मनोभुवा ।
स ददर्श महाशय्यां देवानामपि दुर्लभाम् ॥
ततो मन्दप्रकाशत्वात् संवासभवनस्य सः ।
किमेतदिति संचिन्त्य शय्यां पस्पर्श बालकः ॥
इतश्चेतश्च हस्तेन स्पृशता सुचिरं मुदा ।
ततो विभाविता तेन शय्येयं मकरध्वजी ॥
विचिन्तितं च तत्स्पर्शकोमलाहृतचेतसा ।

अहो कोमलता मन्ये नान्यत्र भवतीदृशी ॥
ततः शरीरवर्तिन्या जनन्या स्पर्शनेन च ।
प्रेर्यमाणः स्वकीयेन चापलेन च दूषितः ॥
स बालश्चिन्तयत्येवं मानयामि यथेच्छया ।
एनां कोमलिकां शय्यां सुप्ताहं क्षणमात्रकम् ॥
देवः सुप्तोऽत्र मदनो रतियुक्तो न चिन्तितम् ।
अपायो देवशय्यायां सुप्तस्येति न भावितम् ॥
दृष्टस्य लाघवं लोकैरिति नैव मनस्कृतम् ।
विज्ञातं नेति संपन्ने हास्यो मध्यमबुद्धितः ॥
अनालोच्यायतिं मोहात् केवलं सुप्त एव सः ।
आरुह्य शय्यां तां दिव्यां कृतं बालविचेष्टितम् ॥
ततस्तस्यां विशालायां शय्यायां बहुमानसः ।
इतश्चेतश्च कुर्वाणः सर्वाङ्गाणि पुनः पुनः ॥
अहो सुखमहो स्पर्शस्तथाहो धन्यता मम ।
चिन्तयन्निति शय्यायां लुटमानः स तिष्ठति ॥
इतश्च नगरे तत्र बहिरङ्गो नृपोत्तमः ।
अन्योऽप्यस्ति महातेजाः प्रख्यातः शत्रुमर्दनः ॥
तस्यास्ति पट्टपत्नी प्राणेभ्योऽपि सुवल्लभा ।
प्रधानकुलसंभूता देवी मदनकन्दली ॥
याहितार्चनिका सा च परिवारेण संयुता ।
आयाता तत्र सदने कामदेवस्य पूजिका ॥
देवकोष्ठस्थितं सा च संपूज्य मकरध्वजम् ।

संवासभवनस्तस्य प्रविष्टा तस्य पूजिका ॥
प्रविशन्तीमुदीक्ष्यासौ तां स्तौति हृतनिश्चयः।
लज्जाभयाभ्यां निश्चेष्टो बालः काष्ठमिव स्थितः ॥
ततो मन्दप्रकाशे सा भवने मृगलोचना।
हस्तस्पर्शेन शय्यायां देवमर्चयते किल ॥
चन्दनेन च कुर्वत्या रतिकामविलेपनम्।
स बालः सर्वगात्रेषु स्पृष्टः कोमलपाणिना ॥
ततोऽकुसुमलमालाया वशेन स्पर्शनस्य च।
स बालश्चिन्तयत्येवं विपर्यासितमानसः ॥
यादृशोऽयं मृदुस्पर्शो हस्तस्यास्यानुभूयते।
नानुभूतो मया तादृग् जन्मान्यपि कदाचन ॥
अहो मयान्यस्पर्शेषु सौन्दर्यं कल्पितं वृथा।
नातः परतरं मन्ये त्रिलोकेऽप्यस्ति कोमलम् ॥
इत्थं कामदेवस्य परिचर्यां विधाय सा।
स्वस्थानं प्रगता काले रात्रौ मदनकन्दली ॥

ततोऽसौ बालः कथं मयेयं स्त्री संपश्यत इति विस्मया-विष्टीभूतहृदयोऽनाख्येयमन्मथतापातिरेकं वेदयमानो विस्मृतात्मा तस्यामेव शय्यायां मुञ्चन्नुष्णोष्णान्दीर्घदीर्घान्निःश्वासान् मूर्छित इव मूक इव मत्त इव भीत इव हृतसर्वस्व इव नष्टनिधानो निधिप्रमत्तक इव इतश्चेतश्च परिवर्तमानो विचेष्टते। ततो द्वारे वर्तमानेन मध्यमबुद्धिना चिन्तितं। अये किमिदम् बालोऽद्यापि संवासभवनादियतापि कालेन न निर्गच्छतीति किं

वा करोतीति प्रविश्य तावन्निरूपयामि। ततः प्रविष्टो मध्यमबुद्धिः। लक्षिता हस्तस्पर्शेन कामशय्या। हृतमस्यापि हृदयं तत्कोमलतया। ततो विमलीभूतदृष्टिना तेन दृष्टः शय्यैकदेशे विचेष्टमानस्तदवस्थो बालः। चिन्तितमनेन। अहो किमनेनाकार्यमाचरितं। न युक्तं देवशय्यायामधिरोहणं। न खलु रतिरूपविभ्रमापि गुर्वङ्गना सतां गम्या भवति। तथेयं शय्या सुखदापि देवप्रतिमाधिष्ठितेति कृत्वा केवलं वन्दनीया न पुनरुपभोगमर्हतीति। ततश्चोत्थापितोऽनेन बालो यावन्न किंचिज्जल्पति मध्यमबुद्धिराह। अहो अकार्यमिदं। न युक्तं देवशय्यायामधिरोहणमित्यादि। तथापि न दत्तमुत्तरं बालेन। अत्रान्तरे प्रविष्टस्तद्देवकुलाधिष्ठायको व्यन्तरः। वज्रसेनाकाशवन्धैः बालः। पातितो भूतले। समुत्पादितास्य सर्वाङ्गीणा तीव्रवेदना। ततो मुमूर्षन्तमुपलभ्य कृतो मध्यमबुद्धिना हाहारवः। ततः किमेतदिति सम्भ्रमेण चलितो देवकुलात्तदभिमुखं लोकः। निःसारितो व्यन्तरेण वासभवनाद् बहिर्बालो महास्फोटेन क्षिप्तो भूतले। भग्ननयनः कण्ठगतप्राणोऽसौ दृष्टो लोकेन। तदनुमार्गेण दीनमनस्को निर्गतो मध्यमबुद्धिः। किमेतदिति पृष्टोऽसौ जनेन। लज्जया न किंचिज्जल्पितमनेन। ततोऽवतीर्य कंचित्पुरुषं व्यन्तरेण कथितो जनेभ्यस्तदीयव्यतिकरः। ततो देवापथ्यकारीति पापिष्ठोऽयमिति धिक्कारितोऽसौ बालो मकरध्वजभक्तैः कुलदूषणोऽयमस्माकं विपततरिव संपन्न इति गर्हितः स्वजातीयैः अनुभवतु पापकर्मणः फलमिदानीमित्याक्रोशितः सामान्यलोकैः

कियदेतदसमीचितकारिणां समस्तानर्थभाजनत्वात् तेषामित्यप-
कर्णितो विवेकिलोकैः । ततोऽसौ व्यन्तरः क्षतविक्षतरूपः समाह ।
चूर्णनीयोऽयं दुरात्मा भवतां पुरतो मयाधुना बाल इति । ततः
कृतहाहारवः प्रसीदतु प्रसीदतु भट्टारको ददातु भ्रातृप्राणभि-
क्षामिति ब्रुवाणः पतितो व्यन्तराधिष्ठितपुरुषपादयोर्मध्यमबुद्धिः ।
ततस्तत्करुणापरीतचेतसा लोकेनाप्यभिहितो व्यन्तरः । यदुत
भट्टारक मुच्यतामेकवारं तावदेष न पुनः करिष्यतीति । ततो
मध्यमबुद्धिकरुणया लोकोपरोधेन च मुक्तोऽसौ व्यन्तरेण बालः ।
लब्धा चेतना । मुत्कलीभूतं शरीरं । निःसारितस्तूर्णं देवकुला-
न्मध्यमबुद्धिना नीतः कृच्छ्रेण स्वभवनं । ज्ञातोऽयं व्यतिकरः
परिकरात्कर्मविलासेन । चिन्तितमनेन । कियदेतदद्यापि मयि
प्रतिकूले बालस्य । यद्भविष्यति तस्य लक्षयन्त्येते लोकाः । ततो
ऽभिहितः कर्मविलासेन परिकरः । किमस्माकं दुर्विनीतचिन्तया ।
मोचितः सोऽनुशास्तेः । न वोढव्यस्तदीयः केनापि व्यापारः ।
परिकरेणोक्तं । यदाज्ञापयति देव इति ॥

पृष्टोऽसौ मध्यमबुद्धिना बालः । भ्रातर्न किंचित्तेऽधुना
शरीरके बाधते । बालेनाभिहितं । न शरीरके केवलं प्रवर्धते
ममान्तस्तापः । मध्यमबुद्धिराह । जानामि किंनिमित्तोऽयं ।
ततो वामशीलतया कामस्य बालः प्राह । न जानामि केवलं
दारस्थेन भवता तत्र संवासभवने प्रविशन्तो गच्छन्तो वा किं
विलोकिता काचिन्नारी न वा । मध्यमबुद्धिराह । विलोकिता ।
बालेनोक्तं । तत्किं लक्षिता कामाविति भवता । मध्यमबुद्धिराह ।

सुष्ठु लक्षिता। सा हि शत्रुमर्दनस्य राज्ञो भार्या, मदनकन्दली-त्युच्यते। तदाकर्ण्य कथं सा मादृशामिति चिन्तया दीर्घदीर्घतरं निःश्वसितं बालेन। तदर्थी खल्वयमिति लक्षितो मध्यमबुद्धिना। चिन्तितमनेन। तथापि स्थाने तावदस्यायमभिनिवेशः। जनयत्येव सा मदनकन्दली सुन्दरतरातिशयेन स्वगोचरमभिलाषं। यतो द्वारशाखाछन्नेन मयाप्यतिसङ्कटतया कामसंवासभवनद्वारस्य निर्गच्छन्त्यास्तस्या मदनकन्दल्याः संवेदितोऽङ्गस्य स्पर्शः। न तादृशः प्रायेणान्यवस्तुनः स्पर्शो भुवने विद्यते। दोलायितं ममापि तदभिसरणगोचरं मनस्तदानीमासीत्। किं तु न युक्तं कुलजानां परस्त्रीगमनं। तस्मान्निवारयाम्येनमपि यदि निवर्तते मद्वचनेन। ततः स बालं प्रत्याह। केयमविद्या भवतः। किं न दृष्टमिदानीमेव फलमविनयस्य भवता। किमधुनैव विस्मृतं यत्कण्ठगतप्राणः कथंचिन्मोचितस्त्वं मया दुर्विनयकुपिताद्भगवतो मकरध्वजात्। ततो निवर्तस्वास्मादुरध्यवसायात्। नयनविषनागशिरोरत्नसूचिकल्पा हि सा मदनकन्दली। तां प्रार्थयतस्ते केवलं भस्मीभाव एव न पुनः काचिदर्थसिद्धिः। बालेन चिन्तितं। अये लक्षितोऽहमनेन। तत्किमधुनाभिप्रायगोपनेन। ततस्तेनोक्तं। यद्येवं ततः किं ब्रूषे मोचितस्त्वं मया न पुनर्ब्रूषे यथा गाढतरं मारित इति। यतस्तेन कामेन युष्मद्वचनेन मां मुञ्चता केवलं मे शरीरवेदनामात्रमपसारितं हृदये पुनर्निक्षिप्तो वितर्कपरम्परारूपः प्रज्वलितखादिराङ्गारराशिस्तेन दंदह्यते मे समन्ताच्छरीरं। यद्यहं कामबन्धनकाल एवामरिष्यं नैतावन्तमन्तस्तापमन्वभविष्यं। ततो भवता

मोचयता प्रत्युत महानयमनर्थः संपादित इति। नाधुना ममैनामसृतसेकायमानां मदनकन्दलीं विरहय्यान्यथास्यात्मास्वापशोपशमः। किं बहुनाच जल्पितेनेति। ततो लक्षितो मध्यमबुद्धिनास्यानिवर्तको निर्बन्धः। स्थितोऽसौ तूष्णींभावेन॥

अत्रान्तरे गतोऽस्तं सविता। बालहृदयादिव समुल्लसितं तमःपटलं। लङ्घितः प्रथमः प्रदोषः। निःसञ्चारीभूतो लोकः। ततोऽविचार्य कार्याकार्यं समुत्थितो बालः। निर्गतः स्वकीयभवनात्। अवतीर्णो राजमार्गं। प्रवृत्तः प्रचुमर्दनराजकुलाभिमुखं गन्तुं। गतः कियन्तमपि भूभागं। इतश्च स्नेहवशेन किमस्य संपद्यत इति चिन्तया निर्गतस्तदनुमार्गेण मध्यमबुद्धिः। दृष्टो बालेन गच्छता कश्चित्पुरुषः। तेन चास्फोट्य बद्धोऽसौ मयूरबन्धेन। कूजितं बालेन। प्राप्तः प्राप्त इति ब्रुवाणः प्राप्त एव मध्यमबुद्धिः। ततः समुत्पाट्य बालं पश्यत एव मध्यमबुद्धेः समुत्पतितः पुरुषोऽम्बरतलं। आरटतश्च बालस्य स्थगितं वदनं। प्रवृत्तः पश्चिमाभिमुखो गन्तुं। ततो मध्यमबुद्धिरपि अरे रे दुष्टविद्याधर क्व यासि गृहीत्वा मदीयभ्रातरमिति चावों मुञ्चन्नाकृष्टखड्गः प्रस्थितो भूमौ तदनुमार्गेण। निर्गतो नगरात्। अदर्शनीभूतः पुरुषः। निराशीभूतो मध्यमबुद्धिः। तथापि बालस्नेहानुबन्धेन किल क्वचिन्मोक्ष्यतीति बुद्ध्या नासौ धावन्नुपरमति। धावत एव लङ्घिता रजनी। ततोऽनुपानत्कतया विद्धोऽनेककण्टककीलकैः परिगतः श्रमेण क्षामो बुभुक्षया पीडितः पिपासया विह्वलः शोकेन अध्यासितो दैन्येन अनेकग्रामनगरेषु पृच्छन् बालवार्त्तां भ्रान्तोऽसौ महाद्रो-

लब्धोऽयं मया प्रस्तुतविद्यासिद्धेरुचितः सलक्षणः पुरुषः। इतरेणोक्तं। महाप्रसादः। ततोऽभिहितो नभश्चरेण स पुरुषः। यथैकैकस्मिन् विद्याजापपर्यन्ते मया दत्ताहुतिरग्नौ भवता प्रक्षेप्तव्या। प्रतिपन्नमनेन। प्रारब्धो जापः। ततो विद्याधरेणाकृष्टा यमजिह्वेवातितीक्ष्णा भास्वराकारा शस्त्रिका। तया चोत्कर्तिता मदीयपृष्ठप्रान्तेन दीर्घा मांसपेशी। निष्पीड्य तत एव प्रदेशात् निर्गालितं रुधिरं भृतश्चुलुकः। अत्रान्तरे समाप्तमितरस्यैकं विद्यापरावर्तनं। समर्पिता विद्याधरेण रुधिरमांसमयी तस्याहुतिः। प्रक्षिप्ता तेन साग्निकुण्डे। पुनः प्रारब्धो जापः। ततश्चैवं सोऽम्बरचरो मदीयं शरीरं परापरप्रदेशान्नरकपाल इव नारकस्यारटतो मे मांसपेशीरुत्कर्तयति तं प्रदेशं निष्पीड्य रुधिरं निर्गालयति तस्य च चुलुकं भृत्वा साधकायाहुतये ददाति। स च विद्यापरावर्तनपरिसमाप्तौ गृहीत्वा हुताशने प्रक्षिपति। ततो वेदनाविह्वलो मूर्च्छया पतितोऽहं भूतले। विद्याधरस्तु प्रगुणशरीरतया हृष्ट इव निष्करुणो गाढतरं मां विकर्तयति। अत्रान्तरेऽट्टहासैर्हसितमिव प्रलयमेघैर्गुलुगुलितमिव समुद्रेण प्रचलितेव पृथिवी रसितं दीप्तजिह्वाभिः शिवाभिः प्रनृत्तं च विकृतरूपैर्वेतालैः निपतितं रुधिरवर्षं। ततश्चैवंविधेषु रौद्रेषु विभीषिकाविशेषेषु सत्त्वप्रक्षुभितचित्तस्य तस्य राज्ञोऽभिमुखीभूता सा क्रूरविद्या। समाप्तं जापस्याष्टशतं। ततः सिद्धाहं भवत इति वदन्ती प्रकटीभूता विद्या प्रणता साधकेन प्रविष्टा तच्छरीरे। ततः समुत्कर्तितशरीरं

निष्पीडितरुधिरबीभत्सं करुणमारटन्तं मामुपलभ्य स राजा मयि जातः सदयः। कृतोऽनेन दन्तसीत्कारः। ततो वारितोऽसौ विद्याधरेण। अभिहितं च तेन। राजन्नेष एवास्या विद्यायाः कल्पो यदुत न कर्तव्यास्योपरि दया। ततो विद्याधरेण लिप्तं मे केनचिल्लेपेन शरीरं। ततोऽहं समन्तादग्निदह्यमान इव तीव्रवह्निना चूर्ण्यमान इव वज्रेण पीड्यमान इव यन्त्रेण प्रविष्टो वेदनाप्रकर्षं। तथापि सुवज्रं न गतमेतन्मे हतजीवितं। संजातं क्षणेन मे तेनैव लेपेन दवदग्धस्थाणुकल्पं शरीरं। समुत्पाटित-स्ताभ्यां नीतस्तत्र नगरे। खादितस्य श्वयथुनिमित्तमस्थभोजनं। शूनं मे शरीरं। ततो भूयस्तेनैव विधिना मदीयमांसरुधिरा-हुतिभिस्तेन राज्ञा दत्तमष्टशतमष्टशतं विद्याया जापस्य सप्त दिनानीति। दृष्टश्च तदवस्थोऽहं भवता। तदिदं भ्रातर्मया-नुभूतं। स्थितं च मम हृदये। यदुत न प्रायेण नरकेऽप्येवंविधो दुःखविन्यासो यादृशो मयानुभूत इति। मध्यमबुद्धिराह। हा भ्रातर्नोचितस्त्वमेवंविधदुःखानां अहो निर्घृणता विद्याधरस्य अहो रौद्रता विद्यायाः॥

अत्रान्तरे लोकाचारमनुवर्तमानो वार्त्तान्वेषणार्थमागतो मनीषी। श्रुतस्तेन द्वारि स्थितेन तथा परिदेवमानो मध्यमबुद्धिः। प्रविष्टोऽभ्यन्तरे। कृतेतराभ्यामासनदानादिका प्रतिपत्तिः। विहितं संभाषणं। ततो मनीषिणाभिहितं। मध्यमबुद्धे किमिति त्वं परिदेवसे। मध्यमबुद्धिराह। भ्रातर-लौकिकमिदं परिदेवनकारणं। मनीषिणोक्तं। कथं। ततः

लब्धोऽयं मया प्रस्तुतविद्यासिद्धेरुचितः सल्लक्षणः पुरुषः। इतरेणोक्तं। महाप्रसादः। ततोऽभिहितो नभश्चरेण स पुरुषः। यथैकैकस्मिन् विद्याजापपर्यन्ते मया दत्ताहुतिरग्नौ भवता प्रक्षेप्तव्या। प्रतिपन्नमनेन। प्रारब्धो जापः। ततो विद्याधरेणाकृष्टा यमजिह्वेवातितीक्ष्णा भास्वराकारा शस्त्रिका। तया चोत्कर्तिता मदीयपृष्ठात्तेन दीर्घा मांसपेशी। निष्पीड्य तत एव प्रदेशात् निर्गालितं रुधिरं भृतश्चुलुकः। अत्रान्तरे समाप्तमितरस्यैकं विद्यापरावर्तनं। समर्पिता विद्याधरेण रुधिरमांसमयी तस्याहुतिः। प्रतिक्षिप्ता तेन साग्निकुण्डे। पुनः प्रारब्धो जापः। ततश्चैवं सोऽम्बरचरो मदीयं शरीरं परापरप्रदेशात्करकपाल इव नारकस्यारटतो मे मांसपेशीमुत्कर्तयति तं प्रदेशं निष्पीड्य रुधिरं निर्गालयति तस्य च चुलुकं भृत्वा साधकायाहुतये ददाति। स च विद्यापरावर्तनपरिसमाप्तौ गृहीत्वा कृताग्नौ प्रक्षिपति। ततो वेदनाविह्वलो मूर्च्छया पतितोऽहं भूतले। विद्याधरस्तु प्रगुणशरीरतया वृष्ट इव निष्करुणो गाढतरं मां विकर्तयति। अत्रान्तरेऽट्टहासैर्हसितमिव प्रलयमेघगुलुगुलितमिव समुद्रेण प्रचलितेव पृथिवी रसितं दीप्तजिह्वाभिः शिवाभिः प्रनृत्तं च विकृतरूपैर्वेतालैः निपतितं रुधिरवर्षं। ततश्चैवंविधेषु रौद्रेषु विभीषिकाविशेषेषु सत्त्वपरिभवितचित्तस्य तस्य राज्ञोऽभिमुखीभूता सा क्रूरविद्या। समाप्तं जापस्याष्टशतं। ततः सिद्धाहं भवत इति वदन्ती प्रकटीभूता विद्या प्रणता साधकेन प्रविष्टा तच्छरीरे। ततः [illegible]

निष्पीडितरुधिरबीभत्सं करुणमारटन्तं मामुपलभ्य स राजा मयि जातः सदयः। कृतोऽनेन दन्तसीत्कारः। ततो वारितोऽसौ विद्याधरेण। अभिहितं च तेन। राजन्नेष एवास्या विद्यायाः कल्पो यदुत न कर्तव्यास्योपरि दया। ततो विद्याधरेण लिप्तं मे केनचिल्लेपेन शरीरं। ततोऽहं समन्तादिन्दह्यमान इव तीव्रवह्निना चूर्ण्यमान इव वज्रेण पीड्यमान इव यन्त्रेण प्रविष्टो वेदनाप्रकर्षं। तथापि सुबहुं न गतमेतन्मे हतजीवितं। संजातं क्षणेन मे तेनैव लेपेन दवदग्धस्थाणुकल्पं शरीरं। समुत्पाटित-स्ताभ्यां नीतस्तच नगरे। खादितस्य श्वयुनिमित्तमस्त्रभोजनं। शूनं मे शरीरं। ततो भूयस्तेनैव विधिना मदीयमांसरुधिरा-हुतिभिस्तेन राज्ञा दत्तमष्टशतमष्टशतं विद्याया जापस्य सप्त दिनानीति। दृष्टस्य तदवस्थोऽहं भवता। तदिदं भ्रातर्मया-नुभूतं। स्थितं च मम हृदये। यदुत न प्रायेण नरकेऽप्येवंविधो दुःखविन्यासो यादृशो मयानुभूत इति। मध्यमबुद्धिराह। हा भ्रातर्नोचितस्त्वमेवंविधदुःखानां अहो निर्घृणता विद्याधरस्य अहो रौद्रता विद्यायाः॥

अत्रान्तरे लोकाचारमनुवर्तमानो वार्त्तान्वेषणार्थमागतो मनीषी। श्रुतस्तेन द्वारि स्थितेन तथा परिदेवमानो मध्यमबुद्धिः। प्रविष्टो ऽभ्यन्तरे। कृतेतराभ्यामासनदानादिका प्रतिपत्तिः। विहितं संभाषणं। ततो मनीषिणाभिहितं। मध्यमबुद्धे किमिति त्वं परिदेवसे। मध्यमबुद्धिराह। भ्रातर-लौकिकमिदं परिदेवनकारणं। मनीषिणोक्तं। कथं। ततः

लब्धोऽयं मया प्रस्तुतविद्यासिद्धेरुचितः सलक्षणः पुरुषः। इतरेणोक्तं। महाप्रसादः। ततोऽभिहितो नभश्चरेण स पुरुषः। यथैकैकस्मिन् विद्याजापपर्यन्ते मया दत्ताकृतिरग्नौ भवता प्रक्षेप्तव्या। प्रतिपन्नमनेन। प्रारब्धो जापः। ततो विद्याधरेणाकृष्टा यमजिह्वेवातितीक्ष्णा भास्कराकारा शस्त्रिका। तथा चोत्कर्तिता मदीयपृष्ठात्तेन दीर्घा मांसपेशी। निष्पीड्य तत एव प्रदेशात् निर्गालितं रुधिरं भृतश्चुलुकः। अत्रान्तरे समाप्तमितरस्यैकं विद्यापरावर्तनं। समर्पिता विद्याधरेण रुधिरमांसमयी तस्याकृतिः। प्रतिक्षिप्ता तेन साग्निकुण्डे। पुनः प्रारब्धो जापः। ततस्तेवं सोऽम्बरचरो मदीयं शरीरं परापरप्रदेशान्नरकपाल इव नारकस्यारटतो मे मांसपेशीमुत्कर्तयति तं प्रदेशं निष्पीड्य रुधिरं निर्गालयति तस्य च चुलुकं भृत्वा साधकायाकृतये ददाति। स च विद्यापरावर्तनपरिसमाप्तौ गृहीत्वा कृतागने प्रक्षिपति। ततो वेदनाविक्लवो मूर्छया पतितोऽहं भूतले। विद्याधरस्तु सगुणशरीरतया हृष्ट इव निष्करुणो गाढतरं मां विकर्तयति। अत्रान्तरेऽट्टहासैर्हसितमिव प्रलयमेघैर्गुलुगुलितमिव समुद्रेण प्रचलितेव पृथिवी रसितं दीप्तजिह्वाभिः शिवाभिः प्रनृत्तं च विकृतरूपैर्वेतालैः निपतितं रुधिरवर्षं। ततस्तेवंविधेषु रौद्रेषु विभीषिकाविशेषेषु सत्स्वप्रक्षुभितचित्तस्य तस्य राज्ञोऽभिमुखीभूता सा क्रूरविद्या। समाप्तं जापस्याष्टशतं। ततः सिद्धाहं भवत इति वदन्ती प्रकटीभूता विद्या प्रणता साधकेन प्रविष्टा तच्छरीरे। ततः समुत्कर्तितशरीरं

निष्पीडितरुधिरबीभत्सं करुणमारटन्तं मामुपलभ्य स राजा मयि जातः सदयः। कृतोऽनेन दन्तसीत्कारः। ततो वारितोऽसौ विद्याधरेण। अभिहितं च तेन। राजन्नेष एवास्या विद्यायाः कल्पो यदुत न कर्तव्यास्योपरि दया। ततो विद्याधरेण लिप्तं मे केनचिल्लेपेन शरीरं। ततोऽहं समन्तादृन्दह्यमान इव तीव्रवह्निना चूर्ण्यमान इव वज्रेण पीड्यमान इव यन्त्रेण प्रविष्टो वेदनाप्रकर्षं। तथापि सुबहुं न गतमेतन्मे हतजीवितं। संजातं क्षणेन मे तेनैव लेपेन दवदग्धस्थाणुकल्पं शरीरं। समुत्पाटितस्ताभ्यां नीतस्तच नगरे। खादितश्च भूययुनिमित्तमह्नभोजनं। शूनं मे शरीरं। ततो भूयस्तेनैव विधिना मदीयमांसरुधिराहुतिभिस्तेन राज्ञा दत्तमष्टशतमष्टशतं. विद्याया जापस्य सप्त दिनानीति। दृष्टश्च तदवस्थोऽहं भवता। तदिदं भ्रातर्मयानुभूतं। स्थितं च मम हृदये। यदुत न प्रायेण नरकेऽप्येवंविधो दुःखविन्यासो यादृशो मयानुभूत इति। मध्यमबुद्धिराह। हा भ्रातर्नोचितस्त्वमेवंविधदुःखानां अहो निर्घृणता विद्याधरस्य अहो रौद्रता विद्यायाः॥

अत्रान्तरे लोकाचारमनुवर्तमानो वार्तान्वेषणार्थमागतो मनीषी। श्रुतस्तेन द्वारि स्थितेन तथा परिदेवमानो मध्यमबुद्धिः। प्रविष्टो ऽभ्यन्तरे। कृतेतराभ्यामासनदानादिका प्रतिपत्तिः। विहितं संभाषणं। ततो मनीषिणाभिहितं। मध्यमबुद्धे किमिति त्वं परिदेवसे। मध्यमबुद्धिराह। भ्रातरलौकिकमिदं परिदेवनकारणं। मनीषिणोक्तं। कथं। ततः

राचापि । प्राप्तः कुशस्थलं नाम नगरं । स्थितस्तस्य बहिर्भागे । दृष्टोऽनेन जीर्णो ऽन्धकूपः । ततः किं ममाधुना भ्रातृविकलेन जीवितेनेति प्रक्षिपाम्यचात्मानमिति संचिन्त्य बद्धा मध्यमबुद्धिना निर्मोलगमनार्थमात्मगलके शिला। दृष्टं तन्नन्दननाम्ना राजपुरुषेण। ततो मा साहसं मा साहसमिति ब्रुवाणः प्राप्तोऽसौ तत्समीपं। धारितः कूपतटोपान्तवर्ती मुञ्चन्नात्मानं मध्यमबुद्धिरनेन। विमोचितः शिलां । निवेशितो भूतले पृष्टश्च । भद्र किमितीदमधमपुरुषोचितं भवता व्यवसितं । ततः कथितोऽनेन बालवियोगव्यतिकरः । नन्दनेनाभिहितं । भद्र यद्येवं ततो मा विषादं कार्षीः । भविष्यति भ्रात्रा साधं प्रायेण मीलकः । मध्यमबुद्धिराह । कथं । नन्दनेनोक्तं । समाकर्णय । अस्त्यत्र नगरेऽस्माकं स्वामी हरिश्चन्द्रो नाम राजा । स च प्रतिक्षणमुपद्रूयते विजयमाठरशङ्खादिभिः प्रात्यन्तिकैर्मण्डलाहरैर्नृपतिभिः । इतश्चास्ति रतिकेलिर्नाम विद्याधरः परममित्रं । अन्यदा समागतेन शत्रूपद्रुतमवलोक्य देवं तेनाभिहितः । ददामि तुभ्यमहं क्रूरविद्यां यत्प्रभावेन न लमेतैः परिभूयसे । देवेनाभिहितं । अनुग्रहो मे । ततः कारयित्वा षण्मासिकां पूर्वसेवामितो दिनादष्टमे दिने नीतः क्वचित्तेन देवो हरिश्चन्द्रः । कारितो विद्यासाधनं । आनीतो द्वितीयदिने सह पुरुषेण । कृता तस्य पुरुषस्य मांसरुधिरेण होमक्रियया सप्त दिनानि विद्यायाः पश्चात्सेवा । मुक्तोऽसावधुना पुरुषः । स एव प्रायस्ते भ्राता भविष्यतीति मे वितर्कः । स च ममैव समर्पितो ऽधुना देवेन । मध्यमबुद्धिराह ।

भद्र यद्येवं ततो यद्यस्ति ममोपरि दया भवतस्ततस्तमानय तावदिहैव पुरुषं येनाहं प्रत्यभिजानामीति। ततस्तथैवं करोमीत्यभिधाय गतो नन्दनः। समायातः समुत्पाट्य गृहीला बालं। दृष्टोऽसिमाचावशेष उच्छ्वासनिःश्वासोपलक्ष्यमाणजीवितो निरुद्धवाक्प्रसरो मध्यमबुद्धिना बालः। प्रत्यभिज्ञातः कृच्छ्रेण। अभिहितो नन्दनः। भद्र स एवायं मम भ्रातेति। सत्यं नन्दनस्त्वमसि। अनुगृहीतोऽहं भवता। नन्दनः प्राह। भद्र राजद्रोह्यमिदं भवत्करुणया मयाध्यवसितं। अन्यच्च। अधुनागतेन मयाकर्णितं। यथा किल रात्रौ राजा पुनस्तर्पयिष्यति रुधिरेण विद्यां भविष्यत्यनेन पुरुषेण प्रयोजनमिति। तदिदमवगम्य मम यद्भवति तद्भवतु। भवद्भ्यां तु तूर्णमपक्रमितव्यं। ततो यदाज्ञापयति भद्रो रक्षणीयस्य यत्नतो भद्रेणात्मेत्यभिधाय समुत्पाटितो बालः। प्रवृत्तो गन्तुं मध्यमबुद्धिः। ततो भयविधुरहृदयो धावन्नहर्निशं वेगेन क्वचिन्नद्यां बालं पाययन्नुदकं समाच्छादयन्वायुना प्रीणयन्नशनादिरसेनागणयन्नात्मनः शरीरपीडां महता क्लेशजालेन प्राप्तः स्वस्थानं मध्यमबुद्धिः॥

गतानि कतिचिद्दिनानि। जातो मनाक् सबलो बालः। पृष्टो मध्यमबुद्धिना। भ्रातः किं भवतानुभूतं। स प्राह। अस्ति तावदुत्क्षिप्तोऽहं बद्धा भवतः पश्यत एव गगनचारिणा नीतः कृतान्तपुराकारमतिभीषणतयैकं श्मशानं। दृष्टस्तत्र प्रज्वलिताङ्गारभृताग्निकुण्डपार्श्ववर्ती मया पुरुषः। ततस्तं प्रति तेनाम्बरचरेणाभिहितं। महाराज सिद्धं ते ऽधुना समीहितं।

गुणाधिकेषु प्रमोदवन्तो महात्मान इति विमर्शेन धन्यः पुण्य-भागसौ भवजन्तुर्येनायं समस्तानर्थहेतुः स्पर्शनः पापवयस्यः सर्वथा निराकृत इत्यालोचयतः समुल्लसितस्तं प्रति हर्षः। तातेन तु केवलमट्टहासेन हसितं। मयाभिहितं। तात किमेतत्। तातेनाभिहितं। पुत्र यन्मयि प्रतिकूले संपद्यते तत्संपन्नं बालस्य। अतो मे हर्षः। हा जात क्व गतोऽसीति परिदेवितं सामान्यरूपया। न संजातो मामकतनयस्यापाय इति हृष्टा चित्तेन मदीयजननी। नगरस्य तु संपन्नो बालहरणेन प्रमोदः। संजाता त्वदीयगमनेन करुणा। प्रादुर्भूतः स्वस्थावस्थानदर्शनेन ममोपरि पक्षपातः॥ मध्यमबुद्धिराह। कथमेतल्लक्षितं भवता। मनीषिणाभिहितं। निर्गतोऽहमासं तदा नगरे कुतूहलेन भ्रमणिकया। ततः श्रुता मया परस्परं जल्पन्तो लोकाः। यदुत। अहो सुन्दरं संपन्नं यदसौ कलङ्कहेतुर्निजकुलस्य दुष्टोऽन्तःकरणेन वर्जितो मर्यादया बहिर्भूतः सदाचाराच्चिरतः सततमगम्यगमने ऽत एवोपतापकरो नगरस्य बालः केनापि महात्मनापहृत इति। अन्येनाभिहितं। सुष्ठु सुन्दरमेवं तु सुन्दरतरं भवति यद्यसौ छिन्नो भिन्नो व्यापादितश्च श्रूयते। यतस्तस्मिन्नेकान्ततः प्रलीन एव पापे नागरिकाणां शीलसंरक्षणं संपत्स्यते नान्यथा। अन्येनाभिहितं। सुन्दरमिदं केवलं यदसौ मध्यमबुद्धिस्तपस्वी तस्य पृष्ठतो लग्नः क्लिश्यते तन्न चारु। स हि विशिष्टप्रायः प्रतिभासतेऽस्माकं। ततोऽपरः प्राह। भद्र ये पापप्रवृत्तानां वत्सला भवन्ति तेषां कीदृशी विशिष्टता।

न खलु जात्यकनकं श्यामिकया सह संसर्गमर्हति। अत एव लभन्ते तद्द्वारेणैव दुःखपरम्परामयशश्च लोके। किमत्राश्चर्यं। ये पुनरादित एव पापानुष्ठानामक्तजनसम्पर्कं रहयन्ति तेषां नैष दोषोऽनुषज्यते। अत्रार्थेऽयमेव मनीषी दृष्टान्तः योऽयं महात्मा परिहृतपापप्रवणबालवात्सल्यो निष्कलङ्कं सुखेन जीवतीति। ततस्तं लोकवादमाकर्णयता मयेदं लक्षितमिति। मध्यमबुद्धिना चिन्तितं। अये।

दोषेषु वर्तमानस्य नरस्यात्रैव जन्मनि।
नास्त्येव सुखगन्धोऽपि केवलं दुःखपद्धतिः॥
स हि दुःखभराक्रान्तस्तावता नैव मुच्यते।
आक्रोशदानतस्तस्य लोकोऽन्यद्वैरिकायते॥
एकं स दुःखैर्निर्दग्धो द्वितीयं निन्दितो जनैः।
गण्डस्योपरि सञ्जातः स्फोटो बालस्य दुर्मतेः॥
जनानां करुणास्थानं जातोऽहं बालमीलकात्।
कलितस्तादृशः प्रायः कैश्चित्तत्त्वविचारकैः॥
दुःखाकरः सतां निन्द्यो ममेदानीं विजानतः।
तस्मान्न युक्तः संसर्गो बालेन सह पापिना॥
गुणेषु वर्तमानस्य नरस्यात्रैव जन्मनि।
जायन्ते सम्पदः सर्वा यथास्यैव मनीषिणः॥

तथाहि।

अकलङ्कः सुखी नित्यं श्लाघनीयो विपश्चिताम्।
बालस्पर्शनसंसर्गभीरुत्वादेष वर्तते॥
तथापि लोका दोषेषु सततं विहितादराः।

कथितो मध्यमबुद्धिना समस्तोऽप्युद्यानगमनादिविद्याधरविकर्तनपर्यन्तो बालव्यतिकरः। ततः पूर्वमेव ज्ञातनिःशेषव्यतिकरेणापि मुग्धेनेव विस्मितेचणेन समस्तमाकर्ण्य मनीषिणाभिहितं। किमीदृक् संपन्नं बालस्य। हा न युक्तमिदं। यदि वा कथितं मया प्रागेवास्य यथा न सुन्दरोऽनेन स्पर्शनेन पापमित्रेण सार्धं सम्बन्धः। तज्जनितेयमस्यानर्थपरम्परा। तथाहि। हेतुरसावनार्यकार्यसङ्कल्पस्य। अनार्यकार्यसङ्कल्पे च प्रवर्तमानाः प्राणिनः संक्लिष्टतया चित्तस्य प्रबलतया पापोदयस्याप्राप्ताभिप्रेतार्था एव बडिशग्रहणप्रवृत्ता इव मत्स्यका निपतन्त्यापद्गहने लभन्ते मरणं। न खल्वनुपायतोऽर्थसिद्धिः। अनुपायश्चानार्यकार्यसङ्कल्पः सुखलाभानां। स हि क्रियमाणो धैर्यं ध्वंसयति विवेकं नाशयति चित्तं मलिनयति चिरन्तनपापान्युदीरयति ततः प्राणिनं समस्तानर्थसार्थे योजयति। तत् कुतोऽनार्यकार्यसङ्कल्पात् सुखलाभगन्धोऽपीति। तस्मादिदं सर्वं स्वदुश्चरितविलसितं बालस्य योऽयं मद्वचनं न विधत्ते। किमत्र भवतः परिदेवितेनेति॥ बालः प्राह। मनीषिन् अलमनेनासम्बद्धप्रलापेन। न खलु सत्पुरुषाणां महार्थसाधनप्रवृत्तानामपान्तराले व्यसनं मनो दुःखयति। यद्यापि तां कमलकोमलललिततनुं मदनकन्दलीं प्राप्नोमि ततः कियदेतद्दुःखं। तदाकर्ण्य कालदष्टवदसाध्योऽयं सदुपदेशमन्त्रतन्त्राणामित्याकलय्य मनीषिणा गृहीतो दक्षिणाग्रभुजे मध्यमबुद्धिः उत्थाप्य ततः स्थानात् प्रवेशितः कचान्तरे। अभिहितश्चासौ।

भ्रातर्यद्येष बालः सत्यं बाल इव नात्महितं जानीते तत्किं भवतास्य पृष्ठतो विलग्नेन विनष्टव्यं। मध्यमबुद्धिराह। बोधितो ऽहमिदानीं भवता। योऽयं भवदुपदेशमपि लङ्घयति तेनालं मम बालेनेति। अन्यच्च। अतिलज्जनीयो ऽयं व्यतिकरः। तत्किमेष न ज्ञातस्तातेन। मनीषिणाभिहितं। न केवलेन किं तर्हि समस्तनगरोपेतेन। भद्र केन हि प्रभातं पटकेनाच्छाद्यते। मध्यमबुद्धिराह। कथं ज्ञातः। मनीषिणाभिहितं। कामदेवभवनवृत्तान्तस्तावद्बहुलोकप्रतीत एव किं तस्य ज्ञास्यते। विद्याधरहरणवृत्तान्तस्तु ये प्राप्ताः प्राप्त इति त्वदीयहाहारवात् प्रबुद्धास्तदा लोकास्तैर्विज्ञाय नगरे प्रचारितः। मध्यमबुद्धिना चिन्तितं। अये किलाहं मातुः पुत्रोऽमुं व्यतिकरं गोपयामि। यावता गाढतरं प्रकाशः संपन्नः। सुप्रच्छन्नमपि विहितं प्रयोजनं प्रायः प्रकाशत एव लोके विशेषतः पापं। तस्माद्दुर्बुद्धिरेषा प्राणिनां यया स्वाचरितं पापं प्रच्छादयन्ति। इयं हि केवलमधिकतरं मोहविलसितं सूचयतीति। एवं विचिन्त्य ततस्तेनाभिहितं। मनीषिन्नमुं वृत्तान्तमुपलभ्य भवता किमाचरितं किं तातेन किमम्बाभ्यां किं वा नगरलोकेनेति श्रोतुमिच्छामि। मनीषिणाभिहितं। भ्रातः समाकर्णय। मम तावदुपेक्षा निर्गुणेषु सतामिति भावनया संजातं बालं प्रति माध्यस्थ्यं। तथा क्लिश्यमानेषु दयावन्तः सन्त इति पर्यालोचनया प्रादुर्भूता तवोपरि महती करुणा। तथा मुक्तोऽहं पापमित्राभिष्वङ्गजनितानामेवंविधानामपायानामित्याकलनया संजातात्मन्यास्थाबुद्धिः।

गुणेषु शिथिलोत्साहा वर्तन्ते पापकर्मणा ॥
तदेवं गुणदोषाणां विशेषं पश्यता मया।
गुणेषु यत्नः कर्तव्यो य आदिष्टो मनीषिणा ॥
ततश्चैवं विचिन्त्यासौ भाषते तं मनीषिणम्।
न शक्यमधुना लोके प्रकाशमटितुं मया ॥
लोका मां प्रश्नयिष्यन्ति बालवृत्तान्तमञ्जसा।
अतिलज्जाकरं तं च नाहमाख्यातुमुत्सहे ॥
अन्यच्च दुर्जना लोकाः श्रुत्वा मत्तः कदर्थनाम्।
तदीयां नितरां तुष्टा हसिष्यन्ति विशेषतः ॥
तस्माद्भ्रातर्ममात्रैव स्थातुं सद्मनि युज्यते।
जनस्य विस्मरत्येतद्यावद्बालविचेष्टितम् ॥
मनीषिणोक्तं यत्तुभ्यं रोचते तद्विधीयताम्।
केवलं पापमित्रीयः सम्पर्को वार्यते मया ॥

ततः क्वचिदपि बहिरनिर्गच्छंस्तत्रैव सदने स्थितो मध्यमबुद्धिः। गतो मनीषी स्वस्थानं ॥

इतश्च बालशरीरादाविर्भूतः स्पर्शनोऽकुशलमाला च। अकुशलमालयाभिहितं। साधु पुत्रक साधु। यन्मत्तो जातो ऽनुतिष्ठति तदनुष्ठितं भवता। यतो निराकृतस्त्वयायमलीकवाचालो मनीषी। स्पर्शनेनाभिहितं। अस्य युक्तमेवेदृशमीदृशपुरुषाणामनुष्ठानं। दर्शितः खल्वेवमाचरता प्रियमित्रेण मयि निर्भरोऽनुरागः। अथवा किमनेन। निर्वर्टितेदानीं चयाणामप्यस्माकं भावसारं समसुखदुःखता। ये तु हृदयर्थसाधनप्रवृत्ता-

नामपान्तराले विघ्ना भवन्ति तान् को गणयति । बालः प्राह । वयमप्येतदेव ब्रूमः । केवलमेतन्न मनीषी न जानाति । स्पर्शनेनाभिहितं । किं तव तेन । सुखविघ्नहेतुरसौ पापकर्मा भवतः । अयं जनोऽस्या च केवलं ते सुखकारणं । बालः प्राह । कोऽत्र विकल्पो निःसन्दिग्धमिदं । ततः कृतस्ताभ्यां योगशक्तिव्यापारपूर्वको भूयस्तदीयशरीरे प्रवेशः । प्रादुर्भूतं मदनकन्दलीगोचरं भृशतरमौत्सुक्यं । प्रवृद्धोऽन्तस्तापः । प्रवृत्ता जृम्भिकाः । पतितः शयनीये । तत्र चानवरतमुद्वर्तमानेनाङ्गेन तथा विचेष्टमानोऽसौ दृष्टो मध्यमबुद्धिना । समुत्पन्ना करुणा । तथापि मनीषिवचनमनुस्मरता न पृष्टो वार्त्तामपि बालस्तेन ॥

अत्रान्तरेऽस्तं गतो दिनकरः । ततः प्रथमप्रदोष एव निर्गतो बालः । अवधीरितो मध्यमबुद्धिना । प्राप्तः शत्रुमर्दनराजकुलं । प्रविष्टोऽभ्यन्तरे । दृष्टं वासभवनं । चलितस्तदभिमुखं । ततः प्रचुरतया लोकस्य सान्धकारतया प्रदोषस्य व्यग्रतयाष्टप्राहरिकाणां कथंचिदलक्षित एवासौ प्रविष्टो वासभवनं । विलोकितस्तन्मध्यभागः प्रकाशितो मणिप्रदीपैः सनाथो महार्हशयनेन । इतश्च तस्मिन्नवसरे सा मदनकन्दली तस्यैव वासभवनस्यादूरवर्तिन्यां प्रसाधनशालिकायामात्मानं चर्चयन्ती तिष्ठति । ततस्तच्छून्यमवलोक्य स बालो बालतयैवारूढः शय्यायां । अः कोमलेति भावनया समुद्भूतो हर्षः । चिप्तमुपरिशीर्षके प्रावरणं । किल तिरस्थीनो भविष्यति । यावदभिहिताशेषप्रदोषकर्तव्यो विसर्जितास्थानलोकः कतिचिदाप्तपुरुषपरिकरो ज्वलत्प्रदीपदर्शितमार्गः

समागतः शत्रुमर्दनस्तद्द्वारदेशे। दृष्टः प्रविशन् बालेन। ततोऽतितेजस्वितया शत्रुमर्दनस्य सत्त्वविकलतया हृदयस्य साध्वसहेतुत्वादकार्याचरणस्य प्रतिकूलतया कर्मविलासस्य स्वफलदानोन्मुखतयाकुशलमालायाः स्वविपाकदर्शितया स्पर्शनस्य भयोत्कर्षेण वेपमानगात्रयष्टिर्निपतितो बालो भूतले। ततोऽत्युच्चतया पर्यङ्कस्य कणकणकतया मणिकुट्टिमस्य शिथिलनिसृष्टतया शरीरस्य समुत्थितो महानास्फोटरवः। ततः किमेतदिति त्वरिततरं प्रविष्टो राजा। दृष्टस्तेन बालः। कथमयमिह प्रविष्ट इति समुत्पन्नो मनसि वितर्कः। दृष्टमुच्छीर्षके प्रावरणं। लचितं शय्यारोहणं। दुष्टोऽयमिति संजातो निश्चयः। मत्कलत्राभिलाषुको ऽयमिति च समुत्पन्नः क्रोधः। विज्ञातं तस्य दैन्यं। तथाप्यतिदुरात्मा खल्वयमपनयाम्यस्य दुर्विनयमिति बुद्धा दत्तो बालपृष्ठे निजचरणो राज्ञा आमोटितं पश्चान्मुखं भुजयुगलं। बद्धो विरारटमानस्तत्प्रावरणेनैव। आहूतो विभीषणः। अभिहितश्चासौ। अरे एष पुरुषाधमो भवतात्रैव राजाजिरे यथाहमाकर्णयाम्यस्य करुणध्वनिं तथा समस्तरजनीं कदर्थनीयः। विभीषणेनाभिहितं। यदाज्ञापयति देवः। ततः समाकृष्टस्तेन केशेषु रटहोत्कारटमानो बालो नीतोऽभ्यर्णराजप्राङ्गणे। बद्धो वज्रकण्टकाकुले लोहस्तम्भे त्रोटितः कशाघातैः सिक्तोऽग्निवर्णतप्ततैलबिन्दुभिः। प्रवेशिता अङ्गुल्यादिष्वयःशलाकाः। ततश्चैवंविधेषु नरकाकारेषु दुःखेषु विभीषणेनोदीर्यमानेषु क्रन्दतो बालस्य लङ्घिता रजनी। तदाक्रन्दरवेण श्रवणपरम्परया च किमेतदिति कुतूहलेन प्रभाते समागतं

राजकुले नगरं। दृष्टो बालः। स एवायं पापिष्ठोऽद्यापि जीवती-त्यादिः प्रवृत्तः परस्परं नागराणां बहुविधस्तदाक्रोशजल्पः। तमाकर्णयतः शतगुणीभूतं तत्तस्य दुःखं। कथितो नागरिकेभ्यो विभीषणेन रात्रिव्यतिकरः। ततोऽहो धृष्टतास्येति गाढतरं प्रदिष्टाः सर्वे। विज्ञापितो महत्तमै राजा। यदुत यो देवपादानामेवायमपथ्यकारी स तथा क्रियतां यथान्योऽप्येवं न करोतीति। अस्ति च तस्य राज्ञो भगवद्दर्हदागमभावदातबुद्धिः सुबुद्धिर्नामामात्यः। केवलं तेन क्वचिदवसरे वरं प्रार्थितो राजा। यदुत हिंसककर्मणि नाहं पर्यालोचनीयो भवता। प्रतिपन्नस्य स वरो नरपतिना। ततः सुबुद्धिमपर्यालोच्यैव दत्तः शत्रुमर्दनेन राजपुरुषाणां नियमः। यदुत कदर्थयित्वा बहुप्रकारमेनं नरापसदं व्यापादयतेति। तदाकर्ण्य महाराज्यलाभ इव जातो जनानां प्रमोदातिशयः। ततः समारोपितो रासभे विडम्ब्यमानः शरावमालया समन्ताच्चूर्ण्यमानो यष्टिमुष्टिमहालोष्टप्रहारै रोरूयमाणो विरसध्वनिना तुद्यमानो मनसि कर्णकटुकैराक्रोशवचनैर्महता कलकलेन समस्तेषु त्रिकचतुष्कचत्वरहट्टमार्गादिषु संभ्राम्यमाणो विगोपितो बालः। ततो विशालतया नगरस्य प्रेक्षणकप्रायत्वात्तस्य भ्रमणेनैवातिक्रान्तं दिनं। सन्ध्यायां नीतो वध्यस्थानं। उल्लम्बितस्तरुशाखायां। प्रविष्टो नगरं लोकः। भवितव्यताविशेषेण तस्य त्रुटितः पाशकः। पतितो भूतले। गतो मूर्छां। स्थितो मृतरूपतया। कृतो वायुना। लब्धा चेतना। प्रवृत्तो गन्तुं गृहाभिमुखं भूमिकर्षणेन कूजमानः॥

दिवसकरो मोहान्धकारस्य निकषोपलः शास्त्ररत्नानां दावानलो रागपल्लवदहने अर्गलाबन्धो नरकद्वाराणां देशकः सत्पथानां निधिः सातिशयज्ञानमणीनामायतनं समस्तगुणानां समवसृतस्तत्र पुरे प्रबोधनरतिर्नामाचार्यः ॥

इतश्च स्पर्शनं प्रति प्रतिकूलचारिणमुपलभ्य मनीषिणं प्रादुर्भूत्कर्मविलासस्य तस्योपरि खरतरः पक्षपातः । ततोऽसौ शुभसुन्दरीं प्रत्याह । प्रिये लक्षयत्येव तावदिदं भवती यथानादिरूढा प्रकृतिरियं मम वर्तते । यदुत योऽस्य स्पर्शनस्यानुकूलस्तस्य मया प्रतिकूलेन भाव्यं प्रतिकूलस्य पुनरनुकूलतया वर्तितव्यं मम च प्रतिकूलमाचरतः सर्वथाकुशलमालोपकरणं अनुकूलं विदधतः पुनर्भवती ममोपकरणं वर्तते । तदेवं स्थिते स्पर्शनानुकूलचारिणो बालस्य दर्शितो मयाकुशलमालाव्यापारणद्वारेण कश्चिदात्मनः प्रतिकूलताफललेशः । अस्य तु मनीषिणः स्पर्शनप्रतिकूलवर्तिनो न मयाद्यापि निजानुकूलताफलविशेषो दर्शितः । यद्यपि यदिदमस्य स्पर्शने निरभिष्वङ्गतया मृदुशयनसुरतादीन्यनुभवतः संपद्यते सुखं यच्चायं ससुल्लसितो लोकमध्ये यशःपटहो न च संपन्नः कश्चिदपायगन्धोऽपि विचरतः अस्य समस्तस्य व्यतिकरस्याहमेव भवत्योपकरणभूतया कारणं तथापि मयि सप्रसादे नैतावन्मात्रमेवास्य फलमुचितं । अतिप्रिये विशिष्टतरफलसम्पादनार्थमस्य मनीषिणः प्रयत्नं कुरुष्वेति । शुभसुन्दर्युवाच । साध्वार्यपुत्र साधु सुन्दरमभिहितं देवेन । स्थितं ममापीदं हृदये योग्य एव मनीषी देवप्रसादानां । तदेषानुतिष्ठामि यदाज्ञापितं देवेन

इत्यभिधाय व्यापारिता शुभसुन्दर्या योगशक्तिः। विहितमन्तर्धानं। प्रविष्टा गत्वा मनीषिशरीरे। प्रादुर्भूतोऽस्य प्रमोदः। सिक्तममृतसेकेनेव शरीरं। प्रवृत्ता निजविलसितोद्यानगमनेच्छा। प्रस्थितस्तदभिमुखं। चिन्तितमनेन। कथमेकाकी गच्छामि। बहुस्य कालो गृहप्रविष्टस्य तिष्ठतो मध्यमबुद्धेरतीतः। विस्मृतोऽधुना लोकस्य बालवृत्तान्तः। व्यपगतं तस्य लज्जाकारणं। अतस्तमपि निजविलसिते नयामि। इति विचिन्त्य गतो मनीषी मध्यमबुद्धिसमीपं। निवेदितं तस्मै निजाकूतम्॥ इतश्च कर्मविलासेन तस्यापि जननी सामान्यरूपा तत्फलविपाकसम्पत्तये तथैव प्रोत्साहिता। सा ह्यकुशलमालाशुभसुन्दर्योः साधारणवीर्या विचित्रफलदायिनी स्वरूपतो वर्तते। ततस्तयाधिष्ठितमूर्तेर्मध्यमबुद्धेरपि प्रवृत्ता तत्र गमनेच्छा। बालस्तु भवताप्यवश्यं गन्तव्यमिति वदता बलामोटिकया प्रवर्तितो मध्यमबुद्धिना। गतास्त्रयोऽपि निजविलसितोद्याने।

अथ नानाविधैस्तत्र विलसन्तः कुतूहलैः।
प्रमोदशेखरं नाम प्राप्तास्ते जिनमन्दिरम्॥
तच्च मेरुवदुत्तुङ्गं विशालं साधुचित्तवत्।
देवलोकाधिकं मन्ये सौन्दर्यौदार्ययोगतः॥
युगादिनाथबिम्बेन श्रीमता तदधिष्ठितम्।
समन्तादुरगोत्तुङ्गप्राकारपरिवेष्टितम्॥
पुरतो लोकनाथस्य स्तोत्राणि पठतो मुदा।
तत्र श्रावकलोकस्य ध्वनिमाकर्ण्य पेशलम्॥

अत्रान्तरे ऽगृहीतसङ्केतयोक्तं । हे संसारिजीव तत्र चित्तिप्रतिष्ठितपुरे प्रथमं भवता वीर्यनिधानभूतः कर्मविलासो नाम राजा निवेदितः । अधुना दशापराधप्रभविष्णुरेष शत्रुमर्दनो निवेद्यते । तत्कथमेतदिति । संसारिजीवेनाभिहितं । मुग्धे मयापि नन्दिवर्धनेन सता पृष्ट एवेदं विदुरः । ततो विदुरेणाभिहितं । कुमार कर्मविलासस्त्वान्तरङ्गो राजा शत्रुमर्दनस्तु बहिरङ्गः । तेन नास्ति विरोधः । यतो बहिरङ्गाणामेव राज्ञां दशापराधप्रभविष्णुता भवति बहिरङ्गनगरेषु नेतरेषां । ते हि केवलं सुन्दरासुन्दरप्रयोजनानि जनानां प्रच्छन्नरूपा एव सन्तः स्ववीर्येण निर्वर्तयन्ति । तथाहि । कर्मविलासप्रतिकूलताजनितोऽयं बालस्य परमार्थतः सर्वोऽप्यनर्थः संपन्न इति । ततो मयाभिहितं । अपगतोऽधुना मे सन्देहः । अग्रतः कथय । विदुरेणाभिहितं ॥

ततः क्रमेणातिक्रान्ते याममात्रे रजन्याः प्राप्तः स्वसदनं बालः । इतश्चाकर्णितः प्रभात एव तदीयवृत्तान्तो मध्यमबुद्धिना । ततो बालस्नेहलेशस्यानुवर्तमानतया संजातो मनाग् विषादः । चिन्तितमनेन । हा किमीदृशं संपन्नं बालस्येति । पुनः पर्यालोचयतः प्रादुर्भूतोऽस्य मनसि प्रमोदः । चिन्तितमनेन । पश्यताहो मनीषिवचनकरणाकरणयोरिह लोक एवान्तरं । तथाहि । तदुपदेशवर्तिनो मेऽधुना न संपन्नः क्लेशः नोदीर्णमयशः । पूर्वं पुनर्विपरीतचारिणो द्वयमप्यासीत् । बालस्य पुनरेकान्ततो मनीषिवचनविपरीताचरणनिरतस्य यत्संपद्यन्ते दुःखसङ्घाता विजृम्भते जगत्ययशःपटहः संजायते मरणं तत्र किमाश्चर्यं । तदस्ति

ममापि काचिद्धन्यता यया मनीषिवचने बहुमानः संपन्न इति ।
तथाहि ।

नैवाभव्यो भवत्यत्र सतां वचनकारकः ।
पङ्क्तिः कांकटुके नैव जाता यत्नशतैरपि ॥
एवं भावयतश्चित्ते बालस्नेहं विमुञ्चतः ।
प्रमोदपूर्णचित्तस्य लङ्घितं तस्य तद्दिनम् ॥
ततः समागते बाले लोकाचारानुवर्तनम् ।
कुर्वता विहितं तेन तस्य सम्भाषणं किल ॥
पृष्टश्चाशेषवृत्तान्तं विषादगतबुद्धिना ।
तेनापि कथिता तस्मै बालेनात्मविडम्बना ॥
न शिक्षणस्य योग्योऽयं मत्वा मध्यमबुद्धिना ।
ततस्तदनुरोधेन कृतेषत्परिदेवना ॥
ततश्चूर्णितसर्वाङ्गो दुःखविक्लवमानसः ।
तथा राजभयादुग्राद् बालस्तत्रैव संश्रितः ॥
प्रच्छन्नरूपः सततं न निर्गच्छति कुत्रचित् ।
एवं च तिष्ठतोः कालस्तयोर्भूयान् विलङ्घितः ॥

अथान्यदा निजविलसिताभिधाने जीर्णोद्याने गन्धहस्तीव वरकलभवृन्देन परिकरितः सातिशयगुणवता निजशिष्यवर्गेण प्रवाहः करुणारसस्य संतरणसेतुः संसारसिन्धोः परशुस्तृष्णालतागहनस्य अभिनिर्मानपर्वतोद्दलने मूलमुपशमतरोः सागरः सन्तोषामृतस्य तीर्थं सर्वविद्यावताराणां कुलभवनमाचाराणां नाभिः प्रज्ञाचक्रस्य वडवानलो लोभार्णवस्य महामन्त्रः क्रोधभुजङ्गस्य

किमेतदिति संचिन्त्य कौतुकाक्षिप्तमानसाः ।
प्रविष्टा जिनसदने ते चयोऽपि कुमारकाः ॥
अथ दक्षिणमूर्तिस्थो देवाजिरविभूषणः ।
विनीतसाधुलोकस्य मध्यवर्ती तपोधनः ॥
जिनेन्द्रगदितं धर्ममकलङ्कं सनातनम् ।
संसारसागरोत्तारमाचचाणः सुदेहिनाम् ॥
प्रविशद्भिर्महाभागश्चन्द्रवत्तारकैर्वृतः ।
प्रबोधनरतिर्धीरः स सूरिस्तैर्विलोकितः ॥
भाविभद्रतया जैनं बिम्बं नत्वा मनीषिणा ।
सूरेः शेषमुनीनां च विहितं पादवन्दनम् ॥
ततस्तदनुरोधेन मनाक् संप्रबुद्धबुद्धिना ।
देवसाधुनमस्कारः कृतो मध्यमबुद्धिना ॥
पापमाद्रवयस्याभ्यामधिष्ठितशरीरकः ।
बालोऽकल्याणभाङ् नैव कस्यचित्प्रणतिं गतः ॥
किं तु ग्रामेयकाकारं बिभ्राणः स्तब्धमानसः ।
मनीषिमध्यमासन्ने सोऽपि गत्वा व्यवस्थितः ॥
अथ संभाषितास्तेऽपि धर्मलाभपुरःसरम् ।
गुरुणा कलवाक्येन निषण्णास्तच भूतले ॥
इतश्च सूरिवृत्तान्तः कथंचिल्लोकवार्तया ।
मन्त्रिणा जिनभक्तेन श्रुतस्तेन सुबुद्धिना ॥
ततः प्रोत्साहितस्तेन स राजा शत्रुमर्दनः ।
वन्दनार्थं मुनीन्द्रस्य प्रजाम इति भाषिणा ॥

विधूतपापमात्मानं वन्दनेन महात्मनाम्।
साधूनां येऽत्र कुर्वन्ति ते धन्यास्ते मनीषिणः॥
ततो मदनकन्दल्या सार्धमन्तःपुरैस्तथा।
सुबुद्धिवचनाद्राजा निर्गतो मुनिवन्दकः॥
ततः सर्वं पुरं तत्र नृपे चलति विस्मितम्।
सैन्यं च गतमुद्याने कौतुकाकृष्टमानसम्॥
निपत्य पादयोस्तत्र जिनस्य सबलो नृपः।
प्रबोधनरतिं भक्त्या ववन्दे हृष्टमानसः॥
प्रणम्याशेषसाधूंश्च दत्ताशीर्गुरुसाधुभिः।
निषण्णो भूतले राजा विनयानम्रमस्तकः॥
सुबुद्धिरपि जैनेन्द्रपादपद्मकृतानतिः।
निरूपयति सर्वाणि देवकर्माणि यत्नतः॥
देवपूजनसद्धूपदीपदानादिपूर्वकम्।
भक्त्योत्कण्ठितसर्वाङ्गो भून्यस्तकरजानुकः॥
दुर्लभं भवकान्तारे जन्तुभिर्जिनवन्दनम्।
इति भावनया धन्यो निर्मलीभूतमानसः॥
आनन्दजलपूर्णाक्षः क्षालयन्नात्मकल्मषम्।
तथा भागवते बिम्बे न्यस्तदृष्टिर्विचक्षणः॥
शक्रस्तवं शनैर्धीरः पठित्वा भक्तिनिर्भरः।
पञ्चाङ्गप्रणिपातान्ते निषणः शुद्धभूतले॥
परस्परनिरोभूतकरशाखाविनिर्मिताम्।
कोशाकारकरः कृत्वा योगमुद्रां समाहितः॥

ततो भुवननाथस्य स्तोचाणि कलया गिरा।
स तदानीं पठत्येवं तदर्थार्पितमानसः॥

नमस्ते जगदानन्द मोक्षमार्गविधायक।
जिनेन्द्र विदिताशेषभाव सद्भावनायक॥
प्रलीनाशेषसंसारविस्तार परमेश्वर।
नमस्ते वाक्पथातीत त्रिलोकनरशेखर॥
भवाब्धिपतितानन्तसत्त्वसन्तानतारक।
घोरसंसारकान्तारसार्थवाह नमोऽस्तु ते॥
अनन्तपरमानन्दपूर्णधाम व्यवस्थितम्।
भवन्तं भक्तितः साक्षात्पश्यतीह जनो जिन॥
स्तुवतस्तावकं बिम्बमन्यथा कथमीदृशः।
प्रमोदातिशयश्चित्ते जायते भुवनातिगः॥
पापाणुजनितस्तावत्तापः संसारिचेतसाम्।
यावत्तेषां सदानन्द न मध्ये नाथ वर्तसे॥
येषां पुनर्विवर्तेथा नाथ चित्तेषु देहिनाम्।
पापाणवः क्षणात्तेषां ध्वंसमायान्ति सर्वथा॥
ततस्ते द्राविताशेषपापपङ्कतया जनाः।
सद्भावामृतसंसिक्ता मोदन्ते नाथ सर्वदा॥
ते वराका न मुच्यन्तां रागादिचरटैः कथम्।
येषां नाथ भवान्नास्ति तन्निषाणाख्यकारकः॥
भवन्तमुररीकृत्य नाथ निःशङ्कमानसाः।
शिवं यान्ति सदादीनां विधाय गलपादिकाम्॥

न्यपतिष्यदिदं नाथ जगन्नरककूपके ।
अहिंसाहस्तदानेन यदि त्वं नाधरिष्यथाः ॥
विलीनमकलक्लेशं निर्विकारं मनोहरम् ।
शरीरं पश्यतां नाथ तावकीनमदो वरम् ॥
अनन्तवीर्यः सर्वज्ञो वीतरागस्त्वमञ्जसा ।
न भासि यदभव्यानां तत्तेषां पापजृम्भितम् ॥
रागद्वेषमहामोहसूचकैर्वीतकल्मष ।
हास्यहेतिविलासाद्यमालाद्यैर्हीन ते नमः ॥
अनन्तगुणसंपूर्ण कियदत्र वदिष्यति ।
तावकस्तवने नाथ जडबुद्धिरयं जनः ॥
तथापि गाढसद्भावबद्धोऽत्यर्थमयं जनः ।
सद्भावोऽथवा नाथ भवतैवावबुध्यते ॥
तदस्य करुणां कृत्वा विधातव्या भवे भवे ।
भवोच्छेदकरी नाथ भक्तिरात्मनि निश्चला ॥

संस्तुत्यैवं जगन्नाथमुत्थाय जिनमुद्रया ।
विधाय वन्दनं भूयः पञ्चाङ्गनमनादिकम् ॥
तदन्ते प्रणिधानं च मुक्ताशुक्त्यादिसुन्दरम् ।
कृत्वा कृतार्थमात्मानं मन्यमानः सुकर्मणा ॥
सूरेः पादयुगं सिद्धसानन्दोदकबिन्दुभिः ।
वन्दनं द्वादशावर्तं स ददौ दोषसूदनम् ॥
कृतसामायिकोऽशेषसाधूनानम्य भक्तितः ।
अवाप्तधर्मलाभोऽसौ निषण्णः शुद्धभूतले ॥

दृष्टस्सूरितनूदन्ते सुबुद्धौ तत्र मन्त्रिणि ।
अथाचार्या विशेषेण चक्रिरे धर्मदेशनाम् ॥
कथितं भवनैर्गुण्यं वर्णिताः कर्महेतवः ।
प्रख्यापितं च निर्वाणं दर्शितं तस्य कारणम् ॥
ततस्तामृतसंसेकचारुणा वचसा मुनेः ।
जातास्ते जन्तवः सर्वे चित्तसन्तापवर्जिताः ॥

अत्रान्तरे

नखांशुविशदं कृत्वा ललाटे करकुड्मलम् ।
जगाद भारतीमेवं स राजा शत्रुमर्दनः ॥
भगवन्नत्र संसारे नरेण सुखकामिना ।
किमादेयं प्रयत्नेन सर्वसम्पत्तिकारणम् ॥

सूरिरुवाच ।

आदेयोऽत्र महाराज धर्मः सर्वज्ञभाषितः ।
स एव भगवान् सर्वपुरुषार्थप्रसाधकः ॥
सोऽनन्तसुखसंपूर्णे मोक्षे नयति देहिनम् ।
अनुषङ्गेण संसारे स हेतुः सुखपद्धतेः ॥

नरपतिरुवाच । यद्येवं

कस्मात्सर्वे न कुर्वन्ति तं सर्वसुखसाधनम् ।
धर्मं संसारिणः किं वा क्लिश्यन्ते सुखकाम्यया ।

सूरिराह ।

सुखाभिलाषः सुकरो दुष्करोऽसौ नृपोत्तम ।
यतो जितेन्द्रियग्रामस्तं साधयति मानवः ॥

अनादिभवकान्तारे प्राप्तानि परमं बलम् ।
दुर्मेधोभिर्न शक्यन्ते जेतुं तानीन्द्रियाणि वै ॥
तेनैव जन्तवो मूढाः सुखमिच्छन्ति केवलम् ।
धर्मं पुनः सुदूरेण त्यजन्ति सुखकारणम् ॥

नरपतिरुवाच ।

येषां जयमशक्तिष्ठाः कर्तुं नो पारयन्त्यमी ।
धर्मतः प्रपलायन्ते ततो जीवाः सुखैषिणः ॥
कानि तानीन्द्रियाणीह किंस्वरूपाणि वा मुने ।
कथं वा दुर्जयानीति श्रोतुमिच्छामि तत्त्वतः ॥

मुनिरुवाच ।

स्पर्शनं रसना घ्राणं चक्षुः श्रोत्रं च पञ्चमम् ।
एतानि तानि राजेन्द्र हृषीकाणि प्रचक्षते ॥
दुष्टैः स्पर्शादिभिस्तोषो द्वेषस्त्विष्टैरितरैः ।
एतत्स्वरूपमेतेषामिन्द्रियाणां नृपोत्तम ॥
दुर्जयानि यथा तानि कथ्यमानं तथाधुना ।
दत्तावधानस्त्वं सर्वमनुश्रुत्यावधारय ॥
अनेकभटसंकीर्णे समरे योधयन्ति ये ।
मत्तमातङ्गसङ्घातमेतैस्तेऽपि विनिर्जिताः ॥
अङ्गुल्यग्रे निधायेदं भुवनं नाटयन्ति ये ।
शक्रादयोऽपि शक्तिष्ठास्तेऽप्यमीभिर्वशीकृताः ॥
हिरण्यगर्भवैकुण्ठमहेश्वरपुरःसराः ।
एतैर्निराकृताः सन्तः सर्वे किङ्करतां गताः ॥

अधीत्य सर्वशास्त्राणि परमार्थविदो जनाः।
एभिर्विधुरिताः सन्तस्तिष्ठन्ते बालिशा इव॥
एतानि हि स्ववीर्येण ससुरासुरमानुषम्।
वराकमिव मन्यन्ते सकलं भुवनत्रयम्॥
दुर्जयानि ततोऽमूनि हृषीकाणि नराधिप।
एवं सामान्यतः कृत्वा हृषीकगुणवर्णनम्॥

ततश्च

ज्ञानेनालोक्य वृत्तान्तं बोधनार्थं मनीषिणः।
सूरिर्बभाषे सद्दन्तदीधितिच्छुरिताधरः॥

अथवा महाराज

तिष्ठन्तु तावच्छेषाणि हृषीकाणि जगज्जये।
स्पर्शनेन्द्रियमेवैकं समर्थं बत वर्तते॥
यतो न शक्यते लोकैर्जेतुमेकैकमप्यदः।
लीलया जयतीदं तु भुवनं सचराचरम्॥

नरपतिरुवाच।

भगवंस्तस्य जेतारो नराः किं सन्ति कुत्रचित्।
आहोस्विन्नैव विद्यन्ते भुवनेऽपि तथाविधाः॥

मुनिरुवाच।

राजन्सन्ति हि न विद्यन्ते केवलं विरला जनाः।
ये स्यास्य विनिहन्तारस्तत्राकर्णय कारणम्॥
जघन्यमध्यमोत्कृष्टास्तथोत्कृष्टतमा गुणैः।
चतुर्विधा भवन्तीह पुरुषा भुवनोदरे॥

तथोत्कृष्टतमास्तावदेभिरिदं स्पर्शनेन्द्रियम् ।
अनादिभवसम्बन्धलालितं पालितं प्रियम् ॥
जैनेन्द्रागमसम्पर्कादिज्ञाय बहुदोषकम् ।
ततः सन्तोषमादाय महासत्त्वैर्निराकृतम् ॥
गृहस्था अपि ते सन्तो ज्ञाततत्त्वा जिनागमे ।
स्पर्शनेन्द्रियलौल्येन नाचरन्ति कुचेष्टितम् ॥
यदा पुनर्विशेषेण तिष्ठन्त्येते जिनागमे ।
स्पर्शनेन्द्रियसम्बन्धं चोटयन्ति तदाखिलम् ॥
यतो दीक्षां समादाय निर्मलीमसमानसाः ।
सन्तोषभावतो धन्या जायन्तेऽत्यन्तनिःस्पृहाः ॥
ततस्ते भवकान्तारनिर्विण्णा वीतकल्मषाः ।
स्पर्शनप्रतिकूलानि सेवन्ते धीरमानसाः ॥
भूमीशयनलोचादिकायक्लेशविधानतः ।
ततः सुखस्पृहां हित्वा जायन्ते ते निराकुलाः ॥
ततः सकलकर्मांशक्लेशविच्छेदभाजनम् ।
भूत्वा ते निर्वृतिं यान्ति निर्जित्य स्पर्शनेन्द्रियम् ।
तेनोत्कृष्टतमा राजन्निर्दिष्टास्ते विचक्षणैः ।
ये चैवमनुतिष्ठन्ति विरलास्ते जगत्त्रये ॥
ततो भागवतं वाक्यमाकर्ण्येदं मनीषिणः ।
अभूच्चेतसि सङ्कल्पस्तदानीं चारुचेतसः ॥
अये भगवता यादृग् वर्णितं स्पर्शनेन्द्रियम् ।
अत्यन्तविषमं लोके स्पर्शनस्तादृशः परम् ॥

यतो बोधप्रभावेण मम पूर्वं निवेदितः।
यथान्तरङ्गनगरे वास्तव्योऽयं महाबलः॥
तन्नूनं पुरुषव्याजसंस्थितं स्पर्शनेन्द्रियम्।
अस्मान् प्रतारयत्येतदन्यथा कथमीदृशम्॥
ततो भगवतादिष्टा ये चोत्कृष्टतमा नराः।
कथितः स्पर्शनेनापि भवजन्तुस्तथाविधः॥
तथाहि मां निराकृत्य सदागमबलेन सः।
सन्तोषान्निर्वृतिं प्राप्त इति तेन निवेदितम्॥
तस्मान्नास्त्यत्र सन्देहः साम्प्रतं पुरुषत्रयं।
श्रुत्वाशेषं विजानामि यदत्र परमाक्षरम्॥
अयं हि भगवान् सूरिर्भुवनं सचराचरम्।
ज्ञानालोकेन जानीते सन्देहदलनः परम्॥
यावत्स चिन्तयत्येवं साकूतो विस्मितेक्षणः।
तावत्तच्चितचित्तेन पृष्टो मध्यमबुद्धिना॥

कथं।

मनीषिन्नितरां चित्ते भावितस्त्वं विलोक्यसे।
किमत्र भवता किंचित्सतत्त्वमवधारितम्॥
मनीषिणोक्तं किं भ्रातर्भवता किं न लक्षितम्।
किमेवं स्फुटवाक्येन कथयत्यपि सन्मुनौ॥
अनेन हि समादिष्टं यादृशं स्पर्शनेन्द्रियम्।
वयस्यस्तावकस्तादृक् स्पर्शनो नात्र संशयः॥
कथमेतत्ततः पृष्टे पुनर्मध्यमबुद्धिना।

आख्यातं कारणं तेन निःशेषं तु मनीषिणा ॥
बालस्तु पापकर्मत्वात्केवलं वीक्षते दिशः।
अनादरपरस्तत्र हितेऽपि वचने गुरोः ॥
अथ राज्ञः समीपस्था पिबन्ती वचनामृतम्।
आचार्योयं विशालाक्षी राज्ञी मदनकन्दली ॥
सा दृष्टा तेन बालेन ततोऽस्य हृदि संस्थितम्।
नूनं मे हृदयस्येष्टा सेयं मदनकन्दली ॥
यतोऽवदातमेतस्यास्तापनीयसमप्रभम्।
शरीरं दर्शनादेव मृदुतां सूचयत्यलम् ॥
रक्तराजीवसच्छायं विभाति चरणद्वयम्।
अलक्षितशिराजालं कूर्मोन्नतमनुत्तमम् ॥
बिभर्ति तोरणाकारं भवने माकरध्वजे।
जङ्घायुग्मं स्वसौन्दर्यादेतस्यास्तेन राजते ॥
मेखलायाः कलापेन बद्धमन्मथवारणम्।
नितम्बबिम्बमेतस्या विशालमस्तायते ॥
भारेणेव कृशीभूतो विराजितवलित्रयः ॥
एतस्या राजते मध्यो रोमराजिविभूषणः ॥
गम्भीरा सज्जनस्येव हृदयं सुमनोहरा।
राजते नाभिरेतस्याः सत्कामरसकूपिका ॥
वहत्येषा घनौ वृत्तौ पीवरौ कुम्भविभ्रमौ।
उत्तुङ्गकठिनौ चारू हृदयेन पयोधरौ ॥
अन्यच्च धारयत्येषा सुकुमारमनोहरम्।

पुण्यप्राग्भारसंप्राप्यं रम्यं बाहुलताद्वयम् ॥
कराभ्यां निर्जितौ मन्ये नूतनौ रागसुन्दरौ ।
एतस्यास्तारुरूपाभ्यां रक्ताशोकस्य पल्लवौ ॥
दधत्यां पारिमाण्डल्यं कन्धरायां सुवेधसा ।
कृतं रेखात्रयं मन्ये त्रिलोकजयसूचकम् ॥
अधरो विद्रुमच्छेदसन्निभो भाति पेशलः ।
राजेते विलसद्दीप्ती कपोलौ कोमलामलौ ॥
ये कुन्दकलिकाकारा विलसत्किरणोत्कराः ।
एतस्या वदने दन्ता नास्ति ते भुवनत्रये ॥
सितासितं सुविस्तीर्णं ताम्रराजिविराजितम् ।
पक्ष्मलं जनितानन्दमेतस्या लोचनद्वयम् ॥
उत्तुङ्गो नासिकावंशो भ्रूलते दीर्घपक्ष्मले ।
अस्या ललाटमलकैः कलितं बत राजते ॥
अनुरूपं करोमीति नूनं जातः प्रजापतेः ।
वहमानो निजे चित्ते श्लाघ्याः श्रवणद्वयम् ॥
मालतीकुसुमामोदमोदितालिकुलाकुलः ।
अस्याः सुस्निग्धकुटिलः केशपाशो विराजते ॥
एतस्या मन्मथोल्लापानाकर्ण्य श्रुतिपेशलान् ।
मन्ये स्वविस्वरत्वेन लज्जिता कलकोकिला ॥
उच्चित्योच्चित्य यत्सारमेतस्या वरपुद्गलैः ।
धात्रा विनिर्मितं रूपमन्यथा कथमीदृशम् ॥
अतोऽस्यामादृशः स्नेहो युक्त एव न संशयः ।

न जालम्तकुण्डेषु कटुत्वमिव तिष्ठते ॥
एषाप्यभिलषत्येव मां यतोऽर्धनिरीक्षितैः।
निरीक्षतेऽतिलोलाक्षी स्निग्धदृष्ट्या मुहुर्मुहुः॥
एवंविधविपर्यासविकल्पाकुलमानसः।
स बालोऽलीकसौभाग्यगर्वितो मूढतां गतः॥

सूरिरुवाच।

तदेवं कथितास्तावत्सर्वोत्कृष्टा मया नराः॥
इदानीमुत्कृष्टानां यत्स्वरूपं तदुच्यते।

एवं च वदति भगवति सूरौ

चारुकर्मा सूरिणा चारु परिचिन्त्य मनीषिणा।
श्रोतव्यं भवतापीदं मध्यबुद्धिः प्रणोदितः॥

सूरिरुवाच।

उत्कृष्टास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम्।
अवाप्य मानुषं जन्म प्रबुद्ध्यावधारितम्॥
भाविभद्रतया तेषां परिस्फुरति मानसे।
नैवैतत्सुन्दरं हन्त जीवानां स्पर्शनेन्द्रियम्।
ततो बोधप्रभावेण लक्षयन्त्यपि ते नराः।
कुर्वन्तोऽन्वेषणं तस्य मूलशुद्धिं परिस्फुटाम्॥
ततो विज्ञाय ते तस्य लोकवञ्चकतां नराः।
सर्वत्र चकिता नैव विश्रम्भन्ति कदाचन॥
न चानुकूलचारित्वं भजन्ति विजितस्पृहाः।
ततस्तन्निर्निर्देशैर्न युज्यन्ते विचक्षणाः॥

शरीरस्थितिमाचार्यमाचरन्तोऽपि तत्प्रियम् ।
तत्र गृद्धेरभावेन भवन्ति सुखभाजनम् ॥
प्राप्नुवन्ति यशः शुभ्रमिह लोकेऽपि ते नराः ।
स्वर्गापवर्गमार्गस्य निकटे तादृशाशयाः ॥
गुरवः केवलं तेषां नाममात्रेण कारणम् ।
मोक्षमार्गे प्रवर्तन्ते स्वत एव हि ते नराः ॥
अन्येषामपि कुर्वन्ति ते सन्मार्गावतारणम् ।
तद्वाक्यं ये प्रपद्यन्ते विज्ञाय गुणकारणम् ॥
ये पुनर्न प्रपद्यन्ते तद्वाक्यं बालिशा जनाः ।
तेषामनादरं कृत्वा ते तिष्ठन्ति निराकुलाः ॥
प्रकृत्यैव भवन्त्येते देवाचार्यतपस्विनाम् ।
पूजासत्कारकरणे रतचित्ता महाधियः ॥

एवं भाषिणि च भगवति प्रबोधनरतिसूरौ चिन्तितं ।

यथेदमुत्कृष्टानां श्लाघितं चरितं नृणाम् ।
तथानुभवसिद्धं मे किंचिदात्मनि भासते ॥

मध्यमबुद्धिना चिन्तितं ।

उत्कृष्टपुंसां यादृशा गुरुणा वर्णिता गुणाः ।
एते गुणाः परं सर्वे घटन्तेऽत्र मनीषिणि ॥

गुरुरुवाच ।

तदेवं तावदुत्कृष्टा वर्णिताः पुरुषा मया ।
अधुना मध्यमानां यत्स्वरूपं तन्निबोधत ॥

मध्यमास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम् ।
अवाप्य मानुषं जन्म मध्यबुद्ध्यावधारितम् ॥
स्पर्शनेन्द्रियसंपाद्ये ते सुखे गृद्धमानसाः ।
पण्डितैरनुशिष्टाश्च दोलायन्ते स्वचेतसा ॥
चिन्तयन्ति निजे चित्ते ते दोलायितबुद्धयः ।
विचित्ररूपे संसारे किमत्र बत कुर्महे ॥
भोगानेके प्रशंसन्ति रमन्ते सुखनिर्भराः ।
अन्ये शान्तान्तरात्मानो निन्दन्ति विगतस्पृहाः ॥
तदत्र कतरो मार्गो मादृशामिह युज्यते ।
न लक्षयामोऽतश्चित्तं सन्देहमवगाहते ॥
तस्मात्कालविलम्बोऽत्र युक्तोऽस्माकं प्रयोजने ।
नैवैकपक्षनिक्षेपो विधातुमिह युज्यते ॥
एवा च जायते बुद्धिर्या तेषां कर्मपद्धतिः ।
तत्प्रकाशात्कृर्णा यस्माद् बुद्धिः कर्मानुसारिणी ॥
ततस्ते स्पर्शनाक्षस्य मन्यन्ते सुखहेतुताम् ।
अनुकूले च वर्तन्ते किं तु नात्यन्तलोलुपाः ॥
ततो लोकविरुद्धानि नाचरन्ति कदाचन ।
स्पर्शनेन्द्रियलौल्येन मापायान् प्राप्नुवन्त्यतः ॥
विचक्षणोक्तं बुध्यन्ते विशेषं वचनस्य ते ।
अदृष्टदुःखासदाक्यं केवलं नाचरन्ति भोः ॥
मैत्रीं यान्त्यशलोकेन कुर्वन्ति स्नेहनिर्भराम्
लभन्ते तद्विपाकेन रौद्रां दुःखपरंपराम् ॥

अवर्णवादं लोके च प्राप्नुवन्ति न संशयः।
संसर्गः पापलोकेन सर्वानर्थकरो यतः॥
यदा पुनः प्रपद्यन्ते विदुषां वचनानि ते।
आचरन्ति च विज्ञाय तदीयां हितरूपताम्॥
तदा ते विगताबाधा भवन्ति सुखिनो नराः।
महापुरुषसम्पर्काल्लभन्ते मार्गमुत्तमम्॥
पण्डिता इव ते नित्यं गुरुदेवतपस्विनाम्।
बहुमानपराः सन्तः कुर्वन्त्यर्चनवन्दनम्॥

तदिदमाचार्यीयं वचनमाकर्ण्य मध्यमबुद्धिना चिन्तितं।

य एते सूरिणा प्रोक्ता मध्यमानां गुणागुणाः।
स्वसंवेदनसंसिद्धास्ते ममापि स्वगोचरे॥

मनीषिणा चिन्तितं।

यदिदं सूरिणादिष्टं वचनैः सुपरिस्फुटैः।
चरितं मध्यमानां तन्मदीये भ्रातरि स्थितम्॥

सूरिरुवाच।

तदेवं कथितास्तावन्मध्यमानां गुणागुणाः।
जघन्यनरसम्बन्धि स्वरूपमधुनोच्यते॥
जघन्यास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम्।
अवाप्य मानुषं जन्म बन्धुबुद्ध्यावधारितम्॥
परारिरूपतामस्य न जानन्त्येव ते स्वयम्।
परेषामपि द्व्यन्ति विदुषां हितभाषिणाम्॥
स्पर्शनेन्द्रियसंपाद्ये पामाकण्डूदलोपमे।

परमार्थेन दुःखेऽपि सुखलेशेऽतिगृध्नवः ॥
स्वर्गोऽयं परमार्थोऽयं लभ्योऽयं सुखसागरः।
अस्माभिरिति मन्यन्ते विपर्यासवशं गताः ॥
ततो हार्दं तमस्तेषां प्रविसर्पति सर्वतः।
विवेकशोषकास्चित्ते वर्धन्ते रागरश्मयः ॥
नष्टसत्पथसद्भावा ध्यान्ध्यान्धीभूतबुद्धयः।
कुर्वन्तोऽनार्यकार्याणि वार्यन्ते केन ते ततः ॥
धर्मलोकविरुद्धानि निन्दितानि पृथग्जनैः।
कार्याण्याचरतां लोकः शत्रुभावं प्रपद्यते ॥
कुलं चन्द्रांशुविशदं ते कुर्वन्ति मलीमसम्।
आत्मीयचरितैः पापाः प्रयान्ति जनहास्यताम् ॥
अगम्यगमनासक्ता निर्मर्यादा नराधमाः।
अर्कतूलादपि परं ते जने यान्ति लाघवम् ॥
दुर्लभस्त्र्यादिविषयः कथंचिदसदाग्रहः।
यदा पुनर्विवर्तेत हृदयेऽतिमहाग्रहः ॥
तदा ते यानि दुःखानि याश्च लोके विडम्बनाः।
प्राप्नुवन्ति न शक्यन्ते ता व्यावर्णयितुं गिरा ॥
केवलं गदितुं शक्यमियदेव समासतः।
लभन्ते ते नराः सर्वा लोके दुःखविडम्बनाः ॥
प्रकृत्यैव भवन्त्येते गुरुदेवतपस्विनाम्।
प्रत्यनीका महापापा निर्भाग्या गुणदूषणाः ॥
सन्मार्गपतितं वाक्यमुपदिष्टं हितैषिणा।

केनचिन्न प्रपद्यन्ते ते महामोहदूषिताः ॥
ततश्चेदं मुनेर्वाक्यं विनिश्चित्य मनीषिणा ।
विचिन्तितमिदं चित्ते तथा मध्यमबुद्धिना ॥
स्पर्शनेन्द्रियलुब्धानां यदेतदुपवर्णितम् ।
नृणां वृत्तं जघन्यानां सूरिभिर्विशदाचरैः ॥
तदेतत्सकलं बाले प्रतीतं स्फुटमावयोः ।
नाप्रतीतं वदन्त्येते यदि वा वरसूरयः ॥
बालेन तु गुरोर्वाक्यं न मनागपि लक्षितम् ।
तस्यां मदनकन्दल्यां चिप्तचित्तेन पापिना ॥

सूरिरुवाच ।

तदेवं भो महाराज जघन्यनरचेष्टितम् ।
निवेदितं मया तुभ्यं तचेदमभिधीयते ॥
एते जघन्या भूयांसो भुवने सन्ति मानवाः ।
इतरे तु यतः स्तोकाः सकलेऽपि जगत्त्रये ॥
स्पर्शनेन्द्रियजेतारो विरला भुवने नराः ।
तेनास्माभिरिदं पूर्वं भवद्भ्यः प्रतिपादितम् ॥

नरपतिरुवाच ।

धर्मं यतो न कुर्वन्ति स हेतुः प्रतिपादितः ।
भगवन्नाश्रितोऽस्माकं भवद्भिः संशयो महान् ॥

अत्रान्तरे तु सुबुद्धिमन्त्रिणाभिहितं । भगवन् य एते जघन्यमध्यमोत्कृष्टोत्कृष्टतमरूपतया चतुर्भेदाः पुरुषाः पश्चादनुपूर्व्या भगवद्भिः स्वरूपतो व्याख्याताः एते किमेवंस्वरूपाः प्रकृत्यैव भवन्ति

आहोस्विदेवंविधस्वरूपजनकमेतेषां किंचित्कारणमस्तीति कथयन्तु भगवन्तः। भगवानाह। महामन्त्रिन्समाकर्णय। न तावन्नाहतमिदमेषां स्वरूपं किं तर्हि कारणजं। तत्र ये तावदुत्कृष्टतमाः पुमांसः प्रतिपादिताः ते केवलमुत्कृष्टेभ्यो निष्पन्नस्वप्रयोजनतया भिद्यन्ते न परमार्थेन। यतस्त एवोत्कृष्टा यदावाप्य मनुष्यभावं विज्ञाय भवस्वरूपमाकलय्य मोक्षमार्गं तदासेवनेन दलयित्वा कर्मजालं निराकृत्य स्पर्शनेन्द्रियं निर्वृतिं प्राप्ता भवन्ति तदोत्कृष्टतमा इत्यभिधीयन्ते। निर्वृतौ च तेषां स्वरूपेणावस्थानं। तामवस्थामपेक्ष्य न किंचिज्जनकमस्ति। तेनोत्कृष्टतमानां पुरुषाणां न कश्चिज्जनको जननी वा। एते पुनर्जघन्यमध्यमोत्कृष्टाः पुरुषाः संसारोदरविवरवर्तिनः स्वकर्मविचित्रतया जायन्ते। तस्मात्स एव कर्मविलासस्तेषां जनकः। तच्च कर्म त्रिविधं वर्तते। तद्यथा। शुभमकुशलं सामान्यरूपं च। तत्र या कर्मपद्धतिः शुभतया सुन्दरी सा शुभसुन्दरी मनुष्यत्वेनोत्कृष्टानां जननी। या पुनरकुशलकर्ममाला सा जघन्यमनुष्याणां जननी। या पुनः कुशलाकुशलतया सामान्यस्वरूपा कर्मपद्धतिः सा मध्यमनराणां जनयित्री विज्ञेयेति॥ मनीषिणा चिन्तितं। अये न केवलं गुणैश्चरितेन चैतेऽस्माकमुत्कृष्टतमोत्कृष्टमध्यमजघन्याः पुरुषाः समानरूपा भगवद्भिर्व्याख्याताः किं तर्हि जननीजनकव्यतिकरोऽप्यस्माकमेतैः सह तुल्य एव भगवता दर्शितः। तस्मान्नूनमेतद्रूपैरेवास्माभिर्भवितव्यं। तथाहि। योऽसौ भवजन्तुर्मां निराकृत्य निर्वृतिं प्राप्त इति स्पर्शनेनास्मभ्यं निवेदितो न तस्य तेन जननी

जनको वा कश्चिदाख्यातः । तस्मादुत्कृष्टतमोऽसाविति निश्चीयते। अस्माकं पुनस्त्रयाणामपि कर्मविलासो जनकः भगवदादिष्टाभिधाना एव जनन्यः । तस्मादिदमत्रावसीयते यदुत जघन्यो बालो मध्यमो मध्यमबुद्धिः उत्कृष्टोऽहमिति ॥ सुबुद्धिनाभिहितं । भगवन्नेतेषामुत्कृष्टतमादीनां पुरुषाणां किं सर्वदावस्थितमेव रूपं उत परस्परं स्वरूपपरावर्तोऽपि भवति । भगवानाह । महामन्त्रिन्नुत्कृष्टतमानां तावदवस्थितमेव रूपं न कदाचिदन्यथाभावं ते भजन्ते । इतरेषां पुनरनवस्थितं स्वरूपं यतः कर्मविलासायत्ताः खल्वेते वर्तन्ते । विषमशीलश्चासौ प्रकृत्या कदाचिदुत्कृष्टानपि मध्यमयति जघन्ययति वा मध्यमानपि चोत्कृष्टयति जघन्ययति वा जघन्यानपि मध्यमयति उत्कृष्टयति वा । तस्मादनेन कर्मविलासेन मुक्तानामेवैकरूपता भवति नेतरेषां ॥ मनीषिणा चिन्तितं । एतदपि घटत एवास्मद्व्यतिकरे । तथाहि । विषमशील एवास्मज्जनकः यतः कथितं तेनैव मे यथा मयि प्रतिकूले यत्संपद्यते तत्संपन्नं बालस्येति । ततश्च यो निजतनयस्यापि प्रतिकूलचारितया एवंविधां दुःखपरंपरां संपादयति स कथमन्येषां धनायिष्यति ॥ सुबुद्धिनाभिहितं । भगवन्नुत्कृष्टतमाः पुरुषाः कस्य माहात्म्येन भवन्ति । गुरुराह । न कस्यचिदन्यस्य किं तर्हि स्ववीर्येण । सुबुद्धिनाभिहितं । कस्तथाविधवीर्यलाभोपायः । मुनिराह । भागवती भावदीक्षा ॥ मनीषिणा चिन्तितं । अये यद्येवं ततो युज्यते ममोत्कृष्टतमस्य भवितुं । किमनयाशेषविडम्बनया । गृह्णाम्येनां भगवदादिष्टां भागवतीमेव दीक्षां । इति

भावयतः संजातो मनीषिणश्चरणपरिणामः । मध्यमबुद्धेरप्येवं गुरुमन्त्रिणोः परस्परजल्पमाकर्णयतः संजातश्चरणाभिलाषः । केवलं नाहमेतावतो नैष्ठिकानुष्ठानस्य क्षम इति चिन्तितमेनन । सुबुद्धिनाभिहितं ।

भदन्त योऽयमस्माभिर्गृहिधर्मोऽभिधीयते ।
एष तादृशवीर्यस्य किं भवेत्कारणं न वा ॥

गुरुराह ।

स्यादेष पारम्पर्येण तादृशस्यापि कारणम् ।
वीर्यस्य न पुनः साक्षाद्यतो मध्यजनोचितः ॥
उत्कृष्टतां करोत्येष साक्षात्सम्यङ् निषेवितः ।
ततस्तादृशवीर्यस्य पारम्पर्येण साधकः ॥
अशेषक्लेशविच्छेदकारिका भवदारिका ।
तावद्भागवती दीक्षा दुर्लभैव सुनिर्मला ॥
किं तु श्रावकधर्मोऽपि भवतानवकारकः ।
अत्यन्तदुर्लभो ज्ञेयो महामात्य भवोदधौ ॥

तदेष परमार्थः ।

उत्कृष्टतमतां साक्षाद्वीर्यातिशययोगतः ।
प्रव्रज्या साधयत्युच्चैरेष तु व्यवधानतः ॥
तदाकर्ण्य ततश्चित्ते कृतं मध्यमबुद्धिना ।
युक्तो ममैषोऽनुष्ठातुं गृहिधर्मो जिनोदितः ॥

इतश्चाकुशलमालया स्पर्शनेन च मध्यवर्तितया विधुरितचित्तवृत्तेर्बालस्य विवर्धन्ते विपर्यासविकल्पाः । यदुत अहो अस्या रूपाति-

.मयः अहो सुकुमारता। अन्यच्च। अभिमतोऽहमस्याः यतो विलो-
कयत्येषा मामर्धाक्षिविक्षेपःएतदङ्गसङ्गसुखामृतसेकानुभवनेनाधुना
मे सफलं भविष्यति जन्मेति। ततश्चैवंविधवितर्कपरम्परापर्याकुली-
भूतचेतसस्तस्य विस्मृतमात्मस्वरूपं नष्टाशेषसंज्ञा जातं मदनकन्दली-
ग्रहणैकतानमन्तःकरणं। ततोऽविचार्य कार्याकार्यमन्ध इव मत्त इव
ग्रहग्रहीत इव तस्यामेव मदनकन्दल्यां निश्चलविन्यस्तनयनमानसः
पश्यत एव तावतो जनसमुदायस्य शून्यपादपातं तदभिमुखं
धावति स्म।' ततः किमेतदिति उत्थितो जनहाहारवः। प्राप्तो
ऽसौ मदनकन्दलीसमीपं। ततः सावेगं क एष इति निरीक्षि-
तोऽसौ नरपतिना। लक्षितं दृष्टिविकारेण तदाकूतं। स एवायं
पापो बाल इति प्रत्यभिज्ञातोऽनेन। जातास्य कोपारुणा दृष्टिः
कृतं भासुरं वदनं मुक्तो हुंकारः। ततो बालस्यादृष्टविपाकतया
प्रादुर्भूतभयातिरेकस्य नष्टो मदनज्वरः प्रत्यागता चेतना समुत्पन्नं
दैन्यं। ततः पश्चान्मुखं नष्टुं प्रवृत्तो यावच्छिथिलीभूतानि सन्धि-
बन्धनानि विलीयते शरीरं भग्नो गतिप्रसरः। तथापि कतिचि-
त्पदानि कथंचिद्गत्वा प्रकम्पमानसमस्तगात्रः पतितोऽसौ भूतले।-
अत्रान्तरे प्रकटीभूतः स्पर्शनो निर्गतो भगवद्वपुषात् गतो
दूरदेशे स्थितस्तं प्रतीक्षमाणः। विरतः कलकलः। लज्जितौ
मनीषिमध्यमबुद्धी बालचरितेन। ततः कोऽस्यापि वराकस्योपरि
कोप इति विचिन्त्य शान्तीभूतो राजा। पृष्टोऽनेनाचार्यः। यदुत
भगवन्नलौकिकमिदमस्य पुरुषस्य चेष्टितं अतीतमिव विचारणाया
अश्रद्धेयमननुभूतदृष्टान्तानां। तथाहि। विमलज्ञानालोकेन भाग-

द्भूतसमस्तभुवनवृत्तान्तः पश्यत्येव भगवाननेन यत्पूर्वमाचरितमासीत् यच्चेदानीमध्यवसितं। तथापि ममेदमत्र कौतुकं। यदुत तत्पूर्वकमस्याचरणं कदाचिदिविचित्रतया सत्त्वचरितस्य संभाव्येत। इदमधुनातनं पुनर्महदिन्द्रजालमिव प्रत्यक्षमपि ममाश्रद्धेयं प्रतिभासते। यतो भगवति रागादिविषधरोपशमवैनतेये सन्निहितेऽपि कथमतिक्लिष्टजन्तूनामप्येवंविधोऽध्यवसायः प्रादुर्भवेदिति। भगवताभिहितं। महाराज न कर्तव्योऽत्रातिविस्मयो यतो नास्य पुरुषस्य तपस्विनो दोषोऽयं। नृपतिरुवाच। तर्हि कस्यायं दोषः। भगवानुवाच। दृष्टस्त्वयास्य शरीरान्निर्गत्य योऽयं बहिःस्थितः पुरुषः। नृपतिनाभिहितं। सुष्ठु दृष्टः। भगवानाह। यद्येवं ततो ऽस्यैवायं समस्तोऽपि दोषो यतोऽस्य वशवर्तिनानेन पूर्वकमिदं समस्तमाचरितं। अनेन हि वशीकृताः पुरुषास्तन्नास्त्येव किंचिज्जगति पापं यन्नाचरन्ति। तस्मान्नात्र किंचिदलौकिकं विचारातीतमश्रद्धेयं वा भवद्भिः संभावनीयं। नरपतिरुवाच। यद्येवं ततः किमित्ययं पुरुषोऽमुं शरीरवर्तिनमात्मनोऽनर्थहेतुभूतमपि धारयति स्म। भगवानाह। न जानात्येव वराकोऽस्य दुःशीलतां। परमरिपुरपि गृहीतोऽयमनेन स्निग्धवन्धुबुद्ध्या। नरपतिरुवाच। किमत्र पुनः कारणं। भगवताभिहितं। अस्त्यस्य शरीरे योगशक्तिद्वारेण कृतानुप्रवेशा अकुशलमाला नाम जननी। सा च कारणं। किं च। यदिदमतिदुर्जयमधुनैव स्पर्शनेन्द्रियमस्माभिः प्रतिपादितं तद्रूप एवायमस्य स्पर्शनाभिधानः पापवयस्यो वर्तते। अयं तु जघन्यपुरुषो बालः। इयं च तद्-

भिधानैव अकुशलकर्ममालारूपैव जननी। तदत्र किं न संभाव्येत। यच्चोक्तं भगवत्सन्निधानेऽपि कथमेवंविधाध्यवसायप्रादुर्भाव इति तदपत एव नाश्चर्यबुद्ध्या ग्राह्यं यतो द्विभेदं जन्तूनां कर्म। सोपक्रमं निरुपक्रमं च। तत्र सोपक्रममेव महापुरुषसन्निधानादिना क्षयक्षयोपशमभावं प्रतिपद्यते न निरुपक्रमं। तदशगास्तु जन्तवस्तत्समीपेऽपि विरूपकर्माचरन्तः केन वार्यन्ते। तथाहि। येषामचिन्त्यपुण्यप्राग्भारवतां भगवतां तीर्थकृतामिह जगति गन्धहस्तिनामिव विचरतां विहारपवनगन्धादेव क्षुद्राशेषगजकल्पा दुर्भिक्षेतिपरचक्रमारिवैरप्रभृतयः सर्व एवोपद्रवाः समधिकयोजनशताद् दूरत एव भज्यन्ते तेषामपि भगवतां सन्निधाने निरुपक्रमकर्मपाशावपाशिताः क्षुद्रसत्त्वा न केवलं नोपशाम्यन्ति किं तर्हि तेषामेव भगवतां तीर्थकृतां क्षुद्रोपद्रवकरणे प्रवर्तन्ते। श्रूयन्ते हि तथाविधा भगवतामप्युपसर्गकारिणो गोपसङ्गमकादयः पापकर्माण इति। अन्यच्च। तेषामेव भगवतां देवविरचितसमवसरणानामध्यासितसिंहासनचतुष्टयानां मूर्तिमात्रदर्शनादेव प्राणिनां किल विलीयन्ते रागादयो विदलति कर्मजालं प्रशाम्यन्ति वैरावन्धाः विच्छिद्यन्तेऽलीकस्नेहपाशाः प्रलीयते विपरीताभिनिवेशो यावता तत्रापि केषांचिदभव्यतया निरुपक्रमकर्मघनपटलतिरस्कृतविवेकदीधितिप्रसराणां वा न केवलं पूर्वोक्तगुणलेशदेशोऽपि न संजायते किं तर्हि प्रादुर्भवन्त्येवंविधा भगवन्तमधिकृत्य कुविकल्पाः। यदुत। अहो सिद्धमस्येन्द्रजालं अहो अस्य लोकवञ्चनचातुर्यं अहो गाढमूढता लोकानां यदेतेऽनेना-

पलीकवाचालेनालजालरचनाचतुरेण प्रतार्यन्त इति। तदेवंस्थिते महाराज न किंचिदिदमत्यद्भुतं यदनेन पुरुषेण मत्सन्निधानेऽप्येवं-विधमध्यवसितं। अयमपि हि निरुपक्रमयानयासुखलमालया स्वदेहवर्तिन्या निजजनन्या प्रेर्यमाणोऽमुं स्पर्शनं पापसहचरमुररी-कृत्यैवं चेष्टते। तस्मान्न भवद्भिर्विस्मयो विधेयः॥ सुबुद्धिनाभि-हितं। भदन्त न किंचिदिदमाश्चर्यं भगवदागमावदातधियां। एवंविध एव निरुपक्रमकर्मपरिणामो नात्र सन्देहः। केवलमिदा-नीमेव भगवत्पादप्रसादादेव देवः खल्वेवंविधपदार्थेषु द्दृढबुद्धिर्भ-विष्यति। तेनैवं भगवन्तं विज्ञपयति। राजा सहर्षः प्राह। चार्वभिहितं सखे चारु अहो तेऽवसरभाविता। ततो राजेव भगवन्तं प्रत्याह। यथा कोऽस्य पुनः पुरुषस्य परिणामो भविष्यति। भगवताभिहितं। इदानीं तावदेष दृष्टयुष्मत्कोपविपाकतया भयातिरेकपस्तहृदयो न किंचिच्चेतयते। गतेषु पुनरितो युष्म-दादिषु मत्पुपलब्धसंज्ञः सन्नेष भूयो ऽप्यधिष्ठास्यते ऽनेन स्पर्शनेन। ततो युष्मद्भयादेव कुत्रचिन्निर्देशे यामीत्याकूतेन प्रपलायमानो महता क्लेशेन यास्यत्येष कोलाकसन्निवेशे। तत्र च कर्मपूरकाभि-धानस्य ग्रामस्य प्रत्यासन्नभूभागे पथि श्रान्तः पिपासितो दूरत एव द्रक्ष्यति बृहत्तडागं। ततः स्नानपानार्थं चलिष्यते तदभि-मुखं। इतश्च पूर्वमेवागमिष्यति तत्र चाण्डालमिथुनं। ततश्चाण्डा-लस्तडागतटवर्तिषु तरुगहनेषु पतत्रिगणमारणप्रवणः सञ्चटिष्यते। चाण्डाली पुनर्विजनमिति मत्वा स्नानार्थमवतरिष्यति तडागं। ततोऽवतीर्णायां तस्यां प्राप्स्यत्येष तस्य तीरं। ततोऽमुमुपलभ्य सा

मातङ्गी सूष्यपुरुषोऽयं कलहयिष्यति मां सरोवरावतरणापराध-
सुद्दिश्येति भयेन निमंक्ष्यति सलिले । स्थास्यति पद्मखण्डे लीना।
अयमपि मज्जनार्थमवतीर्यानाभोगेनैव यास्यति तत्समीपं।
भविष्यति तया सार्धमाश्लेषः । वेदयिष्यते तदङ्गस्पर्शं। संजनिष्यते
तस्योपरि साभिलाषमस्य । कथयिष्यति सात्मनश्चाण्डालभावं।
तथापि करिष्यत्येष तस्याः शरीरग्रहणं बलामोटिकया । विधा-
स्यति सा हाहारवं। तमाकर्ण्य धाविष्यति कुपितश्चाण्डालः।
विलोकयिष्यत्येनं तथावस्थितं । प्रज्वलिष्यति नितरां कोपानलेन।
संधास्यति कोदण्डे शिलीमुखं । मारयिष्यति च अरे रे दुरा-
त्मन्नधमपुरुष पुरुषो भवेत्याहूय स चाण्डालः। कम्पमानमेक-
प्रहारेण प्रहरिष्यति स च तं। तदाध्यासितो रौद्रध्यानेनेति
मृत्वा च यास्यति नरकेषु तेभ्योऽप्युद्धृत्त्यतः कुयोनिषु पुनर्नर-
केष्वेवानन्तवाराः। एवं दुःखपरम्परया स्थास्यत्यनन्तमपि कालं
पतितः संसारचक्रवाले पर्यटिष्यति ॥ नरपतिरुवाच। भदन्त
अतिदारुणेयमकुशलमाला स्पर्शनस्य यदशेनेदमस्य संपन्नं संपत्स्यते
च। भगवताभिहितं। महाराज किमचोच्यतां। पर्याप्तमीदृश्या
दारुणतया॥ सुबुद्धिनाभिहितं। भदन्त किमेते स्पर्शनाकुशलमाले
अस्यैव पुरुषस्य प्रभवतः आहोस्विदन्येषामपि प्राणिनां। भगवा-
नाह। महामात्य केवलमत्र पुरुषेऽभिव्यक्तरूपे लक्ष्येते। पर-
मार्थतः पुनः सर्वेषां सकर्मसंसारिप्राणिनां प्रभवत एव। यतो
योगिनीयमकुशलमाला योगेश्वरयायं स्पर्शनः। योगिनां च
भवत्येवेदृशी शक्तिः यया क्वचिदभिव्यक्तरूपाः क्वचिदनाविर्भूता

वर्तेन्त । नृपतिनाभिहितं । भगवन्ननयोः किमसङ्गोचरोऽप्यस्ति प्रभावः । भगवानाह । बाढमस्ति ॥

ततो राजा मन्त्रिणं प्रत्याह । सखे पापयोरनयोरमर्दितयोः कीदृशी ममाद्यापि शत्रुमर्दनता । ततो यद्यपि न युक्तं भगवत्समीपस्थैरेवंविधं जल्पितुं तथापि दुष्टनिग्रहो राज्ञां धर्म इति कृत्वेदमभिधीयते । तदाकर्णयत्वार्यः । सुबुद्धिनाभिहितं । समादिशतु देवः । राज्ञाभिहितं । आदिष्टमेतत्तावद्भगवता यथैते स्पर्शनाकुशलमाले अनेन पुरुषेण सह यास्यतः । ततो नेदानीं तावदेते वधमर्हतः । केवलं समाज्ञापय लमेते । यथा । मद्विषयान्निर्गत्य युवाभ्यां दूरतोऽपि दूरं गन्तव्यं । मृतेऽप्यस्मिन् पुरुषे नास्माकीनविषये प्रवेष्टव्यमितरथा युवयोरस्माभिः शारीरो दण्डः करिष्यते । अथैवमप्यादिष्टे पुनरेते अस्मद्विषये प्रविशेतां ततो भवता निर्विचारं लोहयन्त्रेण पीडनीये । एवमतिदुष्टयोरारटतोरप्यनयोरुपरि नेषदपि दया विधेया ॥ सुबुद्धिना चिन्तितं । अहो देवस्यानयोरुपर्यावेगातिशयः । यतोऽस्य तद्भ्रमेन विस्मृतं तदपि हिंसकर्मणि न भवन्तं नियोक्ष्य इति मद्गोचरं वरप्रदानं । भवतु । तथापीदमेव प्रतिबोधकारणं भगवन्तः कल्पयिष्यन्ति । मम लाज्ञाप्रतिपत्तिरेव ज्यायसीति । विहिन्याभिहितमनेन । यदाज्ञापयति देवः ॥ ततः प्रवृत्तोऽसौ तयोराज्ञापनार्थं । सूरिणाभिहितं । महाराज अलमनयोरेवमाज्ञापनेन । न खल्वेतयोरयमुन्मूलनोपायो यतोऽन्तरङ्गलोकजातीये एते स्पर्शनाकुशलमाले । अन्तरङ्गलोकेषु च न प्रभवन्ति लोहयन्त्रादीनि । अगम्यरूपा

हि ते वाह्यशस्त्राणां । नृपतिरुवाच । भदन्त कस्तर्ह्यनयोरन्यो निर्द्दलनोपायो भविष्यति । भगवताभिहितं । अप्रमादाभिधानमन्तरङ्गमेव यन्त्रमनयोर्निर्द्दलनोपायः । तद्धेते साधवोऽनयोरेव निष्पीडनार्थमहर्निशं वाहयन्ति । नृपतिरुवाच । कानि पुनस्तस्याप्रमादाभिधानस्य यन्त्रस्योपकरणानि । भगवानाह । यान्येत एव साधवः प्रतिक्षणमनुशीलयन्ति । नृपतिरुवाच । कथं । भगवतोक्तं । समाकर्णय । यावज्जीवमेते नाचरन्ति तनीयसीमपि परपीडां न भाषन्ते सूक्ष्ममप्यलीकवचनं न गृह्णन्ति दन्तशोधनमात्रमप्यदत्तं धारयन्ति नवगुप्तिसनाथं ब्रह्मचर्यं वर्जयन्ति निःशेषतया परिग्रहं न विदधते धर्मोपकरणशरीरयोरपि ममत्वबुद्धिं नासेवन्ते रजन्यां चतुर्भेदमप्याहारजातं आददते दिवा प्रवचनोपवर्णितं समस्तोपधिशुद्धं संयमयात्रामात्रसिद्धये निरवद्यमाहारादिकं वर्तन्ते समितिगुप्तिपरिपूरितेनाचारेण पराक्रमन्ते विविधाभिग्रहकरणेन परिहरन्त्यकल्याणमित्रयोगं दर्शयन्ति सतामात्मभावं न लङ्घयन्ति निजामुचितस्थितिं अपेक्षन्ते लोकमार्गं मानयन्ति गुरुसंहतिं चेष्टन्ते तत्तन्त्रतया आकर्णयन्ति भगवदागमं भावयन्ति महायत्नेन अवलम्बन्ते द्रव्यापदादिषु धैर्यं पर्यालोचयन्त्यागामिनमपायं यतन्ते प्रतिक्षणमसपत्नयोगेषु लक्षयन्ति चित्तविस्रोतसिकां प्रतिविदधते चानागतमेव तस्याः प्रतिविधानं निर्मलयन्ति सततमभङ्गताभ्यासरततया मानसं अभ्यस्यन्ति योगमार्गं स्थापयन्ति चेतसि परमात्मानं निबध्नन्ति तत्र धारणां परित्यजन्ति वहिर्विक्षेपं कुर्वन्ति तत्प्रत्ययैकतानमन्तःकरणं यतन्ते

योगसिद्धौ आपूरयन्ति शुक्लध्यानं पश्यन्ति देहेन्द्रियादिविविक्त-
मात्मानं लभन्ते परमसमाधिं भवन्ति शरीरिणोऽपि सन्तो मुक्ति-
सुखभाजनमिति । तदेवमेते महाराज मुनयोऽमूनि परपीडाव-
र्जनादीनि मुक्तिसुखभाङ्नलपर्यवसानानि तस्याप्रमादनाम्नो यन्त्र-
स्योपकरणानि प्रतिक्षणमनुशीलयन्ति । ततोऽमीभिरनुशीलिते-
रत्ययं तद्दृढीभवति यन्त्रं । तथाभूतं च तदनयोः स्पर्शना-
कुशलमालयोरपरेषामप्येवंजातीयानामन्तरङ्गभूतानां दुष्टलोकानां
निष्पीडने क्षमं संपद्यते । तेन च निष्पीडितास्तेऽन्तरङ्गलोका न
पुनः प्रादुर्भवन्ति । ततो महाराज यद्येतन्निष्पीडनाभिलाषोऽस्ति
भवतस्तदिदमप्रमादयन्त्रं स्वचेतसि निधाय दृढवीर्ययष्ट्यावष्टभ्य
खल्वेते निष्पीडनीये स्तत एव । न मन्त्रिणोऽप्यादेशो देयः । न
खलु परेण निष्पीडिते अप्येते परमार्थतो निष्पीडिते भवतः ॥

एवं च भगवति नृपतिगोचरमुपदेशं ददाने मनीषिणः कर्म-
म्वनदाही शुभपरिणामानलो गतोऽभिवृद्धिं भगवद्वचनपवनेन ।
केवलं पूर्वोत्तरवाक्ययोर्विषयविभागमनवधारयन् मनाक् समन्देह
इव विरचितकरमुकुलः स भगवन्तं प्रत्याह । भदन्त यासौ भग-
वद्भिर्भागवती भावदीक्षा वीर्योत्कर्षलाभहेतुतया पुरुषस्योत्साहत-
मत्वं साधयतीति प्राक् प्रतिपादिता यच्चेदमिदानीं दुष्टान्तरङ्ग-
लोकनिष्पीडनक्षमं सवीर्ययष्टिकमप्रमादयन्त्रं प्रतिपाद्यते अनयोः
परस्परं कियान् विशेषः । भगवताभिहितं । भद्र न कियानपि
विशेषः केवलमनयोः शब्दो भिद्यते नार्थः यतोऽप्रमादयन्त्रमेव
परमार्थतो भागवती भावदीक्षेत्यभिधीयते । मनीषिणाभिहितं ।

ततो दीयतां भगवता सा भागवती भावदीक्षा यद्युचितोऽहं तस्याः। भगवानाह। बाढमुचितः सुष्ठु दीयते॥ नृपतिनाभिहितं। भदन्त ममानेकसमरसङ्घट्टनिर्व्यूढसाहसस्यापीदमप्रमादयन्त्रं युष्मद्वचनतः श्रूयमाणमपि दुरनुष्ठेयतया मनसः प्रकम्पमुत्पादयति। एष पुनः कः कुतस्त्यो महात्मा येनेदं सहर्षेण महाराज्यमिव जिगीषुणाभ्युपगतमिति। भगवताभिहितं। महाराज मनीषिनामायमत्रैव चितिप्रतिष्ठिते वास्तव्यः। राज्ञा चिन्तितं। अये यदायं पापः पुरुषो मया व्यापादयितुमादिष्टस्तदा लोकैः श्लाघ्यमानः श्रुत एवासीन्मनीषी। यदुत एकस्मादपि पितुर्जातयोः पश्यतानयोरियान् विशेषः अस्येदं विचेष्टितं स तु तथाभूतो मनीषी महात्मेति। तदेष एव स मनीषी प्रायो भविष्यति। अथवा भगवन्तमेव विशेषतः पृच्छामीति। विचिन्त्याभिहितमनेन। भदन्त कौ पुनरस्यात्र नगरे मातापितरौ के वा ज्ञातय इति। भगवानाह। अस्यैव चितिप्रतिष्ठितस्य भोक्ता कर्मविलासो महानरेन्द्रः सोऽस्य जनकः तस्यैवाग्रमहिषी शुभसुन्दरी नाम देवी सा जननी। तस्यैवेयमकुशलमाला भार्या अयं च पुरुषो बालाभिधानः सुत इति। तथा योऽयं मनीषिणः पार्श्ववर्ती पुरुषः सोऽपि तस्यैव सामान्यरूपाया देव्यास्तनयो मध्यमबुद्धिरभिधीयते। एतावदेवास्येह कुटुम्बकं। शेषज्ञातयस्तु देशान्तरेष्वतः किं तद्वार्तया। नृपतिराह। किमस्य नगरस्य कर्मविलासो भोक्ता न पुनरहं। भगवानाह। बाढं। राजोवाच। कथं। भगवानाह। समाकर्णय।

यतस्तदाज्ञां सर्वेऽपि भीतकम्पितमानसाः ।
एते नागरिका नैव लङ्घयन्ति कदाचन ॥
तथापि राज्यहरणे तद्दाने वा यथेच्छया ।
शक्तोऽसौ न तथा तेऽत्र राजत्वाज्ञा प्रकाशते ॥
परमार्थेन तेनासौ भोक्तास्तेत्यभिधीयते ।
यतः प्रभुत्वमाज्ञायां प्रभूणां किल गीयते ॥

नरपतिरुवाच ।

यद्येवं भगवन्नेष कस्मान्नेहोपलभ्यते ।
सूरिणाभिहितं राजन् समाकर्णय कारणम् ॥
यतः कर्मविलासोऽयमन्तरङ्गो महानृपः ।
अतो न दर्शनं याति सर्वदैव भवादृशाम् ॥
अन्तरङ्गा हि ये लोकास्तेषां प्रकृतिरीदृशी ।
स्थिताः प्रच्छन्नरूपेण सर्वकार्याणि कुर्वते ॥
केवलं बुद्धिदृष्ट्यैव धीराः पश्यन्ति तान् सदा ।
आविर्भूता इवाभान्ति अन्येषामपि तत्पुरः ॥
न चावभावना कार्या भवतात्र प्रयोजने ।
न केवलं यतोऽनेन भवानेव पराजितः ॥
किं तु प्रायेण सर्वेऽपि संसारोदरवर्तिनः ।
स्ववीर्येण विनिर्जित्य प्रभवोऽपि वशीकृताः ॥
ततो गृहीततत्त्वेन राजा प्रोक्तः सुबुद्धिना ।
देव ज्ञातो मयाप्येष राजा योऽवर्णि सूरिणा ॥
देवाय कथयिष्यामि रूपमस्य परिस्फुटम् ।

अहमेव भदन्तैस्तु सर्वमेव निवेदितम् ॥

इतश्च ।

विज्ञायावसरं तेन पूर्वं संजातबुद्धिना ।
अथागतशिरस्केन प्रोक्तं मध्यमबुद्धिना ॥
योऽसौ भगवतादिष्टः संसारतनुताकरः ।
गृहिधर्मः स मे नाथ दीयतामुचितो यदि ॥

गुरुरुवाच ।

श्रुत्वा भागवतीं दीक्षां न कर्तुं शक्नुवन्ति ये ।
तेषां गृहस्थधर्मोऽसौ युक्त एव भवादृशाम् ॥

नृपतिरुवाच ।

भदन्त किंस्वरूपोऽयं गृहिधर्मोऽभिधीयते ।
सूरिराह महाराज समाकर्णय कथ्यते ॥

ततो भगवता वर्णितं परमपदकल्पपादपनिरुपहतबीजं सम्यग्दर्शनं प्रतिपादितानि संसारतरुकन्दच्छेदकतयाचिरेण स्वर्गापवर्गमार्गसंसर्गकारीण्यणुव्रतगुणव्रतशिक्षापदानि। ततः संजाततदावरणीयकर्मक्षयोपशमतया भावतः प्रादुर्भूतसम्यग्दर्शनदेशविरतिपरिणामेन शक्योऽयमस्मादृशामप्यनुष्ठातुं गृहस्थधर्म इति संचिन्त्य नरपतिनाभिहितं। भदन्त क्रियतामेतद्दानेनास्माकमप्यनुग्रहः। भगवानाह। सुष्ठु क्रियते। ततो दत्तस्तयोर्द्वयोरपि विधिना गृहिधर्मो भगवता। मनीषिदीक्षादानार्थं पुनरभ्युद्यते भगवति भगवच्चरणयोर्निपत्य नरपतिरुवाच। भदन्त गृहीतैवानेन महात्मना भावतो भागवती दीक्षेति कृतकृत्य एवायमधुना वर्तते। तथापि

वयमेनं मनीषिणमुद्दिश्य किंचित्सन्तोषानुरूपमाचरितुमिच्छामः तदनुजानातु भगवानिति। तदाकर्ण्य स्थिता भगवन्तस्तूष्णींभावेन। सुबुद्धिनाभिहितं। देव न पृच्छ्यन्ते द्रव्यस्तवप्रवृत्तिकाले भगवन्तः। अनधिकारो ह्यत्र भगवतां। युक्त एव यथोचितः स्वयमेव द्रव्यस्तवः कर्तुं युष्मादृशां। केवलमेतेऽपि विहितं तमनुमोदन्त एव द्रव्यस्तवं। ददति च तद्गोचरं शेषकालमुपदेशं यथा कर्तव्योदारा पूजा भगवतां न खलु वित्तस्यान्यच्छुभतरं स्थानमित्यादिवचनसन्दर्भेण। तस्मात्स्वत एव कुरुत यथोचितं यूयं। केवलमभ्यर्थयामः कालप्रतीक्षणं प्रति मनीषिणं। नृपतिरवोचत्। एवं कुर्मः। ततोऽभ्यर्थितः सबहुमानं राजमन्त्रिभ्यां मनीषी। चिन्तितमनेन। न युक्तः कालविलम्बो धर्मप्रयोजने। तथापि महापुरुषप्रणयभङ्गोऽपि सुदुष्कर इति मन्यमानेन प्रतिपन्नं तत्समीहितं।

ततस्त्वरयता तेन नरनाथेन तोषतः।
व्यापारिता महायोच्चैः सर्वे मन्त्रिमहत्तमाः॥
ततस्तैः क्षणमात्रेण तत्सर्वं जिनमन्दिरम्।
विचित्रवस्त्रविस्तारैर्विहितं विगतातपम्॥
कुरङ्गनाभिकश्मीरमलयोद्भवरूपया।
कर्पूरोन्मिश्रया गार्या तदधस्ताद्विलेपितम्॥
तथालिकुलसङ्गीतैः पञ्चवर्णैर्मनोहरैः।
आजानूत्सेधिभिः पुष्पैः सर्वतः परिपूरितम्॥
सौवर्णस्तम्भविन्यस्तमणिदर्पणराजितम्।
दिव्यवस्त्रकृतोल्लोचबद्धमुक्तावचूलकम्॥

नष्टान्धकारसम्बन्धं रत्नोद्योतैः सुनिर्मलैः।
विध्वस्ताशेषदुर्गन्धं सत्कृष्णागरुधूपतः॥
देवलोकाधिकामोदं पटवासैर्विसर्पिभिः।
उत्सर्पत्केतकसङ्घातगन्धेन भुवनातिगम्॥
समदिलासिनीलोकप्रारम्भस्नानसाधनम्।
एवं विधाय तत्सद्म प्रस्तुतं देवपूजनम्॥

अत्रान्तरे।

पारिजातकमन्दारनमेरुहरिचन्दनैः।
सन्तानकैश्च देवौघास्तथान्यैर्जलजेतरैः॥
पुष्पैर्भृत्वा विमानानि द्योतयन्तो नभस्तलम्।
कृतोत्कृष्टरवास्तूर्णमाजग्मुस्तं जिनालयम्॥
ततः प्रमुदिताशेषलोकलोचनपूजिताः।
पूजां जगद्गुरूणां ते जातानन्दाः प्रचक्रिरे॥
सुश्लिष्टवर्णविन्यासां पूजामालोक्य तत्कृताम्।
निश्चलाचतया लोकास्ते जग्मुर्देवरूपताम्॥
ततोऽनन्तगुणानन्दपरिपूरितचेतसा।
नरेन्द्रेण सलोकेन देवानानन्द्य सद्गिरा॥
शुभ्रे सुमेरुवत्तुङ्गे सुवेद्यां भद्रविष्टरे।
निवेश्य बिम्बं जैनेन्द्रं विधिनारब्धि मज्जनम्॥

तत्र च।

स्नातस्य शुभवस्त्रस्य किरीटाङ्गदधारिणः।
गोशीर्षेण विलिप्तस्य हारराजितवक्षसः॥

कुण्डलोद्भासिगण्डस्य शक्राकारानुकारिणः ।
बहिःशान्तविकारस्य निर्मलीभूतचेतसः ॥
महत्तमोऽयमस्माकमेष एव च नायकः ।
एष एव महाभाग एष एव च पूजितः॥
येन भागवती दीक्षा दुष्करापि जिघृक्षिता ।
एवं प्रभाषमाणेन नरेन्द्रेण मनीषिणः ॥
सत्तीर्थोदकसंपूर्णस्नापनीयो मनोहरः ।
सद्धर्मसारसंपूर्णमुनिमानससंनिभः ॥
गोशीर्षचन्दनोन्मिश्रो दिव्यपद्मावृताननः ।
समन्ताचर्चितस्तस्य शुभ्रैश्चन्दनहस्तकैः ॥
संस्थाप्य प्रथमस्थाने स्नाचकारतया मुदा ।
समर्पितोऽभिषेकार्थं दिव्यकुम्भो भवच्छिदः ॥
आनन्दपुलकोद्भेदं दधानो भक्तिनिर्भरः ।
जग्राह नृपतिः कुम्भं स्वयमेव द्वितीयकम् ॥
तथा मध्यमबुद्धिश्च स्वपुत्रस्य सुलोचनः ।
ततो भुवननाथस्य स्नाचकारणतत्परौ ॥
चन्द्रोद्योतच्छटाच्छेन चामरेण विभूषिता ।
स्थिता त्रिलोकनाथस्य पुरो मदनकन्दली ॥
द्वितीया स्थापिता राज्ञा तस्याचामरधारिणी ।
देवी पद्मावती नाम तदाकारानुकारिणी ॥
धूपभाजनमादाय गाढं भावितमानसः ।
सुबुद्धिर्वर्धितानन्दः स्थितोऽपि पिहिताननः ॥

तेनैव राजादिष्टेन शेषकर्मसु सादरम्।
ये ये श्रेष्ठतमा लोकास्ते ते सम्यङ् नियोजिताः ॥

यतः।

त एव कृतिनो लोके ते जातास्ते समुन्नताः।
ते कलालापविज्ञानशालिनस्ते महाधनाः॥
ते रूपवन्तस्ते शूराः ते कुलस्यापि भूषणाः।
ते सर्वगुणसंपूर्णाः श्लाघ्यास्ते भुवनत्रये॥
किङ्करीकृतशक्रस्य लोकनाथस्य मन्दिरे।
येऽत्र किङ्करतां यान्ति नराः कल्याणभागिनः॥

ततः प्रवृत्तो भगवतोऽभिषेकमहोत्सवः। पूरयति दिक्चक्रवालमुद्दामदेवदुन्दुभिनिर्घोषः। बधिरयति जनकर्णकोटराणि रटत्पटहपाटवप्रतिनिनादसंमूर्छितो विविधतूर्यनिनादः। समुल्लस्यते कणत्कणकभाणकरवोन्मिश्रः कलकाहलाकलकलः। गीयन्तेऽन्तरान्तरा प्रशमसुखरसास्वादावेदनचतुराणि भगवत्साधुगुणसम्बन्धप्रबद्धानि श्रवणोत्सवकराणि गीतकानि। पठन्ते परिस्फुटगम्भीरेण ध्वनिना सर्वज्ञप्रणीतवचनोचितकराणि रागादिविषधरपरममन्त्ररूपाणि भावसारं महास्तोत्राणि। प्रवृत्तानि विविधकरणाङ्गहारहारीणि प्रमोदातिरेकसूचकानि महानृत्तानि। तदेवं महता विमर्देन सुरासुरैरिव कनकगिरिशिखरे निर्वर्तिते भगवदभिषेकमङ्गले पूजितेषु सविशेषं भुवनाधिनाथबिम्बेषु विहितेषु निःशेषकृत्यविधानेषु वन्दितेषु साधुलोकेषु दत्तेषु महादानेषु सम्मानितेषु विशेषतः साधर्मिकगणेषु मनीषिणः स्नेहनयनाय

अङ्गीकारितो नरपतिना जयकुञ्जरः । आरोपितस्तत्र मनीषी । स्थितोऽस्य स्वयमातपत्रधारकः । घोषितं च नरपतिना हर्षातिरेकरोमाञ्चितवपुषा दृहता शब्देन । यदुत । भो भोः सामन्ता भो भो मन्त्रिमहत्तमाः समाकर्णयत यूयं ।

विभूतिरत्र संसारे नरस्य ननु तत्त्वतः ।
सत्त्वमेवाविगानेन प्रसिद्धं सर्ववादिनाम् ॥
ततो यस्याधिकं सत्त्वं नरस्येह प्रकाशते ।
स शेषनरवर्गस्य प्रभुत्वं कर्तुमर्हति ॥

एवं च स्थिते ।

सत्त्वोत्कर्षस्य माहात्म्यं यदत्रास्य मनीषिणः ।
तद्दृष्टमेव युष्माभिः सर्वैरेव परिस्फुटम् ॥

तथाहि ।

यत्तद्भगवतादिष्टं मादृशां त्रासकारणम् ।
अनेन रभसा यत्नं याचितं तन्महात्मना ॥
तदेष यावदस्माकं सदनुग्रहकाम्यया ।
गृहे तिष्ठति तावन्नः स्वामी देवो गुरुः पिता ॥
वयमस्य भवन्तश्च सर्वे किङ्करतां गताः ।
विधूतपापमात्मानं विनयात्करवामहे ॥
ततः समस्तैस्तैरुक्तं प्रमोदोद्धुरमानसैः ।
यदादिशति राजेन्द्रः कस्मै तन्नात्र रोचते ॥
अथान्तरेऽतितोषेण देहस्था सा मनीषिणः ।
विजृम्भिता विशेषेण जननी शुभसुन्दरी ॥

ततः सश्रीकतामाप्य चणेन भुवनातिगाम्।
रराज राजलोकेन परिवारितविग्रहः॥
करेणुकाधिरूढेन सह मध्यमबुद्धिना।
अथावाप पुरद्वारं स्तूयमानः सुबुद्धिना॥
कृतोच्छ्रितपताके च हट्टशोभामनोरमे।
विशेषोज्ज्वलनेपथ्ये हर्षात्सम्मुखमागते॥
अथासौ नगरे तत्र मनीषी तोषनिर्भरैः।
एवं नागरकैर्लोकैः प्रविवेश कृतस्तुतिः॥

तद्यथा।

धन्योऽयं कृतकृत्योऽयं महात्मायं नरोत्तमः।
अस्यैव सफलं जन्म भूषितानेन मेदिनी॥
अस्यैव धन्यतास्माकं येषामेष स्वपत्तने।
संजातो न ह्यधन्यानां रत्नपुञ्जेन मीलकः॥

ततश्च।

कामिनीनयनानन्दं कुर्वाणोऽर्थाभिलाषिणाम्।
ददानश्च महादानं दधानो देवरूपताम्॥
सद्धर्मे पक्षपातं च देहिनामात्मचेष्टितैः।
जनयञ्जनितानन्दो विचचार पुरेऽखिले॥
ततो महाविमर्देन संप्राप्तो राजमन्दिरम्।
रत्नराशिप्रभाजालैः सदा सद्बेन्द्रकार्मुकम्॥
सच चाशेषराजादिलोकसम्मानमानितः।
सकामकामिनीवृन्दलोललोचनवीक्षितः॥

गीतनृत्तप्रबन्धेन सोऽमरालयविभ्रमे ।
देवराजवदास्थानं दत्त्वा निःशङ्कमानसः ॥
ततो विलीनरागोऽपि नृपतेस्तोषवृद्धये ।
उत्थाय मज्जनास्थानं जगाम विगतस्मयः ॥

तत्र च गतस्य तस्य ।

भ्रातुः सूनोरिवात्यन्तवल्लभस्य सगौरवम् ।
कृतं मदनकन्दल्या शरीरपरिमार्जनम् ॥
शेषान्तःपुरनारीभिर्यथाभिः स्नानकर्मणा ।
रराज पेशलालापचारुभिः परिवारितः ॥
वज्रेन्द्रनीलवैदूर्यपद्मरागादिरोचिषा ।
रञ्जिते यन्त्रवापीनां ममज्ज विमले जले ॥
ततो भुजगनिर्मोकसूक्ष्मशुक्ले सुवाससी ।
परिधायागतो देवभवनं सुमनोहरम् ॥

तत्र च सुबुद्धिसम्बन्धिनि विरचनाचारुतया चित्तनिर्वाणकारिणि जिनमन्दिरे मार्गानुसारितया परमार्थतः सकलकालहृदयवर्तिनोऽपि विशेषतस्तद्दिन एव प्रबोधनरतिसूरिपादप्रसादोपलब्धस्वरूपस्य सकलनिष्कलावस्थस्य भगवतः परमात्मनो रागद्वेषमोहविषापहरणकरणचतुरमनुष्ठितमर्हतः स्वरूपं । ततो निर्गत्य विरचितविस्तारपरिजनः पूर्वोपकल्पिताशेषभोजनोपकरणसामग्रीदर्शनार्थं प्राप्तो भोजनमण्डपं । तत्र च विरचितेऽनेकाकारे चित्तरमनोल्लवकारिणि भक्ष्यपेयाद्याहारविस्तारे नृपतिना स्वयमुपदिश्यमानमभिमतरसास्वादनं तदनुरोधेन विदधानो निरभिष्वङ्गतया

वर्धमानस्वास्थ्यातिरेको निर्वर्तयामास भोजनमिति। ततो गृहीतपञ्चसुगन्धिकोन्मिश्रताम्बूले मलयजमृगनाभिकश्मीरजचोदाङ्गरागे विन्यस्तप्रवरविभूषणे दिव्यांशुकाच्छादितशरीरे माल्यविच्छित्तिसौरभाकृष्टहृष्टचञ्चरीके अध्यासितमहार्हसिंहासने प्रणतासंख्यसामन्तकिरीटांशुजालरञ्जितचरणे उद्दामबन्दिवृन्दस्तूयमाने यथावस्थितगुणसन्दोहे दत्तास्थाने मनीषिणि हर्षातिरेकनिर्भरो राजा सुबुद्धिं प्रत्याह। सखे युष्मदनुभावजन्येयमस्मादृशां कल्याणपरम्परा येनोत्साहितोऽहं भवता भगवद्वन्दनाय। तथाहि।

विलोकितो मया नाथो जगदानन्ददायकः।
भक्तिनिर्भरचित्तेन वन्दितो भुवनेश्वरः॥
दृष्टः कल्पद्रुमाकारः स सूरिर्वन्दितो मुदा।
लब्धो भागवतो धर्मः संसारोच्छेदकारकः॥
जातश्चेदृग्रूपेण नररत्नेन मीलकः।
कृतश्चानेन सर्वेषामस्माकं हृदयोत्सवः॥

अथवा किमत्राश्चर्यं।

महाभागाः प्रजायन्ते परेषां तोषवृद्धये।
स्वकार्यमेतदेवैषां यत्परप्रीतिकारणम्॥
तदस्य युक्तमेवेदं विधातुं पुण्यकर्मणः।
ममाद्भुतमिदं जातं क्व डोम्बः क्व तिलाढकम्॥
तदेवंविधकल्याणमालिका मित्रवत्सल।
एवमाचरता नूनं त्वया संपादिता मम॥
राज्ञो हितकरो मन्त्री सुप्रसिद्धं जगत्त्रये।

तस्मात्तवैव मन्त्रित्वं यथार्था ते सुबुद्धिता ॥

सुबुद्धिरुवाच । देव मा मैवमादिशत । न खलु देवपुण्य-प्राग्भारायत्तजीवितव्येऽत्र किङ्करजनेऽप्येवमतिगौरवमारोपयितु-मर्हति देवः । अस्याः सम्पादने केऽत्र वयं । उचित एव देवः खल्वेवंविधकल्याणपरम्परायाः । नैव हि निर्मलाम्बरतले निशि प्रकाशमाना रुचिरा नक्षत्रपद्धतिः कस्यचिदसंभावनीयेत्याश्चर्यबुद्धिं जनयति । मनीषिणाभिहितं । महाराज भगवति सम्प्रसादे कियतीयमद्यापि भवतः कल्याणपरम्परा । भाविदिनश्रीसम्बन्धस्येव गगनतलस्यारुणोद्योतकल्पो हि भवतो भविष्यत्केवलालोकसवित्प-रमपदानन्दसन्दोहसम्बन्धस्य प्राथमकल्पिकः खल्वेष सम्यग्द-र्शनजनितः प्रमोदः । नृपतिरुवाच । नाथ महाप्रसादः । कोऽत्र सन्देहः । किं न संपद्यते युष्मदनुचराणां । ततो मन्त्रिणं प्रत्याह । सखे पश्य अमीषामद्यदिनप्रबुद्धानामपि विवेकातिशयः । सुबुद्धिरुवाच । देव किमत्र चित्रं । मनीषिणः खल्वेते यथार्थम-भिधीयन्ते । प्रबुद्धा एव ह्येवंविधपुरुषा जायन्ते । गुरवः केवल-मीदृशां प्रतिबोधे निमित्तमात्रं भवन्ति ॥

इतश्च मनीषिणो राजमन्दिरप्रवेशावसरे राजानमनुज्ञाप्या-दित एव सुबुद्धिना साधर्मिकवात्सल्येन मध्यमबुद्धिर्नीत आत्मी-यसदने । कारितस्तदागमननिमित्तः परमानन्दो दत्तानि महादानानि । ततः सोऽपि निर्वर्तितस्नानभोजनताम्बूलविलेपना-लङ्करणनेपथ्यमाल्योपभोगकर्तव्यः देहनिर्भरसुबुद्धिकृतपरिचरित-रूपचरितस्तुतिगर्भविस्रब्धालापसमानन्दितेन्द्रियहृदयः समागतमध्ये-

वाख्याने । कृतोचितप्रतिपत्तिः ससम्भ्रमं मनीषिणा दापिते तदुपकण्ठमुपविष्टो महति विष्टरे । ततो राजा तमुद्दिश्य सुबुद्धिं प्रत्याह । सखे महोपकर्तायमस्माकं महापुरुषः । सुबुद्धिनाभिहितं । देव कथं । नृपतिराह । समाकर्णय । यतो भगवतोपदिष्टे तस्मिन्नप्रमादयन्त्रे तस्य दुरनुष्ठेयतामालोचयतो मम महासमरे कातरनरस्येव प्रादुर्भूता चित्ते समाकुलता ततोऽहमनेन महात्मना तत्रावसरे भगवन्तं गृहिधर्मं याचता तद्ग्रहणबुद्ध्युत्पादकत्वेन समाश्वासितः । यतो जातो गृहिधर्माङ्गीकरणेनापि मे चेतसो महानवष्टम्भः ततो ममायमेव महोपकारक इति । सुबुद्धिनाभिहितं । देव यथार्थाभिधानो मध्यमबुद्धिरेषः । समानशीलव्यसनेषु सख्यमिति च लोकप्रवादः । ततः समानशीलतया युक्तमेवास्य मध्यमजनानां समाश्वासनं ॥ नृपतिना चिन्तितं । अये ममायं मिथ्याभिमानश्चेतसीयन्तं कालमासीत् किलाहं नरेन्द्रतया पुरुषोत्तमो यावताधुनानेन सुबुद्धिनार्यापत्त्या गणितोऽहं मध्यमजनश्रेण्यां । ततो धिङ्मां मिथ्याभिमानिनमिति । अथवा वस्तुस्थितिरेषा न मयात्र विषादो विधेयः । तथाहि ।

> गजेन्द्रस्तावदाभाति शूरः सन्त्रासकारकः ।
> यावन्नासुरदंष्ट्रायो न सिंह उपलक्ष्यते ॥
> यदा तु सिंहगन्धोऽपि स्यादाघ्रातः करेणुना ।
> जायते कम्पमानोऽसौ तदाहो कातरः करी ॥
> मनीषिणमपेक्ष्यातो युक्ता मे मध्यरूपता ।
> अयं सिंहो महाभागो मादृशाः करिकातराः ॥

तदत्र न विषादो मे कर्तुं युक्तः प्रयोजने ।
यतो द्वितीयलेखापि मादृशैरपि दुर्लभा ॥

तथाहि ।

भवेत्सर्वोत्तमस्तावत्पुरुषो यदि पारयेत् ।
अशक्तो मध्यमोऽपि स्यान्न जघन्यः कदाचन ॥
मिथ्याभिमानो नैवायमेक एवाभवत्पुरा ।
किं तर्हि बहवोऽन्येऽपि किं वा मे चिन्तया तया ॥

एवं चिन्तयति राजनि सुबुद्धिराह । देव सम्यगवधारितं देवेन यथैष मे महोपकारक इति । यतो जिनधर्मानुष्ठाने प्रवर्तमानस्यास्य जीवस्य यो निमित्तमात्रमपि भवति न ततोऽन्यः परमोपकारी जगति विद्यते । नृपतिराह । एवमेतन्नात्र सन्देहः । केवलमिदानीमेष मनसि वितर्को भगवद्वचनानुस्मरणेनासकृन्निराकृतोऽपि निर्लज्जब्राह्मण इव प्रकरणे पुनः पुनः प्रविशतीति । तदेनमपनेतुमर्हत्यार्यः । सुबुद्धिराह । कीदृशोऽसौ । नृपतिरुवाच । समाकर्णय । स्वसंवेदनसंसिद्धमिदमासीत्तदा । यदुत । तत्र चैत्यभवने प्रविष्टमात्राणामस्माकं शान्तानीव सर्वद्वन्द्वानि उच्चाटितेव केनचिद्राज्यकार्यचिन्तापिशाचिका विलीनमिव सकलं मोहजालं विध्मात इव प्रबलरागानलः प्रनष्ट इव प्रद्वेषवेतालः विध्वस्त इव विपरीताभिनिवेशपक्षः निर्वृतममृतसेकसम्पर्केणेव शरीरं सुखसागरावगाढमिव हृदयं क्षणमात्रेणासीत् । यत्पुनर्मम सकलभुवननाथस्य प्रणतगुरुचरणस्य वन्दितमुनिवृन्दस्य भगवद्वचनामृतमाकर्णयतस्तत्र मे निरुपमं सुखसंवेदनमभूत् तत्सकलवाग्गोचरातीतमिति

ष्ट्वा न शक्यते कथयितुं। तदेवंविधेऽपि तत्र जैनेन्द्रमन्दिरे सन्निहितेऽपि तादृशि भगवति गुरौ कथयति रागविषशमनं विरागमार्गं नेदीयसि शान्तचित्तेऽपि तपस्विलोके सति तावति जनसमुदाये कथं तस्य बालस्य तथाविधो ऽध्यवसायः संपन्न इति। सुबुद्धिनाभिहितं। देव यत्तावदुक्तं देवेन यथा तत्र जिनमन्दिरे प्रविष्टमात्रस्य मे क्षणमात्रेणाचिन्त्यगुणसन्दोहाविर्भावोऽभूदिति तन्नाश्चर्यं। प्रमोदशेखरं हि तद्भगवद्भवनमभिधीयते। हेतुरेव तत्तादृशगुणकलापस्य। यत्पुनरभ्यधायि यथा कथं पुनस्तत्रैवंविधसामग्र्यामपि बालस्य तथाविधो ऽध्यवसायः संपन्न इति तत्र निवेदितमेव भगवद्भिः कारणं। किं च। अभिधानमेव तत्सम्बन्धि विचार्यमाणं सन्देहं दलयति। यतो न किंचिदाश्चर्यं यद्बालाः पापनिवारणसामग्रीसद्भावेऽपि पापाचरणेषु प्रवर्तन्त इति। अन्यच्च। भगवदुपदेशादेवाहमेव वितर्कयामि यदुत द्रव्यक्षेत्रकालभावभवाद्यपेक्षया प्राणिनां शुभाशुभपरिणामो भवति। तदस्य बालस्य क्षेत्रजनितो ऽयमशुभः परिणामः। नृपतिराह। ननु गुणाकरस्तज्जैनसदनं। तदेव तत्र च क्षेत्रं। तत्कथं तदशुभपरिणामहेतुर्भवेदिति। सुबुद्धिराह। न मन्दिरदोषोऽसौ किं तर्हि उद्यानदोषः। तदुद्यानं तत्र सामान्यक्षेत्रं तत्र हेतुस्तस्य बालस्य तथाविधाशुद्धाध्यवसायस्येति। नृपतिराह। यदि दुष्टाध्यवसायहेतुस्तदुद्यानं ततो ऽस्माकं किमिति क्लिष्टचित्तकारणं तन्न संपन्नं। सुबुद्धिनाभिहितं। देव विचित्रस्वभावं तत्काननं पुरुषादिकमपेक्ष्यानेकाकारकार्यकारकं संपद्यते। अत एव तद्विचक्षणैर्मितमिति

नाम्ना गीयते । प्रकटयत्येव तज्जन्तूनां सविशेषसहकारिकारणक-लापैर्निजं निजं विलसितं। तथाहि। तस्य बालस्य तेन स्पर्शनेन तथा चाकुशलमालया युक्तस्य मदनकन्दलीं प्राप्य तेन तथा-विधो ऽध्यवसायः संपादितः। मनीषिमध्यमबुद्धियुग्मदादीनां पुनर्विशिष्टपुरुषाणां पुण्यप्राग्भारवतां सूरिपादप्रसादमासाद्य तेनैव सर्वविरतिदेशविरतिपरिणामादयो भावा जनिताः। यद्यपि चेह सर्वस्यैव कार्यस्योत्पत्तौ द्रव्यक्षेत्रकालस्वभावकर्मनियतिपुरुषकारा-दयः कारणविशेषा दृष्टादृष्टाः समुदायेनैव हेतुभावं भजन्ते नैकः कश्चित्कस्यचित्कारणं तथापि विवक्षयैकस्यापि कारणत्वं वक्तुं शक्यत इति कृत्वा तन्निजविलसितमुद्यानमस्माभिर्नानाविधभावनिबन्धन-मभिधीयत इति॥ नृपतिराह। सखे चारुकमिदं। इदानीं यद्भवता तदाभिहितमासीद्भगवतः पुरतो यथाहं देवायास्य कर्म-विलासस्य राज्ञः स्वरूपं निवेदयिष्यामि तन्निवेदयतु भवान् अहं श्रोतुमिच्छामि। सुबुद्धिराह। देव यद्येवं ततो विविक्ते स्थीयतां देवेन। नृपतिनोक्तं। एवं भवतु॥

ततोऽनुज्ञातौ मनीषिणा समुत्थायास्थानमण्डपात् प्रविष्टौ कक्षान्तरे राजामात्यौ। सुबुद्धिनाभिहितं। देव अयमत्र पर-मार्थः। ये ते भगवता चत्वारः पुरुषाः प्ररूपितास्तेषामुत्कृष्टतमा-स्तावत्सकलकर्मप्रपञ्चरहिताः सिद्धा अभिधीयन्ते। जघन्यमध्यमो-त्कृष्टाः पुनरेत एव बालमध्यमबुद्धिमनीषिणो विज्ञेयाः। अतः स कर्मविलासो राजा यो भगवता प्रतिपादितः स एतेषामेवंवि-धस्वरूपाणां जनको निजनिजकर्मोदयो विज्ञेयः। स एव हि

यथावर्णितवीर्यो नापरः। तस्य च तिस्रः शुभाशुभमिश्ररूपाः परिणतयः। ता एव भगवतामीषां मनीषिबालमध्यमबुद्धीनां शुभसुन्दर्यकुशलमाला सामान्यरूपेति नामभिर्जनन्य इति प्रतिपादिताः ता एव यतोऽमूनीदृशरूपतया जनितवत्यः। नृपतिराह। स तर्ह्यमीषां वयस्यः कोऽभिधीयतां। सुबुद्धिरुवाच। देव तत् सर्वानर्थकारि स्पर्शनेन्द्रियं विज्ञेयं॥ नृपतिना चिन्तितं। अये मयापीदं भगवता कथ्यमानं सर्वमाकर्णितमासीत् केवलं न सम्यग् विज्ञातं यथानेन। तदस्य सुबुद्धेरेवंविधबोधिसुसाधुभिः सह चिरपरिचयः कारणं। अहो वचनकौशलं। भगवता कथितमेवातस्तदामीषां मनीषिप्रभृतीनां सम्बन्धि सर्वमन्यव्यपदेशेन चरितं। अथवा किमत्र चित्रं। अत एव प्रबोधनरतयस्ते भगवन्तोऽभिधीयन्ते। तदेवं विचिन्त्याभिहितमनेन। सखे पर्याप्तमिदानीं विदितोऽस्माभिरेष वृत्तान्तः। केवलमिदमिदानीमभिधीयते। यदुत। यद्येष मनीषी विषयानुषङ्गं कियन्तमपि कालं भजेत ततो वयमप्यनेनैव सह दीक्षाग्रहणं कुर्वीमहि। यतः प्रथमदर्शनादारभ्य प्रवर्धितो ममास्योपरि स्नेहावन्धः न संचरति विरहकातरतयान्यत्र हृदयं न निवर्तते एतद्वदनकमलावलोकनाल्लोचने ततो नास्य विरहे वयं क्षणमप्यासितुमुत्सहामहे। न च तथाविधोऽद्यापि अस्माकमाविर्भवति चरणकरणपरिणामः। तदेनं तावदभ्यर्थय प्रणयस्नेहसारं। अनुभावय निरुपचरितशब्दादिभोगान्। प्रकटयास्य पुरतस्तत्स्वामिभावं। दर्शय वज्रेन्द्रनीलमहानीलकर्केतनपद्मरागमरकतवैदूर्यचन्द्रकान्तपुष्परागादिमहारत्नपूगान्। दर्शयापहसित-

चिद्प्रसुन्दरीलावण्यकाः कन्यकाः। सर्वथा तथा कथंचिदुपप्रलोभय यथा कियन्तमपि कालमस्माकमीहितमेव मनीषी निर्विचारं संपादयति। सुबुद्धिनाभिहितं। यदाज्ञापयति देवः। केवलमत्रार्थे किंचिदहं विज्ञपयामि। तद्युक्तमयुक्तं वा चन्तुमर्हति देवः। नृपतिराह। सखे सदुपदेशदानाधिकारिणां भवतां ग्रियकल्पे मय्यपलमियता सम्भ्रमेण। वदतु विवचितं निर्विकल्पमार्यः। सुबुद्धिरुवाच। देव यद्येवं ततो यत्तावदुक्तं देवेन यथा ममात्र मनीषिणि गुरुः स्नेहातिरेकः तद्युक्तमेव यतः समुचितो महतां गुणिषु पचपातः। स हि क्रियमाणः पापाणुपूगं दलयति सदाशयं स्फीतयति सुजनतां जनयति यशो वर्धयति धर्ममुपचिनोति मोक्षयोग्यतामालक्षयतीति। यत्पुनरुक्तं यथा कथंचिदुपप्रलोभ्य कियन्तमपि कालमेष धारणीय इति तस्मात्यन्तमुचितमाभासते यतो नैवमस्योपरि स्नेहाबन्धो दर्शितो भवति किं तर्हि प्रत्युत प्रत्यनीकतां संपद्यते। तथाहि।

घोरसंसारकान्तारचारनिःसारकाम्यया।
प्रवर्तमानं जैनेन्द्रे धर्मे जीवजगद्धिते॥
मनसा वचसा सम्यक् क्रियया च कृतोद्यमः।
प्रोत्साहयति यस्तस्य स बन्धुः स्नेहनिर्भरः॥
अलीकस्नेहमोहेन यस्तु तं वारयेज्जनः।
स तस्याहितकारित्वात्परमार्थेन वैरिकः॥
तस्मान्न धारणीयोऽयं स्वहितोद्यतमानसः।
एवमाचरता देव स्नेहोऽस्य विहितो भवेत्॥

न चैष शक्यते देव कृतैर्यत्नशतैरपि।
मनीषी लोभमानेतुं विषयैर्दिव्यकैरपि॥

यतः प्रादुर्भूतोऽस्य महात्मनो विषयविषविषमविपाकावेदनचतुरे भगवद्वचने सुनिश्चितः प्रबोधः विस्फुरितं सकलमलकालुष्यक्षालनक्षमं हृदयसरोवरे विवेकरत्नं समुल्लसितं यथावस्थितार्थस्वरूपनिरूपणनिपुणं सम्यग्दर्शनं संजातो निःशेषदोषमोषकश्चरणकरणपरिणामः। सति च भगवदवलोकनया जीवस्यैवंविधे कल्याणाभिनिवेशकारिणि गुणकदम्बके न रमते विषयेषु चित्तं प्रतिभासते हेयबुद्ध्या भवप्रपञ्चः इन्द्रजालायते निःसारतया सकलं जगद्विलसितं स्वप्नदर्शनायते क्षणदृष्टनष्टतयेष्टजनसमागमः। न निवर्तते प्रलयकालेऽपि कस्यचिदनुरोधेन मोक्षमार्गसाधनप्रवणा बुद्धिः। तदेवंस्थिते देव अस्योपप्रलोभनमाचरतामस्मादृशां केवलं मोहविलसितमाविर्भविष्यति न पुनः काचिदभिप्रेतार्थसिद्धिः। तदलमनेनास्थानारम्भेणेति॥ नृपतिराह। यद्येवं ततः किं पुनरधुना प्राप्तकालं। सुबुद्धिराह। देव निरूप्य दीक्षाग्रहणार्थमस्य प्रशस्तदिनं क्रियतां तदारात् सर्वादरेण महत्तरः प्रमोदः। नृपतिराह। यत्त्वं जानीषे॥

ततः समाहूतः सिद्धार्थो नाम सांवत्सरः। समागतस्त्वरया। प्रविष्टोऽभ्यन्तरे। राज्ञा दापितमासनं। कृतमुचितकरणीयं। कथितमाह्वानप्रयोजनं। ततो निरूप्य निवेदितमनेन यदुतास्मादिनात्सप्तमे दिनेऽभ्यन्तरेऽस्यामेव भाविन्यां शुक्लत्रयोदश्यां शुक्रदिने उत्तरभद्रपदाभियोगमुपगते शशधरे वहति शिवयोगे दिनकरो-

दयादतीते सपादे प्रहरदये दृपलग्नं सप्तग्रहकमेकान्तनिरवद्यं भविष्यति। तदाश्रीयतामिति। अभिमतं राजमन्त्रिणोः। परिपूज्य प्रहितः सांवत्सरः। गतं तद्दिनं। ततो द्वितीयदिनादारभ्य प्रमोदशेखरे तदन्यजिनायतनेषु च देवानामपि विस्मारितसुरालयसौन्दर्या विधापिता राज्ञा महोत्सवाः। दापितानि वरवरिकाघोषणपूर्वकं सर्वत्र महादानानि। विहारितो देवेन्द्रवदैरावतविभ्रमजयकरिवरारूढः स्वयं पदातिभावं भजता त्रिकचतुष्कचत्वरादिषु सुराकारैर्नागरकजनैः स्तूयमानो निरुपमविलासविस्तारमनुभावयता नरपतिना प्रतिदिनं नगरे मनीषी। प्राप्तोऽष्टमवासरः। तत्र तु नीतं निखिलजनसन्मानदानार्थमास्थानविनोदेन प्रहरदयं। अत्रान्तरे दिनकरचरितेन मनीषिचरितं सूचयता पठितं कालनिवेदकेन।

> नाशयित्वा तमो लोके कृत्वाह्लादं मनस्विनाम्।
> हे लोकाः कथयत्येष भास्करो वोऽधुना स्फुटम्॥
> वर्धमानः प्रतापेन यथाहमुपरि स्थितः।
> सर्वोऽपि स्वगुणैरेवं जनस्योपरि तिष्ठति॥

ततस्तदाकर्ण्य राजा सुबुद्धिप्रभृतीनुद्दिश्याह। अये प्रत्यासीदति स्नानवेला। ततः सज्जीकुरुत तूर्णं भगवत्पादमूलगमनसामग्रीं। सुबुद्धिरुवाच। देव अत्रैव वर्तते मनीषिपुण्यपरिपाटीव सर्वा सामग्री। तथाहि।

> अमी घणघणारावं कुर्वन्तः कनकोज्ज्वलाः।
> रथौघाः प्रस्थितास्तूर्णमायुक्तवरवाजिनः॥

एते संख्यामतिक्रान्ता राजवृन्दैरधिष्ठिताः ।
जीमूता इव नागेन्द्रा द्वारे गर्जन्ति मन्थरम् ॥
वर्याश्ववारैः संरुद्धाः कथंचिच्चटुलाननैः ।
खमापिबन्तोऽमी देव ह्रया हेषन्ति दर्पिताः ॥
अयं पदातिसङ्घातः क्षीरनीरेश्वरोपमः ।
मत्तः प्रयोजनं ज्ञात्वा सुवेषस्वलितोऽखिलः ॥
रत्नालङ्कारनेपथ्यसद्द्रव्यपटलाकुलाः ।
प्रस्थिता वारनारीणामेते वारा वरेक्षणाः ॥
मनीषिपुण्यसम्भाराकृष्टास्तूर्णं समागताः ।
एते विबुधसङ्घाता द्योतयन्ति नभस्तलम् ॥
एष नागरको लोकः कौतुकाक्षिप्तमानसः ।
कुरुते हर्षकल्लोलैः सागरक्षोभविभ्रमम् ॥

अथवा ।

मत्तो विदितवृत्तान्तो मनीषिगुणरञ्जितः ।
ज्ञातयुष्मदभिप्रायः को वाधाग्रगुणो भवेत् ॥

देव तस्मात्समुत्थातुमर्हथ यूयं। ततः समुत्थितौ मनीषिनरेन्द्रौ निर्गतौ द्वारदेशे। ततो रत्नकिङ्किणीजालकविभूषिते समारूढः प्रधानस्यन्दने मनीषी। ततः सुखसुकुमारासनोपविष्टः स्वयंमतिपन्नसारथिभावेन सह नरपतिना विलसत्किरीटांशुरञ्जितोत्तमाङ्गभागो ध्रियमाणेन निजयशोधवलेनातपत्रेण कपोलडोलायमानकुण्डलो धूयमानेन शशधरदीधितिच्छटाच्छेन वरविलासिनीकरवर्तिना चामरप्रकरेण स्थूलमुक्ताफलकलापविराजित-

वक्षःस्थलः पठतातितारमुद्दामबन्दिवृन्देन कटककेयूरखचितबाहुदण्डो नृत्यता तोषनिर्भरवारविलासिनीसार्थेन अतिसुरभिताम्बूलाङ्गरागप्रीणिताशेषेन्द्रियग्रामो बधिरयता दिक्चक्रवालं वरतूर्यनिर्घोषेण विशददिव्यांशुकप्रतिपन्नदेहो गायता मनोहारिकिन्नरसङ्घेन घूर्णमानविचित्रवनमालानिचयचर्चितशरीरो मुञ्चता हर्षातिरेकादुत्कृष्टसिंहनादसन्दर्भं देवसङ्घेन पूरिताशेषप्रणयिजनमनोरथः श्लाघयता नागरलोकेन तथासुरकुमाराकारधरोऽयमिति सकौतुकाभिः समागतोऽस्माकमयं दृष्टिपथमिति सहर्षाभिरस्मदभिमुखमवलोकयतीति सशृङ्गाराभिर्मदनरसवशीकृतहृदयतया नानाविधविलासाभिर्मामियं तिरोधाय दर्शनलोलतया स्वयमवलोकयतीति परस्परं सेर्ष्याभिर्गुरुजनोऽस्मानेवमवलोकयन्तीः पश्यतीति सलज्जाभिः प्रव्रजितः किलायं भविष्यतीति सशोकाभिरलं संसारेण योऽयमेवंविधैरपि त्यज्यत इति ससंवेगाभिरेवमनेकरसभावनिर्भरं हृदयमुद्वहन्तीभिर्निरीक्ष्यमाणमूर्तिर्वातायनविनिर्गतवदनसहस्राभिः पुरसुन्दरीभिरभिनन्द्यमानोऽम्बरविवरवर्तिनीभिः सुरसुन्दरीभिः सहितो रथान्तरारूढेन स्वप्रतिबिम्बसन्निभेन मध्यमबुद्धिनानुगम्यमानो रथकरिहरिगतैर्महासामन्तसमूहैर्महता विमर्देन प्राप्तो मनीषी निजविलसितोद्याने। रथादवतीर्य स्थितः क्षणमात्रं प्रमोदशेखरद्वारे परिवेष्टितो राजवृन्देन। इतश्च स्यन्दनारोहणादारभ्य राजा विशेषतस्तदा सत्परीक्षार्थं मनीषिस्वरूपं दत्तावधानो निरूपयति स्म। यावता तस्य विशुध्यमानाध्यवसायप्रक्षालितमनोमलकलङ्कस्य सत्यपि तादृशे हर्षहेतौ न

च्चचितस्तेन तिलतुषत्रिभागमात्रोऽपि चेतोविकारः प्रत्युत गाढतरं क्षारमृत्पुटपाकादिभिरिव विचित्रसंसारविलसितदर्शनसमुद्भूतैर्भावनाविशेषैर्निर्मलीभूतं चित्तरत्नं । ततः परस्परानुविद्धतया मनःशरीरयोर्जातमस्य देदीप्यमानं शरीरं । विलोकितं च राज्ञा यावत्तत्तेजसाभिभूतं दिनकरकरनिकरतिरस्कृतमिव तारकानिकुरम्बं न राजते मनीषिणोऽभ्यर्णवर्ति तद्राजकं । ततस्तदीयगुणप्रकर्षबहुमानेन राज्ञोऽपि विलीनं तद्विबन्धकं कर्मजालं संजातं शरणपरिणामो निवेदितः सुबुद्धिमध्यमबुद्धिमदनकन्दलीसामन्तादिभ्यो निजोऽभिप्रायः । ततोऽचिन्त्यमाहात्म्यतया महापुरुषसन्निधानस्य विचित्रतया कर्मचयोपशमस्य रञ्जितचित्ततया निष्कृत्रिमं मनीषिगुणैः समुल्लसितं सर्वेषां तदा जीववीर्यं । ततस्तैरभिहितं ।

साधु साधूदितं देव युक्तमेतद्भवादृशाम् ।
संसारे ह्यत्र निःसारे नान्यत्स्यात् विवेकिनाम् ॥

तथा हि ।

देव यद्यच्च संसारे किंचित्स्याद्रामणीयकम् ।
श्लाघ्यं सारमुपादेयं वस्तु सुन्दरमेव वा ॥
ततः किमीदृशाः सन्तः पूज्या युष्मादृशामपि ।
संसारेऽनेन मुख्येयुर्ज्ञाततत्त्वा महाधियः ॥
ततोऽमुदृशमस्रोकत्यागादेवावगम्यते ।
नान्यच्च किंचित्संसारे सारं चारकसन्निभे ॥
अतो मनीषिभिस्तके देव सेवात्र युज्यते ।
स्मातुं विज्ञाततत्त्वानां भवे भूरिभयाकरे ॥

अन्यच्च देव सर्वेषामस्माकमपि साम्प्रतम् ।
दृष्ट्वा मनीषिणश्चित्तं न चित्तं रमते भवे ॥
यथैवास्य प्रभावेण संजातश्चरणोद्यमः ।
अस्माकमेष निर्वाहं तथा तेनैव यास्यति ॥
ततोऽस्माननुजानीत संसारोच्छेदकारिणीम् ।
येन भागवतीं दीक्षामङ्गीकुर्मः सुनिर्मलाम् ॥

नृपतिरुवाच ।

अहो विवेको युष्माकमहो गम्भीरचित्तता ।
अहो वचनविन्यासस्तथाहो सत्त्वसारता ॥
साध्वध्यवसितं भद्रैः साधु प्रोत्साहिता वयम् ।
साधु भो क्षणमात्रेण त्रोटितं भवपञ्जरम् ॥
एवं सामान्यतस्तावत् सर्वेषामभिनन्दनम् ।
कृत्वा प्रत्येकमप्याह स राजा हर्षनिर्भरः ॥

तत्र सुबुद्धिं तावदुवाच ।

सखे विदितसंसारस्वभावेन त्वया गृहे ।
इयन्तं तिष्ठता कालं वयमेव प्रतीक्षिताः ॥
अन्यथा ते गृहे किं वा स्यादवस्थानकारणम् ।
को नाम राज्यलाभेऽपि भजेत्पाङ्कस्वरूपताम् ॥
तत्साधु विहितं साधु कृतोऽस्माकमनुग्रहः ।
एवमाचरता मित्र दर्शिता च सुमित्रता ॥

मध्यमबुद्धिं प्रत्याह ।

त्वमाद्यावेव धन्योऽसि यस्य सङ्गो मनीषिणा ।

प्रमादाल्लोकनाथस्य स्वकर्मविवरेण च।
यदा तु सत्त्वैर्लभ्येत प्रव्रज्येयं जिनोदिता ॥
तदा निर्धूय पापानि यान्ति ते परमां गतिम्।
अनन्तानन्दसंपूर्णां निःशेषक्लेशवर्जिताम् ॥
ततोऽमी ये पुरः प्रोक्ताः सर्वेऽपि भवभाविनः।
क्षुद्रोपद्रवसङ्घाता दूरापास्ता भवन्ति ते ॥

किं च।

इहापि भो भवन्त्येते प्रशमामृतपायिनः।
प्रव्रज्याग्राहिणो जीवा निर्बाधाः सुखपूरिताः ॥
सा च भागवती दीक्षा युष्माभिरधुना स्फुटम्।
संप्राप्ता तेन संप्राप्तं यत्प्राप्तव्यं भवोदधौ ॥
केवलं सततं यत्नः प्रमादपरिवर्जितैः।
यावज्जीवं विधातव्यो भवद्भिरिदमुच्यते ॥

यतः।

नाधन्याः पारमेतस्या गच्छन्ति पुरुषाधमाः।
ये तु पारं प्रजन्त्यस्यास्त एव पुरुषोत्तमाः ॥
ततस्तैः प्रणतैः सर्वैर्जजल्पे सूरिसंमुखम्।
इच्छामोऽनुग्रहं नाथ कुर्मो नाथानुशासनम् ॥
स्थगितामलदेशेन सुखप्रश्निकया मुदा।
अथान्तरे कृतः प्रश्नः शंखमर्दनसाधुना ॥

कथं।

विशालं निर्मलं धीरं गम्भीरं शुद्धदक्षिणम्।

दयापरीतं निश्चिन्तं देवाभिष्वङ्गवर्जितम् ॥
स्तिमितं जगदानन्दं यदा वाग्गोचरातिगम् ।
कथमीदृग्भवेच्चित्तं नाथ यादृङ् मनीषिणः ॥
यस्य चेष्टितमालोक्य शिथिलीभूतबन्धनाः ।
एते सर्वे वयं मुक्ता भीमात् संसारचारकात् ॥

गुरुरुवाच ।

या विज्ञाता त्वयाप्यस्य जननी शुभसुन्दरी ।
यावन्तस्तत्सुतास्तेषां सर्वेषामीदृशं मनः ॥
ततो गृहीततत्त्वोऽपि राजर्षिरिदमब्रवीत् ।
बोधार्थं मुग्धलोकानां विनयानतमस्तकः ॥
किं तस्याः शुभसुन्दर्या विद्यन्ते बहवः सुताः ।
अस्माभिश्च पुरा ज्ञातमयमेकपुत्रकः ॥

गुरुरुवाच । बाढं विद्यन्ते । तथाहि ।

ये ये त्रिभुवनेऽप्यत्र दृश्यन्तेऽनेन यादृशाः ।
ते सर्वे शुभसुन्दर्याः पुत्रा नास्त्यत्र संशयः ॥

किं च ।

ये केचिदुत्तमा लोके सत्समार्गानुयायिनः ।
ते पुत्राः शुभसुन्दर्यामुख्या ज्ञेया मनीषिणा ॥

राजर्षिरुवाच ।

यासौ बालस्य जननी भवद्भिरुपवर्णिता ।
भदन्त यावदन्योऽपि तस्याः किं सन्ति सूनवः ॥

नैव कल्पद्रुमोपेतो नरोऽकल्याणमर्हति ॥
अधुना चरितेऽप्यस्य दधानेन मतिं त्वया।
स्वभातुर्निर्विशेषैव दर्शिता तुल्यरूपता ॥
तत्साधु विहितं भद्र यः पश्चादपि सुन्दरः
सोऽपि सुन्दर एवेति यतो वृद्धाः प्रचक्षते ॥

ततो मदनकन्दली प्रत्याह।

धारं च सुकुमारं च देवि काञ्चनपद्मवत्।
तावकीनमिदं चित्तं येनाङ्गीकृतमीदृशम् ॥
प्रसिद्धा धर्मपत्नीति यत्त्वं लोकोपचारतः।
मम तत्सत्यतां नीतं कर्तव्येन त्वयाधुना ॥
तत्साधु विहितं देवि नास्त्यत्र भवपञ्जरे।
नियन्त्रितानां जीवानां कर्तव्यमपरं वरम् ॥

तथा।

यैरभ्युपगता दीक्षा तानन्यानपि भावतः।
स राजा मधुरैरेवं वाक्यैरानन्द्य तोषतः ॥

तद्यथा।

धन्या यूयं महात्मानः कृतकृत्या नरोत्तमाः।
यैरभ्युपगता तूर्णं सद्दीक्षा पारमेश्वरी ॥
तत्साधु विहितं भद्रा युष्माभिरेतद्भवादृशाम्।
यूयमेव परं लोके निर्मिथ्या मम बान्धवाः ॥

ततश्च।

राजपिण्डार्पणाद्राज्ये स्थापयित्वा सुलोचनम्।

ततः कृतान्यकर्तव्यः प्रविष्टो जिनमन्दिरे ॥

तत्र च ।

विहिताशेषकर्तव्याः पूजयित्वा जगद्गुरुम् ।
आचार्यभ्यो निजाकूतं ते सर्वेऽप्याचचक्षिरे ॥
ततोऽभिनन्दितास्तेऽपि सूरिभिः कलया गिरा ।
अलं विलम्बितेनात्र संसार इति भाषिणा ॥
ततः प्रवचनोक्तेन विधिना धूतकल्मषैः ।
सर्वे ते क्षणमात्रेण दीक्षिता गुरुभिर्जनाः ॥
अथ संवेगवृद्ध्यर्थं कल्पोऽयमिति वा क्षणम् ।
कृता समक्षं लोकस्य सूरिभिर्धर्मदेशना ॥

तद्यथा ।

अनाद्यनन्तसंसारे जन्ममृत्युभयाकरे ।
मौनीन्द्री दुर्लभा सत्त्वैः प्रव्रज्येयं सुनिर्मला ॥

यतः ।

तावद्दुःखान्यनन्तानि तावद्रागादिसन्ततिः ।
प्रभवः कर्मणस्तावत्तावज्जन्मपरम्परा ॥
विपदस्तावदेवैतास्तावत्सर्वा विडम्बनाः ।
तावद्दीनानि जल्पन्ति नरा एव पुरो नृणाम् ॥
तावद्दौर्गत्यसद्भावस्तावद्रोगसमुद्भवः ।
तावदेष महाक्लेशो घोरसंसारसागरः ॥
यावन्निःशेषसावद्ययोगोपरतिलक्षणा ।
एषा न लभ्यते जीवैः प्रव्रज्याप्रमादतः ॥

सूरिणाभिहितं। नितरां सन्ति। तथाहि।

ये ये त्रिभुवनेऽप्यत्र जघन्याः क्लिष्टजन्तवः।
ते तेऽकुशलमालायाः पुत्रा नास्त्यत्र संशयः॥
ते बालसदृशैरेव विज्ञेया दुष्टचेष्टितैः।
एतेऽकुशलमालायाः सूनवः सुपरिस्फुटाः॥

राजर्षिरुवाच। यद्येवं तर्हि।

तस्याः सामान्यरूपायाः किमन्ये सन्ति सूनवः।
भदन्त किं वा नो सन्ति मध्यबुद्धेः सहोदराः॥

सूरिणाभिहितं। बहुतमास्ते विद्यन्ते। यतः।

ये बालचरिताः केचिन्मनीषिचरिताश्च ये।
एतेभ्यो ये परे सत्त्वाः सर्वे तेऽमुष्य सोदराः॥
ये केचिच्छबलाचाराः समा मध्यमबुद्धिना।
सुताः सामान्यरूपायास्ते जीवा भुवनोदरे॥
सकाशादितराभ्यां ते गण्यमाना जगत्त्रये।
अनन्तगुणितास्तेन प्रोक्ता भूरितमा मया॥

राजर्षिरुवाच। भदन्त यद्येवं ततो मम चेतसि परिस्फुरति। यद्येवं व्यवस्थिते सत्येतदापन्नं। यदुत।

भार्यात्रयेण जनितं जघन्योत्तममध्यमम्।
सर्व्व कर्मविलासस्य जगदेतत्कुटुम्बकम्॥

सूरिरुवाच।

आर्य्य नैवात्र सन्देहः सम्यगार्य्येण लक्षितम्।
मार्गानुसारिणी बुद्धिर्भवत्येव भवादृशाम्॥

तथाहि ।

जघन्यमध्यमोत्कृष्टाः सर्वयोनिषु जन्तवः ।
विद्यन्ते केवलं नृत्वे व्यक्तभावा भवन्ति ते ॥

ततश्च ।

नरत्वेऽपि विनिर्दिष्टं व्याप्यैवेदं कुटुम्बकम् ।
यदत्र विदुषा कार्यं तदिदानीं निबोधत ॥
त्यक्तव्यं बालचरितं न कार्यस्तत्समागमः ।
मनीषिचरिते यत्नः कर्तव्यः सुखमिच्छता ॥
यतोऽत्र बहवो जीवाः प्रायो मध्यमबुद्धयः ।
ते च सम्यगनुष्ठानात् संपद्यन्ते मनीषिणः ॥
एतद्विज्ञाय भो भव्याः सर्वेऽपि गदिता मया ।
कार्यं मदनुरोधेन वृत्तमस्य मनीषिणः ॥
वर्जनीयश्च यत्नेन पापमित्रैः समागमः ।
यतः स्पर्शनसम्पर्कात् स बालो निधनं गतः ॥
वर्जनेन पुनस्तस्य मनीषी सुपरिस्फुटम् ।
लोके शेखरतां प्राप्य जातोऽयं मोक्षसाधकः ॥
कल्याणमित्रैः कर्तव्या मैत्री पुंसा हितैषिणा ।
इहामुत्र च विज्ञेया सा हेतुः सर्वसम्पदाम् ॥
दोषायेह कुसंसर्गः सुसंसर्गो गुणावहः ।
एतच्च द्वयमप्यत्र मध्यबुद्धौ प्रतिष्ठितम् ॥

तथा हि ।

बालः स्पर्शनसम्बन्धाद्दोषोऽभूद्दुःखभाजनम् ।

पुत्रोऽभूत्ततताह्लाद एष एव मनीषिणा ॥
तदिदं भो विनिश्चित्य बहिरङ्गान्तरैः सदा।
न कार्यो दुर्जनैः सङ्गः कर्तव्यः सुजनैः सह ॥

ततश्च।

इदमाकर्ण्य मौनीन्द्रं वचनं सुमनोहरम्।
प्रबुद्धा बहवः सत्त्वा जाता धर्मपरायणाः ॥
प्राप्ता देवा निजं स्थानं स्थितो राज्ये सुलोचनः।
गतोऽन्यत्रविहाराय सूरिः शिष्यगणैः सह ॥

ततश्च।

विहृत्य कालं भूयांसमागमोक्तेन वर्त्मना।
पर्यन्तकाले संप्राप्ते विधाय सकलं विधिम् ॥
ज्ञानध्यानतपोवीर्यवह्निनिर्दग्धकल्मषः।
मनीषी निर्वृतिं प्राप्तो हित्वा स्वं देहपञ्जरम् ॥
ये तु मध्यमबुद्ध्याद्यास्ते तनूभूतकर्मकाः।
गता मध्यमबुद्ध्याद्या देवलोकेषु साधवः ॥
बालस्य तु यदादिष्टं भदन्तैर्भाविचेष्टितम्।
तत्तथैवाखिलं जातं नान्यथा मुनिभाषितम् ॥

॥ स्पर्शनकथानकं समाप्तम् ॥

# उपमितिभवप्रपञ्चा कथा

(तृतीयप्रस्तावे अवशिष्टभागः)



विदुर उवाच । कुमार यदिदं मया ह्यः कथानकमाकर्णितमाकर्णयतश्च मम लङ्घितं दिनं । तेन युष्मत्समीपे नागतोऽस्मि । मयाभिहितं । भद्र सुन्दरमनुष्ठितं । यतोऽतिरमणीयमिदं कथानकं बुध्यत एव श्रोतुं । अहो अत्यन्तदुरन्तः पापमित्रसम्बन्धो यतस्तस्य बालस्य स्पर्शनसम्पर्कादिहामुत्र च निबिडविडम्बनागर्भा दुःखपरंपरैव केवलं संपन्ना नान्यत्किंचनेति । विदुरेण चिन्तितं । बुद्धस्तावदनेन कथानकतात्पर्यार्थ इति । भविष्यति मे वचनावकाशः ॥ इतश्च तत्रावसरे मत्तो नातिदूरे वर्तते वैश्वानरः । श्रुतं तेन मामकीनं वचनं । चिन्तितमनेन । अये विरूपको नन्दिवर्धनस्योल्लापो । समुत्पादितप्रायोऽयमनेन विदुरेण । तस्य सुन्दर-

मिदं वर्तते । दृष्टः खल्वेष विदुरो ज्ञापयिष्यत्यस्य मदीयस्वरूपं । इति साशङ्कः संपन्नो वैश्वानरः ॥ विदुरेणाभिहितं । कुमार सत्यमिदं सम्यगवधारितं कुमारेण । अन्यच्च । प्रकृतिरेषा प्रायः प्राणिनां यथा यत्र कुत्रचित्किंचन दृष्टं श्रुतं वा सर्वमात्मविषये योजयन्ति । ततो मयापीदं कथानकमनुश्रुत्य स्वहृदये चिन्तितं । यदुत । यदि कुमारस्य कदाचिदपि पापमित्रसम्बन्धो न भवति ततः सुन्दरं संपद्यते । मयाभिहितं । भद्र किमत्र चिन्तनीयं । नास्त्येव मे नापि भविष्यति पापमित्रसम्बन्धगन्धोऽपीति । विदुरः प्राह । वयमप्येतावदेवार्थयामहे । ततः स्थितो मदीयकर्णाभ्यर्णे विदुरः । शनैः शनैरभिहितं चानेन । यदुत । केवलमेषोऽपि वैश्वानरो लोकवार्त्तया दुष्टप्रकृतिः श्रूयते । तदयं सम्यक् परीक्षणीयः कुमारेण । मा भूदेष स्पर्शनवद्वालस्य पापमित्रतया भवतोऽनर्थपरंपराकारणमिति ।

निरीक्षते च तस्मिन्नवसरे वैश्वानरः साकूतः सत्वभिमुखो मदीयवदनं । लक्षितोऽहमनेन सुखविकारतस्तैर्विदुरवचनैर्दूयमानः । ततः कृता वैश्वानरेण मां प्रति सा पूर्वसाङ्केतिका संज्ञा । भक्षितं मया क्रूरचित्ताभिधानं तद्वटकं । ततस्तत्प्रभावान्मे क्षणेन वृद्धोऽन्तस्तापः समुल्लसिताः स्वेदबिन्दवो जातं गुञ्जार्धसन्निभं शरीरं संपन्नं विषमदष्टोष्ठं भग्नोग्रभ्रुकुटितरङ्गभंगकरालं वक्त्रकुहरं । ततो भद्रे समुपगृहीतमङ्गेन तया वैश्वानरवटकप्रभावाभिभूतात्मना मया पापकर्मणानाकलय्य तस्य वत्सलतामनालोच्य हितभाषितामविगणय्य चिरपरिचयं परित्यज्य स्नेहभावमुररीकृत्य दुर्जनतां सर्वथा

भूमीग्रथनलोचादिकायक्लेशविधानतः ।
ततः सुखस्पृहां हित्वा जायन्ते ते निराकुलाः ॥
ततः सकलकर्मांशक्लेशविच्छेदभाजनम् ।
भूत्वा ते निर्वृतिं यान्ति निर्जित्य स्पर्शनेन्द्रियम् ॥
तेनोत्कृष्टतमा राजन्निर्दिष्टास्ते विचक्षणैः ।
ये चैवमनुतिष्ठन्ति विरलास्ते जगत्त्रये ॥
ततो भागवतं वाक्यमाकर्ण्येदं मनीषिणः ।
अभूच्चेतसि सङ्कल्पस्तदानीं चारुचेतसः ॥
अये भगवता यादृग् वर्णितं स्पर्शनेन्द्रियम् ।
अत्यन्तविषमं लोके स्पर्शनस्तादृशः परम् ॥
यतो बोधप्रभावेन मम पूर्वं निवेदितः ।
यथान्तरङ्गनगरे वास्तव्योऽयं महाबलः ॥
तन्नूनं पुरुषव्याजसंस्थितं स्पर्शनेन्द्रियम् ।
अस्मान् प्रतारयत्येतदन्यथा कथमीदृशम् ॥
ततो भगवतादिष्टा ये चोत्कृष्टतमा नराः ।
कथितः स्पर्शनेनाऽपि भवजन्तुस्तथाविधः ॥
तथाहि मां निराकृत्य सदागमबलेन सः ।
सन्तोषान्निर्वृतिं प्राप्त इति तेन निवेदितम् ॥
तस्मात्सारस्य सन्देहः साम्प्रतं पुरुषत्रयं ।
श्रुत्वाशेषं विजानामि यदत्र परमाक्षरम् ॥
अयं हि भगवान् सूरिर्भुवनं सचराचरम् ।
ज्ञानालोकेन जानीते सन्देहदलनः परम् ॥

यावत्स चिन्तयत्येवं प्राकृतो विस्मितेक्षणः।
*तावल्लचितचित्तेन पृष्टो मध्यमबुद्धिना॥*

कथम्।

मनीषिस्मितरां चित्ते भावितस्त्वं विलोक्यसे।
किमत्र भवता किञ्चित्तत्त्वमवधारितम्॥
मनीषिणोक्तं किं भ्रातर्भवता किं न लक्षितम्।
किमेवं स्फुटवाक्येन कथयत्यपि सन्मुनौ॥
अनेन हि समादिष्टं यादृशं स्पर्शनेन्द्रियम्।
वयस्यस्तावकस्तादृक् स्पर्शनो नात्र संशयः॥
कथमेतत्ततः पृष्टे पुनर्मध्यमबुद्धिना।
आख्यातं कारणं तेन निःशेषं तु मनीषिणा॥
बालस्तु पापकर्मत्वात्केवलं वीक्षते स्त्रियः।
अनादरपरस्तत्र हितेऽपि वचने गुरोः॥
अथ राज्ञः समीपस्था पिबन्ती वचनामृतम्।
आचार्यीयं विशालाक्षी राज्ञी मदनकन्दली॥
सा दृष्टा तेन बालेन ततोऽस्य हृदि संस्थितम्।
नूनं मे हृदयस्येष्टा सेयं मदनकन्दली॥
यतोऽवदातमेतस्यास्तापनीयसमप्रभम्।
शरीरं दर्शनादेव मृदुतां सूचयत्यलम्॥
रक्तराजीवसच्छायं विभाति चरणद्वयम्।
अलक्षितसिराजालं कूर्मोन्नतमनुत्तमम्॥
बिभर्ति तोरणाकारं भवने माकरध्वजे।

जंघायुग्मं सुसौन्दर्यादेतस्यास्तेन राजते ॥
मेखलायाः कलापेन बद्धमन्मथवारणम् ।
नितम्बबिम्बमेतस्या विशालमनुतायते ॥
भारेणेव वशीभूतो विराजितवलित्रयः ॥
एतस्या राजते मध्यो रोमराजिविभूषणः ॥
गंभीरा सज्जनस्येव हृदयं सुमनोहरा ।
राजते नाभिरेतस्याः सत्कामरसकूपिका ॥
वहत्येषा स्तनौ वृत्तौ पीवरौ कुंभविभ्रमौ ।
उत्तुङ्गकठिनौ चारू हृदयेन पयोधरौ ॥
अन्यच्च धारयत्येषा सुकुमारं मनोहरम् ।
पुष्पप्राग्भारसम्प्राप्यं रम्यं बाहुलतादयम् ॥
कराभ्यां निर्जितौ मन्ये नूतनौ रागसुन्दरौ ।
एतस्यायारुरूपाभ्यां रक्ताशोकस्य पल्लवौ ॥
दधत्यां पारिमाण्डल्यं कन्धरायां सुवेधसा ।
कृतं रेखात्रयं मन्ये त्रिलोकजयसूचकम् ॥
अधरो विद्रुमच्छेदसन्निभो भाति पेशलः ।
राजेते विलसद्दीप्ती कपोलौ कोमलामलौ ॥
ये कुन्दकलिकाकारा विलसत्किरणोत्कराः ।
एतस्या वदने दृष्ट्वा भान्ति ते भुवनत्रये ॥
सितासितं सुविस्तीर्णं तारराजिविराजितम् ।
पक्ष्मलं जनितानन्दमेतस्या लोचनदयम् ॥
उत्तुङ्गो नासिकावंशो भूषते दीर्घपक्ष्मले ।

अस्या ललाटमलकैः कलितं बत राजते ॥
अनुरूपं करोमीति नूनं जातः प्रजापतेः ।
बहुमानो निजे चित्ते ह्रस्याः श्रवणद्वयम् ॥
मालतीकुसुमामोदमोदितालिकुलाकुलः ।
अस्याः सुस्निग्धकुटिलः केशपाशो विराजते ॥
एतस्या मन्मथोल्लापानाकर्ण्य श्रुतिपेशलान् ।
मन्ये स्वविस्वरत्वेन लज्जिता किल कोकिला ॥
उच्चित्योच्चित्य यत्सारमेतस्या वरपुद्गलैः ।
धाचा विनिर्मितं रूपमन्यथा कथमीदृशम् ॥
अतोऽस्यास्तादृशः स्पर्शो युक्त एव न संशयः ।
न जालस्मृतकुण्डेषु कटुत्वमवतिष्ठते ॥
एषाप्यभिलषत्येव मां यतोऽर्धनिरीक्षितैः ।
निरीक्षतेऽतिलोलाक्षी स्निग्धदृष्ट्या मुहुर्मुहुः ॥
एवंविधविपर्यासविकल्पाकुलमानसः ।
स बालोऽलीकसौभाग्यगर्वितो मूढतां गतः ॥

सूरिरुवाच ।

तदेवं कथितास्तावत्सर्वोत्कृष्टा मया नराः ॥
इदानीमुत्कृष्टानां यत्स्वरूपं तदुच्यते ॥

एवं च वदति भगवति सूरौ ।

चारुकं सूरिणा चारु परिचिन्त्य मनीषिणा ।
श्रोतव्यं भवताऽपीदं मध्यबुद्धिः प्रचोदितः ॥

सूरिरुवाच ।

उत्कृष्टास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम्।
अवाप्य मानुषं जन्म प्रज्ञबुद्ध्यावधारितम्॥
भाविभद्रतया तेषां परिस्फुरति मानसे।
न चैतत्सुन्दरं हन्त जीवानां स्पर्शनेन्द्रियम्॥
ततो बोधप्रभावेण लक्षयन्त्यपि ते नराः।
कुर्वन्तोऽन्वेषणं तस्य मूलशुद्धिं परिस्फुटाम्॥
ततो विज्ञाय ते तस्य लोकवञ्चनतां नराः।
सर्वत्र चकिता नैव विश्वसन्ति कदाचन॥
न चानुकूलचारित्वं भजन्ति विजितस्पृहाः।
ततस्तज्जनितैर्दोषैर्न युज्यन्ते विचक्षणाः॥
शरीरस्थितिमात्रार्थमाचरन्तोऽपि तत्प्रियम्।
तस्य गृद्धेरभावेन भवन्ति सुखभाजनम्॥
प्राप्नुवन्ति यशः शुभ्रमिह लोकेऽपि ते नराः।
स्वर्गापवर्गमार्गस्य निकटे तादृशाशयाः॥
गुरवः केवलं तेषां नाममात्रेण कारणम्।
मोक्षमार्गे प्रवर्तन्ते स्वत एव हि ते नराः॥
अन्येषामपि कुर्वन्ति ते सन्मार्गावतारणम्।
तदाख्यं ये प्रवर्तन्ते विज्ञाय गुणकारकम्॥
ये पुनर्न प्रपद्यन्ते तदाख्यं बालिशा जनाः।
तेषामनादरं कृत्वा ते तिष्ठन्ति निराकुलाः॥
(?)तदेव भवन्त्येते देवाचार्यतपस्विनाम्।
पूजासत्कारकरणे रतचित्ता महाधियः॥

एवं भाषिणि च भगवति प्रबोधनरतिसूरौ मनीषिणा चिन्तितम्।

यथेदमुत्कृष्टानां श्लाघितं चरितं नृणाम् ।
तथानुभवसिद्धं मे किंचिदात्मनि भासते ॥

मध्यमबुद्धिना चिन्तितम् ।

उत्कृष्टपुंसां यादृशा गुरुणा वर्णिता गुणाः ।
एते गुणाः परं सर्वे घटन्तेऽत्र मनीषिणि ॥

गुरुरुवाच ।

तदेवं तावदुत्कृष्टा वर्णिताः पुरुषा मया ।
अधुना मध्यमानां यत्स्वरूपं तन्निबोधत ॥
मध्यमास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम् ।
अवाप्य मानुषं जन्म मध्यबुद्ध्यावधारितम् ॥
स्पर्शनेन्द्रियसम्पाद्ये ते सुखे गृद्धमानसाः ।
पण्डितैरनुशिष्टाश्च दोलायन्ते स्वचेतसा ॥
चिन्तयन्ति निजे चित्ते ते दोलायितबुद्धयः ।
विचित्ररूपे संसारे किमत्र बत कुर्महे ॥
भोगानेके प्रशंसन्ति रमन्ते सुखनिर्भराः ।
अन्ये शान्तान्तरात्मानो निन्दन्ति विगतस्पृहाः ॥
तदत्र कतरो मार्गो मादृशामिह युज्यते ।
न लक्षयामोऽन्तश्चित्तं सन्देहमवगाहते ॥
तस्मात्कामविलम्बोऽत्र युक्तोऽस्माकं प्रयोजने ।
नैवैकपक्षनिक्षेपो विधातुमिह युज्यते ॥
एषा च जायते बुद्धिर्या तेषां कर्मपद्धतिः ।

तत्संकाशा नृणां यस्माद् बुद्धिः कर्मानुसारिणी ॥
ततस्ते स्पर्शनादस्य मन्यन्ते सुखहेतुताम् ।
अनुकूले च वर्तन्ते किं तु नात्यन्तलोलुपाः ॥
ततो लोकविरुद्धानि नाचरन्ति कदाचन ।
स्पर्शनेन्द्रियलौल्येन नापायान् प्राप्नुवन्त्यतः ॥
विचक्षणोक्तं बुध्यन्ते विशेषं वचनस्य ते ।
अदृष्टदुःखास्तद्वाक्यं केवलं नाचरन्ति भोः ॥
मैत्रीं बालिशलोकेन कुर्वन्ति स्नेहनिर्भराम् ।
लभन्ते तद्विपाकेन रौद्रां दुःखपरंपराम् ॥
अवर्णवादं लोके च प्राप्नुवन्ति न संशयः ।
संसर्गः पापलोकेन सर्वानर्थकरो यतः ॥
यदा पुनः प्रपद्यन्ते विदुषां वचनानि ते ।
आचरन्ति च विज्ञाय तदीयां हितरूपताम् ॥
तदा ते विगताबोधा भवन्ति सुखिनो नराः ।
महापुरुषसम्पर्काल्लभन्ते मार्गमुत्तमम् ॥
पण्डिता इव ते नित्यं गुरुदेवतपस्विनाम् ।
बहुमानपराः सन्तः कुर्वन्त्यर्चनवन्दनम् ॥
तदिदमाचार्यीयं वचनमाकर्ण्य मध्यमबुद्धिना चिन्तितम् ।
य एते सूरिणा प्रोक्ता मध्यमानां गुणागुणाः ।
स्वसंवेदनसंसिद्धास्ते ममापि स्वगोचरे ॥
मनीषिणा चिन्तितम् ।
यदिदं सूरिणादिष्टं वचनैः सुपरिस्फुटैः ।

चरितं मध्यमानां तन्मदीये भ्रातरि स्थितम् ॥

सूरिरुवाच।

तदेवं कथितास्तावन्मध्यमानां गुणागुणाः।
जघन्यनरसम्बन्धि स्वरूपमधुनोच्यते ॥
जघन्यास्ते नरा ज्ञेया यैरिदं स्पर्शनेन्द्रियम्।
अवाप्य मानुषं जन्म बन्धुबुद्ध्यावधारितम् ॥
परारिरूपतामस्य न जानन्त्येव ते स्वयम्।
परेषामिति रुष्यन्ति विदुषां हितभाषिणाम् ॥
स्पर्शनेन्द्रियसम्पाद्ये पामाकण्डूयनोपमे।
परमार्थेन दुःखेऽपि सुखलेशेऽपि रटप्लवः ॥
स्वर्गोऽयं परमार्थोऽयं लब्धोऽयं सुखसागरः।
अस्माभिरिति मन्यन्ते विपर्यासवशं गताः ॥
ततो हार्दं तमस्तेषां प्रविसर्पति सर्वतः।
विवेकशोषकाश्चित्ते वर्धन्ते रागरश्मयः ॥
नष्टसत्पथसद्भावा ध्याध्यन्धीभूतबुद्धयः।
कुर्वन्तोऽनार्यकार्याणि वार्यन्ते केन ते ततः ॥
धर्मलोकविरुद्धानि निन्दितानि पृथग्जनैः।
कार्याण्याचरतां लोकः प्रचुभावं प्रपद्यते ॥
कुलं चन्द्रांशुविशदं ते कुर्वन्ति मलीमसम्।
आत्मीयचरितैः पापाः प्रयान्ति जनहास्यताम् ॥
अगम्यगमनासक्ता निर्मर्यादा नराधमाः।
अर्कतूलादपि परं ते जने यान्ति लाघवम् ॥

दुर्लभः स्त्र्यादिविषयः कथञ्चिदसदाग्रहः ।
यदा पुनर्विवर्तेत हृदयेऽतिमहाग्रहः ॥
तदा ते यान्ति दुःखानि यास्तु लोके विडम्बनाः ।
प्राप्नुवन्ति न शक्यन्ते ता व्यावर्णयितुं गिरा ॥
केवलं गदितुं शक्यमियदेव समासतः ।
लभन्ते ते नराः सर्वा लोके दुःखविडम्बनाः ॥
प्रकृत्यैव भवन्त्येते गुरुदेवतपस्विनाम् ।
प्रत्यनीका महापापा निर्भाग्या गुणदूषणाः ॥
सन्मार्गपतितं वाक्यमुपदिष्टं हितैषिणा ।
केनचिन्न प्रपद्यन्ते ते महामोहदूषिताः ॥
ततश्चेदं मुनेर्वाक्यं विनिश्चित्य मनीषिणा ।
विचिन्तितमिदं चित्ते तथा मध्यमबुद्धिना ॥
स्पर्शनेन्द्रियलुब्धानां यदेतदुपवर्णितम् ।
नृणां वृत्तं जघन्यानां सूरिभिर्विशदाचरैः ॥
तदेतत्सकलं बाले प्रतीतं स्फुटमावयोः ।
नाप्रतीतं वदन्त्येते यदि वा वरसूरयः ॥
बालेन तु गुरोर्वाक्यं न मनागपि लक्षितम् ।
तस्यां मदनकन्दल्यां चिप्तचित्तेन पापिना ॥

सूरिरुवाच ।

तदेवं भो महाराज जघन्यनरचेष्टितम् ।
निवेदितं मया तुभ्यं तच्चेदमभिधीयते ॥
एते जघन्या भूयांसो भुवने सन्ति मानवाः ।

इतरे तु यतः श्लोकाः सकलेऽपि जगत्त्रये ॥
स्पर्शनेन्द्रियजेतारो विरला भुवने नराः।
तेनास्माभिरिदं पूर्वं भवद्भ्यः प्रतिपादितम् ॥

नरपतिरुवाच।

धर्मं यतो न कुर्वन्ति स हेतुः प्रतिपादितः।
भगवन्नाशितोऽस्माकं भवद्भिः संशयो महान् ॥

अत्रान्तरे तु सुबुद्धिमन्त्रिणाऽभिहितं। भगवन् य एते जघन्यमध्यमोत्कृष्टोत्कृष्टतमरूपतया चतुर्भेदाः पुरुषाः पश्चानुपूर्व्या भगवद्भिः स्वरूपतो व्याख्याताः एते किमेवंस्वरूपाः प्रकृत्यैव भवन्ति आहोस्विदेवंविधस्वरूपजनकमेतेषां किञ्चित्कारणमस्तीति कथयन्तु भगवन्तः। भगवानाह। महामन्त्रिन्नाकर्णय। न तावत्प्राकृतमिदमेतेषां स्वरूपं किं तर्हि कारणजं। तत्र ये तावदुत्कृष्टतमाः पुमांसः प्रतिपादिताः ते केवलमुत्कृष्टेभ्यो निष्पन्नस्वप्रयोजनतया भिद्यन्ते न परमार्थेन। यतस्त एवोत्कृष्टा यदावाप्य मनुष्यभावं विज्ञाय भवस्वरूपमाकलय्य मोक्षमार्गं तदासेवनेन दलयित्वा कर्मजालं निराकृत्य स्पर्शनेन्द्रियं निर्वृतिं प्राप्ता भवन्ति तदोत्कृष्टतमा इत्यभिधीयन्ते। निर्वृतौ च तेषां स्वरूपेणावस्थानं। तामवस्थामपेक्ष्य न किञ्चिज्जनकमस्ति। तेनोत्कृष्टतमानां पुरुषाणां न कश्चिज्जनको जननी वा। एते पुनर्जघन्यमध्यमोत्कृष्टाः पुरुषाः संसारोदरविवरवर्त्तिनः स्वकर्मविचित्रतया जायन्ते। तस्मात्स एव कर्मविलासस्तेषां जनकः। तच्च कर्म त्रिविधं वर्तते। तद्यथा। शुभमकुशलं सामान्यरूपं च। तत्र या कर्मपद्धतिः शुभतया सुन्दरी सा शुभसुन्दरी मनुष्यलोकोत्कृष्टानां

जननी। या पुनरकुशलकर्ममाला (सा) जघन्यमनुष्याणां जननी। या पुनः कुशलाकुशलतया सामान्यस्वरूपा कर्मपद्धतिः सा मध्यमनराणां जनयित्री विज्ञेयेति॥ मनीषिणा चिन्तितम्। अये न केवलं गुणैश्चरितेन चैतेऽस्माकमुत्कृष्टमध्यमजघन्याः पुरुषाः समानरूपा भगवद्भिर्व्याख्याताः किं तर्हि जननीजनकव्यतिकरोऽपि अस्माकमेतैः सह तुल्य एव भगवता दर्शितः। तस्मान्नूनमेतद्रूपैरेवास्माभिर्भवितव्यम्। तथाहि। योऽसौ भवजन्तुर्मां निराकृत्य निर्वृतिं प्राप्त इति स्पर्शनेनास्मभ्यं निवेदितो न तस्य तेन जननी जनको वा कश्चिदाख्यातः। तस्मादुत्कृष्टतमोऽसाविति निश्चीयते। अस्माकं पुनस्त्रयाणामपि कर्मविलासो जनकः भगवदादिष्टाभिधाना एव जनन्यः। तस्मादिदमत्रावसीयते यदुत जघन्यो बालो मध्यमो मध्यमबुद्धिः उत्कृष्टोऽहमिति॥ सुबुद्धिनाभिहितं। भगवन्नेतेषामुत्कृष्टतमादीनां पुरुषाणां किं सर्वदावस्थितमेव रूपं परावर्त्तोऽपि भवति। भगवानाह। महामन्त्रिन् उत्कृष्टतमानां तावदवस्थितमेव रूपं न कदाचिदन्यथाभावं ते भजन्ते। इतरेषां पुनरनवस्थितं स्वरूपं यतः कर्मविलासायत्ताः खल्वेते वर्तन्ते। विषमशीलश्चासौ प्रकृत्या कदाचिदुत्कृष्टानपि मध्यमयति जघन्ययति वा मध्यमानपि चोत्कृष्टयति जघन्ययति वा जघन्यानपि मध्यमयति उत्कृष्टयति वा। तस्मादनेन कर्मविलासेन मुक्तानामेवैकरूपता भवति नेतरेषाम्॥ मनीषिणा चिन्तितम्। एतदपि घटत एवास्मद्व्यतिकरे। तथाहि। विषमशील एवास्मज्जनको यतः कथितं तेनैव मे यथा मयि प्रतिकूले यदुपपद्यते तत्सम्पन्नं बालस्येति। ततश्च यो निजतनयस्यापि प्रतिकूलचारितया

एवंविधां दुःखपरंपरां संपादयति स कथमन्येषां धनायिष्यति ॥ सुबुद्धिनाभिहितम् भगवन्नुत्कृष्टतमाः पुरुषाः कस्य माहात्म्येन भवन्ति । गुरुराह न कस्यचिदन्यस्य किं तर्हि स्ववीर्येण । सुबुद्धिनाभिहितं । कस्तथाविधवीर्यलाभोपायः । मुनिराह । भागवती भावदीक्षा ॥ मनीषिणा चिन्तितं । अये यद्येवं ततो युज्यते ममोत्कृष्टतमस्य भवितुं । किमनयाशेषविडम्बनया । गृह्णाम्येनां भगवदादिष्टां भागवतीमेव दीक्षामिति ॥ भावतः सञ्जातो मनीषिणश्चरणपरिणामः । मध्यमबुद्धेरप्येवं गुरुमन्त्रिणोः परस्परजल्पमाकर्णयतः सञ्जातश्चरणाभिलाषः । केवलं नाह-मेतावतो नैष्ठिकानुष्ठानस्य क्षम इति विचिन्तितमेनन । सुबुद्धिनाऽभिहितम् ।

भदन्त योऽयमस्माभिर्गृहिधर्मोऽभिधीयते ।
एष तादृग्वीर्यस्य किं भवेत्कारणं न वा ॥

गुरुराह ।

स्यादेष पारंपर्येण तादृशस्यापि कारणम् ।
वीर्यस्य न पुनः साक्षाद्यतो मध्यजनोचितः ॥
उत्कृष्टतां करोत्येष साक्षात्सम्यङ् निषेवितः ।
ततस्तादृग्वीर्यस्य पारंपर्येण साधकः ॥
अशेषक्लेशविच्छेदकारिका भवदारिका ।
तावद्भागवती दीक्षा दुर्लभैव सुनिर्मला ॥
किं तु श्रावकधर्मोऽपि भवतानवकारकः ।
अत्यन्तदुर्लभो ज्ञेयो महामात्य भवोदधौ ॥

तदेष परमार्थः ।

उत्कृष्टतमतां साक्षाद्वीर्यातिशययोगतः ।
प्रव्रज्या साधयत्युच्चैरेष तु व्यवधानतः ॥
तदाकर्ण्य ततश्चित्ते कृतं मध्यमबुद्धिना ।
युक्तो ममैषोऽनुष्ठातुं गृहिधर्मो जिनोदितः ॥

इतश्चाकुशलमालया स्पर्शनेन च मध्यवर्त्तितया विधुरितचित्तवृत्तेर्बालस्य विवर्धन्ते विपर्यासविकल्पाः। यदुताहो अस्या रूपातिशयः अहो सुकुमारता। अन्यच्चाभिमतोऽहमस्याः यतो विलोकयत्येषा मामर्द्धाक्षिविक्षेपैरेतदङ्गसङ्गसुखामृतासेकानुभवनेनाधुना मे सफलं भविष्यति जन्मेति ॥ ततश्चैवंविधवितर्कपरंपरापर्याकुलीभूतचेतसस्तस्य विस्मृतमात्मस्वरूपं जातं मदनकन्दलीग्रहणैकतानमन्तःकरणं। ततोऽविचार्य कार्याकार्यमन्ध इव ग्रहगृहीत इव तस्यामेव मदनकन्दल्यां निश्चलविन्यस्तनयनमानसः पश्यत एव तावतो जनसमुदायस्य शून्यपादपातं तदभिमुखं धावति स्म। ततः किमेतदिति उत्थितो जनहाहारवः। प्राप्तोऽसौ मदनकन्दलीसमीपं। ततः सावेगं क एष इति निरीक्षितोऽसौ नरपतिना। लक्षितं दृष्टिविकारेण तदाकूतं। स एवायं पापो बाल इति प्रत्यभिज्ञातोऽनेन। सञ्जातास्य कोपारुणा दृष्टिः कृतं भासुरं वदनं। मुक्तो हुंकारः। ततो बालस्यादृष्टविपाकतया प्रादुर्भूतभयातिरेकस्य नंष्टो मदनज्वरः प्रत्यागता चेतना समुत्पन्नं दैन्यं। ततः पश्चान्मुखं नंष्टुं प्रवृत्तो यावच्छिथिलीभूतानि सन्धिबन्धनानि विलीयते शरीरं भग्नो गतिप्रसरः। तथापि कतिचित्पदानि कथञ्चिद्गत्वा

प्रकम्पमानसर्वगात्रः पतितोऽसौ भूतले। अत्रान्तरे प्रकटीभूतः स्पर्शनो। निर्गतो भगवद्वग्रहात्। गतो दूरदेशे। स्थितस्तं प्रतीचमाणो। विरतः कलकलो। लज्जितौ मनीषिमध्यमबुद्धी बालचरितेन। ततः कोऽस्यापि वराकस्योपरि कोप इति विचिन्त्य शान्तीभूतो राजा। पृष्टोऽनेनाचार्यो। यदुत भगवन्नलौकिकमिदमस्य पुरुषस्य चेष्टितं अतीतमिव विचारणायाः अश्रद्धेयमनुभूतवृत्तान्तानाम्। तथाहि विमलज्ञानालोकेन साचाद्भूतसमस्तभुवनवृत्तान्तः पश्यत्येव भगवाननेन यत्पूर्वमाचरितमासीत् यच्चेदानीमध्यवसितं। तथापि ममेदमत्र कौतुकं। यदुत तत्पूर्वकमस्याचरणं कदाचिदिविचित्रतयासत्त्वचरितस्य संभाव्येत। इदमधुनातनं पुनर्महदिन्द्रजालमिव प्रत्यक्षमपि ममाश्रद्धेयं प्रतिभासते। यतो भगवति रागादिविषधरोपशमवैनतेये सन्निहितेऽपि कथमतिक्लिष्टजन्तूनामप्येवंविधोऽध्यवसायः संभवेदिति। भगवताभिहितं। महाराज न कर्त्तव्योऽत्रातिविस्मयो। यतो नास्य पुरुषस्य तपस्विनो दोषोऽयम्। नृपतिरुवाच। तर्हि कस्याऽयं दोषः। भगवानुवाच। दृष्टस्त्वयास्य शरीरान्निर्गत्य योऽयं बहिःस्थितः पुरुषः। नृपतिनाभिहितं। सुष्टु दृष्टः। भगवानाह। यद्येवं ततो ऽस्यैवायं समस्तोऽपि दोषो। यतोऽस्य वशवर्त्तिनानेन पूर्वकमिदं समस्तमाचरितम्। अनेन हि वशीकृताः पुरुषास्तन्नास्त्येव किञ्चिज्जगति पापं यन्नाचरन्ति। तस्मान्नात्र किञ्चिदलौकिकं विचारातीतमश्रद्धेयं वा भवद्भिः संभावनीयम्। नरपतिरुवाच। यद्येवं ततः किमित्ययं पुरुषोऽमुं शरीरवर्त्तिनमात्मनोऽनर्थहेतुमपि धारयति स्म। भगवानाह। न जानात्येष वराकोऽस्य दुःशीलतां। परमरिपुरपि

गृहीतोऽयमनेन स्निग्धबन्धुबुद्ध्या। नरपतिरुवाच। किमत्र पुनः कारणं। भगवताऽभिहितं। अस्य शरीरे योगशक्तिद्वारेण कृतानुप्रवेशा अकुशलमाला नाम जननी। साऽच कारणम् ॥

किञ्च।

यदिदमतिदुर्जयमधुनैव स्पर्शनेन्द्रियमस्माभिः प्रतिपादितं तद्रूप एवायमस्य स्पर्शनाभिधानः पापवयस्यो वर्तते। अयं तु जघन्यपुरुषो बालः। इयं च तदभिधानैव अकुशलकर्ममालारूपैव जननी। तदत्र किं न सम्भाव्येत। यच्चोक्तं भगवत्सन्निधानेऽपि कथमेवंविधाध्यवसायप्रादुर्भाव इति तदप्यत एव नाश्चर्यबुद्ध्या ग्राह्यं। यतो द्विभेदं जन्तूनां कर्म। सोपक्रमं निरुपक्रमं च। तत्र सोपक्रममेव महापुरुषसन्निधानादिना क्षयक्षयोपशमभावं प्रतिपद्यते न निरुपक्रमं। तद्वशगाश्च जन्तवस्तत्समीपेऽपि विरूपकर्माचरन्तः केन वार्यन्ते। तथाहि। येषामचिन्त्यपुण्यप्राग्भारवतां तीर्थकृतामिह जगति गन्धहस्तिनामिव विचरतां विहारपवनगन्धादेव क्षुद्राशेषगजकल्पा दुर्भिक्षेतिपरचक्रमारिवैरप्रभृतयः सर्वे एवोपद्रवाः समधिकयोजनशतात् दूरत एव भज्यन्ते तेषामपि भगवतां सन्निधाने निरुपक्रमकर्मपाशावपाशिताः क्षुद्रसत्वा न केवलं नोपशाम्यन्ति किं तर्हि तेषामेव भगवतां तीर्थकृतां क्षुद्रोपद्रवकरणे प्रवर्तन्ते। श्रूयन्ते हि तथाविधा भगवतामप्युपसर्गकारिणो गोपसङ्गमकादयः पापकर्माण इति ॥

अन्यच्च।

तेषामेव भगवतां देवविरचितसमवसरणानामध्यासितसिंहासनचतुष्टयानां मूर्त्तिमात्रदर्शनादेव प्राणिनां किल विलीयन्ते

रागादयो विदलति कर्मजालं प्रशाम्यन्ति वैरानुबन्धाः विच्छिद्य-न्तेऽलीकस्नेहपाशाः प्रलीयते विपरीताभिनिवेशो। यावता तत्रापि केषांचिद्भव्यतया निरुपक्रमकर्मघनपटलतिरस्कृतविवेकदीधिति-प्रसराणां वा न केवलं पूर्वोक्तगुणलेशदेशोऽपि न संजायते किं तर्हि प्रादुर्भवन्त्येवंविधा भगवन्तमधिकृत्य कुविकल्पाः। यदुताहो सिद्ध-मत्यमिन्द्रजालम् अहो अस्य लोकवञ्चनचातुर्यमहो गाढमूढता लोकानां यदेतेनाप्यलीकवाचालेनालजालरचनाचतुरेण प्रतार्यन्त इति॥ तदेवंस्थिते महाराज न किञ्चिदिदमत्यद्भुतं यदनेन पुरुषेण मत्सन्निधानेऽप्येवंविधमध्यवसितं। अयमपि हि निरुपक्रमयानया-कुशलमालया स्वदेहवर्त्तिन्या निजजनन्या प्रेर्यमाणोऽमुं स्पर्शनं सहचरमुररीकृत्यैवं चेष्टते। तस्मात्र भवद्भिर्विस्मयो विधेयः॥ सु-बुद्धिनाभिहितं। भदंत न किञ्चिदिदमाश्चर्यं भगवदागमावदातधि-यामेवंविध एव निरुपक्रमकर्मपरिणामो नात्र सन्देहः। केवलमिदा-नीमेव भगवत्पादप्रसादादेव देवः खल्वेवंविधपदार्थेषु पुण्यबुद्धि-र्भविष्यति। तेनैवं भगवन्तं विज्ञापयति॥ राजा सहर्षः प्राह। चार्व-भिहितं सखे चारुरहो तेऽवसरभाषिता। ततो राजैव भगवन्तं प्रत्याह। यथ कोऽस्य पुनः पुरुषस्य परिणामो भविष्यति। भगवता-भिहितं। इदानीं तावदेष दृष्टयुष्मत्कोपविपाकतया भयातिरेक-ग्रस्तहृदयो न किञ्चिचेतयते। गतेषु पुनरितो युष्मदादिषु प्रत्युपल-ब्धसंज्ञः सन्नेष भूयो ऽप्यधिष्ठास्यत अनेन स्पर्शनेन। ततो युष्मद्भयादेव कुत्रचिन्निर्देशे यामीत्याकूतेन प्रपलायमानो महता क्लेशेन यास्यत्येष कोलाकसन्निवेशे। तत्र च कर्मपूरकाभिधानस्य ग्रामस्य प्रत्यासन्नभूभागे

पथि श्रान्तः पिपासितो दूरत एव द्रक्ष्यति हृहत्तडागं। ततः स्नानपानार्थं चलिष्यति तदभिमुखं। इतश्च पूर्वमेवागमिष्यति तत्र चण्डालमिथुनं। ततश्चण्डालस्तटाकतटवर्तिषु तरुगहनेषु पतत्त्रिगणमारणप्रवणः समाटटिष्यते। चण्डाली पुनर्विजनमिति कृत्वा स्नानार्थमवतरिष्यति तडागं। ततोऽवतीर्णायां तस्यां प्राप्स्यत्येव तस्य तीरं। ततोऽमुमुपलभ्य सा मातङ्गी सूक्ष्मपुरुषोऽयं कलहयिष्यति मां सरोवरावतारणापराधमुद्दिश्येति भयेन निमंक्ष्यति सलिले। स्थास्यति पद्मखण्डे लीना। अयमपि मज्जनार्थमवतीर्य्यानाभोगेनैव यास्यति तत्समीपं। भविष्यति तया सार्द्धमास्पर्शो। वेदयिष्यते तदङ्गस्पर्शं। संजनिष्यते तस्योपरि लाम्पट्यमस्य कथयिष्यति सात्मनश्चण्डालभावं। तथापि करिष्यत्येव तस्याः शरीरग्रहणं बलामोटिकया। विधास्यते सा हाहारवं। तमाकर्ण्य धाविष्यति कुपितश्चण्डालो। विलोकयिष्यत्येनं तथावस्थितं। प्रज्वलिष्यति नितरां कोपानलेन। संधास्यति कोदण्डे शिलीमुखं। मारयिष्यति च अरे रे दुरात्मन्नधमपुरुष पुरुषो भवेत्याहूय स चण्डालः कम्पमानमेनमेकप्रहारेण। प्रहरिष्यति स च तं। तदाध्यासितो रौद्रध्यानेनेति मृत्वा च यास्यति नरकेषु। तेभ्योऽप्युद्वृत्तस्ततः कुयोनिषु पुनर्नरकेष्वेवाऽनन्तवारा। एवं दुःखपरम्परया स्थास्यत्यनन्तमपि कालं पतितः संसारचक्रे। पर्याप्तमीदृश्या दारुणतया॥ सुबुद्धिनाभिहितं। भदन्त किमेते स्पर्शनाकुशलमाले अस्यैव पुरुषस्य प्रभवतः आहोस्विदन्येषां प्राणिनां। भगवानाह। महामात्य केवलमत्र पुरुषेऽभिव्यक्तरूपे खल्वेते परमार्थतः सर्वेषां सकर्म-

संसारिप्राणिनां प्रभवत एव। यतो योगिनीयमकुशलमाला योगेश्वरश्चायं स्पर्शनो। योगिनां च भवत्येवेदृशी शक्तिः यथा क्वचिदभिव्यक्तरूपता क्वचिदनाविर्भूता वर्त्तते। नृपतिनाभिहितम्। भगवन्ननयोः किमस्मद्गोचरोऽप्यस्ति प्रभावो। भगवानाह बाढमस्ति॥ ततो राजा मन्त्रिणं प्रत्याह। सखे पापयोरनयोरमर्दितयोः कीदृशी ममाद्यापि शत्रुमर्दनता। ततो न युक्तं यद्यपि भगवत्समीपस्थैरेवंविधं जल्पितुं तथापि दुष्टनिग्रहो राज्ञां धर्म इति कृत्वेदमभिधीयते। तदाकर्णयत्वार्यः। सुबुद्धिनाभिहितं। समादिशतु देवो। राज्ञाभिहितमादिष्टमेतत्तावद्भगवता यथैते स्पर्शनाकुशलमाले अनेन पुरुषेण सह यास्यतः। ततो नेदानीं तावदेते वधमर्हतः। केवलं समाज्ञापय त्वमेते। यथा मद्विषयान्निर्गत्य युवाभ्यां दूरतोऽपि दूरं गन्तव्यं। स्फुतेऽप्यस्मिन् पुरुषे नास्माकीनविषये प्रवेष्टव्यमितरथा युवयोरस्माभिः शारीरो दण्डः करिष्यते। अथैवमप्यादिष्टे पुनरेते अस्मद्विषये प्रविशेतां ततो भवता निर्विचारं लोहयन्त्रेण पीडनीये। एवमतिदुष्टयोरारटतोरप्यनयोरुपरि नैषदपि दया विधेया॥ सुबुद्धिना चिन्तितं। अहो देवस्यानयोरुपर्यावेगातिशयः। यतोऽस्य तद्वशेन विस्मृतं तदपि हिंसकर्मणि न भवन्तं योज्य इति मद्गोचरं वरप्रदानं। भवतु तथापीदृशेव प्रतिबोधकारणं भगवन्तः कल्पयिष्यन्ति। मम त्वाज्ञाप्रतिपत्तिरेव ज्यायसीति विचिन्त्याभिहितमनेन। यदाज्ञापयति देवः॥ ततः प्रपन्नोऽसौ तयोराज्ञापनार्थं सूरिणाभिहितं। महाराजालमनयोरेवं ज्ञापनेन। न खल्वेतयोरयमुन्मूलनोपायो। यतोऽन्त-

रङ्गलोकजातीये एते सर्गनाकुशलमाले। अन्तरङ्गलोकेषु च न प्रभवन्ति लोहयन्त्रादीनि। अगम्यरूपा हि ते बाह्यशस्त्राणां॥ नृपतिरुवाच। भदन्त कस्तर्ह्यनयोरन्यो निर्दलनोपायो भविष्यति। भगवताभिहितं। अप्रमादाभिधानमन्तरङ्गमेव यन्त्रमनयोर्निर्दलनोपायः। तद्धेते साधवोऽनयोरेव निष्पेषणार्थमहर्निशं वाहयन्ति। नृपतिरुवाच। कानि पुनस्तस्याप्रमादाभिधानस्य यन्त्रस्योपकरणानि। भगवानाह। यान्येत एव साधवः प्रतिक्षणमनुशीलयन्ति। नृपतिरुवाच। कथं। भगवतोक्तं। समाकर्णय यावज्जीवमेते नाचरन्ति। तनीयसीमपि परपीडां। न भाषन्ते सूक्ष्ममप्यलीकवचनं। न गृह्णन्ति दन्तशोधनमात्रमप्यदत्तं। धारयन्ति नवगुप्तिसनाथं ब्रह्मचर्यं। वर्जयन्ति निःशेषतया परिग्रहं। न विदधते धर्मोपकरणशरीरयोरपि ममत्वबुद्धिं नासेवन्ते रजन्यां चतुर्भेदमप्याहारजातं। आददते प्रवचनोपवर्णितं समस्तोपधिविशुद्धं संयमयात्रामात्रसिद्धये निरवद्यमाहारादिकं। वर्तन्ते समितिगुप्तपरिपूरितेनाचरणेन। पराक्रमन्ते विविधाभिग्रहकरणेन। परिहरन्त्यकल्याणमित्रयोगं। दर्शयन्ति सतामात्मभावं। न लंघयन्ति निजामुचितस्थितिं। नापेक्षन्ते लोकमार्गं। मानयन्ति गुरुसंहतिं। चेष्टन्ते तत्तन्त्रतया। आकर्णयन्ति भगवदागमं भावयतिमहायत्नेन। अवलम्बते द्रव्यापदादिषु धैर्यं। पर्यालोचयन्त्यागमिनमपायं। यतन्ते प्रतिक्षणमसपत्नयोगेषु। लक्षयन्ति चित्तविस्रोतसिकां। प्रतिविदधते सानागतमेव तस्याः प्रतिविधानं। निर्मलयन्ति सततमसङ्गताभ्यासरततया मानसं। अभ्यस्यन्ति योगमार्गं। स्थापयन्ति चेतसि परमात्मानं। नियच्छन्ति तत्र धारणां।

परित्यजन्ति बहिर्विक्षेपं। कुर्वन्ति तन्मत्यैकतानमन्तःकरणम्। यतन्ते योगसिद्धौ । आपूरयन्ति शुक्लध्यानं। पश्यन्ति देहेन्द्रियादिविविक्तमात्मानं। लभन्ते परमसमाधिं। भवन्ति शरीरिणोऽपि सन्तो मुक्तिसुखभाजनमिति। तदेवमेते महाराजमुनयोऽमूनि परपीडावर्जनादीनि मुक्तिसुखभाजनत्वपर्यवसानानि तस्याप्रमादनाम्नो यन्त्रस्योपकरणानि प्रतिक्षणमनुशीलयन्ति। ततोऽमूभिरनुशीलितैरत्यर्थं तद्दृढीभवति यन्त्रं। तदा भूतं च तदनयोः स्पर्शनाकुशलमालयोरपरेषामप्येवंजातीयानामन्तरङ्गभूतानां दुष्टलोकानां निष्पीडने क्षमं संपद्यते। तेन च निःपीडिताखेऽन्तरङ्गलोका न पुनः प्रादुर्भवन्ति। ततो महाराज यद्येतन्निःपीडनाभिलाषोऽस्ति भवतस्तदिदमप्रमादयन्त्रं स्वचेतसि निधाय दृढवीर्ययष्ट्यावष्टभ्य खल्वेते निष्पीडनीये स्वत एव। न मन्त्रिणोऽप्यादेशो देयः। न खलु परेण निष्पीडिते अप्येते परमार्थतो निष्पीडिते भवतः॥

एवं भगवति नृपतिगोचरमुपदेशं ददाने मनीषिणः कर्मेन्धनदाही शुभपरिणामानलो गतोऽभिवृद्धिं भगवद्वचनेन। केवलं पूर्वोत्तरवाक्ययोर्विषयविभागमनवधारयन् मनाक् ससन्देह इव विरचितकरमुकुलः स भगवन्तं प्रत्याह। भदन्त यासौ भगवद्भिर्भागवती भावदीक्षा वीर्योत्कर्षलाभहेतुतया पुरुषस्योत्साहतमलं साधयतीति प्राक्प्रतिपादिता यच्चेदमिदानीं दुष्टान्तरङ्गलोकनिष्पीडनक्षमं सवीर्ययष्टिकमप्रमादयन्त्रं प्रतिपाद्यते अनयोः परस्परं कियान् विशेषः। भगवताभिहितं। भद्र न कियानपि विशेषः। केवलमनयोः शब्दो भिद्यते नार्थः। यतोऽप्रमादयन्त्रमेव परमार्थतो

भागवती भावदीक्षेत्यभिधीयते । मनीषिणाभिहितं । ततो दीयतां भगवता सा भागवती भावदीक्षा यद्युचितोऽहं तस्याः । भगवानाह । बाढमुचितः सुष्ठु दीयते ॥ नृपतिनाभिहितं । भदन्त ममानेकसमरसंघट्टनिर्व्यूढसाहसस्यापीदमप्रमादयन्त्रं युष्मद्वचनतः श्रूयमाणमपि दुरनुष्ठेयतया मनसः प्रकम्पमुत्पादयत्येष पुनः कः कुतस्त्यो महात्मा येनेदं सहर्षेण महाराज्यमिव जिगीषुणाभ्युपगतमिति । भगवताभिहितं । महाराज मनीषिनामायमत्रैव क्षितिप्रतिष्ठिते वास्तव्यः । राज्ञा चिन्तितमये यदायं पापः पुरुषो मया व्यापादयितुमादिष्टस्तदा लोकैः श्लाघ्यमानः श्रुत एवासीन्मनीषी । यदुत रे एकस्मादपि पितुर्जातयोः पश्यतानयोरियान् विशेषः । अस्येदं विचेष्टितं स च तथाभूतो मनीषी महात्मेति । तदेष एव मनीषी प्रायो भविष्यति । अथवा भगवन्तमेव विशेषतः पृच्छामीति विचिन्त्याभिहितमनेन । भदन्त कौ पुनरस्याच नगरे मातापितरौ के वा ज्ञातय इति । भगवानाह । अस्यैव क्षितिप्रतिष्ठितस्य भोक्ता कर्मविलासो महानरेन्द्रः । सोऽस्य जनकस्तस्यैवाग्रमहिषी शुभसुन्दरी नाम देवी सा जननी । तस्यैवेयमकुशलमाला भार्या । अयं च पुरुषो बालाभिधानः सुत इति । तथा योऽयं मनीषिणः पार्श्ववर्ती पुरुषः सोऽपि तस्यैव सामान्यरूपाया देव्यास्तनयो मध्यमबुद्धिरभिधीयते । एतावदेवास्येदं कुटुम्बकं । शेषज्ञातयस्तु देशान्तरेष्वतः किं तदार्त्तया । नृपतिराह । किमस्य नगरस्य कर्मविलासो भोक्ता न पुनरहं । भगवानाह । बाढं । राजोवाच । कथं भगवानाह । समाकर्णय ।

यतस्तदाज्ञां सर्वेऽपि भीतकम्पितमानसाः ।
एते नागरिका नैव लंघयन्ति कदाचन ॥
तथापि राज्यहरणे तद्दाने वा यथेच्छया ।
शक्तोऽसौ न तथा तेऽच राजन्नाज्ञा प्रकाशते ॥
परमार्थेन तेनासौ भोक्तास्तेत्यभिधीयते ।
यतः प्रभुत्वमाज्ञायां प्रभूणां किल गीयते ॥

नरपतिरुवाच ।

यद्येवं भगवन्नेष कस्मान्नेहोपलभ्यते ।
सूरिणाभिहितं राजन् समाकर्णय कारणम् ॥
यतः कर्मविलासोऽयमन्तरङ्गो महानृपः ।
अतो न दर्शनं याति सर्वदैव भवादृशाम् ॥
अन्तरङ्गा हि ये लोकास्तेषां प्रकृतिरीदृशी ।
स्थिताः प्रच्छन्नरूपेण सर्वकार्याणि कुर्वते ॥
केवलं बुद्धिदृष्ट्यैव धीराः पश्यन्ति तान् सदा ।
आविर्भूता इवाभान्ति अन्येषामपि तत्पुरः ॥
न चाच भावना कार्या भवत्यच प्रयोजने ।
न केवलं यतोऽनेन भवानेव पराजितः ॥
किं तु प्रायेण सर्वेऽपि संसारोदरवर्त्तिनः ।
स्ववीर्येण विनिर्जित्य प्रभवोऽपि वशीकृताः ॥
ततो गृहीततत्त्वेन राजा प्रोक्तः सुबुद्धिना ।
देव ज्ञातो मयाप्येष राजा योऽवर्णि सूरिणा ॥
देवाय कथयिष्यामि रूपमस्य परिस्फुटम् ।

अहमेव भदन्तेभ्य सर्वमेव निवेदितम् ॥

इतश्च ।

विज्ञायावसरं तेन पूर्वं संजातबुद्धिना ।
अथानतशिरस्केन प्रोक्तं मध्यमबुद्धिना ॥
योऽसौ भगवतादिष्टः संसारतनुताकरः ।
गृहिधर्मः स मे नाथ दीयतामुचितो यदि ॥

गुरुरुवाच ।

श्रुत्वा भागवतीं दीक्षां न कर्त्तुं शक्नुवन्ति ये ।
तेषां गृहस्थधर्मोऽसौ युक्त एव भवादृशाम् ॥

नृपतिरुवाच ।

भदन्त किंस्वरूपोऽयं गृहिधर्मोऽभिधीयते ।
सूरिराह महाराज समाकर्णय कथ्यते ॥

ततो भगवता वर्णितं परमपदकल्याणपादपनिरुपहतबीजं सम्यग्दर्शनं । प्रतिपादितानि संसारतरुकन्दच्छेदतयाचिरेण स्वर्गापवर्गमार्गसंसर्गकारीण्यणुव्रतगुणव्रतशिक्षापदानि । ततः सञ्जाततदावरणीयकर्मक्षयोपशमतया भावतः प्रादुर्भूतसम्यग्दर्शनदेशविरतिपरिणामेन शक्योऽयमस्मादृशामप्यनुष्ठातुं गृहस्थधर्म इति संचिन्त्य नरपतिनाभिहितं । भदन्त क्रियतामेतद्दानेनास्माकमप्यनुग्रहः । भगवानाह । सुष्ठु क्रियते । ततो दत्तस्तयोर्द्वयोरपि विधिना गृहिधर्मो भगवता मनीषिदीक्षादानार्थं पुनरभ्युद्यते भगवति भगवच्चरणयोर्निपत्य नरपतिरुवाच । भदन्त गृहीतैवानेन महात्मना भगवतो भागवती दीक्षेति । कृतकृत्य एवायमधुना वर्तते । तथापि

वयमेनं मनीषिणमुद्दिश्य किञ्चित्सन्तोषानुरूपमाचरितुमिच्छाम-स्तदनुजानातु भगवानिति । तदाकर्ण्य स्थिता भगवन्तस्तूष्णींभावेन । सुबुद्धिनाभिहितं । देव न प्रवर्त्तन्ते द्रव्यस्तवप्रवृत्तिकाले भगवन्तः । अनधिकारो ह्यत्र भगवतां । युक्त एव यथोचितः स्वयमेव द्रव्यस्तवः कर्त्तुं युष्मादृशां । केवलमेतेऽपि विहितं तमनुमोदन्त एव द्रव्यस्तवं । ददति च तद्गोचरं शेषकालमुपदेशं । यथा कार्तव्योदारपूजा भगवतां । न खलु वित्तस्यान्यच्छुभतरं स्थानमित्यादिवचनसन्दर्भेण । तस्मात्स्वत एव कुरुत यथोचितं यूयं । केवलमभ्यर्थयामः काल-प्रतीक्षणं प्रति मनीषिणं । नृपतिरवोचदेवं कुर्मः । ततोऽभ्यर्थितः सबहुमानं राजमन्त्रिभ्यां मनीषी । चिन्तितमनेन । न युक्तः कालविलम्बो धर्मप्रयोजने । तथापि महापुरुषप्रणयभङ्गोऽपि सुदुष्कर इति मन्यमानेन प्रतिपन्नं तत्समीहितम् ।

ततस्त्वरयता तेन नरनाथेन तोषतः ।
व्यापारिता महायोधैः सर्वे मन्त्रिमहत्तमाः ॥
ततस्तैः क्षणमात्रेण तत्सर्वं जिनमन्दिरम् ।
विचित्रवस्तुविस्तारैर्विहितं विगतातपम् ॥
कुरङ्गनाभिकाश्मीरमलयोद्भवरूपया ।
कर्पूरोन्मिश्रया गाढ़ं तदधस्तादिलेपितम् ॥
तथालिकुलमङ्गीतैः पञ्चवर्णैर्मनोहरैः ।
आजानूत्सेधिभिः पुष्पैः सर्वतः परिपूरितम् ॥
सौवर्णस्तंभविन्यस्तमणिदर्पणराजितम् ।
दिव्यवस्त्रकृतोल्लोचं सद्मुक्तावचूलकम् ॥

नष्टान्धकारसम्बन्धं रत्नोद्योतैः सुनिर्मलैः ।
विध्वस्ताशेषदुर्गन्धं सकृष्णागरुधूपतः ॥
देवलोकाधिकामोदं पटवासैर्विसर्पिभिः ।
समस्तकेतकसंघातगन्धेन भुवनातिगम् ॥
समदिलासिनीलोकप्रारब्धस्नानसाधनम् ।
एवं विधाय तत्सद्म प्रस्तुतं देवपूजनम् ॥

अत्रान्तरे ।

पारिजातकमन्दारनमेरुहरिचन्दनैः ।
सन्तानकैश्च देवौघास्तथान्यैर्जलजोत्तरैः ॥
पुष्पैर्भृत्वा विमानानि द्योतयन्तो नभस्तलम् ।
ततोऽत्याहृत्य(?)वास्त्वर्णमाजग्मुस्ते जिनालयम् ॥
ततः प्रमुदिताशेषलोकलोचनपूजिताः ।
पूजां जगद्गुरूणां ते जातानन्दाः प्रचक्रिरे ॥
सुश्लिष्टवर्णविन्यासां पूजामालोक्य तत्कृताम् ।
निःस्पन्दायतया लोकास्ते जग्मुर्देवरूपताम् ॥
ततोऽनन्तगुणानन्दपरिपूरितचेतसा ।
नरेन्द्रेण सलोकेन देवानामन्त्र्य सद्गिरा ॥
शुभे सुमेरुवत्तुङ्गे सुवेद्यां भद्रविष्टरे ।
निवेश्य बिम्बं जैनेन्द्रं विधिनारम्भि मज्जनम् ॥

तत्र च ।

स्नातस्य शुभवस्त्रस्य किरीटाङ्गदधारिणः ।
गोशीर्षेण विलिप्तस्य हारराजितवक्षसः ॥

कुण्डलोद्भासिगण्डस्य शक्राकारानुकारिणः।
बहिःशान्तविकारस्य निर्मलीभूतचेतसः॥
महत्तमोऽयमस्माकमेष एव च नायकः।
एष एव महाभाग एष एव च पूजितः॥
येन भागवती दीक्षा दुष्करापि जिघृक्षिता।
एवं प्रभाषमाणेन नरेन्द्रेण मनीषिणः॥
सत्तीर्थोदकसम्पूर्णस्नापनीयो मनोहरः।
सद्धर्मसारसम्पूर्णमुनिमानससन्निभः॥
गोशीर्षचन्दनोन्मिश्रो दिव्यपद्माहृताननः।
समन्ताचर्चितः शुभ्रैश्चारुचन्दनहस्तकैः॥
संस्थाप्य प्रथमस्नाचे स्नाचकारतया मुदा।
समर्पितोऽभिषेकार्थं दिव्यकुम्भो भवच्छिदः॥
आनन्दपुलकोद्भेदं दधानो भक्तिनिर्भरः।
जग्राह नृपतिः कुम्भं स्वयमेव द्वितीयकम्॥
तथा मध्यमबुद्धिश्च स पुत्रः स सुलोचनः।
कृतौ भुवननाथस्य स्नाचकारणतत्परौ॥
चन्द्रोद्योतकटाक्षेण चामरेण विभूषिता।
स्थिता त्रिलोकनाथस्य पुरो मदनकन्दली॥
द्वितीया स्थापिता राज्ञा तस्याश्चामरधारिणी।
देवी पद्मावती नाम तदाकारानुकारिणी॥
धूपभाजनमादाय गाढं भावितमानसः।
सुबुद्धिर्वर्धितानन्दः स्थितोऽपि पिहिताननः॥

तेनैव राजादिष्टेन प्रेषकर्मसु सादरम्।
ये ये श्रेष्ठतमा लोकास्ते ते सम्यङ् नियोजिताः॥

यतः।

त एव कृतिनो लोके ते जातास्ते समुन्नताः।
ते कलालापविज्ञानशालिनस्ते महाधनाः॥
ते रूपवन्तस्ते शूराः कुलस्यापि विभूषणाः।
ते सर्वगुणसम्पूर्णाः श्लाघ्यास्ते भुवनत्रये॥
किङ्करीकृतशक्रस्य लोकनाथस्य मन्दिरे।
येऽत्र किङ्करतां यान्ति नराः कल्याणभागिनः॥

ततः प्रवृत्तो भगवतोऽभिषेकमहोत्सवः। पूरयन्ति दिक्चक्रवालमुद्दामदेवदुन्दुभिनिर्घोषाः। बधिरयन्ति जनकर्णकोटराणि रटत्पटहपाटवप्रतिनादसंमूर्च्छिता विविधतूर्यनिनादाः। समुल्लसते कणकणकभाणकरवोन्मिश्रः कलकाहलाकलकलः। गीयन्तेऽन्तरान्तरा प्रशमसुखरसास्वादावेदनचतुराणि भगवत्साधुगुणसम्बन्धप्रवणानि श्रवणोत्सवकारीणि गीतकानि। पठ्यन्ते परिशुद्धगम्भीरेण ध्वनिना सर्वज्ञप्रणीतवचनोन्नतिकराणि रागादिविषधरपरममन्त्ररूपाणि भावसारं महास्तोत्राणि। प्रवृत्तानि विविधकरणाङ्गहारहारीणि प्रमोदातिरेकसूचकानि महानृत्तानि। तदेवं महता विमर्देन सुरासुरैरिव कनकगिरिशिखरनिर्वर्तिते भगवदभिषेकमङ्गले पूजितेषु सविशेषं भुवनाधिनाथबिम्बेषु विहितेषु निःशेषकृत्यविधानेषु वन्दितेषु साधुलोकेषु दत्तेषु महादानेषु सन्मानितेषु विशेषतः साधर्मिकेषु मनीषिणः स्वगेहनयनाय सङ्गीकारितो

नरपतिना गजः। आरोपितस्तत्र मनीषी। स्थितोऽस्य स्वयमातपत्रधारकः। घोषितं च नरपतिना हर्षातिरेकरोमाञ्चितवपुषा हृष्यता शब्देन। यदुत भो भोः सामन्ता भो भो मन्त्रिमहत्तमाः समाकर्णयत यूयम्।

विभूतिरत्र संसारे नरस्य ननु तत्त्वतः।
सत्त्वमेवाविगानेन प्रसिद्धं सर्ववेदिनाम्॥
ततो यस्याधिकं सत्त्वं नरस्येह प्रकाशते।
स शेषनरवर्गस्य प्रभुत्वं कर्त्तुमर्हति॥

एवं च स्थिते।

सत्त्वोत्कर्षस्य माहात्म्यं यदत्रास्य मनीषिणः।
तद्दृष्टमेव युष्माभिः सर्वैरेव परिस्फुटम्॥
यत्तद्भगवतादिष्टं मादृशां त्रासकारणम्।
अनेन रभसा यत्नं याचितं तन्महात्मना॥
तदेष यावदस्माकं सदनुग्रहकाम्यया।
गृहे तिष्ठति तावन्नः स्वामी देवो गुरुः पिता॥
वयमस्य भवन्तश्च सर्वे किङ्करतां गताः।
विधूतपापमात्मानं विनयात्करवामहे॥
ततः समस्तैस्तैरुक्तं प्रमोदोद्धुरमानसैः।
यदादिशति राजेन्द्रः कस्मै तस्मान्न रोचते॥
अथान्तरेऽतितोषेण देहस्था सा मनीषिणः।
विजृम्भिता विशेषेण जननी शुभसुन्दरी॥
ततः सत्त्वीकृतामाप्य क्षणेन भुवनातिगाम्।

रराज राजलोकेन परिवारितविग्रहः ॥
करेणुकाधिरूढेन सह मध्यमबुद्धिना ।
अथावाप पुरद्वारं स्तूयमानः सुबुद्धिना ॥
ततोच्छ्रितपताके च देहशोभामनोरमे ।
विशेषोज्ज्वलनेपथ्ये हर्षात्सम्मुखमागते ॥
अथासौ नगरे तत्र मनीषी तोषनिर्भरैः ।
एवं नागरकैर्लोकैः प्रविवेश कृतस्तुतिः ॥ युग्मम् ॥

तद्यथा ।

धन्योऽयं कृतकृत्योऽयं महात्मायं नरोत्तमः ।
अस्यैव सफलं जन्म भूषितानेन मेदिनी ॥
अस्यैव धन्यतास्माकं येषामेष स्वपत्तने ।
संजातो न ह्यधन्यानां रत्नपुञ्जेन मीलकः ॥

ततश्च ।

कामिनीनयनानन्दं कुर्वाणोऽर्थाभिलाषिणां ।
ददानश्च महादानं दधानो देवरूपताम् ॥
मत्तुर्मे पक्षपातं च देहिनामात्मचेष्टितैः ।
जनयन्नमितानन्दो विचचार पुरेऽखिले ॥
ततो महाविमर्देन सम्प्राप्तो राजमन्दिरम् ।
रत्नराशिप्रभाजालैः सदा यत्रेन्द्रकार्मुकम् ॥
तत्र चाशेषराजादिलोकसम्मानमानितः ।
सकामकामिनीवृन्दलोलसोचनवीक्षितः ॥
गीतनृत्यप्रबन्धेन सोऽमरालयसन्निभे ।

देवराजवदास्थानं दत्त्वा निःशङ्कमानसः ॥
ततो विलीनरागोऽपि नृपतिस्तोषवृद्धये ।
उत्थाय मज्जनस्थानं जगाम गतविस्मयः ॥

तत्र च गतस्य तस्य ।

भ्रातुः सूनोरिवात्यन्तवल्लभस्य सगौरवम् ।
कृतं मदनकन्दल्या शरीरपरिमार्जनम् ॥
शेषान्तःपुरनारीभिर्व्यग्राभिः स्नानकर्मणा ।
रराज पेशलालापचारुभिः परिवारितः ॥
वज्रेन्द्रनीलवैदूर्यपद्मरागादिरोचिषा ।
रञ्जिते यन्त्रवापीनां ममज्ज विमले जले ॥
ततो भुजगनिर्मोकसूक्ष्मशुक्ले सुवाससी ।
परिधाय गतो देवभवनं सुमनोहरम् ॥

तत्र च ।

सुबुद्धिसम्बन्धिनि विरचनाचारुतया चित्तनिर्वाणकारिणि जिनमन्दिरे मार्गानुसारितया परमार्थतः सकलकालहृदयवर्तिनोऽपि विशेषतस्तद्दिन एव प्रबोधनरतिसूरिपादप्रसादोपलब्धस्वरूपस्य सकलनिष्कलावस्थस्य भगवतः परमात्मनो रागद्वेषविषापहरणकरणचतुरमनुस्मृतमर्हतः स्वरूपं। ततो निर्गत्य विरलविरलाप्तपरिजनः पूर्वोपकल्पिताशेषभोजनोपकरणसामग्रीसनाथं प्राप्तो भोजनमण्डपं। तत्र च विरचितानेकाकारैश्चित्तरसगोत्सवकारिणि भक्ष्यपेयाद्याहारविसारे नृपतिना स्वयमुपदिश्यमानमभिमतरसास्वादनं तदनुरोधेन विदधानो निरभिष्वङ्गतया

वर्धमानस्वास्थ्यातिरेको निर्वर्तयामास भोजनमिति । ततो गृहीत-पञ्चसुगन्धिकोन्मिश्रताम्बूले मलयजमृगनाभिकश्मीरजक्षोदाङ्गरागे विन्यस्तप्रवरभूषणे दिव्यांशुकाच्छादितशरीरे माल्यविच्छित्ति-सौरभाकृष्टहृष्टचिञ्चिरीके अध्यासितमहार्हसिंहासने प्रणतासंख्य-महासामन्तकिरीटांशुजालरञ्जितचरणे उद्दामवन्दिस्तूयमानयथा-वस्थितगुणसन्दोहे दत्तास्थाने मनीषिणि हर्षातिरेकनिर्भरो राजा सुबुद्धिं प्रत्याह । सखे युष्मदनुभावजन्येयमस्मादृशां कल्याणपरम्परा येनोत्साहितोऽहं भवता भगवद्वन्दनाय । तथा हि ।

विलोकितो मया नाथो जगदानन्ददायकः ।
भक्तिनिर्भरचित्तेन वन्दितो भुवनेश्वरः ॥
दृष्टः कल्पद्रुमाकारः स सूरिर्वन्दितो मुदा ।
लब्धो भागवतो धर्मः संसारोच्छेदकारकः ॥
जातयेदृग्स्वरूपेण नररत्नेन मीलकः ।
हतयानेन सर्वेषामस्माकं हृदयोत्सवः ॥

अथवा किमत्राश्चर्यम् ।

महाभागाः प्रजायन्ते परेषां तोषवृद्धये ।
स्वकार्यमेतदेवैषां यत्परप्रीतिकारणम् ॥
तदस्य युक्तमेवेदं विधातुं पुण्यकर्मणः ।
ममाहुतमिदं शातं क्व सोमः क्व निशाढकम् ॥
तदेवंविधकल्याणमालिका मिषवत्समम् ।
एवमाचरता नूनं सया संपादिता मम ॥
राज्ञो हितकरो मन्त्री सुदमिदं जगत्त्रये ।

तस्मात्तवैव मन्त्रिन्तं यथार्था ते सुबुद्धिता ॥

सुबुद्धिरुवाच।

देव मा मैवमादिशत। न खलु देव पुण्यप्राग्भारायत्तजीवितव्येऽत्र किङ्करजनेऽप्येवमतिगौरवमारोपयितुमर्हति देवः। अस्याः संपादने कोऽत्र वयं। उचित एव देवः खल्वेवंविधकल्याणपरम्परायाः। नैव हि निर्मलाम्बरतले निशि प्रकाशमाना रुचिरा नक्षत्रपद्धतिः कस्यचिदसम्भावनीयेत्याश्चर्यबुद्धिं जनयति। मनीषिणाभिहितं। महाराज भगवति सप्रसादे कियतीयमद्यापि भवतः कल्याणपरम्परा। भाविदिनश्रीसम्बन्धस्येव गगनतलस्यारुणोद्योतकल्पो हि भवतो भविष्यत्केवलालोकसचिवपरमपदानन्तानन्दसन्दोहसम्बन्धस्य प्राथमकल्पिकः खल्वेष सम्यग्दर्शनजनितः प्रमोदः। नृपतिरुवाच। नाथ महाप्रसादः। कोऽत्र सन्देहः। किं न संपद्यते युष्मदनुचराणां। ततो मन्त्रिणं प्रत्याह। सखे पश्यामीयामद्य दिनप्रबुद्धानामपि विवेकातिशयः। सुबुद्धिरुवाच। देव किमत्र चित्रं। मनीषिणः खल्वेते यथार्थमभिधीयन्ते। प्रबुद्धा एव ह्येवंविधपुरुषा जायन्ते। गुरवः केवलमीदृशां प्रतिबोधे निमित्तमात्रं भवन्ति ॥

इतश्च मनीषिणो राजमन्दिरे प्रवेशावसरे राजानमनुज्ञाप्यादित एव सुबुद्धिना साधर्मिकवात्सल्येन मध्यमबुद्धिर्नीत आसीदात्मीयसदने। कारितस्तदागमननिमित्तः परमानन्दो दत्तानि महादानानि। ततः सोऽपि निर्वर्तितस्नानभोजनताम्बूलविलेपनालङ्करणनेपथ्यमाल्योपभोगः कर्तव्यः। स्नेहनिर्भरसुबुद्धितत्परिकरनिरुपचरितस्तुतिगर्भपेशलालापसमानन्दितहृदयः समागमत्तत्रैवास्थाने। इतो-

चितप्रतिपत्तिः ससम्भ्रमं मनीषिणा दापिते तदुपकण्ठमुपविष्टो महति विष्टरे। ततो राजा तमुद्दिश्य सुबुद्धिं प्रत्याह। सखे महोपकर्तायमस्माकं महापुरुषः। सुबुद्धिनाभिहितं। देव कथं। नृपतिराह। समाकर्णय यतो भगवतोपदिष्टे तस्मिन्नप्रमादयन्त्रे तस्य दुरनुष्ठेयतामालोचयतो मम महासमरे कातरनरस्येव प्रादुर्भूता चित्ते समाकुलता ततोऽहमनेन महात्मना तत्रावसरे भगवन्तं गृहिधर्मं याचयता तद्ग्रहणबुद्ध्युत्पादकत्वेन समाश्वासितो। यतो जातो गृहिधर्माङ्गीकरणेनापि मे चेतसा महानवष्टम्भः। ततो ममायमेव महोपकारक इति। सुबुद्धिनाभिहितं। देव यथार्थाभिधानो मध्यमबुद्धिरेष। समानशीलव्यसनेषु सख्यमिति च लोकप्रवादः। ततः समानशीलतया युक्तमेवास्य मध्यमजनानां समाश्वासनं॥ नृपतिना चिन्तितं। अये ममायं मिथ्याभिमानस्यैतावन्तं कालमासीत् किलाहं नरेन्द्रतया पुरुषोत्तमो यावताधुनानेन सुबुद्धिनार्थापत्त्या गणितोऽहं मध्यमजनलेख्ये। ततो धिङ्मां मिथ्याभिमानिनमित्यथवा वस्तुस्थितिरेषा न मयात्र विषादो विधेयः।

तथा हि।

गजेन्द्रस्तावदाभाति शूरः सन्त्रासकारकः।
यावद्भासुरदंष्ट्राग्रो न सिंह उपलभ्यते॥
यदा सिंहस्य गन्धोऽपि स्यादाघ्रातः करेणुना।
जायते कम्पमानोऽसौ तदाहो कातरः करी॥
मनीषिणमपेक्ष्यातो युक्ता मे मध्यरूपता।

अयं सिंहो महाभागो मादृशाः करिकातराः ॥
तदत्र न विषादो मे कर्तुं युक्तः प्रयोजने।
यतो द्वितीयलेखापि मादृशैरपि दुर्लभा ॥

तथा हि।

भवेत्सर्वोत्तमस्तावत्पुरुषो यदि पारयेत्।
अशक्तो मध्यमोऽपि स्यान्न जघन्यः कदाचन ॥
मिथ्याभिमानो नैवायमेक एवाभवत्पुरा।
किं तर्हि बहवोऽन्येऽपि किं वा मे चिन्तया तया ॥

एवं चिन्तयति राजनि सुबुद्धिराह। देव सम्यगवधारितं देवेन यथैष महोपकारक इति। यतो जिनधर्मानुष्ठाने प्रवर्तमानस्यास्य जीवस्य यो निमित्तमात्रमपि भवति न ततोऽन्यः परमोपकारी जगति विद्यते। नृपतिराह। एवमेतन्नात्र सन्देहः। केवलमिदानीं मे मनसि वितर्को भगवद्वचनानुसारेणाशङ्कशिराहतोऽपि निर्लज्जब्राह्मण इव प्रकरणे पुनः पुनः प्रविशतीति। तदेनमुपनेतुमर्हत्यार्यः। सुबुद्धिराह। कीदृशोऽसौ। नृपतिरुवाच। समाकर्णय स्वसंवेदनसंसिद्धमिदमासीत्तदा यदुत तत्र चैत्यभवने प्रविष्टमात्राणामस्माकं शान्तानीव सर्वद्वन्द्वानि उच्चाटितेव केनचिद्राज्यकार्यचिन्तापिशाचिका विलीनमिव सकलमोहजालं विध्यात इव प्रबलरागानलः विध्वस्त इव विपरीताभिनिवेशग्रहः निर्वृतममृतसेकसम्पर्केणेव शरीरं सुखसागरावगाढमिव हृदयं क्षणमात्रेणासीत्। यत्पुनर्नमस्कृतभुवननाथस्य प्रणतगुरुचरणस्य वन्दितमुनिवृन्दस्य भगवद्वचनामृतमाकर्णयतस्तत्र मे निरुपमं सुखसंवेदन-

मभूत् तत्सकलं वाग्गोचरातीतमिति कृत्वा न शक्यते कथयितुं। तदेवंविधेऽपि तत्र जैनेन्द्रमन्दिरे सन्निहितेऽपि तादृशे भगवति गुरौ कथयति रागविषशमनं विरागमार्गं नेदीयसि शान्तचित्ते तपस्विलोकेऽपि सति तावति जनसमुदये कथं बालस्य तथाविधोऽध्यवसायः सम्पन्न इति। सुबुद्धिनाभिहितं। देव यत्तावदुक्तं देवेन यथात्र जिनमन्दिरे प्रविष्टमात्रस्य मे क्षणमात्रेणाचिन्तितगुण सन्दोहाविर्भावोऽभूदिति तन्नाश्चर्यं। प्रमोदशेखरं हि तद्भवनमभिधीयते हेतुरेव तत्तादृशगुणकलापस्य। यत्पुनरभ्यधायि यथा कथं पुनस्तत्रैवंविधसामग्र्यामपि पापाचरणेषु प्रवर्तन्त इति।

अन्यच्च। भगवदुपदेशादेवाहमेवं तर्कयामि यदुत द्रव्यक्षेत्रकाल भावभवाद्यपेक्षया प्राणिनां शुभाशुभपरिणामा भवन्ति। तदस्य बालस्य क्षेत्रजनितोऽयमशुभपरिणामः। नृपतिराह। ननु गुणाकरस्तज्जैनसदनं। तदेव तच्च क्षेत्रं। तत्कथं तदशुभपरिणामहेतुर्भवेदिति। सुबुद्धिराह। न मन्दिरदोषोऽसौ किं तर्हि उद्यानदोषस्तदुद्यानं तत्र सामान्यक्षेत्रं तच्च हेतुरस्य बालस्य तथाविधाध्यवसायस्येति। नृपतिराह। यदि दुष्टाध्यवसायहेतुस्तदुद्यानं ततोऽस्माकं किमिति क्लिष्टचित्तकारणं तन्न सम्पन्नं। सुबुद्धिनाभिहितं। देव विचित्रस्वभावं तत्काननं पुरुषादिकमपेक्ष्यानेकाकारकार्यकारकं संपद्यते। अत एव। तन्निजविलसितमिति नाम्ना गीयते। प्रकटयत्येव तज्जन्तूनां सविशेषसहकारिकारणकलापैर्निजं निजं विलसितम्। तथाहि। तस्य बालस्य तेन स्पर्शनेन तया चाकुशलमालया युक्तस्य मदनकन्दलीं प्राप्य तेन तथाविधाध्यवसायः।

अयं सिंहो महाभागो मादृशाः करिकातराः॥
तदत्र न विषादो मे कर्तुं युक्तः प्रयोजने।
यतो द्वितीयलेखापि मादृशैरपि दुर्लभा॥

तथा हि।

भवेत्सर्वोत्तमस्तावत्पुरुषो यदि पारयेत्।
अशक्तो मध्यमोऽपि स्यान्न जघन्यः कदाचन॥
मिथ्याभिमानो नैवायमेक एवाभवत्पुरा।
किं तर्हि बहवोऽन्येऽपि किं वा मे चिन्तया तया॥

एवं चिन्तयति राजनि सुबुद्धिराह। देव सम्यगवधारितं देवेन यथैष महोपकारक इति। यतो जिनधर्मानुष्ठाने प्रवर्तमानस्यास्य जीवस्य यो निमित्तमात्रमपि भवति न ततोऽन्यः परमोपकारी जगति विद्यते। नृपतिराह। एवमेतन्नात्र सन्देहः। केवलमिदानीं मे मनसि वितर्को भगवद्वचनानुस्मरणेनासकृच्चिराहतोऽपि निर्लज्जब्राह्मण इव मकरणे पुनः पुनः प्रविशतीति। तदेनमुपनेतुमर्हत्यार्यः। सुबुद्धिराह। कीदृशोऽसौ। नृपतिरुवाच। समाकर्णय स्वसंवेदनसंसिद्धमिदमासीत्तदा यदुत तत्र चैत्यभवने प्रविष्टमात्राणामस्माकं शान्तानीव सर्वद्वन्द्वानि उच्चाटितेव केनचिद्राज्यकार्यचिन्तापिशाचिका विलीनमिव सकलमोहजालं विध्यात इव प्रबलरागानलः विध्वस्त इव विपरीताभिनिवेशग्रहः निर्वृतामृतसेकसम्पर्केणेव शरीरं सुखसागरावगाढमिव हृदयं क्षणमात्रेणासीत्। यत्पुनर्नमस्तत्रिभुवननाथस्य प्रणतगुरुचरणस्य वन्दितमुनिवृन्दस्य भगवद्वचनामृतमाकर्णयतस्तत्र मे निरुपमं सुखसंवेदन-

मभूत् तत्सकलं वाग्गोचरातीतमिति कृत्वा न शक्यते कथयितुं। तदेवंविधेऽपि तत्र जैनेन्द्रमन्दिरे सन्निहितेऽपि तादृशे भगवति गुरौ कथयति रागविषशमनं विरागमार्गं नेदीयसि शान्तचित्ते तपस्विलोकेऽपि सति तावति जनसमुदये कथं बालस्य तथाविधोऽध्यवसायः सम्पन्न इति। सुबुद्धिनाभिहितं। देव यत्तावदुक्तं देवेन यथात्र जिनमन्दिरे प्रविष्टमात्रस्य मे क्षणमात्रेणाचिन्तितगुणसन्दोहाविर्भावोऽभूदिति तन्नाश्चर्यं। प्रमोदशेखरं हि तद्भवनमभिधीयते हेतुरेव तत्तादृशगुणकलापस्य। यत्पुनरभ्यधायि यथा कथं पुनस्तत्रैवंविधसामग्र्यामपि पापाचरणेषु प्रवर्तन्त इति।

अन्यच्च। भगवदुपदेशादेवाहमेवं तर्कयामि यदुत द्रव्यक्षेत्रकालभावभवाद्यपेक्षया प्राणिनां शुभाशुभपरिणामा भवन्ति। तदस्य बालस्य क्षेत्रजनितोऽयमशुभपरिणामः। नृपतिराह। ननु गुणाकरस्तज्जैनसदनं। तदेव तत्र क्षेत्रं। तत्कथं तदशुभपरिणामहेतुर्भवेदिति। सुबुद्धिराह। न मन्दिरदोषोऽसौ किं तर्हि उद्यानदोषस्तदुद्यानं तत्र सामान्यक्षेत्रं तत्र हेतुस्तस्य बालस्य तथाविधाध्यवसायस्येति। नृपतिराह। यदि दुष्टाध्यवसायहेतुस्तदुद्यानं ततोऽस्माकं किमिति क्लिष्टचित्तकारणं तन्न सम्पन्नं। सुबुद्धिनाभिहितं। देव विचित्रस्वभावं तत्काननं पुरुषादिकमपेक्ष्यानेकाकारकार्यकारकं संपद्यते। अत एव। तन्निजविलसितमिति नाम्ना गीयते। प्रकटयत्येव तज्जन्तूनां सविशेषसहकारिकारणकलापैर्निजं निजं विलसितम्। तथाहि। तस्य बालस्य तेन स्पर्शनेन तया चाकुशलमालया युक्तस्य मदनकन्दलीं प्राप्य तेन तथाविधाध्यवसायः।

मनीषिमध्यमबुद्धियुग्मदादीनां पुनर्विशिष्टपुरुषाणां पुण्यप्राग्भारवतां सूरिपादे प्रसादमासाद्य तेनैव सर्वविरतिदेशविरतिपरिणामादयो भावा जनिताः। यद्यपि चेह सर्वस्यैव कार्यस्योत्पत्तौ द्रव्यक्षेत्रकाल-स्वभावकर्मनियतिपुरुषकारादयः कारणविशेषा दृष्टादृष्टाः समुदायेनैव हेतुभावं भजन्ते नैकः क्वचित्कस्यचित्कारणं तथापि विवक्षयैकस्यापि कारणत्वं वक्तुं शक्यत इति। तन्निजविलसितमुद्यान-मस्माभिर्नानाविधभावनिबन्धनमभिधीयत इति ॥ नृपतिराह। सखे चारूक्तमिदमिदानीं यद्भवता तदाभिहितमासीत् भगवतः पुरतो यथाहं देवायास्य कर्मविलासस्य राज्ञः स्वरूपं निवेदयिष्यामि तन्निवेदयतु भवानहं श्रोतुमिच्छामि। सुबुद्धिराह। देव यद्येवं ततो विविक्ते स्थीयतां देवेन। नृपतिनोक्तमेवं भवतु ॥ ततोऽनुज्ञातौ मनीषिणा समुत्थायास्थानमण्डपात् प्रविष्टौ कक्षान्तरे राजामात्यौ। सुबुद्धिनाभिहितं। देव अयमत्र परमार्थो। ये ते भगवता चत्वारः पुरुषाः प्ररूपिताः तेषामुत्कृष्टतमास्तावत्सकलकर्मप्रपञ्चरहिताः सिद्धा अभिधीयन्ते। जघन्यमध्यमोत्कृष्टाः पुनरेत एव बालमध्यमबुद्धि-मनीषिणो विज्ञेयाः। अतः कर्मविलासो राजा यो भगवता प्रतिपादितः स एतेषामेवंविधस्वरूपाणां जनको निजनिजकर्मोदयो विज्ञेयः। स एव हि यथावर्णितवीर्यो नापरः। तस्य च तिस्रः शुभाशुभमिश्ररूपाः परिणतयः। ता एव भगवतामीषां मनीषिबाल-मध्यमबुद्धीनां शुभसुन्दर्यकुशलमाला सामान्यरूपेति नामभिर्जनन्य इति प्रतिपादिताः ता एव यतोऽमूनीदृशरूपतया जनितवत्यः। नृपतिराह। स तर्ह्यमीषां वयस्यः कोऽभिधीयतां। सुबुद्धिरुवाच।

देव तत् सर्वानर्थकारि स्पर्शनेन्द्रियं विज्ञेयं॥ नृपतिना चिन्तितं। अये मयापीदं भगवता कथ्यमानं सर्वमाकर्णितमासीत् केवलं न सम्यग् विज्ञातं यथानेन। तदस्य सुबुद्धेरेवंविधबोधेन सुसाधुभिः सह चिरपरिचयः कारणं। अहो वचनकौशलं भगवतां। कथितमेवातस्तदामीषां मनीषिप्रभृतीनां सम्बन्धि सर्वमन्यव्यपदेशेन चरितं। अथवा किमत्र चित्रं अत एव प्रबोधनरतयस्ते भगवन्तोऽभिधीयन्ते। तदेवं विचिन्त्याभिहितमनेन। सखे पर्याप्तमिदानीं विदितोऽस्माभिरेव वृत्तान्तः। केवलमिदमिदानीमभिधीयते यदुत यद्येष मनीषी विषयानुषङ्गं कियन्तमपि कालं भजेत ततो वयमप्यनेनैव सह दीक्षाग्रहणं कुर्वीमहि। यतः प्रथमदर्शनादारभ्य प्रवर्धते ममास्योपरि स्नेहानुबन्धः। न संचरति विरहकातरतयान्यत्र हृदयं। न निवर्तयातामेतद्वदनकमलावलोकनाल्लोचने। ततो नास्य विरहे वयं क्षणमप्यासितुमुत्सहामहे। न च तथाविधोऽद्यापि अस्माकमाविर्भवति चरणकरणपरिणामः। तदेनं तावदभ्यर्थय प्रणयस्नेहसारं। अनुभावय निरुपचरितशब्दादिभोगान्। प्रकटयास्य पुरतस्तत्स्वामिभावं। दर्शय वज्रेन्द्रनीलमहानीलकर्केतनपद्मरागमरकतवैदूर्यचन्द्रकान्तपुष्परागादिमहारत्नपूगान्‌ दर्शयापहसितत्रिदशसुन्दरीलावण्याः कन्यकाः। सर्वथा कथञ्चिदुपप्रलोभ्य यथा कियन्तमपि कालमस्मत्समीहितमेष मनीषी निर्विचारं संपादयति। सुबुद्धिनाभिहितं। यदाज्ञापयति देवः। केवलमत्रार्थे किञ्चिदहं विज्ञापयामि। तद्युक्तमयुक्तं वा क्षन्तुमर्हति देवो॥ नृपतिराह। सखे सदुपदेशदानाधिकारिणां भवतां शिष्यकल्पे मय्यलमियता

संभ्रमेण । वदतु विवचितं निर्विकल्पमार्यः । सुबुद्धिरुवाच । देव यद्येवं ततो यत्तावदुक्तं देवेन यथा ममाच मनीषिणि गुरुः स्नेहातिरेकः तद्युक्तमेव । यतः समुचितो महतां गुणिषु पक्षपातः । स हि क्रियमाणः पापाणुपूगं दलयति सदाशयं स्फीतयति सुजनतां जनयति यशो वर्धयति धर्ममुपचिनोति मोक्षयोगतामालक्षयतीति । यत्पुनरुक्तं यथा कथञ्चिदुपप्रलोभ्य कियन्तमपि कालमेष धारणीय इति तन्न न्याय्यं प्रत्युतानुचितमाभाषते यतो नैवमस्योपरि स्नेहानुबन्धो दर्शितो भवति किं तर्हि प्रत्युत प्रत्यनीकतां संपद्यते ।

तथाहि ।

> घोरसंसारकान्तारचारनिःसारकाम्यया ।
> प्रवर्तमानं जैनेन्द्रे धर्मे जीवजगद्धिते ॥
> मनसा वचसा सम्यक्क्रियया च कृतोद्यमः ।
> प्रोत्साहयति यस्तस्य स बन्धुः स्नेहनिर्भरः ॥
> अलीकस्नेहमोहेन यस्तु तं वारयेज्जनः ।
> स तस्याहितकारित्वात्परमार्थेन वैरिकः ॥
> तस्मान्न वारणीयोऽयं स्वहितोद्यतमानसः ।
> एवमारभतां देव स्नेहोऽत्र विहितो भवेत् ॥
> न चैष शक्यते देव शतैर्यत्नशतैरपि ।
> मनीषी लोभमानेतुं विषयैर्दिविकैरपि ॥

यतः प्रादुर्भूतोऽस्य महात्मनो विषयविषविपाकावेदनचतुरे भगवद्वचने सुनिश्चितः प्रबोधः । विस्फुरितं सकलमलकालुष्यक्षाल-

नत्तमं हृदयसरोवरे विवेकरत्नं। समुल्लसितं यथावस्थितार्थस्वरूप-निरूपणनिपुणं सम्यग्दर्शनं। संजातो निःशेषदोषमोषकरश्चरण-परिणामः। सति च भगवदवलोकनया जीवस्यैवंविधे कल्याणा-भिनिवेशकारिणि गुणकदम्बके न रमते विषयेषु चित्तं प्रति-भासते हेयलबुद्ध्या भवप्रपञ्चः इन्द्रजालयते निःसारतया सकलं जगद्विलसितं स्वप्नदर्शनायते चणदृष्टनष्टतया जनसमागमः। न निवर्तते प्रलयकालेऽपि कस्यचिदनुरोधेन मोक्षमार्गस्य साधनप्रवणा बुद्धिः। तदेवंस्थिते देव श्रस्योपप्रलोभनमाचरतामस्माकं केवलं मोहविलसितमाविर्भविष्यति न पुनः काचिदभिप्रेतार्थसिद्धिः। तदलमनेनास्थानारंभेणेति॥ नृपतिराह। यद्येवं ततः किं पुन-रधुना प्राप्तकालं। सुबुद्धिराह। देव निरूप्य दीक्षाग्रहणार्थमस्य प्रशस्तदिनं क्रियतां तदारात् सर्वादरेण महत्तरः प्रमोदः। नृपतिराह। यत्त्वं जानीषे॥ ततः समाहूतः सिद्धार्थो नाम सांवत्सरः। समागतस्त्वरया। प्रविष्टोऽभ्यन्तरे। राज्ञा दापितमासनं। कृतमुचितकरणीयं। कथितमाह्वानप्रयोजनं। ततो निरूप्य निवे-दितमनेन यदुतास्माद्दिनान्नवमे दिनेऽस्यामेव भाविन्यां शुक्लत्रयो-दश्यां शुक्रदिने उत्तरभद्रपदाभियोगमुपगते शशधरे वहति शिव-योगे दिनकरोदयातीते सपादे प्रहरद्वये वृषलग्नं सप्तग्रहकं एकान्त-निरवद्यं भविष्यति। तदाश्रीयतामिति अभिहितं राजमन्त्रिणोः। परिपूज्य प्रहितः सांवत्सरः। गतं तद्दिनं। ततो द्वितीयदिनादारभ्य प्रमोदशेखरे तदन्यजिनायतनेषु च देवानामपि विस्मारितसुरालय-सौन्दर्या विधापिता राज्ञा महोत्सवाः। दापितानि वरवरिकाघोषण-

पूर्वकं सर्वत्र महादानानि। विहारितो देवेन्द्रवदैरावतविभ्रमजय-करिवरारूढः स्वयं पदातिभावं भजता त्रिकचतुष्कचत्वरादिषु सुराकारैर्नागरिकजनैः स्तूयमानो निरुपमविलासविस्तारमनुभावयता नरपतिना प्रतिदिनं नगरे मनीषी प्राप्तोऽष्टमवासरः। तत्र च नीतं निखिलजनसन्मानदानार्घमानविनोदेन प्रहरद्वयं। अत्रान्तरे दिनकराचरितेन मनीषिवचनं सूचयताभिहितं कालनिवेदकेन।

नाशयित्वा तमो लोके कृत्वाह्लादं मनस्विनाम्।
हे लोकाः कथयत्येष भास्करो वोऽधुना स्फुटम्॥
वर्धमानः प्रतापेन यथाहमुपरि स्थितः।
सर्वोऽपि स्वगुणैरेव जनस्योपरि तिष्ठति॥

ततस्तदाकर्ण्य राजा सुबुद्धिप्रभृतीनुद्दिश्याह। अये प्रत्यासीदति लग्नवेला। ततः सज्जीकुरुत तूर्णं भगवत्पादमूले गमनसामग्रीं। सुबुद्धिरुवाच। देव सज्जैव वर्त्तते मनीषिपुण्यपरिपाटीव सर्वा सामग्री। तथाहि।

अमी घणघणारावं कुर्वन्तः कनकोज्ज्वलाः।
रथौघाः प्रस्थितास्तूर्णमायुक्तवरवाजिनः॥
एते संख्यामतिक्रान्ता राजवृन्दैरधिष्ठिताः।
जीमूता इव नागेन्द्रा द्वारे गर्जन्ति मन्थरम्॥
वर्याश्ववारैः संरुद्धाः कथञ्चिच्चटुलाननैः।
क्षमापिवन्तोऽमी देव हया हेषन्ति दर्पिताः॥
अयं पदातिसंघातः क्षीरनीरेश्वरोपमः।
मत्तः प्रयोजनं ज्ञात्वा सुवेषश्चलितोऽखिलः॥

रत्नालङ्कारनेपथ्याः मद्भव्यपटलाकुलाः ।
प्रस्थिता वारनारीणामेते वारा वरेक्षणाः ॥
मनीषिपुण्यसंभाराहृष्टास्तूर्णं समागताः ।
एते विबुधसंघाता द्योतयन्ति नभस्तलम् ॥
एष नागरको लोकः कौतुकाचिप्तमानसः ।
कुरुते हर्षकल्लोलैः सागरक्षोभविभ्रमम् ॥

अथवा ।
मत्तो विदितवृत्तान्तो मनीषिगुणरंजितः ।
ज्ञातयुष्मदभिप्रायः को वाचाप्रगुणो भवेत् ॥

देव तत्साम्प्रतमुत्यातुमर्हथ यूयं । ततः समुत्थितौ मनीषिनरेन्द्रौ निर्गतौ द्वारदेशे। ततो रत्नकिङ्किणीजालभूषिते समारूढ़ः प्रधानस्यन्दने मनीषी। ततः सुखसुकुमारासनोपविष्टः स्वयं प्रतिपन्नसारथिभावेन सह नरपतिना विलसत्किरीटांशुरञ्जितोत्तमाङ्गभागो ध्रियमाणेन निजयशोधवलेनातपत्रेण कपोलडोलायमानकुण्डलो धूयमानेन शशधरदीधितिच्छटाच्छेन वरविलासिनीकरवर्तिना चामरप्रकरेण स्थूलमुक्ताफलकलापविराजितवचःस्थलः पठतातितारसुद्दामवन्दिवृन्देन कटककेयूरखचितबाहुदण्डो नृत्यता तोषनिर्भरवरविलासिनीसार्थेन अतिसुरभिताम्बूलाङ्गरागप्रीणिताशेषेन्द्रियग्रामो बधिरयता दिक्चक्रवालं वरतूर्यनिर्घोषेण विशददिव्यांशुकप्रतिपन्नदेहो गायता मनोहारिकिन्नरसंघेन घूर्णमानविचित्रवनमालानिचयचर्चितशरीरो मुञ्चता हर्षातिरेकादुत्कृष्टसिंहनादसन्दर्भं देवसंघेन प्रीणिताशेषप्रणयिजनमनोरथः

श्लाघयता नागरलोकेन तथासुरकुमाराकारधरोऽयमिति सकौतुकाभिः समागतोऽस्माकमयं दृष्टिपथमिति सहर्षाभिरस्मदभिमुखमवलोकयतीति सशृङ्गाराभिर्मदनरसवशीकृतहृदयतया नानाविधविलासाभिर्लाभियं तिरोधाय दर्शनलोलतया स्वयमवलोकयतीति परस्परं सेर्ष्याभिर्गुरुजनोऽस्मानेवमवलोकयन्तीः पश्यतीति सलज्जाभिः प्रव्रजितः किलायं भविष्यतीति सशोकाभिरलं संसारेण योऽयमेवंविधैरपि त्यज्यत इति ससंवेगाभिरेवमनेकरसभावनिर्भरं हृदयमुद्वहन्तीभिर्निरीक्ष्यमाणमूर्तिर्वातायनविनिर्गतवदनसहस्राभिः पुरसुन्दरीभिरभिनन्द्यमानोऽम्बरविवरवर्तिनीभिः सुरसुन्दरीभिः सहितो रथान्तरारूढेन स्वप्रतिबिम्बसन्निभेन मध्यमबुद्धिना अनुगम्यमानो रथहरिकरिगतैर्महासामन्तसमूहैर्महता विमर्देन प्राप्तो मनीषी निजविलसितोद्याने। रथादवतीर्य स्थितः क्षणमात्रं प्रमोदशेखरद्वारे। परिवेष्टितो राजवृन्देन। इतश्च स्यन्दनारोहणादारभ्य राजा विशेषतस्तदा सत्त्वपरीक्षार्थं मनीषिस्वरूपं दत्तावधानो निरूपयति स्म। यावता तस्य विशुध्यमानाध्यवसायप्रक्षालितमनोमलकलङ्कस्य सत्यपि तादृशे हर्षहेतौ न लक्षितस्तेन तिलतुषविभागमात्रोऽपि चेतोविकारः प्रत्युत गाढतरं क्षारमृत्पुटपाकादिभिरिव विचित्रसंसारविलसितदर्शनसमुद्भूतैर्भावनाविशेषैर्निर्मलीभूतं चित्तरत्नं। ततः परस्परानुविद्धतया मनःशरीरयोर्जातमस्य देदीप्यमानं शरीरं। विलोकितं च राज्ञा यावत्तत्तेजसाभिभूतं दिनकरकरनिकरतिरस्कृतमिव तारकानिकुरम्बं न राजते मनीषिणोऽभ्यर्णवर्ति तद्राजकं। ततस्तदीयगुणप्रकर्षेण राज्ञोऽपि विलीनं तदियंधकं

कर्मजालं संजातचरणपरिणामो निवेदितः सुबुद्धिमध्यमबुद्धि-मदनकन्दलीसामन्तादिभ्यो निजोऽभिप्रायः। ततोऽचिन्त्यमाहात्म्य-तया महापुरुषसन्निधानस्य विचित्रतया कर्मक्षयोपशमस्य रञ्जित-चित्ततया निष्कृत्रिममनीषिगुणैः समुल्लसितं सर्वेषां तदा जीव-वीर्यं। ततस्तैरभिहितम्।

साधु साधूदितं देव युक्तमेतद्भवादृशाम्।
संसारे ह्यत्र निःसारे नान्यच्चारु विवेकिनाम्॥

तथा हि।

देव यद्यत्र संसारे किंचित्स्याद्रामणीयकम्।
श्लाघ्यं सारमुपादेयं वस्तु सुन्दरमेव वा॥
ततः किमीदृशाः सन्तः पूज्या युष्मादृशामपि।
संसारमेनं मुञ्चेयुर्ज्ञाततत्त्वा महाधियः॥
ततोऽमूदृशसल्लोकत्यागादेवावगम्यते।
नास्त्यत्र किंचित्संसारे सारं चारकसन्निभे॥
अतो मनीषिभिस्त्यक्ते देव नैवात्र युज्यते।
स्थातुं विज्ञाततत्त्वानां भवे भूरिभयाकरे॥
अन्यच्च देव सर्वेषामस्माकमपि साम्प्रतम्।
दृष्ट्वा मनीषिणश्चित्तं न चित्तं रमते भवे॥
यथैवास्य प्रभावेण संजातचरणोद्यमः।
अस्माकमेष निर्वाहं तथा तेनैव यास्यति॥
ततोऽस्माननुजानीत संसारोच्छेदकारिणीम्।
येन भागवतीं दीक्षामङ्गीकुर्मः सुनिर्मलाम्॥

नृपतिरुवाच ।

अहो विवेको युष्माकमहो गम्भीरचित्तता ।
अहो वचनविन्यासस्तथाहो सत्त्वसारता ॥
साध्वध्यवसितं भद्रैः साधु प्रोत्साहिता वयम् ।
साधु भो क्षणमात्रेण चोटितं भवपञ्जरम् ॥
एवं सामान्यतस्तावत् सर्वेषामभिनन्दनम् ।
कृत्वा प्रत्येकमथाह स राजा हर्षनिर्भरः ॥

तत्र सुबुद्धिं तावदुवाच ।

सखे विदितसंसारस्वभावेन त्वया गृहे ।
इयन्तं तिष्ठता कालं वयमेव प्रतीक्षिताः ॥
अन्यथा ते गृहे किं वा स्यादवस्थानकारणम् ।
को नाम राज्यलाभेऽपि भजेच्चाण्डालरूपताम् ॥
तत्साधु विहितं साधु कृतोऽस्माकमनुग्रहः ।
एवमाचरता मित्र दर्शिता च सुमित्रता ॥

मध्यमबुद्धिं प्रत्याह ।

त्वमादावेव धन्योऽसि यस्य सङ्गो मनीषिणा ।
नैव कल्पद्रुमोपेतो नरोऽकल्याणमर्हति ॥
अधुना चरितेऽप्यस्य दधानेन मतिं त्वया ।
स्वभ्रातुर्निर्विशेषैव दर्शिता तुल्यरूपता ॥
तत्साधु विहितं भद्र यः पश्चादपि सुन्दरः ।
सोऽपि सुन्दर एवेति यतो वृद्धाः प्रचक्षते ॥

ततो मदनकन्दलीं प्रत्याह ।

सारं च सुकुमारं च देवि काञ्चनपद्मवत् ।
तावकीनमिदं चित्तं येनाङ्गीकृतमीदृशम् ॥
प्रसिद्धा धर्मपत्नीति यत्त्वं लोकोपचारतः ।
मम तत्सत्यतां नीतं कर्तव्येन त्वयाधुना ॥
तत्साधु विहितं देवि नास्त्यत्र भवपञ्जरे ।
नियन्त्रितानां जीवानां कर्तव्यमपरं वरम् ॥

तथा ।

यैरभ्युपगता दीक्षा तानन्यानपि भावतः ।
स राजा मधुरैरेवं वाक्यैरानन्द्य तोषतः ॥

तद्यथा ।

धन्या यूयं महात्मानः कृतकृत्या नरोत्तमाः ।
यैरभ्युपगता तूर्णं सद्दीक्षा पारमेश्वरी ॥
तच्चारु विहितं भद्रा युक्तमेतद्भवादृशाम् ।
यूयमेव परं लोके निर्मिथ्या मम बान्धवाः ॥

ततश्च ।

राजचिह्नार्पणाद्राज्ये स्थापयित्वा सुलोचनम् ।
ततः कृतान्यकर्तव्यः प्रविष्टो जिनमन्दिरे ॥

तत्र च ।

विहिताशेषकर्तव्याः पूजयित्वा जगद्गुरुम् ।
आचार्येभ्यो निजाकूतं ते सर्वेऽप्याचचक्षिरे ॥
ततोऽभिनन्दितास्तेऽपि सूरिभिः कलया गिरा ।
अलं विलम्बितेनात्र संसार इति भाषिणा ॥

ततः प्रवचनोक्तेन विधिना धूतकल्मषैः ।
सर्वे ते क्षणमात्रेण दीक्षिता गुरुभिर्जनाः ॥
अथ संवेगवृद्ध्यर्थं कल्पोऽयमिति वा क्षणम् ।
कृता समक्षं लोकस्य सूरिभिर्धर्मदेशना ॥

तद्यथा ।

अनाद्यनन्तसंसारे जन्ममृत्युभयाकरे ।
मौनीन्द्री दुर्लभा सत्त्वैः प्रव्रज्येयं सुनिर्मला ॥

यतः ।

तावद्दुःखान्यनन्तानि तावद्रागादिसन्ततिः ।
प्रभवः कर्मणस्तावत्तावज्जन्मपरम्परा ॥
विपदस्तावदेवैतास्तावत्सर्वा विडम्बना ।
तावद्दीनानि जल्पन्ति नरा एव पुरो नृणाम् ॥
तावद्दौर्गत्यसद्भावस्तावद्रोगसमुद्भवः ।
तावदेव बहुक्लेशो घोरसंसारसागरः ॥
यावन्निःशेषसावद्ययोगोपरतिलक्षणा ।
एषा न लभ्यते जीवैः प्रव्रज्यात्यन्तदुर्लभा ॥
प्रसादाल्लोकनाथस्य स्वकर्मविवरेण च ।
यदा तु सत्त्वैर्लभ्येत प्रव्रज्येयं जिनोदिता ॥
तदा निर्धूय पापानि यान्ति ते परमां गतिम् ।
अनन्तानन्दसंपूर्णां निःशेषक्लेशवर्जिताम् ॥
ततोऽमी ये पुरः प्रोक्ताः सर्वेऽपि भवभाविनः ।
क्षुद्रोपद्रवसंघाता दूरापास्ता भवन्ति ते ॥

किं च ।

इहापि भो भवन्त्येते प्रशमामृतपायिनः ॥
प्रव्रज्यायाद्दिशो जीवा निर्बाधाः सुखपूरिताः ॥
सा च भागवती दीक्षा युष्माभिरधुना स्फुटम् ।
संप्राप्ता तेन संप्राप्तं यत्प्राप्तव्यं भवोदधौ ॥
केवलं सततं यत्नः प्रमादपरिवर्जितैः ।
यावज्जीवं विधातव्यो भवद्भिरिदमुच्यते ॥

यतः ।

नाधन्याः पारमेतस्या गच्छन्ति पुरुषाधमाः ।
ये तु पारं प्रजन्त्यस्यास्त एव पुरुषोत्तमाः ॥
ततस्तैः प्रणतैः सर्वैर्जजल्पे सूरिसंमुखम् ।
इच्छामोऽनुग्रहं नाथ कुर्मो नाथानुशासनम् ॥
स्थगितानन्दरेषेन सुखवस्त्रिकया मुदा ।
अत्रान्तरे कृतः प्रश्नः प्रभुमर्दनसाधुना ॥

कथम् ।

विशालं निर्मलं धीरं गम्भीरं गुरुदर्शनम् ।
दयापरीतं निश्चिन्तं देवाभिष्वङ्गवर्जितम् ॥
स्तिमितं जगदानन्दं सदा वाग्गोचरातिगम् ।
कथमीदृग्भवेच्चित्तं नाथ यादृङ् मनीषिणः ॥
यस्य चेष्टितमालोक्य स्थिरीभूतमनमाः ।
एते सर्वे वयं मुक्ता भीमात् संसारचारकात् ॥

गुरुरुवाच ।

या विज्ञाता त्वयाप्यस्य जननी शुभसुन्दरी।
यावन्तस्तत्सुतास्तेषां सर्वेषामीदृशं मनः॥
ततो गृहीततत्त्वोऽपि राजर्षिरिदमब्रवीत्।
बोधार्थं मुग्धलोकानां विनयानतमस्तकः॥
किं तस्याः शुभसुन्दर्या विद्यन्ते बहवः सुताः।
अस्माभिश्च पुरा ज्ञातमयमेककपुत्रकः॥
गुरुरुवाच। बाढं विद्यन्ते। तथाहि।
ये ये चिभुवनेऽयच दृश्यन्तेऽनेन यादृशाः।
ते सर्वे शुभसुन्दर्याः पुत्रा नास्त्यच संशयः॥
किं च।
ये केचिदुत्तमा लोके सत्वमार्गानुयायिनः।
ते पुत्राः शुभसुन्दर्यास्तुल्या ज्ञेया मनीषिणा॥
राजर्षिरुवाच।
यासौ बालस्य जननी भवद्भिरुपवर्णिता।
भदन्त बालादन्येऽपि तस्याः किं सन्ति सूनवः॥
सूरिणाभिहितं। नितरां सन्ति। तथाहि।
ये ये चिभुवनेऽयच जघन्याः क्लिष्टजन्तवः।
ते तेऽकुशलमालायाः पुत्रा नास्त्यच संशयः॥
ते बालसदृशैरेव विज्ञेया दुष्टचेष्टितैः।
एतेऽकुशलमालायाः सूनवः सुपरिस्फुटाः॥
राजर्षिरुवाच। यद्येवं तर्हि।
तस्याः सामान्यरूपायाः किमन्ये सन्ति सूनवः।

भदन्त किं वा नो सन्ति मध्यबुद्धेः सहोदराः॥

सूरिणाभिहितं। बकुतमास्ते विद्यन्ते। यतः।

ये बालचरिताः केचिन्मनीषिचरिताश्च ये।

एतेभ्यो ये परे सत्त्वाः सर्वे तेऽमुष्य सोदराः॥

ये केचिच्छवलाचाराः समा मध्यमबुद्धिना।

सुताः सामान्यरूपायास्ते जीवा भुवनोदरे॥

सकाशादितराभ्यां ते गण्यमाना जगत्त्रये।

अनन्तगुणितास्तेन प्रोक्ता भूरितमा मया॥

राजर्षिरुवाच। भदन्त यद्येवं ततो मम चेतसि परिस्फुरति। यथैवं व्यवस्थिते सत्येतदापन्नं यदुत।

भार्यात्रयेण जनितं जघन्योत्तममध्यमम्।

तस्य कर्मविलासस्य जगदेतत्कुटुम्बकम्॥

सूरिरुवाच।

"आर्य नैवात्र सन्देहः सम्यगार्येण लक्षितम्।

मार्गानुसारिणी बुद्धिर्भवत्येव भवादृशाम्॥

तथाहि।

जघन्यमध्यमोत्कृष्टाः सर्वयोनिषु जन्तवः॥

विद्यन्ते केवलं मूले यत्तद्भावा भवन्ति ते।

ततश्च।

भवतेऽपि विनिर्दिष्टं यत्पैवेदं कुटुम्बकम्।

यदत्र विदुषा कार्यं तदिदानीं निबोधत॥

त्यक्तव्यं बालचरितं न कार्यं तत्समागमः।

मनीषिचरिते यत्नः कर्तव्यः सुखमिच्छता ॥
यतोऽत्र बहवो जीवाः प्रायो मध्यमबुद्धयः।
ते च सम्यगनुष्ठानात् संपद्यन्ते मनीषिणः ॥
एतद्विज्ञाय भो भव्याः सर्वेऽपि गदिता मया।
कार्यं मदनुरोधेन वृत्तमस्य मनीषिणः ॥
वर्जनीयश्च यत्नेन पापमित्रैः समागमः।
यतः स्पर्शनसम्पर्कात् स बालो निधनं गतः ॥
वर्जनेन पुनस्तस्य मनीषी सुपरिस्फुटाम्।
लोके शेखरतां प्राप्य जातोऽयं मोक्षसाधकः ॥
कल्याणमित्रैः कर्तव्या मैत्री पुंसा हितैषिणा।
इहामुत्र च विज्ञेया सा हेतुः सर्वसम्पदाम् ॥
दोषायेह कुसंसर्गः सुसंसर्गो गुणावहः।
एतच्च द्वयमप्यत्र मध्यबुद्धौ प्रतिष्ठितम् ॥

तथा हि।

बालः स्पर्शसंबन्धाद्दोषोऽभूद्दुःखभाजनम्।
युक्तोऽभूत्सततात्ह्लाद एष एव मनीषिणा ॥
तदिदं भो विनिश्चित्य बहिरङ्गान्तरैः सदा।
न कार्यो दुर्जनैः सङ्गः कर्तव्यः सुजनैः सह ॥

ततश्च।

इदमाकर्ण्य मौनीन्द्रं वचनं सुमनोहरम्।
प्रबुद्धा बहवः सत्त्वा जाता धर्मपरायणाः ॥
माता देवा निजं स्थानं स्थितो राज्ये सुलोचनः।

गतोऽन्यत्र विहाराय सूरिः शिष्यगणैः सह ॥

ततश्च ।

विहृत्य कालं भूयांसमागमोक्तेन वर्त्मना ।
पर्यन्तकाले संप्राप्ते विधाय सकलं विधिम् ॥
ज्ञानध्यानतपोवीर्यवह्निनिर्दग्धकल्मषः ।
मनीषी निर्वृतिं प्राप्तो हित्वा स्वं देहपञ्जरम् ॥
ये तु मध्यमसद्वीर्यास्ते तनूभूतकर्मकाः ।
गता मध्यमबुद्ध्याद्या देवलोकेषु साधवः ॥
बालस्य तु यदादिष्टं भदन्तैर्भाविचेष्टितम् ।
तत्तथैवाखिलं जातं नान्यथा मुनिभाषितम् ॥

॥ स्पर्शनकथानकं समाप्तम् ॥

विदुर उवाच । कुमार तदिदं मया ह्यः कथानकमाकर्णित-माकर्णयतश्च मम लङ्घितं दिनं । तेन युष्मत्समीपे नागतोऽस्मि । मयाभिहितं । भद्र सुन्दरमनुष्ठितं । यतोऽतिरमणीयमिदं कथा-नकं युक्त एव श्रोतुम् । अहो अत्यन्तदुरन्तः पापमित्रसम्बन्धो यतस्तस्य बालस्य स्पर्शनसम्पर्कादिहामुत्र च निबिडविडम्बनागर्भा दुःखपरंपरैव केवलं संपन्ना नान्यत्किंचनेति । विदूरेण चिन्तितं । बुद्धस्तावदनेन कथानकतात्पर्यार्थ इति । भविष्यति मे वचनाव-काशः ॥ एतश्च तत्रावसरे मत्तो नातिदूरे वर्तते वैश्वानरः । श्रुतं तेन मामकीनं वचनं । चिन्तितमनेन । अये विरूपको नन्दि-वर्धनस्योल्लापो । व्युत्पादितप्रायोऽयमनेन विदुरेण । तत्र सुन्दर-

मिदं वर्तते दृष्टः खल्वेष विदुरो ज्ञापयिष्यत्यस्य मदीयस्वरूपमिति। साशङ्कः संपन्नो वैश्वानरः॥ विदुरेणाभिहितं। कुमार सत्यमिदं सम्यगवधारितं कुमारेण। अन्यच्च। प्रकृतिरेषा प्रायः प्राणिनां यया यत्र कुचचित्किंचन दृष्टं श्रुतं वा सर्वमात्मविषये योजयन्ति। ततो मयापीदं कथानकमनुस्मृत्य स्वहृदये चिन्तितं। यदुत यदि कुमारस्य कदाचिदपि पापमित्रसम्बन्धो न भवति ततः सुन्दरं संपद्यते। मयाभिहितं। भद्र किमत्र चिन्तनीयं। नास्त्येव मे नापि भविष्यति पापमित्रसम्बन्धगन्धोऽपीति। विदुरः प्राह। वयमप्येतावदेवार्थयामहे। ततः स्थितो मदीयकर्णाभ्यर्णे विदुरः। शनैः शनैरभिहितं चानेन। यदुत केवलमेषोऽपि वैश्वानरो लोकवार्त्तया दुष्टप्रकृतिः श्रूयते। तदयं सम्यक्परीक्षणीयः कुमारेण। मा भूदेष स्पर्शनवद्बालस्य पापमित्रतया भवतोऽनर्थपरंपराकारणमिति।

निरीक्षते च तस्मिन्नवसरे वैश्वानरः साकूतः सन्नभिमुखो मदीयवदनं। लक्षितोऽहमनेन मुखविकारतस्तैर्विदुरवचनैर्दूयमानः। ततः कृता वैश्वानरेण मां प्रति सा पूर्वमाङ्केतिका संज्ञा। भक्षितं मया क्रूरचित्ताभिधानं तद्वटकं। ततस्तत्प्रभावान्मे क्षणेन वृद्धोऽन्तस्तापः। समुल्लसिताः स्वेदबिन्दवो जातं गुञ्जार्धसन्निभं शरीरं संपन्नं विषमदष्टोष्ठं भग्नोग्रभृकुटितरङ्गभतिकरालं वक्त्रकुहरं। ततो भद्रे अगृहीतसङ्केते तथा वैश्वानरवटकप्रभावाभिभूतात्मना मया पापकर्मणानाकलय्य तस्य वत्सलतामनालोच्य हितभाषितमविगणय्य चिरपरिचयं परित्यज्य स्नेहभावमुररीकृत्य दुर्जनतां सर्वथा

निष्ठुरवचनैस्तिरस्कृतोऽसौ विदुरः। यदुतारे दुरात्मन् निर्लज्जत्वं मां बालकल्पं कल्पयसि तथाचिन्त्यप्रभावोपेतं परमोपकारकमन्तरङ्गभूतं मे वैश्वानरं तथाविधदुष्टस्पर्शनोपमं मन्यसे। अदृदानस्य च प्रत्युत्तरं विदुरस्य मया दत्ता कपोलदारणी चपेटी। गृहीत्वा महत्फलकं प्रहर्तुमारब्धोऽहं। ततो भयातिरेकप्रकम्पमानगात्रयष्टिर्नष्टो विदुरः। गतस्तातसमीपं। कथितः समस्तोऽपि वृत्तान्तः। ततो निश्चितं स्वमनसि तातेन। यथा न शक्यत एव कथंचिदपि कुमारो वियोजयितुमेतस्माद्वैश्वानरपापमित्रादिति। तदेवं स्थिते यद्भविष्यत्तमेवास्माभिर्मौनेनैव स्थातुं युक्तमिति स्थापितस्तातेन सिद्धान्तः॥

इतश्च निःशेषितं मया कलाग्रहणं। ततो गणितं प्रशस्तदिनं। आनीतोऽहं कलाशालायास्तातेनात्मसमीपं। पूजितः कलाचार्यो दत्तानि महादानानि कारितो महोत्सवः। अभिनन्दितोऽहं तातेनाम्बाभिः शेषलोकैश्च। वितीर्णो मे पृथगावासकः। यथासुखमास्तामेष इति कृत्वा तातेन नियुक्तः परिजनः। समुपहृतानि मे भोगोपभोगोपकरणानि। स्थितोऽहं सुरकुमारवल्ललमानः। ततस्त्रिभुवनविक्षोभनीयोऽमृतरस इव सागरस्य सकललोकमयनानन्दजननचन्द्रोदय इव प्रदोषस्य बहुरागविकारभङ्गुरः सुरचापकलाप इव जलधरसमयस्य मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य अभिव्यज्यमानरागरमणीयः सूर्योदय इव कमलवनस्य विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनः प्रादुर्भूतो मे यौवनारम्भः। संपन्नमतिरमणीयं शरीरं। विस्तीर्णा-

मिदं वर्तते दृष्टः खल्वेष विदुरो ज्ञापयिष्यत्यस्य मदीयस्वरूपमिति । साशङ्कः संपन्नो वैश्वानरः ॥ विदुरेणाभिहितं । कुमार सत्यमिदं सम्यगवधारितं कुमारेण । अन्यच्च । प्रकृतिरेषा प्रायः प्राणिनां यथा यत्र कुचचित्किंचन दृष्टं श्रुतं वा सर्वमात्मविषये योजयन्ति । ततो मयापीदं कथानकमनुश्रुत्य स्वहृदये चिन्तितं । यदुत यदि कुमारस्य कदाचिदपि पापमित्रसम्बन्धो न भवति ततः सुन्दरं संपद्यते । मयाभिहितं । भद्र किमत्र चिन्तनीयं । नास्त्येव मे नापि भविष्यति पापमित्रसम्बन्धगन्धोऽपीति । विदुरः प्राह । वयमप्येतावदेवार्थयामहे । ततः स्थितो मदीयकर्णाभ्यर्णे विदुरः । शनैः शनैरभिहितं चानेन । यदुत केवलमेषोऽपि वैश्वानरो लोकवार्त्तया दुष्टप्रकृतिः श्रूयते । तदयं सम्यक्परीक्षणीयः कुमारेण । मा भूदेष स्पर्शनवद्बालस्य पापमित्रतया भवतोऽनर्थपरंपराकारणमिति ।

निरीक्षते च तस्मिन्नवसरे वैश्वानरः साकूतः सम्मुखो मदीयवदनं । लक्षितोऽहमनेन मुखविकारतस्तैर्विदुरवचनैर्दूयमानः । ततः कृता वैश्वानरेण मां प्रति सा पूर्वसाङ्केतिका संज्ञा । भक्षितं मया क्रूरचित्ताभिधानं तद्वटकं । ततस्तत्प्रभावान्मे क्षणेन वृद्धोऽन्तस्तापः । समुच्छ्रिताः स्वेदबिन्दवो जातं गुञ्जार्धसन्निभं शरीरं संपन्नं विषमदष्टोष्ठं भग्नोग्रभ्रकुटितरङ्गभङ्गविकरालं वक्त्रकुहरं । ततो भद्रे अगृहीतसङ्केते तया वैश्वानरवटकप्रभावाभिभूतात्मना मया पापकर्मणानाकलय्य तस्य वत्सलतामनालोच्य हितभाषितमविगणय्य चिरपरिचयं परित्यज्य स्नेहभावमुररीकृत्य दुर्जनतां सर्वथा

निष्ठुरवचनैस्तिरस्कृतोऽसौ विदुरः। यदुतारे दुरात्मन् निर्लज्जलं मां बालकल्पं कल्पयसि तथाचिन्त्यप्रभावोपेतं परमोपकारकमन्तरङ्गभूतं मे वैश्वानरं तथाविधदुष्टस्पर्शनोपमं मन्यसे। प्रददानस्य च प्रत्युत्तरं विदुरस्य मया दत्ता कपोलदारणी चपेटी। गृहीला महत्फलकं प्रहर्तुमारब्धोऽहं। ततो भयातिरेकप्रकम्पमानगात्रयष्टिर्नष्टो विदुरः। गतस्तातसमीपं। कथितः समस्तोऽपि वृत्तान्तः। ततो निश्चितं स्वमनसि तातेन। यथा न शक्यत एव कथंचिदपि कुमारो वियोजयितुमेतस्माद्वैश्वानरपापमित्रादिति। तदेवं स्थिते यद्भवितव्यं तामेवास्माभिर्मौनेनैव स्थातुं युक्तमिति स्थापितस्तातेन सिद्धान्तः॥

इतश्च निःशेषितं मया कलाग्रहणं। ततो गणितं प्रशस्तदिनं। आनीतोऽहं कलाशालायास्तातेनात्मसमीपं। पूजितः कलाचार्यो दत्तानि महादानानि कारितो महोत्सवः। अभिनन्दितोऽहं तातेनाम्बाभिः शेषलोकैश्च। वितीर्णो मे पृथगावासकः। यथासुखमास्तामेष इति कृत्वा तातेन नियुक्तः परिजनः। समुपहृतानि मे भोगोपभोगोपकरणानि। स्थितोऽहं सुरकुमारवल्ललमानः। ततस्त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य सकललोकनयनानन्दजननश्चन्द्रोदय इव प्रदोषस्य बहुरागविकारभङ्गुरः सुरचापकलाप इव जलधरसमयस्य मकरध्वजायुधभूतः कुसुमप्रसव इव कल्पपादपस्य अभिव्यज्यमानरागरमणीयः सूर्योदय इव कमलवनस्य विविधलास्यविलासयोग्यः कलाप इव शिखण्डिनः प्रादुर्भूतो मे यौवनारम्भः। संपन्नमतिरमणीयं शरीरं। विस्तीर्णी-

भूतं वचःस्थलं। परिपूरितमूरुदण्डद्वयं अगमत्तनुतां मध्यदेशः। प्राप्तः प्रथिमानं नितम्बभागः। प्रतापवदारूढा रोमराजिः। वैशद्यमवाप्ते लोचने। प्रलम्बतामुपागतं भुजयुगलं। यौवनसहायेनैवाधिष्ठितोऽहं मकरध्वजेन॥ इतश्च स्वभवनात्त्रिसन्ध्यं व्रजामि स्माहं राजकुले गुरूणां पादवन्दकः। ततोऽन्यदागतः प्रभाते। कृतं तातस्याम्बादीनां च पादपतनं। अभिनन्दितस्तैराशीर्वादेन। स्थितस्तत्समीपे कियन्तमपि क्षणं। समागतः स्वभवने निविष्टो विष्टरे यावदकाण्ड एवोल्लसितो राजकुले बहलः कलकलः। ततः किमेतदित्यलक्षिततन्निमित्ततया जातो मे संभ्रमः। प्रस्थितस्तदभिमुखं यावत्तूर्णमागच्छन्नालोकितो मया धवलाभिधानः सबलो बलाधिकृतः। प्राप्तो मदन्तिकं। प्रणतोऽहमनेन। आह च। कुमार देवः समादिशति। यदुतैतो निर्गतमात्रस्य ते प्रविष्टौ मत्समीपे दूतौ। निवेदितं च तेन। यथा कुशावर्त्तपुरात् कनकचूड़राजसूनुः कनकशेखरो नाम राजकुमारो जनकापमानाभिमानात्त्वत्समीपमागतो गव्यूतमात्रवर्तिनि मलयनन्दने कानने तिष्ठत्येतदाकर्ण्य देवः प्रमाणमिति। ततोऽहं स्वगृहागततया प्रत्यासन्नबन्धुतया महापुरुषतया च प्रत्युद्गमनमर्हति कनकशेखरः कुमार इति आस्थानस्थायिभ्यो राजवृन्देभ्यः प्रत्याय्य एष समुच्चलितः स्वयं तदभिमुखं। कुमारेणापि शीघ्रमागन्तव्यमित्यहं प्रहितो युष्मदाह्वानाय। तत्तूर्णं प्रस्थातुमर्हति कुमारस्ततो यदाज्ञापयति तात इति ब्रुवाणश्चलितोऽहं सपरिकरो। मीलितस्तातसले दृष्टो मया धवलः। कथमेव कनकशेखरोऽस्माकं

बन्धुरिति। धवलेनाभिहितं। यतो नन्दायाः कनकचूड़ः सहोदरो भवति तेन ते मातुलसूनुरेष भ्रातेति। प्राप्तास्तत्समीपं। कृतं कनकशेखरेण तातस्य पादपतनं। समालिङ्गितस्तातेन मया च। कृतोचिता प्रतिपत्तिः। प्रवेशितो नगरे महानन्दविमर्देन। अभिहितश्च तातेनाश्मया च कनकशेखरो। यथा कुमार सुन्दरमनुष्ठितं यदात्मीयवदनकमलदर्शनेन जनितोऽस्माकं मनोरथानामप्यगम्यो महांश्चित्तानन्दः। तदेतदपि कुमारस्य पैतृकमेव राज्यं। तस्मान्नात्र कुमारेण तिष्ठता विकल्पो विधेय इति। अभिनन्दितं तातास्यावचनं कनकशेखरेण। समर्पितस्तातेन मदीयभवनाभ्यर्णवर्ती कनकशेखरस्य महाप्रासादः। स्थितस्तत्रासौ। जातोऽस्य मया सह स्नेहभावः। समुत्पन्नो विश्रम्भः। अन्यदा रहसि पृष्टोऽसौ मया। यदुत मयाकर्णितं। किल जनकापमानाभिमानाद्भवतामिहागमनमभूत्तत्कीदृशो जनकेन भवतोऽपमानो विहित इति श्रोतुमिच्छामि। कनकशेखरेणाभिहितम्। आकर्णय।

तातेन चूतमञ्जर्या जनन्यात्यन्तलालितः।
कुशावर्त्तपुरे तावदहमासं कुमारकः॥
अन्यदा मित्रवृन्देन युक्तः केलिपरायणः।
गतः शमावहं नाम काननं नन्दनोपमम्॥
तत्र साधूचिते देशे रक्ताशोकतलस्थितः।
दृष्टो मया महाभागः प्रशान्तो मुनिसत्तमः॥
क्षीरसागरगम्भीरस्तापनीयगिरिस्थिरः।

दिवाकरमहातेजाः शुद्धस्फटिकनिर्मलः ॥
ततः प्रादुर्भवद्भक्तिरहं गत्वा तदन्तिकम्।
प्रणम्य चरणौ तस्य निषण्णः शुद्धभूतले ॥
वयस्या अपि मे सर्वे प्रणिपत्य मुनीश्वरम्।
उपविष्टा मदभ्यर्णे विनयानतमस्तकाः ॥
उपसंहृतसद्ध्यानः स साधुर्दत्तनामकः।
दत्ताशीर्मधुरैर्वाक्यैः समस्तान् समभाषत ॥
तदीयवाक्यप्रीतेन मयोक्तं प्रहृचेतसा।
भदन्त कीदृशः प्रोक्तो धर्मस्तावकदर्शने ॥
अथ प्रह्लादयन्नुच्चैर्मनो मे कलया गिरा।
धर्ममाख्यत्प्रपञ्चेन जैनचन्द्रं स मे मुनिः ॥
तत्रापि प्रथमं तेन साधुधर्मो निवेदितः।
ततस्तदनु विस्तार्य गृहिधर्मः प्रकाशितः ॥

ततश्च।

सम्यग्दर्शनसन्मूलो व्रतस्कन्धो महाफलः।
शमादिशाखो गृहिणां धर्मः कल्पद्रुमोपमः ॥
गृहीतः सवयस्येन गतोऽन्यत्र महामुनिः।
धर्मं पालयतो मेऽसावन्यदा पुनरागतः ॥

इतश्च।

व्युत्पन्नबुद्धिः संजातस्तदाहमपरापरैः।
श्रावकैः सह संसर्गं कुर्वाणो धर्मकाम्यया ॥
अथासौ वन्दितो भक्त्या गत्वोद्यानं महामुनिः।

पृष्टश्चेदं भदन्तेह किं सारं जिनशासने ॥

मुनिरुवाच ।

अहिंसा ध्यानयोगश्च रागादीनां विनिग्रहः ।
साधर्मिकानुरागश्च सारमेतज्जिनागमे ॥

मया चिन्तितम् ।

सर्वारम्भप्रवृत्तानां मादृशां सुपरिस्फुटम् ।
अहिंसा प्राणिनां तावद्विधातुमतिदुःशका ॥
निष्प्रकम्पमनःसाध्यो ध्यानयोगोऽपि मादृशाम् ।
विषयामिषमूढानां दूराद्दूरतरं गतः ॥
रागादिनिग्रहोऽप्यत्र तत्त्वाभ्यासपरायणैः ।
अप्रमादपरैः शक्यः कर्तुं पुंभिर्न मादृशैः ॥
साधर्मिकानुरागस्तु यो भदन्तेन साधितः ।
ते मुक्त्वा भुक्तिलेखि(१)ः कर्मणय न कुर्वत ॥
राजदण्डभयादेव देव लोको निरङ्कुशः ।
उन्मार्गप्रस्थितस्तूर्णं करीव विनिवर्तते ॥
उद्दण्डोऽनार्यकार्येषु वर्तमानः स केवलम् ।
प्रतापहाने राज्ञोऽपि लाघवं जनयत्यलम् ॥
अन्यथाचाधुना भूरिलोको जैनेमते स्थितः ।
कः कुमारप्रसादार्थी नाश्रयेत्तंसकर्णकः ॥

एवं च ।

करहीने जने जाते यथेष्टप्रविचारिणि ।
कस्याच यूयं राजानः किं वा राज्यं विनाज्ञया ॥

तदिदं यत् कुमारेण देव प्रारब्धमलौकिकम्।
राजनीतेः समुत्तीर्णं बुध्यते तन्न सुन्दरम्॥
तातः प्राहार्य यद्येवं स्वयमेवोच्यतां त्वया।
कुमारो न वयं तस्य सम्मुखं भाषितुं क्षमाः॥

ततश्च।

तातानुज्ञामवाप्यैवं दुर्मुखो मामभाषत।
कुमार नेदृशी नीतिर्नृपतेर्लोकपालने॥

यतः।

करापीतजगत्सारो महसा व्याप्तभूतलः।
राजा दिनकराकारो लोकस्योपरि तिष्ठति॥
यस्तु प्राकृतलोकस्य वशगः स्यान्महीपतिः।
तस्य स्यात्कीदृशं राज्यं को वा न्यायस्तदाज्ञया॥
राजदण्डभयाभावात्ततो लोका निरङ्कुशाः।
दुष्टचेष्टितमार्गेषु प्रवर्तन्ते यथेच्छया॥

तदेवं स्थिते।

आदितः करदण्डाभ्यां यस्मात्नो शास्ति भूपतिः।
तेनैव परमार्थेन स कृतो धर्मसम्प्लवः॥
कुमार तदिदं ज्ञात्वा राजधर्मव्यतिक्रमात्।
नालीकधर्मवात्सल्यं युक्तं कर्तुं भवादृशाम्॥
ततः प्रादुर्भवत्कोपविक्लीभूतचेतसा।
आकारसंवरं कृत्वा मया तं प्रति भाषितम्॥
आर्य युक्तमिदं वक्तुमेव मां प्रति यद्वद्‌म्।

दुष्टवष्टादिलोकस्य कुर्यां सन्मानपूजनम् ॥
ये तु स्वगुणमाहात्म्याद्देवानामपि पूजिताः।
तेषां यथेच्छादानेऽपि नैतत्संवध्यते वचः ॥

तथा हि।

ये चौर्यपारदार्यादिः सर्वस्माद्दुष्टचेष्टितात्।
स्वत एव महात्मानो निवृत्ताः सर्वभावतः ॥
तेषां जैनेन्द्रलोकानां दण्डः स्यात् कुत्र कारणे।
दण्डबुद्धिर्भवेत्तेषु यस्यासौ दण्डमर्हति ॥
करोऽपि रक्षणीयेषु लोकेषु ननु बुध्यते।
तस्यापि नोचिता जैना ये गुणैरेव रक्षिताः ॥
अतः किङ्करतां मुक्त्वा नान्यत्किंचन भूभुजाम्।
विधातुं युक्तमेतेषां सेवास्माभिर्विधीयते ॥
येषां नाथो जगन्नाथो भगवांस्तेषु किङ्करः।
यः स्याद्राजा स एवात्र राजा शेषास्तु किङ्कराः ॥
एवं चाचरता ब्रूहि राजनीतेर्विलङ्घनम्।
किं मया विहितं येन भवानेवं प्रजल्पति ॥

किं च।

अलीकधर्मवात्सल्यं मदीयं वदता त्वया।
परिस्फुटीकृतं नूनं दुर्मुखत्वमिहात्मनः ॥

एवं च वदति मयि लक्षितो दुर्मुखेण मदीयोऽभिप्रायः। चिन्तितमनेन। अये अर्हद्दर्शने निर्भरोऽस्यानुरागः। अनिवर्तकश्चित्तप्रसरः। कुपितश्चायं मदीयवचसा। तदलमनेनाधुना गाढ-

तरमुद्देजितेन। प्रगुणीकृत एवाचार्ये मया राजा। ततः स्वयमेव स्वाभिमतमनुष्ठास्यामि। साम्प्रतं पुनरेनमनुलोमयामीति संचिन्त्याभिहितमनेन। साधु कुमार साधु। सुन्दरस्ते सद्धर्मस्थैर्यातिरेकः। मया हि भवतश्चित्तपरीक्षणार्थं सर्वमिदमुपक्रान्तं। ततश्च सुनिश्चितमधुना। यदुत तावकीनं मन। स्थिरतया मेरुशिखरमप्यधरयति। तन्नेदं मदीयवचनं कुमारेणान्यथा सम्भावनीयं। मयाभिहितम्। आर्य किमत्र वक्तव्यं। अविषयो भवादृशा अन्यथासम्भावनायाः। ततो निर्गतो मत्समीपाद्दुर्मुखः। मया चिन्तितं। शठप्रकृतिरेष दुर्मुखः पापात्मा च। तन्न विज्ञायते किमयमाचरिष्यति। यतो महताकूतेन प्रथममनेन मन्त्रितं पश्चादतिलरया कृतमाकारसंवरणम्। अतो निरूपयामस्तावत्। ततः प्रयुक्तो मया प्रणिधिश्चतुरो नामाप्तदारकः॥ गतेषु कतिचिद्दिनेषु समागतोऽसौ मत्समीपं। निवेदितमनेन। यथा स्वामिन् तावदितो निर्गतोऽहं विनयेनाराध्य दुर्मुखं संपन्नस्तस्याङ्गरक्षकः। ततो दुर्मुखेण रहसि समाहूय समस्तस्थानेभ्यः प्रधानश्रावकानिदमभिहितं। यदुत अरे एष कनकशेखरकुमारोऽलीकधर्मग्रहग्रहीतो राज्यं विनाशयति लग्नः। ततो युष्मभ्यमितः प्रभृति यदेष किंचित् प्रयच्छति यश्च राजभागमद्भुतो भवतां करस्तद्द्वयमपि प्रच्छन्नमेव मम समर्पणीयं न च कुमाराय निवेदनीयमितरथा नास्ति भवतां जीवितमिति। श्रावकैरुक्तं। यदाज्ञापयति महामात्यः। ततो निर्गतास्ते। मयाभिहितं तास्ते। भद्र अपि ज्ञातमेतत्तातेन। चतुरः प्राह। ज्ञातं। मयोक्तं। कुतः सकाशात्। चतुरेणोक्तं। तत एव दुर्मुखात्। मया-

भिहितं। ततः किमाचरितं तातेन। चतुरः प्राह। न किंचित् केवलं कृता गजनिमीलिका। ततो मया चिन्तितं। यद्येष दुर्मुखः केवल एव तातस्यानभिप्रेतमिदमकरिष्यत्ततोऽहमदर्शयिष्यमस्य यदीदृशस्याविनयस्य फलं। यदा तु परकृतमनुमतमप्रतिषिद्धमिति न्यायात् तातेनापीदं गजनिमीलिकां कुर्वताभिमतमेव तदा किमत्र कुर्मः। यतो दुष्प्रतिकारौ मातापितरावित्याख्यातं भगवता। ततो न युक्तं तावत्तातेन सह विग्रहकरणं नापीदमीदृशमिदानीं द्रष्टुं शक्यं। तस्मादितोऽपक्रमणमेव श्रेयः। इत्यालोच्य कस्यचिदप्यकथयित्वा आत्मचित्तवृन्देन सहापक्रान्तोऽहं समागतोऽत्रेति। तदेष मे जनकेनापमानो विहित इति ॥

मयाभिहितं। कुमारसुन्दरमनुष्ठितं भवता। न युक्त एवाभिमानशालिनां पुरुषाणां मानम्लानिकारिभिः सहैकत्र निवासः। तथाहि।

> भास्करस्तावदेवास्ते गगने तेजसां निधिः।
> निर्धूय तिमिरं यावत् कुरुते स जनोत्सवम् ॥
> यदा तु लक्षयत्येष तमसोऽपि महोदयम्।
> तदापरसमुद्रादौ गत्वा कालं प्रतीक्षते ॥

ततस्तुष्टो मद्वचनेन कनकशेखरः। तदेवं परस्परप्रीत्या गतं दशरात्रं। अत्रान्तरे मद्भवने तिष्ठतोरावयोः समागतो वेदकः। प्रणतिपूर्वकमभिहितमनेन। यदुत कुमारौ देवः समाज्ञापयति। शीघ्रमागन्तव्यं कुमाराभ्यामिति। ततो यदाज्ञापयति तात। इत्यभिधायावां गतौ तातसमीपे यावदतिरभसवशेन तातस्याना-

इत्याय गलदानन्दोदकप्रवाहक्षालितनयनयुगलास्त्रयः प्रधानपुरुषाः समागत्य सपरिकराः पतिताः कनकशेखरचरणयोः। ततः साकूतमये कृते सुमतिवराङ्गकेसरिण इति वदता सस्नेहमूर्ध्वीकृत्य समालिङ्गिताः कनकशेखरेण। मयोक्तं। कुमार क एते। कनकशेखरः प्राह। मदीयजनकमहत्तमा इति। ततः कृतप्रतिपत्तयः समुपविष्टाः सर्वेऽपि तातास्यर्णे। तातः कनकशेखरं प्रत्याह। कुमार एतैस्त्वदीयजनकमहत्तमैराख्यातं। यथा यतः प्रभृति कुमारोऽनाख्याय निर्गतो गेहात् तत आरभ्य राजा कनकचूडः परिजनसकाशान्न दृश्यते क्वापि कुमार इत्याकर्ण्य सहसा वज्राहत इव पिष्ट इव परायत्त इव मत्त इव मूर्छित इव न किंचिच्चेतयते स्म। देवी च चूतमञ्जरी प्रविष्टा महामोहं मृतेव स्थिता मुहूर्तं। कृतं परिजनेन द्वयोरपि व्यञ्जनचन्दनादिभिराश्वासनं। ततो हा पुत्रक क गतोऽसीति प्रलपितुं प्रवृत्तौ तौ देवीनृपौ। ततः परिजनस्यापि समुल्लसितो महानाक्रन्दरवः मिलितं मन्त्रिमण्डलं। अभिहितमनेन। देव नायमत्रोपायः। ततो मुञ्च विषादं अवलम्बस्व धैर्यं क्रियतां यत्नः कुमारान्वेषणे। राजा न तद्वचनं वेदयते स्म। ततश्चतुरेण चिन्तितं। शोकातिरेकेण त्यक्ष्यति देवः प्राणान्। ततो नाधुना ममोपेक्षा कर्तुं युक्ता। ततः पादयोर्निपत्य तेन राज्ञे निवेदितं सकारणं तदीयमपक्रमणं। ततो जीवति कुमार इति श्रुत्वा प्रत्यागता राज्ञश्चेतना। पृष्टश्चतुरः क पुनर्गतः कुमार इति। चतुरेणाभिहितं। न मे किंचिदाख्यातं कुमारेणापक्रमणकारणमिति। चतुरतया मया लक्षितं केवलमेतावदितर्कयामि। यदुत जयस्थले

पितृष्वसुः समीपे गतो भविष्यति। वल्लभा हि नन्दा कुमारस्य वत्सलः पद्मराजः। कुमारपरिचयादेवावगतमिदं मया। इतो निर्गतस्य तत्रैव चित्तनिर्वाणं नान्यत्रेति॥ ततः साधु चतुर विज्ञातं साध्विति वदता दापितं चतुराय पारितोषिकं महादानं राज्ञा। अयमस्यानर्थव्यतिकरस्य हेतुरिति कृत्वा निर्वासितः स्वविषयात्सगोत्रो दुर्मुखः। प्रतिज्ञातं च देवीनृपाभ्यां। यथा यावत् कुमारवदनं साक्षान्नावलोकितं तावन्नैवावाभ्यामाहारशरीरसंस्कारादिकं करणीयमिति।

इतश्च तत्रैव दिने प्रविष्टो दूतः। तेन च विहितोचितप्रतिपत्तिना निवेदितं कनकचूडाय। यथा देव अस्ति विशाला नाम नगरी। तस्यां नन्दनो नाम राजा। तस्य च द्वे भार्ये प्रभावती पद्मावती च। तयोश्च यथाक्रमं द्वे दुहितरौ विमलानना रत्नवती च। इतश्च कनकपुरे प्रभावत्याः सहोदरोऽस्ति प्रभाकरो नाम राजा। तस्य बन्धुसुन्दरी नाम भार्या। तस्याश्च विभाकराभिधानस्तनयः। तयोश्च प्रभाकरपद्मावत्योः पूर्वमजातयोरेव विभाकरविमलाननयोः परस्परमभ्युपगमस्सन्धः। यदुतावयोर्यस्य कस्यचिद्दुहिता जायेत तेनेतरसम्बन्धिने सुताय सा देयेति। अतः पूर्वप्रतिपन्ना सा विमलानना विभाकरस्य। अन्यदा गुणसंभारगर्भनिर्भरं वन्दिभिरुद्घुष्यमाणं श्रुतं तया कनकशेखरकुमारनामकं। ततस्तदाकर्ण्य सा विमलानना कुमारे विजृम्भितरागातिरेका निजयूथपरिभ्रष्टेव हरिणिका सहचरवियुक्तेव चक्रवाकिका नाकनिर्वासितेव देवाङ्गनिका मानससरःसमुत्कण्ठितेव कलहंसिका रतिहवि-

रहितेव द्यूतकरी शून्यहृदयतया न वादयति वीणां न विलसति कन्दुकलीलया न विधत्ते पत्रच्छेदादिकं नाभ्यस्यति चित्रादिकलाः न कुरुते शरीरस्थितिं न ददाति कस्यचिदुल्लापं न लक्षयति रात्रिन्दिनं केवलं निष्पन्दमन्दनिश्चललोचना परमयोगिनीव निरालम्बनं किमपि ध्यायन्ती तिष्ठति। ततः पर्याकुलीभूतः परिकरो न जानीते तादृशविकारस्य कारणं। ततोऽतिवल्लभत्वेन सदा संनिहितया लक्षितोऽसौ रत्नवत्या विकारहेतुः। यत-श्चिन्तितं तया। अये कनकशेखरकुमारनामग्रहणादनन्तरमिदमव-स्थान्तरमस्याः संपन्नमतो निश्चितमेतत्तेनैव प्रियभगिन्या मनश्चो-रितं। तदिदमत्र प्राप्तकालं। निवेदयाम्येवंस्थितमेव तातायं। येन तात एव तस्य प्रियभगिनीचित्तचौरस्य निग्रहं करोतीति विचिन्त्य निवेदितं तया सर्वं नन्दननरपतये। चिन्तितमनेन। दत्तैवेयं जनन्या विभाकराय तथापि नान्यथाधुनास्या जीवितमिति कृत्वा प्रेषयामि तत्रैव कनकशेखरस्य स्वयंवरामेनां। यतो नेदृशा-वस्थायामस्यां युक्तः कालविलम्बः। पश्चादेव विभाकरं संभालयि-ष्यामः। ततो वत्से धीरा भव मुञ्च विषादं गच्छ कुशावर्त्तं कनक-शेखरायेति मधुरवचनैरालप्य देवेन सह परिजनेन प्रस्थापिता तत्र विमलानना। रत्नवत्यापि विज्ञापितो देवः। यथा तात नाहमनया रहिता क्षणमपि जीवितुमुत्सहे। ततो मयापि यात-व्यमित्यनुजानीत यूयं। केवलं न मम कनकशेखरो भर्ता। यतः सापत्न्यं नारीणां महदेव स्नेहत्रोटकारणं। ततो मया तदिष्टस्य वयस्यस्य कस्यचिद्भार्यया भाव्यमिति। देवेनाभिहितं। वत्से यत्ते

रोचते तदेव समाचर। न खलु वत्सा स्वयमेवानुचितमाचरिष्यति। ततो महाप्रसाद इति वदन्ती प्रवृत्ता रत्नवती। ततोऽनवरत-प्रयाणकैः प्राप्ते ते विमलाननारत्नवत्यौ अद्यास्मिन्नगरे स्थिते बहिरुद्याने। प्रहितोऽहममुमर्थं विज्ञापयितुं देवपादमूलमेतदाकर्ण्य देवः प्रमाणमिति।

ततस्तद्दूतवचनमाकर्ण्य कनकचूडराजा हर्षविषादपूरितहृदयः कन्यावासकदानार्थं व्यापार्य शूरसेनं बलाधिकृतमस्मान् सुमति-वराङ्गकेसरिणः प्रधानमहत्तमान् प्रत्याह। पश्यताहो परमानन्द-कारणमपीदमस्माकं नन्दनराजदुहित्रोरागमनं कुमारविरहानल-सर्पिष्प्रक्षेपकल्पतया ' क्षते क्षारनिषेकतुल्यं प्रतिभासते। तद्गच्छत शीघ्रं यूयं जयस्थले। निश्चितमेतत्तत्रैवास्ते कुमारः। निवेदयत पद्मनृपतये मदीयावस्थां कन्यागमनं च। कारणद्वयमवगम्य प्रहे-ष्यत्येव कुमारं पद्मराजः। अन्यच्च नन्दिवर्धनकुमारोऽपि पद्मरा-जमनुज्ञाप्य युष्माभिरानेयो यतः स एवोचितो वरो रत्नवत्याः। ततोऽस्माभिरभिहितं। यदाज्ञापयति देवः। तत्रेहामुना प्रयो-जनेन समागता वयमिति॥ तदिदं सर्वमस्मभ्यमेतैराख्यातं। तदेवं स्थिते यद्यपि युष्मद्विरहकातरहृदयतया नेदमस्माभिरभि-धातुं शक्यं तथापि महाप्रयोजनमित्याकलय्याभिधीयते। यदुत मा कुरुताधुना कालविलम्बं गच्छतातित्वरया कुशावर्त्तं जनयतं द्वावपि युवां कनकचूडराजचित्तानन्दमिति। ततः शोभनमाज्ञा-पितं तातेन भविष्यत्येव कनकशेखरेण सह ममावियोग इति चिन्तयता मया कनकशेखरेण चाभिहितं। यदाज्ञापयति

सर्वाः सन्नीतयस्तावत्प्रवर्तन्ते जगत्त्रये ।
दुष्टाभिसन्धिर्नो यावत्तासां विघटको भवेत् ॥
प्रादुर्भावे पुनस्तस्य क्व धर्मः क्व च नीतयः ।
तेनासौ नीतिमार्गस्य धौरेयैर्गीतो विलोपकः ॥

तस्य च दुष्टाभिसन्धिनरेन्द्रस्यानभिज्ञा परवेदनानां कुशला पापमार्गे वत्सला चरटवृन्दस्यानुरक्तचित्ता निजे भर्तरि पूतनाकारा निष्करुणता नाम महादेवी । तथा हि ।

दुष्टाभिसन्धिना तेन नानाकारैः कदर्थनैः ।
चिरं कदर्थितं दीनं लोकमालोक्य सस्मिता ॥
सा निष्करुणता देवी दुःखं गाढतरं ततः ।
जनयेत्तस्य नो वेत्ति तेन सा परवेदनाम् ॥
नेत्रोत्पाटशिरश्छेदनासिकाकर्णकर्तनम् ।
उत्कर्तनं त्वचोऽङ्गस्य खदिरस्येव कुट्टनम् ॥
ये चान्ये जन्तुपीडायाः प्रकारास्तेषु कौशलात् ।
सा निष्करुणता देवी पापमार्गे विचक्षणा ॥
ये ये भुवनसन्तापकारिणो दुष्टवष्टकाः ।
रौद्रचित्तपुरे लोकाः सन्ति द्रोहादयः खलाः ॥
ते तेऽतिवल्लभास्तस्यास्ते ते सर्वस्वनायकाः ।
अतश्चरटवृन्दस्य देवी सात्यन्तवल्लभा ॥
दुष्टाभिसन्धिराजेन्द्रं तं भर्तारं दिवानिशम् ।
मन्यते परमात्मानं सा शुश्रूषापरायणा ॥
न मुञ्चति च तद्देहं संवाहयति तद्वलम् ।

अनुरक्ता निजे पत्यौ सा देवी तेन वर्ण्यते॥

तस्याश्च निष्करुणताया महादेव्या अभिवृद्धिहेतुस्तस्य रौद्रचित्तपुरस्य वल्लभा तन्निवासिजनानां विनीता जननीजनकयोरतिभीषणा स्वरूपेण साक्षात्कालकूटसम्पुटघटितेव हिंसा नाम दुहिता। तथा हि।

यतः प्रभृति सा जाता कन्यका राजमन्दिरे।
तत आरभ्य तत्सर्वं पुरं समभिवर्धते॥
राजा पुष्टतरीभूतो देवी स्थूलत्वमागता।
अतोऽभिवृद्धिहेतुः सा पत्तनस्य सुकन्यका॥
ईर्ष्याप्रद्वेषमात्सर्यचण्डत्वाप्रशमादयः।
प्रधाना ये जनास्तत्र पुरे विख्यातकीर्तयः॥
तेषामानन्दजननी सा हिंसा प्रविलोकिता।
स्थिता परापरोत्सङ्गे संचरन्ती करात्करे॥
चुम्ब्यमाना जनेनोच्चैर्वर्धमानेति निजेच्छया।
सा तन्निवासिलोकस्य तेनोक्तात्यन्तवल्लभा॥
दुष्टाभिसन्धिनृपतेर्वचनं नातिवर्तते।
सा निष्करुणतादेव्या वचनेन प्रवर्तते॥
शुश्रूषातत्परा नित्यं तयोर्हिंसा सुपुत्रिका।
जननीजनकयोस्तेन सः विनीतेति गीयते॥
भीषणा या स्वरूपेण यच्चाभिहितमञ्जसा।'
तदिदानीं मया सम्यक्कथ्यमानं निबोधत॥
अपि सा नाममात्रेण त्रासकम्पविधायिका।

सर्वाः सन्नीतयस्तावत्प्रवर्तन्ते जगत्त्रये।
दुष्टाभिसन्धिर्नो यावत्तासां विघटको भवेत्॥
प्रादुर्भावे पुनस्तस्य क्व धर्मः क्व च नीतयः।
तेनासौ नीतिमार्गस्य धौरेयैर्गीतो विलोपकः॥

तस्य च दुष्टाभिसन्धिनरेन्द्रस्यानभिज्ञा परवेदनानां कुशला पापमार्गे वत्सला चरटवृन्दस्यानुरक्तचित्ता निजे भर्तरि पूतनाकारा निष्करुणता नाम महादेवी। तथा हि।

दुष्टाभिसन्धिना तेन नानाकारैः कदर्थनैः।
चिरं कदर्थितं दीनं लोकमालोक्य सस्मिता॥
सा निष्करुणता देवी दुःखं गाढतरं ततः।
जनयेत्तस्य नो वेत्ति घोराः सन्तापकारिणः॥
ते लोकास्तत्र वास्तव्या रौद्रचित्तपुरे सदा।
तस्मात्तद्दुष्टलोकानां निवासस्थानमुच्यते॥
कलहः प्रीतिविच्छेदस्तथा वैरपरम्परा।
पितृमातृसुतादीनां मारणे निरपेक्षता॥
ये चान्येऽनर्थवेताला लोके सम्भावनातिगाः।
ते रौद्रचित्ते सर्वेऽपि संपद्यन्ते न संशयः॥
उत्पत्तिभूमिस्तत्तेषां पत्तनं तेन गीयते।
यथा च नरकद्वारं तथेदानीं निगद्यते॥
ये सत्त्वा नरकं यान्ति स्वपापभरपूरिताः।
ते तत्र प्रथमं तावत्प्रविशन्ति पुराधमे॥
अतः प्रवेशमार्गलात्तस्य निर्मलमानसैः।

अनुरक्ता निजे पत्यौ सा देवी तेन वर्ण्यते ॥

तस्याश्च निष्करुणताया महादेव्या अभिवृद्धिहेतुस्तस्य रौद्रचित्तपुरस्य वल्लभा तन्निवासिजनानां विनीता जननीजनकयोरतिभीषणा स्वरूपेण साक्षात्कालकूटसम्पुटघटितेव हिंसा नाम दुहिता। तथा हि।

यतः प्रभृति सा जाता कन्यका राजमन्दिरे।
तत आरभ्य तत्सर्वं पुरं समभिवर्धते ॥
राजा पुष्टतरीभूतो देवी स्थूलत्वमागता।
अतोऽभिवृद्धिहेतुः सा पत्तनस्य सुकन्यका ॥
ईर्ष्याप्रद्वेषमात्सर्यचण्डत्वाप्रशमादयः।
मानोग्रकोपाहङ्कारशाठ्यकामोऽस्वल्पकीर्तयः ॥
दुष्टाभिसन्धिं सर्वेऽपि नरेन्द्रं पर्युपासते ॥
अतोऽन्तरङ्गचौराणां तेषां पोषणतत्परः।
स राजा गीयते लोकैश्चौरसङ्ग्रहणे रतः ॥
सत्यशौचतपोज्ञानसंयमप्रशमादयः।
ये चापरे सदाचाराः शिष्टलोका यशस्विनः
दुष्टाभिसन्धिः सर्वेषां तेषामुन्मूलने रतः।
अतोऽसौ परमः शत्रुः शिष्टानामिति गीयते ॥
बह्वीभिर्वर्षकोटीभिर्धर्मध्यानं यदर्जितम्।
लोकेन तद्दहत्येष क्षणमात्रेण दारुणः ॥
न चास्य तोषणोपायो मुग्धलोकैर्विभाव्यते।
अतो विषमशीलोऽसौ प्रकृत्या प्रतिपाद्यते ॥

सर्वेषामेव जन्तूनां किं पुनः प्रविलोकिता ॥
साधोमुखेन शिरसा नरकं नयति देहिनः ।
सा संसारमहावर्तगर्तसंपातकारिका ॥
सा मूलं सर्वपापानां सा धर्मध्वंसकारिणी ।
सा हेतुश्चित्ततापानां सा शास्त्रेषु विगर्हिता ॥
किंचेह बहुनोक्तेन नास्त्येव ननु तादृशी ।
लोकेऽपि दारुणाकारा सा हिंसा हन्त यादृशी ॥

इतश्चास्ति तामसचित्तं नाम नगरं । तत्र महामोहतनयो द्वेषगजेन्द्रो नाम नरेन्द्रः प्रतिवसति । इतश्च या प्रागाख्याता वैश्वानरस्य जननी मम धात्री अविवेकिता नाम ब्राह्मणी सा तस्य द्वेषगजेन्द्रस्य भार्या भवति । सा च केनचित्प्रयोजनेन ततस्तामसचित्तान्नगराद्गर्भस्थिते सति वैश्वानरे तत्र रौद्रचित्तपुरे समागतासीत् । यादृक् तत्तामसचित्तं नगरं यादृशोऽसौ द्वेषगजेन्द्रो राजा यादृशी साविवेकिता यच्च तस्यास्तामसचित्तनगराद्रौद्रचित्तपुरं प्रत्यागमनप्रयोजनमेतत् सर्वमुत्तरत्र कथयिष्यामः । केवलं भद्रेऽत्रहीतसङ्केते न तदास्य व्यतिकरस्याहं गन्धमपि ज्ञातवान् । इदानीमेवास्य भगवतः सदागमस्य प्रसादादिदं समस्तं मम प्रत्यक्षीभूतं । तेन तुभ्यं कथयामि ।

गतमवगम्य ममोपरि स्नेहवशेनागत्य ततो रौद्रचित्तपुरात् स्थिता सन्निहिता। जातोऽस्या मम जन्मदिने वैश्वानरो वृद्धिं गतः क्रमेण। कथितस्तया तस्मै सर्वोऽप्यात्मीयः स्वजनवर्गः। ततस्तस्य वैश्वानरस्य तत्र मार्गे मया सह गच्छतः समुत्पन्नैवम्भूता बुद्धिः। यदुत नयाम्येनं नन्दिवर्धनकुमारं रौद्रचित्तपुरे। दापयाम्यस्मै दुष्टाभिसन्धिना तां हिंसाकन्यकां। ततस्तया परिणीतया ममैष सर्वप्रयोजनेषु गाढतरं निर्व्यभिचारो भविष्यति। ततो विचिन्त्य तेनैवमभिहितोऽहं तत्र गमनार्थं। मयोक्तं। कनकशेखरादयोऽपि गच्छन्तु। वैश्वानरः प्राह। कुमार नामीषां तत्र गमनप्रसरो यतो-ऽन्तरङ्गं तद्रौद्रचित्तं नगरं। ततो विना परिजनेन मत्सहाय एव कुमारस्तत्र गन्तुमर्हति। ततस्तदाकर्ण्याहमलङ्घनीयतया तद्वचनस्य गुरुतया तत्र स्नेहभावस्य अज्ञानोपहततया चित्तस्यानाकलय्य तस्य परमशत्रुतां अपर्यालोच्यात्महिताहितं अदृष्टापायागामिनीमनर्थपरं-परां गतो वैश्वानरेण सह रौद्रचित्तपुरे। दृष्टो दुष्टाभिसन्धिः। दापिता वैश्वानरेण मह्यं तेन हिंसा। परिणीता क्रमेण। कृत-मुचितकरणीयं॥

ततः प्रहितो दुष्टाभिसन्धिना सहितो हिंसावैश्वानराभ्यां मिलितोऽहं कनकशेखरादिबले। गच्छतां मार्गे प्रारब्धः सहर्षेण वैश्वानरेण सह जल्पः। यदुत कुमार कृतकृत्योऽहमिदानीं। मयोक्तं। कथम्। स प्राह। यदेषा परिणीता कुमारेण हिंसा। केवलमेता-वद्धुनाहं प्रार्थये यदेषा कुमारस्य सततमनुरक्ता भवति। मया-भिहितं। कः पुनरेवंभवनेऽस्या उपायो भविष्यति। वैश्वानरः

सर्वेषामेव जन्तूनां किं पुनः प्रविलोकिता ॥
साधोमुखेन शिरसा नरकं नयति देहिनः।
सा संसारमहावर्तगर्तसंपातकारिका ॥
सा मूलं सर्वपापानां सा धर्मध्वंसकारिणी।
सा हेतुश्चित्ततापानां सा शास्त्रेषु विगर्हिता ॥
किंचेह बहुनोक्तेन नास्त्येव ननु तादृशी।
लोकेऽपि दारुणाकारा सा हिंसा हन्त यादृशी ॥

इतश्चास्ति तामसचित्तं नाम नगरं। तत्र महामोहतनयो द्वेषगजेन्द्रो नाम नरेन्द्रः प्रतिवसति। इतश्च या प्रागाख्याता वैश्वानरस्य जननी मम धात्री अविवेकिता नाम ब्राह्मणी सा तस्य द्वेषगजेन्द्रस्य भार्या भवति। सा च केनचित्प्रयोजनेन तत-स्तामसचित्तान्नगराद्गर्भस्थिते सति वैश्वानरे तत्र रौद्रचित्तपुरे समागतासीत्। यादृक् तत्तामसचित्तं नगरं यादृशोऽसौ द्वेष-गजेन्द्रो राजा यादृशी साविवेकिता यच्च तस्यास्तामसचित्त-नगराद्रौद्रचित्तपुरं प्रत्यागमनप्रयोजनमेतत् सर्वमुत्तरत्र कथ-यिष्यामः। केवलं भद्रेऽगृहीतसङ्केते न तदास्य व्यतिकरस्याहं गन्धमपि ज्ञातवान्। इदानीमेवास्य भगवतः सदागमस्य प्रसादा-दिदं समस्तं मम प्रत्यक्षीभूतं। तेन तुभ्यं कथयामि।

ततः साविवेकिता तत्र रौद्रचित्तपुरे स्थिता कियन्तमपि कालं। जातो दुष्टाभिसन्धिना सह परिचयः। यतो द्वेषगजेन्द्र-प्रतिबद्ध एवासौ दुष्टाभिसन्धिश्चरटनरेन्द्रः ततोऽविवेकितायाः किङ्करभूतो वर्तते। ततः साविवेकिता मां मनुजगतौ समा-

ततः समुदीर्णतया चरटवर्गस्य संजाताः परिभग्नप्रायाः कनकशेखरादयः। अत्रान्तरे प्रवरसेनाभिधानेन चरटनायकेन सार्धं ममापतितं समायोधनमिति। ततः संज्ञितोऽहं वैश्वानरेण। भक्षितं मया तत्क्रूरचित्ताभिधानं वटकं। ततः प्रवृद्धो मेऽन्तस्तापः। संजातो भ्रुकुटितरङ्गभङ्गुरो ललाटपट्टः। समाचितं खेदबिन्दुनिकरेण शरीरं। स च प्रवरसेनोऽत्यन्तकुशलो धनुर्वेदे निर्व्यूढसाहसः करवालेऽतिनिपुणः सर्वास्त्रप्रयोगेषु गर्वोद्धुरो विद्याबलेन प्रबलवीर्यो देवतानुग्रहेण। तथापि मच्चित्तपुण्योदयमाहात्म्यान्मे न लगन्ति स्म तदीयशिलीमुखाः न प्रभवन्ति स्म तदीयशस्त्राणि न वहन्ति स्म तस्य विद्याः अकिञ्चित्करीभूता देवता। मम तु चेतसि परिस्फुरितं अहो प्रियमित्रवटकस्य प्रभावातिशयो यदस्य तेजसा ममायं रिपुर्दृष्टिमपि धारयितुं न पारयति। ततो मया तथा वैश्वानरवटकप्रभावाधिष्ठितेन स प्रवरसेनश्चरटनायको विच्छिन्नकार्मुकः प्रतिहतशेषान्यशस्त्रः सन् गृहीतचमत्कुर्वद्भास्वरकरवालः स्यन्दनादवतीर्य स्थितो भूतले प्रस्थितो मदभिमुखं। अत्रान्तरे पार्श्ववर्तिन्या विलोकितोऽहं हिंसया। जातो गाढतरं रौद्रपरिणामः मुक्तो मया कर्णान्तमाकृष्य निशितोऽर्धचन्द्रः। छिन्नं तेन तस्यागच्छतो मस्तकं। समुल्लसितोऽस्मद्बले कलकलः। निपातिता ममोपरि देवैः कुसुमवृष्टिः। वृष्टं सुगन्धोदकं। समाहता दुन्दुभयः। समुद्घोषितो जयजयशब्दः। ततो हतनायकलादिपलं चरटबलं। अवलम्बितप्रहरणं गतं मे शरणं प्रतिपन्नं मया। निवृत्तमायोधनं संजातः सन्धिः। प्रतिपन्नः सर्वचरटैर्मम भृत्यभावः।

प्राह। मापराधं निरपराधं वा प्राणिनं मारयता कुमारेण न मनागपि घनायितव्यं।अयमस्याः । खल्वनुरक्तीभवनोपायः । मयाभिहितं । किमनयात्यन्तमनुरक्तया भविष्यति । वैश्वानरः प्राह । कुमार मत्तोऽपि महाप्रभावेयं । यतो मयाधिष्ठितः पुरुषोऽतितेजस्वितया परेषां केवलं चासमात्रं जनयति अनया पुनर्हिंसयात्यन्तमनुरक्तयालिङ्गितमूर्तिर्महाप्रभावतया दर्शनमात्रादेव जीवितमपि नाशयति । तस्मादभिमुखीकर्तव्येयं कुमारेण । मयाभिहितमेवं करोमि । वैश्वानरेणोक्तं । महाप्रसाद इति ॥ ततो मार्गे गच्छन्नहं शशसूकरशरभशम्बरसारङ्गादीनामाटव्यजीवानां शतसहस्राणि मारयामि स्म । ततः प्रहृष्टा हिंसा संपन्ना मय्यनुकूला । ततः कम्पन्ते मद्दर्शनेन जीवाः मुञ्चन्ति प्राणानपि केचित् । ततः संजातो मे वैश्वानरकथितहिंसाप्रभावे प्रत्ययः । प्राप्ता वयं कनकचूडविषयाभ्यर्णे । तत्रास्ति विषमकूटो नाम पर्वतः । तस्मिंश्च कनकचूडमण्डलोपद्रवकारिणोऽम्बरीषनामानश्चरटाः प्रतिवसन्ति । ते च कदर्थिताः पूर्वं बहुशः कनकचूडेन । ततः कनकशेखरमागच्छन्तमवगम्य निरुद्धस्तैर्मार्गः । प्रत्यासन्नीभूतमस्मद्बलं । ततः कलकलं कुर्वन्तः समुत्थिताश्चरटाः । समालग्नमायोधनं । ततश्च

निपतितशरजालभिन्नेभकुम्भस्थलाभोगनिर्गच्छदच्छाच्छमुक्ताफलस्तोमसंपूरिताशेषपीठभूदेशं क्षणात् । तथा

विदलितभटमस्तकासंख्यराशीवहन्दानुकारेण रक्तौघनीरेण दण्डाग्रसच्छत्रसंघातहंसेन तुच्छं तदाशेस संजातमुग्रैर्महायुद्धमस्माकमिति ।

ततः समुदीर्णतया चरटवर्गस्य संजाताः परिभग्नप्रायाः कनकशेखरादयः। अत्रान्तरे प्रवरसेनाभिधानेन चरटनायकेन सार्धं समापतितं समायोधनमिति। ततः संज्ञितोऽहं वैश्वानरेण। भक्षितं मया तत्क्रूरचित्ताभिधानं वटकं। ततः प्रवृद्धो मेऽन्तस्तापः। संजातो भ्रुकुटितरङ्गभङ्गुरो ललाटपट्टः। समाचितं स्वेदबिन्दुनिकरेण शरीरं। स च प्रवरसेनोऽत्यन्तकुशलो धनुर्वेदे निर्व्यूढसाहसः करवालेऽतिनिपुणः सर्वास्त्रप्रयोगेषु गर्वोद्धुरो विद्याबलेन प्रबलवीर्यो देवतानुग्रहेण। तथापि मत्संनिहितपुण्योदयमाहात्म्यान्मे न लगन्ति स्म तदीयशिलीमुखाः न प्रभवन्ति स्म तदीयशस्त्राणि न वहन्ति स्म तस्य विद्याः अकिंचित्करीभूता देवता। मम तु चेतसि परिस्फुरितं अहो प्रियमित्रवटकस्य प्रभावातिशयो यदस्य तेजसा समायं रिपुर्दृष्टिमपि धारयितुं न पारयति। ततो मया तथा वैश्वानरवटकप्रभावाधिष्ठितेन स प्रवरसेनश्चरटनायको विच्छिन्नकार्मुकः प्रतिहतशेषान्यशस्त्रः सन् गृहीतचमत्कुर्वद्भास्करकरवालः स्यन्दनादवतीर्य स्थितो भूतले प्रस्थितो मदभिमुखं। अत्रान्तरे पार्श्ववर्तिन्या विलोकितोऽहं हिंसया। जातो गाढतरं रौद्रपरिणामः मुक्तो मया कर्णान्तमाकृष्य निशितोऽर्धचन्द्रः। छिन्नं तेन तस्यागच्छतो मस्तकं। समुल्लसितोऽस्मद्बले कलकलः। निपातिता ममोपरि देवैः कुसुमवृष्टिः। वृष्टं सुगन्धोदकं। समाहता दुन्दुभयः। समुद्घोषितो जयजयशब्दः। ततो हतनायकत्वाद्विषण्णं चरटबलं। अवलम्बितप्रहरणं गतं मे शरणं प्रतिपन्नं मया। निवृत्तमायोधनं संजातः सन्धिः। प्रतिपन्नः सर्वचरटैर्मम भृत्यभावः।

मया चिन्तितं। अहो हिंसाया माहात्म्यप्रकर्षः। यदनयापि विलोकितस्य ममैतावानुन्नतिविशेषः संपन्न इति। सम्मानितास्तेऽपि कनकशेखरादिभिः। दत्तं प्रयाणकं। संप्राप्ता वयं कुशावर्त्तपुरे। समानन्दितः कनकशेखरकुमारागमनेन कनकचूडराजस्तुष्टो मद्दर्शनेन। ततो विधापितस्तेन महोत्सवः पूजितः प्रणयिवर्गः। ततो गणितं विमलाननारत्नवत्योर्विवाहदिनं समागतं पर्यायेण। कृतमुचितकरणीयं। ततो दीयमानैर्महादानैर्विधीयमानैर्जैनजनसम्मानैर्वंशविधकुलाचारैः संपाद्यमानैरभ्यर्हितजनोपचारैर्गानवादनपानखादनविमर्दैन निर्भरीभूते समस्ते कुशावर्त्तपुरे परिणीता कनकशेखरेण विमलानना मया रत्नवतीति। ततो विहितेषूचितकर्तव्येषु निवृत्ते विवाहमहानन्दे गते दिनत्रयेऽदृष्टपूर्वतया कुशावर्त्तस्यातिरमणीयतया तत्प्रदेशानां कुतूहलपरतया यौवनस्य समुत्पन्नतयास्मासु विश्रम्भभावस्य गृहीतास्मदनुज्ञा नगरावलोकनाय निर्गते भ्रमणिकया सपरिकरे विमलाननारत्नवत्यौ। ततोऽनेकाश्चर्यदर्शनेनानन्दपूरितहृदये संप्राप्ते ते चूतचूतकं नामोद्यानं प्रवृत्ते क्रीडितुम्। वयं तु कनकचूडराजास्थाने तदा तिष्ठामः। यावदकाण्ड एव प्रवृत्तः कोलाहलः पृष्टतं दासचेटीभिः किमेतदिति संभ्रान्तं उत्थितमास्थानं। हृते विमलाननारत्नवत्यौ केनचिदिति प्रादुर्भूतः प्रवादः। ततः सन्नद्धमस्मद्बलं लग्नं तदनुमार्गेण। ततो मार्गखिन्नतया परसैन्यस्य प्रोत्साहतयास्मदनीकस्य स्तोकभूभाग एव समवष्टब्धा परचमूरसात्पताकिन्या। श्रुतमस्माभिर्विभाकरनामकं वन्दिभिरुद्घुष्यमाणम्। ततः सर्वैरेव चिन्तितमस्माभिः। अये स एष कनक-

पुरनिवासी प्रभाकरवसुसुन्दर्योस्तनयो विभाकरो यस्मै प्रभावत्या दत्ता विमलानना पूर्वमासीदिति निवेदितं दूतेन। ततश्चैषोऽस्मान् परिभूय हरत्येते वध्वौ दुष्टात्मेति भावयतो मे विहिता वैश्वानरेण संज्ञा। ततो भक्षितं मया क्रूरचित्ताभिधानं वटकं। संजातो भासुरः परिणामः। ततो मयाभिहितं। अरेरे पुरुषाधम विभाकर परदारहरणतस्कर क्व यासि पुरुषो भव पुरुषो भवेति। ततस्तदाकर्ण्य गङ्गाप्रवाह इव त्रिभिः स्रोतोमुखैर्वलितमभिमुखं परबलं। आविर्भूतास्तदधिष्ठायकास्त्रय एव नायकाः। ततो मया कनकचूडराजेन कनकशेखरेण च त्रिभिरपि योद्धुकामैर्यथासंमुखं वृत्तास्ते। इतश्च योऽसौ कन्यागमनसूचनार्थं कनकचूडराजसमीपे समागतः पूर्वमासीन्नन्दराजदूतः स तत्रावसरे मत्सकाशे वर्तते। ततोऽभिहितोऽसौ मया। अरे विकट जानीषे त्वं कतमाः खल्वेते त्रयो नायकाः। विकटः प्राह। देव सुष्ठु जानामि। य एष वामपार्श्वेऽनीकस्य सम्मुखो भवतः एष कलिङ्गाधिपतिः समरसेनो नाम राजा। एतद्बलेनैव हि प्रारब्धमिदमनेन विभाकरेण। यतो महाबलतया विभाकरपितुः प्रभाकरस्यायं स्वामिभूतो वर्तते। यः पुनरेष मध्यमसैन्ये वर्ततेऽभिमुखः कनकचूडनरपतेरयं विभाकरस्यैव मातुलो वङ्गाधिपतिर्द्रुमो नाम राजा। यस्त्वेष दक्षिणभागवर्तिनि बले नायकोऽभिमुखः कनकशेखरस्य सोऽयं विभाकर एव। यावदेवं कथयति विकटः तावल्लग्नमायोधनं। तच्च कीदृशम्।

शरजालतिरस्कृतदृष्टिपथं पयरोधसमाकुलतीक्ष्णभटम्।
भटकोटिविपाटितकुम्भतटं नटविभ्रमहस्तिशरीरचितम्॥

पुरतः कुञ्जरारूढो राजा देवेन्द्रसन्निभः।
ददद्दानं यथाकामं प्रविष्टो निजमन्दिरे॥
तत्र प्रमुदिताशेषलोकलोचनवीचितः।
पुरं प्रविश्य स्वे गेहे गतः कनकशेखरः॥
ततो रत्नवतीयुक्तः स्यन्दनस्थः शनैः शनैः।
यावद्गच्छामि तत्राहं निजावासकसम्मुखम्॥
तावदेते समुल्लापाः प्रवृत्ताः पुरयोषिताम्।
जयश्रिया परीताङ्गे मयि सस्पृहचेतसाम्॥
जगत्यप्रतिमल्लोऽपि येनासौ विनिपातितः।
द्रुमः समरसेनश्च स सोऽयं नन्दिवर्धनः॥
अहो धैर्यमहो वीर्यमहो दाक्ष्यमहो गुणाः।
अस्य नूनं न मर्त्योऽयं देवोऽयं नन्दिवर्धनः॥
इयं रत्नवती धन्या यास्य भार्या महात्मनः।
धन्या वयमपि ह्येष यासां दृष्टिपथं गतः॥
अथवा सर्वमेवेदमहो धन्यतमं पुरम्।
अचिन्त्यसाहसाढ्येन यदनेन विभूषितम्॥
ततस्तास्तादृशीर्वाचः शृण्वतो मम मानसे।
महामोहसमुत्पन्नो वितर्कोऽयमभूद्भृशम्॥
ममायमीदृशो लोके प्रवादोऽत्यन्तदुर्लभः।
यः संजातो महानन्दहेतुरुच्चतिकारकः॥
तस्यास्य कारणं तावदयस्यो हितकारकः।
एष वैश्वानरोऽस्त्येव नात्र सन्देहगोचरः॥

तथापि प्रियया नूनं ममेदं हन्त हिंसया ।
सर्वं संपादितं मन्ये कृतमालोकनं यया ॥
अहो प्रभावो हिंसाया अहो मय्यनुरक्तता !
अहो कल्याणकारित्वमहो सर्वगुणाढ्यता ॥
यादृशी वर्णिता पूर्वं वरमित्रेण मे प्रिया ।
एषा वैश्वानरेणोच्चैस्तादृश्येव न संशयः ॥
तस्यागृहीतसङ्केते वृत्तान्तस्यात्र कारणम् ।
स मे पुण्योदयो नाम वयस्यः परमार्थतः ॥

केवलम् ।

तदा न लक्षयाम्येवमहं पापहतात्मकः ।
यथा पुण्योदयाज्जातं ममेदं सर्वमञ्जसा ॥

ततश्च ।

एवंविधविकल्पेनाहं वैश्वानरहिंसयोः ।
अत्यन्तमनुरक्तात्मा न जानामि स्म किंचन ॥
इतश्च हट्टमार्गेण मामकीनरथस्तदा ।
प्राप्तो राजकुलाभ्यर्णं कृतलोकचमत्कृतिः ॥
अथास्ति सुह्मनाथस्य दुहिता जयवर्मणः ।
प्रिया कनकचूडस्य देवी मलयमञ्जरी ॥
तस्याश्च भुवनाभोगसर्वसौन्दर्यमन्दिरम् ।
अस्ति मन्मथमञ्जूषा कन्या कनकमंजरी ॥
सा स्यन्दनस्थं गच्छन्तं वातायनकसंस्थिता ।
मां दृष्ट्वा पञ्चबाणस्य शरगोचरतांगता ॥

कुतूहलवशेनाथ वीक्षमाणेन सर्वतः।
गवाक्षे लीलया दृष्टिर्मया तत्र निपातिता॥
ततः कनकमञ्जर्या लोललोचनमीलिता।
क्षणं सा मामिका दृष्टिश्चलति स्म न कीलिता॥
सापि तां मामिकां दृष्टिं पिबन्ती स्तिमितेक्षणा।
स्वेदकम्पनरोमाञ्चैर्व्यक्तकामा क्षणं स्थिता॥
मम तस्याश्च सानन्दं दृष्टिसंयोगदीपितम्।
मदीयसारथिर्भावं तेतलिस्तमलक्षयत्॥

ततश्चिन्तितं तेतलिना। अये रतिमकरकेतनयोरिवातिसुन्दरोयमनयोरनुरागविशेषः। केवलं महाजनसमक्षमेवमनिमेषाक्षतया निरीक्षमाणस्यैनां हीनसत्त्वतया लाघवमस्य संपत्स्यते। रत्नवत्याश्च कदाचिदीर्ष्या संपद्येत। ततो न मे युक्तमुपेक्षितुमिति। ततः काकलीं कृत्वा चोदितस्तेतलिना स्यन्दनः। ततोऽहं लावण्यामृतपङ्कमग्नामिव कपोलपुलककण्टकलग्नामिव मदनशरशलाकाकीलितामिव तदीयसौभाग्यगुणस्यूतामिव कनकमञ्जरीवदनकमलावलोकनात् कथंचिद्दृष्टिमाकृष्य तस्यामेव निक्षिप्तहृदयः प्राप्तः क्रमेण निजमन्दिरे। तत्र च शून्यमनस्कोविधाय दिवसोचितं कर्तव्यमारूढो ऽहमुपरितनभूमिकायां। ततः प्रस्थाप्य समस्तं परिजनमेकाकी निषण्णः शय्यायां। तस्यां चापरापरैः कनकमञ्जरीगोचरैर्वितर्ककल्लोलैर्विधुरितचेतोवृत्तिर्न जानामि स्माहं। यदुत किमागतोऽस्मि। किं गतोऽस्मि। किं तत्रैव स्थितोऽस्मि। किमेककोऽस्मि। किं परिजनवृतोऽस्मि। किं सुप्तोऽस्मि किं वा जागर्मि। किं रोदिमि

किं वा न रोदिमि । किं दुःखमिदं किं वा सुखमिदं । किमुत्कण्ठकोऽयं किं वा व्याधिरयं । किमुत्सवोऽयं किं वा व्यसनमिदं । किं दिनमिदं किं वा रजनीयं । किं मृतोऽस्मि किं वा जीवामीति । कचिदीषल्लब्धचेतनः पुनश्चिन्तयामि । अये क गच्छामि । किं करोमि । किं शृणोमि । किं पश्यामि । किमालपामि । कस्य कथयामि । कोऽस्य मे दुःखस्य प्रतीकारो भविष्यतीति ।

एवं च पर्याकुलचेतसो निषिद्धाशेषपरिजनस्यापरापरपार्श्वेण शरीरं परावर्तयतो महानारकस्येव तीव्रदुःखेनालब्धनिद्रस्येव लङ्घिता सा रजनी । समुद्गतोऽंशुमाली । गतस्तथैव तिष्ठतो मेऽर्धप्रहरः । अत्रान्तरे समागतस्तेतलिः । अतिवल्लभतया मे न वारितः केनापि । प्राप्तो मत्समीपं । कृतमनेन पादपतनं । निषण्णो भूतले । विरचितकरमुकुलेन चाभिहितमनेन । देव नीचजनसुलभेन चापलेन किंचिद्देवं विज्ञापयिष्यामि तच्चार्वचारु वा सोढुमर्हति देवः । मयाभिहितं । भद्र तेतले विस्रब्धं वद । किमियत्याकूर्चशोभया । तेतलिनाभिहितं । यद्येवं ततो मया देवपरिजनादाकर्णितं यथा रथादवतीर्य देवो न ज्ञायते किमत्र कारणं सोद्वेग इव निषिद्धाशेषपरिजनः सचिन्तः शयनीये विवर्तमानस्तिष्ठति । इतश्च स्यन्दनाश्वानां वृत्तिं कारयतो लङ्घितोऽतीतदिनशेषः । ततो रात्रौ समुत्पन्ना मे चिन्ता । यदुत किं पुनर्देवस्योद्वेगकारणं भविष्यति । ततस्तदलभमानस्य चिन्ताविधुरस्य जाग्रत एव मे विभाता रजनी । ततो यावदुत्थाय किलेहागच्छामि तावद्वृत्तमं प्रयोजनान्तरमापतितं । तेनातिवाह्येयतीं वेलामहमागत इत्यतो निवेदयतु देवः

प्रसादेन शरीरकुशलवार्तामात्रायत्तजीविताय किङ्करापसदायास्मै जनाय यदस्य व्यतिकरस्य कारणमिति ब्रुवाणः पतितो मेचरणयोस्तेतलिः। ततो मया चिन्तितं। अहो अस्य मयि भक्तिप्रकर्षः अहो वचनकौशलं। युज्यत एवास्मै सद्भावः कथयितुं। तथापि वामशीलतया मदनविकारस्य मयाभिहितं। भद्र तेतले न जाने किमत्र कारणं। केवलं यतः प्रभृति हट्टमार्गमतिक्रम्य समानीतस्त्वया रथो राजकुलाभ्यर्णे धारितस्तत्र कियन्तमपि क्षणं तदारात्सर्वाणि मे विलीयन्तेऽङ्गानि प्रवर्धतेऽन्तस्तापः ज्वलतीव भवनं न सुखायन्ते जनोल्लापाः आविर्भवति रणरणकः समुद्भूतालीकचिन्ता शून्यमिव हृदयं। ततोऽहमस्य दुःखस्यालब्धपरित्राणोपायः खल्वेवं स्थित इति ततः सहर्षेण तेतलिनाभिहितं। देव यद्येवं ततो विज्ञातं मयास्य दुःखस्य निदानमौषधं च। न विषादः कर्तव्यो देवेन। मयाभिहितं। कथं। तेतलिः प्राह। समाकर्णय निदानं तावदस्य दुःखस्य चक्षुर्दोषः। मयोक्तं। कस्य सम्बन्धी। तेतलिः प्राह। न जाने किमसौ लक्षिता न वा देवेन मया पुनर्दृष्टैवैतां वेलां निरूपिता तत्र राजकुलपर्यन्तवर्तिनि प्रासादे वर्तमाना काचिद्दृद्दारिका देवमर्धतिरश्चीनेनेत्रयुगलेन साभिनिवेशमङ्गप्रत्यङ्गतो निरूपयन्ती। तन्निश्चितमेतत्तस्या एव सम्बन्धी चक्षुर्दोषोऽयं। यतो देव अतिविषमा विषमशीलानां दृष्टिर्भवति। ततो मया चिन्तितं। बष्टः खल्वेष तेतलिः। बुद्धोऽनेन मदीयभावः। विलोकिता सा चिरमनेन। अतः पुण्यवानयं। यतश्च यदयेष यथा लब्धं मया तवास्य दुःखस्य भेषजमिति ततः संपादयिष्यति नूनं तां मदनज्वर-

हरणमूलिकां कन्यकामेव मे। तस्मात्प्राणनाथो ममायं वर्तते इति विचिन्त्य समारोपितो बलात्पर्यङ्के तेतलिः। अभिहितश्च। साधु भो साधु सुष्ठु विज्ञातं भवता मदीयरोगनिदानं। इदानीमौषधमस्य निवेदयतु भद्रः। तेतलिनाभिहितं। देव इदमत्र चक्षुर्दोषे भेषजं। यदुत निपुणवृद्धनारीभिः कार्यतां सम्यग् लवणावतारणकं विधीयतां मन्त्रकुशलैरपमार्जनं लिख्यन्तां रक्षाः निबध्यन्तां कण्डकानि अनुष्ठीयन्तां भूतिकर्माणि। अन्यच्च। शाकिन्यपि किल प्रत्युच्चारिता न प्रभवतीति कृत्वा गत्वा निष्ठुरवचनैर्गाढं निर्भर्त्स्यतां सा दारिका। यदुत हे वामलोचने निरीक्षितस्त्वया विषमदृष्ट्या देवः। ततस्त्वं ज्ञाता बुद्धा तिष्ठसि। यदि च देवस्य शरीरे मनागपि स्खलितं भविष्यति ततो नास्ति ते जीवितमिति। एवं क्रियमाणे देव नियमादुपशाम्यत्येष चक्षुर्दोषः। तदिदमस्य भेषजं मया विज्ञातमिति। ततो विहस्य मयाभिहितं। भद्र तेतले पर्याप्तं परिहासेन। निवेद्यतां यद्यवधारितः कश्चिद्भवता निश्चितं मद्दुःखविगमोपायः। तेतलिः प्राह। देव किमलब्धदेवदुःखप्रतीकारा एव देवपादोपजीविनः कदाचिदपि देवस्य पुरतः सोद्वेगे सति देवे सहर्षं जल्पितुमुत्सहन्ते। तस्मान्मा कुरुत विषादं। सिद्धमेव देवसमीहितं। मया हि देवोद्वेगनिराशार्थमेवैष परिहासो विहितः। मयाभिहितं। वर्णय तर्हि कथं सिद्धमस्मत्समीहितम्। तेतलिः प्राह। देव विज्ञापितमिदमादावेव मया। यथा मम प्रत्युपस्येव देवसमीपमागच्छतो वृहत्तमं प्रयोजनान्तरमापतितं। तेन लङ्घितो ममायं दिनार्धप्रहर इति। तद्देवसमी-

हितसिद्ध्यर्थमेव प्रयोजनान्तरं। कथमन्यथा वृत्तान्तमलमस्योपपद्यते।
यतोऽस्ति मम परिचिता मलयमञ्जरीसम्बन्धिनी कपिञ्जला
नाम वृद्धगणिका। सा मम शयनादुत्तिष्ठतः पुरतः प्रविश्य
मन्नवने वयस्य त्रायध्वं त्रायध्वमिति महता शब्देन पूत्कृतवती।
ततोऽनुपलब्धभयकारणेन मयाभिहितं। भद्रे कपिञ्जले कुतस्ते भयं।
तयाभिहितं। मीनकेतनादिति। मयाभिहितं। कपिञ्जले अश्रद्धेय-
मिदं। यतोऽहमेवं तर्कयामि। यदुत कुङ्कुमरागपिङ्गलपलितचि-
ताज्वालावलीभासुरं कटकटायमानास्थिपञ्जरशिवाशब्दभैरवं संकु-
चितवलीतिलकजालपिच्छलताभीषणं उल्लम्बितशवाकारलम्बमाना-
तिस्थूलस्तनभयानकं अतिरौद्रमहाश्मशानविभ्रमं त्वदीयशरीरमि-
दमुपलभ्य नूनं कामः कातरनर इवाराटीर्दत्त्वा दूरतः प्रपला-
यते। ततः कुतस्ते भयमिति। कपिञ्जलयाभिहितं। अयि अली-
कवैदग्ध न लक्षितस्त्वया मदीयोऽभिप्रायः। तेनैवं ब्रवीषि।
अतः समाकर्णय यथा मे मदनाद्भयमिति। मयाभिहितं। तर्हि
निवेदयतु भवती। सा प्राह। अस्ति तावदिदितैव भवतो मल-
यमञ्जरी नाम मम स्वामिनी। तस्याश्चास्ति कनकमञ्जरी नाम
दुहिता॥ अत्रान्तरे तेतलिना कनकमञ्जरीनामग्रहणादेव स्पन्दितं
मे दक्षिणलोचनेन स्फुरितमधरेण उच्छ्वसितं हृदयेन रोमाञ्चि-
तमङ्गेन गतमिवोद्वेगेन। ततो मया चिन्तितं। नूनं सैषा मम
हृदयदयिता कनकमञ्जरीत्युच्यते। सहर्षेण चाभिहितं। ततस्ततः।
ततो लक्षितमदीयभावेन अहो प्रियनामोच्चारणमन्त्रसामर्थ्यमिति
विचिन्त्य तेतलिनानुसन्दधानेन कपिञ्जलावचनमिदमभिहितं।

सा च मदीयस्तन्यपानेन संवर्धिता । तेन मम सर्वस्वमिव शरीरमिव हृदयमिव जीवितमिव सा कनकमञ्जरी स्वरूपादव्यतिरेकिणी वर्तते । अधुना पीड्यते सा वराकी मकरध्वजेन। ततो यत्तस्या मीनकेतनाद्भयं तत्परमार्थतो ममैव भयमिति ॥ तदिदमाकर्ण्य धारयतस्तेतलेराकृष्य करवालमरे रे मन्मथहतक मुञ्च मुञ्च मे प्रियां कनकमञ्जरीं पुरुषो वा भव दुरात्मन्नास्त्यधुना ते जीवितमिति ब्रुवाणोऽहमुत्थितः शयनीयतलाद्वेगेन । तेतलिनाभिहितं। देव अलमवेगेन । न खलु सदये देवेदं कनकमञ्जर्या मदनहतकादन्यस्माद्वा सकाशाद्भयगन्धोऽपि। कथानकं चेदमतस्तच्छेषमप्याकर्णयतु देवः। ततस्तद्वचनेनाहं पुनः प्रत्यागतचेतनो मनाग् विलक्षीभूतो निषण्णः शय्यातले। तेतलिः प्राह। ततो मयाभिहितं। भद्रे कपिञ्जले किं पुनर्निमित्तमासाद्य तस्यां कनकमञ्जर्यां प्रभवति मदनहतकः। कपिञ्जलयाभिहितं आकर्णय। अस्ति तावदतीते दिने संपन्नं वधूहरणविड्वरं । संजातो देवस्य कनकचूडस्य परैः सह महासङ्ग्रामः। ततो लब्धपताकेषु नगरं प्रविशत्सु कनकचूडकनकशेखरनन्दिवर्धनेषु कुतूहलवशेनाहं गेहान्निर्गत्य स्थिता हट्टमार्गे। प्रविष्टेषु गता स्वामिनी भवनं। आरूढा चोपरितनभूमिकायां। तत्र च वातायने वर्तमाना राजमार्गाभिमुखनिःसारितवदनकमला निष्पन्दमन्दस्तिमितशून्यदृष्टिका चित्रविन्यस्तेव शैलघटितेव निष्पन्नयोगेव परमयोगिनी व्युपरताशेषाङ्गप्रत्यङ्गचलनचेष्टा दृष्टा मया कनकमञ्जरी। ततो हा किमेतदिति विचिन्त्य ससंभ्रमं पुत्रि कनकमञ्जरीति पुनः पुनस्ता-

महमाहूतवती। न च दत्तं मे मन्दभाग्यायास्तया प्रत्युत्तरं। इतश्च तस्मिन्नवसरे तत्रासीत्कदलिका नाम दासदारिका। ततस्तां प्रति मयाभिहितं। भद्रे कदलिके केन पुनर्हेतुना वत्सायाः कनकमञ्जर्या इयमेवंविधावस्था संजातेति। कदलिकयाभिहितं। अम्ब न सम्यग् लक्षयामि। केवलं यतः प्रभृति राजमार्गेऽवतीर्णो नन्दिवर्धनकुमारः पतितो दृष्टिगोचरे भर्तृदारिकायाः तत आरभ्येयं प्रमुदितेव लब्धरत्नेव अमृतसिक्तेव महाभ्युदयप्राप्तेव अनाख्येयं किमपि रसान्तरमनुभवन्ती मया दृष्टासीत्। यदा त्वतीतोऽसौ दृष्टिगोचरात् तदेयमिदृशीमवस्थां प्राप्तेति ततस्तदाकर्ण्य मरिष्यतीयमकृतप्रतीकारेति संचिन्त्य शोकविक्लतया विहितो मया हाहारवः। तदाकर्णनेन समागता मलयमञ्जरी। ततः सापि किमेतत्कपिञ्जले किमेतदिति वदन्ती निरीक्ष्य कनकमञ्जरीं विलपितुमारब्धा। ततो वृहत्तमतया वोलस्य जननीवल्लभतया हृदयस्य स्वभ्यस्ततया विनयस्य मनाक् संजातचेतना संपन्ना कनकमञ्जरी। मोटितमनया शरीरकं। प्रवृत्ता जृम्भितुं। ततस्तां स्वकीयोत्सङ्गे निधाय मलयमञ्जर्याभिहितं। वत्से कनकमञ्जरि किं ते शरीरकं बाधते। कनकमञ्जर्याभिहितं। अम्ब नाहमन्यत्किंचिल्लक्षयामि। केवलं दाहज्वरो मे शरीरं बाधते। ततो यावदाकुला वयं कुर्मस्तस्याः शरीरस्य मलयजरसेनसेचनं प्रेरयामः कर्पूरजलबिन्दुवर्षाणि तालवृन्तानि प्रयच्छामोऽङ्गे हिमसेकशीतला जलार्द्राः समर्पयामो मुहुर्मुहुः कर्पूरपूरितानि नागवल्लीदलवीटकानि समाचरामोऽन्यामप्यनेकाकारां शीतक्रियां

तावद्गतोऽस्तं वासरेश्वरः समुद्गतो निशीथिनीनाथः परिसावितं चन्द्रिकया नभस्तलं। ततो मयाभिहिता मलयमञ्जरी । स्वामिनि सघर्ममिदं स्थानं । अतः प्रकाशे निःसार्यतां राजदुहिता । तयाभिहितं । एवं क्रियतां । ततो हिमगिरिविशालशिलाविभ्रमे सुधाधवलप्रकाशहर्म्यतले कथंचिद्धार्यमाणा नीता कनकमञ्जरी विरचितं तत्रातिशीतलनलिनीदलपल्लवशयनीयं। तत्र तां निवेश्य विहितानि भुजयुगले मृणालनालवलयानि । स्थापितो वक्षस्थले सिन्दुवारहारः । समुपनीताः स्पर्शनार्थं प्रक्षेपमात्रेण महासरोवरस्यापि स्त्यानभावसम्पादकाः शीतवीर्या महामणयः । स्थगति च तत्र प्रदेशे स्वत एव वलिनामपि रोमहर्षदन्तवीणासञ्जननो गन्धवाहनः। ततो मलयमञ्जर्याभिहितं। वत्से कनकमञ्जरि किमपगताधुना भवत्या दाहज्वरबाधा। कनकमञ्जरी प्राह। नहि नहि अम्ब प्रत्युताधुना मम मतिः यदुतानन्तगुणा सा वर्तते। यतः प्रज्वलितखादिराङ्गारपुञ्जायते मां प्रत्येष शशधरहतकः। ज्वालाकलापायते चन्द्रिका। विस्फुलिङ्गायते तारकानिकरः। दहति मामेष नलिनीदलस्रस्तरः। शोषयन्ति सिन्दुवारहारादयः। किंबहुना हतशरीरकमपि मेऽधुना पापाया दाहात्मकतया वह्निपिण्डायते ॥ ततो दीर्घं निःश्वस्य मलयमञ्जर्याभिहितं भद्रे कपिञ्जले जानासि वत्सायाः किं पुनरीदृशदाहज्वरकारणं। मया तु कर्णे स्थित्वा निवेदितं तस्यास्तत्कदलिकावचनं। मलयमञ्जर्याभिहितं। यद्येवं ततः किं पुनरत्र प्राप्तकालं॥ अत्रान्तरे समुत्थितो राजमार्गे शब्दः। यदुत सिद्धमेवेदं प्रयोजनं। केवलं

वेलाच विलम्बिते । ततः सहर्षया मयाभिहितं । स्वामिनि गृहीतः शब्दार्थः । सा प्राह । बाढं गृहीतः । मयाभिहितं । यद्येवं ततः सिद्धमेव वत्सायाः कनकमञ्जर्याः समीहितं । स्पन्दते च मम वामलोचनं । अतो नात्र सन्देहो विधेयः । मलयमञ्जरी प्राह । कोऽत्रापि सन्देहः सिध्यत्येवेदं ॥ अत्रान्तरे कनकमञ्जर्या एव ज्येष्ठा भगिनी मणिमञ्जरी नाम सा समारुह्य हर्म्यतलं सहर्षा निषण्णा-स्मत्समीपे । मयाभिहितं । वत्से मणिमञ्जरि निर्दुःखसुखतया कठोरा त्वमसि । सा प्राह । कथं । मयोक्तं । या त्वमेवमस्मासु विषादवतीषु सहर्षा दृश्यसे । मणिमञ्जर्याभिहितं । अथ किं क्रियतां । न शक्यते गोपयितुं महन्मे हर्षकारणं । मयोक्तं । आख्याहि वत्से कीदृशमिति । मणिमञ्जर्योक्तं । गताहमासं तात-समीपे । निवेशिता तातेन निजोत्सङ्गे । तदा च तातस्य कनक-शेखरः पार्श्ववर्त्ती वर्त्तते । ततस्तं प्रति तातेनाभिहितं । पुत्र येनानेन नन्दिवर्धनेन महाबलावपि तौ समरसेनद्रुमौ लीलया विनिपातितौ स नैष सामान्यः पुरुषः । न चास्य सुकृतस्य वयं जीवितदानेनापि निष्क्रयं गच्छामः । तदिदमत्र प्राप्तकालं । जीवितादपि वल्लभतरे ममैते मणिमञ्जरीकनकमञ्जर्यौ । दत्ता चेयं पूर्वमेवास्यैव महत्तमसहोदराय शीलवर्धनाय । इयंतु कनक-मञ्जरी साम्प्रतमस्मै नन्दिवर्द्धनाय दीयतामिति । कनकशेखरेणोक्तं । चारु मंत्रितं तातेन । तात एवोचितं जानीते । ततो दातव्ये-वेति । स्थापितस्ताभ्यां सिद्धान्तः । समुत्थिताहं तातोत्सङ्गात् प्रहत्ता चेहागन्तुं । चिन्तितं च मया । अहो मे धन्यता अहो अनुकूलता

देवस्य अहो सुपर्यालोचितकारिता तातस्य अहो विनयः कनकशेखरस्य। भविष्यत्येवं प्रियभगिन्या सह मम यावज्जीवमवियोगः। ललिष्यावहे नानाविधं। एवं च चिन्तयन्त्या ममाविर्भूतः स्फुटबहिर्लिङ्गो हर्षः। तदिदं मे हर्षकारणमिति। मलयमञ्जर्याभिहितं। कपिञ्जले पश्य कालहीनो निमित्तस्य संवादः। मयोक्तं। किमाश्चर्यं यतो देवीयमुत्पातुका भाषा भवति। केवलं वत्से कनकमञ्जरि मुञ्चेदानीं विषादं। अवलम्बस्व धैर्यं। सिद्धमधुना नः समीहितं। व्यपगतं भवत्या दाहज्वरकारणं। प्रतिपादितासि देवेन हृदयनन्दनाय नन्दिवर्धनाय॥ ततः संजाताश्वासापि हृदये कुटिलशीलतया मदनस्य विधाय ममाभिमुखं विषमभ्रुकुटिं कनकमञ्जर्याभिहितं। आः भवतु मातः किमेवमलीकवचनैर्मां प्रतारयसे। शिरोऽपि ममाधुना स्फुटति लग्नमनेनासंबद्धप्रलापेन मलयमञ्जर्याभिहितं। वत्से मा मैवं वोचः। सत्यमेवेदं नान्यथा वत्सया संभावनीयं। ततः कुतो ममेयन्ति भाग्यानीति शनैर्वदन्ती स्थिताधोमुखी कनकमञ्जरी। ततस्तां निजपतिभक्तस्त्रीकथानिकाकथनव्याजेन विनोदयन्तीभिरस्माभिरतिवाहिता रजनी। न चाद्याप्युपशाम्यति तस्याः परिदहनं। मया चिन्तितं। यावत्क्रमेण संपत्स्यते नन्दिवर्धनदर्शनं तावन्मरिष्यतीयं राजदुहिता। अतः पश्यामि तावत्तेतलिं। वल्लभोऽसौ कुमारस्य शक्नोति तं विज्ञापयितुं। कदाचित्ततः संपद्यतेऽस्याः परिचायैव कुमारदर्शनेनेति विचिन्त्य समागताहं त्वत्समीपे। तदिदं निमित्तमासाद्य तस्यां प्रभवति मीनकेतन इत्येतदाकर्ण्य वयस्यः प्रमाणं॥ मयाभिहितं।

यद्येवं ततो यद्यपि वशेन्द्रियो देवो महासत्त्वतया च तृणमिव-स्त्रैणमाकलयति तथाप्येवं विज्ञपयामि यथाभ्युद्धरति निजदर्शनेन राजदुहितरं। केवलं रतिमन्मथे कानने भवतीभिः स्थातव्यं। ततो महाप्रसादोऽनुगृहीतोऽस्मीति वदन्ती पतिता मच्चरणयोः कपिञ्जला। गता स्वभवनं। अहमपीहागतः। तदिदं देव मया भवद्भेषजमवाप्तं॥

मयाभिहितं। साधु तेतले साधु त्वमेव वक्तुं जानीषे। ततः समारोपितस्तस्य वक्षःस्थले मयात्मीयो हारः परिहिता भुजयोः कटककेयूरादयः। तेतलिः प्राह। देवाच तुच्छकिङ्करजने देवकीयोऽयमतिप्रसादोऽनुचित इवाभासते। मयाभिहितं। आर्य प्राणप्रदेऽपि मद्देहे किं किंचिदनुचितमस्ति। तन्न कर्तव्योऽत्र भवता संक्षोभः। त्वं ममेदानीं जीवितादव्यतिरिक्तो वर्तसे॥

अत्रान्तरे समागतो द्वारि विमलो नाम महाराजमहत्तमो निवेदितो मे प्रतिहार्या। स्थितः पृथगासने तेतलिः। प्रविष्टो महत्तमः। कृतोचिता प्रतिपत्तिः। अभिहितमनेन। कुमार देवेन प्रहितो युष्मत्समीपेऽनेनार्थेन। यथास्ति मम जीवितादपीष्टतमा कनकमञ्जरी नाम दुहिता। सा ममोपरोधात् कुमारेण स्वयं पाणिग्रहणेनाह्लादनीया॥ ततो निरीक्षितं मया तेतलिवदनं। तेनाभिहितं। देवानुवर्तनीयो महाराजो देवस्य। अतो मान्यतामियं तस्य प्रथमप्रणयप्रार्थना। मयाभिहितं। तेतले त्वमत्र प्रमाणं। विमलः प्राह। कुमार महाप्रसादः। ततो निर्गतो विमलः॥ तेतलिनाभिहितं। देव गम्यतामिदानीं तत्र रतिमन्मथे

कानने। सा उन्मनीभूत्वा राजदुहिता कालहरणेन। मयाभिहितमेवं भवतु॥ ततस्तेतलिसहाय एव गतोऽहं तचोद्याने। दृष्टं तदपहसितनन्दनवनं काननं। ततश्चम्पकवीथिकासु कदलीगुपिलेषु अतिमुक्तकलतावितानेषु केतकीषण्डेषु मृद्वीकामण्डपेषु अशोकवनेषु लवलीगहनेषु नागवल्ल्यारामेषु नलिनसरोवरोपान्तेषु विचरितमितस्ततश्च भूयो भूयः कनकमञ्जरीदर्शनलोलुपतया। न च दृष्टा सा कुरङ्गलोचना। ततो मया चिन्तितं। हन्त प्रतारितोऽहमनेन तेतलिना। विमलव्यतिकरोऽपि नूनं तेतलेरेव मायाप्रपञ्चः। कुतस्तद्दर्शनसम्पादकानि भाग्यानि मादृशां॥ अत्रान्तरे श्रुतो मया तरुलतागहनमध्ये कलनूपुरध्वनिः। ततोऽपसृत्य तेतलिसमीपान्निह्नपितं तद्गहनं मया। दृष्टा च तमालतरोरधस्ताद्वर्तमाना स्वर्गात्परिभ्रष्टेवामराङ्गना स्वभवनान्निष्कासितेव नागकन्यका रतिरिव मदनविरहकातरा सशोकाकनकमञ्जरी। विलोकितमनया तरलतारया दृष्ट्या दिक्चक्रवालं। न दृष्टः कोऽपि सत्त्वः। ततोऽभिहितं तया। हे भगवत्यो वनदेवताः प्रतीतमेवेदं भवतीनां। यत्किल प्रतिपन्नं तेतलिना तस्य जनस्यानयनं दत्तोऽत्र रतिमन्मथे कानने सङ्केत इत्युपसत्योऽस्याहमिहानीता तया जरन्मार्जार्या। अधुना किलासौ जनो न दृश्यत इति तं गवेषयामीत्यभिधाय मामेकाकिनीं विमुच्य सा न जाने कुत्रचिद्गता। तदेवं प्रतारिताहमिन्द्रजालरचनाचतुरया कपिञ्जलया। तदलं मे जीवितेन प्रियविरहानलदग्धाया आप्तजनेनापि वञ्चिताया मन्दभाग्यायाः। केवलं प्रसादाद्भगवतीनां जन्मान्तरेऽपि

स एव जनो भर्ता भूयादिति वदन्त्या वल्मीकमारुह्य निबद्ध-स्तमालतरुशाखायां पाशकः। निमिता तत्र शिरोधरा। प्रवृत्ता मोक्तुं शरीरं। अत्रान्तरे सुन्दरि मा साहसं मा साहसमिति ब्रुवाणः प्राप्तोऽहं वेगेन धृतं। वामभुजेनाश्लिष्य मध्यदेशे निपतच्छ-रीरं। छिन्नो दक्षिणकरेणासिपुत्रिकया पाशकः। आश्वासिता पवनदानेन। अभिहिता च। देवि किमिदमसमञ्जसमारब्धं। ननु स्वाधीनोऽयं जनस्ते वर्तते। तन्मुञ्च विषादं। ततः सा तथैव स्थिता घूर्णमानविलोलविलोचना मां निरीक्षमाणा तत्क्षणमनेकरस-संभारगर्भनिर्भरं सुपरिस्फुटं मदनचिह्नं योगिनामपि वाग्गोचरा-तीतं स्वरूपं धारयन्ती मया विलोकिता। कथं एकाकिनीति भीता स एवायमिति सहर्षा कुत इति साशङ्का स्वरूपोऽयमिति ससाध्वसा स्वयमागतेति सलज्जा विजने प्राप्तेति दिक्षु निक्षिप्त-तरलतारिका दत्तसङ्केतेति विश्वस्ता दृष्टमिदमनेन मदीयमाच-रणमिति सवैलक्ष्या लक्ष्मीरिव क्षीरोदमन्थनोत्थितमात्रा विशद-स्वेदजलप्लावितदेहतया कदम्बकुसुममालिकेव परिस्फुटपुलकोद्भेद-सुन्दरतया पवनप्रेरिततरुमञ्जरीव प्रकम्पमानसर्वाङ्गतया आनन्द-सागरमवगाहमाना स्तिमितनिष्पन्दमन्दलोचनतया। सानभिव्यक्तै-रक्षरैर्मुञ्च मुञ्च कठोरहृदय मुञ्च न कार्यमनेन जनेन जनस्येति वदन्ती मदीयभुजमध्याद्बहिर्मुखं निष्पतितुमारब्धा। ततो निवे-शिता मया ललितकोमले दूर्वावितानेन। निषण्णः स्वयमभ्यर्ण एव तदभिमुखः। ततोऽभिहितं मया। सुन्दरि मुञ्च लज्जां। परि-त्यज कोपं। न खल्वाज्ञाकारी किङ्करजनोऽयं कोपस्य गोचरो

कपिञ्जले नूनं रतिमन्मथयोरिवानयोर्योगेनेदमुद्यानमद्यैव यथार्थं संपन्नं । इतरथा व्यर्थकमेवास्य रतिमन्मथमित्यभिधानं पूर्वमासीत् । ततोऽस्मन्निकटदेशे प्राप्ते तेतलिकपिञ्जले । समुत्थिता ससंभ्रमेण कनकमञ्जरी । कपिञ्जलयाभिहितं । वत्से निषीदालं संभ्रमेण । ततोऽमृतपुञ्जक इव तत्र दूर्वावितानें निषण्णानि स्नेहनिर्भरसहास-विश्रम्भजल्पैः स्थितानि वयं कियन्तमपि क्षणं ॥ अत्रान्तरे समागतो योगन्धरो नाम कन्यान्तःपुरकञ्चुकी । तेन च विधाय मम प्रणामं सत्वरमाहूता कनकमञ्जरी । कपिञ्जलयाभिहितं । भद्र किमि-तीदमाकारणं। योगन्धरः प्राह । श्रुतेयमपटुशरीरा रात्रौ देवेन । ततः प्रभाते स्वयमेव गवेषिता स्वस्थाने न चोपलब्धा । ततः पर्या-कुलीभूतो देवः । समादिष्टोऽहमनेन । यथा यतः कुतश्चिद्वत्सां गृहीत्वा शीघ्रमागच्छेति । तदिदमाकारणकारणं । ततस्तदाकर्ण्या-लङ्घनीयवचनस्तात इति मन्यमाना मुहुर्मुहुर्मां वलिततारं विलो-कयन्ती सालसं प्रस्थिता सह कपिञ्जलया कनकमञ्जरी क्रमे-णातिक्रान्ता दृष्टिगोचरात् । तेतलिनाभिहितं । देव किमिदानी-मिह स्थितेन । ततोऽहं तदेव क्षतककोपं वदनं तदेव मुञ्च मुञ्च कठोरहृदय मुञ्चेति वचनं तच्च विलसद्दशनकिरणरञ्जित-मधरबिम्बं तदेव च हर्षातिरेकसूचकममलकपोलविस्फुरितं तच्च सद्भावसमर्पकं सलज्जं चरणाङ्गुष्ठेन भूमिलेखनं तदेव चाभिलाषा-तिरेकसन्दर्शकं तिरश्चीनेक्षणनिरीक्षणं तस्याः कनकमञ्जर्याः सम्बन्धि तीव्रतरमदनदाहज्वरप्रवर्धकमपि प्रकृत्या महामोहवशेन तदुप-शमार्थममृतबुद्ध्या स्वचेतसि पुनः पुनश्चारयन् प्राप्तः स्वभवनं ।

हृतं दिवसोचितं कर्तव्यं। अपराह्ने ममायाता कदलिका। तया-भिहितं। कुमार देवः समादिशति। यथा। निरूपितं मया सांवत्सरैर्विवाहदिनं अद्यैव गोधुल्यां शुध्यतीति। तदाकर्ण्य निमग्न इवाहं रतिसमुद्रे। दापितं कदलिकायै पारितोषिकं। स्तोकवेलायां समायाता गृहीतकनककलशा वारनार्यः। निर्वर्तितं मे स्नपनकं। विहितानि कौतुकानि। ततो दापितानि महादानानि। मोचितानि बन्धनानि। पूजिता नगरदेवताः। सन्मानिता गुरवः। विधापिता हट्टशोभाः। शोधिता राजमार्गाः। पूरितः प्रणयिवर्गः। गीतममाजनैः। नृत्तमन्तःपुरैः। विलसितं राजवल्लभैः। ततो महता विमर्देन प्राप्तोऽहं राजभवनं। प्रयुक्ता मुसलताडनादयः कुलाचाराः। प्रविष्टोऽहं वधूगृहके। तत्र चामरवधूरप्युपहसन्ती रूपातिशयेन रतिमपि विशेषयन्ती मदनहरविलासैः ईषल्लम्बालका चक्रवाकमिथुनविभ्रमेण स्तनकलशयुगलेन सुनिविष्टनासिकावंशा रक्ताशोककिसलयाकाराभ्यां कराभ्यां कोकनदपत्रनेत्रा करिकराकारधरेणोरुदण्डद्वयेन विस्तीर्णनितम्बबिम्बा त्रिवलीतरङ्गभङ्गुरेण मध्यभागेन कृष्णस्निग्धकुटिलकेशा रक्तकमलयुगलानुकारिणा चरणद्वयेन कुण्डमिव मदनरसस्य राशिरिव सुखानां निधानमिव रतेः आकरो रूपानन्दकलानां मुनीनामपि मनोहारिणीमवस्थामनुभवन्ती महामोहतिरोहितविवेकलोचनेन मया दृष्टा कनकमञ्जरी। हृष्टचेतसा पुलकितशरीरेण हृतं प्रधानसांवत्सरवचनेन पाणिग्रहणं। भ्रान्तानि मण्डलानि। प्रयुक्ता आचाराः। विहिता लोकोपचाराः। हृतो महता विमर्देन

विवाहयज्ञः। प्रविष्टोऽहमपहसितसुरभवने कनकमञ्जरीसनाथे वासभवने अवगाहितसुरतामृतसागरः। एवं च प्रवर्धमानानुरागयोरावयोर्गतानि कतिचिद्दिनानि॥

इतश्च विभाकरस्य कृतं व्रणकर्म। प्रगुणीभूतः शरीरेण। जातो मया सहास्य स्नेहभावः। समुत्पन्नो विश्रम्भः। अन्यदा विधाय बहुमानं प्रहितः सपरिकरोऽसौ स्वस्थाने कनकचूडराजेन। येऽपि तेऽम्बरीषनामानश्चरटा वीरसेनप्रमृतयो हते प्रवरसेने प्रतिपन्नभृत्यभावा मया सह पूर्वमागतास्तेऽपि कृतसन्माना मया विसर्जिता गताः स्वस्थाने। ततोऽहं विगतचिन्तासन्तापसाभ्यां रत्नवतीकनकमञ्जरीभ्यामानन्दमहोदधिमवगाहमानः स्थितस्तत्रैव कियन्तमपि कालं। अस्यापि च व्यतिकरस्य परमार्थतः स एव पुण्योदयः कारणं। मम तु महामोहवशेन तदा प्रतिष्ठितं हृदये। यदुताहो हिंसावैश्वानरयोः प्रभावातिशयः। अनयोर्हि माहात्म्येन मयेयं निरुपमानन्दामृतरसकूपिका कनकमञ्जरी लब्धेति। यतः कथितं तेतल्लेः कपिञ्जलया कनकचूडराजादाकर्णितं मणिमञ्जरीवचनं यथा यतोऽनेन नन्दिवर्धनकुमारेण महाबलावपि द्रुमसमरसेनौ लीलया विनिपातितौ तस्मादस्मै युक्तेयं दातुं कनकमञ्जरीति। तौ च द्रुमसमरसेनौ मया हिंसावैश्वानरप्रभावादेव विनिपातितौ। तस्मात्परमार्थतो हिंसावैश्वानराभ्यामेव ममेयं कनकमञ्जरी संपादितेति। ततो जातं मे गाढतरं हिंसावैश्वानरस्नेहप्रतिबद्धमन्तःकरणं। ततो वैश्वानरवचनेन तैः क्रूरचित्ताभिधानैर्वटकैः प्रतिदिनमुपयुज्यमानैर्जनितं मे चण्डत्वं संपादितमसहनत्वं विहिता

रौद्रता निर्वर्तितो भास्वरभावः। गताङ्गाङ्गीभावं क्रूरता। जातोऽहं स्वरूपं तिरोधाय साक्षादिव वैश्वानरः। ततो नापेक्षे वटकोपयोगं। किं तर्हि सततप्रज्वलितोऽहमाक्रोशामि हितभाषिणं ताडयामि निष्कारणमेव परिजनं। हिंसया तु पुनः पुनरालिङ्ग्यमानस्य मे संजातमाखेटकव्यसनं। ततः प्रतिदिनं निपातयामि स्थाहमनेकजन्तुसंघातं। दृष्टं तन्मदीयचेष्टितं कनकशेखरेण। चिन्तितमनेन। अहो किमिदमीदृशमस्यासमञ्जसं चरितम्॥ तथाहि।

रूपवान् कुलजः शूरः कृतविद्यो महारथः।
तथाप्ययं ममाभाति न किंचिन्नन्दिवर्धनः॥
यतोऽयं हिंसयाश्लिष्टो युक्तो वैश्वानरेण च।
परोपतापनिरतो धर्माद्दूरेण वर्तते॥
अतो नोपेक्षितुं युक्तो ममायं हितकारिणः।
वचने यदि वर्तेत स्यादस्मै हितमुत्तमम्॥
केवलस्य च मे वाक्यं कदाचिन्न करोत्ययम्।
ताताभ्यर्थ्यं पुनः प्रोक्तः कुर्यात्तत्तातलज्जया॥
तदेनं तातसहितः शिक्षयामि तथा कृते।
हिंसावैश्वानरौ हित्वा स्यादेष गुणभाजनम्॥

ततः कृतो गृहीतार्थः कनकशेखरेण राजा। अन्यदा प्रविष्टोऽहं राजास्थाने। विहितप्रतिपत्तिर्निविष्टो नरेन्द्रसमीपे। ततः स्थापितोऽहं कनकचूडराजेन। कनकशेखरेणाभिहितं। तात एवंविध एवायं नन्दिवर्धनः स्वरूपेण। केवलमिदमेकमस्य विरूपकं यदेष

सतां गर्हिते कुसंसर्गे वर्तते। नृपतिराह। कीदृशोऽस्य कुसंसर्गः। कनकशेखरेणाभिहितं। अस्त्यस्य स्वरूपोपतापहेतुः सर्वानर्थकारणं वैश्वानरो नाम वयस्यः। तथा विद्यतेऽस्य श्रूयमाणापि जगत्-त्रासकारिणी महापापहेतुर्हिंसा नाम भार्या। ताभ्यां च युक्तस्यास्येक्षुकुसुमस्येव निष्फलैव शेषगुणधवलता। नृपतिराह। यद्येवं ततस्तयोः पापयोस्त्याग एव श्रेयान् नाश्रयणम्॥ तथाहि।

> वयस्यः स विधातव्यो नरेण हितमिच्छता।
> इहामुत्र च यः श्रेयान् न लोकद्वयनाशकः॥
> सा भार्या विदुषा कार्या या लोकाह्लादकारिका।
> धर्मसाधनहेतुश्च न पुनर्दुष्टचेष्टिता॥

एवं च वदतोस्तयोर्वचनेन सततं ज्वलमानोऽपि वह्निरिव सर्पिषा गाढतरं प्रज्वलितोऽहं। ततो मया व्याधूनितमुत्तमाङ्गं आस्फोटितं करतलेन भूमिपृष्ठं विमुक्तः प्रलयनिर्घाताकारो झङ्कारः आलोकितमुग्रचलत्तारिकया दृष्ट्या तयोरभिमुखं अभिहितश्च राजा। अरे मृतक मदीयजीवितं वैश्वानरं हिंसां च पापतया कल्पयसि। न लक्षयसि कस्य प्रसादात्त्वयेदं राज्यं समासादितं। किं तर्हि मदीयवैश्वानरमन्तरेण भवतः पित्रापि ससमरसेनो द्रुमो वा निहन्तुं शक्येत। कनकशेखरः पुनरेवमभिहितः। अरे वृषल किं मत्तोऽपि पण्डिततरस्त्वमसि येनैवं मां शिक्षयसि। ततस्तदव-लोक्याकर्ण्य च मदीयवचनं विस्मितो राजा। कृतं कनकशेखरेण स्मेरं मुखं। मया चिन्तितं। अये नैतौ मां गणयतः। ततः

समाकृष्टा चमत्कुर्वाणा चुरिका। अभिहितं च। अरे गेहेनर्दिनौ दर्शयामि भवतोः स्वकीयवैश्वानरवीर्यं। प्रहरणहस्तौ भवतं। ततः समुत्खातचुरिकं ललमानजिह्वं यममिव मामवलोक्य दूरीभूतं राजकं। न चलितौ राजकनकशेखरौ। ततः सन्निहिततया पुण्योदयस्य महाप्रतापतया राजकनकशेखरयोर्भवितव्यतावशेन चादत्त्वैव प्रहारं निर्गतोऽहमास्थानाद्गतः स्वभवनं। ततः प्रभृत्यप-कर्णितोऽहं कनकचूडकनकशेखराभ्यां। मयापि दृष्टौ तौ शत्रुरूपौ। विच्छिन्नः परस्परं लोकव्यवहारोऽपीति॥

अन्यदा समागतो जयस्थलाद्दारुको नाम दूतः। प्रत्यभि-ज्ञातो मया। निवेदितमनेन। यथा कुमार महत्तमैः प्रहितोऽहं। मया चिन्तितं। अये किमिति महत्तमैः प्रहितोऽयं न पुनस्तातेन। ततो जाताशङ्केन पृष्टोऽसौ मया। अपि कुशलं तातस्य। दारुकः प्राह। कुशलं। केवलमस्ति वङ्गाधिपतिर्यवनो नाम राजा। तेन चागत्य महाबलतया समन्तान्निरुद्धं नगरं स्वीकृतो बहिर्विषयः दापितानि स्थानकानि भग्नः पर्याहारः। न चास्ति कश्चित्तन्निरा-करणोपायः। ततः चोरसागरगम्भीरहृदयोऽपि मनागाकुलीभूतो देवः। विषण्णा मन्त्रिणः। उन्मनीभूता महत्तमाः। त्रस्ता नागरकाः। किं बहुना। न जाने किमत्र भविष्यतीति वितर्केण संजातं सर्वमपि दैवशरणं तन्नगरं। ततो मन्त्रिमहत्तमैः कृतपर्यालोचैः स्थापितः सिद्धान्तः। यदुत नन्दिवर्धनकुमार एव यदि परमेनं यवनहतकमुत्सादयति नापरः पुरुष इति। ततो मतिधनेनाभि-हितं। ज्ञाप्यतामिदमेवंस्थितमेव देवाय। बुद्धिविशालेनाभिहितं।

नैवेदं देवाय ज्ञापनीयं । मतिधनः प्राह । कोऽत्र दोषः । बुद्धिविशालेनोक्तं । सुतवत्सलतया देवस्य कदाचिदेवंविधसङ्कटे नन्दिवर्धनागमनं न प्रतिभासते । तस्माद्देवस्याज्ञापनमेव श्रेयः । प्रज्ञाकरः प्राह । साधु साधूपपद्यमानं मन्त्रितं बुद्धिविशालेन । मतिधन किमत्रान्येन विकल्पेन । प्रेष्यतां कुमाराह्वानाय प्रच्छन्न एव दूतः येन सर्वत्र शान्तिः संपद्यते । मतिधनेनाभिहितं । एवं भवतु । ततः सर्वरोचकेन प्रहितोऽहमिति ॥ तदिदं दूतवचनमाकर्ण्योल्लसितो वैश्वानरः । भविष्यति मम चारुतरोऽवसर इति प्रहसिता हिंसा । मयाभिहितं । अरे ताडयत प्रस्थानभेरिं । सज्जीकुरुत चतुरङ्गसेनां । तथा कृतं नियुक्तैः । ततः सर्वबलेन चलितोऽहं । नाख्यातं कनकचूडकनकशेखरयोः । केवलं कनकमञ्जरीवत्सलतया प्रवृत्ता मणिमञ्जरी । ततोऽनवरतप्रयाणकैः प्राप्ता वयं जयस्थलासन्ने । अभिहितो मया वैश्वानरः । यदुत वयस्य सततप्रवृत्ता ममाधुना तेजस्विता नापेक्षते वटकोपयोगं । तत्किमत्र कारणमिति । वैश्वानरेणाभिहितं । कुमार निष्कृत्रिमभक्तिग्राह्या वयं । अतुला च ममोपरि कुमारस्य भक्तिः । मदीयप्रभवाणि चैतानि क्रूरचित्तानि वटकानि भक्तिमतामेव पुंसां शरीरे प्रचरन्ति । तेन प्रचरितानि कुमारस्य शरीरे गतानि तन्मयतां । किं बहुना । मद्रूप एवाधुना वीर्येण कुमारो वर्तते । अन्यच्च । कुमार मदीयवचनानुभावादेवेयमपि हिंसाधुना कुमारस्य प्रतिपन्ना सात्मीभावं । नात्र सन्देहो विधेयः । मयाभिहितं । अद्यापि सन्देहः ॥ ततो यावदेतावानावयोर्जल्पः संपद्यते स्म तावद्दर्शनवीथिमवतीर्णं परबलं ।

दृष्टमनेनास्मदनीकं। ततस्तत्संनद्धमागतमभिमुखं। ततः संलग्नमायोधनं। तच्च कीदृशम्।

रथौघघर्घरारवं गजेन्द्रगर्जिदारुणम्।
महाश्वहेषितोद्धुरं पदातिशब्दभीषणम्॥

क्षणेन च तत्किंभूतं संपन्नम्।

विदीर्णचक्रकूबरं विभिन्नमत्तकुञ्जरम्।
विनाथवाजिराजितं पतत्पदातिमस्तकम्॥
प्रजातसैन्यतानवं प्रनष्टदेवदानवम्।
असिग्रहप्रवर्धकं प्रनृत्तसत्कबन्धकम्॥

ततोऽभिभूता यवनराजसेनयास्मत्पताकिनी। समुच्छलितस्तद्दले कलकलः। ततो वलितोऽहमेकाकस्तदभिमुखं। समापतितो मया सह योद्धुं स्वयमेव यवनराजः। रणरभसेन चातीव मिलितौ स्यन्दनौ। ततः स्थित्वाहं कूबराग्रे दत्त्वा करणं पतितस्तत्स्यन्दने। चोटितं खड्गेन यवनराजस्य मस्तकं।

ततः प्रादुर्भवत्तोषत्सज्जयजयारवम्।
अस्मद्दलं परावृत्य समायातं मदन्तिकम्॥

अन्यच्च। तदा।

देवदानवगन्धर्वा वर्णयन्तः पराक्रमम्।
मम गन्धोद्रं पुष्पैर्मिश्रं मुञ्चन्ति मस्तके॥
ततश्च तत्परानीकं क्षणेन हतनायकम्।
जातं मे किङ्करं सर्वमाज्ञानिर्देशकारकम्॥
निर्गत्य नगरात्तातो हर्षेण सह बन्धुभिः।

समागतः समीपं मे नगरं च सबालकम् ॥

ततो रथादवतीर्य पतितोऽहं तातपादयोः । गृहीतोऽथ देशयोरूर्ध्वीकृत्यानन्दोदकवर्षेण स्नपयता समालिङ्गितोऽहं तातेन । चुम्बितो मुहुर्मुहुर्मूर्धदेशे । ततो दृष्टा मयाम्बा । कृतं तस्याः पादपतनं । समालिङ्गितोऽम्बया चुम्बितो मस्तके । अभिहितश्चानन्दाश्रुपरिपूर्णलोचनया गद्गदया गिरा । यथा । पुत्र वज्रशिलासम्पुटघटितमेतत्ते जनन्याः सम्बन्धि हतहृदयं यत्त्वापि विरहे न शतधा विदीर्णं । निःसारितानि च वयममुष्माद्गर्भवासादिव नगररोधकाङ्क्षवता । अतो ममापि जीवितेन चिरं जीवेति ॥ ततो लज्जितोऽहं स्थितो मनागधोमुखं । समारूढानि सर्वाण्यपि रथवरे । ततश्च ।

दृष्टा वैरिविमर्देन तुष्टा मत्सङ्गमेन च ।
ते राजलोकाः सर्वेऽपि तदा किं किं न कुर्वते ॥

तथाहि ।

केचिद्ददति दानानि केचिद्गायन्ति भाविताः ।
उद्दामतूर्यनिर्घोषैः केचिन्नृत्यन्ति निर्भरम् ॥
केचित्कलकलायन्ते केचिदुत्कृष्टनादिनः ।
काश्मीरचन्दनचोदैः केचित्केलिपरायणाः ॥
केचिद्वस्त्राणि वर्षन्ति तथान्ये हासपूर्वकम् ।
हरन्ति पूर्णपात्राणि वल्गमानाः परस्परम् ॥
तुष्टौ नागरकौ लोकौ वल्गन्ते कुलवामनाः ।
कृतोर्ध्वबाहवो नृत्ताः सर्वेऽन्तःपुरपालकाः ॥

एवं महाप्रमोदेन प्रविश्य नगरं ततः।
स्थित्वा राजकुले किंचिद्गतोऽहं निजमन्दिरे ॥
दिवसोचितकर्तव्यं तत्र संपाद्य सर्वथा।
अनेकाद्भुतविस्तारदर्शनप्रीतमानसः ॥
समं कनकमञ्जर्या रजन्यां शयने स्थितः।
अथैवं चिन्तयामि स्म महामोहवशंगतः ॥
अहो वैश्वानरस्यैषे प्रभावोऽयं महात्मनः।
ममेयमीदृशी जाता यतः कल्याणमालिका ॥
आगतोऽहं तदुत्साहाज्जाता तेजस्विता परा।
तोषितौ जनकौ लोके लब्धा जयपताकिका ॥
अहो प्रभावो हिंसाया या विलोकनलीलया।
करोत्येषा विशालाक्षी मंचु वैरिविमर्दनम् ॥
नातः परतरं मन्ये प्रभावे वृद्धिकारणम्।
यथेयं मम हिंसेति प्रत्यक्षफलदायिनी ॥
ततो गाढतरं रक्तोऽहं वैश्वानरहिंसयोः।
सिद्धान्तं दर्शयेनेत्थं स्थापयामि विशेषतः ॥
एते मे परमौ बन्धू एते परमदेवता।
एते एव हिते मन्ये सर्वमत्र प्रतिष्ठितम् ॥
एतौ यः श्लाघयेद्धन्यः स मे बन्धुः स मे सुहृत्।
एतौ यो द्वेष्टि दुष्टात्मा स मे शत्रुर्न संशयः ॥
स पुनस्तद्दिशानाभि महामोहपरायणः।
यथा पुण्योदयाज्जातं ममेदं सर्वसम्पदा ॥

हिंसावैश्वानरासक्तः पुण्योदयपराङ्मुखः।
ततोऽहं धर्ममार्गस्य दूराद्दूरतरं गतः॥

ततश्च।

रात्रिशेषे समुत्थाय पापर्द्धौ बद्धमानसः।
तातान्बादीनदृष्ट्वैव गतोऽटव्यामहं ततः॥
अनेकसत्त्वसम्भारं मारयित्वा गते दिने।
सन्ध्यायां पुनरायातः प्रविष्टो भवने निजे॥
अथासौ विदुरः प्रोक्तस्तातेनाकुलचेतसा।
मत्समीपे कुमारोऽद्य किं नायातो निरूपय॥
विदुरेणोक्तं प्रभातेऽहं कृत्वा मैत्रीं चिरन्तनीम्।
दर्शनार्थं कुमारस्य गतस्तस्यैव मन्दिरे॥
ततः परिजनेनोक्तं यथाखेटककाम्यया।
रात्रावेव गतोऽटव्यां कुमारो नास्ति भो दृष्टे॥

ततो मयाभिहितं। किमद्यैव कुमारो गतः पापर्द्धिबुद्ध्या किं वा प्रतिदिनं गच्छतीति। परिजनः प्राह। भद्र यतः प्रभृतीयं हिंसा परिणीता कुमारेण तत आरभ्य प्रतिदिनं गच्छति। नान्यथा धृतिं लभते। किं बहुना। जीवितादपि वल्लभोऽधुना आखेटकः कुमारस्येति। मया चिन्तितं। अहो हता दैवेन वयं मन्दभाग्याः। तदिदमाभाणकमायातं। यदुत यत्करभस्य पृष्ठे न माति तत्कण्ठे निबध्यत इति। तथा हि वैश्वानरपापमित्रयोगेणैव कुमारस्य गाढमुद्वेजिता वयं यावत्तेयमपरा हत्येवास्य भार्या संपन्नेति। तत्किं पुनरत्र विधेयमिति चिन्तयतो मे गतं

दितं। तदिदं कुमारस्य युष्मत्समीपेऽनागमनकारणमिति। तातेनाभिहितं। विदुर महापापहेतुरिदं मृगयाव्यसनं न च सेवितमस्मद्वंशजैर्नरपतिभिः। अतो यदस्य निमित्तभूतेयं भार्या कुमारस्यापसार्यते ततः सुन्दरं भवति। विदुरः प्राह। देव वैश्वानरवच्चिह्नपक्रमेयं लक्ष्यते। अथवा श्रूयते पुनरभ्यागतोऽत्र नगरे स जिनमतज्ञो नैमित्तिकः। ततः स एवाहूय प्रष्टुं युक्तो यदत्र कर्तव्यमिति। तातेनाभिहितं। आकारय तर्हि तं नैमित्तिकं। विदुरेणोक्तं। यदाज्ञापयति देवः॥

ततो निर्गतो विदुरः। समागतः स्तोकवेलायां गृहीत्वा जिनमतज्ञं। ततो विधाय तस्य प्रतिपत्तिमाख्यातं तातेन प्रयोजनं। ततो निरूपितं बुद्धिनाडीसञ्चारतो नैमित्तिकेनाभिहितं च। यथा महाराज एक एवात्र परमुपायो विद्यते। स यदि संपद्येत ततः स्वयमेव प्रलीयेत कुमारस्येयमनर्थकारिणी हिंसाभिधाना भार्या। तातेनाभिहितं। कीदृशः स इति कथयत्वार्यः। जिनमतज्ञेनाभिहितं। यत्तदा वर्णितं समक्षमेव भवतां। यथास्ति रहितं सर्वोपद्रवैर्निवासस्थानं समस्तगुणानां कारणं कल्याणपरम्परायाः दुर्लभं मन्दभागधेयैश्चित्तसौन्दर्यं नगरं। तत्र च यो वर्णितः। यथास्ति हितकारी लोकानां कृतोद्योगो दुष्टनिग्रहे दत्तावधानः शिष्टपरिपालने परिपूर्णः कोशदण्डसमुदयेन शुभपरिणामो नाम राजा। तस्य राज्ञो यथासौ चान्तिर्जननिर्वृत्ती निष्प्रकम्पता नाम महादेवी तदा वर्णिता तथैव तस्यान्यापि द्वितीयास्ति हितकारिणी लोकानां निष्कप-

भूमिः सर्वशास्त्रार्थानां प्रवर्तिका सदनुष्ठानानां दूरवर्तिनी पापानां चारुता नाम राज्ञी। तथाहि।

तावद्दुःखानि संसारे लभन्ते सर्वजन्तवः।
स्वर्गापवर्गमार्गं च न लभन्ते कदाचन॥
यावत्सा चारुता देवी तैर्न सम्यग् निषेव्यते।
यदा पुनर्निषेवन्ते तां देवीं ते विधानतः॥
लब्ध्वा कल्याणसन्दोहं तदा यान्ति शिवं नराः।
अतः सा चारुता देवी लोकानां हितकारिणी॥
संसारसागरोत्तारकारणानि महात्मनाम्।
लोके लोकोत्तरे वापि यानि शास्त्राणि कानिचित्॥
तेषु सर्वेषु शास्त्रेषु वर्णिता परमार्थतः।
उपादेयतया देवी सा प्राज्ञैस्तत्त्वचिन्तकैः॥
तेन सा निकषस्थानं शास्त्राणामिह गीयते।
तां विना सर्वशास्त्रार्थोऽसद्बुद्धिप्रकरायते॥
दानं शीलं तपो ध्यानं गुरुपूजा शमो दमः।
एवमादीनि लोकेऽत्र चारुकर्माणि भावतः॥
प्रवर्तयति सा देवी स्वबलेन महात्मनाम्।
तेन सा सदनुष्ठानजनकेति निरुच्यते॥
*कामक्रोधभयद्रोहमोहमात्सर्यविभ्रमाः।*
शाठ्यपैशुन्यरागाद्या ये लोके पापहेतवः॥
तेषां तया सद्भावस्था नास्त्येव भुवनत्रये।
अतः सा चारुता देवी पापानां दूरवर्तिनी॥

तस्याश्च शुभपरिणामसम्बन्धिन्याश्चारुतया महादेव्या आह्लादहेतुर्जगतः सुन्दरा रूपेण सप्रभा बन्धूनां कारणमानन्दपरम्परायाः सततं मुनीनामपि हृदयवासिनी विद्यते दया नाम दुहिता। तथाहि।

सर्वे चराचरा जीवा भुवनोदरचारिणः॥
दुःखं वा मरणं वापि नाभिकाङ्क्षन्ति सर्वदा॥

ततश्च।

सा दया द्वयमप्येतद्दारयत्येव देहिनाम्।
तेन सा भुवनाह्लादकारणं परिकीर्तिता॥
मुखं शशधराकारं साभीदानाख्यमुत्तमम्।
सद्दानदुःखत्राणाख्यौ दयायाः पीवरौ स्तनौ॥
विस्तीर्णं जगदानन्दं शमाख्यं जघनस्थलम्।
यदा नास्त्येव तद्देहे किंचिदङ्गमसुन्दरम्॥
रूपेण सुन्दरा प्रोक्ता तेन सा मुनिपुङ्गवैः।
यथेष्टा बन्धुवर्गस्य तथेदानीं निगद्यते॥
क्षान्तिः शुभपरिणामश्च चारुता निष्प्रकम्पता।
शौचसन्तोषधैर्याद्या दयाया बान्धवा मताः॥
तेषां तु सतताह्लादकारिणी हृदयस्थिता।
तेनातिवल्लभा प्रोक्ता बन्धुवर्गस्य सा दया॥
सुरेषु मर्त्यलोकेषु मोक्षे च सुखपद्धतिः।
दयापरीतचित्तानां वर्तते करवर्तिनी॥
आनन्दपद्धतेर्हेतुस्तेन सा कन्यका मता।
अत एव समाधूर्ता हृदये सा प्रतिष्ठिता॥

तस्याश्च शुभपरिणामसमन्विन्याश्चारुताया महादेव्या आह्लादहेतुर्जगतः सुन्दरा रूपेण वल्लभा बन्धूनां कारणमानन्दपरम्परायाः सततं मुनीनामपि हृदयवासिनी विद्यते दया नाम दुहिता। तथाहि।

सर्वे चराचरा जीवा भुवनोदरचारिणः॥
दुःखं वा मरणं वापि नाभिकाङ्क्षन्ति सर्वदा॥

ततश्च।

सा दया दयमप्येतदारयत्येव देहिनाम्।
तेन सा भुवनाह्लादकारणं परिकीर्तिता॥
मुखं शशधराकारं साभीदानाख्यमुत्तमम्।
सद्दानदुःखत्राणाख्यौ दयायाः पीवरौ स्तनौ॥
विस्तीर्णं जगदानन्दं शमाख्यं जघनस्थलम्।
यद्वा नास्त्येव तद्देहे किंचिदङ्गमसुन्दरम्॥
रूपेण सुन्दरा प्रोक्ता तेन सा मुनिपुङ्गवैः।
... .. यथेष्टा वस्तुवर्गस्य तथेदानीं निगद्यते॥

मौनमवधीरणा च। तातेनाभिहता निष्प्रकम्पता। ऽस्माभिरवधीरयितुं शक्येत। जिनमतज्ञ...सताः... नास्कमच क्रियतां। यदि हि बहिरङ्गोऽयमुपद्रवः कुमारस्य स्यात्ततो न युज्येत कर्तुं तत्रभवतामवधीरणा। अयं पुनरन्तरङ्गोपद्रवो वर्तते। ततस्तमवधीरयन्तोऽपि भवन्तो नोपालम्भमर्हन्ति। ततो यदादिशत्यार्य इति वदता तातेन परिपूज्य प्रहितो नैमित्तिकः॥

गतानि कतिचिद्दिनानि। समुत्पन्नेयं तातस्य बुद्धिः। यथा स्थापयामि यौवराज्ये नन्दिवर्धनकुमारं। ज्ञापितं महत्तमानां।

प्रतिपन्नमेतैः। गणितं प्रशस्तदिनं। कृताभिषेकसामग्री। समाहूतोऽहं। विरचितं भद्रासनं। मीलिताः सामन्ताः। समागता नागरकाः। संनिधापितानि माङ्गलिकानि। प्रकटितानि रत्नानि। प्रत्यासन्नीभूतान्यन्तःपुराणि॥ अत्रान्तरे प्रविष्टा प्रतीहारी। कृतं तया पादपतनं। विरचितं करपुटकुड्मलं निवेशितं ललाटपट्टे। गदितमनया। देव अरिदमननृपतेः सम्बन्धी स्फुटवचनो नाम महत्तमः प्रतीहारभूमौ तिष्ठति। एतदाकर्ण्य देवः प्रमाणं। तातेनाभिहितं। शीघ्रं प्रवेशय। प्रवेशितः प्रतीहार्या। विहिता प्रतिपत्तिः। अभिहितं स्फुटवचनेन। महाराज श्रुतो मया बहिरेव कुमारस्य यौवराज्याभिषेकव्यतिकरः। तेनाहं शुभमुहूर्तोऽयमिति कृत्वा स्वप्रयोजनसिद्धये त्वरिततरः प्रविष्टः। तातेनाभिहितं। सुन्दरमनुष्ठितं। निवेदयतु स्वप्रयोजनमार्यः। स्फुटवचनः प्राह। अस्ति तावद्विदित एव भवादृशां शार्दूलपुराधिपतिः सुगृहीतनामधेयो देवोऽरिदमनः। तस्यास्ति विनिर्जितरतिरूपा रतिचूला नाम महादेवी। तस्याश्चाचिन्त्यगुणरत्नमञ्जूषा मदनमञ्जूषा नाम दुहिता। तया च लोकप्रवादेनाकर्णितं नन्दिवर्धनकुमारचरितं। ततो जातस्तस्याः कुमारेऽनुरागातिरेकः। निवेदितः स्वाभिप्रायो रतिचूलायै। तयापि कथितो देवाय। ततस्तां मदनमञ्जूषां कुमाराय प्रदातुं युष्मत्समीपे प्रहितोऽहं देवेन। अधुना महाराजः प्रमाणम्॥ ततो निरीक्षितं तातेन मतिधनवदनम्। मतिधनः प्राह। देव महापुरुषोऽरिदमनः। युक्त एव देवस्य तेन सार्धं सम्बन्धः। ततोऽनुमन्यतामिदं तस्य वचनं। कोऽत्र विरोधः।

तातेनाभिहितं। एवं भवतु। अत्रान्तरे मयाभिहितं। अहो कियद्-दूरे तत्तावकीनं शार्दूलपुरमितः स्थानात्। स्फुटवचनः प्राह। सार्धयोजनशते। मयाभिहितं। मैवं वोचः। स्फुटवचनः प्राह। तर्हि यावद्दूरे तत्कथयतु स्वयमेव कुमारः। मयाभिहितं। गव्यूतिमोने सार्धयोजनशते। स्फुटवचनः प्राहः। किमेतत्। मयाभिहितं। श्रुतमस्माभिर्बालकाले। स्फुटवचनः प्राह। न सम्यगवधारितं कुमारेण। मयोक्तं। त्वया कथमवधारितम्। स्फुटवचनः प्राहः। गणितं मया पदं पदेन। मयाभिहितं। सुनिर्णीतमिद-मस्माभिरप्याप्तप्रवादात्। स्फुटवचनेनोक्तं। कुमार विप्रतारितः केनापि। न चलतीदं मदीयं प्रमाणं तिलतुषविभागमात्रेणापि॥ ततो मामेष दुरात्मा लोकमध्येऽलीकं करोतीति चिन्तयतो मे जृम्भितं वैश्वानरेण प्रहसितं हिंसया। प्रयुक्ता योगशक्तिः। ततो द्वाभ्यामपि मदीयशरीरेऽनुप्रवेशः। ततः संजातोऽहं साक्षादिव प्रलयज्वलनः। समाकृष्टं दिनकरकरनिकरकरालं करवालं॥ अत्रान्तरे चिन्तितं पुण्योदयेन। यदुत पूर्णा ममाधुनावधिः। पालितो भवितव्यतानिर्देशः। न योग्योऽयमिदानीं नन्दिवर्धन-कुमारो मत्सम्बन्धस्य। तस्मादपक्रमणमेव मेऽधुना श्रेयः। इत्या-लोच्य नष्टः पुण्योदयः॥ मया कुर्वतो हाहारवं तावतो जनसमु-दायस्यापत एव अविचार्य कार्याकार्यमेकप्रहारेण हतो दिष्ट्या स्फुटवचनः। ततो हा पुत्र किमिदमकार्यमनुष्ठितमिति ब्रुवाणः समुत्थितः सिंहासनात् तातश्चलितो मदभिमुखं वेगेन। मया चिन्तितं। अयमप्येतद्रूप एव यो दुरात्मा ममापि हतमिदम-

कार्यमित्यारटति। ततः समुदीर्णखड्गो वलितोऽहं ताताभिमुखं। कृतो लोकेन कोलाहलः। ततो मया न स्मृतं जनकत्वं न लक्षिता स्नेहनिर्भरता न गणितं परमोपकारित्वं नालोचितो महापापागमः। सर्वथा वैश्वानरहिंसावशीभूतचित्तेनावलम्ब्य कर्मचाण्डालतां तथैव रटतस्तातस्य चोटितमुत्तमाङ्गं। ततो हा जात हा जात मा साहसं मा साहसं त्रायध्वं लोकास्त्रायध्वमिति विमुक्तकरुणाक्रन्दरवा आगत्य लग्ना ममाम्बा करे करवालोद्दालनार्थं। मया चिन्तितं। इयमपि पापा मम वैरिणीव वर्तते येवं शत्रूच्छेदपरेऽपि मयि लकशकायते। ततः कृता सापि द्वेधा करवालेन। ततो हा भ्रातर्हा कुमार हा आर्यपुत्र किमिदमारब्धमिति पूत्कुर्वाणानि शीलवर्धनो मणिमञ्जरी रत्नवती च लग्नानि त्रीण्यपि मम भुजयोरेककालमेव निवारणार्थं। मया चिन्तितं। एकालोचितं नूनममीषां सर्वेषामपि दुरात्मनां। ततो गाढतरं परिज्वलितोऽहं। नीतानि त्रीण्यप्येकैकप्रहारेणान्तकसदनं॥ अत्रान्तरेऽमुं व्यतिकरमाकर्ण्य हा आर्यपुत्र किमिदं किमिदमिति प्रलपन्ती प्राप्ता कनकमञ्जरी। मया चिन्तितं। अये एषापि पापा मद्वैरिणामेव मिलिता येवं विक्रोशति। अहो हृदयमपि मे वैरिभूतं वर्तते। तत्किमनेन। अपनयाम्यस्या अपि बन्धुवत्सलत्वं। ततो विगलितप्रेमाबन्धे विस्मृता तद्विरहकातरता। न स्फुरितानि हृदये विश्रब्धजल्पितानि। अपहस्तिता रतिसुखसन्दोहाः। न पर्यालोचितस्तस्याः सम्बन्धी निरुपमः स्नेहाबन्धः। सर्वथा वैश्वानरान्धबुद्धिना हिंसाक्रोडीकृतहृदयेन मया विदलिता करवालेन वराकी कनकमञ्जरी॥

अत्रान्तरे संरम्भेण गलितं मे कटीतटात्परिधानं विलुलितं भूमौ। निपतितमुत्तरीयं क्षितितले। जातोऽहं यथाजातः। मुत्कलीभूताः केशाः। संपन्नः साक्षादिव वेतालः। ततस्तथाभूतं मामवलोक्य दूरवर्तिभिः प्रेक्षकडिम्भरूपैर्दूषद्भिरट्टहासेन कृता किलिकिलिका। ततः सुतरां प्रज्वलितोऽहं चलितस्तन्मारणार्थं वेगेन। ततो मे भ्रातरो भगिन्यः स्वजनाः सामन्ताश्च लग्नाः सर्वेऽप्येककालं निवारणार्थं। ततः कृतान्त इव समदर्शितया समस्तानपि निर्दलयन्नहं गतः कियन्तमपि भूभागं। ततो भूरितया लोकस्य वनकरीव श्रमे पातयित्वा गृहीतः कथंचिदहं। उद्दालितं मण्डलाग्रं। बद्धः पश्चाद्बाहुबन्धेन। ततो रटन्नसभ्यवचनानि प्रक्षिप्तोऽपवरके। दत्ते कपाटे। तत्र च प्रज्वलन्ननुनयवचनैः प्रलपन्नश्राव्यभाषया ददानः कपाटयोर्मस्तकास्फोटां क्षामो बुभुक्षया पीडितः पिपासया दन्दह्यमानश्चित्तसन्तापेनालभमानो निद्रां महाघोरनारक इव तथा बद्ध एव स्थितो मासमात्रं कालं अवधीरितः परिजनेन॥ अन्यदात्यन्तक्षीणतया समागता ममार्धरात्रे क्षणमात्रं निद्रा। ततः प्रसुप्तस्य छिन्नं मे मूषकैर्बन्धनं। जातोऽहं मुत्कलः। उद्घाटिते कपाटे। निर्गतो बहिर्देशे। निरूपितं राजकुलं। यावन्न कश्चिच्चेतयते ततो मया चिन्तितं। सर्वमेवेदं राजकुलं नगरं च मम वैरिभूतं वर्तते येनाहमेवं परिक्लेशितः पापेन। ततो विजृम्भितो ममान्तर्वर्ती वैश्वानरः। सहर्षया हुङ्कारितं हिंसया। दृष्टं मया प्रज्वलिताग्निकुण्डं। चिन्तितं हृदये। अयमत्र वैरिनिर्यातनोपायः। यदुत गृहीत्वा शरावं

कार्यमित्यारटति। ततः समुदीर्णखड्गो वलितोऽहं ताताभिमुखं। कृतो लोकेन कोलाहलः। ततो मया न स्मृतं जनकत्वं न लक्षिता स्नेहनिर्भरता न गणितं परमोपकारित्वं नालोचितो महापापागमः। सर्वथा वैश्वानरहिंसावशीभूतचित्तेनावलम्ब्य कर्मचाण्डालतां तथैव रटतस्तातस्य चोटितमुत्तमाङ्गं। ततो हा जात हा जात मा साहसं मा साहसं त्रायध्वं लोकास्त्रायध्वमिति विमुक्तकरुणाक्रन्दरवा आगत्य लग्ना ममाम्बा करे करवालोद्दालनार्थं। मया चिन्तितं। इयमपि पापा मम वैरिणीव वर्तते येवं शत्रूच्छेदपरेऽपि मयि लकशकायते। ततः कृता सापि द्वेधा करवालेन। ततो हा भ्रातर्हा कुमार हा आर्यपुत्र किमिदमारब्धमिति पूत्कुर्वाणानि शीलवर्धनो मणिमञ्जरी रत्नवती च लग्नानि चोख्यपि मम भुजयोरेककालमेव निवारणार्थं। मया चिन्तितं। एकालोचितं नूनममीषां सर्वेषामपि दुरात्मनां। ततो गाढतरं परिज्वलितोऽहं। नीतानि चौण्ययेकैकप्रहारेणान्तकसदनं॥ अत्रान्तरेऽमुं व्यतिकरमाकर्ण्य हा आर्यपुत्र किमिदं किमिदमिति प्रलपन्ती प्राप्ता कनकमञ्जरी। मया चिन्तितं। अये एषापि पापा मद्वैरिणामेव मिलिता येवं विक्रोशति। अहो हृदयमपि मे वैरिभूतं वर्तते। तत्किमनेन। अपनयाम्यस्या अपि मन्युवत्सलत्वं। ततो विगलितप्रेमाबन्धे विस्मृता तद्विरहकातरता। न स्फुरितानि हृदये विश्रब्धजल्पितानि। अपहसिता रतिसुखमन्दोहाः। न पर्यालोचितस्तस्याः मय्यसौ निरुपमः स्नेहाबन्धः। सर्वथा वैश्वानराभ्युदितमा हिंसाक्रोडीकृतहृदयेन मया विदलिता करवालेन वराकी कनकमञ्जरी॥

अत्रान्तरे संरम्भेण गलितं मे कटीतटात्परिधानं विलुलितं भूमौ। निपतितमुत्तरीयं चितितले। जातोऽहं यथाजातः। मुत्कलीभूताः केशाः। संपन्नः साक्षादिव वेतालः। ततस्तथाभूतं मामवलोक्य दूरवर्तिभिः प्रेक्षकडिम्भरूपैर्हसद्भिरट्टहासेन कृता किलिकिलिका। ततः सुतरां प्रज्वलितोऽहं चलितस्तन्मारणार्थं वेगेन। ततो मे भ्रातरो भगिन्यः स्वजनाः सामन्ताश्च लग्नाः सर्वेऽप्येककालं निवारणार्थं। ततः कृतान्त इव समदर्शितया क्षमस्तानपि निर्दलयन्नहं गतः कियन्तमपि भूभागं। ततो भूरितया लोकस्य वनकरीव श्रमे पातयित्वा गृहीतः कथंचिदहं। उद्दालितं मण्डलाग्रं। बद्धः पश्चाद्बाहुबन्धेन। ततो रटन्नसभ्यवचनानि प्रक्षिप्तोऽपवरके। दत्ते कपाटे। तत्र च प्रज्वलन्ननुनयवचनैः प्रलपन्नश्राव्यभाषया ददानः कपाटयोर्मस्तकास्फोटां क्षामो बुभुक्षया पीडितः पिपासया दन्दह्यमानश्चित्तसन्तापेनालभमानो निद्रां महाघोरनारक इव तथा बद्ध एव स्थितो मासमात्रं कालं अवधीरितः परिजनेन॥ अन्यदात्यन्तक्षीणतया समागता ममार्धरात्रे क्षणमात्रं निद्रा। ततः प्रसुप्तस्य छिन्नं मे मूषकैर्बन्धनं। जातोऽहं मुत्कलः। उद्घाटिते कपाटे। निर्गतो बहिर्देशे। निरूपितं राजकुलं। यावन्न कश्चिच्चेतयते ततो मया चिन्तितं। सर्वमेवेदं राजकुलं नगरं च मम वैरिभूतं वर्तते येनाहमेवं परिक्लेशितः पापेन। ततो विजृम्भितो ममान्तर्वर्ती वैश्वानरः। सहर्षया अङ्गीकृतं हिंसया। दृष्टं मया प्रज्वलिताग्निकुण्डं। चिन्तितं हृदये। अयमत्र वैरिनिर्यातनोपायः। यदुत गृहीत्वा शरावं

भ्लाङ्गाराणां ततो राजकुलस्य नगरस्य च अपरापरेषु इन्धन-बहुलेषु स्थानेषु स्तोकस्तोकान्प्रक्षिपामि। ततः स्वयमेव भस्मी-भविष्यतीदं द्वयमपि दुरात्मकमिति। ततः कृतं सर्वं तथैव। तन्मया लग्नं समन्तात्प्रदीपनकं। निर्गतोऽहमपि दंदह्यमानः कथंचिद्भवितव्यताविशेषेण। प्रवृत्तो जनाक्रन्दरवः। धावन्ति स्म लात लातेति ब्रुवाणाः परबलशङ्कया सुभटाः। ततः चीणतया शरीरस्य परस्परानुविद्धतया शरीरमनसोर्विगलितं धैर्यं। समुत्पन्नं मे भयं। पलायितोऽटवीसंमुखं। पतितो महारण्ये विद्धः कण्टकैः स्फोटितः कलकैः परिभ्रष्टो मार्गात् प्रस्खलितो विषमोट्टङ्कात् निपतितोऽधोमुखो निम्नदेशे। चूर्णितान्यङ्गोपाङ्गानि। न शक्नोम्यु-त्थातुं॥

अत्रान्तरे समागताश्चौराः। दृष्टस्तैस्तथावस्थितोऽहं। अभिहित-ममीभिः परस्परं। अरे महाकायोऽयं पुरुषो लभ्यते परकूले बहुमूल्यं। तद् गृहीत्वा नयामः स्वस्वामिमूलमेनं। तदाकर्ण्य समु-ल्लसितो ममान्तर्निमग्नो वैश्वानरः। स्थितोऽहमुपविष्टः। ततस्तेषा-मेकेनाभिहितं। अरे विरूपकोऽस्याभिप्रायः। ततः शीघ्रं बध्नीत यूयमेनमन्यथा दुर्ग्रहो भविष्यति। ततो गाढं हत्वा धनुःशाखा-भिर्नियन्त्रितोऽहं पश्चान्मुखीकृत्य बाहू। ददतो गालीर्भद्धं मे वक्त्र-कुहरं। ततः समुत्थापितोऽहं। परिहितं जरचीवरखण्डं। खेटितो ददद्भिर्गाढप्रहारान् नीतः कनकपुरप्रत्यासन्नां भीमनिकेतनाभि-धानां भिल्लपल्लीं। दर्शितो रणवीरस्य पल्लीपतेः। अभिहितमनेन। अरे पोषयत तावदेनं येन पुष्टो विक्रेतुं नीयते। ततो यदा-

ज्ञापयति देव इति वदता नीतोऽहमेकेन चौरेण स्वभवने। कोटितं वदनं हतो मुत्कलो लग्नोऽहं चकारादिभिः। कुपितश्चौरो। हतोऽहं दण्डादिभिर्नवरं समर्पितोऽयं मम स्वामिनेति मत्वा न मारितोऽहमनेन। केवलं दापितं कदशनं। ततो बुभुक्षाक्षामकुक्षितया संजातं मे दैन्यं। तदेव कदन्नं भक्षयितुमारब्धः। न पूरितमुदरं। संजातश्चित्तोद्वेगः। गतानि कतिचिद्दिनानि। पृष्टोऽसौ रणवीरेण चौरः कीदृशोऽसौ पुरुषो वर्तत इति। स प्राह। देव न कथंचित्तस्य बलमारोहतीति। ततः क्षपितोऽहमेवं तेन भूयांसं कालं॥ अन्यदा समायातः कनकपुराच्चौराणामुपरि दण्डः। नष्टास्तस्कराः। लूषिता सा पल्ली। गृहीता बन्द्यो नीताः कनकपुरे। गतोऽहमपि तन्मध्ये। दर्शिता बन्द्यो विभाकरनृपतेः। ततो मामवलोक्य चिन्तितमनेन। अये किमिदमाश्चर्यं यदेष पुरुषोऽस्थिचर्मशेषतया दवदग्धस्थाणुकल्पोऽपि नन्दिवर्धनकुमाराकारं धारयति। ततो निरूपितोऽहं नखाग्रेभ्यो वालाग्राणि यावत्। ततः स्थितं तस्य हृदये नन्दिवर्धनकुमार एवायं। केवलं कथं तस्येह संभवोऽथवा विचित्राणि विधेर्विलसितानि। तद्दशगानां हि प्राणिनां किं वा न संभवति। तथाहि।

य एकदा नताशेषभूपमौल्यर्चितक्रमः।
वचने वचने लोकैर्जय देवेति भण्यते॥
स एव विधिना राजा तस्मिन्नेव भवेऽन्यदा।
रोराकारं विधायोच्चैर्नानाकारं विडम्ब्यते॥

तस्मात्स एवायं नास्त्यत्र सन्देहः। ततः कृतमित्रभावेन

गलदानन्दोदकप्रवाहप्रक्षालितकपोलेन सिंहासनादुत्थाय समालिङ्गितोऽहं विभाकरेण। ततः किमेतदिति विस्मितं राजमण्डलं। ततो निवेश्यात्मीयार्धासनेऽभिहितोऽहमनेन। वयस्य कोऽयं वृत्तान्तः। ततः कथितं विभाकराय मयात्मचरितं। विभाकरः प्राह। हा कष्टं न सुन्दरमनुष्ठितं भवता यदिदमतिनिर्घृणं जननीजनकादिमारणमाचरितं। ततः अयमपीह जन्मन्येव क्लेशो भवतस्तस्यैव फलविपाकः। तच्छ्रुत्वा विस्फुरितौ ममान्तर्गतौ हिंसावैश्वानरौ। चिन्तितं मया। यथायमपि मे वैरिरूप एव यो मत्कर्तव्यमप्यसुन्दरं मन्यते। ततो जातो मे तन्मारणाभिप्रायः। तथापि दुर्बलतया देहस्य महाप्रतापतया विभाकरस्य संनिहिततया वङ्गराजवृन्दस्य अनिकटवर्तितया प्रहरणस्य न दत्तो मया प्रहारः। केवलं कृतं कालं मुखं। लक्षितो विभाकरेण मदीयाभिप्रायः। यथा न सुखायतेऽस्य मदीयोऽयं जल्पः। तत् किमनेन संतापितेन। ततो विहितः प्रस्तुतकथाविक्षेपः। ज्ञापितं सामन्तमहत्तमादीनां। यथैष नन्दिवर्धनकुमारो मम शरीरं जीवितं सर्वस्वं बन्धुर्भ्राता पूज्योऽद्य जातोऽहमस्य दर्शनेनातः कुरुत प्रियसमागममहोत्सवमिति। तैरभिहितं। यदाज्ञापयति देवः। ततः प्रवर्तितो महानन्दः। स्नपितोऽहं विधिना परिधापितो दिव्यवस्त्राणि भोजितः परमान्नैः विलेपितः सुरभिविलेपनेन भूषितो महालङ्कारैः। दत्तं स्वयमेव विभाकरेण मनोहारि ताम्बूलं। मया त्वहमनेनेदमभिहितो यथा न सुन्दरमनुष्ठितं भवतेति ततो मारयिष्याम्येनं वैरिणमिति रौद्रवितर्कपरंपरादो-

दूयमानचेतसा न किंचिच्चेतितं। उत्थाय भोजनमण्डपादुपविष्टा वयमास्थानशालायां। मतिशेखरेण मन्त्रिणाभिहितं। किं विदितं कुमारेण यथा देवभूयं गतः सुगृहीतनामधेयो देवः प्रभाकरः। ततो धूनिता मया कन्धरा। कृतं विभाकरेण साश्रु लोचनयुगलं अभिहितं च। वयस्य ताते परोक्षेऽधुना युष्माभिस्तातकार्यमनुष्ठेयं। तदिदं राज्यमेते वयमेताश्च तातपादप्रसादलालिताः प्रकृतयः प्रतिपन्नाः किङ्करभावं वयस्यस्य। यथेष्टं नियोज्यतां। ततो वैश्वा-वैगुण्यादवस्थितोऽहं मौनेन। लङ्घितो दिवसो दत्तं प्रादोषिक-मास्थानं। तदन्ते विसर्जितराजमण्डलो निवार्य प्रियतमाप्रवेशं मया सहातिस्नेहनिर्भरतया महाशय्यामेकस्यामेव शय्यायां प्रसुप्तो वासभवने विभाकरनरेन्द्रः। ततो भद्रेऽगृहीतसङ्केते तदा मया हिंसावैश्वानराभ्यां विधुरितहृदयेन स तथाविधोऽतिस्निग्धविश्रब्धो विभाकरः समुत्थाय विनिपातितः पापेन। निर्गतश्चाहं परिधान-द्वितीयः। स्वकर्मत्रासेन पलायितो वेगेन निपतितोऽटव्यां। सोढानि नानाविधदुःखानि। प्राप्तो महता क्लेशेन कुशावर्त्तं। विश्रान्तो बहिः कानने। दृष्टः कनकशेखरपरिकरेण। निवेदितः कनकचूडकनकशेखरयोः। चिन्तितमाभ्यां। भवितव्यमत्र कारणेन यदेकाकी नन्दिवर्धन इति। ततः समागतौ कतिचिदाप्तपुरुष-परिवारौ मत्समीपं। विहितमुचितं। स्थितो मया सहोत्सारके कनकशेखरः। पृष्टमेकाकिताकारणं। मया चिन्तितं। अस्यापि न प्रतिभासिष्यते मदीयचरितं। तत्किं कथितेन। ततो मयाभि-हितं। अलमनया कथया। कनकशेखरः प्राह। किं मह्यमपि न

कथ्यते। मयोक्तं। नेति। कनकशेखरेणोक्तं। कुमाराविश्वस्ततया कथनीयमितरथा न भवति मे चित्ते निर्वाणं। ततो मयादिष्टमयमुपह्वयतीति चिन्तयतो मेऽन्तर्गतौ प्रचलितौ हिंसावैश्वानरौ। समाकृष्टा कनकशेखरकटीतटात्ललितान्तजिह्वाभासुरासिपुत्रिका। समुद्गीर्णः कनकशेखरमारणाय प्रहारः। ततः किमेतदिति प्राप्ता वेगेन कनकचूडादयः। प्रादुर्भूतः कोलाहलः। स्तम्भितोऽहं कनकशेखरगुणावर्जिततया यथासंनिहितया देवतया। समुत्क्षिप्तः पश्यतामेव तेषां गगनमार्गेण। नीतस्तद्विषयसन्धिदेशे। चिप्तश्चाम्बरीषाभिधानानां वीरसेनादीनां चरटानां मध्ये। दृष्टस्तैस्तथैवोद्गीर्णप्रहारो गृहीतचुरिकः। प्रत्यभिज्ञातोऽमीभिः। पतिताः पादयोरभिहितं च तैः। देव कोऽयं वृत्तान्तः। न शकितं मया जल्पितुं। विस्मिताश्चरटाः। आनीतमासनं। न शकितं मयोपवेष्टुं। ततो गता दैन्यमेते। तत्करुणयोत्तम्भितोऽहं देवतया। चालितान्यङ्गानि। दृष्टास्ते वराकाः। निवेशितोऽहमासने पुनरपि पृष्टः प्रस्तुतव्यतिकरं। मया चिन्तितं। अहो यत्र यत्र प्रजामस्तत्र तत्र वयमेतैः परतप्तिपरायणैरलीकवत्सलैर्लोकैरासितुं न लभामहे। ते लब्धप्रतिवचनाः पुनः पुनर्मां पृच्छन्ति स्म। ततो विस्फुरितौ मे हिंसावैश्वानरौ। निपातिताः कतिचिच्चरटाः। जातः कलकलः। ततो बहुत्वात्तैर्गृहीता मम हस्तादसिपुत्रिका। बद्धोऽहमात्मभयेन॥ अत्रान्तरे गतोऽस्तं दिनकरः। विजृम्भितं तिमिरं। समालोचितं चरटैः। यथा पूर्ववैरिक एवायमस्माकं नन्दिवर्धनो येन हतः प्रवरसेनोऽधुनापि घातिता एतेनैते प्रधानपुरुषाः।

तथापि प्रतिपन्नोऽस्माभिरेष स्वामिभावेन प्रख्यापितो लोके। विज्ञातमेतद्देशान्तरेषु। ततोऽस्य मारणे महानयशस्कारः संपद्यते। नैष वह्निवत्पुद्गलके कथंचिद्दारयितुं शक्यः। तस्माद्दूरदेशं नीत्वा त्याग एवास्य श्रेयानिति स्थापितः सिद्धान्तः॥ ततो नियन्त्रितोऽहं गन्त्रामारटंश्च बद्धो वस्त्रेण वदनदेशे। युक्तौ मनःपवनगमनौ वृषभौ। प्रस्थापिताः कतिचित्पुरुषाः। खेटिता गन्त्री-गता रजन्यैव द्वादश योजनानि। ततः प्रापितोऽहमनवरतप्रयाणकैः शार्दूलपुरं। त्यक्तो मलविलयाभिधाने बहिष्कानने। गताः स्वस्थानं सगन्त्रीकास्ते मनुष्याः॥

स्तोकवेलायां अकाण्ड एव विजृम्भितः सुरभिपवनः। विमुक्तः सहजोऽपि वैरानुबन्धः पशुगणैः। भुवनश्रियेव तत्क्षमाध्यासितं काननं। समवतीर्णाः समकमेव सर्व ऋतवः। प्रमुदिता विहङ्गमगणाः। मनोहरमनुत्तालतालं रुटितं मधुकरावलीभिः। विगततापं विशेषतस्तमुद्देशमुद्योतयितुमारब्धो दिनकरः। तथा ममापि मनाग्गलित इव चित्तसन्तापः॥ तदनन्तरं च देहभूषणप्रभाप्रवाहेण द्योतयन्तो दिक्चक्रवालं समागतास्तत्र देवाः। शोधितं तैर्भूतलं। वृष्टमतिसुरभिगन्धोदकं। विमुक्तः पञ्चवर्णमनोहारिकुसुमप्रकरः। विरचितं विशालमतिरमणीयं मणिकुट्टिमं। विहितं तस्योपरि कनककमलं। विस्तारितमुपरिष्टाद्देवदूष्यवितानं। अवलम्बितास्तत्र मौक्तिकावचूलाः। ततः समुत्सुकैस्तैर्देवैरवलोकितमार्गः कल्पद्रुम इव यथेष्टफलदायितया कनकगिरिरिव स्थिरतया क्षीरनीरधिरिव गुणरत्नाकरतया शशधर इव शीतलेश्यतया दिनकर इव समताप-

तया चिन्तामणिरिव दुर्लभतया स्फटिक इव निर्मलतया भूभाग इव सर्वसहिष्णुतया गगनतलमिव निरालम्बनतया गन्धकरीव वरकरिभिः परिकरितः स्वप्रतिबिम्बकैरिव बहुविधविनेयैः समागतः केवलज्ञानदिवाकरो विवेको नामार्यः। समुपविष्टः कनककमले। प्रणिपत्य विहितकरामुकुला निषण्णा परिषत्। प्रारब्धं व्याख्यानं॥

अत्रान्तरे भगवतः प्रतापं सोढुमशक्नुवन्तौ मदीयशरीरान्निर्गतौ हिंसावैश्वानरौ दूरदेशे स्थितौ मां प्रतीक्षमाणौ।

अथारिदमनो राजा मुनिं विज्ञाय लोकतः।
स पुरो निर्गतस्तस्य मुनेर्वन्दनकाम्यया॥
तथा मदनमञ्जूषा या दत्ता मम कन्यका।
सापि तत्र समायाता सहिता रतिचूलया॥
विज्ञाय पञ्चचिह्नानि भक्तिनिर्भरमानसः।
राजा कृतोत्तरासङ्गः प्रविष्टः सूर्यवग्रहे॥
पञ्चाङ्गप्रणिपातेन पादयोर्न्यस्तमस्तकः।
प्रणम्य सूरिं नौति स्म ललाटे कृतकुड्मलः॥

कथम्।

अज्ञानतिमिरोच्छेदकरनाथ दिवाकर।
नमस्ते रागसन्तापनाशकारिनिशाकर॥
त्वत्पाददर्शनेनाद्य नाथ कारुण्यसागर।
भवता भवनिर्नाशपूतपापाः कृता वयम्॥
अद्यैव ननु जातोऽस्मि राज्येऽद्यैव प्रतिष्ठितः।

अद्यैव पटुकर्णोऽस्मि पश्याम्यद्यैव चक्षुषा ॥
यद्वाखिलजन्मपापजीर्णविरेचनम्।
भाग्यसंसूचकं मन्ये संपन्नं तव दर्शनम् ॥
एवं संस्तुत्य राजेन्द्रः सूरिं सूदितकल्मषम्।
प्रणम्य शेषसाधूंश्च निषण्णः शुद्धभूतले ॥
स्वर्गापवर्गपथ्यस्य सत्यंकार इवाखिलैः।
गुरुभिर्मुनिभिश्चोच्चैर्धर्मलाभः कृतो नृपे ॥
ततः कृतप्रणामेषु शेषलोकेषु भावतः।
प्रयुक्तलोकयात्रेण गुरुणारब्धि देशना ॥

कथम्।

भो भव्या भवकान्तारे पर्यटद्भिरनारतम्।
अत्यन्तदुर्लभो ह्येष धर्मः सर्वज्ञभाषितः ॥

यतः।

अनादिरेष संसारः कालोऽनादिः प्रवाहतः।
जीवाश्चानादिकाः सर्वे दृश्यन्ते ज्ञानचक्षुषा ॥
न चैते प्राप्नुवन्तोऽमुं धर्मं सर्वज्ञभाषितम्।
कदाचिदपि पूर्वं तु तेनैते भवभाजनम् ॥
अथावाप्तो भवेज्जैनो धर्मोऽमीभिः कदाचन।
ततः कुतो भवोऽमीषां क्व तार्णं वह्निमीलके ॥
तस्मात्सुनिश्चितं राजन्नेतच्चात्यत्र संशयः।
नैवावाप्तः पुरा धर्मो जन्तुभिर्जिनदेशितः ॥

एवं च स्थिते।

यदानादौ भवेऽमीषां मत्स्यानामिव सागरे।
सदा दोलायमानानां जीवानां दुःखसङ्कुले॥
स्वकर्मपरिणामेन भव्यत्वपरिपाकतः।
मनुष्यत्वादिसामग्र्या तथा कालादियोगतः॥
धन्यः सकलकल्याणजनकोऽचिन्त्यशक्तिकः।
यत्र कश्चिद्भवेज्जीवेऽनुग्रहः पारमेश्वरः॥
स तदा लभते जीवो दुर्भेदग्रन्थिभेदतः।
अशेषक्लेशनिर्नाशि जैनेन्द्रं तत्त्वदर्शनम्॥
ततोऽसौ गृहिधर्मं वा प्राप्नुयाज्जिनभाषितम्।
लभते साधुधर्मं वा सर्वदुःखविमोचकम्॥
सा चेयती भवेत्कस्य सामग्रीयं सुदुर्लभा।
राधावेधोपमानेन धर्मप्राप्तिः प्रकीर्तिता॥
तदत्र लब्धे सद्धर्मे कुरुध्वं यत्नमुत्तमम्।
अलब्धस्य तु लाभार्थं घटध्वमिह हे जनाः॥

अत्रान्तरे चिन्तितं नरेन्द्रेण। केवलज्ञानदिवाकरो भगवानयं। नास्त्यस्य किंचिदज्ञेयं। अतः पृच्छामि भगवन्तमात्मीयसंशयं। अथवा पश्यत्येव भगवान्मदीयसन्देहं जिज्ञासां वा। अतः कथयतु ममानुग्रहेण। ततो भगवता सूरिणा भव्यजनबोधनार्थमभिहितो नरेन्द्रः। महाराज वाचा पृच्छ। नृपतिनाभिहितं। भदन्त येयं मदीयदुहिता मदनमञ्जूषा अस्याः पद्मनृपतिसुतनन्दिवर्धन-कुमाराय दानार्थं प्रहितो मया जयस्थले स्फुटवचनो नाम महत्तमः। गतः कियानपि कालो न निवृत्तोऽसौ। ततः प्रहिता

मया तद्वार्त्तोपलम्भार्थं पुरुषाः। तैश्चागत्य निवेदितं। यथा देव तज्जयस्थलं भस्मीभूतं दवदग्धस्थलमात्रमधुना वर्तते। छिन्नमण्डलं च तत्तेन न विद्यन्ते प्रत्यासन्नान्यन्यग्रामनगराणि। अरण्यप्रायः सोऽधुना देशो वर्तते। तथा वार्त्तामात्रमपि नास्माभिरुपलब्धं कथं तत्तथाभूतं संजातमिति। ततो मया चिन्तितं। हा कष्टमहो कष्टं। किं पुनरत्र कारणं। किमकाण्ड एव तत्रोत्पाताङ्गार-वृष्टिर्निपतिता किं वा पूर्वविरुद्धदेवेन भस्मीकृतं नगरं। उत मुनिना केनचित्कोपाग्निना दग्धं। आहोस्वित् चेमवह्निना चौरादिभिर्वा। ततश्चाविज्ञातपरमार्थः ससन्देहः शोकापन्नश्च स्थितोऽहमेतावन्तं कालं। अधुना भगवति दृष्टे संजातः शोकाप-नोदः। सन्देहः पुनरद्यापि मे नापगच्छति। तमपनयतु भग-वानिति॥ भगवताभिहितं। महाराज पश्यसि लमेनं पर्षदः प्रत्यासन्नं नियन्त्रितं पश्चाद्बाहुबन्धेन निर्बद्धवक्षविवरं तिरस्रीनं पुरुषं। नृपतिनाभिहितं। सुष्ठु पश्यामि। भगवानाह। महाराज एतेन भस्मीकृतं नगरं। नृपतिराह। भदन्त कोऽयं पुरुषः। भगवानाह। महाराज स एवायं तव जामाता नन्दिवर्धनकुमारः। नृपतिराह। कथं पुनरनेनेदमीदृशं व्यवसितं। किमिति वायमेवं-विधावस्थोऽधुना वर्तते। ततः कथितो भगवता स्फुटवचनविरोधा-दिकखरटमनुष्यपरित्यागपर्यवसानः सर्वोऽपि नरपतये मदीय-वृत्तान्तः। तमाकर्ण्य विस्मितो राजा परिषच्च। नृपतिना चिन्तितं। किं छोटयाम्यस्य वदनं। करोमि मुत्कलं बाहुयुगलं। अथवा नहि नहि। निवेदितमेवास्य चरितं भगवता। तदेव

यदानादौ भवेऽमीषां मत्स्यानामिव सागरे ।
सदा दोलायमानानां जीवानां दुःखसङ्कुले ॥
स्वकर्मपरिणामेन भव्यत्वपरिपाकतः ।
मनुष्यत्वादिसामग्र्या तथा कालादियोगतः ॥
धन्यः सकलकल्याणजनकोऽचिन्त्यशक्तिकः ।
यत्र क्वचिद्भवेज्जीवेऽनुग्रहः पारमेश्वरः ॥
स तदा लभते जीवो दुर्भेद्यग्रन्थिभेदतः ।
अशेषक्लेशनिर्नाशि जैनेन्द्रं तत्त्वदर्शनम् ॥
ततोऽसौ गृहिधर्मं वा प्राप्नुयाज्जिनभाषितम् ।
लभते साधुधर्मं वा सर्वदुःखविमोचकम् ॥
सा चेयती भवेत्कस्य सामग्रीयं सुदुर्लभा ।
राधावेधोपमानेन धर्मप्राप्तिः प्रकीर्तिता ॥
तदत्र लब्धे सद्धर्मे कुरुध्वं यत्नम[illegible]

अलब्धस्य तु लाभा[illegible]ते दूरवर्त्ति कृष्णरूपं मा[illegible] अस्यैव समस्तोऽपि दोषः । ततो नरपतिना विस्फारितं तदभि[illegible] मौचणयुगलं । निरूपितं इयतीं वेलां तन्मानुषद्वयं । चानेन । भगवन्नेकोऽत्र मनुष्यो द्वितीया नारीति लक्ष्यते । [illegible] वताभिहितं । सम्यगवधारितं महाराजेन । नृपतिराह । भदन्त कोऽयं मनुष्यः । भगवताभिहितं । एष महामोहस्य पौत्रको द्वेष-गजेन्द्रस्य सूनुरविवेकितानन्दनो वैश्वानरोऽभिधीयते । अस्य हि जननीजनकाभ्यां प्रथमं क्रोध इति नाम प्रतिष्ठितं । पश्चात्स्वगुणैरस्य परिजनसकाशादिदं द्वितीयं वैश्वानर इति प्रियनामकं संपन्नं ।

मया तद्वार्त्तोपलम्भार्थं पुरुषाः । तैश्चागत्य निवेदितं । यथा देव तज्जयस्थलं भस्मीभूतं दवदग्धस्थलमात्रमधुना वर्तते । किमपरञ्च तत्तेन न विद्यन्ते मध्यावस्थान्यन्यग्रामनगराणि । अरण्यप्रायः सोऽधुना देशो वर्तते । तथा वार्त्तामात्रमपि नास्माभिरुपलब्धं कथं तत्तथाभूतं संजातमिति । ततो मया चिन्तितं। हा कष्टमहो कष्टं । किं पुनरत्र कारणं । किमकाण्ड एव तत्रोत्पाताङ्गार-वृष्टिर्निपतिता किं वा पूर्वविरुद्धदेवेन भस्मीकृतं नगरं । उत मुनिना केनचित्कोपाग्निना दग्धं । आहोस्वित् चेमवह्निना चौरादिभिर्वा । ततश्चाविज्ञातपरमार्थः ससन्देहः शोकापन्नश्च स्थितोऽहमेतावन्तं कालं । अधुना भगवति दृष्टे संजातः शोकाप-नोदः । सन्देहः पुनरद्यापि मे नापगच्छति । तमपनयतु भग-वानिति ॥ भगवताभिहितं । महाराज पश्यसि लसेनं पर्षदः जनितो जगत्सन्तापः परमोपकारेण निबद्धवस्त्रविवरं तिरश्चीनं रश्मी तिरस्कृतौ कनकचूडकनकशेखरौ मि । भगवानाह । महाराज स्फुटवचनेन महाकाण्डभण्डनं तन्मारणं च तथा जननीजनक-सहोदरभगिनीप्रियभार्यादिव्यापादनं नगरदहनं स्नेहनिर्भरमित्र-भृत्यनिपातनं च तन्निवेदितमेव युष्माकं । स एष महाराज समस्तोऽप्यनयोरेव पापयोर्हिंसावैश्वानरयोरस्य भार्यावयस्ययोर्दोष-संघातो न पुनः स्वयमस्य तपस्विनो नन्दिवर्धनकुमारस्य दोष-गन्धोऽप्यस्ति । तथाह्ययं स्वरूपेण स्थानमनन्तज्ञानस्य भाजनमनन्त-दर्शनस्य पात्रमनन्तवीर्यस्य निलयनमनन्तसुखस्य कुलभवनमपरि-मितगुणानां । न चेदृशमात्मस्वरूपमद्याप्येष वराको लक्षयति ।

तेनानयोः पापभार्यावयस्ययोः स्वरूपविपर्यासकारिणोर्वशे वर्तते। तथा च वर्तमानोऽयमेवंविधामनन्तदुःखहेतुभूतामनर्थपरंपरामासादयति॥ नृपतिनाभिहितं। भदन्त स्फुटवचनव्यतिकरात्पूर्वमस्माभिः श्रुतमासील्लोकवार्त्तया। यदुतानेन नन्दिवर्धनकुमारेणोत्पद्यमानेनानन्दितं पद्मराजकुलं वर्धितं कोशदण्डसमृध्या तोषितं नगरं। वर्धमानेन पुनराह्लादिताः प्रकृतयो विस्तारितो गुणप्राग्भारः प्रतापेन वशीकृतं भूमण्डलं निर्जिताः शत्रवः गृहीता जयपताका समुल्लसितो यशःपटहः सिंहायितं भूतले अवगाहितः सुखामृतसागरः। तत् किं तदास्य नास्तामेतौ पापभार्यावयस्यौ यदीमौ दुःखपरंपराकारणभूताविति। भगवताभिहितं। महाराज तदाप्यास्तामेतौ किं तु तदान्यदेव कल्याणपरंपराकारणमासीत्। नृपतिराह। किं तत्। भगवतोक्तं। पुण्योदयो नाम सहचरः। स हि विद्यमानः स्वकीयप्रभावेण सर्वेषामेषामनन्तरोक्तानां पद्मराजकुलानन्दजननादीनां प्रयोजनविशेषाणां संपन्नः कारणं। केवलं महामोहवशान्न लक्षितोऽनेन नन्दिवर्धनेन तदीयः प्रभावः। पुण्योदयमाहात्म्यजातमपि कल्याणकदम्बकं हिंसावैश्वानरप्रतापजनितं ममैतदित्येवमेष मन्यते स्म। ततोऽयमविशेषज्ञ इति मत्वा विरक्तोऽसौ पुण्योदयः। नष्टो गृहीत्वैकां दिशं स्फुटवचनव्यतिकरावसरे। ततस्तदिकलस्यास्य नन्दिवर्धनकुमारस्येदमनर्थकदम्बकमाभ्यां हिंसावैश्वानराभ्यां संपादितमिति। नृपतिराह। भदन्त कियान्पुनः कालोऽस्य हिंसावैश्वानराभ्यां सह सम्बन्धस्य। भगवताभिहितं। अनादिपरिचितावस्येमौ हिंसावैश्वानरौ। केवलमत्र

पद्मराजगृहे निवसतोऽस्याविर्भूताविमौ। पूर्वं तिरोभूतौ स्थितौ। नृपतिराह। किमनादिरूपोऽयं नन्दिवर्धनकुमारः। भगवानाह। बाढं। नृपतिराह। तत्किमित्ययं पद्मराजपुत्रतया प्रसिद्धः। भगवानाह। मिथ्याभिमानोऽयमस्य यदुत पद्मराजपुत्रोऽहं। अतो नात्रास्था विधेया। नृपतिनोक्तं। भदन्त तत्परमार्थतः कुतस्त्योऽयमवधार्यतां। भगवताभिहितं। असंव्यवहारनगरवास्तव्यः कुटुम्बिकोऽयं संसारिजीवनामा कर्मपरिणाममहाराजादेशेन लोकस्थितिनियोगसुरीकृत्य स्वभार्यया भवितव्यतया ततो नगरान्निःसारितोऽपरापरस्थानेषु पर्यटन् धार्यत इत्यवधारणीयं। नृपतिराह। भदन्त कथमेतदिति सप्रपञ्चामस्य वक्तव्यतां श्रोतुमिच्छामि। भगवानाह। महाराजाकर्णय। ततः कथितो भगवता समस्तोऽपि विस्तरेण मदीयव्यतिकरः। ततः चुद्रतया भगवद्दर्शनेऽरिदमनस्य विमलतया बोधस्य प्रत्यायकतया भगवद्वचनस्य लघुकर्मतया जीवस्य प्रत्यासन्नतया महाकल्याणस्य परिस्फुरितमस्य हृदये। अये भगवता विमलकेवलालोकेनोपलभ्यास्य नन्दिवर्धनकुमारस्य सम्बन्धी भवप्रपञ्चोऽयमनेन व्याजेन प्रतिपादितः। ततोऽभिहितमनेन। भदन्त यथैवं मयावधारितं तथैवेदमुतान्यथेति। भगवानाह। महाराज तथैव। मार्गानुसारिणी हि भवतो बुद्धिः। तत्कुतस्तत्रान्यथाभावः। नृपतिनाभिहितं। भदन्त तत्किमस्यैव नन्दिवर्धनस्यायं वृत्तान्तः किं वान्येषामपि प्राणिनामिति। भगवानाह। महाराज सर्वेषां संसारोदरविवरवर्तिनामसुमतामेष व्यतिकरः प्रायेण समावर्तते। तथाहि। स्थिताः सर्वेऽप्येतेऽनादिकं

कालं प्रायोऽसांव्यवहारिकजीवराशिमध्ये। तत्र च निवसतामेतेषामेत एव क्रोधमानमायालोभास्तवद्दारादयोऽन्तरङ्गः परिजनः। यावन्तस्वागमप्रतिपादितानुष्ठानबलेन जीवाः सिध्यन्ति तावन्त एवासांव्यवहारिकजीवराशिमध्यादागच्छन्तीति केवलिवचनं। ततो निर्गताश्चैतेऽपि सर्वे जीवा विडम्बिता भूयांसं कालमेकेन्द्रियेषु विनाटिता विकलेन्द्रियेषु विगोपिताः पञ्चेन्द्रियतिर्यग्योनिजेषु कदर्थिता नानाविधानन्तदुःखैः कारिता बहुविधरूपाणि सततमपरापरभवप्रायोग्यकर्मजालविपाकोदयद्वारेण भवितव्यतया भ्रमिताश्चारघट्टघटीयन्त्रन्यायेन सूक्ष्मबादरपर्याप्तकापर्याप्तकपृथिव्यप्तेजोवायुवनस्पतिद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियसंज्ञ्यसंज्ञिपञ्चेन्द्रियतिर्यग्योनिजखचरजलचरादिभेदविवर्तेन सर्वस्थानेषु प्रत्येकमनन्तवाराः। ततः कैश्चिज्जीवैः कथंचिन्महासागरपतितैरिव रत्नद्वीपं महारोगभराक्रान्तैरिव महाभेषजं विषमूर्छितैरिव महामन्त्रो दारिद्र्याभिभूतैरिव चिन्तामणिः प्राप्यतेऽतिदुर्लभोऽयं मनुष्यभवः। तत्रापि महानिधिग्रहण इव वेताला स्तग्रमाविर्भवन्त्येते हिंसाक्रोधादयो दोषा यैरभिभूतास्तिष्ठन्तु तावदेते प्रबलमहामोहनिद्राघूर्णितमानसा नन्दिवर्धनमङ्कुला वराकसत्त्वाः किं तर्हि येऽपि जिनवचनप्रदीपेन जानन्त्येनं भवप्रपञ्चं लक्षयन्ति मनुष्यभवदुर्लभतां बुध्यन्ते संसारसागरतारकं धर्मं वेदयन्ते स्वसंवेदनेन भगवद्वचनार्थं निश्चिन्वन्ति निरुपमानन्दरूपं परमपदं तेऽपि बालिशा इव प्रवर्तन्ते परोपतापेषु भवन्ति गर्वाध्माताः कुर्वन्ति परवञ्चनानि रज्यन्ते द्रविणोपार्जनेषु व्यापादयन्ति सत्त्वसंघातं भाषन्तेऽलीकवचनानि

आददते परधनं ग्रथ्नन्ति विषयोपभोगेषु आचरन्ति महापरिग्रहं भजन्ते रजनीभोजनानि। तथा मुह्यन्ति शब्देषु मूर्छन्ति रूपेषु लुभ्यन्ति रसेषु दृप्यन्ति गन्धेषु आश्रियन्ति स्पर्शेषु दिषन्ति चानिष्टशब्दादीन् भ्रमयन्ति पापस्थानेषु सततमन्तःकरणं न नियन्त्रयन्ति भारतीं उच्छृङ्खलयन्ति कायं भज्यन्ते दूरेण तपश्चरणात्। ततोऽयं मनुष्यभवो मोक्षाक्षेपकारणभूतोऽपि तेषामधन्यतया न केवलं न किंचिद्गुणमवलेशमात्रमपि साधयति किं तर्हि यथास्य नन्दिवर्धनस्य तथैव प्रत्युतानन्तदुःखपरंपराकुलसंसारकारणतां प्रतिपद्यते। तथाहि प्राप्तोऽयं मनुष्यभवोऽनादौ संसारे पूर्वमनन्तवारान् न च सद्धर्मानुष्ठानविकलेनानेन किंचित्साधितं। अत एवास्माभिः पूर्वं भगवद्धर्मस्यात्यन्तदुर्लभता प्रतिपादिता। तथाहि।

पद्मरागेन्द्रनीलादिरत्नसंघातपूरितम्।
लभ्यते भवनं राजन्न तु जैनेन्द्रशासनम्॥
समृद्धं कोषदण्डाभ्यामेकच्छत्रमकण्टकम्।
सुप्रापमीदृशं राज्यं न तु धर्मो जिनोदितः।
संपूर्णभोगसम्प्राप्तिप्रीणितेन्द्रियमानसम्।
सुलभं नृपदेवत्वं न मतं पारमेश्वरम्॥
संसारे परमैश्वर्यकारणं भूप लभ्यते।
इन्द्रत्वमपि जीवेन न धर्मो जिनदेशितः॥
एते हि भावा राजेन्द्र संसारसुखकारणम्।
सद्धर्मस्तु मुनीन्द्रोक्तो निर्वाणसुखकारणम्॥
निर्वाणसुखसंसारसुखयोश्च परस्परम्।

चिन्तारत्नस्य काचेन यावत्तावद्गुणान्तरम् ॥
एवं च ज्ञातमाहात्म्यैः संसारे ब्रूहि तत्त्वतः ।
ईदृग्धर्मसम्प्राप्तिर्भूप केनोपमीयताम् ॥

एवंस्थिते ।

एनं संसारविस्तारं विलंघ्य कथमप्यदः ।
मानुष्यं प्राप्य दुष्प्रापं राधावेधोपमं जनः ॥
यो जैनमपि संप्राप्य शासनं कर्मनाशनम् ।
हिंसाक्रोधादिपापेषु रज्यते मूढमानसः ॥
संहारयति काचेन चिन्तामणिमनुत्तमम् ।
करोत्यङ्गारवाणिज्यं दग्ध्वा गोशीर्षचन्दनम् ॥
भिनत्ति नावं मूढात्मा लोहार्थं स महोदधौ ।
सूत्रार्थं दारयत्युच्चैर्वैडूर्यं रत्नमुत्तमम् ॥
प्रदीपयति कीलार्थं देवद्रोणीं महत्तमाम् ।
रत्नस्थाल्यां पचत्यांत्रखलकं मोहदोषतः ॥
सौवर्णलाङ्गलाग्रेण लिखित्वा वसुधां तथा ।
अर्कबीजं वपत्येष तूलार्थं मूढमानसः ॥
छित्त्वा कर्पूरखण्डानि कोद्रवाणां समन्ततः ।
वृतिं विधत्ते मूढोऽयमहं सश्रुतिकः किल ॥

यतः ।

हिंसाक्रोधादिपापेषु जन्तोरासक्तचेतसः ।
सद्धर्मोऽयं जिनेन्द्रोक्तो दूराद्दूरेण गच्छति ॥
सद्धर्मरहितश्चासौ पापपूरितमानसः ।

न मोक्षमार्गलेशेन कथंचिदपि युज्यते ॥
ततो जानन्नपि बलात्पुनर्भीमे महोदधौ ।
निर्वोलं याति मोहान्धो यथायं नन्दिवर्धनः ॥

नृपतिनाभिहितं । भगवंस्तस्य नन्दिवर्धनस्य किमियतापि प्रपञ्चेन कथ्यमाने स्वसंवेदनसंसिद्धेऽपि निजचरिते संजातः प्रबोधः । भगवताभिहितं । महाराज न केवलमस्य प्रतिबोधाभावः किं तर्हि मयि कथयति प्रत्युतास्य महानुद्वेगो वर्तते । नृपतिराह । किमभव्योऽयं । भगवतोक्तं । नाभव्यः किं तर्हि भव्य एव । केवलमयमस्यैव वैश्वानरस्य दोषो यन्मदीयवचनं न प्रतिपद्यते । यतोऽयमनन्तोऽनुबन्धोऽस्येति कृत्वा अनन्तानुबन्धीति दृयीयनाम्ना मुनिभिर्गीयते । ततोऽत्र विद्यमाने न सुखायते मदीयवचनं उत्पादयत्यरतिं जनयति कलमलकं । ततः कुतोऽस्य तपस्विनः प्रबोधः । पर्यटितव्यमद्याप्यनेन नन्दिवर्धनेनास्य वैश्वानरस्य प्रमादात्परापरस्थानेषु दुःखमनुभवतानन्तं कालं प्राप्तव्या च वैरपरंपराः । नृपतिराह । भदन्त महारिपुरेषोऽस्य वैश्वानरः । भगवतोक्तं । पर्याप्तमियत्या महारिपुतया । नृपतिराह । किमस्यैवायं वयस्यः किं वान्येषामपि जन्तूनां । भगवानाह । यदि महाराज स्फुटं प्रश्नयसि ततस्तथा ते कथयामि यथा पुनः प्रष्टव्यमिदं न भवति । नृपतिराह । अनुग्रहो मे । भगवताभिहितं । इह सर्वेषां जीवानां प्रत्येकं त्रीणि त्रीणि कुटुम्बकानि । तद्यथा । क्षान्तिमार्दवार्जवमुक्तिज्ञानदर्शनवीर्यसुखसत्यशौचतपःसन्तोषादीनि यत्र गृहमानुषाणि तदिदमेकं कुटुम्बकं । तथा क्रोधमानमायालोभरागद्वेषमोहाज्ञानशोकभया-

विरतिप्रभृतयो यत्र बान्धवाः तदिदं द्वितीयं कुटुम्बकं। तथा शरीरं तदुत्पादकौ स्त्रीपुरुषावन्ये च तथाविधा लोका यत्र सम्बन्धिनः तदिदं तृतीयं कुटुम्बकं। कुटुम्बत्रितयद्वारेण चासंख्याताः स्वजनवर्गा भवन्ति। तत्र यदिदमाद्यं कुटुम्बकमेतज्जीवानां स्वाभाविकमनाद्यपर्यवसितं हितकरणशीलमाविर्भावतिरोभावधर्मकमन्तरङ्गं च वर्तते मोक्षप्रापकं च। यतः प्रकृत्यैवेदं जीवमुपरिष्टान्नयति। यत्पुनरिदं द्वितीयं कुटुम्बकमेतज्जीवानामस्वाभाविकं। तथाप्यविज्ञातपरमार्थैर्जन्तुभिर्गृहीतं तद्गाढतरं स्वाभाविकमिति। तदनाद्यपर्यवसितमभव्यानां अनादि सपर्यवसितं केषांचिद्भव्यानां एकान्तेनाहितकरणशीलमाविर्भावतिरोभावधर्मकमन्तरङ्गं च वर्तते संसारकारणं च। यतः प्रकृत्यैवेदं जीवमधस्तात्पातयति। यत्पुनरिदं तृतीयं कुटुम्बकमेतज्जीवानामस्वाभाविकमेव तथा सादि सपर्यवसितमनियतसद्भावं च। यथा भव्यतया हिताहितकरणशीलमुत्पत्तिविनाशधर्मकं बहिरङ्गं च वर्तते तथा भव्यतया संसारकारणं मोक्षकारणं वा भवति। यतो बाहुल्येन द्वितीयकुटुम्बकस्यावष्टम्भकारकमिदमतः संसारकारणं। यदि पुनः कथंचिदाद्यं कुटुम्बकमनुवर्तते ततो जीवस्तेदमप्याद्यकुटुम्बकपोषणे सहायं स्यात्। ततश्च मोक्षकारणतां प्रतिपद्येत। तदेवंस्थिते महाराज यदिदं द्वितीयं कुटुम्बकमस्य मध्ये सर्वेषां संसारिजीवानामेष वैश्वानरो वयस्यस्तथेयमपि हिंसा भार्या विद्यत एव। नात्र सन्देहो विधेयः। नृपतिराह। भदन्त यदीदमाद्यं कुटुम्बकं स्वाभाविकं हितकरणशीलं मोक्षकारणं च तत्किमितीमे जीवा गाढं नेदमाद्रियन्ते। यदि चेदं द्वितीयकुटुम्बक-

मस्वाभाविकमेकान्तेनाहितकरणशीलं संसारकारणं च तत्किमितीमे जीवा गाढतरमिदं पोषयन्ति। भगवानाह। महाराजाकर्णयात्र कारणं। एतदाद्यं कुटुम्बकमनेन द्वितीयकुटुम्बकेनानादौ संसारे सकलकालमभिभूतमास्ते। ततो भयात्तिरोभावं गतस्य तस्य न संपन्नं कदाचिदभिव्यक्तं दर्शनं। ततो न लक्षयन्त्येते वराका जीवास्तत्सम्बन्धिनं गुणकलापं। तेन न तस्योपरि गाढमादरं कुर्वन्ति। विद्यमानमपि तदविद्यमानं मन्यन्ते। तस्य गुणानपि वर्णयन्तमस्मदादिकं न गणयन्ति। एतत्पुनर्द्वितीयं कुटुम्बकमनादौ संसारे शत्रुभूतस्याद्यकुटुम्बकस्य निराकरणादवाप्तजयपताकं लब्धप्रसरतया वल्गमानं प्रायेण सकलकालमाविर्भूतमेवास्ते। ततः संपद्यते तेन सहामीषां जीवानामहर्निशं दर्शनं। ततो वर्धते प्रेमाबन्धः समुत्पद्यते चित्तरतिः संजायते विश्रम्भः प्रादुर्भवत्यनेन सह प्रणयः। ततोऽस्य द्वितीयकुटुम्बकस्य सततमनुरज्यमानमानसाः खल्वेते जीवा न पश्यन्ति दोषसंघातं समारोपयन्त्यस्यासन्तमपि गुणसन्दोहं। तेनेदं गाढतरमेते पोषयन्ति। इदमेवैकं परमबन्धुभूतमस्माकमिति मन्यन्ते। अस्य च दोषप्रकाशकमस्मदादिकं शत्रुबुद्ध्या पश्यन्ति॥ नृपतिराह। भदन्त सुन्दरं भवति यद्येते तपस्विनो जीवा अनयोः कुटुम्बकयोर्गुणदोषविशेषमवगच्छेयुः। भगवानाह। किमतःपरं सुन्दरतरं। एतावन्मात्रमेव हि निःशेषकल्याणानि वाञ्छता परमार्थतः पुरुषेण कर्तव्यं यदुतानयोः प्रथमद्वितीययोः कुटुम्बकयोर्गुणदोषविशेषपरिज्ञानमिति। तथास्माभिरपि जीवानां धर्मकथाभिरेतावन्मात्रमेव संपादनीयं। केवलमेते जीवाः स्वयोग्यतामन्तरेण

नानयोर्विशेषं कथंचिदपि ज्ञापयितुं शक्यन्ते। तेनायोग्येषु वयमपि गजनिमीलिकां कुर्मः। यदि पुनः सर्वेऽपि जीवा अनयोः कुटुम्बकयोर्गुणदोषविशेषमवगच्छेयुस्तदादित एव संसारोच्छेदः स्यात्। ततो निराकृत्येदं द्वितीयं कुटुम्बकं सर्वेऽपि जीवा मोक्षं गच्छेयुरिति। नृपतिराह। यद्येवमशक्यानुष्ठानं सर्वेषां जीवानामनयोर्गुणदोषविशेषज्ञापनं तत्किमनया चिन्तया। अस्माभिर्विज्ञातस्तावद्भगवत्पादप्रसादेनानयोः कुटुम्बकयोर्गुणदोषविशेषः। ततः सिद्धं नः समीहितं। यतः।

परोपकारः कर्तव्यः सत्यां शक्तौ मनीषिणा।
परोपकारासामर्थ्ये कुर्यात्स्वार्थे महादरम्॥

भगवानाह। न परिज्ञानमात्रं त्राणं। नृपतिराह। यदन्यदपि विधेयं तदादिशन्तु भगवन्तः। भगवतोक्तं। अन्यदत्र विधेयं श्रद्धानमनुष्ठानं च। तच्चास्त्येव भवतः श्रद्धानं अनुष्ठानं च। पुनर्यदि शक्नोषि ततः सिध्यत्येव समीहितं नात्र सन्देहः। केवलं तच्चातिनिर्घृणं कर्म समाचरणीयं। नृपतिराह। भदन्त कीदृशं तत्कर्म। भगवानाह। यदेते साधवः सततमनुशीलयन्ति। नृपतिराह। यदनुशीलयन्त्येते तच्छ्रोतुमिच्छामि। भगवतोक्तं। आकर्णय।

अनादिस्नेहसंबद्धं द्वितीयं यत्कुटुम्बकम्।
योधयन्ति तदाद्येन घोरचित्ता दिवानिशम्॥

तथाहि।

निर्घृणा यत एवेदमाविर्भूतं कुटुम्बकम्।

तं घातयन्ति ज्ञानेन महामोहपितामहम् ॥
यस्तन्त्रकः समस्तस्य कुटुम्बस्य महाबलः ।
रागं वैराग्ययन्त्रेण तमेते चूर्णयन्त्यलम् ॥
अन्यच्च निरनुक्रोशा रागस्यैव सहोदरम् ।
द्वेषं मैत्रीशरेणोच्चैरेते निघ्नन्ति साधवः ॥
क्षमाक्रकचपाटेन पाटयन्ति सुदारुणाः ।
एते भोः साधवः क्रोधं रटन्तं स्निग्धबान्धवम् ॥
क्रोधस्य भ्रातरं मानं तथैते द्वेषनन्दनम् ।
हत्वा मार्दवखड्गेन चालयन्त्यपि नो करौ ॥
मायामार्जवदण्डेन दलयन्ति तपस्विनीम् ।
लोभं मुक्तिकुठारेण रौद्राञ्छिन्दन्ति खण्डशः ॥
तथैते मुनयो भूप स्नेहाबन्धपरायणम् ।
कामं निष्पीड्य हस्तेन मर्दयन्तीव मत्कुणम् ॥
दहन्ति शोकसम्बन्धं तीव्रेण ध्यानवह्निना ।
भयं भिन्दन्ति निर्भीका धैर्यबाणेन वत्सलम् ॥
हास्यं रतिर्जुगुप्सा च तथारतिः पितृष्वसा ।
विवेकशाला राजेन्द्र साधुभिर्दारिता पुरा ॥
अन्यच्च भ्रातृभाण्डानि पञ्चाचाणि सुनिर्घृणाः ।
सन्तोषमुद्गरेणोच्चैर्दलयन्तीह साधवः ॥
एवं ये ये भवन्त्यत्र कुटुम्बे स्निग्धबान्धवाः ।
तांस्तान्निपातयन्त्येते ज्ञाताज्ञातान् सुनिर्दयाः ॥
वर्धयन्ति यत्नं नित्यं प्रथमे च कुटुम्बके ।

सर्वेषां स्निग्धबन्धूनामेते राजेन्द्र साधवः ॥
पुष्टिं गतेन तेनोच्चैर्निहतं भग्नपौरुषम् ।
अमीषां बाधकं नैव तद्द्वितीयं कुटुम्बकम् ॥
अन्यच्च पोषकं ज्ञात्वा द्वितीयस्य तृतीयकम् ।
राजन्नेतैः परित्यक्तं सर्वथैव कुटुम्बकम् ॥
यावत्तृतीयं न त्यक्तं तावज्जेतुं न शक्यते ।
द्वितीयमपि कार्त्स्न्येन पुरुषेण कुटुम्बकम् ॥
अतो यद्यस्ति ते वाञ्छा भूप संसारमोचने ।
ततोऽतिनिर्घृणं कर्म मयोक्तमिदमाचर ॥
केवलं सम्यगालोच्यं मध्यस्थेनान्तरात्मना ।
किं शक्येत मया कर्तुं किं वा नेदमिति त्वया ॥
एतेऽतिनिर्घृणाः कर्म कथंचिदिदमीदृशम् ।
कुर्वन्त्यभ्यासयोगेन नृशंसा भूप साधवः ॥
अन्येन पुनरीदृक्षं कर्म बन्धुदयालुना ।
चिन्तयितुमपि नो शक्यं करणं दूरतः स्थितम् ॥
किं तु ।
योऽयं त्यागस्तृतीयस्य द्वितीयस्य च घातनम् ।
कुटुम्बकस्य राजेन्द्र प्रथमस्य च पोषणम् ॥
एतत्त्रयं परिज्ञाय कृत्वा श्रद्धानमञ्जसा ।
अनुष्ठाय च वीर्येण भूयांसो मुनिपुङ्गवाः ॥
भवप्रपञ्चान्निर्मुक्ताः सर्वद्वन्द्वविवर्जिताः ।
स्थित्वा स्वाभाविके रूपे मोदन्ते मोक्षवर्तिनः ॥

तदिदं दुष्करं कर्म किं तु पर्यन्तसुन्दरम्।
एवं व्यवस्थिते भूप कुरुष्व यदि रोचते॥

नृपतिराह।

शिष्टं भगवता पूर्वं कुटुम्बद्वयमादिमम्।
अविच्छिन्नं प्रवाहेण सदानादिभवोदधौ॥
तृतीयं पुनरुद्दिष्टं विनाशोत्पत्तिधर्मकम्।
तत्किं भवे भवे नाथ संभवत्यपरापरम्॥
सूरिराह महाराज संभवत्यपरापरम्।
भवे भवेऽत्र जन्तूनां तत्तृतीयं कुटुम्बकम्॥
राजाह नाथ यद्येवं ततोऽनादिभवार्णवे।
अनन्तानि कुटुम्बानि त्यक्तपूर्वाणि देहिभिः॥
सूरिराह महाराज सत्यमेतन्न संशयः।
एते हि पथिकप्रायाः सर्वे जीवास्तपस्विनः॥

ततश्च।

अन्यान्यानि कुटुम्बानि मुञ्चन्तो वासकेष्विव।
अपरापरदेहेषु संचरन्ति पुनः पुनः॥
राजाह नाथ यद्येवं ततोऽत्रापि भवे नृणाम्।
कुटुम्बे स्नेहसंबन्धो महामोहविजृम्भितम्॥
सूरिराह महाराज सम्यग्ज्ञातमिदं त्वया।
महामोहं विना को वा कुर्यादेनं सकर्णकः॥
राजाह यो न शक्नोति कर्तुं नाथ निवर्हणम्।
द्वितीयस्य कुटुम्बस्य कथंचिच्छक्तिविभ्रमात्॥

तृतीयस्य परित्यागात्तस्य किं जायते फलम् ।
यथोक्तं यदि वा नेति ममेदं प्रविवेचय ॥
सूरिराह महाराज यो न हन्ति द्वितीयकम् ।
तृतीयत्यजनं तस्य नूनमात्मविडम्बनम् ॥
तृतीयं हि परित्यज्य यदि हन्यान्निराकुलः ।
द्वितीयमेवं तत्त्यागः सफलो विफलोऽन्यथा ॥

नृपतिनाभिहितम् । भदन्त यद्येवं ततः ।

भवप्रपञ्चं विज्ञाय महाघोरं सुदुस्तरम् ।
अवाप्य मानुषं जन्म संसारेऽत्यन्तदुर्लभम् ॥
अनन्तानन्दसंपूर्णं मोक्षं विज्ञाय तत्त्वतः ।
तस्य कारणभूतं च बुद्ध्वा जैनेन्द्रशासनम् ॥
युष्मादृशेषु नाथेषु प्राप्तेषु हितकारिषु ।
कुटुम्बद्वयरूपे च विज्ञाते परमार्थतः ॥
को नामाद्यकुटुम्बस्य पुरुषो हितकामुकः ।
कुर्याच्च पोषणं नाथ बन्धुभूतस्य तत्त्वतः ॥
विघ्नं सर्वसमृद्धीनां सर्वव्यसनकारणम् ।
द्वितीयं वा न को हन्ति शत्रुभूतं कुटुम्बकम् ॥
येनात्यक्तेन दुःखौघस्त्यक्तेन परमं सुखम् ।
को न त्यजति तन्नाथ तृतीयं वा कुटुम्बकम् ॥
सूरिराह महाराज ज्ञाततत्त्वेन जन्तुना ।
इदमेवात्र कर्तव्यं चयं संसारभीरुणा ॥
राजाहाज्ञाततत्त्वानां नाथ मौनीन्द्रशासने ।

किं विद्यतेऽधिकारोऽत्र नेति नेति गुरोर्वचः॥

राज्ञा चिन्तितम्।

अये विज्ञाततत्त्वोऽहं श्रद्धावासितमानसः।
ततोऽस्ति मेऽधिकारोऽत्र गुरूक्ते कर्मणि ध्रुवम्॥
ततो राजा समुद्भूतवीर्योल्लासो यतीश्वरम्।
प्रणम्य पादयोरेवं स प्राह विहिताञ्जलिः॥
यदादिष्टं भदन्तेन किल कर्मातिनिर्घृणम्।
तदहं कर्तुमिच्छामि नाथ युष्मदनुज्ञया॥
सूरिणोक्तं महावीर्य युक्तमेतद्भवादृशाम्।
अनुज्ञातं मयापीदं ज्ञातं तत्त्वं त्वयाधुना॥

ततः संभ्रमेण नरपतिना विलोकितं पार्श्ववर्तिनो विमलमतेर्मन्त्रिणो वदनं। आदिशतु देव इति ब्रुवाणोऽसौ स्थितः प्रह्वतरः। नृपतिनाभिहितं। आर्य त्यजनीयो मया राज्यस्वजनदेहादिसङ्गः निहन्तव्या भगवदादेशेन रागादयः पोषणीयान्यहर्निशं ज्ञानादीनि ग्रहीतव्या भागवती दीक्षा। ततो यदस्य कालस्योचितं तत्तूर्णं कुरुष्वेति। विमलमतिराह। यदाज्ञापयति देवः। किं तु न मयैव केवलेनास्य कालस्योचितं विधेयं किं तर्हि यान्येतान्यन्तःपुराणि ये चैते सामन्ता यश्चान्योऽपि राजलोको या चेयं समस्तापि परिषत् तैः सर्वैरेवास्य कालस्योचितं कर्तव्यं। राज्ञा चिन्तितं। अये मयायमादिष्टः किल मम दीक्षाग्रहणकाले यदुचितं जिनस्नपनपूजादानमहोत्सवादिकं तत् कुरुष्वेति। तदयं किमेवमुल्लपति। अहो गम्भीरः कश्चिदभिप्रायः।

ततोऽभिहितमनेन। आर्य त्वमेवात्र सर्वाधिकारी चमः सर्वेषामुचितकर्तव्यानां। तत्किमेतैरपरमुचितं कर्तव्यं। विमलमतिराह। देव यद्देवपादैः कर्तुमारब्धं तदस्माकमेतेषां च सर्वेषामस्य कालस्योचितं कर्तव्यं नापरं। यतः समान एवायं न्यायः सर्वेषां वर्तते। निवेदितान्येव हि भगवता सर्वेषामेव जीवानामेकैकस्य त्रीणि त्रीणि कुटुम्बकानि। तस्मादेषामयस्य कालस्येदमेवोचितं। यदुत प्रथमकुटुम्बकं पोष्यते द्वितीयं हन्यते तृतीयं परित्यज्यत इति। नृपतिनाभिहितं। आर्यातिसुन्दरमिदं यद्येतेऽपि प्रतिपद्यन्ते। विमलमतिराह। देव पथ्यमिदमत्यन्तमेतेषां। किमत्र प्रतिपत्तव्यं॥ ततस्तदाकर्ण्य तत्र परिषदि जीवा बलादेषोऽस्मान् प्रव्राजयतीति भावनया भयोत्कर्षेण कम्पिताः कातराः प्रदिष्टा गुरुकर्मकाः प्रपलायिता नीचा विक्लीभूता विषयगृध्नवः प्रखिन्नाः कुटुम्बादिप्रतिबद्धबुद्धयः प्रह्लादिता लघुकर्मका अभ्युपगतवन्तस्तद्वचनं धीरचित्ता इति। सत्वैर्लघुकर्मभिर्धीरचित्तैरभिहितं। यदाज्ञापयति देवस्तदेव क्रियते। कः सकर्णकः सत्यां समग्रसामग्र्यामेवंविधमार्गाद्भ्रश्यतीति। तदाकर्ण्य हृष्टो राजा। गताः सर्वेऽपि अभ्यर्णवर्तिनि प्रमोदवर्धने चैत्यभवने। स्नापितानि भुवननाथस्य भगवतो बिम्बानि। विरचिता मनोहारिणी पूजा। प्रवर्तितानि महादानानि कारितं बन्धनमोचनादिकं समस्तमुचितकरणीयं। समाहूतः श्रीधराभिधानो मगराग्निजतनयः। दत्तं तस्मै राज्यं नरपतिना। प्रव्राजिताः प्रवचनोक्तेन विधिना सर्वेऽप्युपस्थितलोका भगवता। विहिता भवप्रपञ्चनिर्वेदजननी

समाकृष्टं मण्डलाग्रं। दत्तौ समकमेव द्वाभ्यामपि प्रहारौ। दारिते शरीरे॥

अत्रान्तरे मम तस्य च जीर्णा सा एकभववेद्या गुडिका। ततो वितीर्णे अपरे गुडिके द्वयोरपि भवितव्यतया। इतश्चास्ति पापिष्ठनिवासा नाम नगरी। तस्यामुपर्युपरि सप्त पाटका भवन्ति। तेषु च पापिष्ठाभिधाना एव कुलपुत्रका वसन्ति। ततः षष्ठे तमाभिधाने पाटके नीतौ द्वावपि गुडिकाप्रभावेण भवितव्यतया

स्थापितौ तादृशकुलपुत्रकरूपतया। प्रवृद्धः सोऽधिकतरमावयो-
र्वैरानुबन्धः। स्थितौ परस्परघातमनेकयातनाभिर्विदधानौ द्वाविं-
शति सागरोपमानि। अवगाहितोऽनन्तमहादुःखसागरः। ततस्तस्याः
पर्यन्ते गुडिकादानेनैवानीतौ पश्चाचनिवासनगरे द्वावपि भवितव्य-
तया विहितौ गर्भजसर्परूपौ। प्रादुर्भूतः पूर्ववेधेन परस्परं पुनः
क्रोधावन्धः। युध्यमानयोः संपन्नं गुडिकाजरणम्। पुनः प्रापितौ
तेनैव प्रयोगेण तस्यामेव पापिष्ठनिवासायां नगर्यां धूमप्रभाभि-
धाने पञ्चमे पाटके भवितव्यतया। तत्रापि परस्परं निर्दलयतो-
र्गतानि सप्तदश सागरोपमानि। अनुभूतान्यतितीव्रदुःखानि॥
ततः पुनरानीय पश्चाचनिवासनगरे विहितौ द्वावपि सिंहरूपौ।
तत्रापि तदवस्थितो वैरावन्धः। ततश्चान्योन्यं प्रहरतोरपनीय
तद्रूपं विहितं तस्यामेव पुर्यां पङ्कप्रभाख्ये चतुर्थपाटके पापिष्ठ-
रूपं भवितव्यतया। तद्गतयोः पुनरप्यावयोरनुवर्तते स्थायी
रोषोत्कर्षः। लङ्घितानि तत्रापीतरेतरं निघ्नतोर्दश सागरोपमानि।
सोढानि वाग्गोचरातीतानि दुःखानि॥ ततः पुनरानीय जनितौ
द्वावपि श्येनरूपौ। संलग्नमुल्लसितवैश्वानरयोरायोधनं। ततश्चा-
वयित्वा तद्रूपं पुनर्नीतौ तस्यामेव पुरि वालुकाप्रभानाम्नि तृतीय-
पाटके गुडिकाप्रयुक्तिवशेनैव भवितव्यतया। तत्रापि परस्परं
शरीरचूर्णनं कुर्वतोः क्षेत्रानुभावजनितानि परमाधार्मिकासुरो-
दीरितानि चानन्तदुःखानि सततमनुभवतोरतिक्रान्तानि सप्त
सागरोपमानि। तदन्ते पुनरानीतौ पश्चाचनिवासनगरे दर्शितौ
च नकुलरूपौ भवितव्यतया। न त्रुटितस्तत्रापि परस्परं मत्सर-

प्रकर्षः। प्रहरतोश्चान्योन्यं विदीर्णे द्वयोरपि शरीरे। जीर्णे प्राचीनगुडिके। वितीर्णे पुनरपरे। नीतौ पुनस्तस्यामेव नगर्यां शर्कराप्रभाभिधाने द्वितीयपाटके। ततो विहितबीभत्सरूपयोरन्योन्यं पिषतोः परमाधार्मिककदर्थनां चेत्रजनितसन्तापं च वेदयतोरतीतानि तत्रापि त्रीणि सागरोपमानि। एवं पापिष्ठनिवासनगर्याः पश्चाचनिवासनगरे ततोऽपि पुनस्तस्यां गत्यागमनं कुर्वता तेन च धराधरेण सार्धं वैरं खेटयता भद्रेऽगृहीतसङ्केते विडम्बितानि मया भवितव्यताप्रेरितेन भूयांसि रूपाणि। ततः पुनः कुतूहलवशेनैव तया निजभार्यया जीर्णायां तस्यानेकभववेद्याभिधानायां कर्मपरिणाममहाराजसमर्पितायां गुडिकायां भूयो भूयोऽपरां गुडिकां योजयन्त्या तदसंव्यवहारनगरं विहायापरेषु प्रायेण सर्वस्थानेषु तिलपीडकन्यायेन भ्रमितोऽहमनन्तकालमिति॥

एवं वदति संसारिजीवे प्रज्ञाविशालया चिन्तितं। अहो रौद्ररूपोऽसौ क्रोधः। दारुणतरा हिंसा। तथाहि। तदशवर्तिनानेन संसारिजीवेन घोरसंसारसागरं कथंचिदतिलंघ्य प्राप्तेऽपि मनुष्यभवे विहितं तत्तादृशमतिरौद्रं कर्म। न प्रतिपन्नं भागवतं वचनं हारिता मनुष्यरूपता निर्वर्तिता वैरपरंपरा उपार्जिता संसारसागरेऽनन्तरूपा विडम्बना स्वीकृतो महादुःखसन्तानः। तदिदमनुभवागमसिद्धमनुभवन्तोऽप्येते मनुष्यभावापन्नाः प्राणिनो न लक्षयन्तीवानयोः स्वरूपं आत्मवैरिण इव समाचरन्ति तमेव क्रोधं तामेव हिंसां सततमनुवर्तन्ते। तदेतेऽपि वराका

लप्स्यन्ते नूनमेवंविधामनर्थपरंपरामित्येषा चिन्ता ममान्तःकरणमाकुलयति॥ संसारिजीवः प्राह। ततः पुनरन्यदाहमगृहीतसङ्केते नीतः श्वेतपुरे भवितव्यतया विहितस्वाभीररूपः। तद्रूपतया वर्तमानस्य मे तिरोभूतोऽसौ वैश्वानरः। जातो मनागहं शान्तरूपः। प्रवृत्ता मे यदृच्छया दानबुद्धिः। न चाभ्यस्तं किंचिद्विशिष्टं शीलम्। न चानुष्ठितः कश्चित्संयमविशेषः। केवलं कथंचिद्घर्षणघूर्णनन्यायेन संपन्नोऽहं तदा मध्यमगुणः। ततस्तथाभूतं मामुपलभ्य जाता मयि प्रसन्नहृदया भवितव्यता। ततश्चाविर्भावितोऽनया पुनरपि सहचरो मे पुण्योदयः। ततोऽभिहितमनया। आर्यपुत्र गन्तव्यं भवता सिद्धार्थपुरे स्थातव्यं तत्र यथासुखासिकया। अयं च तवानुचरः पुण्योदयो भविष्यति। मयाभिहितं। यदाज्ञापयति देवी। ततो जीर्णायां प्राचीनगुडिकायां दत्ता पुनरेकभववेद्या सा ममापरा गुडिका भवितव्यतयेति।

भो भव्याः प्रविहाय मोहललितं युष्माभिराकर्ण्यता-
मेकान्तेन हितं मदीयवचनं कृत्वा विशुद्धं मनः।
राधावेधसमं कथंचिदतुलं लब्धापि मानुष्यकं
हिंसाक्रोधवशानुगैरिदमहो जीवैः पुरा हारितम्॥

अनादिसंसारमहाप्रपञ्चे
क्वचित्पुनः स्पर्शवशेन मूढैः।
अनन्तवारान् परमार्थशून्यै-
र्विनाशितं मानुषजन्म जीवैः॥

एतन्निवेदितमिह प्रकटं ततो भो-
स्तां स्पर्शकोपपरतापमतिं विहाय ।
शान्ताः कुरुध्वमधुना कुशलानुबन्ध-
मङ्गाय लङ्घयथ येन भवप्रपञ्चम् ॥

इत्युपमितभवप्रपञ्चायां कथायां क्रोधहिंसा-
स्पर्शनेन्द्रियविपाकवर्णनस्तृतीयः
प्रस्तावः ॥ ग्रंथाग्रं ८००० ॥

---

मयैव शैलराजेन परां वृद्धिमहं गतः॥
अथातीतेषु वर्षेषु पञ्चषेषु ततो मया।
स व्यक्तं रममाणेन शैलराजो निरीक्षितः॥
अनादिस्नेहमोहेन तं दृष्ट्वा मम मानसे।
या प्रीतिरासीत्साख्यातुं वचनेन न पार्यते॥
विलोकयन्तं मां वीक्ष्य स्निग्धदृष्ट्या स दारकः।
शठात्मा चिन्तयत्येवं लब्धलक्ष्यः स्वचेतसा॥
अये मामेष राजेन्द्रतनयः स्निग्धचक्षुषा।
विलोकयति तन्नूनं ममायं वर्तते वशे॥
ततो विस्मेरिताक्षोऽसौ किलाहं स्नेहनिर्भरः।
दर्शयन्निति मे देहं समालिङ्गति मायया॥
ततो मे मोहदोषेण स्फुरितं निजमानसे।
अहो भावज्ञताप्यस्य त्रैलोक्यमतिवर्तते॥
तदिदानीं मया नैष स्निग्धो बन्धुर्विचक्षणः।
मोक्तव्यः क्षणमप्येवं कृतश्चित्ते विनिश्चयः॥
ततस्तेन सहोद्यानकाननेषु दिने दिने।
क्रीडतः सततं याति कालो मे हृष्टचेतसः॥
न लक्षितं मया मोहविक्लवीभूतचेतसा।
यथैष शैलराजो मे परमार्थेन वैरिकः॥
ततो दिनेषु गच्छत्सु मैत्री तेन विवर्धते।
तत्प्रभावात्प्रवर्धन्ते वितर्का मम मानसे॥
यथा ममोत्तमा जातिः कुलं सर्वजनाधिकम्।

बलं भुवनविख्यातं रूपं भुवनभूषणम् ॥
सौभाग्यं जगदानन्दमैश्वर्यं भुवनातिगम् ।
श्रुतं पूर्वभवाभ्यस्तं परिस्फुरति सेऽग्रतः ॥
मघवापि पदं स्वीयं यद्यहं प्रार्थये ततः ।
ददात्येव न कार्यं मे लाभशक्तिरियं मम ॥
ये चान्येऽपि तपोवीर्यधैर्यसत्त्वादयो गुणाः ।
ते मय्येव वसन्त्युच्चैर्विमुच्य भुवनत्रयम् ॥

यदि वा ।

यस्येदृशेन मित्रेण संजातो मम मीलकः ।
तस्य को वर्णयेल्लोके गुणसम्भारगौरवम् ॥

तथाहि ।

पुरुषस्य भवेत्तावत्सर्वस्यैकमिहाननम् ।
स्वयं वक्त्राष्टकेनैव जयत्येव परं जनम् ॥
तदेष शैलराजो मे यस्य प्राप्तो वयस्यताम् ।
तस्य नास्ति जगत्यत्र यन्न संपद्यतेऽञ्जसा ॥
ततोऽत्रलिप्तचित्तोऽहं तां विकल्पपरंपराम् ।
वर्धयन्नात्मनः सर्वं न्यूनं मन्ये तदा जनम् ॥
ऊर्ध्वीकृतनिजग्रीवो नक्षत्राणि निभालयन् ।
अग्रतोऽपि न पश्यामि मत्तवद्गन्धवारणः ॥
आपूर्णो भूरिवातेन विततात्मा यथा दृतिः ।
ततोऽहं विचरामि स्म निःसारो मदविह्वलः ॥
चिन्तयामि न मे वन्द्यः कश्चिदस्ति जगत्त्रये ।

यत एतद्गुणैः सर्वमधस्तान्मम वर्तते ॥
को ममान्यो गुरुर्नूनमहमेव गुणैर्गुरुः ।
क एते देवसङ्घाता ये मत्तोऽपि गुणाधिकाः ॥
ततोऽत्यतीतसङ्केते तदाहं गर्वनिर्भरः ।
शैलस्तम्भसमो नैव कस्यचित्प्रणतिं गतः ॥

किं च ।

प्रणताशेषसामन्तकिरीटांशुविराजितम् ।
न नतं जातुचिद्भद्रे तातीयं पादपङ्कजम् ॥
अशेषजनवन्द्यापि स्नेहनिर्भरमानसा ।
कदाचिदपि नैवाम्बा मया नूनं नमस्कृता ॥
ये केचिल्लौकिका देवा याश्चान्याः कुलदेवताः ।
न ताः प्रणामकामेन चक्षुषापि मयेक्षिताः ॥
ततो मां तादृशं वीक्ष्य शैलराजसमन्वितम् ।
वर्धमानं स राजेन्द्रो मनसा पर्यचिन्तयत् ॥
अहो मदीयपुत्रोऽयं गाढं मानधनेश्वरः ।
तदस्य लोको यद्याज्ञां लङ्घयेत कदाचन ॥
ततोऽयं चित्तनिर्वेदान्मन्यमानोऽवधीरणाम् ।
मां विहाय क्वचिद्गच्छेत्तदिदं नैव सुन्दरम् ॥
ज्ञापयित्वा नरेन्द्रादीन् कुमारचरितं ततः ।
आज्ञाविधेयानस्योच्चैः करोमि सकलानपि ॥
एवं विचिन्त्य मे तातः स्नेहनिर्भरमानसः ।
समस्तं तत्करोत्येव यत्स्वयं परिचिन्तितम् ॥

अथ तातान्नया सर्वे नरेन्द्रा नतमस्तकाः ।
बालस्यापि ममात्यन्तं किङ्करत्वमुपागताः ॥
प्रधानकुलजाता ये ये च विक्रमशालिनः ।
तेऽपि मां देव देवेति ब्रुवाणाः पर्युपासते ॥
यदहं वच्मि तत्सर्वो राजलोकः कृतादरः ।
जय देवेति लपन्मुच्चैः शिरसा प्रतिपद्यते ॥
किं चात्र बहुनोक्तेन ततोऽम्बा च सवान्धवा ।
वीक्षते सर्वकार्येभ्योऽधिकं मां परमात्मनः ॥
स च पुण्योदयस्तत्र माहात्म्ये मम कारणम् ।
तथापि मोहदोषेण मयेदं परिचिन्तितम् ॥
अयं ममैष यो जातो देवानामपि दुर्लभः ।
सर्वस्यास्य प्रतापस्य शैलराजो विधायकः ॥
ततः संतुष्टचित्तेन शैलराजो मयान्यदा ।
प्रोक्तो विश्रब्धजल्पेन स्नेहनिर्भरचेतसा ॥
वयस्य योऽयं संपन्नो लोकमध्येऽतिसुन्दरः ।
मम ख्यातिविशेषोऽयं प्रतापो हन्त तावकः ॥

ततश्च ।

मदीयवचसा तुष्टः शैलराजः स्वमानसे ।
वष्टतासुररीकुर्वन्निदं वचनमब्रवीत् ॥
कुमार परमार्थोऽयं कथ्यते तव साम्प्रतम् ।
यदेवंविधजल्पस्य कुमारास्तीह कारणम् ॥
ये दुर्जना भवन्त्यत्र गुणपूर्णं परं जनम् ।

स्वाभिप्रायानुमानेन मन्यन्ते दोषपुञ्जकम् ॥
ये सज्जनाः पुनर्धन्यास्ते लोकं दोषपूरितम् ।
स्वाभिसन्धिविशुद्ध्यैव लक्षयन्ति गुणालयम् ॥

एवं च स्थिते ।

यद्भासते गुणित्वेन गुणहीनोऽप्ययं जनः ।
कुमार तावके चित्ते सौजन्यं तत्र कारणम् ॥
प्रतापस्तावकीनोऽयं समस्तोऽपि सुनिश्चितम् ।
भावत्कवीर्यविख्याताः के वयं परमार्थतः ॥
तदिदं शैलराजीयं वचनं सुमनोहरम् ।
आकर्ण्याहं तदा भद्रे परं स्नेहरसं गतः ॥

चिन्तितं च मया ।

अहो मय्यनुरागोऽस्य अहो गम्भीरचित्तता ।
अहो वचनविन्यासस्तथाहो भावसारता ॥

ततो मयाभिहितं ।

वयस्य नेदृशं वाच्यमुपचारपरं वचः ।
ममायतो यतो ज्ञातं माहात्म्यं तावकं मया ।
ततो हर्षवशात्तेन शैलराजेन जल्पितम् ।
प्रसादपरमे नाथे भृत्यानां किं न सुन्दरम् ॥

अन्यच्च ।

यदि सम्भावना जाता भवतां मादृशे जने ।
ततो मे परमं गुह्यं भवद्भिरनुमन्यताम् ॥
विद्यते मम मदीयं चन्दनस्यावलेपनम् ।

तन्निजे हृदये देयं कुमारेण प्रतिचणम् ॥

यथाभिहितं। कुतस्तद्वाप्तं भवता किंनामकं को वा तस्य हृदयावलेपनस्य प्रभाव इति श्रोतुमिच्छामि। शैलराजेनाभिहितं। कुमार न कुतश्चिदपि तदवाप्तं मया किं तर्हि स्वकीयेनैव वीर्येण जनितं। नामतः पुनः स्तब्धचित्तं तदभिधीयते। प्रभावं तस्यानुभवद्वारेणैव विज्ञास्यति कुमारः। किं तेनावेदितेन। यथाभिहितं। यदयस्यो जानीते। ततः समर्पितं ममान्यदा शैलराजेन तदात्मीयं हृदयावलेपनं। विलिप्तं मया हृदयं। जातोऽहं गाढतरमुन्नमितशूनतस्काराकारधारितया नमनरहितः। ततस्तथाभूतं मामवलोक्य सुतरां प्रणतिप्रवणाः संपन्नाः सामन्तमहत्तमादयः। तातोऽपि सप्रणामं मामालापयति स्म। तथाम्बापि स्वामिनमिव मां विज्ञपयति स्म। ततः संजातो मे हृदयावलेपनप्रभावे सम्प्रत्ययः। संपन्ना स्थिरतरा शैलराजे परमबन्धुबुद्धिरिति ॥ इतश्चान्यदा गतोऽहमन्तरङ्गे क्लिष्टमानसाभिधाने नगरे। तच्च कीदृशं।

आवासः सर्वदुःखानां नष्टधर्मैर्निषेवितम्।
कारणं सर्वपापानां दुर्गतिद्वारमञ्जसा ॥

तच च नगरे दुष्टाशयो नाम राजा। स च कीदृशः।

उत्पत्तिभूमिर्दोषाणामाकरः क्लिष्टकर्मणाम्।
सद्विवेकनरेन्द्रस्य महारिः स नराधिपः ॥

तस्य च राज्ञो जघन्यता नाम देवी। सा च कीदृशी।

नराधमानां साभीष्टा विदद्भिः परिनिन्दिता।
प्रवर्तिका च सा देवी सर्वेषां निन्द्यकर्मणाम् ॥

तयोश्च अघन्यतादुष्टाशययोर्देवीनृपयोरत्यन्तमभीष्टोऽस्ति मृषा-
वादो नाम तनयः। स च कीदृशः।

समस्तभूतसङ्घस्य विश्रम्भच्छेदकारकः।
निःशेषदोषपुञ्जत्वाद्गर्हितश्च विचक्षणैः॥
शाठ्यपैशुन्यदौर्जन्यपरद्रोहादितस्कराः।
तं राजपुत्रं सेवन्ते मदनुग्रहकाम्यया॥
स्नेहो मैत्री प्रतिज्ञा च तथा सम्प्रत्ययश्च यः।
एतेषां शिष्टलोकानां राजसूनुरसौ रिपुः॥
पितासौ व्रतलोपस्य मर्यादाया महारिपुः।
अयशोवादवृक्षस्य महास्फालनतत्परः॥
ये केचिन्नरकं यान्ति तस्य निर्देशकारिणः।
स एव प्रगुणं मार्गं तेषां दर्शयितुं क्षमः॥

ततो दृष्टोऽसौ मया दुष्टाशयो नरेन्द्रः। तत्पार्श्ववर्तिनी च विलोकिता सा अघन्यता महादेवी। तयोश्चाग्रतो वर्तमानो निर्वर्णितो मया तयोरेव चरणशुश्रूषाकरणपरायणः स मृषावादो राजदारकः। ततो विहितप्रतिपत्तिः स्थितस्तत्राहं कियन्तमपि कालं। महामोहविमोहितमानसेन च मया न लक्षितं तदा तेषां नगरराजेन्द्रमहादेवीदारकाणां सम्बन्धि स्वरूपं। गृहीतोऽपि परमबन्धुबुद्ध्या विशेषतः प्रतिपन्नो वयस्यतया मृषावादः। प्राप्तः प्रकर्षगतिं तेन सह प्रेमाबन्धः। दृष्टोऽसौ शरीरादभिन्नरूपतया। ततस्तत्रानीतः स मया मृषावादः स्वस्थाने। ततस्तेन सह ललमानस्य मे समुत्पद्यन्ते स्म मनसीदृशा वितर्काः। यदुत।

नूनं विदितसारोऽहमहमेव विचक्षणः।
शेषः सर्वः पशुप्रायो मुग्धबुद्धिरयं जनः॥
यस्य मे सर्वसम्पत्तिकारको मित्रतां गतः।
सर्वदायं मृषावादः स्नेहेन हृदि वर्तते॥
असद्भूतपदार्थेऽपि सद्बुद्धिं जनयाम्यहम्।
सद्भूतमप्यसद्भूतं दर्शयामि सुहृद्बलात्॥
हतं प्रत्यक्षमप्युच्चैर्महासाहसमात्मना।
वरमित्रप्रसादेन लगयामि परे जने॥
चौर्यं वा पारदार्यं वा कुर्वतोऽपि यथेच्छया।
कुतोऽपराधगन्धोऽपि मम यावदयं सुहृत्॥
स्वार्थसिद्धिः कुतस्तेषां येषामेष न विद्यते।
अतो मूर्खा अमी लोकाः स्वार्थभ्रंशो हि मूर्खता॥
विग्रहेऽपि कचित्सन्धिं सन्धावपि च विग्रहम्।
मृषावादप्रसादेन घटयामि यथेच्छया॥
यत्किंकिंचिच्चिन्तयाम्यत्र वस्तु लोकेऽतिदुर्लभम्।
वरमित्रप्रसादेन सर्वं संपद्यते मम॥
मया पुण्यैरवाप्तोऽयमयमेव च मे सुहृत्।
एष एव जगद्बन्धो यथेष्टफलदायकः॥
ततोऽदृष्टपीतसङ्केते मया मोहहतात्मना।
कुविकल्पैर्मनस्तत्र मृषावादे प्रतिष्ठितम्॥
तद्दोषेन च येऽनर्थाः संपद्यन्तेऽतिदारुणाः।
पुण्योदयप्रभावेण ते यान्ति विलयं तदा॥

अहं तु तन्न जाने स्म महामोहवशं गतः।
ततस्तच्च मृषावादे पश्यामि गुणमालिकाम्॥
एवं च वर्तमानस्य वयस्यद्वययोगतः।
कलाग्रहणकालो मे संप्राप्तः क्रमशोऽन्यदा॥
ततस्तातेन संपूज्य कलाचार्यं विधानतः।
तस्यार्पितोऽहं सङ्गत्या महानन्दपुरःसरम्॥
उक्तश्चाहं गुरुः पुत्र तवायं ज्ञानदायकः।
अतः पादौ प्रणम्यास्य शिष्यभावं समाचर॥
मयोक्तं तात मुग्धोऽसि यो मामेवं प्रभाषसे।
वराकः किं विजानीते नूनमेष ममाग्रतः॥
गुरुरन्यस्य लोकस्य स्यादेष न तु मादृशाम्।
अतो नाहं पताम्यस्य पादयोः शास्त्रकाम्यया॥

केवलम्।

भवतामनुरोधेन गृह्णामि सकलाः कलाः।
मदीयविनयो नूनमस्य स्यान्माहलोहितम्॥
ततस्तातेन स प्रोक्तः कलाचार्यो रहःस्थितः।
आर्य मामकपुत्रोऽयं गाढं मानधनेश्वरः॥
तदत्र भवता नास्य दृष्टाप्यविनयादिकम्।
चित्तोद्वेगो विधातव्यो ग्राहणीयश्च सत्कलाः॥
ततो विनयनस्य श्रुत्वा तातस्य जल्पितम्।
यदादिशति राजेन्द्र इत्याह स महामतिः॥
चिन्तितं च तदा तेन कलाचार्येण मानसे।

क्लिश्यत्येष यावच्छास्त्रस्य सद्भावं नावबुध्यते ॥
यावच्च केलिबहुलां बालतामनुवर्तते ।
अलीकगर्विताध्मातस्तावदेवं प्रभाषते ॥
यदा तु ज्ञातसद्भावः शास्त्रार्थानां भविष्यति ।
तदा मदं परित्यज्य स्वयं नम्रो भविष्यति ॥
एवं निश्चित्य हृदये कलाचार्यो महामतिः ।
ततः सर्वादरेणासौ प्रवृत्तो ग्राहणे मम ॥
इतश्चान्येऽपि तत्पार्श्वे बहवो राजदारकाः ।
प्रशान्ता विनयोद्युक्ता गृह्णन्ति सकलाः कलाः ॥
यथा यथा च मे नित्यमादरं कुरुते गुरुः ।
तथा तथा वयस्यो मे शैलराजो विवर्धते ॥
ततश्च तद्वशेनाहमुपाध्यायं मदोद्धतः ।
जात्या श्रुतेन रूपेण हीलयामि चणे चणे ॥
ततश्च चिन्तितं महामतिना । अये ।
ग्रस्तस्य सन्निपातेन चीरान्नमिव सुन्दरम् ।
अपथ्योऽस्य वराकस्य कलाशास्त्रपरिश्रमः ॥
गाढं कर्षितदेहस्य यथान्नं भूरिभोजनम् ।
तथास्य मलतो यत्नः क्षययुं वर्धयत्यलम् ॥
ततो यद्यपि राजेन्द्रः पुत्रस्नेहपरायणः ।
उत्साहयति मां नित्यं गुणाधानार्थमस्य वै ॥
तथाप्यपात्रभूतोऽयं य एवं रिपुदारणः ।
तस्य त्यागः परं न्याय्यो ज्ञानदानं न युज्यते ॥

योहि दद्यादपात्राय सज्ज्ञानममृतोपमम्।
स हास्यः स्यात्सतां मध्ये भवेच्चानर्थभाजनम्॥
न चैष शक्यते कर्तुं नम्रो यत्नशतैरपि।
को हि खेदशतेनापि श्वपुच्छं नामयिष्यति॥

ततश्चैवं स्वचेतस्यवधार्य तेन महामतिना कलाचार्येण शिथिलितो ममोपरि कलाशास्त्रग्राहणानुबन्धः परित्यक्तमुपचारसंभाषणं दृष्टोऽहं धूलिरूपतया। तथापि तातलज्जया नासौ बहिर्मुखविकारमात्रमपि दर्शयति न च मनागपि मां परुषमाभाषते। इतश्च तेऽपि राजदारकाः शैलराजमृषावादनिरतं मामुपलभ्य विरक्ताश्चित्तेन। तथापि पुण्योदयेनाधिष्ठितं मां ते चिन्तयन्तोऽपि न कथंचिदभिभवितुं शक्नुवन्ति॥ इतश्च यथा यथा तौ शैलराजमृषावादौ वर्धेते तथा तथासौ मदीयवयस्यः पुण्योदयः क्षीयते। ततः कृशीभूते तस्मिन् पुण्योदये समुत्पन्ना मे गाढतरं गुरुपरिभवबुद्धिः। अन्यदा निर्गतो बहिः प्रयोजनेनोपाध्यायः। ततोऽधिष्ठितं मया तदीयं महार्हं वेत्रासनं। दृष्टोऽहमुपविष्टस्तत्र राजदारकैः। ततो लज्जितास्ते मदीयकर्मणा। लघुध्वनिना चोक्तमेतैः। हा हा कुमार न सुन्दरमिदं विहितं भवता। वन्दनीयमिदं गुरोरासनं। न युक्तं भवादृशामस्याक्रमणं। यतोऽस्मिन्नुपविशतां संपद्यते कुलकलङ्कः समुल्लसति अप्रशमयशःपटहः प्रवर्धते पापं संजायते चायुषः चरणमिति। मयाभिहितं। अरे बालिशा नाहं भवादृशां शिक्षणार्हः। गच्छत यूयमात्मीयं सप्तकुलं शिक्षयत। तदाकर्ण्य स्थितास्ते तूष्णींभावेन। ततः स्थित्वा तत्र वेत्रासने इहतीं वेलामुत्थितोऽहं।

यथेष्टचेष्टया समागतः कलोपाध्यायः। कथितं तस्मै राजदारकै-र्मदीयविलसितं। क्रुद्धः स्वचेतसा। पृष्टोऽहमनेन। ततः सासूयं मयाभिहितं। अहमेतत्करोमि। अहो ते शास्त्रकौशलं अहो ते पुरुषविशेषज्ञता अहो ते विचारितभाषिता अहो ते विमर्शपाटवं यस्त्वमेतेषां मत्सरिणामसत्यवादिनां वचनेन विप्रतारितो मामेव-माभाषसे। ततो विलक्षीभूतः कलोपाध्यायः। चिन्तितमनेन। न तावदेते राजदारका विपरीतं भाषन्ते। अयं तु स्वकर्म-पराधमेवमपलपति। तदेनं स्वयमुपलभ्य शिक्षयिष्यामि। अन्यदा प्रच्छन्नदेशस्थितेनावरचितोऽहं तेन महामतिना। दृष्टस्तत्र वेत्रासने सरभसमुपविष्टो ललमानः। ततः प्रकटीभूतोऽसौ दृष्टो मया। मुक्तं झगिति वेत्रासनं। महामतिनाभिहितं। इदानीं तर्हि भवतः किमुत्तरं। मयोक्तं। कीदृशे प्रश्ने। महामतिराह। तत्रैव पूर्वके। मयोक्तं। न जानाम्यहं कीदृशोऽसौ पूर्वकः प्रश्नः। महामतिराह। किमुपविष्टस्त्वमत्र वेत्रासने न वेति। ततो हा शान्तं पापमिति ब्रुवाणेन पिहितौ मया कर्णौ। पुनरभिहितं। पश्यत भो मत्सरविलसितं यदेते स्वयमकार्यं कृत्वा ममोपर्येवमा-रोपयन्ति। महामतिना चिन्तितं। अहो सेयं दृष्टेऽप्यनुपपन्नता नाम। अहो अस्य धार्ष्ट्यं अवेद्यकः खल्वयं। इयत्तातः परमसत्य-वचनस्य। राजदारकैरभिहितमेकान्ते विधाय कलाचार्यं। यदुता-द्रष्टव्यः खल्वयं पापः। तत्किमेनमस्माकं मध्ये धारयत यूयं। महामतिना चिन्तितं। सत्यमेते तपस्विनः प्रवदन्ति। नोचित-मेवायं रिपुदारणः सत्सङ्गमस्य। तथाहि।

लुब्धमर्थप्रदानेन क्रुद्धं मधुरभाषणैः।
मायाविनमविश्वासात् स्तब्धं विनयकर्मणा॥
चौरं रक्षणयत्नेन मद्बुद्ध्या पारदारिकम्।
वशीकुर्वन्ति विद्वांसः शेषदोषपरायणम्॥
न विद्यते पुनः कश्चिदुपायो भुवनत्रये।
असत्यवादिनः पुंसः कालदष्टः स उच्यते॥

यतः।

सर्वेऽपि ये जगत्यत्र व्यवहाराः शुभेतराः।
सत्ये प्रतिष्ठिता नेदं यस्यासौ नन्वलौकिकः॥
अतो विज्ञाय यत्नेन सत्यहीनं नराधमम्।
त्यजन्त्येव सुदूरेण प्रियसत्या महाधियः॥
ततोऽयं सत्यहीनत्वादस्माकं रिपुदारणः।
सम्यग्विज्ञातशीलानां न मध्ये स्थातुमर्हति॥

अथवा नास्य वराकस्य रिपुदारणस्यायं दोषो यतोऽयमनेन शैलराजेन प्रेर्यमाणस्तावत्सकलदुर्विनयमाचरति। तथानेन मृषावादेन प्रोत्साह्यमानः खल्वयमेवं भाषते। ततो यद्येतौ पापवयस्यौ परिहरति तदयं शिक्षयामि तावदेनं। ततः क्रुतोऽहमुपाध्यायके महामतिनाभिहितश्च। कुमार नेदृशानां स्थानमिह मदीयशालायां। अतः कदाचिदेतौ पापवयस्यौ परिहर यदि वा नागन्तव्यमिह कुमारेणेति। मयाभिहितं। त्वमात्मीयजनकाय स्वस्थानं प्रयच्छ। वयं तु त्वदीयस्थानेन त्वयापि च विनैव भलिष्यामहे। ततश्चैवंविधैस्तिरस्कृत्य परुषवचनैरुपाध्यायमुन्नामितया

कन्धरया गगनाभिमुखेन वदनेन विततीकृतेन वक्षःस्थलेनाविकटपादपातेन गतिमार्गेण विलिप्य तेन स्तब्धचित्तेन शैलराजीयविलेपनेनात्महृदयं निर्गतोऽहमुपाध्यायभवनात् । ततोऽभिहिता महामतिना राजदारकाः । अरे निर्गतस्तावदेष दुरात्मा रिपुदारणः । केवलं गरीयान्नरवाहननृपतेः पुत्रस्नेहः । स्नेहमूढाश्च प्राणिनो न पश्यन्ति वल्लभस्य दोषममूढं समारोपयन्त्यसन्तमपि गुणसङ्घातं कुर्वन्ति तदप्रियकारिणि जने न विचारयन्ति विप्रियकरणकारणं न लक्षयन्ति स्थानमानान्तरं कुर्वन्ति स्वाभिमतविप्रियकर्तुर्महापायं । तदेवं व्यवस्थिते भवद्भिर्मौनमवलम्बनीयं । यदि रिपुदारणनिर्गमनव्यतिकरं प्रक्ष्यति देवो नरवाहनस्ततोऽहमेव तं प्रत्याययिष्यामि । राजदारकैरभिहितं । यदाज्ञापयत्युपाध्यायः ॥

इतश्च ततो निर्गत्य गतोऽहं तातसमीपे । पृष्टस्तातेन । पुत्र किं वर्तते कलाग्रहणस्येति । ततः शैलराजीयहृदयावलेपनवशेन मृषावादावष्टम्भेन च मयाभिहितं । तात समाकर्णय ।

> पूर्वमेव ममाशेषं विज्ञानं हृदयस्थितम् ।
> अयं तावत्कयलो मे विशेषाधायकः परम् ॥

ततश्च

> लेख्ये चित्रे धनुर्वेदे नरादीनां च लक्षणे ।
> गान्धर्वे हस्तिशिक्षायां पत्रच्छेद्ये भवैद्यके ॥
> शब्दे प्रमाणे गणिते धातुवादे सकौतुके ।
> निमित्ते याश्च लोकेऽत्र कलाः काश्चित्सुनिर्मलाः ॥

तासु सर्वासु मे तात प्रावीण्यं वर्तते परम्।
आत्मतुल्यं न पश्यामि त्रैलोक्येऽप्यपरं नरम्॥
सुतस्नेहेन तच्छ्रुत्वा तातो हर्षमुपागतः।
चुम्बित्वा मूर्धदेशे मामिदं वचनमब्रवीत्॥
जात चारु कृतं चारु सुन्दरस्ते महोद्यमः।
किं त्वेकं मे कुमारेण वचनं श्रूयतामिति॥

मयाभिहितं। वदतु तातः। तातेनाभिहितं।

विद्यायां ध्यानयोगे च स्वभ्यस्तेऽपि हितैषिणा।
सन्तोषो नैव कर्तव्यः स्थैर्यं हितकरं तयोः॥

एवं च स्थिते।

गृहीतानां स्थिरत्वेन शेषाणां ग्रहणेन च।
कलानां मे कुमारत्वं त्वं पुषाण मनोरथान्॥

मयाभिहितं। एवं भवतु। ततो गाढतरं तुष्टस्तातः। दत्तो भाण्डागारिकस्यादेशः। अरे पूरय महामतिभवनं धनकनकनिचयेन येन कुमारः सकलोपभोगसम्पत्त्या निर्व्यग्रस्तत्रैव कलाग्रहणं कुर्वन्नास्ते। ततो यदाज्ञापयति देव इत्यभिधाय संपादितं भाण्डागारिकेण राजशासनं। महामतिनापि मा देवस्य चित्तसन्तापो भविष्यतीत्याकलय्य न निवेदितं ताताय मदीयविलसितं। ततोऽभिहितोऽहं तातेन। वत्स अद्यदिनादारभ्य स्थिरीकुर्वता पूर्वगृहीतं कलाकलापं गृह्णता चापूर्वं तत्रैवोपाध्यायभवने भवता स्थातव्यमहमपि न द्रष्टव्यः। मयाभिहितं। एवं भवतु। जातश्च मे हर्षः। ततस्तातसमीपान्निर्गतेन मया मृषावादं प्रत्यभिहितं। वयस्य

कस्योपदेशेनेदृशं भवतः कौशलं येन युष्मदवष्टम्भेन मया संपादितस्तातस्य हर्षः प्रच्छादितः कलाचार्यकलहव्यतिकरो लब्धा चेयमतिदुर्लभा सुकलचारितेति । मृषावादेनाभिहितं । कुमाराकर्णय । अस्ति राजसचित्ते नगरे रागकेसरी नाम राजा । तस्य च मूढता नाम महादेवी । तयोश्चास्ति माया नाम दुहिता । सा मया महत्तमा भागिनी प्रतिपन्ना । प्राणेभ्योऽपि वल्लभोऽहं तस्याः । ततस्तदुपदेशेन ममेदृशं कौशलं । सा च जननीकल्पमात्मानं मन्यमाना यत्र यत्र क्वचिदहं संचरामि तत्र तत्र वत्सलतया सततमन्तर्लीना तिष्ठति न क्षणमात्रमपि मां विरहयति । मयाभिहितं । वयस्य दर्शनीया ममापि सात्मीया भगिनी भवता । मृषावादेनाभिहितं । एवं करिष्यामि ॥

ततो मया ततः प्रभृति वेश्याभवनेषु द्यूतकरशालासु दुर्ललितमीलकेषु तथान्येषु च दुर्विनयस्थानेषु यथेष्टचेष्टया विचरता तथापि मृषावादबलेन कलायहणमहं करोमीति लोकमध्ये गुणोपार्जनतत्परमात्मानं प्रकाशयता तातमपश्यतैवातिवाहितानि द्वादश वर्षाणि । मुग्धजनप्रवादेन च समुच्चलितालीकवार्त्ता यथा रिपुदारणकुमारः सकलकलाकलापकुशल इति । प्रचरितो देशान्तरेष्वपि प्रवादः । समारूढश्चाहं यौवनभरे ॥

ततश्च शेखरपुरे नगरे नरकेसरिनरेन्द्रस्य वसुंधराया महादेव्याः कुक्षिसंभूतास्ति नरसुन्दरी नाम दुहिता । सा च भुवनाद्भुतभूतरूपातिशयेन निरुपमा कलासौष्ठवेन संप्राप्ता यौवनं । समुत्पन्नोऽस्याश्चित्तेऽभिनिवेशः । यदुत यः कलाकौशलेन मत्तः समधिक-

तरः स एव यदि परं मां परिणयति नापरः। निवेदितं पित्रोर्निजाकूतं। संजातमनयोः पर्याकुलत्वं नास्त्येवास्याः कलाभिः समानोऽपि भुवने पुरुषः कुतः पुनरधिकतर इति भावनया। ततः श्रुतस्ताभ्यां मदीयः कलाकौशलप्रवादः। चिन्तितं नरकेसरिणा। स एव रिपुदारणो यदि परमस्याः समर्गलतरो भविष्यति। युज्यते च नरवाहनेन सहास्माकं वैवाह्यं। यतः प्रधानवंशो महानुभावश्चासौ वर्तते तस्य च राज्ञो रत्नसूचिरिव महानागस्य निरपत्यस्य सैवैका नरसुन्दरी दुहिता। ततोऽत्यन्तमभीष्टतया तस्याश्चिन्तितमनेन। गच्छामि तत्रैव सिद्धार्थपुरे गृहीत्वा वत्सां नरसुन्दरीं। ततः परीक्ष्य तं रिपुदारणं विवाहयाम्येनां येन मे चित्तनिर्वृतिः संपद्यते। ततः सर्वबलेन समागतो नरकेसरी। ज्ञापितस्तातस्यागमनवृत्तान्तः। परितुष्टोऽसौ। कारितमुच्छ्रितपताकं नगरं। प्रवेशितो महाविमर्देन नरकेसरी तातेन। दत्तमावासस्थानं। भविष्यति रिपुदारणकुमारस्य नरसुन्दर्या सह कलाकौशलपरीक्षेति ज्ञापितं लोकानां। प्रशस्तदिने सज्जीकारितः स्वयंवरमण्डपः। विरचिता मञ्चाः। मीलितं राजवृन्दं। समुपविष्टस्तन्मध्ये सपरिकरस्तातः। समाहूतोऽहं कलाचार्यश्च। प्राप्तोऽहं सह मित्रचयेण तातसमीपं महामतिश्च सह राजदारकैः॥ इतश्च पुण्योदयस्य मदीयदुष्टचेष्टितानि पश्यतश्चित्तखेदेनैव संजातं कृशतरं शरीरं विगलितं परिस्फुरणं मन्दीभूतः प्रतापः। ततोऽहमुपविष्टस्तातभ्यर्णे कलोपाध्यायश्च। निवेदितं विनयनम्रेण नरवाहनेन महामतये नरकेसरिराजागमनप्रयोजनं। तदाकर्ण्य

संजातो मे हर्षातिरेकः। स्थितस्तूष्णींभावेन स्वहृदयमध्ये हसन्नुपाध्यायः। अत्रान्तरे समागतो नरकेसरी। परितुष्टो नरवाहनः। दापितं तस्मै महार्हसिंहासनं। उपविष्टः सपरिकरो नरकेसरी। ततस्तदनन्तरं पूरयन्ती जनहृदयसरांसि लावण्यामृतप्रवाहेण अधरयन्ती वरबर्हिकलापं कृष्णस्निग्धकुञ्चितकेशपाशेन प्रोद्भासयन्ती दिक्चक्रवालं वदनचन्द्रेण विधुरयन्ती कामिजनचित्तानि लीलामन्थरेण विलासविलोकितेन दर्शयन्ती मद्देभकुम्भविभ्रमं पयोधरभरेण उच्छृङ्खलयन्ती मदनवारणं विस्तीर्णजघनपुलिनेन विडम्बयन्ती सञ्चारिरक्तराजीवयुगललीलां चरणयुग्मेन उपहसन्ती कलकोकिलाकुलकूजितं मन्मथोल्लापजल्पितेन कुतूहलयन्ती वरमुनीनपि प्रवरनेपथ्यालङ्कारमाल्यताम्बूलाङ्गरागविन्यासेन परिकरिता प्रियसखीवृन्देन अधिष्ठिता वसुंधरया प्रविष्टा नरसुन्दरी। ततस्तां विलोक्याहं हृष्टस्तेतथा। विजृम्भितः शैलराजः। विलिप्तं स्तब्धचित्तेन तेनावलेपनेन ममात्महृदयं। चिन्तितं च। कोऽन्यो मां विहायैनां परिणेतुमर्हति। न खलु मकरध्वजादृते रतिरन्यस्योपनीयते॥ अत्रान्तरे विहितविनया तातादीनामभिहिता नरकेसरिणा नरसुन्दरी। यदुत उपविश वत्से। मुञ्च लज्जां। पूरयात्मीयमनोरथान्। प्रश्नय रिपुदारणकुमारं कलामार्गे यत्र क्वचित्ते रोचते। ततो नरसुन्दर्या सहर्षमुपविश्याभिहितं। यदाज्ञापयति तातः। केवलं गुरूणां समक्षं न युक्तं ममोद्ग्राहयितुं। तस्मादार्यपुत्र एवोद्ग्राहयतु सकलाः कलाः। अहं पुनरेकैकस्यां कलायां सारस्थानानि प्रश्नयिष्यामि। तत्रार्यपुत्रेण निर्वाहः

करणीय इति। तदाकर्ण्य दृष्टौ नरवाहननरेन्द्रो समस्तराजकुलं लोकाश्च। ततस्तातेनाभिहितोऽहं। कुमार सुन्दरं मन्त्रितं राजदुहित्रा। तत्साम्प्रतमुद्राहयतु कुमारः सकलाः कलाः पूरयत्वस्या मनोरथान् जनयतु ममानन्दं निर्मलयतु कुलं गृह्णातु जयपताकां। एषा सा निकषभूमिर्वर्तते विज्ञानप्रकर्षस्येति॥ मम तु तदा कलानां नामान्यपि विस्मृतानि। ततो विक्लीभूतमन्तःकरणं प्रकम्पिता गात्रयष्टिः प्रादुर्भूताः प्रस्वेदबिन्दवः संजातो रोमोद्धर्षः प्रनष्टा भारती तरलिते लोचने। ततो हा किमेतदिति विषण्णस्तातः। प्रलोकितं महामतिवदनं। महामतिराह। किं कर्तव्यमादिशतु देवः। तातेनाभिहितं। किमितीयमीदृशी कुमारशरीरेऽवस्था। ततः कर्णे निवेदितं महामतिना। देव मनःक्षोभविकारोऽयमस्य। तातः प्राह। किं पुनरस्य मनःक्षोभनिमित्तं। महामतिराह। देव प्रस्तुतवस्तुन्यज्ञानं। भवत्येव हि वागायुधानां सदसि विदुषां सस्पर्धमाभाषितानां ज्ञानावष्टम्भविकलानां मनसि क्षोभातिरेकः। तातेनाभिहितं। आर्य कथमज्ञानं कुमारस्य। ननु सकलकलासु प्रकर्षं प्राप्तः कुमारो वर्तते। ततः संस्मृत्य मदीयदुर्विलसितं गृहीतो मनाक्क्रोधेन कलाचार्यः। ततोऽभिहितमनेन। देव प्रकर्षं प्राप्तः कुमारः शैलराजमृषावादप्रणीतयोः कलयोर्न पुनरन्यत्र। तातः प्राह। के पुनस्ते कले। महामतिराह। दुर्विनयकरणमसत्यभाषणं च। एते ते शैलराजमृषावादप्रणीते कले। अनयोश्चात्यन्तं कुशलः कुमारः। न पुनरन्यकलानां गन्धमात्रमपि जानीते। तातः प्राह। कथमिदं।

महामतिनाभिहितं। देव देवस्य दीर्घचित्तसन्तापभीरुभिस्तदेव नाख्यातमिदमस्माभिः। यतो लोकमार्गातीतं कुमारस्य चरितमिदानीमपि देवस्य पुरतस्तत्कथयतो न प्रवर्तते मे वाणी। तातेनाभिहितं। यथावृत्तकथने भवतो नास्त्यपराधः। निःशङ्कं कथयत्वार्यः। कलाचार्यावज्ञाकरणादिको वेत्रासनारोहणगर्भो दुर्वचनतिरस्कारणपर्यन्तो निवेदितः समस्तोऽपि मदीयदुर्विलसितवृत्तान्तः। तातेनाभिहितं। आर्य यद्येवं ततो जानतापि त्वयास्य कुलदूषणस्य स्वरूपं किमित्ययमेवंविधसभामध्ये प्रवेशितः। ननु विगोपिता वयमाकालमनेन पापेन। महामतिराह। देव न मयायमिह प्रवेशितः। मद्भवनान्निर्गतस्यास्य द्वादश वर्षाणि वर्तन्ते। केवलमकाण्ड एव संजातमद्य मम देवकीयमाकारणं। ततः समागतोऽहं। अयं तु कुतश्चिदन्यतः स्थानादिहागत इति। तातेनाभिहितं। आर्य यद्येवमपाचचूडामणिरेष रिपुदारणो गुणानामभाजनतया वर्जितो युष्माभिः तत्किमिति गर्भाधानादारभ्यास्येयन्तं कालं यावत्कल्याणपरंपरा संपन्ना किमिदानीमेवं लोकमध्ये विगुप्यत इति। महामतिराह। देव अस्त्यस्य पुण्योदयो नामाभ्यन्तरङ्गो वयस्यः। तज्जनिता प्राक्तनी कल्याणपरंपरा। तथाहि। तत्प्रभावादेवायं प्रादुर्भूतः सुकुले संपन्नो जननीजनकयोरभीष्टतमः संजातो रूपसौभाग्यसुखैश्वर्यादिभाजनं। तातः प्राह। तर्हि क्व पुनरधुना गतोऽसौ पुण्योदयः। महामतिराह। न कुत्रचिद्गतोऽत्रैव प्रच्छन्नरूप आस्ते। केवलं पश्यन्नेव रिपुदारणस्य सम्बन्धीनि दुर्विलसितानि चित्तदुःखासिकया साम्प्रतं

क्षीणशरीरोऽसौ तपस्वी वर्तते। न शक्नोत्यस्यापदं निवारयितु-मिति। तदाकर्ण्य तातो नास्त्यत्र कश्चिदुपायो विनाटिता वय-मनेन दुष्पुत्रेण महालोकमध्ये प्रसभमिति चिन्तया राहुग्रस्त-शशधरबिम्बमिव कृतं तातेन कृष्णं मुखं। लक्षितः समस्तलोकैः पर्यालोचनपरमार्थः। ततो विलक्षीभूतास्तातबान्धवाः। विद्राण-वदनः संपन्नः परिजनः। प्रहसिता मुखमध्ये खिड्गलोकाः। विषण्णा नरसुन्दरी। विस्मितो नरकेसरिलोकः। ततश्चिन्तितं जनेन तातलज्जया लघुध्वनिना परस्परमुक्तं च। अये।

गर्वाध्मातः परं मूढो बस्तिवद्वातपूरितः।
निःसारोऽपि गतः ख्यातिमेष भो रिपुदारणः॥

अथवा।

निरक्षरोऽपि वाचालो लोकमध्येऽतिगौरवम्।
वागाडम्बरतः प्राप्तो यः स्यादन्योऽपि मानवः॥
स सर्वो निकषप्राप्तः प्राप्नोत्येव विडम्बनाम्।
महाहास्यकरीं मूढो यथायं रिपुदारणः॥

मम तु तातोपाध्यायौ कर्णोत्थारकेण परस्परं तथा जल्पन्तौ पश्यतः समुत्पन्नो मनसि विकल्पः। अये बलात्कारेण मामेतौ जल्पयिष्यतः। ततो भयातिरेकेण स्तम्भितं मे गलकनाडीजालं निरुद्धस्रोच्छ्वासनिःश्वासमार्गः। संजाता म्रियमाणावस्था। ततो हा पुत्र हा तात हा वत्स हा तनय किमेतदिति प्रलपन्ती वेगेना-गत्य शरीरे लग्ना ममाम्बा विमलमालती। पर्याकुलीभूतः परिजनः किं कर्तव्यताविमूढा वसुंधरा विस्मितो नरकेसरी।

तातेनाभिहितं । गच्छत भो लोका गच्छत न पटुः शरीरेणाद्य कुमारः । पुनर्जल्पो भविष्यति । तदाकर्ण्य निर्गता वेगेन लोका मिलिता· बहिस्त्रिकचतुष्कचत्वरादिषु । अहो रिपुदारणस्य पाण्डित्यमहो पाण्डित्यमिति प्रवृत्तं प्रहसनं । प्रहितौ कण्ठावनमेण तातेन कलोपाध्यायनरकेसरिणौ । गतः स्वावासस्थाने नरकेसरी । चिन्तितमनेन । दृष्टं यद्द्रष्टव्यं । दीयतां प्रभाते प्रयाणकमिति ॥ ममापि निर्जनीभूते मन्दीभूतं भयं स्वस्थीभूतं शरीरं । तातस्य तु हृतराज्यस्येव वज्राहतस्येव महाचिन्ताभराक्रान्तस्य लङ्घितं तद्दिनं । समागता रजनी । न दत्तं प्रादोषिकमास्थानं । निवार्य जनप्रवेशं प्रसुप्तः । केवलं तया चिन्तयापनिद्रेणैवातिवाहितप्राया विभावरी ॥ इतश्च लज्जितो मे वयस्यः पुण्योदयः । चिन्तितमनेन ।

यस्य जीवत एवैवं पुंसः स्वामी विडम्ब्यते ।
किं तस्य जन्मनाप्यत्र जननीक्लेशकारिणः ॥

ततश्च ।

जातं विच्छायकं तावन्ममैतदतिदुःसहम् ।
यायात्सुतामदत्त्वैव यद्यसौ नरकेसरी ॥
ततोऽस्य सर्वथा व्यर्थं कुमारस्य मदीयकम् ।
संनिधानमतो नैव ममोपेक्षात्र युज्यते ॥
ततो यद्यप्ययोग्योऽयमेतस्या रिपुदारणः ।
तथापि दापयाम्येनामस्मै कमललोचनाम् ॥

अत्रान्तरे समागता तातस्य रात्रिशेषे निद्रा । ततो भद्रे

ऽगृहीतसङ्केते समाश्वासनार्थं तातस्य दत्तं कामरूपितया स्वप्नान्तरे तेन पुण्योदयेन दर्शनं। दृष्टः सुन्दराकारो धवलवर्णः पुरुषः। अभिहितमनेन। महाराज किं स्वपिषि किं वा जागर्षि। तातेनाभिहितं। जागर्मि। पुरुषः प्राह। यद्येवं मुञ्च ततो विषादं। दापयिष्याम्यहं रिपुदारणकुमाराय नरसुन्दरीमिति। तातेनाभिहितं। महाप्रसादः॥

अत्रान्तरे प्रहतं प्राभातिकं तूर्यं। ततो विबुद्धस्तातः। पठितं कालनिवेदकेन।

हीनप्रतापो यः पूर्वं गतोऽस्तं जगतां पुरः।
स एवोदयमासाद्य रविराख्याति हे जनाः॥
यदा येनेह यल्लभ्यं शुभं वा यदि वाशुभम्।
तदावाप्नोति तत्सर्वं तत्र तोषेतरौ वृथा॥

एतच्चाकर्ण्य चिन्तितं तातेन। यदुत न कर्तव्यो मयाधुना विषादः। यतो लम्भयिष्यामि कुमारं नरसुन्दरीमिति। स्फुटमेव निवेदितं स्वप्ने मम देवेन। अनेन तु कालनिवेदकपाठव्याजेन दत्तो ममोपदेशो वेधसा। यदुत यः पुरुषो यावतः सुन्दरस्यासुन्दरस्य वा वस्तुनो यदा भाजनं तस्य तावत्तदतर्कितमेव तदा मद्वशेन संपद्यत इति। न कर्तव्यौ तत्र विदुषा हर्षविषादौ। ततोऽनया भावनया स्वस्थीभूतस्तातः॥

इतश्चाचिन्त्यप्रभावतया पुण्योदयस्य संपादिता तेन नरकेसरिणो बुद्धिः। यदुत महानुभावोऽयं नरवाहनराजः। विज्ञातं च राज्यान्तरेष्वपि मम यदिहागमनप्रयोजनं। ततो

स्ज्याकरं पत्त्रदयस्यापि नरसुन्दरीमदत्त्वा नम स्वस्थाने गमनं। अतः संभाल्य कथंचिदेनां प्रयच्छामि रिपुदारणकुमारायेति॥ ततो निवेदितो नरकेसरिणा वसुंधरासमचं नरसुन्दर्यै स्वाभिप्रायः। ततो नरसुन्दर्या अपि पुण्योदयप्रभावादेव वलितं मां प्रति मानसं। चिन्तितमनया। युक्तियुक्तमेव तातेन मन्त्रितं। ततोऽभिहितमनया। यदाज्ञापयति तातः। तदाकर्ण्य हृष्टो नरकेसरी। आगत्याभिहितोऽनेन नरवाहनः। महाराज किमत्र बहुना जल्पितेन। आगतैवेयं वत्सा नरसुन्दरी कुमारस्य स्वयंवरा। तदत्र किं बहुना विकत्थनेन। केवलं दुर्जनवचनावकाशो भवति। अतो निर्विचारं गाह्यतां कुमारेण स्वपाणिना पाणिरस्याः। तातेनाभिहितं।। एवं क्रियते। गणितं प्रशस्तदिनं। परिणीता मया महता विमर्देन नरसुन्दरी। तां विमुच्य गतः स्वस्थाने नरकेसरी। दत्तो मह्यं तातेन निर्विग्रभोगार्थं महाप्रासादः। गतानि नरसुन्दर्या सह ललमानस्य मे कतिचिद्दिनानि। घटितं च पुण्योदयेन निरन्तरमावयोः प्रेम समुत्पादितश्चित्तविश्रम्भः लगिता मैत्री जनितो मनोरतिप्रबन्धः प्ररोहितः प्रणयः वर्धितश्चित्तमीलकाल्हादसागरः। सर्वथा

स्वप्रभामिव तीक्ष्णांशुश्चन्द्रिकामिव चन्द्रमाः।
क्षणमेकं न मुञ्चामि तामुमामिव शङ्करः॥
सापि मामकवक्त्राब्जरसास्वादनतत्परा।
भ्रमरीव गतं कालं न जानाति तपस्विनी॥
ततस्तं तादृशं वीक्ष्य देवानामपि दुर्लभम्।

मनःक्षोभकारणमार्यपुत्रं प्रश्नयामि। ततो यदि स्फुटमाचक्षीत विज्ञास्यामि यथास्ति मया सहास्य स्नेहसद्भावः। अथ न कथयेत्तत-स्तत्राप्यभिप्रायं लक्षयिष्यामीति विचिन्त्य पृष्टोऽहं नरसुन्दर्या। यदुतार्यपुत्र कीदृशं तव तदा सभामध्ये शरीरापाटवमासीदिति। अत्रान्तरे ज्ञातावसरेण प्रयुक्ता मृषावादेनात्मीया योगशक्तिः। कृतमन्तर्धानं। प्रविष्टो मदीयमुखे। ततोऽभिहितं मया। प्रिय-तमे त्वया पुनस्तदा कीदृशं लक्षितं। नरसुन्दरी प्राह। न मया किंचित्तदा सम्यग् विज्ञातं। केवलं समुत्पन्ना शङ्का किं सत्यमेव शरीरापाटवमार्यपुत्रस्य किं वा कलाकलापे न कौशलमिति। मयाभिहितं। सुन्दरि न तत्रैकोऽपि विकल्पः कर्तव्यः। यतस्त-रन्ति हृदये मम सकलाः कलाः। शरीरापाटवमपि मम न किंचित्तदासीत्। केवलमम्बया तातेन चालीकमोहात् कृतो मुधैव बहलः कलकलः। तथाविधालीककलकले च स्थिरतया स्थितोऽहं मौनेन। एतच्चाकर्ण्य नरसुन्दर्याः संजातो मनसि व्यलीकभावः। चि-न्तितमनया। अहो अस्य प्रत्यक्षापलापित्वं अहो निर्लज्जता अहो आत्मबहुमानिता। ततोऽभिहितं नरसुन्दर्या। आर्यपुत्र यद्येवं ततो महत्कुतूहलं मम इदानीमप्यहमार्यपुत्रेण कलास्वरूपमुत्की-र्त्यमानं श्रोतुमिच्छामि। अतो महता प्रसादेन समुत्कीर्तयतु तदार्यपुत्रः। मया चिन्तितं। अये पाण्डित्याभिमानेन परिभवबुद्ध्या मामुपहसत्येषा। अत्रान्तरे लब्धावसरो विजृम्भितः शैलराजः। विलिप्तं तेन स्तब्धचित्ताभिधानेनात्मीयविलेपनेन स्वहस्तेन मद्धृ-दयं। ततश्चिन्तितं मया। एवं ’या मम परिभवेनोपहासकारिणी

खल्वेषा पापा नरसुन्दरी। तथा किमिह स्थितया। ततो मयाभि-
हितं। अपसर पापे दृष्टिमार्गादपसर तूर्णं निर्गच्छ मदीयभव-
नात्। न युक्तं भवादृश्याः पण्डितंमन्याया मूर्खेणानेन जनेन
सहावस्थातुमिति। ततोऽवलोकितं मदीयवदनं नरसुन्दर्या।
चिन्तितमनया। हा धिक् सद्भावीभूत एवायं। वशीकृतो मान-
भटेन नो गोचरः साम्प्रतं प्रसादनायाः। ततो मन्त्राहतेव भुज-
ङ्गवनिता समुन्मूलितेव वनलतिका छतृखोटितेव चूतमञ्जरी अङ्कु-
शाक्रष्टेव करिणिका सर्वथा विद्राणदीनवदना बाष्पसभारनिर्भरं
हृदयमुद्वहन्ती मन्दं क्वणन्मणिमेखलाकिङ्किणीकलकोलाहलनूपुर-
झणझणारावसमाकृष्टस्नानवापिकाकलहंसकानि पदानि निक्षिपन्ती
चलिता नरसुन्दरी निर्गता मामकीनभवनात् प्राप्ता तातो-
यभवने॥ स्थितोऽहं शैलस्तब्धतया यावदद्यापि न शुष्यति शैलरा-
जीयं तद्वचःस्खलावलेपनं तावतीं वेलां। शोषमुपागते मनाक्पुनस्त-
त्रावलेपने संजातो मे पश्चात्तापः। बाधते नरसुन्दरीस्नेहमोहः।
समाध्यासितोऽहमरत्या। गृहीतो रणरणकेन अङ्गीकृतः शून्यतया
उररीकृतो विक्लवतया प्रतिपन्नो विकारकोटीभिः अवष्टब्धो मद-
नज्वरेण। ततो निषण्णः शयनीये। तत्रापि प्रवर्धमानया जृम्भिक-
यानवरतमुद्वर्तमानेनाङ्गेन मत्स्यक इव खादिराङ्गारराशिमध्ये
दन्दह्यमानः स्तोकवेलायां यावत्तिष्ठामि तावदागता सविषादमम्बा
विमलमालती। ततस्तां वीक्ष्य कृतं मयाकारसंवरणं। निषण्णा
भद्रासने स्वयमेवाम्बा। स्थितोऽहं पर्यङ्क एवोपविष्टः। अभिहित-
मनया। वत्स न सुन्दरमनुष्ठितं भवता यदसौ तपस्विनी नरसुन्दरी

साधं मे नरसुन्दर्या प्रेमाबन्धं मनोहरम् ॥
मदीयौ सुहृदाभासौ परमार्थेन वैरिकौ ।
तौ मृषावादशैलेशौ चित्तमध्ये रुषं गतौ ॥
चिन्तितं च ततस्ताभ्यां कथमेष वियोज्यते ।
एतया नरसुन्दर्या पापात्मा रिपुदारणः ॥
शैलराजो मृषावादं ततश्चेत्थमभाषत ।
त्वं तावन्नरसुन्दर्याः कुरु चित्तविरञ्जनम् ॥
स्वयमेवाहमत्रार्थे भलिष्यामि ततः परम् ।
मादृशा च कृते यत्ने कीदृशं प्रेमबन्धनम् ॥
मृषावादस्ततः प्राह नोत्साह्योऽहं भवादृशा ।
कृतमेव मया पश्य एतस्याश्चित्तभेदनम् ॥
तदेवं मद्वियोगार्थं ततस्तौ कृतनिश्चयौ ।
शैलराजमृषावादौ पर्यालोच्य व्यवस्थितौ ॥
अहं तु तां समासाद्य सद्भार्यां नरसुन्दरीम् ।
चिन्तयामि त्रिलोकेऽपि प्राप्तं यत्सुन्दरं मया ॥
ततस्तोत्वामितिकधूर्मन्थरीकृतलोचनः ।
दत्त्वा तच्छैलराजीयं हृदये खेऽवलेपनम् ॥
चिन्तयामि न लोकेऽत्र पुरुषोऽन्योऽस्ति मादृशः ।
यतो ममेदृशी भार्या ततो गाढतरं पुनः ॥
न पश्यामि गुरुं नैव देवान्नो बन्धुसन्ततिम् ।
न भृत्यवर्गं नो लोकं न जगत् सचराचरम् ॥
अथ तत्तादृशं दृष्ट्वा मदीयं दुष्टचेष्टितम् ।

पुण्योदयो मनस्तापाद्गाढं जातोऽतिदुर्बलः ॥
ततो मां तादृशं वीक्ष्य विरक्ताः सर्वबान्धवाः ।
इदं जल्पितुमारब्धा हसन्तस्ते परस्परम् ॥
पश्यताहो विधेः कीदृगस्थानविनियोजनम् ।
स्त्रीरत्नमीदृशं येन मूर्खेणानेन योजितम् ॥
स्तब्धोऽभून्मूर्खभावेन प्रागेष रिपुदारणः ।
आसाद्येमां पुनर्भार्यां गर्वेणान्धोऽधुना ह्ययम् ॥
स एव वर्तते न्यायो लोके यः किल श्रूयते ।
एकं स वानरस्तावद्दष्टोऽन्यद्वृश्चिकेऽलिना ॥
तदेषा चारुसर्वाङ्गी सद्भार्या नरसुन्दरी ।
करिणीव खरस्योच्चैर्न योग्यास्य मृगेक्षणा ॥
अन्यदा नरसुन्दर्या सद्भावार्पितचित्तया ।
स्नेहगर्भपरीक्षार्थं चिन्तितं निजमानसे ॥
किं ममार्पितसद्भावः किं वा नो रिपुदारणः ।
आ ज्ञातं स्नेहसर्वस्वं गुह्याख्यानेन गम्यते ॥
अनाख्येयमतः किंचिद्गुह्यसर्वस्वमञ्जसा ।
पृच्छाम्येनं दृढस्नेहे ततो व्यक्तिर्भविष्यति ॥

ततश्चिन्तितं नरसुन्दर्या । कीदृशं पुनरहं गुह्यमधुनार्यपुत्रं पृच्छामि । ऊं ज्ञातं तावत्सुनिश्चितमिदं मया ।. यदुत नितरां कमनीयशरीरोऽपि रक्ताशोकपादपवदेष निखिलकलाकलापकौशलफलविकल एवार्यपुत्रः । यतो विज्ञानाभावजनिताद्भयातिरेकादेव तथाविधोऽस्य तदा सभामध्ये मनःक्षोभोऽभूत्तदधुना तदेव

मनःक्षोभकारणमार्यपुत्रं प्रश्नयामि। ततो यदि स्फुटमाचक्षीत विज्ञास्यामि यथास्ति मया सहास्य स्नेहसद्भावः। अथ न कथयेत्तत-स्तत्राप्यभिप्रायं लक्षयिष्यामीति विचिन्त्य पृष्टोऽहं नरसुन्दर्या। यदुतार्यपुत्र कीदृशं तव तदा सभामध्ये शरीरापाटवमासीदिति। अत्रान्तरे ज्ञातावसरेण प्रयुक्ता मृषावादेनात्मीया योगशक्तिः। कृतमन्तर्धानं। प्रविष्टो मदीयमुखे। ततोऽभिहितं मया। प्रिय-तमे त्वया पुनस्तदा कीदृशं लक्षितं। नरसुन्दरी प्राह। न मया किंचित्तदा सम्यग् विज्ञातं। केवलं समुत्पन्ना शङ्का किं सत्यमेव शरीरापाटवमार्यपुत्रस्य किं वा कलाकलापे न कौशलमिति। मयाभिहितं। सुन्दरि न तत्रैकोऽपि विकल्पः कर्तव्यः। यतस्त-रन्ति हृदये मम सकलाः कलाः। शरीरापाटवमपि मम न किंचित्तदासीत्। केवलमम्बया तातेन चालीकमोहात् कृतो मुधैव बहलः कलकलः। तथाविधालीककलकले च स्थिरतया स्थितोऽहं मौनेन। एतच्चाकर्ण्य नरसुन्दर्याः संजातो मनसि व्यलीकभावः। चि-न्तितमनया। अहो अस्य प्रत्यक्षापलापित्वं अहो निर्लज्जता अहो आत्मबहुमानिता। ततोऽभिहितं नरसुन्दर्या। आर्यपुत्र यद्येवं ततो महत्कुतूहलं मम इदानीमपहमार्यपुत्रेण कलास्वरूपमुत्की-र्त्यमानं श्रोतुमिच्छामि। अतो महता प्रसादेन समुत्कीर्तयतु तदार्यपुत्रः। मया चिन्तितं। अये पाण्डित्याभिमानेन परिभवबुद्ध्या मामुपहसत्येषा। अत्रान्तरे लब्धावसरो विजृम्भितः शैलराजः। विलिप्तं तेन स्तब्धचित्ताभिधानेनात्मीयविलेपनेन स्वहस्तेन मद्धृ-दयं। ततश्चिन्तितं मया। एवं या मम परिभवेनोपहासकारिणी

खल्वेषा पापा नरसुन्दरी । तया किमिह स्थितया । ततो मयाभि-
हितं । अपसर पापे दृष्टिमार्गादपसर तूर्णं निर्गच्छ मदीयभवनात् । न युक्तं भवादृशाः पण्डितंमन्याया मूर्खणानेन जनेन
सद्भावस्थातुमिति । ततोऽवलोकितं मदीयवदनं नरसुन्दर्या ।
चिन्तितमनया । हा धिक् सद्भावीभूत एवायं । वशीकृतो मान-
भटेन नो गोचरः साम्प्रतं प्रसादनायाः । ततो मन्त्राहतेव भुज-
ङ्गवनिता समुन्मूलितेव वनलतिका उत्खोटितेव चूतमञ्जरी अङ्कु-
शाकृष्टेव करिणिका सर्वथा विद्राणदीनवदना साध्वसभारनिर्भरं
हृदयमुद्वहन्ती मन्दं क्वणन्मणिमेखलाकिङ्किणीकलकोलाहलनूपुर-
झणझणारावसमाकृष्टस्नानवापिकाकलहंसकानि पदानि निक्षिपन्ती
चलिता नरसुन्दरी निर्गता मामकीनसदनात् प्राप्ता तातीयभवने ॥ स्थितोऽहं शैलस्तम्भतया यावद्यापि न शुष्यति शैलराजीयं तद्वचःस्खलावलेपनं तावतीं वेलां । शोषमुपागते मनाक्पुनस्त-
च्चावलेपने संजातो मे पश्चात्तापः । बाधते नरसुन्दरीस्नेहमोहः ।
समाध्मातोऽहमरत्या । गृहीतो रणरणकेन अङ्गीकृतः शून्यतया
उररीकृतो विक्लवतया प्रतिपन्नो विकारकोटीभिः अवष्टब्धो मद-
नज्वरेण । ततो निषण्णः शयनीये । तत्रापि प्रवर्धमानया जृम्भिकयानवरतमुद्वर्तमानेनाङ्गेन मत्स्यक इव खादिराङ्गारराशिमध्ये
दन्दह्यमानः स्तोकवेलायां यावत्तिष्ठामि तावदागता सविषादमम्बा
विमलमालती । ततस्तां वीक्ष्य कृतं मयाकारसंवरणं । निषण्णा
भद्रासने स्वयमेवाम्बा । स्थितोऽहं पर्यङ्क एवोपविष्टः । अभिहितममया । वत्स न सुन्दरमनुष्ठितं भवता यदसौ तपस्विनी नरसुन्दरी

परुषवचनैस्तया तिरस्कृता। तथाहि यदितो गतायास्तस्याः संपन्नं तत्समाकर्णयतु वत्सः। मयाभिहितं। उच्यतां यत्ते रोचते। अम्बयाभिहितं। अस्ति तावदितो गता नयनसलिलधाराधौतगण्डलेखा दीनमनस्का दृष्टा सा मया नरसुन्दरी। पतिता रुदन्ती मम पादयोः। मयाभिहिता। हले नरसुन्दरि किमेतत्। तयाभिहितं। अम्ब दाहज्वरो मां बाधते। ततो नीता मया सा संप्रवातदेशे। सज्जीकारितं शयनीयं। तत्र च स्थापिता सा। निषण्णाहं पार्श्वे। ततः प्रवृत्तेव महासमुद्रेण शुष्यमाणेव तीव्राग्निना खाद्यमानेव वनपञ्चाननेन ग्रस्यमानेव महामकरेण अवष्टभ्यमानेव महापर्वतेन उत्कर्त्यमानेव कृतान्तकर्तिकया पाट्यमानेव क्रकचपाटेन पच्यमानेव नरके प्रतिक्षणमुद्वर्तपरावर्तं कर्तुमारब्धा। मयाभिहितं। हले किंनिमित्तकः पुनस्तवायमेवंविधो दाहज्वरः। ततो दीर्घदीर्घं निःश्वस्य न किंचिज्जल्पितमनया। मया चिन्तितं। मानसीयमस्याः पीडा। कथमन्यथा ममापि न कथयेत्। ततः कृतो मया निर्बन्धः। कथितं कृच्छ्रेण नरसुन्दर्या यथावृत्तं। ततो नियुज्य तस्याः शीतक्रियाकरणे कदलिकां मयाभिहिता सा नरसुन्दरी। यदुत वत्से यद्येवं ततो धीरा भव मुञ्च विषादं अवलम्बस्व साहसं। गच्छाम्यहं स्वयमेव वत्सस्य रिपुदारणस्य समीपे। करोमि तं तवानुकूलम्। केवलं किं न विज्ञातं पूर्वमेव त्वयेदं यथा नितरां मानधनेश्वरो मदीयस्तनयः न विषयः प्रतिकूलभाषणस्य। तदिदानीमपि विज्ञातमाहात्म्ययास्य त्वया न कदाचिदपि प्रतिकूलमाचरणीयं यावज्जीवं परमात्मेवायमाराधनीयः।

ततश्चेदं मदीयवचनमाकर्ण्य सा बाला नरसुन्दरी विकसितेव कमलिनी कुसुमितेव कुन्दलता परिपाकबन्धुरेव मञ्जरी मदसुन्दरेव करिणिका जलसेकाप्यायितेव वल्लरी पीतामृतरसेव नागप्रणयिनी गतघनबन्धनेव चन्द्रलेखिका सहचरमीलितेव चक्रवाकिका क्षिप्तेव सुखामृतसागरे सर्वथा किमप्यनाख्येयं रसान्तरमनुभवन्ती शयनादुत्थाय निपतिता गाढं मम चरणयोः । अभिहितमनया । अम्ब महाप्रसादः । अनुगृहीतास्मि मन्दभाग्याहमनेन वचनेनाम्बया । तद्गच्छतु शीघ्रमम्बा करोतु ममानुकूलमेकवारमार्यपुत्रं । ततो यदि पुनरयं जनस्तस्य प्रतिकूले वर्तमानः स्वप्नेऽपि विज्ञातः स्यादम्बया ततो यावज्जीवं न संभाषणीयो नापि द्रष्टव्यः पापात्मेति । मयाभिहितं । यद्येवं ततो गच्छामि । नरसुन्दरी प्राह । अम्ब महाप्रसादः। ततः समागताहमेषा वत्सस्य समीपे । तदयमत्र वत्स परमार्थः ।

सा तु दन्दह्यते बाला विदित्वा प्रतिकूलताम् ।
तवानुकूलतां मत्वा प्रमोदमवगाहते ॥
वल्लभेयं कुमारस्य श्रुत्वेदममृतायते ।
अनिष्टेयं कुमारस्य श्रुत्वेदं नारकायते ॥
त्वदीयरोषनाम्नापि म्रियते सा तपस्विनी ।
सन्तोषमात्रनाम्नापि तावकीनेन जीवति ॥
अतो यन्मुग्धया किंचिदपराद्धं तया तव ।
बालया प्रणयात्तवं तद्वत्सः क्षन्तुमर्हति ॥
प्रणतेषु दयावन्तो दीनाभ्युद्धरणे रताः ।

स्नेहार्पितचित्तेषु दत्तप्राणा हि साधवः ॥

ततस्तेदममया नरसुन्दरीस्नेहसर्वस्वमुत्कीर्त्यमानमाकर्ण्य याव-त्किलाहं स्नेहनिर्भरतया तां प्रति प्रगुणो भवामि तावच्छैलराजेन विरचिता कुटिलभ्रुकुटिर्धूनितमुत्तमाङ्गं दत्तो मदीयहृदये विलेपनचर्चः । ततस्तस्याः सम्बन्धिनमपराधं संस्मृत्य जातो मम पुनस्चित्तावष्टम्भः । ततोऽभिहिता मयाम्बा । यदुत न कार्यं मम तया परिभवकारिण्या पापयेति । अम्बयाभिहितं । वत्स मा मैवं वोचः । क्षन्तव्यो मम स्नुषाया वत्सेन तदीयोऽयमेको गुरुरपराधः । ततः पतिता मच्चरणयोरम्बा । मयाभिहितं । अपसर त्वम-पवस्तुनिर्बन्धपरे मम दृष्टिपथादपसर । न प्रयोजनं त्वयापि मे या त्वं मया निःसारितां तां दुरात्मिकां संघटयसि । ततश्चरणाभ्यां प्रेरिता मयाम्बा । ततो भद्रेऽगृहीतसङ्केते शैलराजवशवर्तिना मया पापात्मना तया तिरस्कृता सती स्वचयित्वा मदीयमनिवर्त-कमाग्रहविशेषं निराशा मुञ्चन्ती नयनसलिलं यथागतमेव प्रतिग-ताम्बा । निवेदितो नरसुन्दर्यै व्यतिकरः । तमाकर्ण्य वज्रनिर्दलितेव मूर्च्छया निपतितासौ भूतले । सिक्ता चन्दनरसेन समाश्वासिता तालवृन्तवायुना लब्धचेतना रोदितुमारब्धा । विमलमालत्याभि-हितं । पुत्रि किं क्रियते । वज्रमयहृदयोऽसौ ते भर्ता । तथापि मा रुदिहि मुञ्च विषादं । साहसावष्टम्भेन कुरु तावदेकं त्वमुपायं । गच्छ स्वयमेव प्रियतमप्रसादनार्थं । ततः स्वयं गतायाः प्रत्यागत-हृदयः कदाचित्प्रसीदत्यसौ । यतो मार्दवसाध्यानि कामिहृदयानि भवन्ति । अथ तथापि कृते न प्रसीदेत्ततः पश्चात्तापो न भविष्यति ।

यतः सुपरिमार्गिते वल्लभके किलावरककोन भवतीति लोक-वार्ता । नरसुन्दरी प्राह । यदाज्ञापयत्यम्बा । ततश्चलिता सा मम तोषणार्थं । किमस्यास्तत्र गतायाः संपद्यत इति विमर्शेन च्छन्ना तद्-नुमार्गेणाम्बा । प्राप्ता मम पार्श्वं नरसुन्दरी । स्थिता द्वारदेशे विमलमालती । नरसुन्दर्याभिहितं ।

नाथ कान्त प्रिय स्वामिञ्जीवदायक वल्लभ ।
प्रसीद मन्दभाग्यायाः प्रसीद नतवत्सल ॥
न पुनस्ते मनोदुःखं करिष्येऽहं कदाचन ।
त्वां विना शरणं नाथ नास्ति मे भुवनत्रये ॥

एवं च वदन्ती बाष्पोदकबिन्दुवर्षणालोलल्लोचनयुगलेन स्नपयन्ती मदीयचरणद्वयं प्रणता नरसुन्दरी । मम तु तां तादृशीं पश्यतस्तदा कीदृशं हृदयं संपन्नं । अपि च ।

स्नेहेन नरसुन्दर्यां भवत्युत्पलकोमलम् ।
वीचिते शैलराजे तु शिलासङ्घातनिष्ठुरम् ॥
नवनीतमिवाभाति यावच्चिन्तयति प्रियाम् ।
वज्राकारं पुनर्भाति शैलराजवशीकृतम् ॥
ततो दोलां समारूढं तदा मामकमानसम् ।
निश्चेतुं नैव शक्नोति किमत्र मम सुन्दरम् ॥
तथापि मोहदोषेण मया दीनापि बालिका ।
शैलराजं प्रिय कृत्वा भर्त्सिता नरसुन्दरी ॥

कथम् ।

आः पापे गच्छ गच्छेति वागाडम्बरमायया ।

न प्रतारयितुं शक्यस्त्वयायं रिपुदारणः ॥
कुशलापि कलासूत्रैरन्येषां यदि वञ्चनम् ।
कर्तुं शक्तासि नो जातु मूर्खाणामपि मादृशाम् ॥
यदाहं व्यसनस्थानं संजातस्त्वादृशामपि ।
तदा किं ते प्रलापेन कीदृशी मम नाथता ॥
इत्युक्त्वा स्तब्धसर्वाङ्गः शून्यारण्ये मुनिर्यथा ।
स्थितोऽहं मौनमालम्ब्य शैलराजेन चोदितः ॥

ततः सा वराकी नरसुन्दरी विगलितविद्येवाम्बरचरी परिभ्रष्टसमाधिसामर्थ्येव योगिनी तप्तस्थलनिक्षिप्तेव शफरिका अवाप्तनष्टरत्ननिधानेव मूषिका सर्वथा त्रुटिताशापाशबन्धना निपतिता महाशोकभरसागरे चिन्तयितुं प्रवृत्ता । किमिदानीं सर्वथा प्रियतमतिरस्कृताया मम जीवितेनेति । ततो निर्गत्य भवनात् क्वचिद्गन्तुमारब्धा । ततः किमियं करोतीति विचिन्त्य सस्थित एव शैलराजेनाक्षचितपादपातं लग्नोऽहं तदनुमार्गेण ॥ इतश्च

लोकयन्निव निर्विण्णो मदीयं दुष्टचेष्टितम् ।
अवान्तरे गतोऽन्यत्र तदा चैत्रे दिवाकरः ॥

ततः समुल्लसितमन्धकारं । संजाता विरलजनसञ्चारा राजमार्गाः । ततो गता सैकत्र शून्यगृहे नरसुन्दरी । इतश्चोद्गन्तुं प्रवृत्तः शशधरः । ततो मन्दमन्दप्रकाशे तामेव निरीक्षमाणः प्राप्तोऽहमपि तद्द्वारदेशे स्थितो गोपायितेनात्मना । ततो नरसुन्दर्या विलोकितं दिग्चक्रवालं दृष्टकास्थलमारुह्योत्तरीयेण बद्धो मध्यवलये पाशकः । नियमिता तत्र शिरोधरा । ततोऽभिहितम-

नया । भो भो लोकपालाः शृणुत यूयमथवा प्रत्यक्षमेवेदं दिव्यज्ञानिनां तत्रभवतां । यदुत लब्धप्रसरतया नाथवादेन कलोपन्यासं कारितो मयार्यपुत्रो न परिभवबुद्ध्या । तस्य तु तदेव मानपर्वतारोहकारणं संपन्नं । एवं च सर्वथा निराकृताहं तेन मन्दभाग्या । अत्रान्तरे मया चिन्तितं । नास्यास्तपस्विन्या ममोपरि परिभवबुद्धिः किं तर्हि प्रणयमात्रमेवाचापराध्यति । ततो न सुन्दरमनुष्ठितं मया । अधुनापि वारयाम्येनामितोऽध्यवसायादिति विचिन्त्य पाशकच्छेदार्थं यावच्चलामि तावदभिहितं नरसुन्दर्या । यदुत तत्प्रतीच्छत भगवन्तो लोकपालाः साम्प्रतं मदीयप्राणान् । मा च मम जन्मान्तरेष्वपि पुनरेवंविधव्यतिकरो भूयादिति । ततः शैलराजेनाभिहितं । कुमार पश्य जन्मान्तरेऽपि त्वदीयसम्बन्धमेषा नाभिलषति । मया चिन्तितं । सत्यमिदं । तथाहीयं प्रस्तुतव्यतिकरनिषेधमाशास्ते । मदीयव्यतिकरश्चात्र प्रस्तुतः । तन्म्रियतां । किमनया मम पापया । ततो लब्धप्रसरेण दत्तो मम हृदये शैलराजेन स्वविलेपनहस्तकः । स्थितोऽहं तस्य माहात्म्येन तां प्रति काष्ठवन्निश्चितार्थः । ततः प्रवाहितो नरसुन्दर्यात्मा पूरितः पाशकः लम्बितुं प्रवृत्ता निर्गते नयने निरुद्धः श्वासमार्गः वक्रीभूता ग्रीवा आकृष्टं धमनीजालं शिथिलितान्यङ्गानि समसमायितं स्रोतोभिः निर्वादितं वक्त्रकुहरं विमुक्ता च सा प्राणैर्वराकी ॥ इतश्च भवनान्निर्गच्छन्ती दृष्टा मया नरसुन्दरी अहं च तदनुयायी । चिन्तितमनया । नूनं अप्रणयेयं रुष्टा वासा गच्छति मे वधूः । अयं पुनरस्या एव प्रसादनार्थं प्रवृत्तो लग्नो मम पुत्रकः ।

ततो दूरं गतयोरावयोरनुमार्गेणागच्छन्ती समागताम्बापि तत्र शून्यगृहे। दृष्टा तथा लम्बमाना नरसुन्दरी। चिन्तितमम्बया। हा हा हतास्मि। नूनं मत्पुत्रकस्यापीयं वार्ता। कथमन्यथास्यामेवं व्यवस्थितायां स तूष्णीमासीत्। मया तु शैलराजीयावलेपनदोषेणैव अवस्तुनिर्बन्धपरेयमिति कृता तदवधीरणा। ततः शोकभरान्धया मम पश्यत एव तथैव व्यापादितोऽम्बयात्मा। ततः साध्वसमन्तापेनेव शुष्कं सगाड् मे स्तब्धचित्ताभिधानं तत्तदा हृदयावलेपनं। गृहीतोऽहं पश्चात्तापेनाक्रान्तः शोकभरेण।

ततः स्वाभाविकस्नेहविक्लवीभूतमानसः।

क्षणं विधातुमारब्धः प्रलापमतिदारुणम्॥

तथाप्यतिप्रौढतया निजमाहात्म्येन कृत एव मे शैलराजेन चित्तावष्टम्भः। चिन्तितं मया। अये मनुष्यः कथं स्त्रीविनाशे रोदितीति। ततः स्थितोऽहं तूष्णींभावेन॥

इतश्च कदलिकया चिन्तितं। किमिति स्वामिनी नागच्छति। तद्गच्छाम्यहं तदन्वेषणार्थं। ततः कुतश्चिन्निश्चित्य प्राप्ता सापि तं प्रदेशं। ततो दृष्ट्वा विमलमालतीनरसुन्दर्यौ तथा लम्बमाने कृतस्तया हाहारवः। मिलितं सतातं नगरं। समुच्छलितः कोलाहलः। किमेतदिति पृष्टा कदलिका। निवेदितं तया सर्वं यथावृत्तं॥ अत्रान्तरे संपन्नः स्फुटतरश्चन्द्रालोकः। ततो दृष्टे तथैवोल्लम्बमाने सर्वलोकेनाम्बानरसुन्दर्यौ। विलोकितोऽहमपि स्वकर्मचस्ततया भग्नगतिप्रसरो नष्टवाणीकस्तत्रैव लीनो वर्तमानस्तत्प्रदेशे। जातःसंप्रत्ययः। धिक्कारितोऽहं जनेन। कारितं तातेनाम्बानरसुन्दर्योर्मृतकार्यम्।

ततस्तत्तादृशं वीक्ष्य मदीयं कर्म दारुणम् ।
तातः शोकभराक्रान्तस्तदैवं चिन्तयत्यलम् ॥
अहो अनर्थपुञ्जोऽयमहो मे कुलदूषणः ।
अहो सर्वजघन्योऽयमहो पापिष्ठशेखरः ॥
अहो सर्वापदां मूलमहो लोकपथातिगः ।
अहो वैरिकमङ्काशो ममायं रिपुदारणः ॥
न कार्यं मे ततोऽनेन पुत्रेणापि दुरात्मना ।
एवं विचिन्त्य तातेन कृतश्चित्ते विनिश्चयः ॥
ततोऽवधीरितस्तेन भवनाच्च बहिष्कृतः ।
भ्रष्टश्रीकः पुरे तत्र विचरामि सुदुःखितः ॥
स्वदुष्टचेष्टितेनैव बालानामपि सर्वथा ।
गम्यश्चाहं तदा जातस्तत्रैवं विगर्हितः ॥
पापोऽयं दुष्टचेष्टोऽयमद्रष्टव्यो विमूढधीः ।
कुलकण्टकभूतोऽयं सर्वथा विषपुत्रकः ॥
मानावलेपतो येन कलाचार्योऽपकर्णितः ।
मूर्खचूडामणित्वेऽपि पाण्डित्यं च प्रकाशितम् ॥
माता च प्रियभार्या च येन मानेन मारिता ।
को वा निरीक्षते पापं तमेमं रिपुदारणम् ॥
वक्रमेवेदमस्माभिर्नोचिताश्च दुरात्मनः ।
सा कलाकौशलादीनां खानिर्या नरसुन्दरी ॥

ततश्च

वियुक्तो नरसुन्दर्या यदयं तत्र सुन्दरम् ।

(७)

किं तु सा पद्मपत्राक्षी यन्मृता तन्न सुन्दरम् ॥
अहं पुनर्महामोहलुप्तज्ञानः स्वचेतसा ।
तदापि चिन्तयाम्येवं भद्रे विमललोचने ॥
त्यक्तस्यापीह तातेन निन्दितस्यापि दुर्जनैः ।
शैलराजमृषावादौ तथापि मम बान्धवौ ॥
अनयोर्हि प्रमादेन मुक्तपूर्वं मया फलम् ।
भोक्ष्ये च कालमासाद्य पुनर्नास्त्यत्र संशयः ॥
ततश्चैवं जनेनोच्चैर्निन्द्यमानः क्षणे क्षणे ।
स्थितोऽहं भूरिवर्षाणि दुःखसागरमध्यगः ॥

इतश्च

अत्यन्तदुर्बलीभूतः सकोपो मयि निष्ठुरः ।
स तु पुण्योदयो भद्रे स्थितोऽकिंचित्करस्तदा ॥
अथान्यदा क्वचिद्राजा वाहनार्थं सुवाजिनाम् ।
वेष्टितो राजवृन्देन निर्गतो नगराद्बहिः ॥
ततः कुतूहलाकृष्टः सर्वो नागरको जनः ।
तत्रैव निर्गतोऽहं च संप्राप्तस्तस्य मध्यगः ।
अथ बाल्हीककाम्बोजतुरुष्कवरवाजिनः ।
वाहयित्वा भृशं राजा राजलोकविलोकितः ॥
ततः खेदविनोदार्थमुद्यानं सुमनोहरम् ।
प्रविष्टः सह लोकेन ललितं नाम शीतलम् ॥

तच्च कीदृशम्

अशोकनागपुन्नागतालहिन्तालराजितम् ।

प्रियङ्गुचम्पकाङ्कोल्लकदलीवनसुन्दरम् ॥
केतकीकुसुमामोदहृष्टालिकुलमालितम् ।
समस्तगुणसंपूर्णं सर्वथा नन्दनोपमम् ॥
तत्रैकदेशे विश्रम्य स राजा नरवाहनः ।
उत्थाय सह सामन्तैर्लीलया हृष्टमानसः ॥
प्रलोकयितुमारब्धः कौतुकेन वनश्रियम् ।
विस्फारितेन नीलाब्जचारुणा लोलचक्षुषा ॥

तत्र च

सत्कान्तियुक्तनक्षत्रग्रहसङ्घातवेष्टितम् ।
प्रकाशितदिगाभोगं साक्षादिव निशाकरम् ॥
रक्ताशोकतरूत्तोमपरिवारितविग्रहम् ।
यथेष्टफलदं साक्षाज्जङ्गमं कल्पपादपम् ॥
उन्नतं विबुधावासं कुलशैलविवेष्टितम् ।
हेमावदातं सुखदं सुमेरुमिव गत्वरम् ॥
कुवादिमत्तमातङ्गमदनिर्नाशकारणम् ।
वृतं सत्करिवृन्देन निर्मदं गन्धवारणम् ॥
अथ साधूचिते देशे रक्ताशोकतलस्थितम् ।
सत्साधुसङ्घमध्यस्थं कुर्वाणं धर्मदेशनाम् ॥
शुभार्पितं यथा धन्यो निधानं रत्नपूरितम् ।
विचक्षणाख्यमाचार्यं स नरेन्द्रो व्यलोकयत् ॥
अथ तं तादृशं वीक्ष्य सूरिं निर्मलमानसः ।
नरवाहनराजेन्द्रः परं हर्षमुपागतः ॥

ततश्चित्ते कृतं तेन नूनं नास्ति जगत्त्रये ।
ईदृशं नरमाणिक्यं यादृशोऽयं तपोधनः ॥
निर्जितामरसौन्दर्या निवेदयति वीक्षिता ।
अमुष्याकृतिरेवोच्चैर्गुणसम्भारगौरवम् ॥
तदीदृशस्य किं नाम भवेद्वैराग्यकारणम् ।
येन यौवनसंस्थेन खण्डितो मकरध्वजः ॥

अथ वा

गत्वा प्रणम्य पादाब्जं स्वयमेव महात्मनः ।
ततः पृच्छामि पूतात्मा भवनिर्वेदकारणम् ॥
एवं विचिन्त्य गत्वासौ नत्वा सूरेः क्रमद्वयम् ।
दत्ताशीस्तेन हृष्टात्मा निषण्णः शुद्धभूतले ॥
ततस्तदनुमार्गेण राजवृन्दं तथा पुरम् ।
उपविष्टं यथास्थानं नत्वाचार्याङ्घ्रिपङ्कजम् ॥
मया तु भद्रे पापेन शैलराजवशात्मना ।
न नतं तादृशस्यापि तदा सूरेः क्रमद्वयम् ॥
पाषाणघटितमुक्तोलीसन्निभो लोकपूरणः ।
केवलं स्तब्धसर्वाङ्गो निषण्णोऽहं भुवस्तले ॥
अथ गम्भीरघोषेण मेघवन्नीरपूरितः ।
धर्ममाख्यातुमारब्धः स आचार्यो विचक्षणः ॥

अभिहितं च तेन भगवता । यदुत भो भो भव्याः प्रदीप्तभवनोदरकल्पोऽयं संसारविस्तारो निवासः शारीरादिदुःखानां । न युक्त इह विदुषः प्रमादः । अतिदुर्लभेयं मानुषावस्था प्रधानं पर-

लोकसाधनं । परिणामकटवो विषयाः । विप्रयोगान्तानि सत्सङ्गतानि । पातभयातुरमविज्ञातपातमायुः । तदेवं व्यवस्थिते विधापनेऽस्य संसारप्रदीपनकस्य यत्नः कर्तव्यः । तस्य च हेतुः सिद्धान्तवासनासारो धर्ममेघः । अतः स्वीकर्तव्यः सिद्धान्तः । सम्यक् सेवितव्यास्तदभिज्ञाः । भावनीयं मुण्डमालिकोपमानं । त्यक्तव्या खल्वसदपेक्षा । भवितव्यमाज्ञाप्रधानेन । उपादेयं प्रणिधानं । पोषणीयं सत्साधुसेवया । रक्षणीयं प्रवचनमालिन्यं । एतच्च विधिप्रवृत्तः संपादयति । अतः सर्वत्र विधिना प्रवर्तितव्यं । सूत्रानुसारेण प्रत्यभिज्ञातव्यमात्मस्वरूपं । प्रवृत्तावपेक्षितव्यानि निमित्तानि । यतितव्यमसंपन्नयोगेषु । लक्षयितव्या विस्रोतसिका । प्रतिविधेयमनागतमस्याः । भवत्येवं प्रवर्तमानानां सोपक्रमकर्मविलयः । विच्छिद्यते निरुपक्रमकर्मानुबन्धः । तस्मादत्रैव यतध्वं यूयमिति ॥ एवं च निवेदिते तेन भगवता विचक्षणसूरिणास्याः परिषदो मध्ये केषांचिद्भव्यानामुल्लसितश्चरणपरिणामः । अपरेषां संजातो देशविरतिक्षयोपशमः । अन्यैः पुनर्विदलितं मिथ्यात्वं । अपरेषां प्रतनूभूता रागादयः । केषांचित्संपन्नो भद्रकभावः । ततो निपतितास्ते सर्वेऽपि भगवच्चरणयोः । अभिहितमेतैः । इच्छामोऽनुशास्तिं कुर्मो यदाज्ञापयन्ति नाथाः ॥ अत्रान्तरे विदितं तातेन । यदुत प्रश्नयाम्यधुना तदहमात्मविवक्षितं । ततो ललाटतटविन्यस्तकरमुकुलेनाभिहितमनेन ।

जनातिशायिरूपाणां जगदैश्वर्यभागिनाम् ॥
भदन्त तत्रभवतां किं वो वैराग्यकारणम् ॥
सूरिणाभिहितं भूप यद्यत्र तव कौतुकम् ।

ततस्ते कथयाम्येष भवनिर्वेदकारणम् ॥

किं तु

आत्मस्तुतिः परे निन्दा पूर्वक्रीडितकीर्तनम् ।
विरुद्धमेतद्राजेन्द्र साधूनां त्रयमप्यलम् ॥
ममात्मचरिते चैतत्कथ्यमाने परिस्फुटम् ।
त्रयं संपद्यते तेन न युक्तं तस्य कीर्तनम् ॥

तातेनाभिहितम् ।

एवं निगदता नाथ वर्धितं कौतुकं त्वया ।
कर्तव्योऽतः प्रसादो मे निवेद्यं चरितं निजम् ॥
ततो विज्ञाय निर्बन्धं मध्यस्थेनान्तरात्मना ।
प्रबोधकारणं ज्ञात्वा सूरिरित्यमवोचत ॥

यदुत

अनादिनिधनं लोके नानावृत्तान्तसङ्कुलम् ।
विद्यते भूतलं नाम नगरं सुमनोहरम् ॥
तत्रास्ति भुवनख्यातो देवानामपि नायकः ।
अलंघ्यसत्प्रतापाज्ञो नरेन्द्रो मलसञ्चयः ॥
सुन्दरासुन्दरे कार्ये नित्यं विन्यस्तमानसा ।
तस्य चास्ति महादेवी तत्पक्तिर्नाम विश्रुता ॥
तयोश्च देवीनृपयोरेकः सुन्दरचेष्टितः ।
विद्यते जगदाल्हादी पुत्रो नाम शुभोदयः ॥
तथा द्वितीयस्तनयस्तयोर्देवीनरेन्द्रयोः ।
अस्ति सर्वजनोत्तापी विख्यातश्चाशुभोदयः ॥

स्वभर्तुर्वत्सला साध्वी सुन्दराङ्गी जनप्रिया ।
भार्या शुभोदयस्यास्ति पद्माची निजचारुता ॥
तथाशुभोदयस्यापि जनसन्तापकारिणी ।
भार्या स्वयोग्यता नाम विद्यतेऽत्यन्तदारुणा ॥
इतश्च कालपर्यायादवाप्य निजचारुताम् ।
ततः शुभोदयाज्जातः पुत्रो नाम विचचणः ॥
तथैव कालपर्यायादवाप्यैव स्वयोग्यताम् ।
ततोऽशुभोदयाज्जातो जडो नाम सुताधमः ॥
तयोर्विचचणस्तावद्वर्धमानः प्रतिचणम् ।
यादृशः स्वैर्गुणैर्जातस्तदिदानीं निबोधत ॥
मार्गानुसारिविज्ञानः पूजको गुरुसंहतेः ।
मेधावी सगुणो दचो सम्यलच्यो जितेन्द्रियः ॥
सदाचारपरो धीरः सद्भोगी दृढसौहृदः ।
देवाभिपूजको दाता ज्ञाता स्वपरचेतसाम् ॥
सत्यवादी विनीतात्मा सप्रणयागतवत्सलः ।
चमाप्रधानो मध्यस्थः सत्त्वानां कल्पपादपः ॥
धर्मैकनिष्ठः शुद्धात्मा व्यसनेऽप्यविषण्णधीः ।
स्थानमानान्तराभिज्ञः कुत्सितायद्दवर्जितः ॥
समस्तशास्त्रतत्त्वज्ञो वाचि पाटवसंगतः ।
नीतिमार्गप्रवीणत्वात् धामकः शत्रुसंहतेः ॥
स्वगुणोत्कीर्तनैर्लीनात्मा विमुक्तः परनिन्दया ।
सदयः सम्पदां धाम्नि परार्थे च विनिर्मितः ॥

किं चेह बहुनोक्तेन यावन्तः पुरुषे गुणाः।
गीयन्ते तेऽखिलास्तत्र प्रादुर्भूता विचक्षणे॥
अथ संवर्धमानोऽसौ शरीरेण प्रतिक्षणम्।
जडस्तु यादृक् संपन्नस्तदिदानीं निबोधत॥
विपर्यस्तमनाः सत्यशौचसन्तोषवर्जितः।
मायावी पिशुनः क्लीबो निन्दकः साधुसंहतेः॥
असत्यसन्धः पापात्मा गुरुदेवविडम्बकः।
असत्प्रलापी लोभान्धः परेषां चित्तभेदकः॥
अन्यच्चित्ते वदत्यन्यच्चेष्टते क्रिययापरम्॥
दह्यते परसम्पत्सु परापत्सु प्रमोदते॥
गर्वाध्मातः सदा क्रुद्धः सर्वेषां भषणप्रियः।
आत्मश्लाघापरो नित्यं रागद्वेषवशानुगः॥
किं वात्र बहुनोक्तेन ये ये दोषाः सुदुर्जने।
गीयन्ते तेऽखिलास्तत्र प्रादुर्भूतास्ततो जडे॥
एवं च वर्धमानौ तौ स्वगेहे सुखलालितौ।
विचक्षणजडौ प्राप्तौ यौवनं परिपाटितः॥
इतश्च गुणरत्नानामुत्पत्तिस्थानमुत्तमम्।
पुरं निर्मलचित्ताख्यं विद्यते लोकविश्रुतम्॥
तत्रान्तरङ्गे नगरे नृपो नाम्ना मलक्षयः।
अस्ति सद्गुणरत्नानां जनकः पालकश्च सः॥
तस्य सुन्दरता नाम महादेवी मनःप्रिया।
विद्यते चारुसर्वाङ्गी सा तद्गुणविवर्धिका॥

ताभ्यां च कालपर्यायाज्जाता पद्मदलेक्षणा ।
बुद्धिर्नाम गुणैराढ्या कन्यका कुलवर्धनी ॥
ततः सा गुणरूपाभ्यामनुरूपं विचक्षणम् ।
विचिन्त्य प्रहिता बाला ताभ्यां तस्य स्वयंवरा ॥
परिणीता च सा तेन महाभूतिप्रमोदतः ।
विचक्षणेन सत्कन्या जाता च मनसः प्रिया ॥
तया युक्तस्य तस्योच्चैर्भुञ्जानस्य मनःसुखम् ।
विचक्षणस्य गच्छन्ति दिनानि शुभकर्मणा ॥
अथान्यदा क्वचिद्बुद्धेर्वार्तान्वेषणकाम्यया ।
मलक्षयेण प्रहितो विमर्शो निजपुत्रकः ॥
स च बुद्धौ दृढस्नेहभावभावितमानसः ।
तस्या एव समीपस्थः सद्भगिन्याः स्थितो मुदा ॥
सहोदरसमायुक्ता भर्त्रा च बहुमानिता ।
ततः सा चित्तनिर्वाणाद्गर्भं गृह्णाति बालिका ॥
अथ तस्याः शुभे काले सद्गर्भपरिपाकतः ।
जातो देदीप्यमानाङ्गः प्रकर्षो नाम दारकः ॥
जातः संवर्धमानोऽसौ प्रकर्षो बुद्धिनन्दनः ।
विचक्षणगुणैस्तुल्यो विमर्शस्यातिवल्लभः ॥
[अथान्यदा स्वकं दृष्टं काननं सुमनोहरम् ।
विचक्षणजडाभ्यां भो नाम्ना वदनकोटरम् ॥
तत्र खादनपानेन ललमानौ यथेच्छया ।
तौ द्वावपि स्थितौ कंचित्कालं संतुष्टमानसौ ॥

तत्र कुन्दसमाः शुभ्रा रदनाः सन्ति हृचकाः ।
तेषां च वीथिकायुग्मं ताभ्यां दृष्टं मनोहरम् ॥
ततः कुतूहलेनान्तः प्रविश्य प्रविलोकितम् ।
तत्र चालम्नपर्यन्तं दृष्टं ताभ्यां महाबिलम् ॥
ततो विस्फारिताचाभ्यां कौतुकेन सविस्मयम् ।
विचचणजडाभ्यां तत् सुचिरं संनिरीचितम् ॥
अथ तस्मात्समुद्भूता रक्तवर्णा मनोहरा ।
दासचेट्या समं काचिल्ललना चारुविग्रहा ॥
तां वीच्य स जडश्चित्ते परं हर्षमुपागतः ।
ततश्च चिन्तयत्येवं विपर्यासितमानसः ॥
अहो अपूर्विका योषिदहो सुन्दरदर्शना ।
अहो सस्थानमेतस्या अहो रूपमहो गुणाः ॥
किमेषा नाकतो मुग्धा भ्रष्टा स्यादमराङ्गना ।
किं वा पातालतो बाला नागकन्या विनिर्गता ॥
अथवा नहि नहि सुष्ठु मया चिन्तितं । यतः ।
स्वर्गे वा नागलोके वा कुतः स्यादियमीदृशी ।
मर्त्ये च दूरतोऽपास्ता वार्तापीदृक्षयोषितः ॥
तन्नूनं विधिना मह्यं परितुष्टेन कल्पिता ।
निर्मायेयं प्रयत्नेन सुन्दरैः परमाणुभिः ॥
अन्यच्च ।
नूनं पुरुषहीनेयं मदर्थं विहिता वने ।
यतो मां वीचते बाला लोलदृष्टिर्मुहुर्मुहुः ॥

गत्वा समीपमेतस्याः कृत्वा चित्तपरीक्षणम् ।
ततः करोमि स्वीकारं किं ममान्येन चेतसा ॥

इतश्च ।

विचक्षणश्च तां दृष्ट्वा लक्षनां ललिताननाम् ।
ततश्चेतसि संपन्नो वितर्कोऽयं महात्मनः ॥
एकाकिनी वने योषा परकीया मनोरमा ।
न द्रष्टुं युज्यते रागान्नापि संभाषणोचिता ॥
यतः सन्मार्गरक्तानां व्रतमेतन्महात्मनाम् ।
परस्त्रियं पुरो दृष्ट्वा यान्त्यधोमुखदृष्टयः ॥
अतो व्रजाम्यतः स्थानात्किं ममापरचिन्तया ।
ततो गन्तुं प्रवृत्तोऽसौ हस्तेनाकृष्य तं जडम् ॥
तेन चाकृष्यमाणोऽसौ कथंचिद्बलिना जडः ।
हृतसर्वस्ववन्मोहात्परं दुःखमुपागतः ॥
यावत्तौ गच्छतः स्तोकं भूभागं राजपुत्रकौ ।
तावत्तस्यानुचरी तस्याः पश्चाद्भ्रष्टा समागता ॥

तया च दूरत एव विहितः पूत्कारः । यदुत त्रायध्वं भो नाथास्त्रायध्वं । हा हतास्मि मन्दभागिनी । ततो वलितस्तद्भिमुखं जडः । तेनाभिहितं । सुन्दरि मा भैषीः । कथय कुतस्ते भयमिति । तयाभिहितं । यद्भवन्तौ मम स्वामिनीं विमुच्य चलितौ तेनैषा जातमूर्छा म्रियते । लग्नाधुना । तस्माद्द्वौ तावत्समीपे स्थीयतां भवद्भ्यामेतस्याः येन युष्मत्संनिधानेन मनाक्स्वस्थीभूतायां स्वामिन्यां ततोऽहं निराकुला सती भवतोरेतत्स्वरूपं

समस्तं विज्ञापयामि। ततो जडेनाभिहितो विचक्षणः। भ्रातर्गम्यतामेतत्स्वामिनीसमीपे। भवतु सा स्वस्था। विज्ञपयत्वेषा यथाविवक्षितं। को दोषः। विचक्षणेन चिन्तितं। न सुन्दरमिदं। इयं हि वष्टा चेटी तरला स्वभावेन प्रतारयिष्यति नूनमस्मान्। अथवा पश्यामि तावत्किमेषा तत्र गता जल्पति। न चाहमनया प्रतारयितुं शक्यः। तस्माद्गच्छामि। कात्र मम शङ्का। एवं विचिन्त्याभिहितं विचक्षणेन। भ्रातरेवं भवतु। ततो गतौ पश्चान्मुखौ विचक्षणजडौ प्राप्तौ तत्समीपे। स्वस्थीभूता ललना। निपतिता दासचेटी तयोश्चरणेषु। अभिहितमनया। महाप्रसादः। अनुगृहीतास्मि युवाभ्यां। जीविता स्वामिनी। दत्तं मे जीवितं। जडेनाभिहितं। सुन्दरि किंनामिकेयं तव स्वामिनी। चेट्याभिहितं। देव सुगृहीतनामधेया रसनेयमभिधीयते। जडेनाभिहितं। भवतीं किंनामिकामवगच्छामि। ततः सलज्जमभिहितमनया। देव लोलताहं प्रसिद्धा लोके चिरपरिचितापि विस्मृताधुना देवस्य। तत्किमहं करोमि मन्दभागिनीति। जडेनाभिहितं। भद्रे कथं मम त्वं चिरपरिचितासि। लोलतयाभिहितं। इदमेवास्मद्विज्ञपनीयं। जडः प्राह। विज्ञपयतु भवती। लोलतयोक्तं। अस्ति तावदेषा मम स्वामिनी परमयोगिनी। जानात्येवातीतानागतं। अहमपि चास्याः प्रसादादेवंविधैव। इतश्च कर्मपरिणाममहाराजभुक्तौ स्थितमस्त्यसंव्यवहारनगरं। तत्र कदाचिद्भवतोरवस्थानमासीत्। ततः कर्मपरिणामादेशेनैवायातौ भवन्तावेकाक्षनिवासपुरे। ततोऽप्यागतौ विकलाक्षनिवासे। तत्र त्रयः पाटका

विद्यन्ते। तत्र प्रथमे द्विहषीकाभिधानाः कुलपुत्रकाः प्रतिवसन्ति। ततस्तेषां मध्ये वर्तमानाभ्यां युवाभ्यां यथानिर्देशकारितया प्रसन्नेन कर्मपरिणाममहानरेन्द्रेण भटभुक्त्या दत्तमिदं वदनकोटरं काननं। एतच्च स्वाभाविकमेवात्र सर्वदा विद्यत एव महाबिलं। इयं च सर्वाप्यस्मदुत्पत्तेः पूर्विका वार्ता। ततो विधिना चिन्तितं। गृहिणी-रहिताविमौ वराकौ न सुखेन तिष्ठतः। अतः करोम्यनयोर्गृहिणी-मिति। ततस्तेन भगवता विधात्रा दयापरीतचेतसा पुत्रयोर्नि-मित्तमत्रैव महाबिले निर्वर्तितैषा मे स्वामिनी। तथाहं चास्या एवानुचरीति॥ जडेन चिन्तितं। अये यथा मया विकल्पितं तथैवेदं संपन्नं। अस्मदर्थमेवेयं रसना निष्पादिता वेधसा। अहो मे प्रज्ञातिशयः। विचक्षणेन चिन्तितं। कः पुनरयं विधिर्नाम। आं ज्ञातं। स एव कर्मपरिणामो भविष्यति। कस्यान्यस्येदृशी शक्ति-रिति॥ जडः प्राह। भद्रे ततस्ततः। लोलतयोक्तं। ततः प्रभृत्येषा मे स्वामिनी युक्ता मया युवाभ्यां सह खादन्ती नानाविधानि खाद्यकानि पिबन्ती विविधरसोपेतानि पानकानि ललमाना यथेष्टचेष्टया तत्रैव विकलाक्षनिवासे नगरे चिरमपि पाटकेषु तथा पञ्चाक्षनिवासे मनुजगतौ अन्येषु च तथाविधेषु स्थानेषु विचरिता भूयांसं कालं। अतएव क्षणमप्येषा युष्मद्विरहं न विषहते। युष्मदवधीरणया चागतमूर्छा म्रियते स्वामिनी। तदेवमहं भवतोश्चिरपरिचितास्मि॥ एतच्चाकर्ण्य सिद्धं नः समीहितं इति भावनया परितुष्टो जडः। ततोऽभिहितमनेन। सुन्दरि यद्येवं प्रविशतु तव स्वामिनी नगरे। पवित्रयतकं स्वावस्थानेन महा-

प्रासादं येन पुनस्तत्र चिरन्तनस्थित्या सुखमास्महे। लोलतयाभिहितं। मा मैवमाज्ञापयतु देवः। न निर्गतेयं स्वामिनी कदाचिदपीतः काननात्। पूर्वमपीयमत्रैव वर्तमाना युवाभ्यां सह ललिता। तदधुनाप्यस्मिन्नेव स्थाने तिष्ठन्ती लालयितुं युज्यते स्वामिनी। जडः प्राह। यद्भवती जानीते तदेव क्रियते। सर्वथा त्वमेवात्र प्रमाणं। कथनीयं यद्रोचते तव स्वामिन्यै येन संपादयामः। लोलतयोक्तं। महाप्रसादः। किमत्रापरमुच्यतां। अनुभवतु भवतोः स्वामिनी लालनेन सुखामृतमविच्छेदेनेति। एवं च स्थापिते सिद्धान्ते।

तत आरभ्य यत्नेन जडो वदनकोटरे।
तिष्ठन्तीं रसनां नित्यं लालयत्येव मोहतः॥

कथं।

क्षीरेक्षुशर्कराखण्डदधिसर्पिर्गुडादिभिः।
पक्वान्नखाद्यकैर्दिव्यैर्द्राक्षादिवरपानकैः॥
मद्यैर्मांसरसैश्चित्रैर्मधुभिश्च विशेषतः।
ये चान्ये लोकविख्याता रसास्तैश्च दिने दिने॥
एवं लालयतस्तस्य जडस्य रसनां सदा।
यदि चूर्णं भवेत्तत्र कथयत्येव लोलता॥
यतः सानुदिनं वक्ति स्वामिनीमधुरप्रिया।
मांसमाहर मद्यं च नाथ मृष्टं च भोजनम्॥
ददस्व व्यञ्जनान्यस्यै रोचन्ते तानि सर्वदा।
तत्सर्वं स करोत्येव मन्वानोऽनुग्रहं जडः॥

स तथा लालनासक्तो भार्यायाः प्रतिवासरम् ।
क्लेशराशिनिमग्नोऽपि मोहादेवं च मन्यते ॥

यदुत ।

धन्योऽहं कृतकृत्योऽहमहो मे सुखसागरः ।
यस्येदृशी शुभा भार्या संपन्ना पुण्यकर्मणः ॥
नास्ति नूनं मया यादृक् सुखितो भुवनत्रये ।
यतोऽस्या लालनां मुक्त्वा किं नाम भुवने सुखम् ॥
ततोऽलीकसुखास्वादपरिमोहितचेतनः ।
तदर्थं नास्ति तत्कर्म यदसौ नानुचेष्टते ॥
तं भार्यालालनोद्युक्तं तथा दृष्ट्वाखिलो जनः ।
जडं हसितुमारब्धः सत्यमेष जडो जडः ॥
यतो धर्मार्थमोक्षेभ्यो विमुखः पशुसन्निभः ।
रसनालालनोद्युक्तो न चेतयति किंचन ॥
जडस्तु तत्र गृद्धात्मा लोकैरेवं सहस्रशः ।
हसितो निन्दितश्चापि न कथंचिन्निवर्तते ॥

विचक्षणस्तु तच्छ्रुत्वा लोलतायाः प्रभाषितम् ।
ततश्च चिन्तयत्येवं तदा मध्यस्थमानसः ॥
अस्ति तावदियं भार्या मम नास्त्यत्र संशयः ।
आस्माके दृश्यते येन वने वदनकोटरे ॥
केवलं यदियं वक्ति रसनालालनं प्रति ।
अपरीक्ष्य न कर्तव्यं तन्मया सुपरिस्फुटम् ॥

यतः स्त्रीवचनादेव यो मूढात्मा प्रवर्तते ।
कार्यतत्त्वमविज्ञाय तेनानर्थो न दुर्लभः ॥
ततोऽनादरतः किंचिल्लोलतायाचने सति ।
दत्त्वा खाद्यादिकं तावत्कुर्महे कालयापनाम् ॥

ततश्च ।

भार्येयं पालनीयेति मत्वा रागविवर्जितः ।
ददानः शुद्धमाहारं लोलतां च निवारयन् ॥
अविश्रब्धमनास्तस्यां लोकयात्रानुरोधतः ।
अनिन्दितेन मार्गेण रसनामनुवर्तयन् ॥
धर्मार्थकामसंपन्नो विदद्भिः परिपूजितः ।
स्थितो विचक्षणः कालं कियन्तमपि लीलया ॥
तं च तेजस्विनं मत्वा निरीहं च विचक्षणम् ।
भावज्ञा किंचिदप्येनं याचते नैव लोलता ॥
स लोलताविनिर्मुक्तो रसनां पालयन्नपि ।
अशेषक्लेशहीनात्मा सुखमास्ते विचक्षणः ॥

यतः ।

ये जाता ये जनिष्यन्ते जडस्येह दुरात्मनः ।
रसनालालने दोषा लोलता तत्र कारणम् ॥
विचक्षणेन सा यस्माल्लोलतालं निराकृता ।
रसनापालनेऽप्यस्य ततोऽनर्थो न जायते ॥
इतश्च तुष्टचित्तेन जडेनाम्ना स्वयोग्यता ।
ज्ञापिता रसनालाभं जनकस्याशुभोदयः ॥

तयोरपि मनस्तोषस्तच्छीला समपद्यत ।
ततस्ताभ्यां जडः प्रोक्तः स्नेहापूर्णेन चेतसा ॥
पुत्रानुरूपा ते भार्या संपन्ना पुण्यकर्मणा ।
सुन्दरं च त्वयारब्धं यदस्याः पुत्र लालनम् ॥
इयं हि सुखहेतुस्ते सुभार्येयं वरानना ।
ततो लालयितुं युक्ता पुत्र रात्रिंदिवं त्वया ॥

ततश्च ।

स्वयमेव प्रवृत्तोऽसौ जनकाभ्यां च चोदितः ।
एकं सोन्मादिता बाला मयूरैर्लपितं तथा ॥
ततो गाढतरं रक्तो रसनायां जडस्तदा ।
तल्लालनार्थं मूढात्मा सहतेऽसौ विडम्बनाः ॥

इतो विचक्षणेनापि स्वीयतातः शुभोदयः ।
ज्ञापितो रसनालाभं माता च निजचारुता ॥
तथा बुद्धिप्रकर्षेण च विमर्शश्च विशेषतः ।
बोधितो रसनावाप्तिं मिलितं च कुटुम्बकम् ॥
ततः शुभोदयेनोक्तं वत्स किं ते प्रकथ्यते ।
जानामि वस्तुतस्त्वं सत्योऽसि त्वं विचक्षणः ॥
तथापि ते प्रकृत्यैव यन्ममोपरि गौरवम् ।
तेन प्रचोदितो वत्स तवाहमुपदेशने ॥
वत्स तावत्समस्तापि नारी पवनचञ्चला ।
क्षणरक्तविरक्ता च सन्ध्याभ्रालीव वर्तते ॥
नदीव पर्वतोद्भूता प्रकृत्या नीचगामिनी ।

दर्पणार्पितदुर्ग्राह्यवदनप्रतिमोपमा ॥
वक्रकौटिल्यनागानां संस्थापनकरण्डिका ।
कालकूटविषस्योच्चैर्लतेव मरणप्रदा ॥
नरकानलसन्तापदायिकेयमुदाहृता ।
मोक्षप्रापकसद्ध्यानप्रच्युतभूता च वर्तते ॥
कार्यं संचिन्तयत्यन्यद्भाषतेऽन्यच्च मायया ।
करोत्यन्यच्च सा पुंसः शुद्धशीला च भासते ॥
ऐन्द्रजालिकविद्येव दृष्टेराच्छेदकारिका ।
नरचित्तजतुद्रावकारिणी वह्निपिण्डवत् ॥
प्रकृत्यैव च सर्वेषां वैमनस्यविधायिनी ।
संसारचक्रविभ्रान्तिहेतुर्नारी बुधैर्मता ॥
पुंभिरास्वादितं दिव्यं विवेकामृतभोजनम् ।
चुद्रेव वामयत्येषा भुज्यमाना न संशयः ॥
अनृतं साहसं माया नैर्लज्ज्यमतिलोभिता ।
निर्दयत्वमशौचं च नार्याः स्वाभाविका गुणाः ॥
वत्स किं बहुनोक्तेन ये केचिद्दोषसञ्चयाः ।
ते नारीभाण्डशालायामाकालं सुप्रतिष्ठिताः ॥
तस्मात्तस्याः सदा पुंसा न कर्तव्यो हितैषिणा ।
विश्रम्भवशगो ह्यात्मा तेनेदमभिधीयते ॥
येयं ते रसना भार्या संपन्ना लोलतायुता ।
न सुन्दरैषा मे भाति को वा योगस्तवानया ॥
यतो न ज्ञायतेऽद्यापि कुतस्त्येयं ततस्त्वया ।

सङ्गृहं कुर्वतामुथा मूलशुद्धिः परीक्ष्यताम् ॥

यतः।

अत्यन्तमप्रमत्तोऽपि मूलशुद्धेरवेदकः।
स्त्रीणामर्पितसद्भावः प्रयाति निधनं नरः॥

ततो निजचारुतयाभिहितं। वत्स विचक्षण सुन्दरं ते जनकेन मन्त्रितं। अन्विष्यतामस्या रसनाया मूलशुद्धिः। को दोषः। विज्ञातकुलशीलस्वरूपा हि सुखतरमनुवर्तनीया भविष्यति। बुद्ध्याभिहितं। आर्यपुत्र यद्गुरू आज्ञापयतस्तदेवानुष्ठातुं युक्तमार्यपुत्रस्य। अलङ्घनीयवाक्या हि गुरवः सत्पुरुषाणां भवन्ति। प्रकर्षः प्राह। तात सुन्दरमम्बया जल्पितं। विमर्शेनोक्तं। को वासुन्दरं वक्तुं जानीते। सर्वथा सुन्दरमेवेदं यत्सुपरीक्षितं क्रियत इति। विचक्षणेन चिन्तितं। सुन्दरमेतानि मन्त्रयन्ति। न संग्रहणीयैव विदुषा पुरुषेणाविज्ञातकुलशीलाचारा ललना। केवलं कथितमेव मम लोलतया रसनायाः सम्बन्धि मूलोत्थानं। विज्ञातश्चाधुना मया शीलाचारः। यदुत खादनपानप्रियेयं रसना। अथवा नहि नहि को हि सकर्णकः पुरुषो भुजङ्गवनितागतिकुटिलतरचित्तवृत्तेः क्षुल्लयोषितोऽपि वचने संप्रत्ययं कुर्यात्। किं पुनर्दासचेट्याः। तत्कीदृशो मम लोलतावचने संप्रत्ययः। शीलाचारोऽपि सहसंवासेन भूयसा च कालेन सम्यग् विज्ञायते न यथाकथंचित्। तत्किमनेन बहुना। करोमि तावदहं तातादीनामुपदेशं गवेषयाम्यस्या रसनाया मूलशुद्धिं। ततो विज्ञाय यथोचितं करिष्यामीति विचिन्त्य विचक्षणेनाभिहितं। यदाज्ञापयति

नातः । केवलं तातः स्वयमेव निरूपयतु कः पुनरत्र रसनामूल-शुद्धिगवेषणार्थं प्रस्थापनयोग्य इति । शुभोदयेनोक्तं । वत्स अयं विमर्शः परमरूपकार्यभरस्य निर्वाहणक्षमः । तथा हि ।

युक्तं चायुक्तवद्भाति सारं चासारसुच्चकैः ।
अयुक्तं युक्तवद्भाति विमर्शेन विना जने ॥
तस्य हेयमुपादेयमुपादेयं च हेयताम् ।
भजेत वस्तु यस्यायं विमर्शो नानुकूलकः ॥
अत्यन्तगहने कार्ये मतिभेदतिरोहिते ।
विमर्शः कुरुते नृणामेकपक्षं विवेचितम् ॥

किं च ।

नरस्य नार्या देशस्य राज्यस्य नृपतेस्तथा ।
रत्नानां लोकधर्माणां सर्वस्य भुवनस्य वा ॥
देवानां सर्वशास्त्राणां धर्माधर्मव्यवस्थितेः ।
विमर्शोऽयं विजानीते तत्त्वं नान्यो जगत्त्रये ॥
येषामेष महाप्राज्ञो वत्स निर्देशकारकः ।
ते ज्ञातसर्वतत्त्वार्था जायन्ते सुखभाजनम् ॥
अतो धन्योऽसि यस्यायं विमर्शस्तव बान्धवः ।
न कदाचिदधन्यानां चिन्तारत्नेन मीलकः ॥
एष एव नियोक्तव्यो भवताच प्रयोजने ।
भानुरेव हि शर्वर्यास्तमसः चालनक्षमः ॥

विचक्षणेनाभिहितं । यदाज्ञापयति तातः । ततो निरीक्षितमनेन विमर्शवदनं । विमर्शः प्राह । अनुग्रहो मे । विचक्षणेनोक्तं ।

यद्येवं ततः शीघ्रं विधीयतां भवता तातादेशः । विमर्शेनाभिहितं । एष सज्जोऽस्मि । केवलं विस्तीर्णा वसुन्धरा नानाविधा देशा भूयांसि राज्यान्तराणि । तद्यदि कथंचिन्मे कालक्षेपः स्यात्ततः कियतः कालान्निवर्तितव्यं । विचक्षणेनोक्तं । भद्र संवत्सरस्ते कालावधिः । विमर्शः प्राह । महाप्रसादः । ततो विहितप्रणामश्चलितो विमर्शः ॥ अत्रान्तरे शुभोदयस्य पादयोर्निपत्याभिवन्द्य निजचारुतां प्रणम्य च जननीजनकौ प्रकर्षेणाभिहितं । तात यद्यपि ममार्यकताताम्बाविरहेऽपि न मनसो निर्वृतिस्तथापि सहचरतया मामे मम गाढतरं प्रतिबद्धमन्तःकरणं । नाहं मामेन विरहितः क्षणमात्रमपि जीवितुमुत्सहे । ततो मामनुजानीत यूयं येनाहमेनं गच्छन्तमनुगच्छामीति । एतद्वाकर्ण्यासमितापत्यस्नेहमोहपूरितहृदयेनानन्दोदकबिन्दुसन्दोहप्लावितनयनपुटेन विचक्षणेन दक्षिणकराङ्गुलीभिरुत्तमितं प्रकर्षस्य मुखकमलकं दत्ता चुम्बिका आघ्रातो मूर्धप्रदेशः । साधु वत्स साध्विति वदता निवेशितश्चासौ निजोत्सङ्गे । शुभोदयं च प्रत्यभिहितं । तात दृष्टो बालकस्य विनयः निरूपितो वचनविन्यासः आकलितः स्नेहसारः । शुभोदयः प्राह । वत्स किमत्राश्चर्यं । त्वया सुद्धेर्जातस्येदृशमेव चेष्टितं युज्यते ।

किं च वत्स ।

न युक्तमिदमस्माकं सुपात्रीचकवर्णनम् ।
विशेषतस्तवाभ्यर्णे यत्त एतदुदाहृतम् ॥
प्रत्यक्षं गुरवः स्तुत्याः परोक्षं मित्रबान्धवाः ।
भृतकाः कर्मपर्यन्ते नैव पुत्रा मृताः स्त्रियः ॥

तथापि चानयोर्दृष्ट्वा गुणसम्भारगौरवम् ।
अवर्णितेन तेनाहं पुत्र शक्नोमि नासितुम् ॥
इयं हि भार्या ते बुद्धिरनुरूपा वरानना ।
गुणवृद्धिकरी धन्या यथा चन्द्रस्य चन्द्रिका ॥
भर्तृस्नेहपरा पत्नी सर्वकार्यविशारदा ।
वत्सलत्वादिका गेहभरनिर्वहणक्षमा ॥
विशालदृष्टिरप्येषा सूक्ष्मदृष्टिरुदाहृता ।
सर्वसुन्दरदेहापि देषहेतुर्जडात्मनाम् ॥

अथवा ।

मलक्षयेण जनिता पुरे निर्मलमानसे ।
या च सुन्दरतापुत्री तस्याः को वर्णनक्षमः ॥
अत एव प्रकर्षोऽपि नेदानीं बहु वर्ण्यते ।
अनन्तगुण एवायं जनयित्र्या विभाव्यते ॥
वत्स किं बहुनोक्तेन धन्यस्त्वं सर्वथा जने ।
यस्येदृशं महाभागं संपन्नं ते कुटुम्बकम् ॥
अत एव वयं चित्ते साशङ्काः साम्प्रतं स्थिताः
आकर्ण्य रसनालाभं नोचितेयं यतस्तव ॥
मा भूद्दुर्विघाताय सपत्नी मत्सरादियम् ।
विशेषतः प्रकर्षस्य तेन चिन्तातुरा वयम् ॥
किं वा कालविलम्बेन प्रस्तुतं प्रविधीयताम् ।
ततो यथोचितं ज्ञाला युक्तं यत्तत्करिष्यते ॥
मातुलस्नेहबद्धात्मा प्रकर्षः प्रस्थितो यदि ।

इदं चारुतरं जातं चीरे खण्डस्य योजनम् ॥
तदेतौ महितावेव गच्छतां कार्यसिद्धये ।
युवाभ्यां न तु कर्तव्या चिन्तेति प्रतिभाति मे ॥

ततो विचक्षणेन बुद्ध्या चाभिहितं । यदाज्ञापयति तातः । ततो निपतितौ गुरूणां चरणेषु विमर्शप्रकर्षौ । कृतमुचितकरणीयं । प्रवृत्तौ गन्तुं ॥ इतश्च तदा शरत्कालो वर्तते । स च कीदृशः ।

शस्यसम्भारनिष्पन्नभूमण्डलो मण्डलाबद्धगोपालरामाकुलः ।
साकुलत्वप्रजाजातसारक्षणो रक्षणोद्युक्तसच्छालिगोपप्रियः ॥

यत्र च शरत्काले ।

जलवर्जितनीरदवृन्दचितं स्फुटकाशविराजितभूमितलम् ।
भुवनोदरमिन्दुकरैर्विशदं कलितं स्फटिकोपलकुम्भसमम् ॥

अन्यच्च ।

शिखिविरावविरागपरा श्रुतिः श्रयति हंसकुलस्य कलस्वनम् ।
न रमते च कदम्बवने तदा विषमपर्णरता जनदृष्टिका ॥
लवणतिक्तरसाच्च पराङ्मुखा मधुरखाद्यपरा जनजिह्विका ।
स्फुटमिदं तदहो प्रियताकरो जगति शुद्धगुणो न तु संस्तवः ॥

तथा ।

स्वच्छसम्नीरपूर्णं सरोमण्डलं फुल्लसत्पद्मनेत्रैर्दिवा वीक्षते ।
चक्रभत्तापुनर्लोकयाचेच्छया रात्रिसच्चक्रमोचनैरीक्षते ॥
मन्दितं गोकुलं मोदिताः पामराः पुष्पितो नीपवृक्षो निशा निर्मला ।
पक्वशाकसाधापीड विद्राणको भाजनं यस्य यत्नेन तल्लभ्यते ॥

ततश्चैवंविधे शरत्समये पश्यन्तौ मनोरमकाननानि विलोकयन्तौ

कमलषण्डभूषितसरोवराणि निरीक्षमाणौ प्रमुदितानि ग्रामाकरनगराणि दृष्टौ शक्रोत्सवदर्शनेन तुष्टौ दीपालिकावलोकनेन आल्हादितौ कौमुदीनिरीक्षणेन परीक्षमाणौ जनहृदयानि प्रयुञ्जानौ स्वप्रयोजनसिद्ध्यर्थमुपायशतानि विचरितौ बहिरङ्गदेशेषु विमर्शप्रकर्षौ । न दृष्टं क्वचिदपि रसनायाः कुलं । तथा च विचरतोस्तयोः समायातो हेमन्तः । कीदृशश्चासौ ।

घर्षितचेलतैलवरकम्बलरल्लकचित्रभानुको
विकसिततिलकलोध्रवरकुन्दमनोहरमल्लिकावनः ।
शीतलपवनविहितपथिकस्फुटवादितदन्तवीणको
जलशशिकिरणहर्म्यतलचन्दनमौक्तिकसुभगताहरः ॥

यत्र च हेमन्ते दुर्जनसङ्गतानीव ह्रस्वतमानि दिनानि सज्जनमैत्रीव दीर्घतरा रजन्यः सज्ज्ञानानीव संगृह्यन्ते धान्यानि काव्यपद्धतय इव विरच्यन्ते मनोहरा वेण्यः सुजनहृदयानीव विधीयन्ते स्नेहसाराणि वदनानि परबलकलकलेन रणशिरसि सुभटा इव निवर्तन्ते दवीयोदेशगता अपि निजदयिताविकटनितम्बबिम्बपयोधरभरशीतहरोष्मसंस्मरणेन पथिकलोका इति ।

प्रतापहानिः संपन्ना लाघवं च दिवाकरे ।

अथवा ।

दक्षिणाशावलग्नस्य सर्वस्यापीदृशी गतिः ॥

अन्यच्च । अयं हेमन्तो दुर्गतलोकान्
प्रियवियोगभुजङ्गनिपातितान् शिशिरमारुतखण्डितविग्रहान् ।
पशुगणानिव मुर्मुरराशिभिः पचति किं निशि भक्षणकाम्यया ॥

यदा चैयतापि कालेन नोपलब्धा विमर्शप्रकर्षाभ्यां रसनामूल-शुद्धिस्तदा प्रविष्टौ तावन्तरङ्गदेशेषु । तत्रापि पर्यटितौ नाना-विधस्थानेषु । अन्यदा प्राप्तौ राजसचित्तनगरे ।

तच्च दीर्घमिवारण्यं भूरिलोकविवर्जितम् ।
क्वचिद्दृष्टनरं ताभ्यां समवलोकितम् ॥

ततः प्रकर्षेणाभिहितं । माम किमितीदं नगरं विरलजनतया शून्यमिव दृश्यते । किं वा कारणमाश्रित्येदमीदृशं संपन्नं । विमर्शः प्राह ।

यथेदं दृश्यते सर्वं समृद्धं निजसम्पदा ।
केवलं लोकसन्दोहरहितं सुस्थितालयम् ॥
तथेदं भाव्यते नूनं नगरं निरुपद्रवम् ।
प्रयोजनेन केनापि कश्चिन्निष्क्रान्तराजकम् ॥

प्रकर्षः प्राह । एवमेतत्सम्यगवधारितं मामेन । विमर्शः प्राह । भद्र किमिदं । जानाम्यहं सर्वस्यैव वस्तुनो दृष्टस्य यत्तत्त्वं । अदृष्ट-मन्यदपि यत्र ते क्वचित्सन्देहः संभवति । प्रकर्षेणाभिहितं । माम यद्येवं ततः किमितीदं नगरं रहितमपि नायकेन विवर्जितमपि भूरिलोकैर्निजश्रियं न परित्यजति । विमर्शेनोक्तं । अस्त्यस्य मध्ये कश्चिन्महाप्रभावः पुरुषः । तज्जनितमस्य सश्रीकत्वं । प्रकर्षः प्राह । यद्येवं ततः प्रविश्य निरूपयावस्तं पुरुषं । विमर्शेनोक्तं । एवं भवतु । ततः प्रविष्टौ तौ नगरे प्राप्तौ राजकुले । दृष्टश्चाहं-कारादिकतिचित्पुरुषपरिकरो मिथ्याभिमानो नाम महत्तमः । ततो विमर्शः प्राह । भद्र सोऽयं पुरुषो यत्प्रभावजन्यमस्य राज-

सचित्तनगरस्थं मन्त्रीकृतं । प्रकर्षेणोक्तं । यद्येवं ततस्तावेदनमुपसृत्य जल्पयावः । पृच्छावस्य कोऽत्र वृत्तान्त इति । विमर्शेनोक्तं । एवं भवतु । ततः संभाषितस्ताभ्यां मिथ्याभिमानः पृष्टश्च । भद्र केन पुनर्व्यतिकरेण विरलजनमिदं दृश्यते नगरं । मिथ्याभिमानः प्राह । ननु सुप्रसिद्धैवेयं वार्ता कथं न विदिता भद्राभ्यां । विमर्शेनोक्तं । न कर्तव्योऽत्र भद्रेण कोपः । आवां हि पथिकौ न जानीवो मदद्याचार्थे कुतूहलमतो निवेदयितुमर्हति भद्रः । मिथ्याभिमानेनोक्तं । अस्ति तावत्समस्तभुवनप्रतीतोऽस्य नगरस्य स्वामी सुगृहीतनामधेयो देवो रागकेसरी । तज्जनकश्च महामोहः । तथा तयोर्मन्त्रिमहत्तमास्व भूयांसो विषयाभिलाषादयः । तेषामितो नगरात् सर्वबलसमुदयेन दण्डयात्रया निर्गतानामनन्तकालो वर्तते । तेनेदं विरलजनमुपलभ्यते नगरं । विमर्शः प्राह । भद्र केन सह पुनस्तेषां विग्रहः । मिथ्याभिमानः प्राह । दुरात्मना सन्तोषहतकेन । विमर्शेनोक्तं । किं पुनस्तेन सार्धं विग्रहनिमित्तं । मिथ्याभिमानेनोक्तं । कचिद्देवादेशेनैव जगद्वशीकरणार्थं विषयाभिलाषेण प्रहितानि पूर्वं स्पर्शनरसनादीनि पञ्चात्मीयानि महमानुषाणि । ततस्तैर्वशीकृतप्राये त्रिभुवने सन्तोषहतकेन तान्यभिभूय निर्वाहिताः कियन्तोऽपि लोकाः प्रापिता निर्वृतौ नगर्यां । तच्छ्रुत्वा सन्तोषहतकस्योपरि प्रादुर्भूतक्रोधानुबन्धो निर्गतः स्वयमेव देवो रागकेसरी विचेपेण । तदिदमत्र विग्रहनिमित्तं । विमर्शेन चिन्तितं । अये उपलब्धं तावद्रसनाया नामतो मूलोत्थानं । गुणतः पुनर्विषयाभिलाषं दृष्ट्वा ज्ञास्यामि । यतो जनकानुरूपाणि प्रायेणापत्यानि

मानुषाणां मध्ये रसना। तदधुना तमेव विषयाभिलाषं दृष्ट्वा तस्याः स्वरूपमावयोर्गुणतो निश्चेतुं युक्तं। तदन्वेषणार्थमेव तामसचित्तनगरे। प्रकर्षः प्राह। यन्मामो जानीते। ततो गतौ तामसचित्तपुरे विमर्शप्रकर्षौ। तच्च कीदृशम् ।

नाशितागेषसन्मार्गमामूलतस्तेन दुर्गं न लंघ्यं परेषां सदा।
सर्वदोषोद्योतमुक्तं च तद्वर्तते चौरवृन्दं तु तत्रैव संवर्धते ॥
वल्लभं तत्सदा पापपूर्णात्मनां निन्दितं तत्सदा शिष्टलोकैः पुरम्।
कारणं तत्सदानन्तदुःखोदधेर्वारणं तत्सदाशेषसौख्योन्नतेः ॥

केवलं तदपि ताभ्यां विमर्शप्रकर्षाभ्यामीदृशमवलोकितं। यदुत।

दवदग्धमिवारण्यं कृष्णवर्णं समन्ततः ।
रहितं भूरिलोकेन न मुक्तं च निजश्रिया ॥
ततः प्रकर्षस्तद्दृष्ट्वा प्रत्याह निजमातुलम् ।
माम किं विद्यते कश्चिदत्रापि पुरनायकः ॥
विमर्शः प्राह नैवास्ति योऽत्र भो मूलनायकः ।
केवलं नायकाकारः कश्चिदत्रास्ति मानवः ॥

ततो यावदेतावान् विमर्शप्रकर्षयोर्जल्पः संपद्यते तावद्दृष्टस्ताभ्यां तत्रैव नगरे प्रवेष्टुकामो दैन्याक्रन्दनविलपनादिभिः कतिचित्प्रधानपुरुषैः परिकरितः शोको नाम पाडीरिकः। ततः संभाषितोऽसौ विमर्शप्रकर्षाभ्यां पृष्टश्च। भद्र कोऽत्र नगरे राजा। शोकः प्राह। ननु भुवनप्रसिद्धोऽयं नरेन्द्रः। तथाहि।

महामोहसमुद्भूतो रागकेसरिसोदरः ।
धवोऽविवेकितायाश्च प्रसिद्धोऽयं नराधिपः ॥

स्वर्गपातालमर्त्त्येषु प्रभुभिर्भीतकम्पितैः ।
नामापि गृह्यते तस्य प्रतापहतवैरिणः ॥
देवस्याचिन्त्यवीर्यस्य सत्पराक्रमशालिनः ।
तस्य देवगजेन्द्रस्य नाम कः प्रष्टुमर्हति ॥

किं च आस्तां तावद्देवः । किं तर्हि ।

या मोहयति वीर्येण सकलं भुवनत्रयम् ।
ख्याताविवेकिताऽत्र सा देवी देववल्लभा ॥

अन्यच्च ।

सा महामोहनिर्देशकारिणी गुरुवत्सला ।
सा महामूढताभार्या वर्तते सुन्दरा वधूः ॥
रागकेसरिनिर्देशं न लङ्घयति सा सदा ।
मूढतायाश्च तत्पत्न्याः सौहार्दं दर्शयत्यलम् ॥
तथा देवगजेन्द्रस्य सा भर्तुर्गाढवत्सला ।
तेनाविवेकिता लोके प्रख्यातिं समुपागता ॥
तदेतौ भुवनेऽप्यत्र ख्यातौ देवीनरेश्वरौ ।
इदानीं हन्त भद्राभ्यां कथं प्रष्टव्यतां गतौ ॥
विमर्शः प्राह मैवात्र कोपः कार्यस्त्वया यतः ।
सर्वः सर्वं न जानीते सिद्धमेतज्जगत्त्रये ॥
आवां दवीयसो देशादागतौ न च वीचितम् ।
पूर्वमेतत्पुरं किं तु श्रुतौ देवीनरेश्वरौ ॥

ततश्च ।

किं स्याद्देवगजेन्द्रोऽत्र किं वा स्यादपरान्तरे ।

तस्मात्तिष्ठ त्वमत्रेति प्रजाभो वयसेकका:।
तयोक्तं त्वां विना नाथ नात्र मे नगरे धृतिः ॥
तच्छ्रुत्वा देवपादैः सा पुनः प्रोक्ता वरानना।
तथापि नैव युक्तं ते स्कन्धावारे प्रवर्तनम् ॥

किं तु।

रौद्रचित्तपुरे गत्वा देवि दुष्टाभिसन्धिना।
रचिता तिष्ठ निश्चिन्ता पदातिः स हि मेऽनघः ॥
ततोऽविवेकिता प्राह किमत्रास्माभिरुच्यताम्।
यदार्यपुत्रो जानीते तदेव करणक्षमम् ॥
ततो विनिर्गतो देवो महामोहादिभिः सह।
रौद्रचित्तपुरे देवी देवादेशेन सा गता ॥
ततोऽपि बहिरङ्गेषु पुरेषु किल वर्तते।
किंचित्कारणमाश्रित्य साधुना युक्तकारिणी ॥
जातश्चासीत्तदा पुत्रस्तयान्योऽप्यधुना किल।
निजभर्तुः समायोगादेतदाकर्णितं मया ॥
तदेवं नास्ति सा देवी यत्पुनर्मम कारणम्।
नगरागमने भद्र तदाकर्णय साम्प्रतम् ॥

अत्रान्तरे प्रज्ञाविशालयाभिहितागृहीतसंकेता। प्रियसखि दिनेन संसारिजीवेन नन्दिवर्धनवैश्वानरवक्तव्यतायां हिंसापरिणयनावसरे वैश्वानरमूलशुद्धिं निवेदयता पूर्वमभिहितमासीत् यदुत यादृशं तत्तामसचित्तनगरं यादृग्यासौ द्वेषगजेन्द्रो राजा यादृशी साविवेकिता यत्र तस्यामाख्यातामसचित्तनगराद्रौद्रचित्त-

पुरं प्रत्यागमनप्रयोजनमेतत् सर्वमुत्तरत्र कथयिष्याम इति तदिदमधुना तेन संसारिजीवेन समस्तं निवेदितमिति। अगृहीतसङ्केतयाभिहितं। साधु प्रियसखि साधु सुन्दरं मम स्मारितं भवत्या। ततः प्रज्ञाविशालया संसारिजीवं प्रत्यभिहितं। भद्र यदा विचक्षणाचार्येण नरवाहननरेन्द्राय विमर्शप्रकर्षवक्तव्यतां कथयता तत्र रिपुदारणस्य सतस्तस्यामेव परिषदि निषण्णस्य समाकर्णयतो निवेदितमेवमविवेकितापूर्वचरितं तदा किं विज्ञातमासीद्भवता यदुत यासौ वैश्वानरस्य माताभूत्तन्दिवर्धनकाले मम च धात्री सैवेयमविवेकिता साम्प्रतं शैलराजस्य जननी वर्तते मम च पुनर्धात्रीति किं वा न विज्ञातमिति। संसारिजीवेनोक्तं। भद्रे न किंचित्तदा मया विज्ञातं। अज्ञानजनित एव मे समस्तोऽपि निवेदयिष्यमाणोऽनर्थपरम्पराप्रबन्धः। केवलं तदाहं चिन्तयामि यथा कथानिकां कांचिदेष प्रव्रजितकस्तातायकथयति। न पुनस्तद्भावार्थमहं लक्षयामि स्म यथेयं साम्प्रतमगृहीतसङ्केता न लक्षयति। अगृहीतसङ्केतयाभिहितं। भद्र किमन्यः कश्चिद्भावार्थो भवति। संसारिजीवः प्राह। बाढं भद्रे नास्ति प्रायेण मदीयचरिते भावार्थरहितमेकमपि वचनं। ततो न भवत्या कथानकमात्रेण सन्तोषो विधातव्यः किं तर्हि भावार्थोऽपि बोद्धव्यः। स च परिस्फुट एव भावार्थः। तथाप्यगृहीतसङ्केते यत्र क्वचित्र बुध्यते भवती तत्र प्रज्ञाविशाला प्रष्टव्या। यतो बुध्यते सभावार्थमेषा मदीयचरितं। अगृहीतसङ्केतयोक्तं। एवं करिष्यामि। प्रस्तुतमभिधीयतां॥

ततो विचक्षणसूरिर्वचनमनुसंदधानः संसारिजीवः कथानकशेषमिदमाह । यदुत । ततो विमर्शेनाभिहितं । भद्र वर्णय यदिहागमनकारणं भद्रस्य । शोकेनाभिहितम् ।

आस्तेऽत्र नगरेऽद्यापि वयस्योऽत्यन्तवल्लभः ।
मम जीवितसर्वस्वं मतिमोहो महाबलः ॥
तद्दर्शनार्थमायातस्ततोऽहं भद्र साम्प्रतम् ।
आवासितं महाटव्यां मुक्ता देवस्य साधनम् ॥

विमर्शेनोक्तम् ।

स कस्मात्स्वामिना सार्धं न गतस्तत्र साधने ।
शोकः प्राह स देवेन धारितोऽत्रैव पत्तने ॥
उक्तश्चासौ यथा नित्यं न मोक्तव्यं त्वया पुरम् ।
मतिमोह क्षमेवास्य यतः संरक्षणक्षमः ॥
ततः प्रभुः देवाज्ञां संस्थितोऽत्र पुरे पुरा ।
एतन्निवेदितं तुभ्यं प्रविशामोऽधुना वयम् ॥
विमर्शः प्राह सिद्धिस्ते तुष्टः शोको गतः पुरे ।
विमर्शश्च ततस्तेदं प्रकर्षं प्रत्यभाषत ॥
भद्र या साधनाधारा प्रोक्तानेन महाटवी ।
गत्वा तस्यां प्रपश्यावो रागकेसरिसन्निभम् ॥
प्रकर्षः प्राह को वात्र विकल्पो माम गम्यताम् ।
ततः प्रचलितौ तूर्णं हृष्टौ स्वस्रीयमातुलौ ॥
ततो विलंघ्य वेगेन मार्गं पवनगामिनौ ।
प्राप्तौ तौ मध्यमे भागे महाटव्याः प्रयःफकैः ॥

अथ तत्र महामोहं रागकेसरिसंयुतम्।
युक्तं द्वेषगजेन्द्रेण चतुरङ्गबलान्वितम्॥
आवासितं महानद्याः पुलिनेऽतिमनोरमे।
महामण्डपमध्यस्थं वेदिकायां प्रतिष्ठितम्॥
महासिंहासनारूढं भटकोटिविवेष्टितम्।
गत्वा स नातिदूरं तौ दृत्तास्थानं प्रपश्यतः॥

ततो विमर्शेनाभिहितं। भद्र प्राप्तौ तावदावामभीष्टप्रदेशे। लङ्घिता महाटवी। दृष्टं महामोहसाधनं। दर्शनपथमवतीर्णोऽयं दत्तास्थानः सह रागकेसरिणा सपरिकरो महामोहराजः। तन्न युक्तोऽधुनावयोरस्मिन्नास्थाने प्रवेशः। मा भूदेतेषामास्थानस्थायिनां लोकानामपूर्वयोरावयोर्दर्शनेन काचिदाशङ्का। अन्यथात्रैव प्रदेशे व्यवस्थिताभ्यां दृश्यत एवेदं सकलमास्थानं। अतः कुतूहलेनापि न युक्तोऽत्र प्रवेशः। प्रकर्षेणोक्तं। एवं भवतु। केवलं मामेयं महाटवी इयं च महानदी इदं च पुलिनं अयं च महामण्डपः एषा च वेदिका एतच्च महासिंहासनं अयं च महामोहनरेन्द्रः एते च सपरिवाराः समस्ता अपि शेषनरेन्द्राः सर्वमिदमदृष्टपूर्वं अतो महद्‌दत्र कुतूहलं। तेनामीषामेकैकं नामतो गुणतश्च मामेन वर्ण्यमानं विस्तरतः श्रोतुमिच्छामि। अभिहितं च पूर्वं मामेन। यथा जानाम्यहं दृष्टस्य वस्तुनो यथावस्थितं तत्त्वं अतः समस्तं निवेदयितुमर्हति मामः। विमर्शः प्राह। सत्यमभिहितमिदं मया। केवलं भूरिप्रकारं परिप्रश्नितमिदं भद्रेण। ततः सन्दगवधार्य निवेदयामि। प्रकर्षः प्राह। विश्रब्धमवधारयतु मामः। ततो विमर्शेन

समन्तादवलोकिता महाटवी गिरीक्षिता महानदी विलोकितं पुलिनं निर्वर्णितो महामण्डपः निरूपिता वेदिका निभालितं महासिंहासनं विचिन्तितो महामोहराजा विचारिताः प्रत्येकं महताभिनिवेशेन सपरिकराः सर्वे नरेन्द्राः । हृदयेन प्रविष्टो ध्यानं । तत्र च व्युपरताशेषेन्द्रियग्रामवृत्तिर्निष्पन्दस्तिमितलोचनयुगलः स्थितः किंचित्कालं । ततः प्रकम्पयता शिरः प्रहसितमनेन । प्रकर्षः प्राह । माम किमेतत् । विमर्शेनोक्तं । अवगतं समस्तमिदमधुना मया । ततः समुद्भूतो हर्षः । प्रष्टव्यमन्यदपि साम्प्रतं यत्ते रोचते । प्रकर्षेणोक्तं । एवं करिष्यामि । तावदिदमेव प्रस्तुतं निवेदयतु मामः । विमर्शेनाभिहितं । यद्येवं ततस्तावदेषा चित्तवृत्तिर्नाम महाटवी ।

> इयं च भद्र विस्तीर्णविविधाद्भुतसंगता ।
> उत्पत्तिभूमिः सर्वेषां सद्रत्नानामुदाहृता ॥
> इयमेव च सर्वेषां लोकोपद्रवकारिणाम् ।
> महानर्थपिशाचानां कारणं परिकीर्तिता ॥
> सर्वेषामन्तरङ्गाणां लोकानामत्र संस्थिताः ।
> चित्तवृत्तिमहाटव्यां ग्रामपत्तनभूमयः ॥
> यद्यपि बहिरङ्गेषु निर्दिश्यन्ते पुरेषु ते ।
> किंचित्कारणमालोच्य विदद्भिर्ज्ञानचक्षुषा ॥
> तथापि परमार्थेन तेऽन्तरङ्गजनाः सदा ।
> अस्यामेव महाटव्यां विज्ञेयाः सुप्रतिष्ठिताः ॥

यतः ।

नैवान्तरङ्गलोकानां चित्तवृत्तिमहाटवीम् ।
विहाय विद्यते स्थानं बहिरङ्गपुरे क्वचित् ॥

ततश्च ।

सुन्दरासुन्दराः सर्वे येऽन्तरङ्गाः क्वचिज्जनाः ।
एनां विहाय ते भद्र न वर्तन्ते कदाचन ॥

अन्यच्च ।

मिथ्यानिषेविता भद्र भवत्येषा महाटवी ।
घोरसंसारकान्तारकारणं पापकर्मणाम् ॥
सम्यङ्निषेविता भद्र भवत्येषा महाटवी ।
अनन्तानन्दसन्दोहपूर्णा मोक्षस्य कारणम् ॥
किं चेह बहुनोक्तेन सुन्दरेतरवस्तुनः ।
सर्वस्य कारणं भद्र चित्तवृत्तिमहाटवी ॥
इयं चासारविस्तारा दृश्यते या महानदी ।
एषा प्रमत्तता नाम भद्र गीता मनीषिभिः ॥
इयं निद्रातटिस्तुङ्गा कषायजलवाहिनी ।
विज्ञेया मदिरास्वादविकथास्रोतसां निधिः ॥
महाविषयकल्लोललोलमालाकुला सदा ।
विकल्पानल्पमत्स्यौघपूरिता च निगद्यते ॥
योऽस्यास्तटेऽपि वर्तेत नरो बुद्धिविहीनकः ।
तमुन्मूल्य महावर्त्ते क्षिपत्येषा महापगा ॥
यस्तु प्रवाहे नीरस्य प्रविष्टोऽस्याः पुमानलम् ।
स यज्जीवति मूढात्मा क्षणमात्रं तदद्भुतम् ॥

यद्दृष्टं भवता पूर्वं रागकेसरिपत्तनम् ।
यच्च द्वेषगजेन्द्रस्य सम्बन्धि नगरं परम् ॥
ताभ्यामेषा समुद्भूता विगाह्येमां महाटवीम् ।
गत्वा पुनः पतत्येषा घोरसंसारनीरधौ ॥
अतोऽस्यां पतितो भद्र पुरुषस्तच्च सागरे ।
अवश्यं याति वेगेन तस्य चोत्तरणं कुतः ॥
ये गन्तुकामास्तत्रैव भीमे संसारसागरे ।
अत एव सदा तेषां वल्लभेयं महापगा ॥
ये तु भीताः पुनस्तस्माद्घोरात्संसारसागरात् ।
ते दूराद्दूरतो यान्ति विहायेमां महानदीम् ॥
तदेषा गुणतो भद्र वर्णिता तव निम्नगा ।
त्वं तदिलसितं नाम साम्प्रतं पुलिनं शृणु ॥
एतद्धि पुलिनं भद्र हास्यविब्बोकसैकतम् ।
विलासलासमङ्गीतहंससारसराजितम् ॥
स्नेहपाशमहाकाशग्दिकासधवलं तथा ।
घूर्णमानमहानिद्रामदिरामत्तदुर्जनम् ॥
केलिस्थानं सुविस्तीर्णं बालिशानां मनोरमम् ।
विज्ञाततत्त्वैर्दूरेण वर्जितं शीलशालिभिः ॥
तदिदं पुलिनं भद्र कथितं तव साम्प्रतम् ।
महामण्डपरूपं ते कथयामि सनायकम् ॥
अयं हि चित्तविक्षेपो नाम्ना संगीयते बुधैः ।
गुणतः सर्वदोषौघवासस्थानमुदाहृतः ॥

अत्र प्रविष्टमात्राणां विस्मरन्ति निजा गुणाः।
प्रवर्तन्ते महापापसाधनेषु च बुद्धयः॥
एतेषामेव कार्येण निर्मितोऽयं सुवेधसा।
राजानो येऽत्र दृश्यन्ते महामोहादयः किल॥
बहिरङ्गाः पुनर्लोका यदि मोहवशानुगाः।
स्युर्महामण्डपे भद्र प्रविष्टाः क्वचिदत्र ते॥
ततो विभ्रमसन्तापचित्तोन्मादप्रतप्नवान्।
प्राप्नुवन्ति न सन्देहो महामण्डपदोषतः॥
एवं भद्र प्रकृत्यैव महामण्डपसुचकैः।
एते नरेन्द्राः संप्राप्य मोदन्ते तुष्टमानसाः॥
बहिरङ्गाः पुनर्लोका मोहादासाद्य मण्डपम्।
एवं हि दौर्मनस्येन लभन्ते दुःखसागरम॥
अयं हि चित्तनिर्वाणकारिणीं निजवीर्यतः।
तेषामेकाग्रतां हन्ति सुखसन्दोहदायिनीम्॥
केवलं ते न जानन्ति वीर्यमस्य तपस्विनः।
प्रवेशमाचरन्यत्र तेन मोहात्पुनः पुनः॥
यैस्तु वीर्यं पुनर्ज्ञातं कथंचित् पुण्यकर्मभिः।
अस्य नैवात्र ते भद्र प्रवेशं कुर्वते नराः॥
एकाग्रमनसो नित्यं चित्तनिर्वाणयोगतः।
ततस्ते सततानन्दा भवन्त्यत्रैव जन्मनि॥
तदेष गुणतो भद्र चित्तविक्षेपमण्डपः।
मया निवेदितस्तुभ्यमधुना शृणु वेदिकाम्॥

एषा प्रसिद्धा लोकेऽत्र तृष्णानाम्नी सुवेदिका ।
अस्यैव च नरेन्द्रस्य कारणेन निरूपिता ॥
भद्रात एव त्वं पश्य महामोहेन यो निजः ।
कुटुम्बान्तर्गतो लोकः स एवास्यां निवेशितः ॥
ये तु शेषा महीपालास्तत्सेवामात्रवृत्तयः ।
एते निविष्टास्ते पश्य सर्वे सुत्कलमण्डपे ॥
एषा हि वेदिका भद्र प्रकृत्यैवास्य वल्लभा ॥
महामोहनरेन्द्रस्य स्वजनस्य विशेषतः ॥
अस्यां समुपविष्टोऽयमत एव मुहुर्मुहुः ।
सगर्वं वीक्षते लोकं सिद्धार्थोऽहं किलाधुना ॥
एतच्च शीणयत्येषा स्वभावेनैव वेदिका ।
स्वस्योपरिष्टादासीनं महामोहकुटुम्बकम् ॥
बहिरङ्गाः पुनर्लोका यदेनां भद्र वेदिकाम् ।
आरोहन्ति ततस्तेषां कीतस्यं दीर्घजीवितम् ॥
अन्यच्चैषा स्ववीर्येण तृष्णाख्या भद्र वेदिका ।
अत्रैव संस्थिता नित्यं भ्रामयत्यखिलं जगत् ॥
तदेषा गुणतो भद्र यथार्था वरवेदिका ।
मया निवेदिता तुभ्यमिदानीं शृणु विष्टरम् ॥
एतत्सिंहासनं भद्र विपर्यासाख्यमुच्यते ।
अस्यैव विधिना नूनं महामोहस्य कल्पितम् ॥
यदिदं लोकविख्यातं राज्यं यास्य विभूतयः ।
तत्राहं कारणं मन्ये नृपतेरस्य विष्टरम् ॥

यावच्चास्य नरेन्द्रस्य विद्यते वरविष्टरम् ।
इदं तावदहं मन्ये राज्यमेतास्य भूतयः ॥

यतः ।

अस्मिन्निविष्टो राजायं महासिंहासने सदा ।
सर्वेषामेव शत्रूणामगम्यः परिकीर्तितः ॥
यदा पुनरयं राजा भवेदस्माद्बहिः स्थितः ।
सामान्यपुरुषस्यापि तदा गम्यः प्रकीर्तितः ॥
एतद्धि विष्टरं भद्र बहिरङ्गजनैः सदा ।
आलोकितं करोत्येव रौद्रानर्थपरंपराम् ॥

यतः ।

तावत्तेषां प्रवर्तन्ते सर्वाः सुन्दरबुद्धयः ।
यावत्तैर्विष्टरे लोकैश्च दृष्टिर्न पातिता ॥
निबद्धदृष्टयः सन्तः पुनरत्र महासने ।
ते पापिनो भवन्त्युच्चैः कुतः सुन्दरबुद्धयः ॥

किं च ।

यत्तद्यावत् पुलिनस्य मण्डपस्य च वर्णितम् ।
वेदिकायाश्च तद्वीर्यं सर्वमत्र प्रतिष्ठितम् ॥
तदिदं गुणतो भद्र कथितं तव विष्टरम् ।
महामोहनरेन्द्रस्य निबोध गुणगौरवम् ॥
जराजीर्णकपोलापि चैषा भुवनविश्रुता ।
अमुष्येयमविद्याख्या गात्रयष्टिरुदाहृता ॥
एषा च संस्थिता भद्र सकलेऽपि जगत्त्रये ।

यत्करोति स्ववीर्येण तदाकर्णय सांप्रतम् ॥
अनित्येष्वपि नित्यत्वमशुचिष्वपि शुद्धताम् ।
दुःखात्मकेषु सुखतामनात्मस्वात्मरूपताम् ॥
पुद्गलस्कन्धरूपेषु शरीरादिषु वस्तुषु ।
लोकानां दर्शयत्येषा ममकारपरायणा ॥
ततस्ते बद्धचित्तत्वात्तेषु पुद्गलवस्तुषु ।
आत्मरूपमजानन्तः क्लिश्यन्तेऽनर्थकं जनाः ॥
तदेनां धारयन्नुच्चैर्गात्रयष्टिं महाबलः ।
जराजीर्णोऽपि नैवायं मुच्यते निजतेजसा ॥
अयं हि भद्र राजेन्द्रो जगदुत्पत्तिकारकः ।
तेनैव गीयते प्राज्ञैर्महामोहपितामहः ॥
ये रुद्रोपेन्द्रनागेन्द्रचन्द्रविद्याधरादयः ।
तेऽप्यस्य भद्र नैवाज्ञां लङ्घयन्ति कदाचन ॥

तथा हि ।

योऽयं स्ववीर्यदण्डेन जगच्चक्रं कुलालवत् ।
विभ्रम्य घटयत्येव कार्यभाण्डानि लीलया ॥
तस्यास्याचिन्त्यवीर्यस्य महामोहस्य भूपतेः ।
को नाम भद्र लोकेऽस्मिन्नाज्ञां लङ्घयितुं क्षमः ॥
तदेष गुणतो भद्र वर्णितस्ते नराधिपः ।
अधुना परिवारोऽस्य वर्ण्यते तं विचिन्तय ॥
केवलं कथयत्येवं मयि भद्र विशेषतः ।
केनाप्याकूतदोषेण न त्वं पृच्छसि किंचन ॥

ऊङ्कारमपि नो दत्से भावितश्च न लक्ष्यसे।
गिरःकम्पनखस्फोटविरहेण विभाव्यसे॥
निश्चलाचो मदीयं तु केवलं मुखमीक्षसे।
तदिदं नैव जानेऽहं बुध्यसे किं न बुध्यसे॥
प्रकर्षः प्राह मा मैवं माम वोचः प्रसादतः।
तवाहं नास्ति तल्लोके यन्न बुध्ये परिस्फुटम्॥
विमर्शः प्राह जानामि बुध्यसे त्वं परिस्फुटम्।
अयं तु विहितो भद्र परिहासस्त्वया सह॥

यतः।

विज्ञातपरमार्थोऽपि बालबोधनकाम्यया।
परिहासं करोत्येव प्रसिद्धं पण्डितो जनः॥
बालो विनोदनीयश्च मादृशां भद्र वर्तसे।
अतो मत्परिहासेन न कोपं गन्तुमर्हसि॥
अन्यच्च जानतापीदमस्माकं हर्षवृद्धये।
त्वया प्रश्नोऽपि कर्तव्यः क्वचिदप्रस्तुतवस्तुनि॥

किंच।

अविचार्य मया सार्धं वस्तुतत्त्वं यथास्थितम्।
समच श्रुतमात्रेण भद्र न ज्ञातुमर्हसि॥
ऐदम्पर्यमतस्तात बोद्धव्यं यत्नतस्त्वया।
अज्ञातपरमार्थस्य मा भूद्भौतकथानिका॥

प्रकर्षः प्राह। मम कथय कीदृशी पुनः सा भौतकथानिका। विमर्शेनाभिहितं। भद्र समाकर्णय। अस्ति क्वचिन्नगरे जन्म-

बधिरः सदाशिवो नाम भौताचार्यः। स च जराजीर्णकपोलः समुपहासपरेण हस्तसंज्ञयाभिहितः केनचिद्धूर्तबटुना। यथा भट्टारक किलैवं नीतिशास्त्रेषु पठ्यते। यदुत।

विषं गोष्ठी दरिद्रस्य जन्तोः पापरतिर्विषम्।
विषं परे रता भार्या विषं व्याधिरुपेक्षितः॥

अतः शीघ्रमस्य बाधिर्यस्य करोतु किंचिदौषधं भट्टारकः। न खलूपेक्षितुं युक्तोऽयं महाव्याधिः। ततः प्रविष्टो भौताचार्यस्य मनसि स एवाग्रहविशेषः। ततोऽभिहितोऽनेन शान्तिशिवो नाम निजशिष्यः। यदुत गच्छ त्वं वैद्यभवने मदीयबधिरत्वस्य विज्ञाय भेषजं गृहीत्वा च तत्तूर्णमागच्छ। मा भूत्कालहरणेन व्याधिवृद्धिरिति। शान्तिशिवेनाभिहितं। यदाज्ञापयति भट्टारकः। ततः प्राप्तोऽसौ वैद्यभवने। दृष्टो वैद्यः। इतश्च हस्तौ वेलां रमणं विधाय द्वारात्समागतो वैद्यपुत्रः। ततः क्रोधान्धबुद्धिना वैद्येन गृहीतातिपरुषा वालमयी रज्जुः। बद्धश्चारटन्नसौ निजदारकः स्तम्भके। गृहीतो लकुटः। ताडयितुमारब्धः। ताड्यमाने च निर्दयं तत्र दारके शान्तिशिवः प्राह। वैद्य किमित्येनमेवं ताडयसि। वैद्येनोक्तं। न शृणोति कथंचिदप्येष पापः। अत्रान्तरे हाहारवं कुर्वाणा वेगेनागत्य लग्ना वैद्यस्य हस्ते वारणार्थं भार्या। वैद्यः प्राह। मारणीयो मयायं दुरात्मा यो ममैवं कुर्वतोऽपि न शृणोति। अपसरापसर त्वमितरथा तवापीयमेव गतिः। तथापि लगन्ती ताडिता सापि वैद्येन। शान्तिशिवेन चिन्तितं। अये विज्ञातं भट्टारकस्यौषधं। किमधुना पृष्टेन। ततो निर्गत्य

गतोऽसौ माहेश्वरगृहे । याचिता तेन रज्जुः । समर्पिता माहेश्वरैः शणमयी । शान्तिशिवः प्राह । अलमनया । मम वालमय्यातिप्रयोजनं । दत्ता तादृश्येव माहेश्वरैरभिहितं च । भट्टारक किं पुनरनया कार्यं । शान्तिशिवेनोक्तं । सुगृहीतनामधेयानां सदाशिवभट्टारकाणामौषधं करिष्यते । ततो गृहीत्वा रज्जुं गतो मठे शान्तिशिवः । तत्र च दृष्ट्वा गुरुं कृतमनेन विषमभृकुटितरङ्गभङ्गकरालं वक्त्रकुहरं बद्धश्चारटीसुंसुमसौ मठमध्यस्तम्भके निजाचार्यः । ततो गृहीतदृढलकुटोऽसौ प्रवृत्तस्तस्य ताडने । इतश्च माहेश्वरैश्चिन्तितं । गच्छामो भट्टारकाणां क्रियायां क्रियमाणायां प्रत्यासन्नाः स्वयं भवामः । ततः समागतास्ते । दृष्टो निर्दयं ताडयन्नाचार्यं शान्तिशिवः । तैरभिहितं । किमित्येनमेवं ताडयसि । शान्तिशिवः प्राह । न शृणोति कथंचिदप्येष पापः । ततो विहितः सदाशिवेन म्रियमाणेन महाक्रन्दभैरवः शब्दः । ततो लग्ना वारणार्थं हाहारवं कुर्वन्तः शान्तिशिवस्य माहेश्वराः । शान्तिशिवः प्राह । मारणीयो मयायं दुरात्मा यो ममैवं कुर्वतोऽपि न शृणोति । अपसरतापसरत यूयमितरथा युष्माकमप्येषैव वार्तेति । तथापि वारयतो माहेश्वरानपि प्रवृत्तस्ताडयितुमसौ लकुटेन । ततो बद्धलास्तैर्या रे तात तातेति ब्रुवाणैरुद्दालितस्तस्य हस्ताल्लकुटः । चिन्तितं च । नूनं ग्रहगृहीतोऽयं । ततो बद्ध्वा तैस्ताडयित्वा पश्चाद्बाहुबन्धेन शान्तिशिवः । विमोचितः सदाशिवः । लब्धा चेतना । जीवितो दैवयोगेन । माहेश्वरैरभिहितं । शान्तिशिव किमिदं भगवतस्त्वया कर्तुमारब्धमासीत् । शान्तिशिवः प्राह ।

ननु बधिरताया वैद्योपदेशादौषधं। किंच। मुञ्चत मां। मा भट्टारकव्याधिमुपेचध्वं। माहेश्वरैश्चिन्तितं। महाग्रहोऽयं। ततोऽभिहितमेतैः। मुञ्चामस्त्वां यद्येवं न करोषि। शान्तिशिवः प्राह। किमहं भवतां वचनेन स्वगुरोरपि भैषजं न करिष्यामि। अहं हि यदि परं तस्यैव वैद्यस्य वचनेन तिष्ठामि नान्यथा। ततः समाहूतो वैद्यः। निवेदितस्तस्मै वृत्तान्तः। ततो मुखमध्ये हस-ताभिहितं वैद्येन। भट्टारक न बधिरोऽसौ मदीयो दारकः। किं तर्हि पाठितो मया क्लेशेन वैद्यकशास्त्राणि। स तु रमणशीलतया मम रटतोऽपि तदर्थं न शृणोति। ततो मया रोषात्ताडितः। तस्येदमौषधं। किंच। प्रगुणीभूतः खल्वयं साम्प्रतं तव प्रभावा-दनेनैव भैषजेन। तस्मादतःपरं न कर्तव्यं मदीयवचनेन त्वयास्येद-मौषधमिति। शान्तिशिवेनाभिहितं एवं भवतु। भट्टारकैर्हि प्रगुणैर्मम प्रयोजनं। ते च यदि प्रगुणास्ततः किमौषधेन। ततो मुक्तः शान्तिशिवः॥

तदेषा भद्र भौतकथानिका श्रुतमाचग्राहिणस्तवापि मया सार्धमविचारयतो मा भूदित्येवमयं परिचोदितस्त्वं मयेति। प्रकर्षः प्राह। साधु साधूक्तं मामेन। पृच्छामि तर्हीदानीं किंचिद्भवन्तं। विमर्शेनोक्तं। प्रश्नयतु भद्रः। प्रकर्षः प्राह। माम यद्येवं ततो विज्ञातेयं मया समस्तान्तरङ्गलोकाधारभूता बहिरङ्गलोकानां सर्वसुन्दरासुन्दरवस्तुनिर्वर्तिका सभावार्था चित्तवृत्तिर्महाटवी। एतानि तु महानदीपुलिनमहामण्डपवेदिकासिंहासनगाचयष्टि-नरेन्द्ररूपाणि वस्तूनि यानि भवता प्रमत्ततातद्विलसितचित्त-

विक्षेपतृष्णाविपर्यासाविद्यामहामोहाभिधानानि निवेदितानि मया भावार्थमधिकृत्य न सम्यग्विज्ञातानि। विकल्पितानि मया यथानाम्ना परमेतानि भिद्यन्ते नार्थेन। यतः सर्वाण्यपि पुष्टिकारणतयामीषामन्तरङ्गलोकानामनर्थकारणतया च बहिरङ्गजनानां समानानि वर्तन्ते। ततो यद्येतेषामस्ति कश्चिदर्थेन भेदस्तं मे निवेदयतु मामः। विमर्शः प्राह। ननु निवेदित एव प्रत्येकमेतेषां गुणान् वर्णयता मया परिस्फुटोऽर्थभेदः। तथापि स यदि न विज्ञातो भद्रेण ततः पुनरपि निवेदयामि। ततः कथितो विमर्शेन महानद्यादीनां वस्तूनां प्रत्येकं भावार्थः। बुद्धः प्रकर्षेण॥ अत्रान्तरे नरवाहनः प्राह। भदन्त वयमपि बोधनीयास्तेषां भावार्थं। ततः प्रबोधितो नरवाहननरेन्द्रोऽपि तेन भगवता विचक्षणसूरिणा। ततोऽगृहीतसङ्केतयाभिहितं। भद्र संसारिजीव तर्हि यद्येवं ततोऽहमपीदानीं तेषां महानद्यादिवस्तूनां बोधनीया भवतार्थं वेदनीया भवतार्थभेदं। संसारिजीवेनोक्तं। भद्रे स्पष्टदृष्टान्तमन्तरेण न त्वया सुखावसेयमेतेषां प्रविभक्तं स्वरूपं। अतो दृष्टान्तं कथयिष्ये। अगृहीतसङ्केतयोक्तं। अनुग्रहो मे। संसारिजीवेनाभिहितं।

अस्ति संभावितसमस्तवृत्तान्तं भुवनोदरं नाम नगरम्। तत्र च निवारको हरिहरहिरण्यगर्भादीनामपि प्रभुशक्तेरनादिर्नाम राजा। तस्य च नीतिमार्गनिपुणा विच्छेदकारिणी कुयुक्तिमिथ्याविकल्पजल्पानां संस्थितिर्नाम महादेवी। तयोश्चात्यन्तवल्लभोऽस्ति वेल्लहलो नाम तनयः। स च गाढ़माहारप्रियो दिवानिशमनवरतं

विविधखाद्यपेयानि भक्षयन्नास्ते । ततः संजातं महाजीर्णं प्रकुपिता दोषाः संपन्नोऽन्तर्लीनो ज्वरः । तथापि न विच्छिद्यते तस्याहाराभिलाषः । प्रवृत्ता चोद्यानिकागमनेच्छा । ततः कारिता भूरिप्रकारा भक्ष्यविशेषाः । तांश्च पश्यतस्तस्य एनमेनं च भक्षयिष्यामीति प्रवर्तन्ते चित्तकल्लोलाः । लौल्यातिरेकेण च भक्षितं सर्वेषामाहारविशेषाणां स्तोकस्तोकं । ततः परिवेष्टितो मित्रवृन्देन परिकरितोऽन्तःपुरेण पठता बन्दिवृन्देन ददद्दानं विविधैर्विलासैर्महता विमर्देन प्राप्तो मनोरमे कानने । निविष्टं सुखमासनं । तत्र चोपविष्टस्य विरचिताः पुरतो विविधाहारविस्ताराः । ततस्त्याहारलेशभक्षणेन पवनस्पर्शादिना गाढतरं प्रवृद्धो ज्वरः । लक्षितश्च पार्श्ववर्तिना समयज्ञाभिधानेन महावैद्यसुतेन । यदुतातुरवदनो दृश्यते कुमारः । ततो दत्तस्तेन शङ्खयोर्हस्तः । निरूपितानि सन्धिस्थानानि । निश्चितमनेन । यथा ज्वरितः खल्वयं कुमारः । ततोऽभिहितं समयज्ञेन । देव न युक्तं तव भोक्तुं । प्रबलज्वरं ते शरीरं वर्तते । यतोऽत्यन्तमातुरा घूर्णते दृष्टिः । आतामस्निग्धं वदनकमलं । द्रगद्रगायेते शङ्खौ । स धमायन्ते सन्धिस्थानानि । ज्वलतीव बहिस्त्वग् । दहतीव हस्तं । ततो निवर्तस्व भोजनात् । गच्छ प्रच्छन्नापवरके । भजस्व निवातं । कुरुष्व लङ्घनानि । पिब क्वथितमुदकं । समाचर विधिनास्य सर्वां प्रतिक्रियामितरथा सन्निपातस्ते भविष्यति ॥ स तु वेल्लहलो दत्तदृष्टिः पुरतो विन्यस्ततस्मिन्नाहारविस्तारे एतदेतच्च भक्षयामीति भ्रमयन्नपरापरेषु खाद्यप्रकारेषु स्वीयमन्तःकरणं नाकर्णयति तत्तदा वैद्यसुतभाषितं

नाकलयति तस्य हितरूपतां न चेतयते तं वारणार्थं लगन्तमपि शरीरे। ततो वारयतो वचनेन धारयतो हस्तेन तस्य समयज्ञस्य समक्षमेव बलात्प्रवृत्तो भक्षयितुमाहारं वेल्लहलः। ततः समुत्कटतयाजीर्णस्य प्रबलतया ज्वरस्य न क्रमतेऽसौ गलकेनाहारः। तथापि बलादेव क्रामितः कियानपि वेल्लहलेन। ततः समुद्वृत्तं हृदयं संजातः कलमलकः संपन्नं वमनं विमिश्रितं च तेन वमनेन सर्वमपि पुरतो विन्यस्तं भोजनं। ततश्चिन्तितं वेल्लहलेन।

क्षुधाक्षामं शरीरं मे नूनमूनतया भृशम्।
एतद्धि वायुनाक्रान्तमन्यथा वमनं कुतः॥

एवं स्थिते।

रिक्तकोष्ठं शरीरं मे वाताक्रान्तं विनंक्ष्यति।
ततश्च प्रीणयामीदं भुञ्जे भूयोऽपि भोजनम्॥
ततोऽसौ वान्तिसंमिश्रं तत्पुरःस्थितभोजनम्।
निर्लज्जो भोक्तुमारब्धः सर्वेषामपि पश्यताम्॥
तद्दृष्ट्वा समयज्ञेन प्रोक्तः पूत्कुर्वता भृशम्।
देव देव न युक्तं ते कर्तुं काकस्य चेष्टितम्॥
मा च राज्यं शरीरं च यशश्च शशिनिर्मलम्।
देव हारय भक्तेन त्वमेकदिनभाविना॥
अन्यच्चेदं मता निस्त्यममेध्यं शौचदूषणम्।
उद्वेगहेतु नो भक्तं देवः खादितुमर्हति॥
देव दुःखात्मकं चेदं सर्वथाधिप्रकोपनम्।
गाढमुल्बणदोषाणां विशेषेण भवादृशाम्॥

का वास्थोपरि ते मूर्छा यद्वाह्यं पुद्गलात्मकम्।
अतो देव विहायेदमात्मानं रच यत्नतः॥
इत्थं च समयज्ञस्य रटतोऽपि वचस्तदा।
स राजपुत्रः श्रुत्वापि स्वचित्ते पर्यचिन्तयत्॥
अहो विमूढः खल्वेष समयज्ञो न बुध्यते।
नूनं मदीयप्रकृतिं नावस्थां न हिताहितम्॥
यो वातलं चुधाचामं भुञ्जानं मां निषेधति।
एतच्च दूषयत्येष भोजनं देवदुर्लभम्॥
तत्किमेतेन मूर्खेण भुञ्जे भोज्यं यथेच्छया।
स्वार्थसिद्धिर्मया कार्या किं ममापरचिन्तया॥
ततः परिजनेनोच्चैः सहितेऽपि पुनः पुनः।
समयज्ञे रटत्येवं भचितं तेन भोजनम्॥
ततः प्रबलदोषोऽसौ भचणानन्तरं तदा।
सन्निपातं महाघोरं संप्राप्तो निजकर्मणा॥
पुनर्वमनबीभत्से ततश्चैव भूतले।
पश्यतां पतितस्तेषां काष्ठवन्नष्टचेतनः॥
स लोलमानस्तत्रैव जघन्ये वान्तिकर्दमे।
कुर्वन् घुरघुरारावं श्लेष्मापूर्णगलस्तदा॥
अनाख्येयामचिन्त्यां च तेषामुद्वेगकारिणीम्।
अशक्यप्रतिकारां च प्राप्तोऽवस्थां सुदारुणाम्॥
न शक्यः समयज्ञेन चातुरेण न बान्धवैः।
तदवस्थो न राज्येन न देवैर्नापि दानवैः॥

केवलं तदवस्थेन लुठताशुचिकर्दमे ।
अनन्तकालं तत्रैव स्थातव्यं तेन पापिना ॥
तदेष भद्रे दृष्टान्तः प्रस्तुतानां परिस्फुटः ।
वस्तूनां भेदसिद्ध्यर्थं मया तुभ्यं निवेदितः ॥
ततोऽगृहीतसङ्केता प्राह विकलमानसा ।
संसारिजीव नैवेदं पौर्वापर्येण युज्यते ॥

यतः ।

नद्यादिवस्तुभेदार्थं कथितं मे कथानकम् ।
त्वयेदं तत्र मे भाति कोष्ट्रो नीराजना क्व च ॥
अथास्ति कश्चित्सम्बन्धो हन्त प्रस्तुतवस्तुनि ।
स्फुटः कथानकस्यास्य स इदानीं निवेद्यताम् ॥
ततः संसारिजीवेन तद्दार्ष्टान्तिकयोजने ।
बहुभाषेण खिन्नेन तत्सखी संप्रचोदिता ॥

कथम् ।

अस्याः प्रज्ञाविशाले त्वं निःशेषं मत्कथानकम् ।
घटय प्रस्तुतार्थेन निजगेहिकथा स्फुटम् ॥
अथ प्रज्ञाविशालाह कामं भोः कथयामि ते ।
भद्रेऽगृहीतसङ्केते समाकर्णय सांप्रतम् ॥
यस्ते वेल्लहलो नाम राजपुत्रो निदर्शितः ।
एषोऽनेन विशालाचि प्रोक्तो जीवः सकर्मकः ॥
स एव जायते भद्रे नगरे भुवनोदरे ।
अनादिसंस्थितिस्तुतः स एव परमार्थतः ॥

स एवानन्तरूपत्वाद्बहिरङ्गजनः स्मृतः
सामान्यरूपमुद्दिश्य स चैकः परिकीर्तितः ॥
मनुष्यभावमापन्नः स प्रभुः सर्वकर्मणाम् ।
महाराजसुतस्तेन स प्रोक्तोऽनेन सुन्दरि ॥
तस्यैव सत्ता विज्ञेया चित्तवृत्तिर्महाटवी ।
सुन्दरेतरवस्तूनां सा तस्यैव च कारणम् ॥
केवलं यावद्द्यापि स आत्मानं न बुध्यते ।
महामोहादिभिस्तावल्लुप्यते सा महाटवी ॥
यदा तु तेन विज्ञातः स स्यादात्मा कथंचन ।
तदीयं वीक्ष्य नश्यन्ति महामोहादयस्तदा ॥
यावच्च ते विवर्तन्ते चित्तवृत्तौ महाभटाः ।
महानर्थादिवस्तूनि तावत्तस्यां भवन्ति वै ॥
तेषामेव यतस्तानि क्रीडास्थानानि भूभुजाम् ।
अतस्तेषु विनष्टेषु तेषां नाशः प्रकीर्तितः ॥

एवं स्थिते ।

अविज्ञातात्मरूपस्य भद्रे जीवस्य कर्मणा ।
महामोहनरेन्द्रे च सप्रतापेऽटवीस्थिते ॥
यदा तानि विवर्धन्ते जीवस्य बहु मन्यते ।
महानर्थादिवस्तूनि नितरामात्मवैरिकः ॥
तदा तानि स्ववीर्येण यत्कुर्वन्ति पृथक् पृथक् ।
जीवस्य तद्विशेषार्थं दृष्टान्तोऽयं निवेदितः ॥
स चैवं योज्यते भद्रे प्रस्तुतार्थेन पण्डितैः ।

महानद्यादिवस्तूनां प्रत्येकं भेदसिद्धये ॥
यथाहारप्रियो नित्यं राजपुत्रो निवेदितः ।
तथायमपि विज्ञेयो जीवो विषयलम्पटः ॥
यथा च तस्य संजातमजीर्णं भूरिभक्षणात् ।
तथास्यापि कुरङ्गाक्षि कर्माजीर्णं प्रचक्षते ॥
पापाज्ञानात्मकं तच्च वर्तते कर्म दारुणम् ।
यतः प्रमत्ततोद्भूता तज्जन्यं तत्पुरद्वयम् ॥
यथा प्रकुपितास्तस्य दोषा जातस्ततुज्वरः ।
तथा रागादयोऽस्यापि वर्धन्ते ज्वरहेतवः ॥
यथा तथास्थितस्यापि बुद्धिर्भोज्येषु धावति ।
नरेन्द्रदारकस्येह तथास्यापि दुरात्मनः ॥

तथाहि ।

मनुष्यभावमापन्नः कर्माजीर्णं सुदारुणम् ।
रागादिकोपनं मूढश्चित्तज्वरविधायकम् ॥
जीवो न लक्षयत्येव ततश्चास्य प्रवर्तते ।
अहितेषु सदा बुद्धिः प्रकामं सुखकाम्यया ॥
तथाहि खदते मद्यं निद्रात्यन्तं सुखायते ।
विकथा प्रतिभात्युच्चैरस्यानेकविकल्पना ॥
इष्टः क्रोधः प्रियो मानो माया चात्यन्तवल्लभा ।
लोभः प्राणसमो मन्ये रागद्वेषौ मनोमतौ ॥
कान्तः स्पर्शो रसोऽभीष्टः कामं गन्धश्च सुन्दरः ।
अत्यन्तदयितं रूपं रोचते च कलध्वनिः ॥

विलेपनानि ताम्बूलमलङ्काराः सुभोजनम्।
माल्यं वरस्त्रियो वस्त्रं सुन्दरं प्रतिभासते॥
आसनं ललितं यानं शयनं द्रव्यसञ्चयाः।
अलीककीर्तिश्च जने रुचितास्य दुरात्मनः॥
चित्तवृत्तिमहाटव्यां भद्रे सततवाहिनी।
महानदी वहत्युच्चैः सेयमस्य प्रमत्तता॥
यथा च तद्वशस्यास्य राजपुत्रस्य सुन्दरि।
समुत्पन्ना विलासेच्छा यातुमुद्यानिकां मतिः॥
कारितानि च भोज्यानि लौल्येन प्राशितानि च।
निर्गतश्च विलासेन पुरात्प्राप्तश्च कानने॥
निविष्टमासनं दिव्यमुपविष्टश्च तत्र सः।
विस्तारितं पुरो भक्तं नानाखाद्यकसंयुतम्॥
तथास्यापि प्रमत्तस्य जीवस्य वरलोचने।
कर्माजीर्णात्समुत्पन्ने भीषणेऽपि मनोज्वरे॥
जायन्ते चित्तकल्लोला नानारूपाः क्षणे क्षणे।
यथोपार्ज्य धनं भूरि विलसामि यथेच्छया॥
करोम्यन्तःपुरं दिव्यं भुञ्जे राज्यं मनोहरम्।
महाप्रासादसङ्घातं कारये काननानि च॥

ततश्च।

महाविभवसंपन्नः क्षपिताखिलवैरिकः।
श्लाघितः सर्वलोकेन पूरितार्थमनोरथः॥
शब्दादिसुखसन्दोहसागरे मग्नमानसः।

तिष्ठामि सततानन्दो नान्यन्मानुष्यके फलम् ॥
सेयमुद्यानिकाकाङ्क्षा विज्ञेया सुन्दरि त्वया ।
ततो जीवो महारम्भः कुरुते द्रव्यसञ्चयम् ॥
यथेष्टं दैवयोगेन विधत्तेऽन्तःपुरादिकम् ।
शब्दादिसुखलेशं च किंचिदास्वादयेदपि ॥
अस्य जीवस्य जानीहि तदिदं मृगवीक्षणे ।
कारणं मृष्टभोज्यानां तम्बूलानां च भक्षणम् ॥
ततोऽलीकविकल्पैश्च सुखनिर्भरमानसः ।
विलाससलास्यसङ्गीतहास्यविब्बोकतत्परः ॥
युतो दुर्ललितैर्नित्यं द्यूतमद्यरतिप्रियः ।
सन्मार्गनगराद् दूरे याति दौःशील्यकानने ॥
एतन्महाविमर्देन पुरनिर्गमनं मतम् ।
उद्यानप्रापणं चेदं विद्धि नीलाब्जलोचने ॥
स मिथ्याभिनिवेशाख्ये स्थितो विस्तीर्णविष्टरे ।
कर्माख्यपरिवारेण रचितानि ततोऽग्रतः ॥
मनोहराणि चित्राणि लब्धास्वादो विशेषतः ।
प्रमादद्वन्द्वभोज्यानि सुन्दरत्वेन मन्यते ॥
प्रमत्ततामहानद्याः पुलिनं पद्मलोचने ।
तत्तद्विलसितं विद्धि वृत्तान्तस्यास्य कारणम् ॥
ततो यथासलेशेन भक्षितेन तनुज्वरः ।
वायुसर्पादिभिर्योगैर्वर्धितमस्य दारुणः ॥
चचितस्य सुवैद्येन वारितस्य सुभोजनात् ।

न चासौ बुध्यते किंचिद्धीजनाचिप्तमानसः ॥
जीवस्यापि तथा भद्रे कर्माजीर्णाद्भवो ज्वरः।
प्रमादात्तेन वर्धेत तथैवाज्ञानवायुना ॥
लङ्घयन्ति च तं दृष्ट्वा धर्माचार्या महाधियः।
प्रमयज्ञमहावैद्या वारयन्ति च देहिनम् ॥

कथम्।

अनादिभवकान्तारे भ्रान्त्वा भद्रातिसुन्दरम्।
अवाप्य मानुषं जन्म महाराज्यमिवातुलम् ॥
कर्माजीर्णज्वराक्रान्तं प्रमादमधुनापि भोः।
मा सेवस्व महामोहसंनिपातस्य कारणम् ॥
कुरुष्व ज्ञानचारित्रसम्यग्दर्शनलक्षणाम्।
चित्तज्वरविघाताय जैनीं भद्र प्रतिक्रियाम् ॥
स तु प्रमादभोज्येषु चिप्तचित्तो न बुध्यते।
तत्ताद्वृशं गुरोर्वाक्यं पापो जीवः सपक्षितम् ॥

ततश्च।

उन्मत्त इव मत्त इव ग्राहग्रस्त इवातुरः।
गाढसुप्त इवोद्भ्रान्तो विपरीतं विचेष्टते ॥
स एष भद्रे सर्वोऽपि चित्तविक्षेपमण्डपः।
महानदीकूलसंस्थो जीवस्यास्य विजृम्भते ॥
यथा च राजपुत्रेण भोजनं चारुलोचने।
अगच्छदपि कण्ठेन गमितं लौल्यदोषतः ॥
तदनन्तरमेवोच्चैर्वान्तं तथैव भोजने।
जीवस्यापि विज्ञानीहि समानमिदमञ्जसा ॥

तथाहि ।

कर्माजीर्णज्वरग्रस्तः सदा विह्वलमानसः ।
जराजीर्णतनुक्षामो रोगार्दितशरीरकः ॥
सर्वथामक्षमो भोगे भोगानामेष वर्तते ।
तथापि जायते नास्य स्तोकापि विरतौ मतिः ॥
ततश्च गाढलौल्येन तथाभूतोऽपि सेवते ।
प्रमादवृन्दभोज्यानि वार्यमाणो विवेकिभिः ॥
शतप्राप्तौ सहस्रेच्छा सहस्रे लक्षरोचनम् ।
लक्षे कोटिगता बुद्धिः कोटौ राज्यस्य वाञ्छनम् ॥
राज्ये देवत्ववाञ्छास्य देवत्वे शक्रतामतिः ।
शक्रत्वेऽपि गतस्यास्य नेच्छापूर्तिः कथंचन ॥
सुपुष्टैर्वरयोषाभिः सर्वकामैर्मुहुर्मुहुः ।
नास्याभिलाषविच्छित्तिः कोटिशोऽपि निषेवितैः ॥
संटङ्कयाति ततो मूढः सर्वार्थान् सुखकाम्यया ।
ते तु दुःखाय जायन्ते सज्वरस्येव भोजनम् ॥
जलज्वलनदायादचौरराजादिभिस्तथा ।
तस्यार्थभोजनस्योच्चैर्बलादाच्छिद्यते ॥
इत्थमलकं घोरं वम्यमानः सहत्ययम् ।
आराटीर्मुञ्चति प्राज्याः कृपाहेतुर्विवेकिनाम् ॥
तदेषा चारुमर्यादा चित्तविक्षेपमण्डपे ।
जीवस्य विलसत्युच्चैस्तृष्णानाम्नी सुवेदिका ॥
यत्पुनर्निगदत्येवं तदा वेल्लहलः किल ।

वाताक्रान्तं शरीरं मे ततोऽभूद्वमनं मम ॥
एतच्च रिक्तकोष्ठत्वादायुनाभिभविष्यते ।
अतः संप्रणयामीदं भुङ्क्ते भूयोऽपि भोजनम् ॥
जीवोऽपि चिन्तयत्येव तदिदं तारवीक्षणे ।
पापज्वरवशादुच्चैर्नष्टे विभवसञ्चये ॥
मृतेषु च कलत्रेषु पुत्रेषु स्वजनेषु च ।
अन्येषु च विनष्टेषु चित्तावस्थेषु मन्यते ॥
न मया चेष्टितं नीत्या न कृतं चारु पौरुषम् ।
नाश्रितो वा वरस्वामी न कृता वा प्रतिक्रिया ॥
तेनेदं मम सर्वस्वं पत्नी वा चारुदर्शना ।
पुत्रा वा बान्धवा वापि विनष्टाः पश्यतोऽपि मे ॥
न चैषां विरहे नूनं वर्तेऽहं क्षणमप्यतः ।
उपार्जयामि भूयोऽपि तान्येवोत्साहयोगतः ॥
उपार्जितानि सन्नीत्या रक्षिष्यामि प्रयत्नतः ।
अजागलस्तनस्येव जीवितव्यं वृथान्यथा ॥
सर्वमस्य विजानीहि तदिदं सुभ्रु भावतः ।
जीवस्यास्य विपर्यासनामविष्टरचेष्टितम् ॥
यथा च भोक्तुमारब्धः स निर्लज्जतया पुनः ।
पश्यतः सर्वलोकस्य वान्तिसंमिश्रभोजनम् ॥
ततः सपरिवारेण तेन पूत्कुर्वता भृशम् ।
वारितः समयज्ञेन तद्दोषाश्च निवेदिताः ॥
स तु तत्र गुणारोपाद्भोजने बहुमानसः ।

तं रटन्तमनालोच्य भचणं कृतवानिति ॥
तथायमपि चार्वङ्गि जीवः कर्ममलीमसः ।
भुक्तोत्सृष्टेषु भोगेषु निर्लज्जः संप्रवर्तते ॥
परमाणुमया ह्येते भोगाः शब्दादयो मताः ।
सर्वे चैकैकजीवेन गृहीताः परमाणवः ॥
गृहीत्वा मुक्तपूर्वाश्च बहुशो भवकोटिषु ।
भुक्तवान्तास्ततः सत्यमेते शब्दादयोऽनघे ॥
यच्चास्य किंचिल्लोकेऽत्र चित्ताबन्धविधायकम् ।
जीवस्य वस्तु सद्भेद्ये तत्सर्वं पुद्गलात्मकम् ॥
तथापि भद्रे पापात्मा पश्यतां विमलात्मनाम् ।
आबद्धचित्तस्तत्रैव जाम्बाले संप्रवर्तते ॥
कृपापरीतचित्ताश्च भोगकर्दमलम्पटम् ।
तं जीवं वारयन्त्येते धर्माचार्याः प्रयत्नतः ॥

कथम् ।

अनन्तानन्दसद्वीर्यज्ञानदर्शनरूपकः ।
देवस्त्वं भद्र नो युक्तमतो भोगेषु वर्तनम् ॥
अन्यथामी विवर्तन्ते सर्वे भोगाः क्षणे क्षणे ।
अपरापररूपेण तुच्छमात्मानियन्धनम् ॥
वान्ताशुचिसमाश्चैते वर्णितास्तत्त्वदर्शिभिः ।
भद्रः परमदेवोऽपि भातोऽमून् भोक्तुमर्हसि ॥
दुःखोपढौकिताश्चामी दुःखरूपाश्च तत्त्वतः ।
दुःखस्य कारणं तेन वर्जनीया मनीषिणा ॥

ये च बाह्याणुनिष्पन्नास्तुच्छा गाढमनात्मकाः ।
तेषु कः पण्डितो रागं कुर्यादात्मस्वरूपवित् ॥
अतो ममोपरोधेन भद्र भोगेषु कुत्रचित् ।
अन्येषु च प्रमादेषु मा प्रवर्तिष्ट साम्प्रतम् ॥
तदेवं पद्मपत्राक्षि निवारयति सद्गुरौ ।
प्रमादभोजने सक्तः स जीवो हृदि मन्यते ॥
अहो विमूढः खल्वेष वस्तुतत्त्वं न बुध्यते ।
आल्हादजनकानेष यो भोगानपि निन्दति ॥

तथाहि ।

मद्यं वरस्त्रियो मांसं गान्धर्वं मृष्टभोजनम् ।
माल्यताम्बूलनेपथ्यविस्ताराः सुखमासनम् ॥
अलङ्काराः सुधा शुभ्रा कीर्तिर्भुवनगामिनी ।
सद्रत्ननिचयाः शूरं चतुरङ्गं महाबलम् ॥
राज्यं प्रणतसामन्तं यथेष्टाः सर्वसम्पदः ।
यद्येतद्दुःखहेतुस्ते किमन्यत्सुखकारणम् ॥
विप्रलब्धाः कुसिद्धान्तैः शुष्कपाण्डित्यगर्विताः ।
ये नूनमीदृशा लोके भोगभोजनवञ्चिताः ॥
ते मोहेन स्वयं नष्टाः परानपि कुमेधसः ।
नाशयन्ति हि तत्त्वे ते वर्जनीया विजानता ॥

तथाहि ।

यो भोगरहितो मोक्षो मन्यन्ते तदुदाहृतम् ।
तदर्थं काल्यजेहृष्टमिदं भोगसुखामृतम् ॥

एवंविधविकल्पैश्च गुरुवाक्यपराङ्मुखः।
अभूतगुणसङ्घातं तेषु भोगेषु मन्यते॥

कथम्।

स्थिरा ममैते शुद्धाश्च सुखरूपाश्च तत्त्वतः।
एतदात्मक एवाहमलमन्येन केनचित्॥
आस्तामेष गृहीतेन मोक्षेण प्रशमेन वा।
अहं तु नेदृशैर्वाक्यैरात्मानं वञ्चयामि भोः॥

ततश्च।

सद्धर्मविदनव्याजाद्गाढं पूत्कुर्वतोऽग्रतः।
गुरोरपि प्रवर्तेत प्रमादाशुचिकर्दमे॥
सा सर्वथमविद्याख्या जीवस्यास्य वरानने।
महामोहनरेन्द्रस्य गात्रयष्टिर्विजृम्भते॥
यथा स भोजनं भूयो भक्षयित्वा पुनर्वमन्।
संजातसन्निपातत्वात्पतितस्तत्र भूतले॥
लुठन्नितस्ततो गाढं मुञ्चन्नाक्रन्दभैरवम्।
अनाख्येयामचिन्त्यां च प्राप्तोऽवस्थां सुदारुणाम्॥
न चातः केनचिल्लोके तदवस्थः स्थितः परम्।
तथायमपि विज्ञेयो जीवः सर्वाङ्गसुन्दरि॥

तथाहि।

यदा प्रमत्ततायुक्तस्तद्विलासपरायणः।
विचित्रचित्ततृष्णार्तो विपर्यासवशंगतः॥
अविद्यान्धीकृतो जीवः सक्तः संसारकर्दमे।

आरोपितगुणग्रामस्तत्रैव विषयादिके ॥
सर्वज्ञं धर्मसूरिं वा वारयन्तं मुहुर्मुहुः ।
सुवैद्यसन्निभं पापो विमूढमिति मन्यते ॥

ततश्च ।

पापाजीर्णज्वराक्रान्तः स जीवो वान्तिसन्निभे ।
तं रटन्तमनालोच्यासत्प्रमादे प्रवर्तते ॥
तदा निःशेषदोषौघभरपूरितमानसे ।
सन्निपातसमो घोरो महामोहोऽस्य जृम्भते ॥
ततश्च तद्वशेनायं जीवः सुन्दरलोचने ।
पश्यतामेव निश्चेष्टो भवत्येव विवेकिनाम् ॥
मूत्रान्त्राशुचिजाम्बालवसारुधिरपूरिते ।
निर्बोलं निपतत्येव नरके वान्तिपिच्छले ॥
लुठतीतस्ततस्तत्र मुक्ताक्रन्दभैरवान् ।
सहते तीव्रदुःखौघं यद्वाचां गोचरातिगम् ॥
तथा विचेष्टमानं च वरगात्रि तपोधनाः ।
ज्ञानालोकेन पश्यन्ति तं जीवं शुद्धदृष्टयः ॥
केवलं सन्निपातेन समाक्रान्तं भिषग्वराः ।
अचिकित्स्यमिमं ज्ञात्वा वर्जयन्ति महाधियः ॥
ततश्च तदवस्थस्य तस्य तारविलोचने ।
कोऽन्यः स्यात्त्रायको जन्तोर्घोरदुःखौघसागरे ॥
अन्यच्च तदवस्थोऽपि जीवोऽयं वल्गुभाषिणि ।
प्रमादभोजनास्वादलाम्पट्यं नैव मुञ्चति ॥

दोषाः प्रबलतां यान्ति ततो मुष्णन्ति चेतनाम्।
अत्यर्थं च महामोहसन्निपातो विवर्धते॥

एवं च स्थिते।

संसारचक्रवालेऽत्र रोगमृत्युजराकुले।
अनन्तकालमासीनस्यकः सद्धर्मबान्धवैः॥
तदिदं निजवीर्येण जीवस्यास्य महाबलः।
सन्निपातसमो भद्र महामोहो विचेष्टते॥

किं च।

प्रवर्तकश्च सर्वेषां कार्यभूतश्च तत्त्वतः।
महामोहनरेन्द्रोऽयं नद्यादीनां सुलोचने॥
तदेवं राजपुत्रीयो दृष्टान्तोऽनेन सुन्दरि।
महानद्यादिवस्तूनां दर्शितो भेदसिद्धये॥
यद्यद्यापि न ते जाता प्रतीतिः सुपरिस्फुटा।
भूयोऽपीदं समासेन प्रस्पष्टं कथयामि ते॥
विषयोन्मुखता यास्य सा विज्ञेया प्रमत्तता।
तत्तदिलसितं विद्धि यद्भोगेषु प्रवर्तनम्॥
प्रवृत्तौ लौल्यदोषेण शून्यत्वं यत्तु चेतसः।
ज्ञेयः स चित्तविक्षेपो जीवस्यास्य मृगेक्षणे॥
तृप्तेरभावो भोगेषु भुक्तेषु सुबहुष्वपि।
उत्तरोत्तरवाञ्छा च तृष्णा गीता मनीषिभिः।
पापाङ्गेषु जातेषु ज्ञातमष्टेषु वा पुनः।
साध्योपायेषु यो यत्नो विपर्यासः स उच्यते॥

अनित्याशुचिदुःखेषु गाढं भिन्नेषु जीवतः।
विपरीता मतिस्तेषु या साविद्या प्रकीर्तिता॥
एतेषामेव वस्तूनां सर्वेषां यः प्रवर्तकः।
एतैरेव च यो जन्यो महामोहः स गीयते॥
तदेवं भिन्नरूपाणि तानि सर्वाणि सुन्दरि।
महानद्यादिवस्तूनि चिन्तनीयानि यत्नतः॥
प्राहाप्टहीतसङ्केता चारु चारु निवेदितम्।
सत्यं प्रज्ञाविशालासि नास्ति मे संशयोऽधुना॥
तत्तिष्ठ त्वं विशालाचि साम्प्रतं विगतः श्रमः।
निवेदयतु संसारिजीव एव ततः परम्॥
नरवाहनराजाय यद्विचक्षणसूरिणा।
निवेदितं प्रकर्षाय विमर्शेन च धीमता॥
ततः संसारिजीवेन प्रोक्तं विमललोचने।
निवेदयाम्यहं तत्ते विमर्शेन यदीरितम्॥
ततः प्रोक्तं विमर्शेन भद्र ज्ञातो यदि त्वया।
महानद्यादिभावार्थस्ततोऽन्यत्किं निवेद्यताम्॥
प्रकर्षः प्राह मे माम नामतो गुणतोऽधुना।
महामोहनरेन्द्रस्य परिवारं निवेदय॥
या चेयं दृश्यते स्थूला राजविष्टरसंस्थिता।
एषा किंनामिका ज्ञेया किंगुणा वा वराङ्गना॥
विमर्शः प्राह नन्वेषा प्रसिद्धा गुणगह्वरा।
भो महामूढता नाम भार्यास्य पृथिवीपतेः॥

चन्द्रिकेव निशानाथे स्वप्रभेव दिवाकरे ।
एषा देवी नरेन्द्रेऽस्मिन् देहाभेदेन वर्तते ॥
अत एव गुणा येऽस्य वर्णिता भद्र भूपतेः ।
ज्ञेयास्त एव निःशेषास्तयामुष्या विशेषतः ॥
प्रकर्षः प्राह यद्येवं ततोऽतिनिकटे स्थितः ।
महाराजाधिराजस्य कृष्णवर्णः सुभीषणः ॥
निरीक्षमाणो निःशेषं राजकं वक्रचक्षुषा ।
य एष दृश्यते सोऽयं कतमो माम भूपतिः ॥
विमर्शः प्राह विख्यातो राज्यसर्वस्वनायकः ।
मिथ्यादर्शननामायं महामोहमहत्तमः ॥
अनेन तन्त्रितं राज्यं वहत्यस्य महीपतेः ।
बलसम्पादकोऽत्यर्थमशेषाणामेष भूभुजाम् ॥
अत्रैव संस्थितो भद्र निजवीर्येण देहिनाम् ।
यदेष वहिरङ्गानां कुरुते तन्निबोध मे ॥
अदेवे देवसङ्कल्पमधर्मे धर्ममानिताम् ।
अतत्त्वे तत्त्वबुद्धिं च विधत्ते सुपरिस्फुटम् ॥
अपात्रे पात्रतारोपमगुणेषु गुणग्रहम् ।
संसारहेतौ निर्वाणहेतुभावं करोत्ययम् ॥

तथाहि ।

हसितोद्गीतविब्बोकनाट्याटोपपरायणाः ।
हताः कटाक्षविक्षेपैर्नारीदेहार्धधारिणः ॥
कामान्धाः परदारेषु सक्तचित्ता हतत्रपाः ।

सक्रोधाः सायुधा घोरा वैरिमारणतत्पराः ॥
शापप्रसादयोगेन लसचि + + + + + ।
ईदृशा भो महादेवा लोकेऽनेन प्रतिष्ठिता. ॥
ये वीतरागाः सर्वज्ञा ये शाश्वतसुखेश्वराः ।
क्लिष्टकर्मकलातीता निष्कलाश्च महाधियः ॥
शान्तक्रोधा गताटोपा हास्यस्त्रीहेतिवर्जिताः ।
आकाशनिर्मला धीरा भगवन्तः महाशिवाः ॥
शापप्रसादनिर्मुक्तास्तथापि शिवहेतवः ।
त्रिकुटि शुद्धशास्त्रार्थदेशकाः परमेश्वराः ॥
ये पूज्याः सर्वदेवानां ये ध्येयाः सर्वयोगिनाम् ।
ये चाज्ञाकरणाराध्या निर्द्वन्द्वफलदायिनः ॥
++ +++++ न लोकेऽनेन स्ववीर्यतः ।
देवाः प्रच्छादिता भद्र न ज्ञायन्ते विशेषतः ॥

तथा ।

हिरण्यदानं गोदानं धरादानं मुहुर्मुहुः ।
स्नानं पानं च धूमस्य पञ्चाग्नितपनं तथा ॥
तर्पणं चण्डिकादीनां तीर्थान्तरनिपातनम् ।
यतेरेककटे पिण्डो गीतवाद्ये महादरः ॥
वापीकूपतडागादिकारणं च विशेषतः ।
यागे मन्त्रप्रयोगेण मारणं पशुसंहतेः ॥
कियन्तो वा भणिष्यन्ते भूतमर्दनहेतवः ।
रचिता शुद्धभावेन ये धर्माः केचिदीदृशाः ॥

सर्वेऽपि वञ्चिनानेन मुग्धलोके प्रपञ्चतः ।
ते मिथ्यादर्शनाख्येन भद्र ज्ञेयाः प्रवर्तिताः ॥
क्षान्तिमार्दवसन्तोषशौचार्जवविमुक्तयः ।
तपःसंयमसत्यानि ब्रह्मचर्यं शमो दमः ॥
अहिंसास्तेयसद्ध्यानवैराग्यगुरुभक्तयः ।
अप्रमादसदैकाग्र्यनैर्ग्रन्थ्यपरतादयः ॥
ये चान्ये चित्तनैर्मल्यकारिणोऽमृतसन्निभाः ।
सद्धर्मा जगदानन्दहेतवो भवसेतवः ॥
तेषामेष प्रकृत्यैव महामोहमहत्तमः ।
भवेत्प्रच्छादनो लोके मिथ्यादर्शननामकः ॥

तथा ।

श्यामाकतण्डुलाकारस्तथा पञ्चधनुःशतः ।
एको नित्यस्तथा व्यापी सर्वस्य जगतो विभुः ॥
क्षणसन्तानरूपो वा ललाटस्थो हृदि स्थितः ।
आत्मेति ज्ञानमात्रं वा शून्यं वा सचराचरम् ॥
पञ्चभूतविवर्तो वा ब्रह्मोत्थमिति वाखिलम् ।
देवोत्थमिति वा ज्ञेयं महेश्वरविनिर्मितम् ॥
प्रमाणबाधितं तत्त्वं यदेवंविधमञ्जसा ।
सद्बुद्धिं कुरुते तत्र महामोहमहत्तमः ॥
जीवाजीवौ तथा पुण्यपापासंवरनिर्जराः ।
आस्रवो बन्धमोक्षौ च तत्त्वमेतन्नवात्मकम् ॥
सत्यं प्रतीतितः सिद्धं प्रमाणेन प्रतिष्ठितम् ।

तथापि निह्नुते भद्र तदेष जनदारुणः ॥

तथा।

गृहिणो ललनावाच्यमर्दका भूतघातिनः।
असत्यमन्थाः पापिष्ठाः सङ्ग्रहोपग्रहे रताः ॥
तथान्ये पचने नित्यमासक्ताः पाचनेऽपि च।
मद्यपाः परदारादिसेविनो मार्गदूषकाः ॥
तप्तायोगोलकाकारास्तथापि यतिरूपिणः।
ये तेषु कुरुते भद्र पात्रबुद्धिमयं जने ॥
सज्ज्ञानध्यानचारित्रतपोवीर्यपरायणाः।
गुणरत्नधना धीरा जङ्गमाः कल्पपादपाः ॥
संसारसागरोत्तारकारिणो दानदायिनाम्।
अचिन्त्यवस्तुवोहित्थतुल्या ये पारगामिनः ॥
तेषु निर्मलचित्तेषु पुरुषेषु जडात्मनाम्।
एषोऽपात्रधियं धत्ते महामहोमहत्तमः ॥

तथा।

कौतुकं कुहकं मन्त्रमिन्द्रजालं रसक्रियाम्।
निर्विषीकरणं तन्त्रमन्तर्धानं सविस्मयम् ॥
औत्पातमान्तरिक्षं च दिव्यमाङ्गं स्वरं तथा।
लक्षणं व्यञ्जनं भौमं निमित्तं च शुभाशुभम् ॥
उच्चाटनं सविद्वेषमायुर्वेदं सजातकम्।
ज्योतिषं गणितं चूर्णं योगलेपास्तथाविधाः ॥
ये चान्ये विस्मयकरा विज्ञेयाः पापशास्त्रजाः।

अन्ये भूतोपमर्दस्य हेतवः शाठ्यकेतवः ॥
तानेव ये विजानन्ति निःशङ्काश्च प्रयुञ्जते ।
न धर्मबाधां मन्यन्ते शठाः पापपरायणाः ॥
त एव गुणिनो धीरास्ते पूज्यास्ते मनस्विनः ।
त एव धीरास्ते लाभभाजिनस्ते मुनीश्वराः ॥
इत्येवं निजवीर्येण बहिरङ्गजनेऽमुना ।
मिथ्यादर्शनसंज्ञेन भद्र पापाः प्रकाशिताः ॥
ये पुनर्मन्त्रतन्त्रादिवेदिनोऽप्यतिनिःस्पृहाः ।
निवृत्ता लोकयात्राया धर्मातिक्रमभीरवः ॥
मूकान्धाः परवृत्तान्ते स्वगुणाभ्यासने रताः ।
असक्ता निजदेहेऽपि किं पुनर्द्रविणादिके ॥
कोपाहंकारलोभाद्यैर्दूरतः परिवर्जिताः ।
तिष्ठन्ति शान्तव्यापारा निरपेक्षास्तपोधनाः ॥
न दिव्यादिकमाख्यान्ति कुहकादि न कुर्वते ।
मन्त्रादीन्नानुतिष्ठन्ति निमित्तं न प्रयुञ्जते ॥
लोकोपचारं निःशेषं परित्यज्य यथासुखम् ।
स्वाध्यायध्यानयोगेषु सक्तचित्ताः सदासते ॥
ते निर्गुणा अलोकज्ञा विमूढा भोगवर्जिताः ।
अपमानहता दीना ज्ञानहीनाश्च कुर्कुटाः ॥
इत्येवं निजवीर्येण बहिरङ्गजनेऽमुना ।
ते मिथ्यादर्शनाख्येन ख्यापिता भद्र साधवः ॥

तथा ।

उद्वाहनं च कन्यानां जननं पुत्रसंहतेः ।
निपातनं च शत्रूणां कुटुम्बपरिपालनम् ॥
यदेवमादिकं कर्म घोरसंसारकारणम् ।
तद्धर्म इति संस्थाप्य दर्शितं भवतारणम् ॥
यः पुनर्ज्ञानचारित्रदर्शनाढ्यो विमुक्तये ।
मार्गः सर्वोऽपि सोऽनेन लोपितो लोकवैरिणा ॥
ततश्च भद्र यत्तुभ्यं समासेन मयोदितम् ।
वीर्यं महत्तमस्यास्य ब्रुवाणेन पुरा यथा ॥
अदेवे देवसङ्कल्पमधर्मे धर्ममानिताम् ।
अतत्त्वे तत्त्वबुद्धिं च करोत्येष जडात्मनाम् ॥
अपात्रे पात्रतारोपमगुणेषु गुणग्रहम् ।
संसारहेतौ निर्वाणहेतुभावं करोत्ययम् ।
तदिदं लेशतः सर्वं प्रविवेच्य निवेदितम् ।
विस्तरेण पुनर्वीर्यं कोऽस्य वर्णयितुं क्षमः ॥
अन्यच्चायं निजे चित्ते मन्यते भद्र सर्वदा ।
मदोद्धतः प्रकृत्यैव महामोहमहत्तमः ॥
निश्चिन्तभर एवायं राज्यसर्वस्वनायकः ।
महामोहनरेन्द्रेण कृतः सर्वत्र वस्तुनि ॥

एवं च स्थिते ।

विश्रम्भार्पितचित्ताय मयास्मै हितमुग्धकैः ।
अन्यव्यापारशून्येन कर्तव्यं ननु सर्वदा ॥

ततश्च ।

तदस्य सकलस्येयं मिथ्यादर्शनसंज्ञता ।
वृत्तान्तस्येह तृष्णाख्या वेदिका भद्र कारणम् ॥
यत्पुनर्भद्र लोकोऽयं दिङ्मूढ़ इव मानवः ।
शिवं गन्तुमनास्तूर्णं विपरीतः पलायते ॥

कथम् ।

देवं विगर्हते मूढ़ः सर्व्वज्ञं सर्वदर्शिनम् ।
वेदाः प्रमाणमित्येवं भाषते निष्प्रमाणकम् ॥
धर्मंच दूषयत्येष जडोऽहिंसादिलक्षणम् ।
प्रख्यापयति यत्नेन यागं पशुनिबर्हणम् ॥
जीवादितत्त्वं मोहेनापह्नुतेऽलीकपण्डितः ।
संस्थापयति शून्यं वा पञ्चभूतात्मकादि वा ॥
ज्ञानादिनिर्मलं पात्रं निन्दत्येष जडात्मकः ।
सर्वारम्भप्रवृत्तेभ्यो दानमुच्चैः प्रयच्छति ॥
तपः क्षमा निरीहत्वममून् दोषांश्च मन्यते ।
शाठ्यमुत्कापिशाचत्वं पिङ्गत्वं मनुते गुणान् ॥
शुभ्रं ज्ञानादिकं मार्गं मन्यते धूर्तकल्पितम् ।
कौलमार्गादिकं मूढ़ो मनुते शिवकारणम् ॥
कलयत्यतुलं धर्मं विशेषेण गृहाश्रमम् ।
निःशेषदन्दविच्छेदां गर्हते यतिरूपताम् ॥
तदनेनाच रूपेण मिथ्यादर्शनसंज्ञतम् ।
लोके भो विलसत्येतद्विपर्यासाख्यविष्टरम् ॥
अन्यच्चास्यैव सामर्थ्याल्लोकाध्वान्तवशंगताः ।

यदन्यदपि कुर्वन्ति भद्र तत्ते निवेदये ॥
जराजीर्णकपोला ये हास्यप्रायाश्च योषिताम् ।
वलीपलितखालित्यपिप्लुव्यङ्गादिदूषिताः ॥
तेऽपि चपन्ते जरया विकाररसनिर्भराः ।
कथयन्त्यात्मनो जन्म गाढमिलरकालिकम् ॥
अनेकद्रव्ययोगैश्च कार्ष्ण्यसम्पत्तये किल ।
तमसेव सहार्देन रञ्जयन्ति शिरोरुहान् ॥
जनयन्ति मृजां देहे नानास्नेहैर्मुहुर्मुहुः ।
तथा कपोलशैथिल्यं यत्नतश्छादयन्ति ते ॥
भ्रमन्ति विकटं मूढास्तरुणा इव लीलया ।
वयःस्तम्भनिमित्तं च भक्षयन्ति रसायनम् ॥
स्वच्छायां दर्पणे बिम्बं निरीक्षन्ते जलेषु च ।
क्लिश्यन्ते राढया नित्यं देहमण्डनतत्पराः ॥
आहूतास्तात तातेति ललनाभिस्तयापि ताः ।
पितामहसमाः सन्तः कामयन्ते विमूढकाः ॥
सर्वस्य प्रेरणाकाराः सन्तोऽपि नितरां पुनः ।
कुर्वन्तो हास्यविब्बोकान् गाढं गच्छन्ति हास्यताम् ॥
जराजीर्णशरीराणां येषामेषा विडम्बना ।
ते भद्र मति तारुण्ये कीदृशाः सन्तु जन्तवः ॥
श्लेष्मास्रक्लेदजम्बालपूरिते ते कडेवरे ।
आसक्तचित्ताः खिद्यन्ते यावज्जीवं वराककाः ॥
अनन्तभवकोटीभिर्लब्धं मानुष्यकं भवम् ।

वृथा कुर्वन्ति निर्ह्रीका धर्मसाधनवर्जिताः ॥
आयतिं न निरीक्षन्ते देहतत्त्वं न जानते।
आहारनिद्राकामार्त्तास्तिष्ठन्ति पशुसन्निभाः ॥
ततस्तेषामपारेऽत्र पतितानां भवोदधौ।
निर्नष्टशिष्टचेष्टानां पुनरुत्तरणं कुतः ॥
तदनेनापि रूपेण मिथ्यादर्शनसंस्कृतम्।
इदं विजृम्भते भद्र विपर्यासाख्यमासनम् ॥

अन्यच्च।

प्रशमानन्दरूपेषु सारेषु नियमादिषु।
वशेनास्य भवेद्भद्र दुःखबुद्धिर्जडात्मनाम् ॥
गलरेषु सुतुच्छेषु दुःखरूपेषु देहिनाम्।
भोगेषु सुखबुद्धिः स्यादासनस्यास्य तेजसा ॥
तथैव भुवनस्यान्तः प्रधानोऽत्र महाबलः।
बहिरङ्गजनस्योच्चैः सर्वानर्थविधायकः ॥
मया भद्र समासेन मिथ्यादर्शननामकः।
महामोहनरेन्द्रस्य कथितस्ते महत्तमः ॥

ततः प्रकर्षो हृष्टात्मा श्रुत्वा मातुलभाषितम्।
उत्क्षिप्य दक्षिणं पाणिं तं मतीदमभाषत ॥
चारु चारु कृतं माम यदेष कथितस्त्वया।
या लेयार्धासनेऽस्यैव सा किंनाम्नी वराङ्गना ॥
विमर्शोऽवददेषापि समानफलमाहृसा।
अस्यैव भार्या विज्ञेया कुदृष्टिर्नाम विश्रुता ॥

ये दृश्यन्ते विमार्गस्था वहिरङ्गजने सदा।
भद्र पाषण्डिनः केचित्तेषामेषैव कारणम्॥
ते चामी नामभिर्भद्र वर्ण्यमाना मया स्फुटम्।
ज्ञेया देवादिभेदेन विभिन्नाश्च परस्परम्॥

तद्यथा।

शाक्यास्त्रैदण्डिकाः शैवाः गौतमाश्चरकास्तथा।
सामानिकाः सामपरा वेदधर्माश्च धार्मिकाः॥
आजीविकास्तथा शुद्धा विद्युद्दन्ताश्च चुञ्चुणाः।
माहेन्द्राश्चारिका धूमा बद्धवेषाश्च खुंखुकाः॥
उल्काः पाशुपताः कौलाः काणादाश्चर्मखण्डिकाः।
सयोगिनस्तथोलूका गोदेहा यज्ञतापसाः॥
घोषपाशुपताश्चान्ये कन्दच्छेदा दिगम्बराः।
कामर्दकाः कालमुखाः पाणिलेहास्त्रिराशिकाः॥
कापालिकाः क्रियावादा गोमता मृगचारिणः।
लोकायताः शङ्खधमाः सिद्धवादाः कुलंतपाः॥
तापसा गिरिरोहाश्च शुचयो राजपिण्डकाः।
संसारमोचकाश्चान्ये सर्वावस्थास्तथा परे॥
अज्ञानवादिनो ज्ञेयास्तथा पाण्डुरभिक्षवः।
कुमारमतिकाश्चान्ये शरीरारिपवस्तथा॥
उत्कंदाश्चक्रवालाश्च चपरो हस्तितापसाः।
चित्तदेवा बिलावासास्तथा मैथुनचारिणः॥
अम्बरा असिधाराश्च तथा माठरपुत्रकाः।

चन्द्रोद्गमिकाश्चान्ये तथैवोदकमृत्तिकाः ॥
एकैकस्थालिका मंखाः पचापचा गजध्वजाः।
उलूकपचा मात्रादिभक्ताः कण्टकमर्दकाः ॥
कियन्तो वात्र गद्यन्ते नानाभिप्रायसंस्थिताः।
पाषण्डिनो भवन्त्येते भो नानाविधनामकाः ॥
देवैर्वादैस्तथा वेषैः कल्पैर्मोचविशुद्धिभिः।
वृत्तिभिश्च भवन्त्येते भिन्नरूपाः परस्परम् ॥

तथा हि।

रुद्रेन्द्रचन्द्रनागेन्द्रबुद्धोपेन्द्रविनायकाः।
निजाकूतवशादेतैरिष्टादेवाः पृथक् पृथक् ॥
ईश्वरो नियतिः कर्म स्वभावः काल एव वा।
जगत्कर्तेति वादोऽयं सर्वेषां भिन्नरूपकः ॥
त्रिदण्डकुण्डिकामुण्डवल्कचीवरभेदतः।
वेषः परस्परं भिन्नः स्फुट एवोपलच्यते ॥
कल्पोऽपि भच्याभच्यादिलचणः स्वधिया किल।
अन्योन्यं भिन्न एवैषां तीर्थिनां भद्र वर्तते ॥
विध्यातदीपरूपाभः सुखदुःखविवर्जितः।
एषां पाषण्डिनां भद्र मोचो भिन्नः परस्परम् ॥
निजाकूतवशेनैव विशुद्धिरपि तीर्थिकैः।
अमीभिर्भद्र सत्त्वानां भिन्नरूपा निवेदिता ॥
कन्दमूलफलाहाराः केचिद्धान्याग्निनोऽपरे।
वृत्तितोऽपि विभिद्यन्ते ततस्ते भद्र तीर्थिकाः ॥

एवं च स्थिते।

अमी वराकाः सर्वेऽपि डोलायन्ते भवोदधौ।
अस्याः कुदृष्टेर्वीर्येण शुद्धधर्मबहिष्कृताः॥
तत्त्वमार्गमजानन्तो विवदन्ते परस्परम्।
स्वाग्रहं नैव मुञ्चन्ति क्रथ्यन्ति हितभाषिणे॥
तदेषा भुवनख्याता मिथ्यादर्शनवत्सला।
कुदृष्टिर्विलसत्येव बहिरङ्गजनाहिता॥
यस्येष विष्टरे तुङ्गे निविष्टः प्रविलोक्यते।
प्रसिद्ध एव भद्रस्य स नूनं रागकेसरी॥
एनं राज्ये निधायोच्चैर्महामोहनराधिपः।
गतचिन्ताभरो नूनं कृतार्थो वर्ततेऽधुना॥
केवलं दत्तराज्योऽपि महामोहनरेश्वरे।
सविशेषं करोत्येष विनयं नयपण्डितः॥
महामोहनरेन्द्रोऽपि सर्वत्रामयतः स्फुटम्।
अस्यैव भोः सुपुत्रस्य प्रभुत्वं ख्यापयत्यलम्॥
तदेवं स्नेहसंबद्धौ पितापुत्रौ परस्परम्।
एतावेव वशीकर्तुं क्षमौ भद्र जगत्त्रयम्॥
यावद्विमतपत्येष नरेन्द्रो रागकेसरी।
बहिरङ्गजने तावत्कौतस्त्यः सुखसङ्गमः॥
यतोऽयं भद्र संसारसागरोदरवर्तिषु।
बहिर्लोके पदार्थेषु प्रीतिमुत्पादयत्यलम्॥
संक्लिष्टपुण्यजन्येषु संक्लिष्टेषु स्वरूपतः।

चित्तवृत्तिमहाटव्यां चलत्येष यदा यदा।
तदा तदा भवन्त्येव जनास्तेऽत्यन्तदुःखिताः॥
परलोके पुनर्यान्ति नरके तीव्रवेदने।
आबद्धमत्सरा वैरं प्रविधाय परस्परम्॥
भद्र द्वेषगजेन्द्रोऽयं यथार्थो नात्र संशयः।
यस्य गन्धेन भज्यन्ते विवेकाः कलभा इव॥
या तस्य भार्या तद्वार्त्ता शोकेनैव निवेदिता।
अत एव न पार्श्वस्था दृश्यते सा विवेकिता॥
[प्रकर्षः प्राह यस्त्वेष निविष्टस्तुङ्गविष्टरे।
नरत्रयपरीवारः पृष्ठतोऽस्यैव भूपतेः॥
रक्तवर्णोऽतिलोलाक्षो विलासोल्लासतत्परः।
पृष्ठापीडिततूणीरः सचापः पञ्चबाणकः॥
भ्रमद्भ्रमरझङ्कारहारिगीतविनोदितः।
विलसद्दीप्तिलावण्यवर्ण्यया वरयोषिता॥
अस्या एव तनुस्पर्शवक्त्रचुम्बनलालसः।
कमनीयाकृतिः सोऽयं कतमो माम भूपतिः॥
विमर्शः प्राह नन्वेष महाश्चर्यविधायकः।
उद्दामपौरुषो लोके प्रसिद्धो मकरध्वजः॥
यद्येषोऽद्भुतकर्तव्यो भवता नावधारितः।
न किंचिदपि विज्ञातं भद्राद्यापि ततस्त्वया॥
यो भद्र श्रूयते लोके परमेष्ठी पितामहः।
सोऽनेन कारितो गौरीविवाहे बालविप्लवम्॥

स एव चापरोनृत्तरूपविचित्रमानसः।
अनेनैव कृतो भद्र पल्लवस्त्रधरः किल॥
यो लोके जगतो व्यापी श्रूयते किल केशवः।
अनेन कारितः सोऽपि गोपीनां पादवन्दनम्॥
अन्यच्च भद्र सोऽनेन सुप्रसिद्धो महेश्वरः।
दापितोऽर्धं शरीरस्य गौर्यै विरहकातरः॥
उल्लासितस्तद्दलिङ्गः स एव सुरकानने।
तद्भार्याक्षोभणे रक्तस्तथानेन विनाटितः॥
उत्पाद्य सुरते तृष्णां स एवानेन धारितः।
दिव्यं वर्षसहस्रं भो रतस्थ इति गीयते॥
अन्येऽपि बहवो लोके मुनयो देवदानवाः।
वशीकृत्य कृताः सर्वे भद्रानेनात्मकिङ्कराः॥
कोऽस्य लङ्घयितुं शक्तो नूनमाज्ञां जगत्त्रये।
आत्मभूतं महावीर्यं यस्येदं पुरुषत्रयम्॥
अयं हि प्रथमो भद्र पुरुषोऽनघपौरुषः।
नाम्ना विज्ञाततद्वीर्यैः पुंवेद इति गीयते॥
अमुष्य तात वीर्येण बहिरङ्गा मनुष्यकाः।
पारदार्ये प्रवर्तन्ते जायन्ते कुलदूषणाः॥
द्वितीयः पुरुषो ह्येष स्त्रीवेद इति सूरिभिः।
व्यावर्णितो महातेजा व्याप्तत्रिभुवनोदरः॥
अस्य धाम्ना पुनस्तात योषितो विगतत्रपाः।
विलंघ्य कुलमर्यादां रज्यन्ते परपूरुषे॥

संक्लेशजनकेष्वेव संबध्नाति पृथग्जनम् ॥
अन्यच्च भद्र पार्श्वस्थं यदस्य पुरुषत्रयम्।
रक्तवर्णमतिस्निग्धदेहं च प्रविभाव्यते ॥
एते हि निजवीर्येण शरीरादविभेदिनः।
अनेन विहिता भद्र त्रयोऽप्यात्मवयस्यकाः ॥
अतत्त्वाभिनिवेशाख्यः प्रथमोऽयं नरोत्तमः।
दृष्टिराग इति प्रोक्तः स एवापरसूरिभिः ॥
अयं हि भद्र तीर्थ्यानामात्मीयात्मीयदर्शने।
करोति चेतसोऽत्यन्तमाबन्धमनिवर्तकम् ॥
द्वितीयो भवपाताख्यः पुरुषो भद्र गीयते।
अयमेवापरैः प्राज्ञैः स्नेहराग इतीरितः ॥
अयं तु कुरुते द्रव्यपुत्रस्वजनसन्ततौ।
मूर्च्छातिरेकतो भद्र चेतसो गाढबन्धनम् ॥
अभिष्वङ्गाभिधानोऽयं तृतीयः पुरुषः किल।
गीतो विषयरागाख्यः स एव मुनिपुङ्गवैः ॥
अयं तु भद्र लोके ऽत्र भ्रमदुद्दामलीलया।
शब्दादिविषयग्रामे लौल्यमुत्पादयत्यलम् ॥
नरत्रयस्य सामर्थ्यादस्य भद्र जगत्त्रयम्।
आक्रान्तमेव मन्येऽहं रागकेसरिणा पुनः ॥
सन्मार्गमत्तमातङ्गकुम्भनिर्भेदनक्षमः।
स्ववीर्याक्रान्तभुवनः सत्योऽयं रागकेसरी ॥
या त्वेषा दृश्यते भद्र निविष्टास्यैव विष्टरे।

अस्यैव भार्या सा ज्ञेया मूढता लोकविश्रुता ॥
ये केचिदस्य विद्यन्ते गुणा भद्र महीपतेः ।
तस्यां सर्वे सुभार्यायां विज्ञेयाः सुप्रतिष्ठिताः ॥
यतः शरीरनिर्विच्छिन्नां पार्वतीमिव शङ्करः ।
एनामेष सदा राजा धारयत्येव मूढताम् ॥

ततश्च ।

अन्योन्यानुगतौ नित्यं यथा देहस्तथानयोः ।
अविभक्ता विवर्तन्ते गुणा अपि परस्परम् ॥
यस्त्वेष वामके पार्श्वे निविष्टोऽस्यैव भूपतेः ।
भद्र द्वेषगजेन्द्रोऽसौ प्रतीतः प्रायशस्तव ॥
अत्रापि च महामोहनरेन्द्रस्य सुतोत्तमे ।
चित्तं विश्रान्तमेवोच्चैर्गुणाः कल्याणकारकाः ॥

यतः ।

जन्मना लघुरप्येष रागकेसरिणोऽधुना ।
वीर्येणाभ्यधिको लोके नरेन्द्रो भद्र वर्तते ॥

तथा हि ।

न भयं यान्ति दृष्टेन रागकेसरिणा जनाः ।
दृष्ट्वा द्वेषगजेन्द्रं तु जायन्ते भीतकम्पिताः ॥
यावदेष महावीर्यश्चित्ताटव्यां विजृम्भते ।
बहिरङ्गजने तावत्कौतस्त्यः प्रीतिसङ्गमः ॥
येऽत्यन्तसुहृदो लोकाः स्नेहनिर्भरमानसाः ।
तेषामेष प्रकृत्यैव चित्तविक्षेपकारकः

तृतीयः पुरुषो भद्र षण्ढवेद इति स्मृतः
येन दन्दह्यते लोको बहिरङ्गः स्वतेजसा॥
आलयालमिदं तावदस्य वीर्यविचेष्टितम्।
अनिवेद्यं जने येन विगुप्यन्ते नपुंसकाः॥
एतन्नरत्रयं भद्र पुरस्कृत्य प्रवर्तते।
अविज्ञातबलोऽन्येषां नूनमेष जगत्त्रये॥
या लेषा पद्मपत्राक्षी रूपसौन्दर्यमन्दिरम्।
अस्यैव वल्लभा भार्या रतिरेषाभिधीयते॥
येऽनेन निर्जिता लोका नरवीर्यपुरःसरम्।
तेषामेषा प्रकृत्यैव सुखबुद्धिविधायिका॥

तथाहि।

अस्या वीर्येण भो लोका दुःखिताः परमार्थतः।
तथापि तेऽदो मन्यन्ते मकरध्वजनिर्जिताः॥

यदुत।

आह्लादजनकोऽस्माभ्यं हितोऽयं मकरध्वजः।
प्रतिकूला पुनर्येऽस्य कुतस्तेषां सुखोद्भवः॥
ततो रत्यानया भद्र ते वशीकृतमानसाः।
जाता निर्मिथ्यभावेन मकरध्वजकिङ्कराः॥
तदादेशेन कुर्वन्ति हास्यस्थानं विवेकिनाम्।
आत्मनः सततं मूढा नानारूपं विडम्बनम्॥

कथम्।

रचयन्त्यात्मनो वेषं योषितां चित्तरञ्जनम्।

आचरन्ति च मोहेन देहे भूषणविभ्रमम् ॥
तुष्यन्ति कामिनीलोललोचनार्धविलोकिताः ।
वहन्ति हृदये प्रीतिं तदालापैर्मनोरमैः ॥
भ्रमन्ति विकटैः पादैरुन्नामितशिरोधराः ।
रामाकटाक्षविक्षिप्ताः सुभगा इति गर्विताः ॥
कुलटादृष्टिमार्गेषु तच्चित्ताक्षेपलम्पटाः ।
निष्क्रीडयन्ति मोहान्धा दन्तकान् कारणं विना ॥
इतस्ततः प्रधावन्ति दर्शयन्ति पराक्रमम् ।
तासां मनोनुकूलं हि ते किं किं यत्न कुर्वते ॥
कुर्वन्ति चाटुकर्माणि भाषन्ते किङ्करा इव ।
पतन्ति पादयोस्तासां जायन्ते कर्मकारकाः ॥
सहन्ते योषितां पादप्रहारान्मस्तकेन ते ।
मन्यमाना निजे चित्ते मोहतस्तदनुग्रहम् ॥
आस्वाद्य मद्यगण्डूषं योषावक्त्रसमर्पितम् ।
श्लेष्मोन्मिश्रं च मन्यन्ते स्वर्गादभ्यधिकं सुखम् ॥
ये नरा वीर्यभूयिष्ठा ललनाभिः स्वलीलया ।
भ्रूक्षेपेणैव कार्यन्ते तेऽप्यक्षैरपि मर्दनम् ॥
तत्सङ्गमार्थं दह्यन्ते सुरतेषु न तोषिणः ।
दूयन्ते विरहे तासां म्रियन्ते शोकविह्वलाः ॥
अवधूताश्च खिद्यन्ते लुण्टन्ति च बहिष्कृताः ।
पररक्तस्वनारीभिः पात्यन्ते दुःखसागरे ॥
ईर्ष्यया च वितुद्यन्ते स्वभार्यारक्षणोद्यताः ।

एता विडम्बना भद्र प्राप्नुवन्तीह ते भवे ॥
परलोके पुनर्यान्ति घोरे संसारनीरधौ।
ये जाता रतिवीर्येण मकरध्वजकिङ्कराः ॥
बहवस्तेदृशाः प्रायो बहिरङ्गा मनुष्यकाः।
ये लस्य शासनातीता विरलास्ते मनीषिणः ॥
तदयं यस्त्वया पृष्टो लेशोद्देशादसौ मया।
परिवारयुतो भद्र वर्णितो मकरध्वजः ॥

प्रकर्षः प्राह मामेदं सुन्दरं विहितं त्वया।
यमन्यमपि पृच्छामि सन्देहं तं निवेदय ॥
मकरध्वजपार्श्वस्थं यदिदं प्रविभाव्यते।
किंनाम किंगुणं चेदं माम मानुषपञ्चकम् ॥
विमर्शः प्राह यस्तावदेष शुक्लो मनुष्यकः।
स हास इति विज्ञेयो विषमोऽत्यन्तदुष्करः ॥
अयं हि कुरुते भद्र निजवीर्येण मानुषम्।
बहिरङ्गं विना कार्यं सशब्दमुखकोटरम् ॥
किंचिन्निमित्तमासाद्य निमित्तविरहेण वा।
स्वं वीर्यं दर्शयत्युच्चैर्येषामेष महाभटः ॥
महाकहकहध्वानैर्हसन्तः शिष्टनिन्दिताः।
निर्वादितमुखास्तुच्छास्ते जने यान्ति लाघवम् ॥
आशङ्कायाः पदं लोके जायन्ते निर्निमित्तकम्।
जनयन्ति परे वैरं लभन्ते वक्त्रविभ्रमम् ॥
मक्षिकामशकादीनामुपघातं च देहिनाम्।

आचरन्ति विना कार्यं परेषां च पराभवम् ॥
तदिदं भद्र निःशेषमिह लोके विजृम्भते ।
हासोऽयं परलोकेऽस्यात्मकर्मबन्धः सुदारुणः ॥
अस्यस्य तुच्छता नाम भद्वार्या हितकारिणी ।
देहस्यास्यैव पश्यन्ति तां भो गम्भीरचेतसः ॥
एनमुल्लासयत्येव निमित्तेन विना सदा ।
हासं सा तुच्छता वत्स लघुलोके यथेच्छया ॥
यतो गम्भीरचित्तानां निमित्ते सुमहत्यपि ।
मुखे विकासमात्रं स्यान्न हास्यं बहुदोषलम् ॥
या लेषा कृष्णसर्वाङ्गी गाढं बीभत्सदर्शना ।
दृश्यते ललना सेयमरतिर्नाम विश्रुता ॥
किंचित्कारणमासाद्य बहिरङ्गजने सदा ।
करोत्येष मनोदुःखं जृम्भमाणातिदुःसहम् ॥
यस्त्वेष दृश्यते भद्र कम्पमानशरीरकः ।
पुरुषः स भयो नाम प्रसिद्धो गाढदुःसहः ॥
विलसन्नेव महाटव्यामेतस्यां किल लीलया ।
बहिरङ्गजनानुच्चैः कुरुते कातराननान् ॥

कथम् ।

चलन्तीह मनुष्यादेः कम्पन्ते पशुसंहतेः ।
अर्थादिहानिं मन्वानाः पलायन्तेऽतिकातराः ॥
अकस्मादेव जायन्ते चलत्तारललोचनाः ।
जीविष्यामः कथं चेति चिन्तया सन्ति विक्लवाः ॥

मरिष्यामो मरिष्याम इत्येवं भावनापराः ।
मुधैव जीवितं हित्वा म्रियन्ते सत्त्ववर्जिताः ॥
जने च मा भूदश्लाघेत्येवं भावेन विक्लवाः ।
नोचितान्यपि कुर्वन्ति कर्माणि पुरुषाधमाः ॥
स एष निकटस्थायिसङ्गमानुषसम्पदा ।
विजृम्भते भयो भद्र बहिरङ्गजने सदा ॥

किं च ।

पलायनं रणे दैन्यमरीणां पादवन्दनम् ।
अस्यादेशेन निर्लज्जास्ते कुर्वन्ति नराधमाः ॥
तदेवं भद्र लोकेऽत्र ये भयस्य वशं गताः ।
विनाटिताः परत्रापि यान्ति भीमे भवोदधौ ॥
अस्यापि च शरीरस्था भार्यास्ति पतिवत्सला ।
संवर्धिका कुटुम्बस्य प्रोच्यते हीनसत्त्वता ॥
तां हीनसत्त्वतां देहाद्भार्यामेष न मुञ्चति ।
नूनं हि म्रियते भद्र भयोऽयं रहितस्तया ॥
भद्र प्रत्यभिजानीषे किमेनं तु न साम्प्रतम् ।
तं तत्र नगरे शोकं यमसुं द्रक्ष्यसि स्फुटम् ॥
अनेनैव तदा वार्ता समस्तापि निवेदिता ।
सोऽयं समागतस्तूर्णं शोको भद्र पुनर्बले ॥
अपेक्ष्य कारणं किंचिदयं लोके बहिर्गते ।
आविर्भूतः करोत्येव दैन्याक्रन्दनरोदनम् ॥
इष्टैर्वियुक्ता ये लोका निमग्नाश्च महापदि ।

अनिष्टैः संप्रयुक्ताश्च तस्य स्ववैशवर्तिनः ॥
न लचयन्ति ते मूढा यथैष रिपुरुच्चकैः ।
अस्यादेशेन मुञ्चन्ति आराटीः केवलं जडाः ॥
एष शोकः किलास्माकं दुःखचायं करिष्यति ।
अयं तु वर्धयत्येव तेषां दुःखं निषेवितः ॥
न साधयन्ति ते स्वार्थं धर्माद्भ्रश्यन्ति मानवाः ।
प्राणैरपि वियुज्यन्ते मूर्छासंमीलितेचणाः ॥
ताडनं शिरसोऽत्यर्थं लुञ्चनं कचसन्ततेः ।
कुट्टनं वचसो भूमौ लोठनं गाढविक्लवम् ॥
तथात्मोल्लम्बनं रज्ज्वा पतनं च जलाशये ।
दहनं वह्निना शैलशिखरादात्ममोचनम् ॥
भचणं कालकूटादेः शस्त्रेणात्मनिपातनम् ।
प्रलापनमुन्मादं च वैक्लव्यं दैन्यभाषणम् ॥
अन्तस्तापं महाघोरं शब्दादिसुखवञ्चनम् ।
लभन्ते पुरुषा भद्र ये शोकवशवर्तिनः ॥
इत्थं भूरितरं दुःखं प्राप्नुवन्तीह ते भवे ।
कर्मबन्धं विधायोच्चैर्यान्त्यमुत्र च दुर्गतौ ॥
तदेष बहिरङ्गानां दुःखदो भद्र देहिनाम् ।
किंचिल्लेशेन शोकस्ते वर्णितः पुरतो मया ॥
अस्यापि च शरीरस्था भवस्था नाम दारुणा ।
विद्यते पत्निका वत्स शोकस्य गृहनायिका ॥
साख संवर्धिका ज्ञेया तां विना नैव जीवति ।

अत एव शरीरस्थां धारयत्येष सर्वदा ॥
या लेपा दृश्यते कृष्णा भोः संकोचितनासिका ।
नारी सा सूरिभिर्भद्र जुगुप्सा परिकीर्त्तिता ॥
इयं तु बहिरङ्गानां लोकानां मनसोऽधिकम् ।
व्यलीकभावमाधत्ते तत्त्वदर्शनवर्जिनाम् ॥
कृमिजालोल्वणं देहं पूयक्लिन्नं मलाविलम् ।
वस्तु दुर्गन्धिबीभत्सं ते हि दृष्ट्वा कथंचन ॥
कुर्वन्ति शिरसः कम्पं नासिकाधूननं जडाः ।
दूरतः प्रपलायन्ते मीलयन्ति च लोचने ॥
ऊं ऊं ऊमिति जल्पन्ति वक्रां कुर्वन्ति कन्धराम् ।
विशन्ति शौचवादेन सचेलाः शीतले जले ॥
नासिकां कुञ्चयन्त्युच्चैर्निष्ठीवन्ति मुहुर्मुहुः ।
आश्लेषे वर्त्मचेलादेः क्रुद्धाः स्नान्ति पुनः पुनः ॥
छायामपि च नेच्छन्ति परेषां स्प्रष्टुमात्मना ।
जायन्ते शौचवादेन वेताला इव दुःखिताः ॥
चित्तशङ्कावशादेव साक्षादुन्मत्तका अपि ।
केचिद्भद्र प्रजायन्ते ये जुगुप्सावशं गताः ॥
परलोके पुनर्यान्ति तत्त्वदर्शनवर्जिताः ।
तमोभिभूतास्ते मूर्खा घोरसंसारचारके ॥
तदेवं बहिरङ्गानां लोकानां बहुदुःखदा ।
किंचित्ते वर्णिता भद्र जुगुप्सापि मयाधुना ॥
प्रकर्षः प्राह दृश्यन्ते यान्येतानि पुरो मया ।

निविष्टानि नरेन्द्राणामुत्सङ्गादिषु लीलया ॥
गाढं दुर्दान्तचेष्टानि चटुलानि विशेषतः ।
आरक्तकृष्णवर्णानि डिम्भरूपाणि षोडश ॥
अमूनि नामभिर्माम गुणैश्च सुपरिस्फुटम् ।
अधुना वर्ण्यमानानि श्रोतुमिच्छाम्यहं तथा ॥
विमर्शः प्राह सर्वेषामेतेषां सूरिभिः पुरा ।
सामान्यतः कषायाख्या भद्र लोके प्रकाशिता ॥
विशेषतः पुनर्भद्र यान्येतानीह वीचसे ।
महत्तमानि दुष्टानि सर्वेषामग्रतस्तथा ॥
चत्वारि गर्भरूपाणि रौद्राकाराणि भावतः ।
तान्यनन्तानुबन्धीनि गीतानि किल संज्ञया ॥
अमूनि च प्रकृत्येव मिथ्यादर्शननामकः ।
अयं महत्तमो भद्र स्वात्मभूतानि पश्यति ॥
ततश्च बहिरङ्गानां लोकानां निजवीर्यतः ।
एतान्यपि प्रकुर्वन्ति मिथ्यादर्शनभक्तताम् ॥
यतः ।
यावदेतानि जृम्भन्ते डिम्भरूपाणि लीलया
चित्तवृत्तिमहाटव्यां तावत्ते बाह्यमानुषाः ॥
अनन्यचित्ताः सततमेनमेव महत्तमम् ।
लोकवाक्यनिराकांक्षाः सद्भक्त्या पर्युपासते ॥
अत एव च ।
चित्तवृत्तिमहाटव्यामुत्सवस्थलेषु ते जनाः ।

न तत्त्वमार्गं भावेन प्रपद्यन्ते कदाचन ॥

एवं स्थिते।

ये दोषा वर्णिताः पूर्वं मिथ्यादर्शनसंश्रयाः।
बहिर्जनानां सर्वेषां तेषामेतानि कारणम् ॥
एतेभ्यो लघुरूपाणि यानि चत्वारि सुन्दर।
अप्रत्याख्याननामानि तानि गीतानि पण्डितैः ॥
एतानि निजवीर्येण बहिरङ्गमनुष्यकान्।
प्रवर्तयन्ति पापेषु वारयन्ति निवर्तनम् ॥

किं बहुना।

यावदेतानि गाहन्ते चित्तवृत्तिमहाटवीम्।
तावद्भद्र निवर्तन्ते न ते पापादणोरपि ॥
तत्त्वमार्गं प्रपद्येरन्नेतेषु विलसत्स्वपि।
लभन्ते तदलात्सौख्यं विरतिं तु न कुर्वते ॥
ततस्तेऽमुत्र संतप्ता निपतन्ति परत्र च।
विधाय पापसंघातं संसारगहने जनाः ॥
यान्येतानि पुनर्भद्र लघीयांसि ततोऽपि च।
प्रत्याख्यावारकाणीह बुधास्तानि प्रचक्षते ॥
अमूनि किल वल्गन्ते यावच्चैव मण्डपे।
बहिरङ्गजनाः सर्वं तावन्मुञ्चन्त्यघं न वै ॥
किंचिन्मात्रं तु मुञ्चेयुः पापं बाह्यजनाः किल।
चित्तवृत्तिमहाटव्यामेतेषु विलसत्सु भोः ॥
एतान्यपि स्वरूपेण तस्मात्सन्तापकारणम्।

 

बहिर्जनानां कल्याणे विरतिस्तत्र कारणम् ॥
एतेभ्योऽपि लघीयांसि यान्येतानीह सुन्दर ।
वर्तन्ते गर्भरूपाणि चत्वारि तव गोचरे ॥
तानि संज्वलनाख्यानि गीतानि मुनिपुङ्गवैः ।
लीलया चटुलानीत्थमुल्लसन्ति मुहुर्मुहुः ॥
एतानि सर्वपापेभ्यो विरतानामपि देहिनाम् ।
दृष्टोल्लसन्ति कुर्वन्ति बाह्यानां चित्तविप्लवम् ॥
दूषयन्ति ततो भूयः सर्वपापनिबर्हणम् ।
ते सातिचारा जायन्ते वीर्येणैषां बहिर्जनाः ॥
न सुन्दराणि सर्वेषां तदेतान्यपि देहिनाम् ।
लघुरूपाणि दृश्यन्ते तात यद्यपि जन्तुभिः ॥
चतुष्टयानि चत्वारि तदेतानि विशेषतः ।
एतेषां नामभिर्भद्र गुणैश्च कथितानि ते ॥
प्रत्येकं यानि नामानि ये गुणाश्च विशेषतः ।
एतेषां तत्पुनर्भद्र को वा वर्णयितुं क्षमः ॥
तस्मात्ते कथयिष्यामि विश्रब्धः क्वचित्पुनः ।
प्रस्तावागतमेवेह वीर्यमेषां विशेषतः ॥

अन्यच्च ।

एतेषां गर्भरूपाणां मध्येऽष्टौ परया मुदा ।
यान्येतानि प्रनृत्यन्ते रागकेसरिणोऽग्रतः ॥
तान्यस्मादेव जातानि रागकेसरिणः किल ।
अत्यन्तवल्लभान्यस्य मूढतानन्दनानि च ॥

यानि तेतानि चेष्टन्ते क्रीडयाष्टौ मुहुर्मुहुः।
पुरे देवगजेन्द्रस्य गर्भरूपाणि सुन्दर॥
अस्मादेव प्रसूतानि प्रियाणि देवभूपतेः।
मातापि वेकितामीषां सर्वेषां भद्र गीयते॥

एवं च स्थिते।

महामोहनरेन्द्रस्य यानि पौत्राणि सुन्दर।
तत्पुत्रयोरपत्यानि तात विख्यातवीर्ययोः॥
तेषाममीषां लोकेऽत्र दौर्ललित्यविराजितम्।
वीर्यं सहस्रजिह्वोऽपि को निवेदयितुं क्षमः॥
पश्य पश्यत एवैषामेतानि निजचेष्टितैः।
शौर्यं सिद्धार्थकायन्ते सर्वेषामेव भूभुजाम्॥
तदिदं ते समासेन मया तात निवेदितम्।
महामोहनरेन्द्रस्य स्वाङ्गभूतं कुटुम्बकम्॥
ये त्वमी वेदिकाभ्यर्णे विवर्तन्ते महीभुजः।
ते महामोहराजस्य स्वाङ्गभूताः पदातयः॥

तत्र च।

य एष दृश्यते भद्र रागकेसरिणोऽग्रतः।
आश्लिष्टललनो हृष्टं ताम्बूलं खादयन्नलम्॥
रणद्द्विरेफरिंछोलिसूचितोत्कटगन्धकम्।
लीलाकमलमत्यर्थमाजिघ्रंस्र मुहुर्मुहुः॥
स्वभार्यामलवक्त्राब्जे कुर्वाणो दृष्टिविभ्रमम्।
वणत्कौनूपुरारावकाकलीगीतलम्पटः॥

यथैवं विषयानेष पश्चापि किल लीलया ।
भुञ्जानो मन्यते सर्वमात्मनो सुष्टिमध्यगम् ॥
भद्र सोऽयमिहायाता वयं यस्य दिदृक्षया ।
रागकेसरिणो मन्त्री लोके विख्यातपौरुषः ॥
अस्यैव तानि वर्तन्ते पुत्रभाण्डानि सुन्दर ।
यानि मिथ्याभिमानेन कथितानि पुरावयोः ॥
तद्बलेन जगत्सर्वं वशीकृत्य महाबलः ।
भद्र नूनं करोत्येव चेष्टया तुच्छमात्मनः ॥

तथा हि ।

एतत्प्रयुक्तैर्यं दृष्टा मानुषैर्भद्र देहिनः ।
ते स्पर्शरसगन्धस्वरूपशब्देषु लालसाः ॥
कार्याकार्यं न पश्यन्ति बुध्यन्ते नो हिताहितम् ।
भक्ष्याभक्ष्यं न जानन्ति धर्माधर्मबहिष्कृताः ॥
तस्माच्चलक्ष्मीचाद्दा वर्तन्ते सार्वकालिकम् ।
नान्यत्किंचन वीक्षन्ते यथासौ वर्तते जडः ॥
दर्शनादेव निर्णीतो युष्मा च परिनिश्चितः ।
रसनाजनको भद्र स एवायं न संशयः ॥
रागकेसरिणो राज्यं तस्यचिन्तितं सदा ।
परबुद्धिप्रयोगेण नैव प्रतिहन्यते ॥
पुरुषाः पण्डितास्मावद्धिरद्धा दृढव्रताः ।
यावदेष स्ववीर्येण नाधो क्षिपति कुत्रचित् ॥
यदा पुनर्महामायामानेष मन्त्रिः क्वचित् ।

आरभेत स्ववीर्येण बहिरङ्गमनुष्यकान् ॥
तदा ते निहतप्राया बालिशा इव किङ्कराः ।
प्रतापहं विमुच्यास्य जायन्ते विगतत्रपाः ॥
वर्धयत्येष साम्राज्यमेतेषामेव भूभुजाम् ।
बहिरङ्गजनस्यायममात्यो दुःखदः सदा ॥

यतः ।

अस्यादेशेन कुर्वन्ति पापं ते बाह्यमानुषाः ।
तच्च पापं कृतं तेषामिहामुत्र च दुःखदम् ॥
निपुणो नीतिमार्गेषु गाढं निर्व्याजपौरुषः ।
भेदकः परचित्तानामुपायकरणे पटुः ॥
विदिताशेषवृत्तान्तः सन्धिविग्रहकारकः ।
विकल्पबहुलो लोके सचिवो नास्त्यमूदृशः ॥
किं वाच बहुनोक्तेन तावदेते नरेश्वराः ।
यावदेष महामन्त्री तन्त्रको राज्यसन्ततेः ॥

ततः सहर्षः प्रकर्षोऽब्रवीत् । साधु माम साधु सुन्दरं निर्णीतं मामेन । न तिलतुषत्रिभागमात्रयापि चलतीदं । एवंविध एवायं विषयाभिलाषो महामन्त्री नास्त्यत्र सन्देहः ।

तथा हि ।

आकारदर्शनादेव ते गुणा मम मानसे ।
आदावेव समारूढा येऽस्य संवर्णितास्त्वया ॥
विमर्शः प्राह नाश्चर्यं लक्षयन्ति भवादृशाः ।
नराणां दृष्टमात्राणां यद्गुणागुणरूपताम् ॥

तथा हि ।

ज्ञायते रूपतो जातिर्जातेः शीलं शुभाशुभम् ।
शीलाद्गुणाः प्रभासन्ते गुणैः सत्त्वं महाधियाम् ॥
न केवलं त्वयास्यैव दर्शनादेव लक्षिताः ।
गुणाः किं तर्हि सर्वेषां नूनमेषां महीभुजाम् ॥
बुद्धेर्जातस्य ते भद्र किं वा स्यादविनिश्चितम् ।
यत्तु मां प्रश्नयस्येवं तात सा तेऽभिजातता ॥
प्रकर्षः प्राह यद्येवं ततो माम निवेद्यताम् ।
किंनामिकेयं भार्यास्य मन्त्रिणो मुग्धलोचना ॥
विमर्शः प्राह भद्रेयं भोगतृष्णाभिधीयते ।
गुणैस्तु तुल्या विज्ञेया सर्वथास्यैव मन्त्रिणः ॥
ये लेते पुरतः केचित्पार्श्वतः पृष्ठतोऽपरे ।
दृश्यन्ते भूभुजो भद्र मन्त्रिणोऽस्य नताननाः ॥
दृष्टाभिसन्धिप्रमुखास्ते विज्ञेया महाभटाः ।
महामोहनरेन्द्रस्य स्वाङ्गभूताः पदातयः ॥

अन्यच्च ।

महामोहनृपस्येष्टा रागकेसरिणो मताः ।
मत्या द्वेषगजेन्द्रस्य सर्वेऽप्येते महीभुजः ॥
अनेन मन्त्रिणादिष्टा राज्यकार्येषु सर्वदा ।
एते भद्र प्रवर्तन्ते निवर्तन्ते च नान्यथा ॥
ये केचिद्बाह्यलोकानां क्षुद्रोपद्रवकारिणः ।
अन्तरङ्गा महीपालास्तेऽमीषां मध्यवर्तिनः ॥

नार्यो डिम्भाश्च ये केचिदन्येऽप्येवंविधा जने।
अमीषां मध्यगाः सर्वे द्रष्टव्यास्ते महीभुजाम्॥
तदेते परिमातीता निवेद्यन्तां कथं मया।
संक्षेपतः समाख्याताः स्वाङ्गभूताः पदातयः॥
प्रकर्षः प्राह ये लेते वेदिकाद्वारवर्तिनः।
निविष्टा भूभुजः सप्त नाम मुत्कलमण्डपे॥
युक्ताः सत्परिवारेण नानारूपविराजिनः।
एते किंनामका ज्ञेयाः किंगुणा वा महीभुजः॥
विमर्शः प्राह भद्रैते सप्तापि वरभूभुजः।
महामोहनृपस्यैव बहिर्भूताः पदातयः॥

तत्र च।

य एष दृश्यते भद्र संयुक्तः पञ्चभिर्नरैः।
ज्ञानसंवरणो नाम प्रसिद्धः स महीपतिः॥
अत्रैव वर्तमानोऽयं बहिःस्थं सकलं जनम्।
करोत्यन्धं स्ववीर्येण ज्ञानोद्योतविवर्जितम्॥

किं च।

सान्द्राज्ञानान्धकारेण यतो मोहयते जनम्।
ततोऽयं शिष्टलोकेन मोह इत्यपि कीर्तितः॥
यस्त्वेष नवभिर्युक्तो मानुषैः प्रविभाव्यते।
दर्शनावरणो नाम विख्यातः स महीतले॥
दृश्यन्ते पञ्च या नार्यस्ताः स्ववीर्येण सुन्दराः।
करोत्येष जगत्सर्वं घूर्णमानगतिक्रियम्॥

ये त्वमी पुरुषा भद्र चत्वारोऽस्य पुरः स्थिताः।
एतत्सामर्थ्ययोगेन जगद्वश्यं करोत्ययम्॥
नरद्वयसमायुक्तो यः पुनर्भद्र दृश्यते।
स एष वेदनीयाख्यो राजा विख्यातपौरुषः॥
सातनामा प्रसिद्धोऽस्य जगति प्रथमो नरः।
करोत्याह्लादसन्दोहनन्दितं भुवनत्रयम्॥
द्वितीयः पुरुषो भद्र यस्त्वस्य प्रविलोक्यते।
असातनामकः सोऽयं जगत्सन्तापकारकः॥
दीर्घह्रस्वैः समायुक्तश्चतुर्भिर्डिम्भरूपकैः।
विवर्तते महीपालो यस्त्वेष तव गोचरे॥
आयुर्नामा प्रसिद्धोऽयं सर्वेषां भद्र देहिनाम्।
निजे भवे किलावस्थां कुरुते डिम्भतेजसा॥
द्विचत्वारिंशता युक्तो मानुषाणां महाबलः।
यस्त्वेष दृश्यते भद्र नामनामा महीपतिः॥
निजमानुषवीर्येण जगदेष चराचरम्।
विडम्बयति यत्नात तदाख्यातुं न पार्यते॥
चतुर्गतिकसंसारे नरनारकरूपताम्।
ये दधाना विवर्तन्ते पशुदेवतया परे॥
एकेन्द्रियादिभेदेन नानादेहविवर्तिनः।
नानाङ्गोपाङ्गसंबद्धाः संघातकरणोद्यताः॥
भिन्नसंहननाः सत्त्वा नानासंस्थानधारिणः।
वर्णगन्धरसस्पर्शभेदेन विविधास्तथा॥

गौरवेतरहीनाश्च स्वोपघातपरायणाः ।
पराघातपराः केचिदिष्टजन्मानुपूर्विणः ॥
सदुच्छ्वासातपोद्योतविहायोगतिगामिनः ।
चसस्थावरभेदाश्च सूक्ष्मबादररूपिणः ॥
पर्याप्तकेतराः केचिदन्ये प्रत्येकचारिणः ।
साधारणाः स्थिराः केचित्तथान्ये स्थिररूपिणः ॥
शुभाशुभत्वं बिभ्राणाः सुभगा दुर्भगास्तथा ।
सुस्वरा दुःस्वरा लोके ये चादेया मनोहराः ॥
अनादेयाः स्ववर्गेऽपि यशःकीर्तिसमन्विताः ।
अयशःकीर्तियुक्ताश्च निर्मितात्मशरीरकाः ॥
प्रणताशेषगीर्वाणमौलिमालार्चितक्रमाः ।
ये च तीर्थकरा लोके भवन्ति भवभेदिनः ॥
निजमानुषवीर्येण सर्वमेष नराधिपः ।
तदिदं जृम्भते वत्स नामनामा महाबलः ॥
यः पुनर्भद्र भूपोऽयं वीचते पुरतः स्थितम् ।
आत्मभूतं महावीर्यं नीचोच्चं पुरुषद्वयम् ॥
गोत्राभिधानो विख्यातः स एष जगतीपतिः ।
देहिनां कुरुते भद्र सुन्दरेतरगोत्रताम् ॥
नरपञ्चकसेव्योऽयं यः पुनः प्रविभाव्यते ।
अन्तराय इति ख्यातः स तात वरभूपतिः ॥
अयं तु नरवीर्येण कुरुते बाह्यदेहिनाम् ।
दानभोगोपभोगाप्तिवीर्यविघ्नं नराधिपः ॥

तदेते कथितास्तात नामभिर्गुणलेशतः ।
सप्तापि भूभुजस्तुभ्यं समासेन मयाधुना ॥
वीर्यवक्तव्यतामेषां विस्तरेण पुनर्यदि ।
वर्णयामि ततोऽस्त्येति तत्रैव मम जीवितम् ॥
तदेवमतिगम्भीरं श्रुत्वा मातुलजल्पितम् ।
प्रकर्षो हृष्टचित्तत्वादिदं वचनमब्रवीत् ॥
चारु माम कृतं चारु मोचितो मोहपञ्जरात् ।
एतेषां वर्णनं राज्ञां कुर्वतैवमहं त्वया ॥
केवलं कंचिदद्यापि मामं पृच्छामि संशयम् ।
तमाकर्ण्य पुनर्मामो मह्यमाख्यातुमर्हति ॥
ततो विमर्शस्तुष्टात्मा तं प्रतीदमभाषत ।
पृच्छ यद्रोचते तुभ्यं भद्र विश्रब्धचेतसा ॥
प्रकर्षः प्राह मामायं विस्मयो मम मानसे ।
एषु संकीर्त्यमानेषु राजसु प्रतिभासते ॥
यदामूनमण्डपान्तःस्थान्सिरीक्षे नायकानहम् ।
परिवारं न पश्यामि तदामीषां निजं निजम् ॥
यदा विलोकयाम्युच्चैः परिवारं विशेषतः ।
तदा विस्फारिताक्षोऽपि नैवेक्षे नायकानहम् ॥
भवता तु परीवारो नायकाच्च पृथक् पृथक् ।
मामतो गुणतश्चैव कीर्तिता यत तत्कथम् ॥
विमर्शेनोदितं वत्स न विधेयोऽत्र विस्मयः ।
नैकदोभयवेत्तात्र कश्चिदन्योऽपि विद्यते ॥

यतः ।

ये निरावरणज्ञाना: केवलालोकभास्कराः ।
प्रभुं परिकरं चैषां नैकदा तेऽपि जानते ॥

यतः। सामान्यरूपा राजानः सर्वेऽमी परिकीर्तिताः ।
विशेषरूपा विज्ञेयाः सर्वे चामी परिच्छदाः ॥

तथाहि ।

अवयव्यच सामान्यं विशेषोऽवयवाः स्मृताः ।
राजानश्चांशिनो ज्ञेयास्तदंशास्तु पदातयः ॥

इह च ।

नायातः कस्यचित्साचादेकदा ज्ञानगोचरम् ।
ययेतौ प्रकृतिस्तात सा सामान्यविशेषयोः ॥
देशकालस्वभावैस्तु भेदोऽपि च न विद्यते ।
तादात्म्यादेतयोस्तात तेनैकः प्रतिभाति ते ॥

तथाहि ।

के तरोर्भेदिनः सन्तु धवाम्रखदिरादयः ।
धवाम्रादिविनाभूतः कस्तरुर्वा प्रकाश्यताम् ॥
श्रुतस्कन्धातिरेकेण नास्त्यध्ययनसंभवः ।
न चाध्ययननिर्मुक्तः श्रुतस्कन्धोऽस्ति कश्चन ॥
केवलं यौगपद्येन न दृष्टौ तावितीयता ।
नादृष्टावेव तौ वत्स कालभेदेन दर्शनात् ॥

तथाहि ।

दृश्यते हि तरुर्दूरान्न लक्ष्यन्ते धवादयः ।

अभ्यर्णे तेऽपि दृश्यन्ते लक्ष्यते न तरुः पृथक् ॥
तथापि तद्द्वयं दृष्टं कालभेदेऽपि कीर्त्यते ।
यथाक्रमेण दृष्टत्वाद्रूपाद्याश्चचुरादिभिः ॥
अतो भेदेन दृष्टत्वाद्भिन्नमेवेदमिष्यताम् ।
अभिन्नस्य हि नो भिन्नं कालभेदेऽपि दर्शनम् ॥

तथाहि ।

अभेदेऽपि स्वभावाद्यैर्यत्सामान्यविशेषयोः ।
संख्यासंज्ञाङ्ककार्येभ्यो भेदोऽस्त्यस्ति परिस्फुटः ॥
तेन तद्द्वारजः सर्वो व्यवहारो न दूष्यति ।
भेदाभेदात्मके तत्त्वे भेदस्यैत्यं निदर्शनात् ॥

तथाहि ।

संख्यया तरुरित्येको भूयांसः खदिरादयः ।
संज्ञापि तरुरित्येषा धवाश्वकर्णादि भेदिनाम् ॥
अनुवृत्तिस्तरोस्तेषु लक्षणं पृथगीष्यते ।
धवाश्वत्थादिभेदानां व्यावृत्तिश्च परस्परम् ॥
कार्यं तु तरुमात्रेण साध्यं छायादिकं पृथक् ।
विशिष्टफलपुष्पाद्यमन्यदेवाश्वकादिभिः ॥
व्यवहारोऽपि सामान्ये श्रुतस्कन्धेऽन्य एव हि ।
अन्य एवास्य भेदेषु यदुद्देशादिलक्षणः ॥
तस्मात्तं भेदमाश्रित्य संख्यासंज्ञादिगोचरम् ।
अभेदं च तिरोधाय देशकालस्वभावजम् ॥
राजानः परिवाराद्य मया वत्स पृथक् पृथक् ।

नामतो गुणसंख्याभ्यां तवाग्रे परिकीर्तिताः ॥
एवं च भेदिनोऽप्येते न परस्परभेदिनः ।
यौगपद्येन भासन्ते भद्र तन्मुञ्च विस्मयम् ॥
न चान्यथापि कर्तव्यो विस्मयो लवणादिभिः ।
कथ्यमाने मया भेदे भो. सामान्यविशेषयोः ॥
प्रकर्षेणोदितं नाम नष्टोऽयं संशयोऽधुना ।
ममैष नाम सन्देहः परिस्फुरति मानसे ॥

यदुत ।

य एते सप्त राजान एतेषां मध्यवर्तिनः ।
तृतीयश्च चतुर्थश्च पञ्चमः षष्ठ एव च ॥
एते महीपास्चत्वारो यथा व्यावर्णितास्त्वया ।
तथा जनस्य लक्ष्यन्ते सुन्दरेतरकारिणः ॥
नैकान्तेनैव सर्वेषामपकारपरायणाः ।
एते हि बाह्यलोकानां केषांचित्सुखहेतवः ॥
आद्यो राजा द्वितीयश्च यश्च पर्यन्तभूपतिः ।
दुःखदा एव सर्वेषां त्रयोऽप्येते तु देहिनाम् ॥
ततः सपरिवारेण महामोहमहीभुजा ।
एतैश्च हतसाराणां तेषां किं नाम जीवितम् ॥

एवं च स्थिते ।

किं विद्यन्ते जनाः केचिद्बहिरङ्गेषु देहिषु ।
अमीभिर्न कदर्थ्यन्ते ये चतुर्भिररातिभिः ॥
किं वा न संभवन्त्येव तादृशा नाम देहिनः ।

येऽमीषां निजवीर्येण प्रतापचतिकारिणः ॥
तच्छ्रुत्वा भागिनेयोक्तं वचनं विहितादरः ।
अवादीदीदृशं वाक्यं विमर्शो मधुराचरैः ॥
विद्यन्ते बहिरङ्गेषु वत्स लोकेषु तादृशाः ।
एतेषां वीर्यनिर्णाशाः केवलं विरला जनाः ॥

तथाहि ।

सद्भूतभावनामन्त्रतन्त्रशास्त्रा महाधियः ।
कृतात्मकवचा नित्यं ये तिष्ठन्ति बहिर्जनाः ॥
अप्रमादपरास्तेषामेते सर्वेऽपि भूभुजः ।
महामोहादयो वत्स नोपतापस्य कारकाः ॥

यतः ।

सततं भावयन्त्येवं निर्मलीमसमानसाः ।
जगत्स्वरूपं ये धीराः श्रद्धासंशुद्धबुद्धयः ॥

कथम् ।

अनादिनिधनो घोरो दुस्तरोऽयं भवोदधिः ।
राधावेधोपमा लोके दुर्लभा च मनुष्यता ॥
मूलं हि सर्वकार्याणामाशापाशनिबन्धनम् ।
जलबुद्बुदसंकाशं दृष्टनष्टं च जीवितम् ॥
बीभत्समशुचेः पूर्णं कर्मजं भिन्नमात्मनः ।
गम्यं रोगपिशाचानां शरीरं चणभङ्गुरम् ॥
यौवनं च मनुष्याणां सन्ध्यारागाभ्रविभ्रमम् ।
चण्डवातेरिताम्भोदमालारूपाश्च सम्पदः ॥

आदौ संपादिताल्हादाः पर्यन्तेऽत्यन्तदारुणाः ।
एते शब्दादिसम्भोगाः किंपाकफलसन्निभाः ॥
माता भ्राता पिता भार्या पुत्रो जातेति जन्तवः ।
जाताः सर्वेऽपि सर्वेषामनादिभवचक्रके ॥
उषित्वैकनगे रात्रौ यथा प्रातर्विहङ्गमाः ।
यथायथं प्रजन्त्येव कुटुम्बे विश्वबान्धवाः ॥
दृष्टैः समागमाः सर्वे स्वप्नाप्तनिधिरूपताम् ।
नूनं समाचरन्त्येव वियोगानलतापिनः ॥
जरा जर्जरयत्येव देहं सर्वशरीरिणाम् ।
दलयत्येव भूतानि भीमो मृत्युमहीधरः ॥

ततश्च ।

तेषामेवंविधानेकभावनाभ्यासलासिनाम् ।
निर्धूततमसां पुंसां निर्मलीभूतचेतसाम् ॥
भद्र नैष महीपालो महामोहः सभार्यकः ।
जायते बाधको नापि सवधूकाविमौ सुतौ ॥

अन्यच्च ।

न शोको नारतिस्तेषां न भयो नापि शोषकाः ।
दुष्टाभिसन्धिप्रमुखा नूनं बाधाविधायकाः ॥
नामूनि डिम्भरूपाणि न चान्ये भद्र तादृशाः ।
यैरेवं भावनाशस्त्रैः पितापुत्रा अमी जिताः ॥

तथा ।

सर्वज्ञागमदृष्टेषु तत्त्वेषु सुविनिश्चिताः ।

ये पुनः सद्विचारेण चालयन्त्यात्मकल्मषम् ॥
नयन्ति स्थिरतां चित्तं सर्वज्ञागमचिन्तया ।
पश्यन्त्युन्मार्गयायित्वं मूढानां च कुतीर्थिनाम् ॥
तेषामेष जनानां भो निर्मलीभूतसद्धियाम् ।
न बाधकः प्रकृत्यैव महामोहमहत्तमः ॥
याप्येषा गृहिणी पूर्वं वर्णिता वीर्यशालिनी ।
कुदृष्टिः सापि तद्वीर्याद्दूरतः प्रपलायते ॥
ये पुनर्भावयन्त्येवं मध्यस्थेनान्तरात्मना ।
शरीरचित्तयो रूपं योषितां परमार्थतः ॥

यदुत ।

सितासिते विशाले ते ताम्रराजिविराजिनी ।
जीव चिन्तय निर्मिथ्यमक्षिणी मांसगोलकौ ॥
सुमांसकौ सुसंस्थानौ सुश्लिष्टौ वक्त्रभूषणौ ।
लम्बमानाविमौ वश्यौ कर्णौ यौ ते मनोहरौ ॥
यावेतावुन्नसद्दीप्ती भवतश्चित्तरञ्जकौ ।
ततचर्मावृतं स्थूलमस्थिमात्रं कपोलकौ ॥
ललाटमपि तादृक्षं यत्ते हृदयवल्लभम् ।
दीर्घोत्तुङ्गा सुसंस्थापि नासिका चर्मखण्डकम् ॥
यदिदं मधुनस्तुल्यमधरोष्ठं विभाति ते ।
मांसपेशीद्वयं स्पष्टमिदं लालामलाविलम् ॥
ये कुन्दकलिकाकारा रदनाश्चित्तहारिणः ।
एतेऽस्थिखण्डकानीति पद्धतिस्थानि लक्षय ॥

य एषोऽलिकुलच्छायः केशपाशो मनोहरः ।
योषितां तत्तमो हार्दं प्रकाशमिति चिन्तय ॥
यौ काञ्चनमहाकुम्भविभ्रमौ ते हृदि स्थितौ ।
स्तौ स्तनौ मूढ बुध्यस्व तौ स्थूलौ मांसपिण्डकौ ॥
यन्नामयति ते चित्तं ललितं दोर्लतादयम् ।
तत्तचर्मावृतं दीर्घं तदस्थियुगलं चलम् ॥
अशोकपल्लवाकारौ यौ करौ ते मनोहरौ ।
तावस्थिघटितौ विद्धि चर्मनद्धौ करङ्ककौ ॥
यद्रञ्जयति ते चित्तं वलित्रयविराजितम् ।
उदरं मूढ तद्विष्ठामूत्रान्त्रमलपूरितम् ॥
यदाक्षिपति ते स्वान्तं श्रोणीबिम्बं विशालकम् ।
प्रभूताशुचिनिर्वाहद्वारमेतद्विभाव्यताम् ॥
यौ मूढैर्हाटकस्तम्भसन्निभौ परिकल्पितौ ।
तावूरू पूरितौ विद्धि वसामज्जाशुचेर्नलौ ॥
सञ्चारिरक्ताजीवबन्धुरं भाति यच्च ते ।
तदंघ्रियुगलं स्नायुबद्धास्थ्नां पञ्जरद्वयम् ॥
यत्ते कर्णामृतं भाति मन्मनोल्लापजल्पितम् ।
तन्मारणात्मकं मूढ विषं हालाहलं तव ॥
शुक्रशोणितसंभूतं नवच्छिद्रं मलोल्बणम् ।
अस्थिशृङ्खलिकामात्रं हन्त योषिच्छरीरकम् ॥
न चास्माद्भिद्यते जीव तावकीनं शरीरकम् ।
कश्चैवं ज्ञाततत्त्वोऽपि कुर्यात्कङ्कालमीलकम् ॥

याप्येषा वर्णिता पूर्वं महावीर्या रतिर्मया ।
भार्यास्य सापि तैर्नूनं भावनाबलतो जिता ॥
तथैवंविधसद्भावभावनासक्तचेतसाम् ।
तेषामेषोऽप्यहो हासो दूरद्दूरतरं गतः ॥

तथा ।

सद्भावनिर्मलजलैः चालितामलचेतसाम् ॥
सर्वत्र निर्मलोकानां जुगुप्सापि न बाधिका ॥

तथाहि ।

यैस्तत्त्वतो विनिर्णीता शरीराशुचिरूपता ।
जलशौचाग्रहस्तेषां नात्यन्तं मनसः प्रियः ॥
यदेव चेतसः शुद्धेः सम्पादकमनिन्दितम् ।
तदेव शौचं विज्ञेयं यत एतदुदाहृतम् ॥
सत्यं शौचं तपः शौचं शौचमिन्द्रियनिग्रहः ।
सर्वभूतदया शौचं जलशौचं तु पञ्चमम् ॥

एवं च स्थिते ।

कार्यं जलैर्न नोऽकार्यं किं तु तत्कार्यमीदृशम् ।
विधीयमानं यच्छौचं भूतानां नोपघातकम् ॥
तच्च संजायते नूनं बहिर्मलविशुद्धये ।
नान्तरङ्गमलक्षालि यत उक्तं मनीषिभिः ॥
चित्तमन्तर्गतं दुष्टं न स्नानाद्यैर्विशुध्यति ।
शतशोऽपि हि तद्धौतं सुराभाण्डमिवाशुचि ॥

किंच ।

शरीरमलमप्येतज्जलशौचं कृतं जनैः ।
तेषां विशोधयत्येकं क्षणमात्रं न सर्वदा ॥

यतः ।

रोमकूपादिभिर्जन्तोः शरीरं शतजर्जरम् ।
धौतं धौतं स्रवत्येव नैतच्छुचि कदाचन ॥

तथापि ।

क्वचित्प्रवर्तमानानां देवतातिथिपूजने ।
केषांचित्कारणं भक्तेर्जलशौचमनिन्दितम् ॥
केवलं नाग्रहः कार्यो विदुषा तत्त्ववेदिना ।
तत्रैव जलजे शौचे स हि मूर्खत्वकारणम् ॥

ततश्च ।

एवं विशुद्धबुद्धीनां जलशौचादि कुर्वताम् ।
संज्ञानपरिपूतानां तेषां तात महात्मनाम् ॥
याप्येषा कथिता पूर्वमिहामुत्र च दुःखदा ।
जुगुप्सा सापि नष्टत्वान्नैव बाधाविधायिका ॥
यावप्येतौ जगच्छत्रू पूर्वं व्यावर्णितौ मया ।
ज्ञानसंवरणो राजा दर्शनावरणस्तथा ॥
तौ सर्वज्ञागमाभ्यासवासनावासितात्मनाम् ।
अप्रमादपराणां च नैव तेषां कदर्थकौ ॥
योऽप्यन्तरायनामायं राजा पर्यन्तसंस्थितिः ।
दानादिविघ्नहेतुस्ते मया पूर्वं निवेदितः ॥
निराशानां निरीहानां दायिनां वीर्यशालिनाम् ।

तेषां भद्र मनुष्याणां सोऽपि किं किं करिष्यति ॥
अन्येऽपि ये भटा दुष्टा या नार्यो ये च डिम्भकाः ।
केचिदत्र बले तेऽपि न तेषां भद्र बाधकाः ॥
एते तु भूपाश्चत्वारः सप्तानां मध्यवर्तिनः ।
तेषां भोः सुन्दराण्येव सर्वकार्याणि कुर्वते ॥

ततश्च ।

इदं निर्जित्य वीर्येण तेऽन्तरङ्गबलं जनाः ।
तिष्ठन्ति सततानन्दा निर्बाधाः शान्तचेतसः ॥
ससाधनयुतो यस्मान्महामोहनराधिपः ।
अयमेव बहिर्लोके परत्रेह च दुःखदः ॥

एवं च स्थिते ।

सद्भावभावनास्त्रेण यैः स एष वशीकृतः ।
कुतो दुःखोद्भवस्तेषां निर्द्वन्द्वा सुखपद्धतिः ॥
केवलं तादृशास्तात बहिरङ्गेषु देहिषु ।
अत्यन्तविरला लोकास्तेनेदं गीयते जनैः ॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥
तदेवं कथितं तुभ्यं सन्ति ते बाह्यदेहिनः ।
केवलं विरला राज्ञां येऽमीषां दर्पनाशिनः ॥
प्रकर्षः प्राह ते माम कुत्र तिष्ठन्ति देहिनः ।
यैरीदृशोऽपि विच्छिन्नः शत्रुवर्गो महात्मभिः ॥

विमर्शेनाभिहितं । वत्स समाकर्णय । श्रुतं मयाप्तजनसकाशा-

त्पूर्वं। यदुतास्ति समस्तवृत्तान्तसन्तानाधारविस्तारमनादिनिधनं भूरिप्रकाराद्भुतभूमिभूतं भवचक्रं नाम नगरं। अतिविस्तीर्णतया च तस्य नगरस्य विद्यन्ते तत्र बह्वन्यवान्तरपुराणि सन्ति बहुतराः पाटकाः संभवन्ति बहुतमा भवनपङ्क्तयः संभाव्यन्ते भूयांसि देवकुलानि। सङ्ख्यातीताश्च नानाजातयस्तत्र लोकाः प्रतिवसन्ति। ततोऽहमेवं वितर्कयामि। यदुत विद्यन्ते तत्र भवचक्रे नगरे बहिरङ्गलोका यैरेष महामोहनरेन्द्रप्रमुखः शत्रुवर्गः स्ववीर्येण विजिग्ये इति॥ प्रकर्षः प्राह। माम किमन्तरङ्गं तन्नगरं किं वा बहिरङ्गमिति। विमर्शेनोक्तं। तात न शक्यते तदेकपदनिर्देशेनावधारयितुं यथान्तरङ्गं यदि वा बहिरङ्गमिति। यस्मात्तत्र यथा बहिरङ्गजनास्तथैतेऽपि सर्वेऽन्तरङ्गलोका विद्यन्ते। यतोऽमीषां प्रतिपक्षभूतो ऽसौ सन्तोषस्तत्रैव नगरे श्रूयते ततोऽमीभिरनुविद्धं समस्तं नगरं। प्रकर्षेणोक्तं। नन्वमी अत्र वर्तमानाः कथं तत्र विचरेरन्। विमर्शेनोक्तं। तात योगिनः खल्वेते महामोहराजादयः सर्वेऽप्यन्तरङ्गलोकाः। तस्मादत्रापि दृश्यन्ते तत्रापि वर्तन्ते न कश्चिद्विरोधः। यतो जानन्ति यथेष्टबहुविधरूपकरणं कुर्वन्ति परपुरप्रवेशं समाचरन्ति चान्तर्धानं पुनः प्रकटीभवन्ति यथेष्टस्थानेषु ततोऽचिन्त्यमाहात्म्यातिशयाः खल्वेते राजानः। ते यथाकामचारितया कुत्र न विचरेरन्। तस्मादुभयरूपलोकाधारतयोभयरूपमेवैतद्भद्र भवचक्रं नगरं॥ प्रकर्षेणोक्तं। तर्हि यदि तत्र सन्तोषो वर्तते ते चामीषां भूभुजां दर्पोद्दलनकारिणो महात्मानो लोका विद्यन्ते ततो द्रष्टव्यं तन्नगरं। महन्मे कुतूहलं। अनुग्रहेण दर्शयतु माम। गच्छावस्तावत्तत्रैव

नगरे । विमर्शेनोक्तं । ननु सिद्धमिदानीमावयोः समीहितं । दृष्टो विषयाभिलाषो मन्त्री । निश्चितमस्य रसनाजनकत्वं । अतोऽवगता तस्य सम्बन्धिनी मूलशुद्धिः संपादितं राजशासनं। अतः किमधुनान्यत्र गतेन । स्वस्थानमेवावयोर्गन्तुं युक्तं । प्रकर्षेणोक्तं । माम मैवं वोचः । यतो वर्धितं भवचक्रव्यतिकरं वर्णयता भवता मम तद्दर्शनकौतुकं ततो नादर्शितेन तेन गन्तुमर्हति मामः । दत्तश्चावयोः कालतः संवत्सरमात्रमवधिस्तातेन । निर्गतयोश्चाद्यापि शरद्धेमन्तलक्षणमृतुद्वयमात्रमतिक्रान्तं। यतोऽधुना शिशिरो वर्तते। तथाहि। पश्यतु मामो मञ्जरीवन्धुरा वर्तन्ते सांप्रतं प्रियङ्गुलताः । विकासहासनिर्भरा विराजन्तेऽधुना रोध्रवलयः । विदलितमुकुलमञ्जरीकमिदानीं विभाति तिलकवनं । अपि च ।

शिशिरतुषारकणकर्दिग्धमशेषसरोजमण्डलं
सहकिसलयविलाससुभगेन महातरुकाननेन भोः ।
पथिकगणं च शीतवातेन विकम्पितगात्रयष्टिकं
ननु खलसदृश एष तोषादिव(वि)हसति कुन्दपादपः ॥
नूनमत्र शिशिरे विदेशगाः सुन्दरीविरहवेदनातुराः ।
शीतवातविहताः क्षणे क्षणे जीवितानि रहयन्ति मूढकाः ॥
पश्य माम कृतमुत्तरायणं भास्करेण परिवर्धितं दिनम् ।
शर्वरी च गमितैषदूनतां पूर्वरात्रिपरिमाणतोऽधुना ॥
बहलागरुधूपवरेऽपि गृहे वररल्लककम्बलतूलियुते ।
सङ्गमोहनृणां शिशिरेऽत्र सुखं न हि पीनवपुर्ललनाविरहे ॥
अथापि वर्धितं तेजो महत्त्वं च दिवाकरे ।

अथ वा ।

विमुक्तदक्षिणाशे किं म्लानिलाघवकारणम् ।

कार्यभारं महान्तं निजस्वामिनो
यान्यनिष्पन्नमेते विमुच्याधुना ।
पश्य माम स्वदेशेषु दुःसेवकाः
शीतभीताः स्वभार्याकुचोष्माशया ॥
ये दरिद्रा जराजीर्णदेहाश्च ये
वातला ये च पान्था विना कन्यया ।
भोः कदा शीतकालोऽपगच्छेदयं
माम जल्पन्ति ते शीतनिर्वेदिताः ॥
यावमश्वादिभच्चाय लोलूयते
भूरिलोकं तुषारं तु दोदूयते ।
दुर्गतापत्यवृन्दं तु रोरूयते
जम्बुकः केवलं माम कोकूयते ॥
वहन्ति यन्त्राणि महेक्षुपीडने
हिमेन शीता च तडागसन्ततिः ।
जनो महामोहमहत्तमाज्ञया
तथापि तां धर्मधियावगाहते ॥

अन्यच्च ।

अयं हि लङ्घितप्रायो वर्तते शिशिरोऽधुना ।
ततः पश्याममाचेऽपि किमु चम्पति मानकः ॥
गम्यतां भवचकोऽसौ ममानुपदकाम्यया।

मामेन परतो यत्ते रोचते तत्करिष्यते ॥
अनिवर्तकनिर्बन्धमेवं विज्ञाय भावतः ।
ततस्तदनुरोधेन विमर्शो गन्तुमुद्यतः ॥
अथ मिथ्या[भि]निवेशादिस्यन्दनव्रातसुन्दरम् ।
ममत्वादिगजस्तोमगलगर्जितबन्धुरम ॥
अज्ञानादिमहाश्वीयहेषारवमनोहरम् ।
दैन्यचापललौल्यादिपादातपरिपूरितम् ॥
महामोहनरेन्द्रस्य चतुरङ्गं महाबलम् ।
अपसृत्य ततः स्थानात्ताभ्यां सर्वं विलोकितम् ॥
ततो निर्णीतमार्गेण दृष्टौ स्वस्त्रीयमातुलौ ।
गच्छतस्तात्पुरं तूर्णमविच्छिन्नप्रयाणकैः ॥
मार्गोत्तारणकामेन मातुलं प्रति भाषितम् ।
ततः प्रकर्षसंज्ञेन तदेवं पथि गच्छता ॥
माम यः श्रूयते लोके सार्वभौमो महीपतिः ।
स कर्मपरिणामाख्यः प्रतापाक्रान्तराजकः ॥
तस्य सम्बन्धिनीमाज्ञां महामोहनराधिपः ।
किमेष कुरुते किं वा नेति मे संशयोऽधुना ॥
विमर्शः प्राह नैवास्ति भद्र भेदः परस्परम् ।
अनयोः परमार्थेन स हि ज्येष्ठः सहोदरः ॥
अयं पुनः कनिष्ठोऽस्यां महाटव्यां व्यवस्थितः ।
यतोऽयं चरटप्रायो महामोहनराधिपः ॥
ये दृष्टाः केचिदस्माभि भवताच महीभुजः ।

समस्ता अपि विज्ञेयास्ते तस्यापि पदातयः॥

केवलं।

स कर्मपरिणामाख्यः सुन्दराणीतराणि च।
कार्याणि कुरुते लोके प्रकृत्या सर्वदेहिनाम्॥
अयं तु सर्वलोकानां महामोहनरेश्वरः।
करोत्यसुन्दराण्येव कार्याणि ननु सर्वदा॥

अन्यच्च।

अयं जिगीषुर्भूपालः स राजा नाटकप्रियः।
एते भूपा निषेवन्ते महामोहमतः सदा॥
किं तु लोके महाराजो यतोऽस्यापि महत्तमः।
स कर्मपरिणामाख्यो भ्रातेति परिकीर्तितः॥
तस्मादेते महीपालास्तस्यापि पुरतः सदा।
गत्वा गत्वा प्रकुर्वन्ति नाटकं हर्षवृद्धये॥
भवन्ति गायनाः केचित्केचिदातोद्यवादकाः।
वादित्ररूपतामेव भजन्ते भक्तितोऽपरे॥

किं बहुना।

महामोहनरेन्द्राद्याः सर्वेऽमी तात भूभुजः।
सर्वथा हेतुतां यान्ति तत्र संसारनाटके॥
स तावत्प्राचसंतुष्टः सपत्नीको नराधिपः।
तदेव नाटकं पश्यन्नित्यमास्ते निराकुलः॥

अन्यच्च।

एतेषां तावदस्यैव सर्वेषां स प्रभुर्नृपः।

अन्येषामपि स स्वामी प्रायेणान्तरभूभुजाम् ॥

किं बहुना ।

स सर्वसमुदायात्मा सुन्दरेतरनायकः ।
अयं तदेकदेशात्मा तदादेशविधायकः ॥

तथाहि ।

येऽन्तरङ्गजनाः केचिदिहान्ते सुन्दरेतराः ।
स कर्मपरिणामाख्यस्तेषां प्रायः प्रवर्तकः ॥
यावन्ति चान्तरङ्गाणि निर्वृतिं नगरीं विना ।
पुराणि तेषु स स्वामी बहिरङ्गेषु भावतः ॥
अयं पुनर्महामोहो यावन्तोऽत्र विलोकिताः ।
भवता भूभुजः स्वामी तदादेशेन तावताम् ॥
यदेष निजवीर्येण किंचिदर्जयते धनम् ।
समर्पयति तत्तस्य निःशेषं नतमस्तकः ॥
अनेनोपार्जितस्योच्चैर्धनस्य विनियोजनम् ।
स राजा कुरुते नित्यं सुन्दरेतरवस्तुषु ॥
अयं हि विग्रहारूढः सदास्ते विजिगीषया ।
स तु भोगपरो राजा न जानात्येव विग्रहम् ॥

एवं च स्थिते ।

एष वत्स करोत्याज्ञां भक्तिनिर्भरमानसः ।
तस्य किं तु ततो भिन्नं नात्मानं मन्यते नृपः ॥

अन्यच्च ।

यद्दृष्टं भवता पूर्वं महामोहपुरद्वयम् ।

तत्कर्मपरिणामेन भटभुक्त्यास्य योजितम् ॥
अतः पुरद्वये तत्र सैन्यमस्य सुभक्तिकम् ।
तथाटव्यां च निःशेषमास्ते विग्रहतत्परम् ॥
प्रकर्षः प्राह मामेदमनयोः किं क्रमागतम् ।
राज्यं किं वान्यसम्बन्धि गृहीतं बलवत्तया ॥
विमर्शेनोदितं वत्स नानयोः क्रमपूर्वकम् ।
परसत्कमिदं राज्यं हठादाभ्यां विनिर्जितम् ॥

यतः ।

जीवः सकर्मको यस्तो बहिरङ्गजनस्तथा ।
संसारिजीव इत्येवं मया पूर्वं निवेदितः ॥
तस्यैषा भुज्यते सर्वा चित्तवृत्तिर्महाटवी ।
वीर्येण तं बहिष्कृत्य स्वीकृताभ्यां न संशयः ॥

प्रकर्षेणोक्तम् ।

कियान् कालो गृहीताया वर्तते माम मे वद ।
विमर्शः प्राह नैवादिं जानेऽहमपि तत्त्वतः ॥
तदेष परमार्थस्ते कथ्यते वत्स साम्प्रतम् ।
निःशेषः प्रलयं याति येन तावकसंशयः ॥
स कर्मपरिणामाख्यो दानोद्दालनतत्परः ।
प्रणताशेषसामन्तकिरीटच्छुरितक्रमः ॥
प्रभावमात्रसंसिद्धकार्यविस्तारसुस्थितः ।
राजाधिराजः सर्वत्र निविष्टो विष्टराधिपः ॥
अयं पुनर्महामोहस्तत्सैन्यपरिपालकः ।

तद्वृत्तमन्त्रसेव्यश्च तत्कोशपरिवर्धकः ॥
तदादेशकरो नित्यं तथापि गुरुपौरुषः ।
नूनं तं पालयत्येष राजकार्यं यथेच्छया ॥
तेनैष लौकिकीं वाचो युक्तिमाश्रित्य पण्डितैः ।
महासननिविष्टोऽपि ऊर्ध्वो राजा निगद्यते ॥
नानयोर्भिद्यते तात तस्माद्भेदः परस्परम् ।
यस्मादेकमिदं राज्यमेतत्तुभ्यं निवेदितम् ॥
प्रकर्षः प्राह मे माम विनष्टः संशयोऽधुना ।
अथ वा त्वयि पार्श्वस्थे कुतः सन्देहसम्भवः ॥
तदेवंविधसञ्जल्पकल्पनापगतश्रमौ ।
तौ विलङ्घ्य दिनैर्मार्गं भवचक्रे परागतौ ॥
इतश्च परिपाट्यैव शिशिरो लङ्घितस्तदा ।
संप्राप्तश्च जनोन्मादी वसन्तो मन्मथप्रियः ॥
स ताभ्यां नगरासन्ने भ्रमदुद्दामलीलया ।
वसन्तः काननेषूच्चैः कीदृशः प्रविलोकितः ॥

यदुत । नृत्यन्निव दक्षिणपवनवशोद्वेल्लमानकोमललतावाहुदण्डैर्गायन्निव नानाविहङ्गकलकलकलविरुतैर्महाराजाधिराजप्रियवयस्यकमकरकेतनस्य राज्याभिषेके जयजयशब्दमिव कुर्वाणो मत्तकलकोकिलाकुलकोलाहलकण्ठकूजितैस्तर्जयन्निव विलसमानवरचूतककलिकातर्जनीभिराकारयन्निव रक्ताशोककिसलयदललसिततरलकरविलसितैः प्रणमन्निव मलयमारुतान्दोलितनमच्छिखरमहातरुत्तमाङ्गैर्हसन्निव नवविकसितकुसुमनिकराट्टहासैः रुदन्निव त्रुटितपक्ष-

बन्धननिपतमानसिन्दुवारसुमनोनयनसलिलैः पठन्निव शुकसारिका-
स्फुटाचरोल्लापजल्पितेन सोत्कण्ठक इव माधवीमकरन्दबिन्दुसन्दो-
हास्वादनमुदितमत्तमधुकरकुलझणझणायितनिर्भरतया । अपि च

इति नर्तनरोदनगानपरः पवनेरितपुष्पजधूलिधरः ।
स वसन्तऋतुर्ग्रहरूपकरः कलितो नगरोपवनान्तचरः ॥

ततो विमर्शेनाभिहितः प्रकर्षः । यथा । वत्स काले तव भव-
चक्रनगरदर्शनकुतूहलं संपन्नं । यतोऽत्रैव वसन्ते मायेणास्य नगरस्य
सौन्दर्यसारमुपलभ्यते । तथाहि । पश्यामीषां काननाभोगविलो-
कनकौतुकेन निर्गतानां नागरकलोकानां यावस्था वर्तते ।

सन्तानकवनेषु परिमुह्यति धावति वकुलवृन्दके
विकसितमाधवीषु धृतिमेति विलुभ्यति सिन्दुवारके ।
पाटलपल्लवेषु न च हृष्यति नूनमशोकपादपे
चूतवनेषु याति चन्दनतरुगहनमथावगाहते ॥
इति मधुमासविकासिते रमणीयतरे द्विरेफमालिकेव ।
एतेषां ननु दृष्टिका विलसति सुचिरं वरे तरुप्रताने ॥
बहुविधमन्मथकेलिरसा दोलारमणसहेन ।
एते सुरतपराश्च गुरुतरमधुपानमदेन ॥

अन्यच्च ।

विकसिते सहकारवने रतः कुरवकस्तवकेषु च लम्पटः ।
मलयमारुतलोलतया वने सततमेति न याति गृहे जनः ॥
इदमहो पुरलोकयताकुलं प्रवरचूतवनावलिमध्यगम् ।
विलसतीह सुरासवपायिनां ननु विलोकय भद्र कदम्बकम् ॥

मणिविनिर्मितभाजनसंस्थितैरतिविनीतजनप्रविढौकितैः।
प्रियतमाधरमृष्टविदंशनैश्चषकरत्नमयूखविराजितैः॥
सुरभिनीरजगन्धसुवासितैः सुवनितावदनाम्बुरुहार्पितैः।
विविधमद्यरसैर्मुखपेशलैः कृतमिदं तदहो मदनिर्भरम्॥
तथाहि। पश्य वत्स यदत्रापानके ऽधुना वर्तते।
पतन्ति पादेषु पठन्ति मादिताः पिबन्ति मद्यानि रणन्ति गायनाः।
रसन्ति वक्त्राम्बुरुहाणि योषितामनेकचाटूनि च कुर्वते जनाः॥
वदन्ति गुह्यानि सशब्दतालकं मदेन नृत्यन्ति लुठन्ति चापरे।
विघूर्णमानैर्नयनैस्तथापरे मृदङ्गवंशध्वनिना विकुर्वते॥
स्वपूर्वजोल्लासनगर्वनिर्भरा धनानि यच्छन्ति जनाय चापरे।
भ्रमन्ति चान्ये विततैः पदक्रमैरितस्ततो यान्ति विना प्रयोजनम्॥

एवं च यावद्दर्शयति प्रकर्षस्य विमर्शस्तदापानकं तावन्निपतिता माधवीलतावितानमण्डपे कुवलयदलविलाससलासिनी प्रकर्षस्य दृष्टिः। अभिहितमनेन। मामेदमपरमापानकमेतस्मात्सविशेषतरं विजृम्भते। विमर्शेनाभिहितं। ननु सुलभाच भवचक्रनगरे वसन्तसमयागमप्रमोदितानां नागरकलोकानामापानपरम्परा। तथाहि। पश्य चम्पकवीथिकां निरूपय मृद्वीकामण्डपान् विलोकय कुब्जकवनगहनानि निरीक्षस्व कुन्दपादपसन्दोहं निभालय रक्ताशोकतरुलोमं साक्षात्कुरु वकुलविटपिगहनानि। यद्येतेषामेकमपि विलसदुद्दामकामिनीवृन्दपरिकरितमद्येश्वरनागरकलोकविरचितापानकविरहितमुपलभ्येत भवता ततो मामकीनवचनेऽन्यत्रापि न सम्प्रत्ययो विधेयः प्रतारकत्वाद्गद्रेणेति। प्रकर्षेणोक्तं। ननु कोऽत्र सन्देहः।

दृश्यन्ते प्रायेणैवाच प्रदेशे स्थितैर्य एते मामेनोद्घाटिता वनविभागा इति। किंच न केवलमेते काननाभोगाः सर्वेऽपि विविधमधुपानमत्तोत्तालकलितललितमर्दलोल्लासमिलितबहललोककलकलाकुलाः किं तर्हि।

क्वचिद्रसन्नूपुरमेखलागुणैर्नितम्बबिम्बातुलभारमन्थरैः॥
तरुप्रसूनोच्चयशाञ्छयागतैः सभर्तृकैर्भान्ति विलासिनीजनैः॥
क्वचित्तु तैरेव विघट्टिताः स्तनैर्महेभकुम्भस्खलविभ्रमैरिमे।
विभान्ति दोलापरिवर्तिभिः कृताः सकामकम्पा इव माम शाखिनः॥
क्वचिल्लसद्रासनिबद्धकौतुकाः क्वचिद्रहःस्थाननिबद्धमैथुनाः।
इमे क्वचिन्मुग्धविलासिनीमुखैर्न पद्मषण्डादधिका न शोभया॥

विमर्शनाभिहितं। साधु भद्र साधु सुन्दरं विलोकितं भवता। नूनमेवंविधा एव सर्वेऽपीमे काननाभोगाः। अत एव मयाभिहितं यथावसरे भवतो भवचक्रनगरदर्शनकुतूहलं संपन्नं यतोऽस्मिन्नेव वसन्तकाले नगरस्यास्य सौन्दर्यसारमुपलभ्यते। तदेते विलोकिता भद्र भवता तावद्बहिर्वनाभोगाः। साम्प्रतं प्रविशावो नगरं। विलोकयावस्तदीयश्रियं येन तव कौतुकमनोरथः परिपूर्णो भवति। प्रकर्षेणोक्तं। अतिदर्शनीयमिदं बहिर्लोकविलसितं। रमणीयतरोऽयं प्रदेशः। पथि श्रान्तस्त्वाहं। अतः प्रसादं करोतु मे मामः। तिष्ठतु तावदत्रैव क्षणमेकं। स्तोकवेलायां नगरे प्रवेक्ष्याव इति। विमर्शनाभिहितं। एवं भवतु॥ ततो यावदेष जल्पतयोः संपद्यते तावत् किं संवृत्तम्।

रथघणघणरावगर्जितः करिसङ्घातमहाभ्रविभ्रमः।
निशितास्त्रवितानवैद्युतश्चलशुक्लाश्वमहाबलाहकः॥

निपतन्मदवारिसुन्दरः प्रमदभरोद्धुरलोकसेवितः ।
जनिताखिलसुन्दरीमनोहृदुन्माथकरूपधारकः ॥
मधुमासदिदृक्षया पुराद्य वरराजकपौरवेष्टितः ।
नृपतिर्निरगात्समं बलैर्ऋतुरिव बन्धुधिया घनागमः ॥
स च वादितमर्दलैर्लसद्दरकंसालकवेणुराजितैः ।
कृतनृत्तविलासचारुभिर्न न भाति स्म सुचर्चरीशतैः ॥

ततो दृष्टस्ताभ्यां विमर्शप्रकर्षाभ्यां नगरान्निर्गतो महासामन्तवृन्दपरिकरितो वरवारणस्कन्धारूढो विकसितोद्दण्डपुण्डरीकपरिमण्डलपाण्डुरेण महता छत्रेण वारितातपो मघवानिवाधिष्ठितैरावतो विबुधसमूहमध्यगतश्च स नरेन्द्रः । विलोकितस्य तस्य पुरतो दृष्टः कलकलायमानो भूरिसितातपत्रफेनपिण्डः जृम्भित इव महासागरस्थलत्कदलिकासहस्रकरैः स्पर्द्धया त्रिभुवनमिवाधिक्षिपन्नतिभूरितयासौ जनसमुदायः । प्राप्तश्चोद्यानपरिसरे राजा । अत्रान्तरे विशेषतः समुल्लसिताश्चर्यः प्रहता मृदङ्गा वादिता वेणवः समुल्लासितानि कंसालकानि रणरणायितानि मञ्जीरकाणि प्रवर्धितस्तालरवो विजृम्भितः खिङ्गकोलाहलः प्रवृत्तो जयजयरवः समर्गलीभूतो बन्दिवृन्दशब्दः प्रवृत्ता गणिकागणाः क्षुभितः प्रेक्षकजनः संजाताः केलयः । ततस्ते लोकाः केचिन्नृत्यन्ति केचिद्वल्गन्ति केचिद्धावन्ति केचित्कलकलायन्ते केचित्कटाक्षयन्ति केचिल्लुठन्ति केचिदुपहसन्ति केचिद्गायन्ति केचिद्वादयन्ति केचिदुन्नमन्ते केचिदुत्कृष्टिशब्दान् मुञ्चन्ति केचिद्बाहुमूलमास्फोटयन्ति केचित्परस्परं मलयजकश्मीरजचोदरसेन कनकशृङ्गकैः सिञ्चन्ति । ततश्चैवं सति ।

लसदुद्भटभूरिविलासकरे मदनानलदीपितसर्वजने ।
अथ तादृशलोचनगोचरतां किमचिन्ति गते तु महामतिना ॥

इदं हि तदा मधुमासरसवशमत्तजनजनितं तत्तादृशं गुन्दलमवलोक्य विमर्शेन चिन्तितं । यदुत अहो महामोहसामर्थ्यं अहो रागकेसरिविलसितं अहो विषयाभिलाषप्रतापः अहो मकरध्वजमाहात्म्यं अहो रतिविजृम्भितं अहो हासमहाभटोल्लासः अहो अमीषां लोकानामकार्यकरणधीरता अहो प्रमत्तता अहो स्रोतोगामिता अहो अदीर्घदर्शिता अहो विचित्रचित्तता अहो अनालोचकत्वं अहो विपर्यासातिरेकः अहो अशुभभावनापरता अहो भोगतृष्णादौर्ललित्यं अहो अविद्यापहृतचित्ततेति ॥ ततः प्रकर्षो विस्फारिताक्षो निरीक्षमाणस्तल्लोकविलसितमभिहितो विमर्शेन । भद्र एते बहिरङ्गजना यद्विषयो मया वर्णितस्तेषां महामोहादिमहीभुजां प्रतापः । प्रकर्षः प्राह । माम केन पुनर्वृत्तान्तेन कतमस्य वा भूभुजः प्रतापेन खल्वेते लोका एवं चेष्टन्ते । विमर्शेनोक्तं । निरूप्य कथयामि । ततः प्रविश्य ध्यानं निश्चित्य परमार्थमभिहितमनेन। भद्र समाकर्णय। असौ चित्तवृत्तिमहाटव्यां प्रमत्ततानदीपुलिनवर्तिनि चित्तविक्षेपमहामण्डपे महामोहराजसमन्विन्यां तृष्णावेदिकायां महाविष्टरे निविष्टो दृष्टस्त्वया मकरध्वजः । तस्यायं वसन्तः प्रियवयस्यको भवति । ततो लङ्घितप्राये शिशिरे गतोऽयमासीत् तन्मूले । स्थितस्तेन सह सुखासिकया । अयं च वसन्तः कर्मपरिणाममहादेव्याः कालपरिणतेरनुचरः । ततस्तस्मै मकरध्वजाय प्रियसुहृदे निवेदितमनेन वसन्तेनात्मगुह्यं । यदुत

स्वामिनीनिर्देशेन गन्तव्यमधुना मया भवचक्रनगरमध्यवर्तिनि मानवावासाभिधानेऽवान्तरपुरे। तेनाहं चिरविरहकातरतया भवतो दर्शनार्थमिहागत इति। ततः सहर्षेण मकरध्वजेनोक्तं। सखे वसन्त किं विस्मृतं भवतोऽतीतसंवत्सरे यन्मया भवता च तत्र पुरे विलसितं येनैवं भाविविरहवेदनाविधुरचित्ततया खिद्यसे। तथाहि। यदा यदा भवतस्तत्र पुरे गमनाय स्वामिनीनिर्देशोऽभवत् तदा तदा मह्यमयेष महामोहनरेन्द्रस्तत्रैव पुरे राज्यं वितरति स्म। तत्किमितीयमकारणे भवतो मया सह वियोगाशङ्का। वसन्तेनोक्तं। वयस्य प्रत्युज्जीवितोऽहमधुना तेन कमनीयवचनेन। इतरथा विस्मृत एवासीन्नूनं ममैष व्यतिकरः। तथाहि।

अकाण्डापन्नकार्याणां सुहृद्विरहचिन्तया।
विस्मरत्येव हस्तेऽतिगृहीतं निखिलं नृणाम्॥

तत्सुन्दरमेवेदं। गच्छाम्यहमधुना। भवद्भिस्तूर्णमागन्तव्यं। मकरध्वजेनोक्तं। विजयस्व। ततः समागतोऽत्र पुरे वसन्तः। दर्शितं काननादिषु निजविलसितं। मकरध्वजेनापि विज्ञापितो विषयाभिलाषः। यथा पालितां ममानुग्रहेण सा चिरन्तनी सम्भावना। चित्तस्थ एव भवतामेष वसन्तवृत्तान्तः। ततो निवेदितं विषयाभिलाषेण रागकेसरिणे तद्वचस्यमेव तन्मकरध्वजवचनं। तेनापि कथितं महामोहराजाय। ततश्चिन्तितमनेन। अरे कृतपूर्व एवास्य वसन्तगमनावसरे प्रतिसंवत्सरं मया मकरध्वजस्य मानवावासपुरे राज्यप्रसादः। तदधुनापि दीयतामस्मै मकरध्वजाय राज्यं। यतो न लङ्घनीया कदाचिदुचितस्थितिरस्मादृशैः प्रभुभिः पालनीया

भृत्याश्चिरन्तनसम्भावनया। ततश्चैवमवधार्य महामोहराजेनामन्त्रितास्ते सर्वेऽपि निजास्थानस्थायिनो महीपालाः। यदुत भो भोः समाकर्णयत यूयं। दातव्यं मया भवचक्रनगरान्तर्भूते मानवावासपुरे मकरध्वजाय राज्यं। तत्र युष्माभिः समस्तैःमन्निहितैर्भाव्यमङ्गीकर्तव्योऽस्य पदातिभावो विधातव्यो राज्याभिषेको भवितव्यमाज्ञानिर्देशकारिभिरनुशीलनीयानि यथार्हं राज्यकार्याणि सर्वथा कर्तव्यमचुरुं समस्तस्थानेषु। मयापि प्रतिपत्तव्यमस्य राज्ये स्वयमेव महत्तमत्वं। तस्मात्सज्जीभवत यूयं। गच्छामस्तत्रैव पुरे। ततस्तैर्भूपतिभिरवनितलविन्यस्तहस्तमस्तकैः समस्तैरभिहितं। यदाज्ञापयति देवः। ततोऽभिहितो महामोहराजेन मकरध्वजः। यथा भद्र भवतापि राज्ये स्थितेन तत्र पुरे न हरणीयमेतेषां नरपतीनां निजं निजं यत्किमपि यथार्हमाभाव्यं। द्रष्टव्याः सर्वेऽप्यमी पुरातनसम्भावनया। मकरध्वजेनोक्तं। यदादिशति मोहराजः॥ ततः समागतास्ते सर्वेऽप्यत्र नगरे। अभिषिक्तो मानवावासपुरे राज्ये मकरध्वजः। प्रतिपन्नः शेषैर्यथार्हं तन्नियोगः। इतश्च योऽयं गजस्कन्धारूढो दृश्यत एष मानवावासवर्तिनि ललितपुरे लीलाक्षो नाम बहिरङ्गो राजा। ततस्तेन मकरध्वजेन ससैन्यपौरजनपदः स्वमाहात्म्येन निर्जित्य निःसारितोऽयमित्थं बहिः काननेषु। न चायमात्मानं तेन जितं वराको लक्षयति। नाप्येते लोकास्तेनाभिभूतमात्मानमवबुध्यन्ते। ततो भद्रानेन व्यतिकरेण तस्य मकरध्वजस्य महामोहादिपरिकरितस्य प्रतापाद्देते लोकाः खल्वेवं विचेष्टन्त इति। प्रकर्षेणोक्तं। सोऽधुना कुत्र मकरध्वजो वर्तते।

विमर्शः प्राह । नन्वेष सन्निहित एव सपरिकरः । सोऽमूनेवं विनाटयति । प्रकर्षः प्राह । माम तर्हि स कस्मान्नोपलभ्यते । विमर्शेनोक्तं । ननु निवेदितमेव मया भवतः पूर्वं । जानन्त्येतेऽन्तरङ्गलोकाः कर्तुमन्तर्धानं समाचरन्ति परपुरुषप्रवेशं । ततोऽमीषां जनानां शरीरेष्वनुप्रविष्टा निजविजयहृष्टास्ते भद्र प्रेक्षणकमिदं प्रेक्षन्ते । प्रकर्षः प्राह । माम कस्तर्हि कथं तानेवंस्थितानपि साक्षात्कुरुते । विमर्शेनोक्तं । अस्ति मे योगाञ्जनं विमलालोकं नाम । तद्बलेनेति । प्रकर्षेणोक्तं । ममापि क्रियतां तस्याञ्जनस्य दानेनानुग्रहो येनाहमपि तानवलोकयामि । ततो विमर्शेनाञ्जितं प्रकर्षस्य तेन योगाञ्जनेन लोचनयुगलं अभिहितश्च । वत्स निरूपयेदानीं निजहृदयानि । निरूपितानि प्रकर्षेण । ततः सहर्षेणाभिहितमनेन । माम दृश्यते मयाप्यधुना कृतराज्याभिषेको महामोहादिपरिकरितो मकरध्वजः । तथाहि ।

एष सिंहासनस्थोऽपि जनमेनं धनुर्धरः ।
आहत्याहत्य निर्भिन्ते आकर्णान्तं शिलीमुखैः ॥
तैर्विद्धं विह्वलं दृष्ट्वा ततो लोकं सराजकम् ।
प्रहारजर्जरं चेत्य विकारकरणाकुलम् ॥
महाकहकहध्वानैः सह रत्या प्रमोदितः ।
हस्ते तालान्विधायोच्चैर्हसत्येष नराधिपः ॥
सुहृतं सुहृतं देव वदन्त इति किङ्कराः ।
महामोहादयोऽप्यस्य हसन्तीमे पुरः स्थिताः ॥
तत्किमत्र बहुना जल्पितेन ।

महाप्रमादो मे माम कृत एवातुलस्त्वया ।
यद्राज्यलीलां भुञ्जानो दर्शितो मकरध्वजः ॥

विमर्शेनोक्तं । वत्स कियदद्यापीदं । बहुतरमत्र भवचक्रनगरे भवतान्यदपि द्रष्टव्यं । संभवन्त्यत्र भूरिप्रकाराणि प्रेचणकानि । प्रकर्षः प्राह । माम त्वयि सप्रसादे दर्शके किं वा मम दर्शनकुतूहलं न परिपूर्यत । केवलं मकरध्वजस्य समीपे महामोहरागकेसरिविषयाभिलाषहासादयः सपत्नीकाः समुपलभ्यन्ते । अधुना मया ते तु द्वेषगजेन्द्रारतिशोकादयो नोपलभ्यन्ते । तत् किमत्र कारणं । किं नागतास्तेऽत्र मकरध्वजराज्ये । विमर्शेनोक्तं । वत्स समागता एव तेऽत्र भवचक्रनगरे न सन्देहो विधेयः । किं तु निवेदितमेव मया यथाविर्भावतिरोभावधर्मकाः खल्वेतेऽन्तरङ्गलोकाः । ततस्ते द्वेषगजेन्द्रशोकादयोऽत्रैव तिरोभूतास्तिष्ठन्ति राज्ञः सेवावसरमपेचन्ते । एते तु महामोहादयो लब्धावसरतया राज्ञः सभायामाविर्भूताः स्वनियोगमनुशीलयन्ति । किं तु प्रचण्डशासनः खल्वेष मकरध्वजनरेन्द्रः । ततोऽस्य राज्ये यस्य यावान्नियोगस्तेन तावाननुष्ठेयः । यस्य यावन्माहात्म्यं तेन . तावद्दर्शनीयं । यस्य यावद्दाभाव्यं तेन तावत्तदेव ग्राह्यं नाधिकमूनं वा । तथाहि । यदयं लोभाचो राजा महाशेषराजवृन्देन निखिललोकाय जिता अप्यनेन मकरध्वजेन न जानन्ति सपरिकरमेनं वस्भूतं मन्यन्ते तदिदं महामोहेन विहितमयमेवास्य नियोगोऽत्रैव माहात्म्यमिदमेवास्याभाव्यमिति । यत्पुनरेते लोकाः प्रीतिमुद्वहन्तो वर्तन्ते कृतकृत्यमात्मानमवगच्छन्ति तदिदं रागकेसरिणा जनितं अस्यैव च नियोगमाहात्म्याभाव्यगोच-

रभूतं। यत्पुनरेते लुभ्यन्ति शब्दादिषु कुर्वन्ति विकारशतानि तदिदं विषयाभिलाषस्य विजृम्भितं नियोगादिकं च। यत्पुनरट्टाट्टहासैर्हसन्ति दर्शयन्ति बिब्बोकान् इदं हास्यस्य विलसितं। एवं तत्पत्नीनामपि यथार्हं शेषाणामपि नरपतीनां च डिम्भरूपाणां च नियोगमाहात्म्याभाव्यग्रहणव्यापाराः प्रतिनियता एव द्रष्टव्याः। यत्पुनरमी जनाः शब्दादिकं भोगजातमुपभुञ्जते सहर्षमनुकूलयन्ति कलत्राणि स्तुवन्ति तेषां वक्त्राणि समाश्लिष्यन्ति गात्राणि सेवन्ते मैथुनानि तत्रैवमादिके कर्मणि नैष मकरध्वजराजोऽन्यस्य नियोगं ददाति किं तर्हि रत्या सह स्वयमेव कुरुते। यतोऽस्यैव तत्र कर्मणि सामर्थ्यं नान्यस्येति। तदेवं वत्स विद्यन्ते तत्र द्वेषगजेन्द्रशोकादयः। केवलं स्वकीयं नियोगावसरं प्रतीक्षन्ते। तेन नाविर्भवन्ति॥ प्रकर्षेणोक्तं। यद्येवं ततः किं शून्यीभूतोऽधुना चित्तवृत्तौ स महामोहास्थानमण्डपः। विमर्शेनोक्तं। नैतदेवं। निवेदितमेव तुभ्यं। कामरूपिणः खल्वमी अन्तरङ्गजनाः ततः समागताः सर्वेऽप्यत्र मकरध्वजराज्ये। तथापि तन्महामोहास्थानं तदवस्थमेवास्ते। इदं हि कतिचिद्दिनभावि मुहूर्तसुन्दरं मकरध्वजराज्यं। तत्तु महामोहराज्यमाकालप्रतिष्ठमनन्तकल्पविमर्दसुन्दरं अतः का तत्र विचलनाशङ्का। अन्यच्च। तत्समस्तभुवनव्यापकं महामोहराज्यमिदं पुनरत्रैव मानवावासपुरे मकरध्वजराज्यं। केवलं चिरन्तनक्षितिपालनव्यसनितया निजपादातैरपि स्वयमेव राज्येऽभिषिक्तस्य पुरतोऽस्य मकरध्वजस्य महामोहनरेन्द्रोऽयमेवं भृत्यभावमाचरति। तस्मादविचलमेव भद्र तन्महामोहास्थानं

तत्र वर्तमाना एवामी नूनमत्र दृश्यन्ते। प्रकर्षेणोक्तं। नष्टो मे संशयोऽधुना।

अत्रान्तरे करिवरादवतीर्णः स लोलाचो राजा प्रविष्टश्चण्डिकायतने। तर्पिता मद्येन चण्डिका। विहितपूजः समुपविष्टस्तस्या एव चण्डिकायाः पुरोवर्तिनि महति परिसरे मद्यपानार्थं। ततः सहैव तावता जनसमाजेन बद्धमापानकं। प्रकटितानि नानारत्नविघटितानि विविधमद्यभाजनानि। समर्पिताः समस्तजनानां कनकचषकानिकराः। प्रवर्तिता मधुवाराः। ततो विशेषतः पीयते प्रसन्ना। गीयते हिन्दोलकः। उपरि परिधीयते नवरङ्गकः। दीयते वादनेभ्यः। विधीयते नर्तनं। अभिनीयते करकिसलयेन। विधीयते प्रियतमाधरविम्बं। अवदीर्यते रदनकोटिविलसितेन। उपचीयते मदिरामदनिर्भरता। प्रहीयते लज्जाशङ्कादिकं। निमीयते दयितावदनेषु दृष्टिः। विलीयते गाम्भीर्यं। स्तीयते जनैर्वालविजृम्भितेन। व्यवसीयते सर्वमकार्यमिति॥ इतश्च लोलाचनृपतेः कनिष्ठो भ्राता रिपुकम्पनो नाम युवराजः। तेन मदपरवशतया कार्याकार्यमविचार्याभिहिता निजा महादेवी रतिललिता। यदुत। प्रियतमे नृत्य नृत्येति। ततः सा गुरुमध्यमतिलज्जाभरालसापि लङ्घयितुमशक्नुवती भर्तुरादेशं नर्तितुं प्रवृत्ता। तां च नृत्यन्तीमवलोकयमानो मनोहरतया तल्लावण्यस्य विकारकारितया मधुमदस्याक्षिप्तचित्तस्ताडितोऽनवरतपातिना शरनिकरेण स लोलाचो नृपतिर्मकरध्वजेन तां प्रति गाढमध्युपपन्नचेतसा। स च शक्तोऽध्यवसातुं। स्थितः कियतीमपि वेलाम्॥ इतश्च

भूरिमद्यपानेन मदनिर्भरं निश्चेष्टीभूतमापानकं। प्रलुठिताः सर्वे लोकाः। प्रवृत्ताश्छर्दयः। संजातमशुचिकर्दमपिच्छिलं। निपतिता वायसाः। समागताः सारमेयाः। अवलीढानि जनवदनानि। प्रसुप्तो रिपुकम्पनः। जागर्ति रतिललिता॥ अत्रान्तरे वशीकृतो महामोहेन क्रोडीकृतो रागकेसरिणा प्रेरितो विषयाभिलाषेण अभिभूतो रतिसामर्थ्येन निर्भिन्नो हृदयमर्मणि शरनिकरप्रहारैर्मकरध्वजेन म्रियमाण इवात्मानमचेतयमानः प्रचलितो लोलाक्षो रतिललिताग्रहणार्थं वेगेन। प्राप्तस्तत्समीपं। प्रसारितौ बाहुदण्डौ। ततः किमेतदिति चिन्तितं रतिललितया। लक्षितं तदाकूतमनया। समुत्पन्नं साध्वसं। संजातं भयं। विगलितो मदिरामदः। पलायितुं प्रवृत्ता गृहीता लोलाक्षेण। विमोचितोऽनयात्मा। धावन्ती पुनर्गृहीता लोलाक्षेण। ततः पुनर्विमोच्यात्मानं प्रविष्टा तत्र चण्डिकायतने। स्थिता चण्डिकाप्रतिमायाः पृष्ठतो भयेन कम्पमाना॥ अत्रान्तरे देषगजेन्द्रस्य संपन्नो राजादेशः। आविर्भूतोऽसौ। दृष्टः प्रकर्षेण। स प्राह। माम स एष देषगजेन्द्रः सहितो निजडिम्भरूपैः। विमर्शेनोक्तं। वत्स संपन्नोऽस्य नियोगावसरः। केवलमस्य विलसितमधुना विलोकयतु वत्सः। प्रकर्षेणोक्तं। एवं करोमि॥ ततः प्रतिपन्नं देषगजेन्द्रेण राजशासनं। अधिष्ठितो लोलाक्षः। चिन्तितमनेन। मारयाम्येनां पापां रतिललितां या मां विहायेत्थं नश्यति। गृहीतोऽनेन खड्गः। प्रविष्टश्चण्डिकायतने। मदिरामदान्धतया तद्बुद्ध्या विदारितानेन चण्डिका। नष्टा रतिललिता। बहिर्निर्गत्य तयार्यपुत्रार्यपुत्र त्रायस्व त्रायस्वेति कृतो हाहारवः।

विबुद्धो रिपुकम्पनः सहितो लोकेन । अभिहितमनेन । प्रियतमे कुतस्ते भयं । कथितमनया लोलाचचेष्टितं । ततोऽधिष्ठितः सोऽपि द्वेषगजेन्द्रेण । सक्रुधं सतिरस्कारमाहूतोऽनेन रणाय लोलाक्षः । प्रक्षुभिताः सुभटाः । समुत्थितानि प्रेषणापानकानि । समुच्छलितः कलकलः । सन्नद्धं चतुरङ्गबलं । प्रादुर्भूतं द्वन्द्वं । ततश्चाविज्ञातव्यतिकरतया मदिरामदपरवशतया च परस्परमेव कातरनराः कातरनरैः खरैः खरा वेगसरैर्वेगसराम्तुरगैस्तुरगा वरकरभैर्वरकरभा रथवरै रथवराः कुञ्जरैः कुञ्जरास्तदपरैर्वरकुञ्जरैर्वरकुञ्जरा नरवरप्रेरितैश्चूर्णयितुमारब्धाः । संजातमकाण्डे बहुजनमर्दनं ॥ इतश्च तथा रिपुकम्पनेनाहूतो लोलाचश्चलितस्तदभिमुखं द्वेषगजेन्द्राधिष्ठितः । मदिरामदान्धतया लग्नौ तौ करवालयुद्धेन । ततो गाढामर्षाभिपातितोऽरिपुकम्पनेन लोलाचः । संजातो महाविघ्नः । तमवलोक्य प्रविष्टौ नगरे विमर्शप्रकर्षौ । स्थितौ निराबाधस्थाने । विमर्शेनोक्तं । वत्स दृष्टं द्वेषगजेन्द्रमाहात्म्यं । स प्राह । सुष्ठु दृष्टं माम तावत्तां विलासानामीदृशं पर्यवसानं । विमर्शेनोक्तं । भद्र मद्यपायिनामेवंविधमेव पर्यवसानं भवति । मदिरामत्ता हि प्राणिनः कुर्वन्त्यगम्यगमनानि न लक्षयन्ति पुरःस्थितं मारयन्ति प्रियबान्धवान् जनयन्त्यकाण्डविड्वरं समाचरन्ति समस्तपातकानि भवन्ति सर्वजगत्सन्तापकाः निपात्यन्ते निष्प्रयोजनं मृत्वा च गच्छन्ति दुर्गतौ । किमत्राश्चर्यमिति ।

किं च ।

मद्ये च पारदार्ये च ये रताः क्षुद्रजन्तवः ।

तेषामेवंविधानर्थान् वत्स कः प्रष्टुमर्हति ॥
मद्यं हि निन्दितं सद्भिर्मद्यं कलहकारणम् ।
मद्यं सर्वापदां मूलं मद्यं पापशताकुलम् ॥
न त्यजेद्गमनं मद्ये पारदार्ये च यो नरः ।
यथायं वत्स लोलाचस्तथासौ लभते क्षयम् ॥
मद्यं च पारदार्यं च यः पुमांस्तात मुञ्चति ।
स पण्डितः स पुण्यात्मा स धन्यः स कृतार्थकः ॥

प्रकर्षेणोक्तं । एवमेतन्नास्त्यत्र संशयः । ततस्तयोस्तत्र नगरे विचरतोर्गतानि कतिचिद्दिनानि । अन्यदा मानवावासपुरे राजकुलासन्ने दृष्टस्ताभ्यां पुरुषः । प्रकर्षेणोक्तं । माम स एष मिथ्याभिमानो दृश्यते । विमर्शेनोक्तं । सत्यं स एवायं । प्रकर्षः प्राह । ननु राजसचित्तनगरे किलाविचलोऽयं । तत् कथमिहागतः । विमर्शेनोक्तं । एवं नाम मकरध्वजस्योपरि सप्रसादो महामोहराजो येनास्य राज्ये यद्यत्तं निजबलं तदप्यानीतं । केवलं कामरूपितयायं मिथ्याभिमानो मतिमोहश्च यद्यपीहानीतौ दृश्येते तथापि तयोरेव राजसचित्ततामसचित्तपुरयोः परमार्थतस्तिष्ठन्तौ वेदितव्यौ । प्रकर्षेणोक्तं । माम कुत्र पुनरेषोऽधुना गन्तुं प्रवृत्तः । विमर्शेनोक्तं । भद्राकर्णय । योऽसौ दृष्टस्त्वया रिपुकम्पनः स निहते लोलाचेऽधुना राज्येऽभिषिक्तः । तस्य चेदं भवनं । अतोऽयं मिथ्याभिमानः केनचित् कारणेनेदं राजसदनं प्रवेष्टुकाम इव लक्ष्यते । प्रकर्षः प्राह । ममापीदं नरपतिनिकेतनं दर्शयतु मामः । विमर्शेनोक्तं । एवं करोमि । ततः प्रविष्टौ तौ तत्र नृपतिगेहे ॥ इतश्च तस्य रिपुकम्पनभूपतेरस्ति

द्वितीया मतिकल्पिता नाम महादेवी । सा च तस्मिन्नेव समये दारकं प्रसूता । अथ तत्र जातमात्रे राजसूनौ भास्करोदये विकसितमिव तामरसं व्यपगततिमिरनिकरमिव गगनतलं विनिद्रमिव सुन्दरजननयनयुगलं भुवनमिव स्वधर्मकर्मव्यापारपरायणं तद्राजभवनं राजितुं प्रवृत्तं । कथं । विरचिता मणिप्रदीपनिवहाः । विस्तारिता मङ्गलदर्पणमालाः । संपादितानि भूतिरक्षाविधानानि । निर्वर्तिता गौरसिद्धार्थकैर्नन्दावर्तशतपत्रलेखाः । निवेशिताः सितचामरधारिण्यो विलासिन्यः । ततः प्रचलिता वेगेनास्थानमध्यायिनो भूपतेः सुतजन्ममहोत्सवं निवेदयितुं प्रियंवदिका । कथं ।

रभसोद्दामविसंस्थुलगमनं गमनस्खलितसनूपुरचरणम् ।
चरणचलत्तोषाचलितहृदयं हृदयविकम्पस्फुरितनितम्बम् ॥
स्फुरितनितम्बनिनादितरसनं रभसाक्षतपयोधरसिचयम् ।
सिचयनिपातसलज्जितवदनं वदनप्रभाद्योतितभुवनम् ॥

अपि च ।

नितम्बबिम्बवक्षोजदुर्वारभरनिःसहा ।
तथापि रभसादासा वेगाद्धावति सा तदा ॥
निवेदिते मया राजपुत्रजन्ममहोत्सवे ।
आनन्दपुलकोद्भेदनिर्भरः समपद्यत ॥

अत्रान्तरे प्रविष्टो मिथ्याभिमानः । ततोऽधिष्ठितमनेन रिपुदारणशरीरं । ततश्च ।

तेनावष्टब्धचित्तोऽसौ महामौनी रिपुदारणः ।
न नमते न वा देवं नापि माति स्वदेहके ॥

चिन्तितं च पुनस्तेन विपर्यासितचेतसा ।
अहो कृतार्थो वर्तेऽहमहो वंशसमुन्नतिः ॥
अहो देवप्रसादो मे अहो लक्षणयुक्तता ।
अहो राज्यमहो स्वर्गः संपन्नं जन्मनः फलम् ॥
अहो जगति जातोऽहमहो कल्याणमालिका ।
अहो मे धन्यता सर्वमहो सिद्धं समीहितम् ॥
अपुत्रेण मया योऽयमुपयाचितकोटिभिः ।
प्रार्थितः सोऽद्य संपन्नो यस्य मे कुलनन्दनः ॥
ततः कटककेयूरहारकुण्डलमौलयः ।
निवेदिकायै लक्षेण दीनाराणां सहार्पिताः ॥
उल्लसत्सर्वगात्रेण हर्षगद्गदभाषिणा ।
प्रकृतीनां समादिष्टः सुतजन्ममहोत्सवः ॥
ततो नरपतेर्वाक्यं श्रुत्वा मन्त्रिमहत्तमैः ।
क्षणेन सदने तत्र तत किं किं विनिर्मितम् ॥

पवननिहतनीरसङ्घातमध्यस्थितानेकयादःसमूहोर्ध्वपुच्छच्छटाघातसंपन्नकल्लोलमालाकुले यादृशः स्वानिनादो महानीरधौ तत्र गेहे समन्तादथो तादृशस्तूर्यसङ्घातघोषः क्षणादुत्थितः । तथा। प्रवरमलयसम्भवचोदकक्षीरशातागुरुस्तोमकस्तूरिकापूरकर्पूरनीरप्रवाहोघसंपन्नसत्कर्दमामोदसन्दोहनिष्यन्दबिन्दुप्रपूरेण संपादिताशेषजन्तुप्रमोदं तथा रत्नसङ्घातविद्योतनिर्नष्टसूर्यप्रभाजालसञ्चारमाशोभते तत्तदा मन्दिरम् ॥

मङ्गनाटितकुब्जकवामनकं प्रविघूर्णितकञ्चुकिहासनकम् ।

जनदापितरत्नसमूहचितं त्रुटितातुलमौक्तिकहारभृतम् ॥
लघदुद्भटवेषभटाकुलकं ललनाजनलासविलासयुतम् ।
वरखाद्यकपानकतुष्टजनं जनितं प्रमदादिति वर्धनकम् ॥
अथ तादृशि वर्धनके निखिले प्रमदेन च नृत्यति भृत्यगणे ।
अतिहर्षवशेन कृतोर्ध्वभुजः स्वयमेव ननर्त चिरं स नृपः ॥

ततस्तत्तादृशं दृष्ट्वा महासंमर्दवृन्दलम् ।
प्रकर्षः संशयापन्नः प्रत्याह निजमातुलम् ॥
निवेदयेदं मे माम महदत्र कुतूहलम् ।
किमितीमे रटन्त्युच्चैर्निर्वादितमुखा जनाः ॥
अत्यर्थमुल्लसन्ते च किमर्थमिति मोदिताः ।
किं चामी मृत्तिकाभारं निजाङ्गेषु वहन्ति भोः ॥
चर्मावनद्धकाष्ठानि दृढमास्फोटयन्ति किम् ।
विष्ठासंभारमुक्त्वोच्चो मन्दं मन्दं चलन्ति किम् ॥
किं वैष सदनस्यास्य नायकः पृथिवीपतिः ।
बालहास्यकरं मूढः करोत्यात्मविडम्बनम् ॥
तदत्र कारणं माम यावन्नो लक्षितं मया ।
इदं तावन्ममाभाति महाकौतुककारकम् ॥
विमर्शः प्राह ते वत्स कथ्यतेऽत्र निबन्धनम् ।
यदस्य सकलस्यापि वृत्तान्तस्य प्रवर्तकम् ॥
पश्यतस्ते प्रविष्टोऽत्र य एष नृपमन्दिरे ।
मिथ्याभिमानस्तेनेदं तात सर्वं विजृम्भितम् ॥
अयं हि राजा जातो मे सूनुरेवं विचिन्तयन् ।

न माति देहे नो गेहे न पुरे न जगत्त्रये ॥
ततो मिथ्याभिमानेन विकलीकृतचेतसा ।
आत्मा च सकलश्चेत्थं लोकोऽनेन विडम्बितः ॥
न चेदं लक्षयत्येष नूनमात्मविडम्बनम् ।
यतो मिथ्याभिमानेन वराकं मन्यते जगत् ॥
प्रकर्षः प्राह यद्येवं ततोऽस्य परमो रिपुः ।
नाम मिथ्याभिमानोऽयं यः खल्वेवं विडम्बकः ॥
विमर्शः प्राह को वात्र संशयो भद्र वस्तुनि ।
निश्चितं रिपुरेवायं बन्धुरस्य प्रभासते ॥
प्रकर्षः प्राह यद्येवं ततो योऽस्य वशं गतः ।
स एष नृपतिर्नाम कीदृशो रिपुकम्पनः ॥
विमर्शेनोदितं वत्स न भावरिपुकम्पनः ।

किंतु ।

बहिर्वैरिषु शूरोऽयं तेनेत्थमभिधीयते ॥

इह च ।

यो बहिः कोटिकोटीनामरीणां जयनक्षमः ।
सभविष्णुर्विना ज्ञानं सोऽपि नान्तरवैरिणाम् ॥
तथास्य वत्स दोषोऽयं नाशेषां शेषदेहिनाम् ।
यतोऽत्र परमार्थेन ज्ञानाभावोऽपराध्यति ॥
यस्मादज्ञानकाचान्धाः किंचिदासाद्य कारणम् ।
यान्ति मिथ्याभिमानस्य भुवनस्य वशं नराः ॥
तेनाभिभूतचित्तास्ते याता इव जनैः सह ।

विडम्बयन्ति चात्मानं यथैष रिपुकम्पनः ॥
ज्ञानावदातबुद्धीनां पुत्रे राज्ये धनेऽपि वा।
लोकाश्चर्यकरे जाते महत्यप्यस्य कारणे ॥
चित्ते न लभते ढौकं धन्यानामान्तरो रिपुः।
वत्स मिथ्याभिमानो ऽयं ते हि मथ्यन्ते देहिनः ॥
यावच्च कथयत्येवं विमर्शस्तत्र कारणम्।
तावद्राजकुलद्वारे नरौ द्वौ समुपागतौ ॥
प्रकर्षेणोदितं माम दृश्येते काविमौ नरौ।
स प्राह मतिमोहेन युक्तः शोकोऽयमागतः ॥

अत्रान्तरे सूतिकागृहे समुच्छ्रसितः करुणकोलाहलोन्मिश्रः पूत्काररावः। प्रधावन्ति स्म महाहाहारवं कुर्वाणा नरपतेरभिमुखं दासचेट्यः। ग्रस्तमानन्दवृन्दलं। किमेतदिति पुनः पुनः पृच्छन् कातरीभूतो राजा। ताभिरभिहितं। त्रायस्व देव त्रायस्व। कुमारो भग्नलोचनो जातः। कण्ठगतप्राणस्ततो धावत धावत। ततो वज्राहत इव संशतो राजा। तथापि सत्त्वमवलम्ब्य सपरिकरो गतः सूतिकागृहे। दृष्टः स्वप्रभोद्भासितभवनभित्तिभागः संपूर्णलक्षणधरः किंचिच्छेषजीवितव्यो दारकः। समाहूतं वैद्यमण्डलं। पृष्टो वैद्याधिपतिः। किमेतदिति। स प्राह। देव समापतितो ऽस्य कुमारस्य सद्योघाती बलवानातङ्कः। स च प्रचण्डपवन इव प्रदीपमेनमुपसंहरति प्रायः पश्यतामेवास्माकं मन्दभाग्यानां। नृपतिराह। भो भो लोकाः शीघ्रमुपक्रमध्वं यथागमं। कुमारं यो जीवयति तस्मै राज्यं प्रयच्छामि स्वयं च पदातिभावं प्रतिपद्येऽहं।

तदाकर्ण्य सर्वादरेण लोकैः प्रयुक्तानि भेषजानि वाहिता मन्त्राः निबद्धानि काण्डकानि लिखिता रक्षा कृतानि भूतिकर्माणि नियोजिता विद्या वर्तितानि मण्डलानि संस्मृता देवता विन्यासितानि तन्त्राणि । तथा कुर्वतामपि च गतः पञ्चत्वमसौ दारकः । अत्रान्तरे कामरूपितया शोकमतिमोहार्थां सपरिकरयोर्मतिकलितारिपुकम्पनयोः कृतः शरीरानुप्रवेशः । ततश्च ।

हा हतास्मि निराशास्मि मुषितास्मीति भाषिणी ।
त्रायस्व देव देवेति वदन्ती नष्टचेतना ॥
क्षणान्निपतिता भूमौ मृतं वीक्ष्य कुमारकम् ।
सा देवी वज्रसङ्घाततािडितेवातिविक्लवा ॥
हा पुत्र जात तातेति ब्रुवाणा मूर्छया यया ।
राजापि पतितो भूमौ मुक्तः प्राणैस्तथैव सः ॥
ततो हाहारवो घोरो महाक्रन्दश्च भैरवः ।
जनोरस्ताडशब्दश्च क्षणेन समजायत ॥
अथ मुक्तविलोलकेशकं दलितविभूषणभग्नशंखकम् ।
रिपुकम्पनयोषितां शतैर्हहदाक्रन्दनकं प्रवर्तितम् ॥
लालाविलवक्त्रकोटरं लुठितं भूमितले सुदीनकम् ।
उल्लुञ्चितकेशपाशकं हृहदाराटिविमोचनतत्परम् ॥
हाहा हाहेति सर्वतः करुणध्यानपरायणं जनम् ।
अथ वीक्ष्य स विस्मितेक्षणो बुद्धेः सूनुरुवाच मातुलम् ॥

यदुत ।

किमेतैः क्षणमात्रेण दृष्टा तत्पूर्वनर्तनम् ।

प्रकारान्तरतो लोकैः प्रारब्धं नर्तनान्तरम् ॥
विमर्शेनोदितं वत्स यौ तौ दृष्टौ त्वया नरौ ।
ताभ्यां निजप्रभावेण प्रविशेदं प्रवर्तितम् ॥
निवेदितं मया तुभ्यं यथैते नैव मुत्कलाः ।
कुर्वन्त्यत्र पुरे लोकाः स्वतन्त्राः कर्म किंचन ॥

किं तर्हि ।

यथा यथा स्ववीर्येण कारयन्ति शुभेतरम् ।
अन्तरङ्गजनाः कर्म कुर्वन्त्येते तथा तथा ॥
ततो मिथ्याभिमानेन तादृचं नाटिताः पुरा ।
एताभ्यां पुनरीदृचं किं कुर्वन्तु वराककाः ॥
सज्ज्ञानपरिपूतानां मतिमोहो महात्मनाम् ।
बाधां न कुरुते ह्येष केवलं शुभचेतसाम् ॥
नापि शोको भवेत्तेषां बाधको भद्र भावतः ।
यैरादावेव निर्णीतं समस्तं क्षणभङ्गुरम् ॥

अथ पुनः ।

पुत्रस्निग्धवशेनैष मतिमोहान्मृतो नृपः ।
शोकस्तु कारयत्येवं प्रलापं करुणं जनैः ॥
प्रकर्षेणोदितं माम किमत्र नृपमन्दिरे ।
क्षणमात्रेण संजातमीदृशं महदद्भुतम् ॥
किं वान्यत्रापि जायेत विरुद्धमिदमीदृशम् ।
विमर्शेनोदितं नात्र भवचक्रे ऽतिदुर्लभम् ॥
एतद्धि नगरं भद्र परस्परविरोधिभिः ।

असुक्रमीदृशैः प्रायो विविधैः संविधानकैः ॥
यावच्च सुक्तपूत्कारं दारुणाक्रन्दभीषणम् ।
पताकाजालबीभत्सं विषमाहतडिण्डिमम् ॥
उद्वेगहेतुस्ते भद्र नितरां जनतापकम् ।
इदं हि स्नापकं रौद्रं न निर्गच्छति मन्दिरात् ॥
तावदन्यत्र गच्छावो न युक्तं द्रष्टुमीदृशम् ।
परदुःखं कृपावन्तः सन्तो नोद्वीक्षितुं क्षमाः ॥
एवं भवतु तेनोक्ते निर्गतौ राजमन्दिरात् ।
संप्राप्तौ हट्टमार्गेषु ततः स्वस्रीयमातुलौ ॥
अत्रान्तरे कृतस्नानिर्विज्ञाय रिपुकम्पनम् ।
मृतं समुद्रस्नानार्थं पश्चिमे याति भास्करः ॥
अथादित्ये तिरोभूते तिमिरेण मलीमसे ।
जगत्यशेषे संजाते बोधिते दीपमण्डले ॥
गोधनेषु निवृत्तेषु विलीनेषु शकुन्तिषु ।
वेतालेषु करालेषु कौशिकेषु विचारिषु ॥
मूकीभूतेषु काकेषु निद्रिते नलिनीवने ।
निशावश्यकलग्नेषु मुनिषु ब्रह्मचारिषु ॥
रटत्सु चक्रवाकेषु रहितेषु स्वकान्तया ।
उल्लसत्सु भुजङ्गेषु सतोषे कामिनीजने ॥
इत्थं प्रदोषे संपन्ने प्रहृष्टजनमानसे ।
कश्चिन्निशापणद्वारे दृष्टस्ताभ्यां महेश्वरः ॥
सत्तुङ्गविष्टरे रम्ये निविष्टः किल लीलया ।

विनीतैर्वङ्कभिर्दृचैर्वणिक्पुत्रैर्विवेष्टितः ॥
वज्रेन्द्रनीलवैदूर्यपद्मरागादिराशिभिः ।
पुरतः स्थापितैस्तुङ्गैर्नाशिताशेषतामसः ॥
विकटैर्हाटकस्तोमै राजतैश्च पुरः स्थितैः ।
दीनारादिमहाकूटैर्गर्वितोऽग्रे विवर्तिभिः ॥
प्रकर्षेणोदितं माम किमित्येष महेश्वरः ।
उन्नामितैकभ्रूर्मन्दं वीक्षते मन्थरेक्षणः ॥
अर्थिनां वचनं किं वा सादरं बहुभाषितम् ।
एष बाधिर्यहीनोऽपि नाकर्णयति लीलया ॥
कृतप्राञ्जलयो नम्रा य एते चाटुकारिणः ।
एतान्नो वीक्षते कस्मात्तृणतुल्यांश्च मन्यते ॥
दृष्ट्वा दृष्ट्वा स रत्नानि किंचिद्धालां मुहुर्मुहुः ।
स्तब्धाङ्गः स्मेरवदनः किं भवत्येव वाणिजः ॥

विमर्शेनाभिहितं । भद्राकर्णय । अस्ति तस्यैव मिथ्याभिमानस्य स्वाङ्गभूतो धनगर्वो नाम वयस्यः । तेनाधिष्ठितोऽयं वराकः । तेनाधिष्ठितानामीदृशमेव स्वरूपं भवति ॥ अयं हि मन्यते । ममेदं रत्नकनकादिकं धनमहमस्य स्वामी । ततः कृतकृत्योऽहं । संपन्नं जन्मनः फलं । मत्तो वराकं भुवनं । ततस्त्येत्थं विकारबहुलः परिप्लवते न लक्षयति धनस्वरूपं न चिन्तयति परिणामं नालोचयत्यायतिं न विचारयति तत्त्वं न गणयति क्षणनश्वरतामिति । प्रकर्षः प्राह । माम योऽसौ रागकेसरिडिम्भरूपाणां मध्ये दृष्टो मया पञ्चमो डिम्भः सोऽस्य निकटवर्ती दृश्यते । विमर्शेनोक्तं ।

सत्यमेतत्स एवायं॥ अत्रान्तरे समायातः कश्चिद्भुजङ्गः। निविष्टो महेश्वरसमीपे। याचितोऽनेनोत्सारकं महेश्वरः। दत्तोऽनेन। ततो रहसि स्थितस्य प्रकाशितदिक्चक्रवालं बहुविधानर्घ्यरत्नघटितं दर्शितं भुजङ्गेन तस्य महेश्वरवाणिजकस्य मुकुटं। प्रत्यभिज्ञातश्चानेन भुजङ्गः यथैष हेमपुराधिपतेर्विभीषणनृपतेः पदातिर्दुष्टशीलश्च। ततो नूनं हृतमनेनेदं भविष्यति। अत्रान्तरे प्रविष्टोऽसौ रागकेसरितनयो वाणिजकशरीरे। ततस्तत्प्रतापाच्चिन्तितमनेन। भवतु नाम हृतं तथापि ग्रहीतव्यमेवेदं मया। ततोऽभिहितोऽनेन भुजङ्गः। भद्र किं ते क्रियतां। भुजङ्गेनोक्तं। अस्योचितं मूल्यं दत्त्वा गृह्यतामिदं भवतेति। तुष्टो वाणिजकः। तोषितो मूल्येन भुजङ्गः। पलायितो वेगेन। गते च तस्मिंस्तत्पदानुसारेण समागतं विभीषणराजबलं। लब्धा कुतश्चिद्विक्रयवार्ता। प्राप्तः सलोप्त्रो वाणिजकः। गृहीतः पुरत एव लोकस्य।

ततश्च क्षणमात्रेण लुप्तास्ते रत्नराशयः।
बद्धोऽसावारटन्नुच्चै राजकेन महेश्वरः॥
इतस्ततो भयोद्भ्रान्ता वणिक्पुत्राः सकिङ्कराः।
सर्वेऽपि बान्धवैः सार्धं नष्टास्ते पार्श्ववर्तिनः॥
ततो विलुप्तसर्वस्वः स्वजनैः परिवर्जितः।
आबद्धलोप्त्रकः कण्ठे महारासभरोपितः॥
भूत्या विलिप्तसर्वाङ्गस्तस्कराकारधारकः।
स राजापथ्यकारीति निन्द्यमानः पृथग्जनैः॥
महाकलकलध्वानसंपूरितदिगन्तरैः।

नीयमानो नृपेणोक्तैः पुरुषैः शतताडनैः ॥
विद्राणवदनो दीनः सर्वाशानाशविह्वलः ।
तस्मिन्नेव क्षणे दृष्टः स ताभ्यामिभ्यवाणिजः ॥
प्रकर्षेणोदितं माम किमिदं दृष्टमद्भुतम् ।
किमिन्द्रजालं किं स्वप्नः किं वा मे मतिविभ्रमः ॥
यदस्य क्षणमात्रेण न सा लीला न तद्धनम् ।
न ते लोका न तत्तेजो न गर्वो न च पौरुषम् ॥
विमर्शेनोदितं वत्स सत्यमेतन्न विभ्रमः ।
अत एव न कुर्वन्ति धनगर्वं महाधियः ॥
धनं हि घर्मसंतप्तविहङ्गगलचञ्चलम् ।
चीभोषाक्रान्तशार्दूलजिह्वातरलमीरितम् ॥
इन्द्रजालमिवानेकदर्शिताद्भुतविभ्रमम् ।
क्षणदृष्टविनष्टं च नीरबुद्बुदसन्निभम् ॥
अस्य वाणिजकस्येदं तात दुर्नयदोषतः ।
नष्टं महापदस्थानं जातं च विविधं धनम् ॥
दृष्टान्येषां पुनर्भद्र दोषसंश्लेषवर्जिनाम् ।
अपि नश्येदिदं रिक्थं भवेच्च भयकारणम् ॥

तथाहि ।

येऽपि फूत्कृत्य फूत्कृत्य पादं मुञ्चन्ति भूतले ।
तेषामपि क्षणार्धेन नश्यतीदं न संशयः ॥
प्राप्नुवन्ति च दुःखानि धनिनो धनदोषतः ।
जलज्वलनलुण्टाकराजदायादतस्करैः ॥

अन्यच्चेदं धनं वत्स मेघजालमिवातुलम् ।
हतं प्रचण्डवातेन यदा याति कथंचन ॥

तदा नालोकयति रूपं न विगणयति परिचयं न निरूपयति कुलीनतां नानुवर्तयति कुलक्रमं नाकलयति शीलं नापेक्षते पाण्डित्यं नालोचयति सौन्दर्यं नावबुध्यते धर्मपरतां नाद्रियते दानव्यसनितां न विचारयति विशेषज्ञतां न लक्षयति सदाचारपरायणतां न परिपालयति चिरस्नेहभावं नोररीकरोति सत्त्वसारतां न प्रमाणयति शरीरलक्षणम् । किं तर्हि

गन्धर्वनगराकारे पश्यतामेव देहिनाम् ।
तद्धनं क्षणमात्रेण क्वापि न ज्ञायते गतम् ॥
आर्जितं बहुभिः क्लेशैः पालितं जीवितं यथा ।
नष्टं तु यादृङ् नृत्यत्सु नटेष्वपि तदौचितम् ॥
तथाप्यमी महामोहनिहताः क्षुद्रजन्तवः ।
ईदृशेऽपि धने भद्र चिन्तावद्धं वितन्वते ॥
अलीकधनगर्वेण विक्लीभूतमानसाः ।
विकारकोटीः कुर्वन्ति यथैवैष महेश्वरः ॥
तदीदृशो धनस्येह पर्यन्तस्तात जन्मनि ।
परलोके पुनर्घोरा धनाद्दुःखपरंपरा ॥
प्रकर्षेणोदितं माम येन स्यान्निश्चलं धनम् ।
तथा शुद्धविपाकं च स्यात् कल्याणनिबन्धनम् ॥
तत्तादृशं जगत्यत्र किमस्ति यत कारणम् ।
किं वा न संभवत्येव तदिदं मे निवेदय ॥

विमर्शेनोदितं तात संभवत्येव तादृशम् ।
कारणं विरलानां भोः केवलं तेन मौलकः ॥
करोति वर्धनस्थैर्यं अजातं जनयेद्धनम् ।
अत्यन्तदुर्लभं भद्र पुण्यं पुण्यानुबन्धि यत् ॥

यच्च ।

दया भूतेषु वैराग्यं विधिवद्गुरुपूजनम् ।
विशुद्धा शीलवृत्तिश्च पुण्यं पुण्यानुबन्ध्यदः ॥

अथवा ।

परोपतापविरतिः परानुग्रह एव च ।
स्वचित्तदमनं चैव पुण्यं पुण्यानुबन्ध्यदः ॥
एतच्चान्यभवे धन्यैर्यैरुपात्तमिहापि वा ।
स्थिरमेव धनं तेषां सुमेरोः शिखरं यथा ॥
अन्यच्च ते महात्मानस्तत्पुण्यपरिढौकितम् ।
बाह्यं तुच्छं मलप्रायं विज्ञाय चणगत्वरम् ॥
योजयन्ति शुभे स्थाने स्वयं च परिभुञ्जते ।
न च तत्र धने मूर्छामाचरन्ति महाधियः ॥
ततश्च तद्धनं तेषां सत्पुण्यावाप्तजन्मनाम् ।
इत्थं विशुद्धबुद्धीनां जायते शुभकारणम् ॥
निन्द्ये बाह्ये महानर्थकारणे मूर्छिता धने ।
शून्यास्ते दानभोगाभ्यां ये पुनः चुद्रजन्तवः ॥
इहैव चित्तसन्तापं घोरानर्थपरंपराम् ।
यत्ते लभन्ते पापिष्ठास्तत्र किं भद्र कौतुकम् ॥

यदुत परमार्थोऽयं मूर्च्छागर्वौ धने सति।
न कार्यौ दानभोगौ तु कर्तव्यौ तत्त्ववेदिना॥
यस्तु नैवं करोत्युच्चैः स वराको निरर्थकम्।
अमूल्यकः कर्मकरः केवलं परिताम्यति॥
सेयदुर्नयगन्धोऽपि वर्जनीयश्च जानता।
अन्यथा जायते कष्टं यथास्य वणिजो महत्॥
यावत्स कथयत्येवं बुद्धिसूनोः स्वमातुलः।
अन्यस्तावत्समापन्नो वृत्तान्तस्तं निबोधत॥
दृष्टस्ताभ्यां युवा कश्चिदवतीर्णो वणिक्पथे।
दुर्बलो मलिनः क्षामो जरच्चीवरधारकः॥
आपणे ग्रन्थिमुन्मोच्य रूपकैस्तेन मोदकाः।
स्रजः पर्णानि गन्धाश्च क्रीतं वस्त्रयुगं तथा॥
गत्वा च निकटे वाप्यां भक्षितं तेन भोजनम्।
संमानितं च ताम्बूलं स्नातः संपूरितोदरः॥
बद्धश्चामोटकः पुष्पैः सद्गन्धैर्वासितं वपुः।
ततः परिहिते वस्त्रे प्रस्थितो राजलीलया॥
निरीक्षतेऽभिमानेन निजदेहं पुनः पुनः।
समारयति चामोटं गन्धमाघ्राय मोदते॥
प्रकर्षेणोदितं माम क एष तरुणस्तथा।
क प्रस्थितः किमर्थं वा विकारैरिति भण्यते॥
विमर्शेनोदितं वत्स महतीयं कथानिका।
खेशोद्वेगेन ते किंचित् कथ्यते तन्निबोध मे॥

समुद्रदत्तस्य सुतो वास्तव्योऽत्रैव पत्तने ।
अयं हि रमणो नाम तरुणो भोगतत्परः ॥
बालकालात्समारभ्य गणिकाव्यसने रतः ।
अयं च रमणो भद्र न चेतयति किंचन ॥
गृहं समुद्रदत्तस्य रत्नसंभारपूरितम् ।
यदासीद्विभवैः पूर्वं विचित्रधनदालयम् ॥
तदनेन दिनैः स्तोकैर्गणिकारतबुद्धिना ।
अनाशककुटीतुल्यं विहितं पापकर्मणा ॥
अधुना निर्धनो दीनः परकर्मकरो लघुः ।
जातोऽयमीदृशः पापो दुःखार्तो निजकर्मणा ॥
परकर्मकरत्वेन कतिचिद्रूपकानयम् ।
अद्यागतः समासाद्य हट्टे व्यसननाटितः ॥
ततः परं पुनर्वत्स यदनेन विचेष्टितम् ।
तद्दृष्टमेव निःशेषं त्वया किं तत्र कथ्यताम् ॥
अस्ति चात्र पुरे ख्याता गणिका मदनमञ्जरी ।
तस्याश्च कुन्दकलिका दुहिता यौवनोद्भटा ॥
तस्यामासक्तचित्तेन नाशितो धनसंचयः ।
अनेन धनहीनश्च गेहान्निःसारितस्तया ॥
ततोऽद्य रूपकानेष कियतोऽप्यतिनिष्ठया ।
संप्राप्य प्रस्थितस्तस्याः सदने रतकाम्यया ॥
अत्रान्तरे मनुष्योरगारुह्यशरदारुणम् ।
नरं मानुषरं वीक्ष्य प्रकर्षः प्राह मातुलम् ॥

रणाय रमणः। ततो गतेन दैन्यं प्राप्तेन नैर्लज्यं नीतेन क्लीवतां भयेनाभिभूतेन तेन रमणेनागत्य कृतं चण्डस्याङ्गुलीगृहीतदन्तेनाष्टाङ्गपादपतनं। त्रायस्व देव त्रायस्वेति भाषितानि करुणवचनानि। संपन्ना चण्डस्य दया। न मारितोऽसौ केवलं रोषोत्कर्षेण छिन्नोऽनेन रमणस्यामोटकः त्रोटिता नासिका विलूनौ कर्णौ विदलिता दशनपंक्तिः लूषितमधरोष्ठं विकर्तितौ कपोलौ उत्पाटितमेकं लोचनं दत्तो महापार्ष्णिप्रहारः निःसारितो भवनात्। हसितं सहस्ततालं मदनमञ्जरीकुन्दकलिकाभ्यां। प्रत्यायितश्चण्डोऽपि पेशलवचनैः कृतो हृतहृदयः। रमणस्तु निर्गच्छन्नितरां जर्जरितः प्रहारैः राजलोकेन प्राप्तो नारकसमं दुःखं वियुक्तः प्राणैः कृच्छ्रेण॥

ततः प्रकर्षेणोक्तं। अहो मकरध्वजसामर्थ्यमहो भयविलसितं अहो कुट्टनीप्रपञ्चचातुर्यं अहो सर्वथा करुणास्थानं सोपहासप्रेक्षणकप्रायं चेदं रमणचरितमिति। विमर्शेनोक्तं। वत्स।

(ये) गणिकाव्यसने रक्ता भवन्त्यन्येऽपि मानवाः।
तेषामेवंविधान्येव चरितानि न संशयः॥
वस्त्रभूषणताम्बूलगन्धमाल्यविलेपनैः।
हृताक्षास्ते न पश्यन्ति गहजाशुचिरूपताम्॥
संचरिष्णुमहाविष्टाकोष्ठिकाभिर्विमूढकाः।
वाञ्छन्तस्ताभिराश्लेषं कुर्वन्त्येव धनव्ययम्॥
ततो भिक्षाचरप्राया भवन्ति कुलदूषणाः।
न च मूढा विरज्यन्ते तामवस्थां गता अपि॥

ततस्ते प्राप्नुवन्त्येव वेश्याव्यसननाटिताः ।
एवंविधानि दुःखानि वत्स किं वात्र कौतुकम् ॥
चलचित्ताः प्रकृत्यैव कुलजा अपि योषितः ।
चटुलत्वेन वेश्यानां तात कः प्रश्नगोचरः ॥
कुलीना अपि भो नार्यः सर्वमायाकरण्डिकाः ।
को मायां जीर्णवेश्यानां वत्स पृच्छेत्सकर्णकः ॥
शेषाभिरपि नारीभिः स्नेहे दत्तो जलाञ्जलिः ।
यस्तास्था गणिकास्नेहे स मूर्खः पट्टवट्टुकः ॥
अन्यस्मै दत्तसंकेता वीक्षतेऽन्यं गृहे परः ।
अन्यश्चित्ते परः पार्श्वे गणिकानामहो नरः ॥
कुर्वन्ति चाटुकर्माणि यावत्स्वार्थः प्रपूर्यते ।
च्युतसारं विमुञ्चन्ति निर्मोचालक्तकं यथा ॥
क्षुरापघमरप्राया गणिकाः परिकीर्तिताः ।
ये तास्वपि च गृध्यन्ति ते श्वानो न मनुष्यकाः ॥
तस्मादेवंविधं नूनमन्येषामपि देहिनाम् ।
चरितं यैः कृतं पापैर्गणिकाव्यसने मनः ॥

प्रकर्षेणोक्तं । सत्यमेतन्नास्त्यत्र सन्देहः । ततोऽतिवाहितमाभ्यां कचिद्देवमन्दिरे रात्रिशेषः ॥

अत्रान्तरे गलत्तारा कुपितध्वान्तकेशिका ।
नभःश्रीः पाण्डुरा जाता रोगाघ्रातेव बालिका ॥
आदधानः श्रियं तस्या निजवीर्येण भास्करः ।
कारुण्यादिव संजातः सप्रभावो भिषग्वरः ।

हा माम माम पश्य त्वं शरेण रमणं नरः।
कश्चिदेष निहन्त्युच्चैस्तदेनं ननु वारय ॥
विमर्शेनोदितं वत्स स एष मकरध्वजः।
पर्यया निर्गतो रात्रौ भयेन सह लीलया ॥
वर्तते को ममाज्ञायां को वा नेत्यत्र पत्तने।
परीक्षार्थं जनोल्लापवेषकर्तव्यचेतसाम् ॥
शरमाक्षिप्य वीर्येण तदेष रमणो ननु।
अनेनैव गृहं तस्या वराको वत्स नीयते ॥
तत्किं ते वारणेनास्य यदनेन पुरस्कृतः।
रमणोऽनुभवत्येष तन्निभालय कौतुकम् ॥
एवं भवतु तेनोक्ते तौ गतौ गणिकागृहे।
दृष्टा च कुन्दकलिका गृहद्वारेऽतिचर्चिता ॥
तदभ्यर्णे विमर्शेन कुञ्चिता निजनासिका।
निष्ठ्यूतं धूनितं शीर्षं वालितान्यत्र कन्धरा ॥
ततो हाहेति जल्पन्तमुद्विग्नं तं स्वमातुलम्।
प्रकर्षः प्राह ते माम किं व्यलीकस्य कारणम् ॥
स प्राह वसनच्छन्नां पुष्पालङ्कारभारिताम्।
किमेनां निकटे त्वं नो वीक्षसेऽशुचिकोष्ठिकाम् ॥
तदस्या दूरतः स्थित्वा देशे गन्धविवर्जिते।
वृत्तान्तो योऽत्र जायेत पश्यावस्तं निराकुलौ ॥
निश्छिद्रा च भवेत् काचिदशुचेरपि कोष्ठिका।
इयं तु नवभिर्द्वारैः क्षरत्येवातिमुत्कला ॥

ततोऽरुणप्रभाभिन्ने पूर्वे गगनमण्डले ।
जाते रक्तेऽभ्रसङ्घाते गतच्छाये निशाकरे ॥
तस्करेषु निलीनेषु लपत्सु कृकवाकुषु ।
कौशिकेषु च मूकेषु कुररेषु विराविषु ॥
स्वकर्मधर्मव्यापारच्छलेनेव कृतादरम् ।
सर्वं तदा जगज्जातमारोग्यार्थं नभःश्रियः ॥
अथोदिते सहस्रांशौ प्रबुद्धे कमलाकरे ।
सङ्गमे चक्रवाकानां जने धर्मपरायणे ॥
विमर्शः प्राह ते वत्स महच्च कुतूहलम् ।
भवचक्रं च विस्तीर्णं नानावृत्तान्तसङ्कुलम् ॥
स्तोककालावधिः शेषो द्रष्टव्यं बहु तिष्ठति ।
न शक्यते ततः कर्तुमेकैकस्थानवीक्षणम् ॥
तदिदं वचनं तात मामकीनं समाचर ।
अकालहीनं ते येन पूर्यते तत्कुतूहलम् ॥
य एष दृश्यते तुङ्गः शुभ्रः स्फटिकनिर्मलः ।
महाप्रभावो विस्तीर्णो विवेको नाम पर्वतः ॥
आरूढैर्दृश्यते भद्र समस्तमिह पर्वते ।
इदं विविधवृत्तान्तं भवचक्रं महापुरम् ॥
तदत्रारूढयोर्तात निपुणं च विलोक्यताम् ।
यच्च न ज्ञायते सम्यक् पृच्छतामेष तज्जनः ॥
यतोऽशेषितवृत्तान्ते विदिते नगरे तव ।
पश्चादपि न जायेत चित्तौत्सुक्यं कदाचन ॥

एवं भवतु तेनोक्ते समारूढौ च पर्वते ।
अथ तत्र विवेकाख्ये तुष्टौ स्वस्त्रीयमातुलौ ॥
प्रकर्षः प्राह मामैष रमणीयो महागिरिः ।
दृश्यते सर्वतः सर्वं भवचक्रं मयाधुना ॥
किं तु देवकुले माम नग्नो ध्यानपरायणः ।
वेष्टितः पुरुषैर्दीनैः क्षामो मुत्कलकेशकः ॥
नष्टुकामो दिगालोकी सेटिकाखण्डहस्तकः ।
दृश्यते पुरुषः कोऽयं पिशाचाकारधारकः ॥
विमर्शेनोदितं वत्स विख्यातातुलसंपदः ।
कुबेरसार्थवाहस्य सूनुरेष कपोतकः ॥
धनेश्वर इति ख्यातमभिधानं प्रतिष्ठितम् ।
अस्य पूर्वगुणैः पश्चादाहूतोऽयं कपोतकः ॥
अनर्घरत्नकोटीभिः पूरितं पापकर्मणा ।
अनेनापि पितुर्गेहं श्मशानसदृशं कृतम् ॥
द्यूतेषु रतचित्तोऽयं न चेतयति किंचन ।
निर्वाहिते धने स्वीये द्यूतार्थं चौरिकापरः ॥
चौर्यं पुरे ऽत्र कुर्वाणो भूरिशारा: कदर्थितः ।
राज्ञासामान्यपुत्रत्वात्केवलं न विनाशितः ॥
अद्य रात्रौ पुनः सर्वं हारितं कर्पटादिकम् ।
ततो व्यसनतप्तेन मस्तकेन कृतः पणः ॥
एभिरेव महाधूर्तैर्वराकः कितवैर्जितः ।
शिरोऽपि लातुमिच्छद्भिरधुनैवं विनाश्यते ॥

स्फुटमेभ्यो न शक्नोति स्वपापभरपूरितः।
क्षुद्रैर्वितर्ककल्लोलैः केवलं परितप्यते ॥
प्रकर्षः प्राह न ज्ञातं किमनेन तपस्विना।
द्यूतं हि देहिनां लोके सर्वानर्थविधायकम् ॥
धनक्षयकरं निन्द्यं कुलशीलविदूषणम्।
प्रसूतिः सर्वपापानां लोके लाघवकारणम् ॥
संक्लिष्टचेतसो मूलमविश्वासकरं परम्।
पापैः प्रवर्तितं द्यूतं किमनेन न लक्षितम् ॥
विमर्शेनोदितं वत्स महामोहमहीपतेः।
वराकः किं करोत्येष यो वशः सैन्यवर्तिनः ॥
यतः ॥
महामोहहता येऽत्र विशेषेण नराधमाः।
द्यूते त एव वर्तन्ते प्राप्नुवन्ति च तत्फलम् ॥
यावच्च कथयत्येवं विमर्शः किल चेष्टितम्।
तावत्त्रोटितमेवोच्चैः कितवैस्तस्य मस्तकम् ॥
प्रकर्षः प्राह ये माम महानर्थविधायकम्।
रमन्ते द्यूतमत्रैव तेषामेवंविधा गतिः ॥
तं मातुलोऽब्रवीद्भद्र सम्यक् संलक्षितं त्वया।
न द्यूते रक्तचित्तानां सुखमत्र परत्र वा ॥
अत्रान्तरे महारण्ये निपपात कथंचन।
दृष्टिः प्रकर्षसंज्ञस्य नीलाब्जदललासिनी ॥
ततश्च तन्मुखं हस्तं कृत्वा स प्राह मातुलम्।

क एष तुरगारूढः प्रखिन्नः श्रमपीडितः ॥
उद्गीर्णहेतिः पापात्मा जीवमारणतत्परः।
स्वयं दुःखपरीतोऽपि दुःखदो ऽरण्यदेहिनाम् ॥
मध्याह्नेऽपि पिपासार्तो बुभुक्षाक्षामकुक्षिकः।
जम्बुकं पुरतः कृत्वा प्रधावन्नुपलभ्यते ॥

विमर्शेनोक्तम्।

अत्रैव मानवावासे विद्यते चान्तरं पुरम्।
ललितं नाम तत्रायं राजा ललननामकः ॥
मृगयाव्यसने सक्तो न लक्षयति किंचन।
भ्रमत्यत्र महारण्ये निहत्यैव दिवानिशम् ॥
सामन्तैः स्वजनैर्लोकैस्तथा मन्त्रिमहत्तमैः।
वार्यमाणोऽपि नैवास्ते मांसखादनलालसः ॥
सीदन्ति राज्यकार्याणि विरक्तं राजमण्डलम्।
ततस्तं तादृशं वीक्ष्य चिन्तितं राज्यचिन्तकैः ॥
नोचितो राज्यपट्टाय ललनोऽयं दुरात्मकः।
ततः पुत्रं व्यवस्थाप्य राज्ये गेहाद्बहिष्कृतः ॥
तथाप्याखेटके रक्तो मांसलोलो नराधमः।
एकाकी दुःखितोऽरण्ये नित्यमास्ते पिशाचवत् ॥

इह च वत्स।

परमारितजीवानां पिशितं योऽपि खादति।
इहामुत्र च दुःखानां पद्धतेः सोऽपि भाजनम् ॥
यस्तु क्रूरो महापापः स्वयमेव निहन्ति ति।

स्फुरन्तं जीवसङ्घातं तस्य मांसं च खादति ॥
तस्येह यदि दुःखानि भवन्त्येवंविधानि भोः ।
परत्र नरके पातो वत्स किं तत्र कौतुकम् ॥
बीभत्समशुचेः पिण्डो निन्द्यं रोगनिबन्धनम् ।
क्रमिजालोल्बणं मांसं भक्षयन्तीह राक्षसाः ॥
येस्त्विदं धर्मबुद्धैव भक्ष्यते स्वर्गकाम्यया ।
कालकूटविषं नूनमश्नुत्ते जीवितार्थिनः ॥
अहिंसा परमो धर्मः स कुतो मांसभक्षणे ।
अथ हिंसा भवेद्धर्मः स्यादग्निर्हिमशीतलः ॥

किमत्र बहुना ।

धर्मार्थं रसगृद्धा वा मांसं खादन्ति ये नराः ।
निघ्नन्ति प्राणिनो वा ते पच्यन्ते नरकाग्निना ॥

अन्यच्च ।

यथा गोमायुघाताय ताम्यत्येष निरर्थकम् ।
आखेटके रतात्मानस्तथैवान्येऽपि जन्तवः ॥
यावच्च वर्णयत्येवं विमर्शस्तस्य चेष्टितम् ।
तावल्ललनवृत्तान्तो यो जातस्तं निबोधत ॥
स जम्बुकविनाशार्थं धावन्नुच्चैर्दुरुत्तरे ।
सतुरङ्गो महागर्ते पतितोऽधोमुखस्तले ॥
ततः संचूर्णिताङ्गोऽसौ चुद्यमानो हयेन च ।
अत्राणो विरटन्नुच्चैस्तत्रैव निधनं गतः ॥
ततः प्रकर्षेणाभिहितम् ।

अधुनैवामुना प्राप्तं मृगयाव्यसने फलम् ।
विमर्शः प्राह न फलं पुष्पमेतद्विभाव्यते ॥
फलं तु नरके घोरं स्यादेवंविधकर्मणाम् ।
तथापि मूढाः खादन्ति मांसं हिंसन्ति देहिनः ॥
इतश्च राजपुरुषैर्जिह्वामुत्पाट्य दारुणैः ।
तप्तं ताम्रं नरः कश्चित्पाय्यमानो निरीक्षितः ॥
ततो दयापरीतात्मा प्रकर्षः प्राह मातुलम् ।
हाहा किमेष पुरुषो निर्घृणैर्माम पीड्यते ॥

विमर्शेनोक्तं । भद्राकर्णय । अयं पुरुषोऽत्रैव मानवावासान्तर्भूते चणकपुरे वास्तव्यो महाधनः सुमुखो नाम सार्थवाहः । अयं च बाल-कालादारभ्य वाक्पारुष्यव्यसनी । ततो लोकैर्गुणनिष्पन्नमस्य दुर्मुख इति नाम प्रतिष्ठितं । प्रकृत्यैव चास्य प्रतिभासते स्त्रीकथा रोचते भक्तकथा मनोभीष्टा राजकथा हृदयिता देशकथा सर्वथा जल्पे सति न कथंचिन्निजतुण्डं धारयितुं पारयति । इतश्च चणकपुराधिपतिरेव तीव्रो नाम राजा गतो रिपूणामुपरि विक्षेपेण । लग्नमायोधनं । जिता रिपवः । इतश्च निर्गते तस्मिन्नाख्यायिकायां प्रस्तुतानेन राजकथा । यदुत प्रबलास्ते रिपवः पराभविष्यन्ति राजानं आग-मिष्यन्ति ते पुरलुण्टनार्थं ततो यथा शक्त्या पलायध्वं यूयं । तदा-कर्ण्य नष्टं समस्तं पुरं । समागतो राजा । दृष्टं तन्निरुद्वसं चणकपुरं । किमेतदिति पृष्टमनेन । कथितः केनचिद्व्यतिकरः । कुपितो दुर्मुख-स्योपरि तीव्रनरेन्द्रः । ततः पुनरावासिते पुरे प्रख्याप्य तं दुर्वचन-भाषणमपराधं पौराणामेवंविधो ऽस्य दण्डो निर्वर्तितो राज्ञेति ॥

प्रकर्षेणोदितं माम महाकष्टकमीदृशं।
यद्दुर्भाषणमात्रेण संप्राप्तोऽयं वराककः॥
मातुलेनोदितं वत्स विकथासक्तचेतसाम्।
अनियन्त्रिततुण्डानां कियदेतद्दुरात्मनाम्॥
इयं हि कुरुते वैरं देहिनां निर्निमित्तकम्।
विधत्ते जनसन्तापं मुत्कला भद्र भारती॥
ते धन्यास्ते महात्मानस्ते श्लाघ्यास्ते मनस्विनः।
ते वन्द्यास्ते दृढासत्त्वे ते जगत्यमृतोपमाः॥
येषां मिताचरा सत्या जगदाल्हादकारिणी।
काले सद्बुद्धिपूता च वर्तते भद्र भारती॥
ये तु मुत्कलवाणीका वदन्त्यदर्दवितर्दकम्।
तैरत्रैव महानर्था नेदृशा वत्स दुर्लभाः॥
सुश्लिष्टा मोचयत्येषा भारती तात देहिनम्।
उच्छृखला पुनर्वत्स तमेषा बन्धयत्यलम्॥
तदस्य विकथामूलं दुर्भाषाव्यसने फलम्।
इदमीदृशमापन्नं परलोके च दुर्गतिः॥
अत्रान्तरे प्रकर्षेण राजमार्गे निपातिता।
दृष्टिर्दृष्टश्च तत्रैकः शुक्लवर्णधरो नरः॥
ततः पप्रच्छ तं वीक्ष्य क एष इति मातुलम्।
तेनोक्तं वत्स हर्षोऽयं रागकेसरिसैनिकः॥
अस्त्यत्र मानवावासे वासवो नाम वाणिजः।
इदं च दृश्यतेऽभ्यर्णे तस्य गेहं महाधनम्॥

बालकालवियुक्तस्य वयस्योऽत्यन्तवल्लभः ।
धनदत्तः समायातो वासवानन्ददायकः ॥
इदं कारणमुद्दिश्य भवनेऽत्र प्रवेक्ष्यति ।
अयं हर्षः प्रविष्टस्य पश्य किं किं करिष्यति ॥
ततो विस्फारिताक्षोऽसौ प्रकर्षस्तन्निरीक्षते ।
इतश्च वासवस्तेन धनदत्तेन मीलितः ॥
ततः प्रविष्टस्तद्देहे स हर्षः सकुटुम्बके ।
संजातं च वणिग्गेहं हृद्यानन्दसुन्दरम् ॥
आहूता बान्धवाः सर्वे प्रवृत्तश्च महोत्सवः ।
ततो नृत्यन्ति गायन्ति वादितानन्दमर्दलाः ॥

अपि च ।

वरभूषणमुज्ज्वलवेषधरं प्रमदोद्धुरखादनपानपरम् ।
धनदत्तसमागमजातसुखं तदभूदथ वासवगेहमुखम् ॥
अथ तादृशि विस्मयसज्जनके क्षणमात्रविवर्धितवर्धनके ।
निजमाममवोचत बुद्धिसुतः प्रविलोकनकौतुकतोषयुतः ॥

यदिदं वीक्षते माम सर्वमर्दवितर्दकम् ।
वासवीयमहं तत्किं तेन हर्षेण नाटितम् ॥
विमर्शेनोदितं वत्स साधु साधु विनिश्चितम् ।
अकाण्डमदनक्षोभे हर्ष एवात्र कारणम् ॥
अत्रान्तरेऽतिबीभत्सः कृष्णवर्णधरो नरः ।
दृष्टो द्वारि प्रकर्षेण तस्य वासवसद्मनः ॥
ततस्तेनोदितं माम क एष पुरुषाधमः ।

विमर्शेनोक्तम् ।

वत्स शोकवयस्योऽयं विषादो नाम दारुणः ॥
यश्चैष पथिकः कश्चित्प्रवेष्टुमिह वाञ्छति ।
प्रविष्टेऽत्र विषादोऽयं भवनेऽत्र प्रवेक्ष्यते ॥
ततः प्रविश्य पान्थेन तेन वासवसन्निधौ ।
एकान्ते वासवस्यैव गुह्यं किंचिन्निवेदितम् ॥
अत्रान्तरे प्रविष्टोऽसौ विषादस्तच्छरीरके ।
मूर्छया पतितश्चासौ वासवो नष्टचेतनः ॥
हा हा किमेतदित्युच्चैर्विलपन्निखिलो जनः ।
ततः समागतस्तस्य निकटे भयविह्वलः ॥
अथ वायुप्रदानाद्यैः पुनः संजातचेतनः ।
प्रलापं कर्तुमारब्धः सविषादः स वासवः ॥

कथम् ।

हा पुत्र तात वत्सातिसुकुमारशरीरक ।
ईदृशी तव संजाता कावस्था मम कर्मणा ॥
निर्गतोऽसि ममापुण्यैर्वत्स वारयतो मम ।
दैवेन निर्घृणेनेदं तव जात विनिर्मितम् ॥
हा हतोऽस्मि निराशोऽस्मि मुषितोऽस्मि विलक्षणः ।
एवं व्यवस्थिते वत्स त्वयि किं मम जीवति ॥
यावच्च प्रलपत्येवं स पुत्रस्नेहकातरः ।
तावद्विषादः सर्वेषु प्रविष्टः स्वजनेष्वपि ॥
अथ ते तस्य माहात्म्यात्सर्वे वासवबान्धवाः ।

हाहारवपरा गाढं प्रलापं कर्तुमुद्यताः ॥

ततश्च ॥

क्षणेन विगतानन्दं दीनविह्वलमानुषम् ।
रुदन्नारीजनं मूढं जातं बान्धवमन्दिरम् ॥
ततस्तत्तादृशं दृष्ट्वा प्रकर्षः प्राह मातुलम् ।
किमिदं माम संजातं गेहेऽत्र प्रेक्षणान्तरम् ॥
विमर्शः प्राह तत्तुभ्यमादावेव निवेदितम् ।
मया यथान्तरायत्ता बहिरङ्गा इमे जनाः ॥
ततश्चेदं तया पूर्वं हर्षेण प्रविनाटितम् ।
अधुना नाटयत्येवं विषादोऽसौ वराककम् ॥
तदत्र भवने लोकाः किं कुर्वन्तु तपस्विनः ।
ये हि हर्षविषादाभ्यां क्षणार्धेन विडम्बिताः ॥
प्रकर्षः प्राह किं गुह्यं कर्णाभ्यर्णविवर्तिना ।
अनेन बान्धवस्यास्य पुरुषेण निवेदितम् ॥
विमर्शेनोदितं वत्स समाकर्णय साम्प्रतम् ।
अस्त्यस्य वर्धनो नाम पुत्रो हृदयवल्लभः ॥
स चैक एव पुत्रोऽस्य यौवनस्थो मनोहरः ।
उपयाचितकोटीभिर्जातो विनयतत्परः ॥
अनेन वार्यमाणोऽपि स धनार्जनकाम्यया ।
प्रविधाय महासार्थं गतो देशान्तरे पुरा ॥
स चोपार्ज्य धनं भूरि स्वदेशागमकामुकः ।
कादम्बर्यां महाटव्यां गृहीतो वत्स तस्करैः ॥

विलुप्तं धनसर्वस्वं हतः सार्थः सबान्धवः ।
षड्ढा गृहीता बन्द्यश्च तस्करैर्धनकामिभिः ॥
तासां मध्ये गृहीतश्च वर्धनः क्रूरकर्मभिः ।
स सार्थवाह इत्येवं वादिभिर्भद्र तस्करैः ॥
नीला पल्लिं ततोऽनेकयातनाशतपीडितः ।
स चौरैर्विहितो वत्स वर्धनो धनवाञ्छया ॥
अयं च पुरुषस्तस्य सर्वदा पादधावकः ।
वत्स लम्बनको नाम गृहजो दासदारकः ॥
ततस्तत्तादृशं दृष्ट्वा स्वामिनं चौरपीडितम् ।
नंष्ट्वा कथंचिदायातो वृत्तान्तस्य निवेदकः ॥
निवेदिते च वृत्तान्ते तथा वासववाणिजः ।
यदकार्षीत्त्वया तच्च दृष्टमेव ततः परम् ॥
प्रकर्षेणोदितं माम प्रलापाक्रन्दरोदनैः ।
किममीभिः परित्राणं तस्य संजनितं कृतैः ॥
विमर्शेनोदितं वत्स नेतदेवं तथापि च ।
एवमेते प्रकुर्वन्ति विषादेन विनाटिताः ॥
धनदत्तागमं प्राप्य ये हर्षवशवर्तिनः ।
वर्धनापदमासाद्य विषादेन च बाधिताः ॥
तेषां हर्षविषादाभ्यामेतेषां पीडितात्मनाम् ।
कीदृशी वा भवेत्तात पर्यालोचितकारिता ॥
ततश्च ।
अवीक्ष्य वस्तुसद्भावमनालोच्य हिताहितम् ।

एते विडम्बयन्त्येवमात्मानं तदग्रानुगाः ॥

किं च।

नाच केवलमीदृचं वासवीये गृहोदरे।
आभ्यां हर्षविषादाभ्यां प्रेचणं वत्स नाव्यते ॥

किं तर्हि।

सर्वच भवचक्रेऽस्मिन् कारणैरपरापरैः।
एतौ नर्तयतो नित्यं जनमेनं गृहे गृहे ॥

यतः।

पुचं राज्यं धनं मिचमन्यद्वा सुखकारणम्।
हर्षस्यास्य वशं यान्ति प्राप्यास्मिन् मूढजन्तवः ॥
ततस्ते तत्परायत्ताः सद्बुद्धिविकला नराः।
वत्स किं किं न कुर्वन्ति हास्यस्थानं विवेकिनाम् ॥
न चिन्तयन्ति ते मूढा यथेदं पूर्वकर्मणा।
पुचराज्यादिकं सर्वं जन्तूनामुपपद्यते ॥
ततः कर्मपरायत्ते तुच्छे बाह्ये ऽतिगत्वरे।
कथंचित्तच संपन्ने हर्षः स्यात्केन हेतुना ॥

तथा।

विषादेन च बाध्यन्ते वियोगं प्राप्य वल्लभैः।
अनिष्टैः संप्रयोगं च नानाव्याधिगतानि च ॥
बाधिताश्च विषादेन सदामी मूढदेहिनः।
आक्रन्दनं मनस्तापं दैन्यमेवं च कुर्वते ॥
न पुनर्भावयन्त्येवं यथेदं पूर्वसंचितैः।

कर्मभिर्जनितं दुःखं विषादावसरः कथम् ॥

अन्यच्च।

विषादो वर्धयत्येव तद्दुःखं तात देहिनाम्।
न चाणकारकस्त्वाणं केवलं शुभचेष्टितम् ॥

यतः ॥

दुःखानि पापमूलानि पापं च शुभचेष्टितैः।
सर्वं प्रलीयते वत्स ततो दुःखोद्भवः कुतः ॥
प्रकर्षः प्राह यद्येवं ततः सुन्दरचेष्टिते।
वरमेभिः कृतो यत्नो न विषादस्य शासने ॥

विमर्शेनाभिहितम्।

चारु चारूदितं वत्स केवलं मूढजन्तवः।
इदमेते न जानन्ति भवचक्रनिवासिनः ॥

अन्यच्चाच ॥

कियन्ति संविधानानि शृङ्गग्राहिकया तव।
मया निवेदयिष्यन्ते नगरे पारवर्जिते ॥

इतश्च।

अस्य स्वरूपविज्ञाने बलवत्ते कुतूहलम्।
अतः समासतो वत्स तुभ्यमेतन्निवेदये ॥
आरूढः पर्वते तात विवेकाख्येऽत्र निर्मले।
इदं विलोकयस्येव रूपतः किं निवेद्यताम् ॥
गुणतस्तु पुनर्वत्स वर्ण्यमानं मया स्फुटम्।
इदं यथावुध्यस्व भवचक्रं महापुरम् ॥

अवान्तरपुरैर्वत्स भूरिभिः परिपूरितम् ।
यद्यपीदं तथाप्यत्र श्रेष्ठं पुरचतुष्टयम् ॥
एकं हि मानवावासं द्वितीयं विबुधालयम् ।
तृतीयं पशुसंस्थानं चतुर्थं पापिपञ्जरम् ॥
एतानि तानि चत्वारि प्रधानानीह पत्तने ।
पुराणि व्यापकानीति सर्वेषां मध्यवर्तिनाम् ॥
तत्रेदं मानवावासं महामोहादिभिः सदा ।
अन्तरङ्गजनैर्व्याप्तमेतैः कलकलाकुलम् ॥

कथम् ।

क्वचिदिष्टजनप्राप्तौ तोषनिर्भरमानुषम् ।
क्वचिद्द्वेष्यजनासक्तेर्विमनीभूतदुर्जनम् ॥
क्वचिद्धनलवावाप्तिजनितानन्दसुन्दरम् ।
क्वचिद्विधनाशोत्थहृत्सन्तापतापितम् ॥
क्वचिद्दुर्लभसत्पुत्रजन्मोद्भूतमहोत्सवम् ।
क्वचिदत्यन्तचित्तेष्टमरणाक्रन्दवृन्दलम् ॥
क्वचित्सुभटसङ्घातसारम्भरणभीषणम् ।
क्वचिन्मिलितमम्भिचविमुक्तनयनोदकम् ॥
क्वचिद्दारिद्र्यदौर्भाग्यविविधव्याधिपीडितम् ।
क्वचिच्छब्दादिसंभोगाद्द्लोकसुखनिर्भरम् ॥
क्वचित्सन्मार्गदूरस्थपापिष्ठजनपूरितम् ।
क्वचिच्च धर्मबुद्ध्यापि विपरीतविचेष्टितम् ॥
किं चेह यच्चलोकेन चरितानि मया पुरा ।

यावन्ति वर्णितान्युच्चैर्महामोहादिभूभुजाम् ॥
तावन्ति वत्स दृश्यन्ते सर्वाण्यत्र विशेषतः ।
सततं मानवावासे कारणैरपरापरैः ॥
तदिदं मानवावासं किंचिल्लेशेन वर्णितम् ।
अधुना कथ्यते तुभ्यं तत्पुरं विबुधालयम् ॥
नाकरूपमिदं ज्ञेयं सत्पुरं विबुधालयम् ।
सत्पारिजातमन्दारसन्तानकवनाकुलम् ॥
उल्लसद्भिश्च गन्धाढ्यैर्नमेरुहरिचन्दनैः ।
सदा विकसितै रम्यं कल्हारकमलाकरैः ॥
पद्मरागमहानीलवज्रवैडूर्यराशिभिः ।
दिव्यहाटकसन्मिश्रैर्घटितानेकपाटकम् ॥
प्रोल्लसन्मणिप्रभाजालैः सदा निर्नष्टतामसम् ।
विचित्ररत्नसङ्घातमयूखैः प्रविराजितम् ॥
दिव्यभूषणसन्नन्धमाल्यसंभोगलालितम् ।
नित्यप्रमोदमुद्दामगीतनृत्यमनोहरम् ॥
नित्यं प्रमुदितैर्दिव्यैस्तेजोनिर्जितभास्करैः ।
समत्कुण्डलकेयूरमौलिहारविराजितैः ॥
कलालिकुलसङ्कारहारिमन्दारदामभिः ।
अम्लानवनमालाभिर्नित्यमामोदिताशयैः ॥
रतिसागरमध्यस्थैः प्रीणितेन्द्रियसुस्थितैः ।
सदैवमोदमानैस्तैः पूरितं विबुधालयम् ॥
यः पूर्वं वेदसौधाख्यनृपतेः पुरुषो मया ।

साताभिधानस्ते भद्र कथितस्तत्र मण्डपे ॥
स कर्मपरिणामेन जनाह्लादविधायकः ।
विहितो निखिलस्यास्य पुरस्य वरनायकः ॥
ततस्तेन लसद्भोगं सतताह्लादसुन्दरम् ।
इदं हि वत्स निःशेषं धार्यते विबुधालयम् ॥
प्रकर्षेणोदितं माम महामोहादिभूभुजाम् ।
किमत्र प्रसरो नास्ति येनेदमतिसुन्दरम् ॥
विमर्शः प्राह मा मैवं मन्येथास्त्वं कथंचन ।
प्रभवन्ति प्रकर्षेण यतोऽत्रान्तरभूभुजः ॥
ईर्ष्याशोकभयक्रोधलोभमोहमदभ्रमैः ।
सतताकुलितं वत्स पुरं हि विबुधालयम् ॥
प्रकर्षः प्राह यद्येवं ततोऽत्र ननु किं सुखम् ।
किं वेदं हृष्टचित्तेन भवता चारु वर्णितम् ॥
ततस्तेनोदितं वत्स न सुखं परमार्थतः ।
नास्त्यत्र सुन्दरं किंचित्तत्त्वतो विबुधालये ॥
केवलं मुग्धबुद्धीनां विषयामिषवाञ्छिनाम् ।
अत्रास्था महती वत्स मयेदं तेन वर्णितम् ॥

इतरथा ।

महामोहनरेन्द्रस्य परिवारसमायुजः ।
क्व राज्यं क्व च लोकानां सुखवार्तेति दुर्घटम् ॥
तदिदं ते समासेन कथितं विबुधालयम् ।
अधुना पशुसंस्थानं कथ्यमानं निबोध मे ॥

बुभुक्षारतिसन्तापपिपासावेदनातुराः ।
दाहशोषभयोद्वेगवन्धताड़नपीडिताः ॥
सततं दुःखिता लोका धार्यन्तेऽत्र पुरेऽखिलाः ।
महामोहादिभिर्वत्स दीनाः शरणवर्जिताः ॥
धर्माधर्मविवेकेन विकलाः कलुषात्मकाः ।
तिष्ठन्त्यनन्तजातीया पुरेऽत्र पुरुषाः किल ॥
तदिदं पशुसंस्थानं वर्णितं ते महापुरम् ।
इदानीं वर्ण्यते वत्स तदिदं पापिपञ्जरम् ॥
येऽत्र लोका महापापप्राग्भारभरपूरिताः ।
वसन्ति तेषां दुःखस्य नास्ति विच्छेदसम्भवः ॥
योऽसौ ते वेदनीयाख्यनृपतेः पुरुषो मया ।
असातनामकः पूर्वं वर्णितस्तत्र मण्डपे ॥
तस्येदं भो महामोहराजेन निखिलं पुरम् ।
कचित्तोषितचित्तेन भटभुक्त्या समर्पितम् ॥
ततस्तेन पुरे सर्वे परमाधार्मिकनामकैः ।
अत्र लोकाः कदर्थ्यन्ते पुरुषैः स्वनियोजितैः ॥

कथम् ।

पाय्यन्ते तप्तताम्राणि नीयन्ते शतचूर्णताम् ।
खाद्यन्ते निजमांसानि दह्यन्ते तीव्रवह्निना ॥
शाल्मलीरभिरोह्यन्ते वज्रकण्टकसंकुलाः ।
तार्यन्ते क्लेदबहुलां वत्स वैतरणीं नदीम् ॥
छिद्यन्ते करुणाहीनैरसिपत्रवनेरितैः ।

कुन्ततोमरनाराचकरवालगदाशतैः ॥
पच्यन्ते कुम्भपाकेन पाट्यन्ते क्रकचादिभिः।
कलम्बवालुकापृष्ठे भृज्यन्ते चणका इव ॥

अन्यच्च।

पाटकाः सन्ति सप्ताच तचाद्ये पाटकचये।
परमाधार्मिकैरित्थं जन्यते दुःखपद्धतिः॥
परस्परं च कुर्वन्ति दुःखमेते निरन्तरम्।
षट्सु पाटकेषु भिद्यन्ते सप्तमे वज्रकण्टकैः॥

किं च।

बुभुक्षया कदर्थ्यन्ते प्रपीड्यन्ते पिपासया।
काष्ठीभवन्ति शीतेन वेदनावेगविह्वलाः॥
क्षणेन द्रवतां यान्ति क्षणेन स्थिररूपताम्।
क्षणेन च विलीयन्ते रटन्ति च शरीरकम्॥
न शक्तः कोटिजिह्वोऽपि दुःखं वर्णयितुं जनः।
वसतामच लोकानां यादृशं पापिपञ्जरे॥
एकान्तदुःखगर्भार्थं तदिदं पापिपञ्जरम्।
कथितं ते समासेन पुरं वत्स मयाधुना॥
तस्मादेतानि चत्वारि विज्ञातानि यदि त्वया।
पुराणि विदितं वत्स भवचक्रं ततोऽधुना॥

अचान्तरे।

आकर्ण्य मातुलीयां तां भारतीं भगिनीसुतः।
ददावादरतो दृष्टिं भवचक्रे समन्ततः॥

ततो निःशेषतो वीक्ष्य तारविस्फारितेक्षणः।
त्वरयोद्विग्नचेतस्को निजगाद ससंभ्रमः॥

कथम्।

हा माम माम दृश्यन्ते कष्टाः सप्त महेलिकाः।
अमूर्या नगरेऽमुष्मिन् दारुणाकारधारिकाः॥
आक्रान्ताशेषधामानः कृष्णा बीभत्सदर्शनाः।
वेताल्य इव नाम्नापि लोककम्पविधायिकाः॥
एताः काः किंप्रयुक्ता वा किंवीर्याः किंपरिच्छदाः।
चेष्टन्ते कस्य बाधायै तथेदंकृतनिश्चयाः॥
इदं मे सर्वमाख्यातं यावदद्यापि नो त्वया।
तावत्प्रतारणं मन्ये भवचक्रस्य वर्णनम्॥
अतः समस्तं मामोऽद्रो मह्यमाख्यातुमर्हति।
विमर्शेनोदितं वत्स निबोध त्वं निवेद्यते॥
जरा रुजा मृतिश्चेति खलता च कुरूपता।
दरिद्रता दुर्भगता नामतोऽमूः प्रकीर्तिताः॥

तत्र।

या कालपरिणत्याख्या भार्या या मूलभूपतेः।
तया प्रयोजिता तावज्जरेयं भुवनोदरे॥
बाह्यान्यपि निमित्तानि वर्णयन्तीह केचन।
अस्याः प्रयोजकानीति लवणाद्यानि मानवाः॥
वीर्यं पुनरदो ऽमुष्या यदाक्षेपेण देहिनाम्।
हरत्यशेषसद्वर्णलावण्यबलशालिताम्॥

गाढाश्लेषात्पुनर्वत्स विपरीतमनस्कताम् ।
कुरुते शोच्यतां लोके देहिनां वीर्यशालिनी ॥
वलीपलितखालित्यपिप्लुव्यङ्गकुवर्णताः ।
कम्पकर्कशिकाशोकमोहशैथिल्यदीनताः ॥
मतिभङ्गान्ध्यबाधिर्यदन्तवैकल्यरीणताः ।
जरापरिकरः प्रौढो वायुश्च बलाग्रणीः ॥
अनेन परिवारेण परिवारितविग्रहा ।
जरेयं विलसत्यत्र मत्तावद्गन्धहस्तिनी ॥
अधुना यस्य बाधायै चेष्टते कृतनिश्चया ।
जरयैव तं वत्स विपक्षं ते निवेदये ॥
तस्या एव महादेव्या विद्यतेऽनुचरः परः ।
यौवनाख्यो महावीर्यश्चरट उद्दामपौरुषः ॥
स च योगी तदादेशात्सविश्याङ्गेषु देहिनाम् ।
तनोति वलमौर्जित्यं वन्धुराकारधारितां ॥
विलासहासविब्बोकविपर्यासपराक्रमैः ।
वल्गनोत्प्लवनोल्लासलासधावनमर्मदैः ॥
गर्वशौण्डीर्यविह्वलमाहमादिभिरुद्धतैः ।
युतः पदातिभिर्लोकैर्लीलया स विजृम्भते ॥
तत्समभ्याटनी भोगसम्भोगसुखनिर्भरम् ।
आत्मानं मन्यते लोका भवचक्रनिवासिनः ॥
ततस्तं निजवीर्येण यौवनाख्यमियं जरा ।
गृह्णाति सपरीवारं कुद्धा हरेव साधकम् ॥

ततस्ते जरया वत्स जना मर्दितयौवनाः ।
परीता दुःखकोटीभिर्जायन्ते दीनविक्लवाः ॥
स्वभार्ययाप्यवज्ञाताः परिवारावधीरिताः ।
उत्प्रास्यमानाः स्वापत्यैस्तरुणीभिस्तिरस्कृताः ॥
स्मरन्तः पूर्वभुक्तानि कासमाना मुहुर्मुहुः ।
श्लेष्माणमुद्गिरन्तश्च लुठन्तो जीर्णमञ्चके ॥
परतप्तिपराः प्रायः क्रुध्यन्तश्च पदे पदे ।
आक्रान्ता जरया वत्स केवलं शेरते जनाः ॥
एषा जरा समासेन लोकपीडनतत्परा ।
वर्णिता तेऽधुना वच्मि रुजां वैवस्वतीं भुजाम् ॥
यो वेदनीयनृपतेरसाताख्यो वयस्यकः ।
वर्णितस्तत्प्रयुक्तेयं रुजा तेन दुरात्मना ॥
वर्णयन्ति निमित्तानि बहिर्भूतानि सूरयः ।
अस्याः प्रयोजकान्युच्चैर्नानाकाराणि शास्त्रतः ॥
धीधृतिस्मृतिविभ्रंशः सम्प्राप्तिः कालकर्मणाम् ।
असात्म्यार्थागमश्चेति रुजाहेतुरयं गणः ॥
वातपित्तकफानां च यद्यसंक्षोभकारणम् ।
रजस्तमस्करं चेति तत्तदस्याः प्रयोजकम् ॥
किं तु ।
बाह्यान्यपि निमित्तानि स एव परमार्थतः ।
असाताख्यः प्रयुङ्क्तेऽतः स एव परकारणम् ॥
प्रविष्टेयं शरीरेषु योगित्वेन शरीरिणाम् ।

स्वास्थ्यं निहत्य वीर्येण करोत्यातुरतां पराम् ॥
ज्वरातिसारकुष्ठार्शःप्रमेहप्लीहधूमकाः ।
अम्लकग्रहणीशूलहिक्काश्वासक्षयभ्रमाः ॥
गुल्महृद्रोगसंमोहहृल्लासानाहकम्पकाः ।
कण्डूकोठाक्षिशोफभगन्दरगलामयाः ॥
पामाजलोदरोन्मादशोषवीसर्पच्छर्दयः ।
नेत्ररोगशिरोरोगविद्रधिप्रमुखा भटाः ॥
सर्वेऽप्यस्याः परीवारः ख्यातसंभृतो महाबलः ।
यत्प्रभावादियं वत्स रुजा जेतुं न पार्यते ॥
अस्ति नीरोगता नाम वेदनीयाख्यभूपतेः ।
पदातिनेह सातेन प्रयुक्ता भवचक्रके ॥
लावण्यबलसौन्दर्यधीधृतिख्यातिपाटवैः ।
परीता कुरुते लोकं सुखसन्दर्भनिर्भरम् ॥
तां चैषा दारुणा हत्वा पापा नीरोगतां रुजा ।
प्रवर्तयति लोकानां तीव्रार्तिं तनुचित्तयोः ॥
तेनेयं तद्विघाताय रुजेत्थं वत्स वल्गते ।
एतदाक्रान्तमूर्तीनां चेष्टाख्यातुं न पार्यते ॥

तथाहि ।

कूजन्ति करुणध्वानैः क्रन्दन्ति विह्वलस्वराः ।
रुदन्ति दीर्घपूत्कारैरारटन्ति सुविह्वलाः ॥
गाढं दीनानि जल्पन्ति लुठन्ति च मुहुर्मुहुः ।
कुठमीलनको मूर्छायितवलो न स्थिरम् ॥

नित्यमार्ताः सदोद्विग्ना विशवास्त्राणवर्जिताः।
भयोद्भ्रान्तधियो दीना नरकेष्विव नारकाः॥
भवन्ति भवचक्रेऽत्र सत्त्वाः पापिष्ठयानया।
हत्वा नीरोगतां वत्स रुजया परिपीडिताः॥
तदेषा लेशतो वत्स रुजा ते गदिता मया।
म्टतिर्मृदितविश्वेयं साम्प्रतं ते निवेद्यते॥
योऽसौ ते दर्शितः पूर्वमायुर्नामा महीपतिः।
चतुर्नरपरीवारस्तत्क्षयोऽस्याः प्रयोजकः॥
प्रयुज्यते विचित्रैश्च बहिर्हेतुशतैरिदम्।
विषाग्निशस्त्रपानीयगिरिपातातिसाध्वसैः।
बुभुक्षाव्याधिदुर्व्यालपिपासोष्णहिमश्रमैः।
वेदनाहारदुर्ध्यानपराघातारतिभ्रमैः॥
प्राणापानोपरोधाद्यैः किं तु तैरप्युदीरिता।
तमेवायुःक्षयं प्राप्य म्टतिरेषा विवर्तते॥
वीर्यं पुनरदोऽमुष्या यदियं देहिनां क्षणात्।
हरत्युच्छ्रासनिश्वासं चेष्टां भाषां सचेतनाम्॥
विधत्ते रक्तनिर्नाशं वैकल्यं काष्ठभूतताम्।
दौर्गन्ध्यं च क्षणादूर्ध्वं स्वपनं दीर्घनिद्रया॥
परिवारस्तु नास्त्यस्या न चेयं तमपेक्षते।
इयं हि तीव्रवीर्येण सदैका किंमनुष्यिका॥
यतोऽस्या नाममात्रेण भुवनं सचराचरम्।
सनरेन्द्रं सदेवेन्द्रं कम्पते चस्तमानसम्॥

सद्वीर्यबलभाजोऽपि प्रभवोऽपि जगत्त्रये ।
आसन्नामपि सत्वैनां (मत्वैनां ?) भवन्ति भयकातराः ॥
अतः परिच्छदेनास्यास्तात किं वा प्रयोजनम् ।
एकिकापि करोत्येषा दूरे यच्छ्रूयतेऽद्भुतम् ॥
अत एव मदैश्वर्यादियमुद्दामचारिणी ।
किंचिन्नापेक्षते वत्स विचरन्ती यथेच्छया ॥
ईश्वरेषु दरिद्रेषु वृद्धेषु तरुणेषु च ।
दुर्बलेषु बलिष्ठेषु धीरेषु करुणेषु च ॥
आपद्गतेषु हृष्टेषु वैरभाजिषु बन्धुषु ।
तापसेषु गृहस्थेषु समेषु विषमेषु च ॥
किं वात्र बहुनोक्तेन सर्वावस्थागतेष्वियम् ।
प्रभवत्येव लोकेषु भवचक्रनिवासिषु ॥
अस्त्यङ्गभूता मह्यार्या जीविका नाम विश्रुता ।
तस्यायुर्नामनृपतेर्लोकाल्हादनतत्परा ॥
तद्वशादवतिष्ठन्ते निजस्थानेष्वमी जनाः ।
अतो हितकरत्वेन सा सर्वजनवल्लभा ॥
अतस्तां जीविकां हत्वा मृतिरेषा सुदारुणा ।
लोकं स्वस्थानतोऽन्यत्र प्रेषयत्येव लीलया ॥
प्रहिताश्च तथा यान्ति दृश्यन्ते न यथा पुनः ।
नीयन्ते च तथा केचिद्यथार्था रिपुकम्पनः ॥
प्रजल्पाय धनं गेहं बन्धुवर्गं परिच्छदम् ।
सर्वं विमुच्य गच्छन्ति मृत्यादेशेन ते जनाः ॥

एकाकिनः कृतोद्योगाः सुकृतेतरशम्बलाः ।
दीर्घं मार्गं प्रपद्यन्ते सुखदुःखसमाकुलम् ॥
तन्निजास्तु तथा कृत्वा रोदनाक्रन्दगुन्दलम् ।
लगन्ति स्वीयकृत्येषु खादन्ति च पिबन्ति च ॥
विभजन्ते धनं भोगैर्युध्यन्ते च तदर्थिनः ।
सारमेया इवासाद्य किंचिदामिषखण्डकम् ॥
तदर्थं तु कृताघौघास्ते जना दुःखकोटिभिः ।
केवलाः परिपीड्यन्ते मृत्यादिष्टा बहिर्गताः ॥

एवं च स्थिते ।

निवेदिता मृतिर्वत्स नानाकारेषु धामसु ।
संचार्यते यया लोको भवचक्रे मुहुर्मुहुः ॥
अधुना वर्ण्यमानेयं खलताप्यवधार्यताम् ।
एतत्स्वरूपविज्ञाने यद्यस्ति तव कौतुकम् ॥
अस्ति पापोदयो नाम सेनानीर्मूलभूपतेः ।
प्रयुक्ता तात तेनैषा खलता भवचक्रके ॥
बहिर्निमित्तमप्यस्याः किल दुर्जनसङ्गमः ।
केवलं तत्त्वतः सोऽपि पापोदयनिमित्तकः ॥
वीर्यमस्याः शरीरेषु वर्तमानेयमुल्बणैः ।
कुरुते देहिनां दुष्टं मनः पापपरायणम् ॥
शाठ्यपैशुन्यदौःशील्यवैभाष्यगुरुविप्लवाः ।
मित्रद्रोहकृतघ्नत्वनैर्लज्ज्यमदमत्सराः ॥
मर्मोद्घट्टनवैयात्ये परपीडननिश्चयाः ।

ईर्ष्यादयश्च विज्ञेयाः खलतापरिचारिकाः ॥
अस्ति पुण्योदयो नाम द्वितीयो मूलभूपतेः ।
सेनानीस्तत्प्रयुक्तोऽस्ति सौजन्याख्यो नरोत्तमः ॥
स वीर्यधैर्यगाम्भीर्यप्रश्रयस्थैर्यपेशलैः ।
परोपकारदाक्षिण्यकृतज्ञतार्जवादिभिः ॥
युतः पदातिभिस्तात जनं बन्धुरमानसम् ।
कुर्वाणो निजवीर्येण सत्सुधाचोदपेशलम् ॥
सद्धर्मलोकमर्यादां सदाचारं सुमित्रताम् ।
घटयंस्तातुलां लोके सद्विश्रम्भसुखासिकाम् ॥
जनयत्येव केषांचिद्भवचक्रेऽपि देहिनाम् ।
निर्मिथ्यं चारुताबुद्धिं गाढसौन्दर्ययोगतः ॥
तस्येयं खलता तात नितरां परिपन्थिनी ।
यतः सोऽमृतमेषा तु कालकूटविषाधिका ॥
अतो निहत्य तं वीर्यादियं पापिष्ठमानसा ।
एवं विवल्गते वत्स पुरेऽत्र सपरिच्छदा ॥
एनया हतसौजन्याश्चेष्टन्ते यादृशं जनाः ।
तद्रूपालं तथापीषद्भणिता तव कथ्यते ॥
चर्चितानेकदुर्मायाः परवञ्चनतत्पराः ।
निष्पिष्टा द्वेषयन्त्रेण मुक्तस्नेहाः खलाः स्फुटाः ॥
अप्रष्ठमाणा सत्कृत्यैर्भषन्तः संस्तुतेष्वपि ।
खादन्तो निजवर्गाय ते खला मण्डलाधिकाः ॥
उत्पादयन्तश्छिद्राणि पातयन्तः शिरामपि ।

कार्योश्चिपिटिकां कुर्युरुद्वेगं ते खलाखवः ॥
चित्तेन चिन्तयन्त्यन्यदन्यज्जल्पन्ति भाषया ।
क्रिययान्यच्च चेष्टन्ते ते खलाः खलताहताः ॥
क्वचिदुष्णाः क्वचिच्छीताः क्वचिन्मध्यमतां गताः ।
नैकरूपा भवन्त्येते सान्निपाता इव ज्वराः ॥

किं च ।

तवानुरोधतो वत्स कथाप्येषा मया कृता ।
स्वयं त्वमीषां नामापि नाहमाख्यातुमुत्सहे ॥
तदेषा खलता तात लेशतो गदिता मया ।
निबोध साम्प्रतं वत्स वर्ण्यमानां कुरूपताम् ॥
योऽसौ ते पूर्वमाख्यातो नामनामा महीपतिः ।
स दौष्ठ्येन युनक्त्येनां भवचक्रे कुरूपताम् ॥
बाह्यविघ्नं दधत्युच्चैर्बहिरङ्गानि भावतः ।
तस्यैवादेशकारीणि यान्यस्याः कारणानि भोः ॥

तथाहि ।

दुष्टाहारविहाराद्यैः प्रकुप्यन्तः कफादयः ।
भूयांसो देहिनां देहे जनयन्ति कुरूपताम् ॥
वीर्यं पुनरदोऽमुष्या यदेषा देहवर्तिनी ।
सदा हि कुरुते रूपं दृष्टेरुद्वेगकारणम् ॥
खञ्जताकुण्टताकाण्यवामनत्वविवर्णताः ।
कुब्जतान्धत्वबाडव्यहीनाङ्गत्वादि(ति)दीर्घताः ॥
इत्याद्याः परिवारेऽस्या वर्तन्ते वत्स दुर्जनाः ।

यत्सम्पर्कादियं दृष्टा विलसत्यतिलीलया ॥
अस्ति प्रयुक्ता तेनैव वामनाम्ना सुरूपता ।
सुप्रसन्नेन तन्मूलबहिरङ्गनिमित्तजा ॥

तथाहि ।

शुभाहारविहाराद्यैः प्रयौदन्ताः कफादयः ।
हेतवो देहिनां देहे जनयन्ति सुरूपताम् ॥
सा जनं भवचक्रेऽत्र दृष्टेराह्लादकारणम् ।
प्रसन्नवर्णं पद्माचं सुविभक्ताङ्गभूषणम् ॥
गजेन्द्रगामिनं रम्यं सुराकारानुकारिणम् ।
करोति निजवीर्येण लोकमोदनकारिणी ॥
तस्या विपक्षभूतेयं प्रकृत्यैव कुरूपता ।
तां हलाविर्भवत्येषा देहिदेहेषु योगिनी ॥
ततः सुरूपताहीनाः प्रादुर्भूतकुरूपताः ।
भवन्ति ते जना वत्स दृष्टेरुद्वेगकारिणः ॥
अनादेयाः स्वहीनलज्जिता हास्यभूमयः ।
भवन्ति क्रीडनस्थानं बालानां रूपगर्विणाम् ॥
निर्गुणाश्च भवन्त्येते प्रायशो वामनादयः ।
आकृतौ च वसन्त्येते प्रकृत्या निर्मला गुणाः ॥
विडम्बनकरी लोके तदियं ते कुरूपता ।
निरूपिताधुना वत्स कथयामि दरिद्रताम् ॥
प्रयुक्ता तावदेषापि वत्स तेनैव पापिना ।
अन्तरायं पुरस्कृत्य पापोदयचमूस्तता ॥

प्रयुञ्जते पुनर्लोके हेतवो ये बहिर्गताः ।
एनां दरिद्रतां तात तानहं ते निवेदये ॥
जलज्वलनलुण्टाकराजदायादतस्कराः ।
मद्यद्यूतादिभोगित्ववेश्याव्यसनदुर्नयाः ॥
ये चान्ये कुर्वते केचिद्धनहानिविधायिकाम् ।
अस्यास्ते हेतवः सर्वे वत्स ज्ञेयाः प्रयोजकाः ॥
केवलं तत्त्वतस्तेऽपि सान्तरायं चमूस्थितम् ।
पापोदयाख्यं कुर्वन्ति प्रह्वमस्याः प्रयोजकम् ।
दुराशापाशसंमूढं धनगन्धविवर्जितम् ।
वीर्येण कुरुते लोकमेषा तात दरिद्रता ॥
दैन्यं परिभवो मौख्यं प्रायशो वक्रपत्यता ।
चदयन्यूनता याञ्चा लाभाभावो दुरिच्छता ॥
बुभुक्षारतिसन्तापाः कुटुम्बपरिदेवनम् ।
अस्या इत्यादयो वत्स भवन्ति परिचारकाः ॥
अस्ति पुण्योदयाख्येन प्रयुक्तः पृथिवीतले ।
जनाह्लादकरोऽत्यन्तमैश्वर्याख्यो नरोत्तमः ॥
स सौष्ठवमहोत्सेकहृदयोन्नतिगौरवैः ।
जनवाक्सभ्यताशालित्वमहेच्छादिविवेष्टितः ॥
सुभूरिधनसम्भारपूरितं जनताधिकम् ।
करोति सुखितं मान्यं लोकमुद्दामलीलया ॥
इयं च चेष्टते तात परिवारसमेयुषी ।
तद्दुर्दमचातुर्यमाविभ्राणा दरिद्रता ॥

न तेन सार्धमेतस्याः सद्भावस्थानमीक्ष्यते ।
एतन्नामादपी वत्स दूरतः प्रपलायते ॥
ततोऽनया हतैश्वर्यास्ते जना दुःखपूरिताः ।
गाढं विह्वलतां यान्ति विधुरीभूतमानसाः ॥
दुराशापाशबद्धाङ्गाङ्गयो धनलवेच्छया ।
नानोपायेषु वर्तन्ते ताम्यन्ति च दिवानिशम् ॥
ते च पापोदयेनैषामुपाया बहवोऽप्यलम् ।
प्रबलेन विघात्यन्ते खे घना इव वायुना ॥
ततो रुष्टन्धमी मूढाः खिद्यन्ते मनसाधिकम् ।
शोचन्ति पुरतोऽन्येषां वाञ्छन्ति परसम्पदः ॥
कुतो घृतं कुतस्तैलं कुतो धान्यं क्व चेन्धनम् ।
कुटुम्बचिन्तया दग्धा इति रात्रौ न शेरते ॥
कुर्वन्ति निन्द्यकर्माणि धर्मकर्मपराङ्मुखाः ।
व्रजन्ति शोच्यतां लोके लघीयांसस्तृणादपि ॥
परप्रेष्यकरा दीनाः क्षुत्क्षामा मलपूरिताः ।
भूरिदुःखशतैर्ग्रस्ता प्रत्यक्षा इव नारकाः ॥
भवन्ति ते जनास्तात येषामेषा दरिद्रता ।
ऐश्वर्याख्यं निहन्त्युच्चैः करोत्यालिङ्गनं मुदा ॥
तदिवमीरिता तात तुभ्यमेषा दरिद्रता ।
इयं दुर्भगतेदानीं गद्यमाना निशाम्यताम् ॥
दृष्टेन भवचक्रेऽत्र केषांचिद्देहिनामलम् ।
प्रयुक्तेयं विशालाक्षी तेन नाममहीभुजा ॥

वहिरङ्गं भवेदस्यास्तात चित्रं प्रयोजकम् ।
वैरूप्यदुःस्वभावत्वदुष्कर्मवचनादिकम् ॥
तत्त्व नैकान्तिकं ज्ञेयं स एव परमार्थतः ।
हेतुरैकान्तिकोऽमुष्या नामनामा महीपतिः ॥
वीर्यं तु वर्णयन्त्यस्या ज्ञाततत्त्वा मनीषिणः ।
अवल्लभमतिर्द्वेष्यं यदेषा कुरुते जनम् ॥
दीनताभिभवो लज्जा चित्तदुःखासिकातुला ।
न्यूनता लघुता वेषविज्ञानफलहीनता ॥
इत्याद्याः परिवारोऽस्या भवन्ति वहवो जनाः ।
पुरेऽत्र यद्बलादेषा बंभ्रमीति बलोद्धुरा ॥
अस्ति प्रयुक्ता तेनैव सुप्रसन्नेन देहिनाम् ।
नाम्ना सुभगता नाम्ना प्रख्याता जनमोदिनी ॥
सा सौष्ठवमनस्तोषगर्वगौरवसम्पदैः ।
आयत्यपरिभूताद्यैः परिवारितविग्रहा ॥
प्रजन्ती भवचक्रेऽत्र जनमानन्दनिर्भरम् ।
करोति सुचिरं मान्यं निःशेषजनवल्लभम् ॥
तस्याश्च प्रतिपक्षत्वादियं दुर्भगताधमा ।
उन्मूलनकरी तात करिणीव लतातनेः ॥
अतः गोम्मूनिता येषामेनया हितकारिणी ।
ते प्रकृत्यैव जायन्ते जनानां गाढमप्रियाः ॥
स्वभर्त्रेऽपि न रोचन्ते परेभ्यो नतरां पुनः ।
पञ्चार्थोऽपि न भासन्ते जना दुर्भगताहताः ॥

गम्यत्वात्ते सपत्नानां वल्लभानामवल्लभाः ।
नयन्ति क्लेशतः कालमात्मनिन्दापरायणः ॥
तदेषापि समासेन वत्स दुर्भगता मया ।
तुभ्यं निगदिता याप्तावुद्दिष्टा सप्तमी पुरा ॥
एवं च स्थिते ।
जरा रुजा सृतिश्चेति खलता च कुरूपता ।
दरिद्रता दुर्भगता उद्दिष्टाः क्रमशो यथा ॥
एता या यत्प्रयुक्ता वा यद्वीर्या यत्परिच्छदाः ।
चेष्टन्ते यस्य बाधायै निर्दिष्टाः क्रमशस्तथा ॥
एताश्चैवं विवल्गन्ते विपच्चयमुच्चकैः ।
कुर्वाणा भवचक्रेऽत्र लोकपीडनतत्पराः ॥
प्रकर्षेणोदितं माम किमासां विनिवारकाः ।
लोकपाला न विद्यन्ते नगरेऽत्र नृपादयः ॥
विमर्शेनोदितं वत्स नैताः शक्या नृपादिभिः ।
निवारयितुमित्यत्र कारणं ते निवेदये ॥
ये केचिद्वीर्यभूयिष्ठाः प्रभवो भुवनोदरे ।
तेष्वपि प्रभवन्त्येताः सर्वेषु प्रसभं सदा ॥
सर्वत्र विचरन्तीनामासामुद्दामलीलया ।
गजानामिव मत्तानां नास्ति मल्लो जगत्त्रये ॥
स्वप्रयोजनवीर्येण विलसन्तीर्निरङ्कुशं ।
को नाम भुवने साक्षादेताः स्खलयितुं क्षमः ॥
प्रकर्षेणोक्तं । माम तत्किं पुरुषेण न यतितव्यमेवामूषां निग्र-

करणे । विमर्शेनोक्तं । वत्स निश्चयतो निराकरणे न यतितव्यमेव । यतो न शक्यत एवावश्यंभाविनीनामासां निराकरणं कर्तुं । विमृश्य-कारी च पुरुषः कथमशक्येऽर्थे प्रवर्तते । न हि कर्मपरिणाम-कालपरिणतिस्वभावलोकस्थितिभवितव्यतादिसंपूर्णकारणसामग्रीबल-प्रवर्तितानामवश्यमाविर्भवन्तीनाममूषामन्येषां वा कार्यविशेषाणां निराकरणे यतमानः पुरुषः प्रयासादृते कंचिदर्थं पुष्णाति । प्रकर्षः प्राह । माम पूर्वं भवता प्रत्येकमासां जरारुजादीनामपराण्ये-वान्तरङ्गबहिरङ्गाणि प्रवर्तकानि निर्दिष्टानि । तत्कथमिदानीं कर्मपरिणामादीनि प्रवर्तकत्वेनोच्यन्ते । विमर्शेनोक्तं । तानि विशेष-कारणानीति कृत्वा प्राधान्येनोक्तानि । परमार्थतस्तु यथानिर्दिष्ट-कर्मपरिणामादिकारणकलापव्यापारमन्तरेण न नयननिमेषोन्मेष-मात्रमपि कार्यजातं किंचिज्जगति जायते । प्रकर्षः प्राह । माम यद्येवं ततः पुरुषेण किमात्मनो निजवर्गीणस्य वामूरभ्यर्णवर्तिनीरा पतन्तीरुपलभ्य न कर्तव्य एव कश्चिदासां निवारणोपायः । किं नान्वेषणीया एव वैद्यौषधमन्त्रतन्त्ररसायनचतुर्विधदण्डनीत्यादयः समुपस्थितजरारुजामृत्यादिनिर्घातनोपायाः । किं सर्वथा पाद-प्रसारिकैवात्र श्रेयस्करी । किमकिंचित्कर एव पुरुषो हेयोपादे-यहानोपादाने । ननु प्रत्यक्षविरुद्धमिदं यतः प्रवर्तन्त एव पुरुषा हिताहितयोरवाप्तिनिराकरणकामतया । प्रवृत्ताश्चोपाये प्राप्नुवन्ति हितमर्थं निराकुर्वन्ति चोपस्थितमप्युपायत एवाहितमिति । विमर्शेनोक्तं । वत्स विश्रब्धो भव मोत्तालतां यासीः । परामृश वचनेदंपर्यं । निश्चयतो हि मयोक्तं यथा मा प्रवर्तिष्ट पुरुषः ।

व्यवहारतस्तु तत्प्रवृत्तिं को वारयति। पुरुषेण हि सर्वत्र पुरुषापराधमलः सदनुष्ठाननिर्मलजलेन क्षालनीयः। तदर्थं हि तत्प्रवृत्तिः। यतो नाकलयत्यसौ तदा भाविकार्यपरिणामं ततो व्यवहारतः सर्वहेयोपादेयहानोपादानसाधनं समाचरत्येव। किं च। चिन्तितं चानेन। यदुताहं न प्रवर्ते तथाप्यसावप्रवर्तमानो नासितुं लभते। यतः कर्मपरिणामादिकारणसामग्र्या वेतालाविष्ट इव हठात्प्रवर्तत एव। न चाकिंचित्करः पुरुषः। किं तर्हि स एव प्रधानः। तदुपकरणत्वात्कर्मपरिणामादीनां। न च पादप्रसारिका श्रेयस्करी। व्यवहारतः पुरुषप्रवृत्तेर्हिताहितनिर्वर्तनापवर्तनक्षमत्वात्। निश्चयतस्तु निःशेषकारणकलापपरिणामसाध्यत्वात् कार्याणां। अन्यथा पूर्वमाकलिते पुरुषेण वैपरीत्येन तु परिणते पश्चात्प्रयोजनेन विधेयौ न हर्षविषादौ समालम्बनीयो निश्चयाभिप्रायो यथेत्थमेवानेन विधातव्यमिति भावनया विधेयो मध्यस्थभावः। न चैतच्चिन्तनीयं। यद्येवमहमकरिष्यं ततो नेत्थमभविष्यदिति। यतस्तथावश्यंभाविनः कार्यस्य कुतोऽन्यथाकरणं। नियता हि निश्चयाकूतेन नियतकारणसामग्रीजन्या च सकलकालं तथैवानन्तकेवलिज्ञानगोचरीभूता च समस्तापि जगति बहिरङ्गान्तरङ्गकार्यपर्यायमाला। सा यया परिपाट्या व्यवस्थिता यैश्च कारणैराविर्भावनीया तथैव परिपाट्या तान्येव च कारणान्यासाद्याविर्भवति। कुतस्तस्यामन्यथाभावः। अतोऽतीतचिन्ता मोहविलसितमेव। व्यवहारतोऽपि हितावाप्तये ऽहितनिषेधाय च प्रवर्तमानेन पुरुषेण सुपर्यालोचितकारिणा नानैकान्तिकानात्यन्तिके तत्साधने भेषजमन्त्रतन्त्ररसायनदण्डनीत्यादौ

महानादरो विधेयोऽपि लैकान्तिकात्यन्तिकं तत्साधनमन्वेषणीयं। सर्वथा सदनुष्ठानोपायेन तत्र यातव्यं यत्रैते जरारुजादयः सर्वेऽप्युपद्रवा न प्रभवन्ति। प्रकर्षः प्राह। माम कुत्र पुनरेते न प्रभवन्ति। विमर्शेनोक्तं।

अस्ति सन्नगरी रम्या निर्वृतिर्नाम विश्रुता।
अनन्तानन्दसन्दोहपरिपूर्णा निरत्यया॥
तस्यां न प्रभवन्त्येव संस्थितानामुपद्रवाः।
जरारुजाद्याः सा यस्मात्सर्वोपद्रववर्जिता॥
तस्यां च गन्तुकामेन सेव्याः सद्वीर्यवृद्धये।
पुरुषेण सदा तत्त्वबोधश्रद्धानसत्क्रियाः॥
ततो विवृद्धवीर्याणां तस्या मार्गेऽपि तिष्ठताम्।
तनूभवन्ति दुःखानि वर्धते सुखपद्धतिः॥
इदं तु नगरं भद्र भवचक्रं चतुर्विधम्।
सदैवामुक्तमेताभिस्तथान्यैर्भूर्युपद्रवैः॥
को वात्र गणयेत्तात क्षुद्रोपद्रवकारिणाम्।
पुरे संख्यानमप्येषां स्थानमिदमीदृशम्॥
प्रकर्षः प्राह मामेदं नगरं ननु सर्वथा।
एवं कथयतो दुःखपञ्जरं कथितं त्वया॥
साधु साधूदितं वत्स बुद्धं वत्सेन भाषितम्।
विज्ञातं भवचक्रस्य सारमित्याह मातुलः॥
प्रकर्षः प्राह यद्येवं ततोऽत्र नगरे जनाः।
वसन्तः किं सुनिर्विण्णाः किं वा नेति निवेद्यताम्॥

विमर्शेनोदितं वत्स निर्वेदो नास्ति देहिनाम् ।
अत्रापि वसतां नित्यं तत्राकर्णय कारणम् ॥
य एते कथितास्तुभ्यं महामोहादिभूभुजः ।
अन्तरङ्गाः स्ववीर्येण वशीकृतजगत्त्रयाः ॥
एतेषां कौशलं किंचिदपूर्वं जनमोहने ।
विद्यते तद्वशेनैते निर्विद्यन्ते न नागराः ॥
एते हि चरटप्राया दुःखदाः शत्रवोऽतुलाः ।
महामोहादयो वत्स भवचक्रनिवासिनाम् ॥
तथापि प्रतिभासन्ते तेषां मोहितचेतसाम् ।
यथैते सुहृदोऽस्माकं वत्सलाः सुखहेतवः ॥
इदं च नगरं वत्स दुःखसङ्घातपूरितम् ।
तथाप्यत्र स्थिता लोका मन्यन्ते सुखसागरम् ॥
निश्चिन्ता निर्गमोपाये वसनेनात्र मोदिताः ।
निवसन्ति सदा तुष्टा महामोहादिबान्धवैः ॥
योऽपि निर्गमनोपायं भवचक्रात्प्रभाषते ।
तस्याप्येतेऽपि रुष्यन्ति यथैष सुखवञ्चकः ॥
तत्र तत्र प्रकुर्वन्ति महायत्नेन सर्वथा ।
येनात्रैव भवत्येषां वासः पापेन कर्मणा ॥
तदेवं निजवीर्येण महामोहादिशत्रुभिः ।
क्रोडीकृता न जानन्ति किंचिदेते तपस्विनः ॥
शब्दादिसुखसंभोगं तुच्छं दुःखात्मकं सदा ।
एते मनसि मन्यन्ते यथेदममृतोपमम् ॥

ततोऽमी यावदेतेषां प्रभवो वत्स भूभुजाम् ।
भवचक्रे न निर्विण्णास्तावल्लोकाः कदाचन ॥
प्रकर्षः प्राह यद्येवं ततोऽमीषां दुरात्मनाम् ।
मदोन्मत्तकतुल्यानां किमस्माकं विचिन्तया ॥
केवलं माम सर्वेषां महामोहादिभूभुजाम् ।
दर्शितं भवचक्रेऽत्र मम वीर्यं त्वया स्फुटम् ॥
यस्त्वसौ वर्णितः पूर्वं महामोहमहत्तमः ।
बष्टः कुदृष्टिपल्लीको मिथ्यादर्शननामकः ॥
तेन यद्भवचक्रेऽत्र स्ववीर्येण विजृम्भितम् ।
तन्मेऽद्यापि त्वयाख्यातं नापि संदर्शितं मम ॥
ततोऽहं द्रष्टुमिच्छामि श्रोतुं च गुणरूपतः ।
तद्वशीभूतलोकानां चरितं माम साम्प्रतम् ॥
विमर्शः प्राह नगरं समस्तमिदमञ्जसा ।
प्रायेण वर्तते तस्य वशे नास्त्यत्र संशयः ॥

तथा हि ।

यदिदं वर्णितं तेऽत्र मया पुरचतुष्टयम् ।
तत्र सर्वत्र विद्यन्ते लोकास्तद्वशवर्तिनः ॥
तथापि ये विशेषेण तस्याज्ञाकारिणो जनाः ।
तेषां स्थानानि ते भद्र दर्शयामि परिस्फुटम् ॥
ततश्चोर्ध्वं विशेषेण कृत्वासौ दक्षिणं करम् ।
तर्जन्या दर्शयत्येवं तानि स्थानानि यत्नतः ॥
अमूनि मानवावासे दृश्यन्ते यानि सुन्दर ।

अवान्तरपुराणीह षडवान्तरमण्डले ॥
एतानि वत्स लोकानां तेषां स्थानानि लक्षय।
मिथ्यादर्शनसंज्ञेन ये वशीकृतचेतसः ॥

प्रकर्षेणोक्तं। माम किन्नामकान्येतानि पुराणि किमभिधाना वैतेषु लोकाः प्रतिवसन्ति। विमर्शेनोक्तं। वत्स समाकर्णय।

एकमत्र पुरे तावन्नैयायिकमितीरितम्।
नैयायिकाश्च गीयन्ते ते जना येऽत्र संस्थिताः ॥
अन्यद्वैशेषिकं नाम पुरमत्राभिधीयते।
वैशेषिकाश्च ते लोका येऽस्य मध्ये व्यवस्थिताः ॥
तथापरं जनैः सांख्यं पुरमत्र प्रकाशितम्।
सांख्याश्च ते विनिर्दिष्टा लोका येऽत्र वसन्ति भोः ॥
इहापरं पुनर्बौद्धं पुरमाख्यायते जनैः।
प्रसिद्धा बौद्धसंज्ञाश्च ते जना येऽस्य मध्यगाः ॥
मीमांसकपुरं नाम तथान्यत्परिकीर्तितम्।
मीमांसकाश्च गीयन्ते ते लोका येऽत्र संस्थिताः ॥
लोकायतमिति प्रोक्तं पुरमत्र तथापरम्।
बार्हस्पत्याश्च ते लोका ये वास्तव्याः पुरेऽत्र भोः ॥
तदेतेषु पुरेषूच्चैर्येऽमी लोकाः प्रकीर्तिताः।
ते विशेषेण कुर्वन्ति मिथ्यादर्शनशासनम् ॥
यच्च प्रोक्तं मया पूर्वं सभार्यस्य विजृम्भितम्।
तस्य सर्वं तदेतेषु लोकेषु ननु दृश्यते ॥

प्रकर्षेणोक्तं।

तन्मिथ्यादर्शनस्यैव माहात्म्यं स्फुटमुच्यते ।
यदेते न विजानन्ति सन्मार्गं निर्वृतेर्जनाः ॥
दिङ्मूढा इव मन्यन्ते कुमार्गमपि तत्त्वतः ।
सन्मार्ग इति यच्चैते तत्तस्यैव विजृम्भितम् ॥
ये त्वेते शिखरे लोका वर्तन्ते वत्स सत्पुरे ।
एषामेतद्द्वयं नास्ति तेनेमे तस्य दूरगाः ॥
एतानि च पुराण्यत्र प्रत्यासन्नानि तेन ते ।
दर्शितानि मया वत्स नेयत्ता परिकीर्तिता ॥

किं तर्हि ।

उपलक्षणमेतानि विज्ञातव्यानि भावतः ।
मिथ्यादर्शनवश्यानामन्येषामपि तादृशाम् ॥

यतः ।

यान्येतानि पुराण्यत्र दृश्यन्ते वत्स भूतले ।
तान्यन्यदेशकालेषु स्युः स्तोकानि बहूनि वा ॥
एतत्तु शिखरस्थायि सत्पुरं भद्र सर्वदा ।
अप्रच्युतमनुत्पन्नं शाश्वतं परमार्थतः ॥
प्रकर्षेणोदितं माम येऽमीभिः परिकल्पिताः ।
स्वबुद्ध्या निर्वृतेर्मार्गा लोकैः पुरनिवासिभिः ॥
तानहं श्रोतुमिच्छामि प्रत्येकं सकुतूहलः ।
ततो मेऽनुग्रहं कृत्वा भवानाख्यातुमर्हति ॥
विमर्शः प्राह यद्येवं ततः कृत्वा समाहितम् ।
चेतस्त्वं वत्स बुध्यस्व मार्गास्तथ्ये परिस्फुटम् ॥

तत्र नैयायिकैस्तावदेष कल्पितो निर्वृतिमार्गः । यदुत प्रमाण-प्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा—हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्रार्थोपलब्धिहेतुः प्रमाणं । तच्चतुर्धा । तद्यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । तत्र प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं । तत्पूर्वकं त्रिविधमनुमानं । तद्यथा । पूर्ववच्छेषवत्सामान्यतो दृष्टं च । तत्र पूर्ववत्कारणात्कार्यानुमानं यथा मेघोन्नतेर्भविष्यति वृष्टिरिति । शेषवत्कार्यात्कारणानुमानं यथा विशिष्टानदीपूरदर्शनादुपरि वृष्टो देव इति । सामान्यतोदृष्टं नाम यथा देवदत्तादौ गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य दिनकरेऽपि सा गतिपूर्विकैव समधिगम्यते । प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं यथा गौस्तथा गवय इति । आप्तोपदेशः शब्द आगम इत्यर्थः । तदेवमिदं चतुर्विधं प्रमाणमभिहितं । तथा शरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं । किं स्यादित्यनवधारणात्मकः प्रत्ययः संशयः किमयं स्थाणुः स्यादुत पुरुष इति । येन प्रयुक्तः प्रवर्तते तत्प्रयोजनं । अविप्रतिपत्तिविषयापन्नो दृष्टान्तः । सिद्धान्तश्चतुर्विधः । तद्यथा । सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तश्चेति। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। संशयादूर्ध्वं भवितव्यताप्रत्ययस्तर्कः यथा भवितव्यमत्र स्थाणुना पुरुषेण वेति । संशयतर्काभ्यामूर्ध्वं निश्चयतः प्रत्ययो निर्णयः यथा पुरुष एवायं स्थाणुरेव वा । तिस्रः कथा वादजल्पवितण्डाः । तत्र

षड्त्र यानि श्रूयन्ते मण्डले लोकवार्तया ।
दर्शनानि किलैतानि तान्याख्यातानि मे तथा ॥
विमर्शनोदितं वत्स कथ्यते ते परिस्फुटम् ।
एतानि पञ्च तान्येव मीमांसकपुरं विना ॥
अर्वाक्कालिकमेतद्धि मीमांसकपुरं मतम् ।
तेन दर्शनसंख्यायामेतल्लोकैर्न गण्यते ॥

तथा हि ।

जैमिनिर्वेदरक्षार्थं दूषणोद्धारणेच्छया ।
चकार किल मीमांसां दृष्ट्वा तीर्थिकविभ्रमम् ॥
तस्मादेतानि पञ्चैव मीमांसकपुरं विना ।
लोकैर्दर्शनसंख्यायां गण्यन्ते नात्र संशयः ॥
प्रकर्षः प्राह यद्येवं ततो ब्रूहि क्व वर्तते ।
तत्पुरं माम यल्लोकैर्गीयते षष्ठदर्शनम् ॥

विमर्शनाभिहितं ।

यदिदं दृश्यतेऽत्रैव विवेकवरपर्वते ।
निर्मलं शिखरं तुङ्गमप्रमत्तत्वनामकम् ॥
विस्तीर्णमिदमत्यर्थमत्रैव च निवेशितम् ।
पुरं लोकोत्तरं वत्स तज्जैनमभिधीयते ॥
तस्य ते कथयिष्यामि ये गुणाः शेषजित्वराः ।
तथापि लोकरूढ्यैव षष्ठं हि तदुदाहृतम् ॥
अन्यच्च तत्र ये लोकास्तेषामेष महत्तमः ।
न बाधकः प्रकृत्यैव मिथ्यादर्शननामकः ॥

प्रकर्षेणोक्तं।

अधःस्थितेषु बाध्यन्ते पुरेषु यदमी जनाः।
शिखरस्थे न बाध्यन्ते माम किं तत्र कारणम्॥

विमर्शेनोक्तं।

अस्त्यत्र निर्वृतिर्लोके नगरी सुमनोहरा।
सा च भुक्तेरतिक्रान्ता महामोहादिभूभुजाम्॥
निर्द्वन्द्वानन्दसंपूर्णा सततं निरुपद्रवा।
एभिश्चाकर्णिता सर्वैः सा लोकैः पुरवासिभिः॥
ततो लोकायतं मुक्त्वा ये शेषपुरवासिनः।
नगरीं गन्तुमिच्छन्ति तामेते वत्स निर्वृतिम्॥
एते च सर्वे तां गन्तुमन्तरङ्गैर्महापथैः।
स्वकल्पितैः प्रवाञ्छन्ति परस्परविरोधिभिः॥

ततश्च।

अमीभिर्वत्स भूमिष्ठैर्ये मार्गाः परिकल्पिताः।
निर्वृतेः प्रापकास्ते हि न घटन्ते सुयुक्तितः॥
विवेकपर्वतोत्तुङ्गशिखरस्थितसत्पुरे।
वसद्भिर्यः पुनर्दृष्टः सन्मार्गोऽतिमनोहरः॥
स निर्वृतिं नयत्येव लोकं नास्त्यत्र संशयः।
पक्षपातविमुक्तेन मया तेनेदमुच्यते॥
यथामी बाधिता लोका येऽधःस्थपुरवर्तिनः।
मिथ्यादर्शनमंत्रेण न गिरिस्थे महापुरे॥

यतः।

तन्मिथ्यादर्शनस्यैव माहात्म्यं स्फुटमुच्यते ।
यदेते न विजानन्ति सन्मार्गं निर्वृतेर्जनाः ॥
दिङ्मूढा इव मन्यन्ते कुमार्गमपि तत्त्वतः ।
सन्मार्ग इति यच्चैते तत्तस्यैव विजृम्भितम् ॥
ये त्वेते शिखरे लोका वर्तन्ते वत्स सत्पुरे ।
एषामेतद्द्वयं नास्ति तेनेमे तस्य दूरगाः ॥
एतानि च पुराण्यत्र प्रत्यासन्नानि तेन ते ।
दर्शितानि मया वत्स नैयत्ता परिकीर्तिता ॥

किं तर्हि ।

उपलक्षणमेतानि विज्ञातव्यानि भावतः ।
मिथ्यादर्शनवश्यानामन्येषामपि तादृशाम् ॥

यतः ।

यान्येतानि पुराण्यत्र दृश्यन्ते वत्स भूतले ।
तान्यन्यदेशकालेषु स्युः स्तोकानि बहूनि वा ॥
एतत्तु शिखरस्थायि सत्पुरं भद्र सर्वदा ।
अप्रच्युतमनुत्पन्नं शाश्वतं परमार्थतः ॥
प्रकर्षेणोदितं माम येऽमीभिः परिकल्पिताः ।
सबुद्ध्या निर्वृतेर्मार्गा लोकैः पुरनिवासिभिः ॥
तानहं श्रोतुमिच्छामि प्रत्येकं सकुतूहलः ।
ततो मेऽनुग्रहं कृत्वा भवानाख्यातुमर्हति ॥
विमर्शः प्राह यद्येवं ततः कृत्वा समाहितम् ।
चेतस्त्वं वत्स शृणुष्व मार्गांस्तेषां परिस्फुटम् ॥

तत्र नैयायिकैस्तावदेष कल्पितो निर्वृतिमार्गः । यदुत प्रमाण-प्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा,-हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्रार्थोपलम्भहेतुः प्रमाणं । तच्चतुर्धा । तद्यथा । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि । तत्र प्रत्यक्षमिन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षं । तत्पूर्वकं त्रिविधमनुमानं । तद्यथा । पूर्ववच्छेषवत्सामान्यतो दृष्टं च । तत्र पूर्ववत्कारणात्कार्यानुमानं यथा मेघोन्नतेर्भविष्यति वृष्टिरिति । शेषवत्कार्यात्कारणानुमानं यथा विशिष्टान्नदीपूरदर्शनादुपरि वृष्टो देव इति । सामान्यतोदृष्टं नाम यथा देवदत्तादौ गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य दिनकरेऽपि सा गतिपूर्विकैव समधिगम्यते । प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानं यथा गौस्तथा गवय इति । आप्तोपदेशः शब्द आगम इत्यर्थः । तदेवमिदं चतुर्विधं प्रमाणमभिहितं । तथा शरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयं । किं स्यादित्यनवधारणात्मकः प्रत्ययः संशयः किमयं स्थाणुः स्यादुत पुरुष इति । येन प्रयुक्तः प्रवर्तते तत्प्रयोजनं । अविप्रतिपत्तिविषयापन्नो दृष्टान्तः । सिद्धान्तश्चतुर्विधः । तद्यथा । सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तश्चेति। प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। संशयादूर्ध्वं भवितव्यताप्रत्ययस्तर्कः यथा भवितव्यमत्र स्थाणुना पुरुषेण वेति । संशयतर्काभ्यामूर्ध्वं निश्चयतः प्रत्ययो निर्णयः यथा पुरुष एवायं स्थाणुरेव वा । तिस्रः कथा वादजल्पवितण्डाः । तत्र

शिष्याचार्ययोः पक्षप्रतिपक्षपरिग्रहेणाभ्यासख्यापनाय वादकथा । विजिगीषुणा सार्धं छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । स एव प्रतिपक्षस्थापनाहीनो वितण्डा । अनैकान्तिकादयो हेत्वाभासाः । नवकम्बलो देवदत्त इत्यादि च्छलं । दूषणाभासास्तु जातयः । निग्रहस्थानानि पराजयवस्तूनि । तद्यथा । प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासः हेत्वन्तरं अर्थान्तरं निरर्थकं अविज्ञातार्थमपार्थकं अप्राप्तकालं न्यूनमधिकं पुनरुक्तं अननुभाषणं अप्रतिज्ञानं अप्रतिभा कथाविक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगः अपसिद्धान्तो हेत्वाभासाश्चेति निग्रहस्थानानि । तदेते प्रमाणादयः षोडश पदार्था नैयायिकदर्शनसमासः ॥

वैशेषिकैः पुनरयं वत्स परिकल्पितो निर्वृतिनगरीगमनमार्गः । यदुत द्रव्यगुणकर्मसामान्यविशेषसमवायानां षणां पदार्थानां तत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । सा हि निर्वृतिर्निःश्रेयसरूपा । तत्र पृथिव्यापस्तेजो वायुराकाशं कालो दिगात्मा मन इति नव द्रव्याणि । रूपरसगन्धस्पर्शसंख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारगुरुत्वद्रवत्वस्नेहवेगशब्दाः पञ्चविंशतिर्गुणाः । उत्क्षेपणमवक्षेपणमाकुञ्चनं प्रसारणं गमनमिति पञ्च कर्माणि । सामान्यं द्विविधं परमपरं च । तत्र परं सत्तालक्षणं अपरं द्रव्यत्वादीति । नित्यद्रव्यवृत्तयोऽन्त्या विशेषाः । अयुतसिद्धानामाधाराधेयभूतानां यः सम्बन्ध इहप्रत्ययहेतुः समवायः । लैङ्गिकप्रत्यक्षे द्वे एव प्रमाणे । इति वैशेषिकदर्शनसमासार्थः ।

सांख्यैस्तु वत्स निजबुद्ध्या परिकल्पितोऽयं निर्वृतिनगर्याः पन्थाः ।

यदुत पञ्चविंशतितत्त्वपरिज्ञानान्निःश्रेयसाधिगमः । तत्र त्रयो गुणाः सत्त्वं रजस्तमश्च । तत्र प्रसादलाघवप्रसवानभिष्वङ्गाद्वेषप्रीतयः कार्यं सत्त्वस्य । शोषतापभेदस्तम्भोद्वेगापद्वेषाः कार्यं रजसः । वरणसादनबीभत्सदैन्यगौरवाणि तमसः कार्यं । ततः सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः । सैव प्रधानमित्युच्यते । प्रकृतेश्च महानाविर्भवति बुद्धिरित्यर्थः । बुद्धेश्चाहङ्कारः । ततोऽहङ्कारादेकादशेन्द्रियाणि । तद्यथा । पञ्च बुद्धीन्द्रियाणि स्पर्शनरसनघ्राणचक्षुःश्रोत्ररूपाणि पञ्च कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थलक्षणानि मनश्चाविर्भवति । तथा तत एवाहङ्कारात्तमोबहुलात्पञ्च तन्मात्राणि स्पर्शरसरूपगन्धशब्दलक्षणान्याविर्भवन्ति । तेभ्यश्च पृथिव्यादीनि पञ्च महाभूतानि । तदेषा चतुर्विंशतितत्त्वात्मिका प्रकृतिः । तथा परः पुरुषश्चैतन्यस्वरूपः । स चानेको जन्ममरणकरणानां नियमदर्शनाद्धर्मादिषु प्रवृत्तिनानात्वाच्च । प्रकृतिपुरुषयोश्चोपभोगार्थः संयोगः पंग्वन्धयोरिव । उपभोगश्च शब्दाद्युपलम्भो गुणपुरुषान्तरोपभोगश्च । प्रत्यक्षानुमानागमाः प्रमाणानीति । सांख्यदर्शनसंक्षेपार्थः ॥

बौद्धैः पुनर्भद्र परिकल्पितेयं निर्वृतिनगरीवर्तनी । यदुत द्वादशायतननि । तद्यथा । पञ्चेन्द्रियाणि पञ्च शब्दादयो मनो धर्मायतनं च । धर्मास्तु सुखादयो विज्ञेयाः । प्रत्यक्षानुमाने द्वे एव प्रमाणे इति बौद्धदर्शनसमासार्थः ॥

अथ वा वैभाषिकसौत्रान्तिकयोगाचारमध्यमकभेदाच्चतुर्विधा बौद्धा भवन्ति । तत्र वैभाषिकमतमिदं । यदुत क्षणिकं वस्तु । तद्यथा । जातिर्जनयति स्थितिः स्थापयति जरा जर्जरयति विनाशो

नाशयति। तथात्मापि तथाविध एव पुद्गलशब्दासावभिधीयते॥

सौत्रान्तिकमतं पुनरिदं। रूपवेदनाविज्ञानसंज्ञासंस्काराः सर्वशरीरिणामेते पञ्च स्कन्धा विद्यन्ते। न पुनरात्मा। त एव हि परलोकगामिनः। तथा क्षणिकाः सर्वे संस्काराः स्वलक्षणं परमार्थतः। अन्यापोहः शब्दार्थः। सन्तानोच्छेदो मोक्ष इति॥

योगाचारमतं त्विदं। विज्ञानमात्रमिदं भुवनं। न विद्यते बाह्यार्थः। वासनापरिपाकतो नीलपीतादिप्रतिभासाः। आलयविज्ञानं सर्ववासनाधारभूतं। आलयविज्ञानविशुद्धिरेव चापवर्ग इति॥

माध्यमिकदर्शने तु सर्वशून्यमिदं स्वप्नोपमः प्रमाणप्रमेयप्रविभागः। मुक्तिस्तु शून्यतादृष्टिस्तदर्थं शेषभावना इति बौद्धविशेषाणां मतसंक्षेपार्थः॥

लोकायतैः पुनर्वत्स सा निर्वृतिनगरी नास्तीति प्रख्यापितं लोकायते। अमी ब्रुवते। नास्ति निर्वृतिर्नास्ति जीवो नास्ति परलोको नास्ति पुण्यं नास्ति पापमित्यादि। किं तर्हि पृथिव्यापस्तेजो वायुरिति तत्त्वानि तत्समुदाये शरीरेन्द्रियविषयसंज्ञा। तेभ्यश्चैतन्यं मद्याङ्गेभ्यो मदशक्तिवत्। जलबुद्बुदवज्जीवाः। प्रवृत्तिनिवृत्तिसाध्या प्रीतिः पुरुषार्थः। स च काम एव नान्यो मोक्षादिः। तस्मात्रान्यत्पृथिव्यादिभ्यस्तत्त्वमस्ति दृष्टहान्यदृष्टकल्पनाप्रसङ्गादिति। प्रत्यक्षमेव चैकं प्रमाणमिति लोकायतमतसमासः॥

मीमांसकानां पुनरेष मार्गः। यदुत वेदपाठानन्तरं धर्मजिज्ञासा कर्तव्या। यतश्चैवं ततस्तस्य निमित्तपरीक्षा। निमित्तं च चोदना। यत उक्तं। चोदनालक्षणोऽर्थो धर्मः। चोदना च

क्रियायां प्रवर्तकं वचनमाज्ञर्यथाग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादि। तेन धर्मो लक्ष्यते नान्येन प्रमाणेन प्रत्यक्षादीनां विद्यमानोपलम्भनत्वादिति। प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यभावाः षट् प्रमाणानीति मीमांसकमतसमासः॥

अमीभिः पुनर्वत्स विवेकमहापर्वतारूढैरप्रमत्तत्वशिखरस्थितैर्जैनपुरनिवासिभिर्जैनलोकैरयं दृष्टो निर्वृतिनगरीगमनमार्गः। यदुत जीवाजीवास्रवसंवरनिर्जरामोक्षास्तत्त्वं। तत्र सुखदुःखज्ञानादिपरिणामलक्षणो जीवः। तद्विपरीतस्त्वजीवः। मिथ्यादर्शनाविरतिप्रमादकषाययोगा बन्धहेतवः। स आस्रवः। आस्रवकार्यं बन्धः। आस्रवविपरीतः संवरः। संवरफलं निर्जरा। निर्जराफलं मोक्ष इत्येते सप्त पदार्थाः। तथा विधिप्रतिषेधानुष्ठानपदार्थाविरोधश्च। अत्र जैनदर्शने स्वर्गकेवलार्थिना तपोध्यानादि कर्तव्यं। सर्वे जीवा न हन्तव्या इति वचनात्। सततसमितिगुप्तिशुद्धा क्रिया। असंपत्नो योग इति वचनात्। उत्पादविगमध्रौव्ययुक्तं सत्। एकं द्रव्यमनन्तपर्यायमर्थ इति। प्रत्यक्षपरोक्षे द्वे एव प्रमाणे इति जैनमतस्य दिग्दर्शनमात्रम्॥

तत्रैते प्रथमास्तावच्चत्वारो वत्स वादिनः।
नैयायिकादयो नैव निर्वृतेर्मार्गवेदकाः॥

यतः।

एकान्तनित्यमिच्छन्ति पुरुषं तत्र शासुकम्।
सर्वगं च वाञ्छन्ति तथान्ये क्षणनश्वरम्॥
नित्यस्यासौ कथं गच्छेत्तस्यामविचलो यतः।

सर्वेचगश्च यो भद्र स क्व गच्छेत्कुतोऽपि वा ॥
नश्वरोऽपि विनष्टत्वान्न तस्यां गन्तुमर्हति ।
तस्मादेते न जानन्ति मार्गं तस्यास्तपस्विनः ॥
लोकायतास्तु दूरेण वर्तन्ते वत्स निर्वृतेः ।
ये हि पापहतात्मानो निराकुर्वन्ति तामपि ॥

किं च ।

लोकायतमतं प्राज्ञैर्ज्ञेयं पापौघकारणम् ।
निर्द्वन्द्वानन्दपूर्णाया निर्वृतेः प्रतिषेधकम् ॥
तस्माद्दुष्टाशयकरं क्लिष्टसत्त्वविचिन्तितम् ।
पापश्रुतं सदा धीरैर्वर्ज्यं नास्तिकदर्शनम् ॥
परमार्थेन सा वत्स नेष्टा मीमांसकैरपि ।
यैः सर्वज्ञं निराकृत्य वेदप्रामाण्यमीरितम् ॥
तदेवमेते सर्वेऽपि भूमिष्ठपुरवासिनः ।
अनेन कारणेनोक्ता मिथ्यादर्शनमोहिताः ॥
एते तु शिखरारूढाः पुरे वास्तव्यका जनाः ।
यं वदन्ति स निर्मिथ्यो निर्वृतेः प्रगुणः पथः ॥

ततश्च ।

यथावस्थितसन्मार्गवेदिनां वीर्यशालिनाम् ।
महत्तमो न बाधाये मिथ्यादर्शननामकः ॥
ज्ञानश्रद्धानपूतास्ते निःस्पृहा भवचारके ।
चारित्रयानमारुह्य निर्वृतिं यान्ति मानवाः ॥
यथा च सन्मार्गोऽयं यथा चान्ये न तद्विधाः ।

इदं च पुरतो वत्स यदहं ते विचारये ॥
ततो जन्म ममात्येति न विचारस्य निश्चितिः ।
तेनेदं ते समासेन प्रविभज्य निवेद्यते ॥
ज्ञानदर्शनचारित्रलक्षणो ह्यान्तरो मतः ।
विद्वद्भिर्निर्वृतेर्मार्गः प्रगुणः सुपरिस्फुटः ॥
स दृष्टः पर्वताल्लढैर्न दृष्टो भूमिवासिभिः ।
तेनैते तत्र गन्तारो न गान्तरो भुवि स्थिताः ॥
तदेते कथितास्तुभ्यं भवचक्रे मया जनाः ।
ये मिथ्यादर्शनाख्येन तेन भद्र विडम्बिताः ॥
प्रकर्षः प्राह मामेदं भवचक्रं मया पुरम् ।
सर्वं विलोकितं दृष्टं वीर्यमान्तरभूभुजाम् ॥
केवलं तदिदं ज्ञातं महाहास्यकरं परम् ।
आभाणकं जगत्यत्र यद्बालैरपि गीयते ॥
गन्त्रीमनुष्यसामग्र्या यो वधूमाहरिष्यति ।
तस्यैव विस्मृता हन्त सा वधूरिति कौतुकम् ॥

तथाहि ।

महामोहादिजेतारो महात्मानो नरोत्तमाः ।
द्रष्टव्या भवचक्रेऽत्र सन्तोषसहिताः किल ॥
एतदर्थमिहायातौ मामावामत्र पत्तने ।
न दृष्टास्ते महात्मानो न च सन्तोषभूपतिः ॥
अतोऽधुनापि माम्मामो मदनुग्रहकाम्यया ।
गत्वा ते यत्र वर्तन्ते तत्रस्थान् दर्शयलक्षम् ॥

विमर्शेनोदितं वत्स यदिदं शिखरे स्थितम्।
जैनं पुरं भवन्त्येव नूनमत्र तथाविधाः॥
तस्मात्तत्रैव गच्छावो येनेदं ते कुतूहलम्।
साक्षाद्दर्शनतो वत्स निःशेषं परिपूर्यते॥
एवं भवतु तेनोक्ते तौ गतौ तत्र सत्पुरे।
दृष्टाश्च साधवस्तत्र निर्मलीमसमानसाः॥
विमर्शः प्राह भद्रैते ते लोकार्यैर्महात्मभिः।
विक्षिप्ता निजवीर्येण महामोहादिभूभुजः॥
सर्वे भगवतामेषां बान्धवा वत्स जन्तवः।
एतेऽच सेतराणां च बान्धवाः सर्वदेहिनाम्॥
समस्ता मातरोऽमीषां नरामरपशुस्त्रियः।
एतेऽपि सूनवस्तासां भगवन्तो नरोत्तमाः॥
बाह्यपरिग्रहे वत्स निजेऽपि च शरीरके।
चित्तं न लग्नमेतेषां पद्मवज्जलपङ्कयोः॥
सत्यं भूतहितं वाक्यममृतक्षरणोपमम्।
एते परीक्ष्य भाषन्ते कार्ये सति मिताक्षरम्॥
असङ्गयोगसिद्ध्यर्थं सर्वदोषविवर्जितम्।
आहारमेते गृह्णन्ति लौल्यनिर्मुक्तचेतसः॥
किं चेह बहुनोक्तेन चेष्टा या या महात्मनाम्।
सा सा भगवतामेषां महामोहादिसूदनी॥

तेन वत्स भगवतामेतेषां सम्बन्धिन्यापेक्षया तस्यां चित्तवृत्ति-महाटव्यामेवं जानीहि। यदुतात्यन्तशुष्का सा प्रमत्तता नदी।

खिलीभूतं तद्विलसितपुलिनं । परिभग्नश्चित्तविक्षेपमण्डपः । निरस्ता तृष्णावेदिका । विघटितं विपर्यासविष्टरं । संचूर्णिता चाविद्यागात्रयष्टिः । प्रलीनो महामोहराजः । उच्चाटितो महामिथ्यादर्शनपिशाचः । निर्नष्टो रागकेसरी । निर्भिन्नो द्वेषगजेन्द्रः । विपाटितो मकरध्वजः । विदारितो विषयाभिलाषः । निर्वासिता महामूढतादयस्तद्भार्याः । विध्वंसितो हासभटः । विकर्तिते जुगुप्सारती । निषूदितौ भयशोकौ । विदलिता दुष्टाभिसन्धिप्रभृतयश्चरटाः । पलायितानि डिम्भरूपाणि । विद्राविता ज्ञानसंवरणादयस्ते त्रयो दुष्टनरपतयः । अनुकूलीभूतास्ते चत्वारः सप्तानां मध्यवर्तिनो वेदनीयाद्याः । व्यपगतं चतुरङ्गमपि तत्सकलं बलं । प्रशान्ता विब्बोकाः । विगलिता विलासाः । तिरोभूताः समस्तविकाराः । किं बहुना । सर्वथा

> यद्दृष्टं भवता तस्यां वर्णितं च मया पुरा ।
> वस्तु किंचित्समस्तानां दुःखदं बाह्यदेहिनाम् ॥
> चित्तवृत्तिमहाटव्यां तत्सर्वमिह संस्थिताः ।
> प्रलीनं वत्स पश्यन्ति नूनमेते महाधियः ॥
> सा सर्वोपद्रवैर्मुक्ता श्वेता रत्नौघपूरिता ।
> एतेषां ध्यानयोगेन चित्तवृत्तिः प्रभासते ॥
> तदेते ते महात्मानो ये मया वत्स वर्णिताः
> पूर्वं तपोधनाः सम्यक् पश्य विस्फारितेक्षणः ॥

प्रकर्षेणोक्तं ।

> चारु चारु कृतं माम विहितो मदनुग्रहः ।

जनितः धूतपापोऽहमेतेषां दर्शनात्त्वया ॥
कृतं मानसनिर्वाणं विहितः पटुलोचनः ।
आनन्दामृतसेकेन गात्रं निर्वापितं च मे ॥
केवलं दर्शनीयोऽसौ ममाद्यापि ननु त्वया ।
यो वर्णितो महावीर्यो नाम सन्तोषभूपतिः ॥

विमर्शेनोक्तं ।

य एष दृश्यते वत्स स दृष्टेः सुखदायकः ।
शुभ्रश्चित्तसमाधानो नाम विस्तीर्णमण्डपः ॥
सर्वेषां वल्लभोऽमीषां जनानां पुरवासिनाम् ।
स सन्तोषमहाभूपो नूनमत्र भविष्यति ॥
प्रकर्षः प्राह यद्येवं ततोऽत्रैव प्रविश्यताम् ।
एवं भवतु वत्सेति बभाषे तस्य मातुलः ॥
प्रविश्य चोचिते देशे ताभ्यां दृष्टः स मण्डपः ।
निजप्रभावविच्छिन्नजनसन्तापसुन्दरः ॥

तत्र च ।

राजमण्डलमध्यस्थं दीप्तिनिर्धूततामसम् ।
वेष्टितं भूरिलोकेन सचित्तानन्ददायकम् ॥
विशालवेदिकारूढमुपविष्टं वरासने ।
दृष्टास्थानं नरेन्द्रं तौ पश्यतः स्म चतुर्मुखम् ॥
ततः प्रकर्षस्तं वीक्ष्य मनसा हर्षनिर्भरः ।
मनाक् संजातसन्देहो मातुलं प्रत्यभाषत ॥
अहो रम्यमिदं कस्य पुरं यस्येदृशः प्रभुः ।

ईदृशो मण्डपो लोका वास्तव्या यत्र चेदृशाः ॥

एवं च स्थिते ।

यत्रेदृशं पुरं माम विवेकवरपर्वते ।
किं सोऽयं भवचक्रोऽत्र वर्तते दोषपूरिते ॥
विमर्शेनोदितं वत्स यस्मिन्नेष महागिरिः ।
वर्तते तदहं वच्मि स्थानमस्य निशामय ॥
चित्तवृत्तिमहाटव्यां वर्तते परमार्थतः ।
भवचक्रे तु विद्वद्भिरुपचारेण कथ्यते ॥
यतोऽत्र विद्यते वत्स सल्लोकपरिपूरितम् ।
अन्तरङ्गं सुविस्तीर्णं पुरं सात्त्विकमानसम् ॥
तत्रायं संस्थितो वत्स विवेकवरपर्वतः ।
आधाराधेयसम्बन्धस्तेनैवं परिकीर्तितः ॥

प्रकर्षेणोदितं । माम यद्येवं ततो यदिदमस्य पर्वतस्याधारभूतं सात्त्विकमानसं पुरं ये च तन्निवासिनो बहिरङ्गलोका यश्चायं विवेकमहागिरिर्यच्चेदमप्रमत्तत्वं शिखरं यच्चादो जैनं पुरं ये चात्र स्थिता बहिरङ्गजनाः यश्चायं चित्तसमाधानमहामण्डपो या चेयं वेदिका यच्चेदं सिंहासनं यश्चायं नरेन्द्रो यश्चायमस्य परिवारः तदिदं सर्वं मम जन्मापूर्वं । ततो ममानुग्रहधिया प्रत्येकं विशेषतस्तद्दर्शयितुमर्हति मामः । विमर्शेनोक्तं । वत्स यद्येवं ततः समाकर्णय ।

यदिदं पर्वताधारं पुरं सात्त्विकमानसम् ।
तदन्तरङ्गरत्नानां सर्वेषामाकरो मतम् ॥
अनेकदोषपूर्णेऽपि भवचक्रे व्यवस्थितम् ।

नेदं स्वरूपतो वत्स दोषसंश्लेषभाजनम् ॥
अधन्या भवचक्रेऽत्र वर्तमाना मनुष्यकाः ।
इदं स्वरूपतो वत्स न पश्यन्ति कदाचन ॥
यानि निर्मलचित्तादिपुराण्यन्तरभूमिषु ।
अत्रैव प्रतिबद्धानि तानि जानीहि भावतः ॥
स कर्मपरिणामाख्यो राजा नेदं महापुरम् ।
सभुक्तिकं इदात्येकं महामोहादिभूभुजाम् ॥

किं तर्हि ।

स्वयमेव भुनक्तीदं तथान्यैर्वरभूमिपैः ।
शुभाशयादिभिर्वत्स भोजयेच्च सभुक्तिकम् ॥
इदं हि जगतः सारमिदं च निरुपद्रवम् ।
इदमेव कृताल्हादं बहिर्जनमनोहरम् ॥
तदिदं ते समासेन पुरं सात्त्विकमानसम् ।
निवेदितं मया वत्स शृणु चात्राधुना जनम् ॥
ये लोका निवसन्त्यत्र पुरे सात्त्विकमानसे ।
बहिरङ्गा भवन्त्येषां शौर्यवीर्यादयो गुणाः ॥
बहिरङ्गा जनास्ते हि निवसन्त्यत्र सत्पुरे ।
पुरमाहात्म्यमाहात्म्येन गच्छन्ति विबुधालये ॥
अन्यच्च वसतामत्र पुरे सात्त्विकमानसे ।
प्रत्यासन्नतया याति विवेको दृष्टिगोचरे ॥

ततश्च ।

यथारोहन्त्यमुं लोका विवेकवरपर्वतम् ।

ततो जैनं समासाद्य पुरं यान्ति सुखास्पदम् ॥

एवं च स्थिते।

पुरप्रभावमात्रेण यदेते सुन्दरा जनाः।
विवेकशिखरारूढाः पुनः स्युरतिसुन्दराः ॥

किं च।

अन्येषां पापिनां वत्स भवचक्रनिवासिनाम्।
सदा न प्रतिभातीदं जनानां जैनसत्पुरम् ॥
निवसन्ति पुनर्येऽत्र पुरे सात्त्विकमानसे।
बहिरङ्गजनास्तेषां भातीदं जैनसत्पुरम् ॥
तदमी भाविकल्याणा लोका मार्गानुयायिनः।
वास्तव्यकाः पुरे येऽत्र सदा प्रकृतिसुन्दरे ॥
तदेते कथितास्तुभ्यं पुरे सात्त्विकमानसे।
लोका महागिरे रूपं समाकर्णय साम्प्रतम् ॥
तावद्दारुणदुःखार्ता भवचक्रनिवासिनः।
जना यावन्न पश्यन्ति ते विवेकमहागिरिम्।
तदा न रमते तेषां भवचक्रे मतिर्नृणाम् ॥

ततश्च।

विहाय भवचक्रं ते समारुह्य महागिरिम्।
विमुच्य दुःखं जायन्ते निर्द्वन्द्वानन्दभाजिनः ॥
यतोऽत्र निर्मले तुङ्गे स्थितानां वत्स देहिनाम्।
भवचक्रमिदं सर्वं करस्थमिव भासते ॥
ततो विविधदृत्तान्तं दुःखसङ्घातपूरितम्।

विलोक्येदं विरज्यन्ते नगरान्तेऽमुतो जनाः ॥
विरक्ताश्च भवन्त्यत्र प्रतिबद्धा महागिरौ।
विवेके भावतः सौख्यहेतुरेष च भद्रिरिः ॥

ततश्च।

विवेकभद्रिरेवास्य माहात्म्येनास्य ते जनाः।
भवन्ति सुखिनोऽत्यन्तं भवचक्रेऽपि संस्थिताः ॥
तदेष सर्वलोकानां सुखहेतुर्महागिरिः।
विवेको वर्णितस्तुभ्यमधुना शिखरं शृणु ॥
इदं हि शिखरं तात सर्वदोषनिबर्हणम्।
उत्त्रासकारणं मन्ये दुष्टान्तरमहीभुजाम् ॥

यतः।

विवेकारूढलोकानां यद्युपद्रवकारिणः।
आगच्छेयुः कथञ्चिद्र महामोहादिशत्रवः ॥
ततस्ते निर्दयैर्भूत्वा विवेकारूढजन्तुभिः।
शिखरादप्रमत्तत्वात्क्षिप्यन्तेऽस्मान्न संशयः ॥
ततस्ते चूर्णिताशेषशरीरावयवाः पुनः।
दूरतः सम्पलायन्ते शिखरं वीक्ष्य कातराः ॥
तदिदं नूनमेतेषां दलनार्थं विनिर्मितम्।
विवेकवासिभिश्चूर्णमन्तरङ्गमहीभुजाम् ॥

किं च।

शुभ्रं विशालमत्तुङ्गं सर्वलोकसुखावहम्।
वत्सेदमप्रमत्तत्वं शिखरं गाढसुन्दरम् ॥

तदिदं ते समासेन कथितं शिखरं मया ।
अधुना वर्ण्यते जैनं पुरं तत्त्वं निशामय ॥
इदं हि सत्पुरं वत्स निरन्तानन्दकारणम् ।
दुर्लभं भवचक्रे तु जन्तुभिः पुण्यवर्जितैः ॥

यतः ।

कालेन भूयसा लोकाः पर्यटन्तः कथंचन ।
आसादयन्ति कृच्छ्रेण पुरं सात्त्विकमानसम् ॥
स्थित्वा तत्र पुनर्यान्ति भवचक्रे निरन्तके ।
एनं वत्स न पश्यन्ति विवेकवरपर्वतम् ॥
भूरिभिर्विहितैस्तात ततस्तैर्थ्यं गमागमैः ।
कदाचित्तेऽत्र पश्येयुर्विवेकवरपर्वतम् ॥
नारोहन्ति च दृष्टेऽपि तथान्ये वत्स मन्दिरौ ।
प्रयान्ति च विदन्तोऽपि भवचक्रे खवैरिणः ॥
आरोहेयुः कदाचिच्च तत्रारूढाः सुदुर्लभम् ।
शिखरं ते न पश्येयुरिदं वत्सातिसुन्दरम् ॥
दृष्टेऽपि नानुतिष्ठन्ति तत्रारोहणमुच्चकैः ।
शैथिल्येनैव तिष्ठन्ति भवचक्रे सकौतुकाः ॥
यदा तु धन्याः शिखरमारोहन्ति मनोहरम् ।
इदं वत्स जना जैनं पश्यन्त्येव तदा पुरम् ॥
सा चैषा भवचक्रेऽत्र वर्तमानैः सुदुर्लभा ।
सामग्री जन्तुभिर्वत्स यास्य दर्शनकारिणी ॥
तेनेदं सततानन्दकारणं जैनसत्पुरम् ।

भवचक्रे मया तुभ्यं दुर्लभं प्रतिपादितम् ॥
इदं रत्नौघसंपूर्णमिदं सर्वसुखास्पदम् ।
इदमेव जगत्यत्र साराल्सारतरं मतम् ॥
तदिदं ते समासेन वर्णितं जैनसत्पुरम् ।
अधुना येऽत्र वास्तव्या लोकास्तानवधारय ॥
एते हि सततानन्दाः सर्वाबाधाविवर्जिताः ।
पुरप्रभावतो वत्स वर्तन्ते जैनसज्जनाः ॥
प्रस्थिता नगरीं सर्वे निर्वृतिं कृतनिश्चयाः ।
आरात्प्रयाणकैः किंचिद्वसन्ति विबुधालये ॥
वीर्यं वीक्ष्य भयोद्भ्रान्तैर्महामोहादिशत्रुभिः ।
एते जैना जना वत्स दूरतः परिवर्जिताः ॥

प्रकर्षेणोदितं । माम नैतदेवं । यतः

यथैव ते मया दृष्टा भवचक्रनिवासिनः ।
महामोहादिभिर्ग्रस्तास्तथैतेऽपि न संशयः ॥

तथाह्येतेष्वपि जैनलोकेषु दृश्यन्ते सर्वाणि तत्कार्याणि । यस्मादेतेऽपि मूर्छन्ति भगवद्बिम्बेषु रज्यन्ते स्वाध्यायकरणेषु स्निह्यन्ति साधर्मिकजनेषु प्रीयन्ते सदनुष्ठानेषु तुष्यन्ति गुरुदर्शनेषु हृष्यन्ति सद्योपलम्भेषु दिपन्ति व्रतातिचारकरणेषु क्रुध्यन्ति सामाचारीविलोपेषु रुष्यन्ति प्रवचनप्रत्यनीकेषु माद्यन्ति कर्मनिर्जरणेषु अहंकुर्वन्ति प्रतिज्ञातनिर्वाहणेषु अवष्टभ्नन्ति परीषहेषु स्मयन्ते दिव्याद्युपसर्गेषु गूहयन्ति प्रवचनमालिन्यं वञ्चयन्तीन्द्रियधूर्तगणं लुभ्यन्ति तपश्चरणेषु गृध्यन्ति वैयावृत्त्याचरणेषु अभ्युपपद्यन्ते सद्ध्यानयोगेषु

द्यन्ति परोपकारकरणेषु। निघ्नन्ति प्रमादचौरवृन्दं। बिभ्यति भवचक्रभ्रमणात्। जुगुप्सन्ते विमार्गचारितां। रमन्ते निर्वृतिनगरीगमनमार्गे। उपहसन्ति विषयसुखशीलतां। उद्विजन्ते शैथिल्याचरणात्। शोचन्ति चिरन्तनदुश्चरितानि। गर्हन्ते निजशीलस्खलितानि। निन्दन्ति भवचक्रनिवासं। आराधयन्ति जिनाज्ञायुवतिं। प्रतिसेवन्ते द्विविधशिक्षाललनां॥

तदेवं सर्वकार्याणि महामोहादिभूभुजाम्।
एतेषु माम दृश्यन्ते जैनेषु सुपरिस्फुटम्॥
तत्कथं भवता प्रोक्तमेवं सति ममाग्रतः।
यथैते दूरतस्त्यक्ता महामोहादिशत्रुभिः॥
विमर्शेनोदितं वत्स य एते भवतोदिताः।
महामोहादयस्तेऽन्ये वत्सला जैनबान्धवाः॥
एते हि द्विविधा वत्स महामोहादयो मताः।
एकेऽरयोऽत्र जन्तूनामपरेऽतुलबान्धवाः॥

यतः।

प्रथमा भवचक्रेऽत्र पातयन्ति सदा जनम्।
अप्रशस्ततया तेषां प्रकृतिः खलु तादृशी॥
इतरे निर्वृतिं लोकं नयन्ति निकटे स्थिताः।
प्रशस्तास्ते यतस्तेषां प्रकृतिः सापि तादृशी॥
तदेते शत्रुभिस्त्यक्ता बन्धुभिः परिवेष्टिताः।
महामोहादिभिर्वत्स मोदन्ते जैनसज्जनाः॥

एवं च।

अमी सकलकल्याणभाजिनो जैनसज्जनाः।
निवेदिता मया तुभ्यमधुना शृणु मण्डपम्॥
अयं चित्तसमाधानो मण्डपः सर्वदेहिनाम्।
संप्राप्तः कुरुते सौख्यमतुलं निजवीर्यतः॥
अस्यैव भूपतेर्नूनमास्थानार्थं विनिर्मितः।
वेधसा त्रिजगद्बन्धोरादरादेष मण्डपः॥
नास्त्येव भवचक्रेऽत्र सुखगन्धोऽपि सुन्दर।
यावच्चित्तसमाधानो नैष संप्राप्यते जनैः॥
तदेष लेशतो वत्स वर्णितो वरमण्डपः।
एषा निःस्पृहता नाम वेदिका ते निवेद्यते॥
ये लोका वेदिकां वत्स स्मरन्त्येनां पुनः पुनः।
तेषां शब्दादयो भोगाः प्रतिभान्ति विषोपमाः॥
न तेषु वर्तते चित्तं चीयते कर्मसञ्चयः।
जायन्ते निर्मलत्वेन भवचक्रपराङ्मुखाः॥
येषामेषा स्थिता चित्ते धन्यानां वत्स वेदिका।
नेन्द्रैर्न देवैर्नो भूपैर्नान्यैस्तेषां प्रयोजनम्॥
एषापि नूनमस्यैव निविष्टा वरभूपतेः।
आस्थानार्थं विधात्रेति वत्स सुन्दरवेदिका॥
इयं निःस्पृहता तात वर्णिता ते सुवेदिका।
जीववीर्यमिदं नाम साम्प्रतं शृणु विष्टरम्॥
जीववीर्यमिदं येषां परिस्फुरति मानसे।
सुखमेव परं तेषां दुःखानामुद्भवः कुतः॥

अयं हि राजा दीप्ताङ्गो दृश्यते यश्चतुर्मुखः ।
निविष्टोऽत्र जगद्बन्धुर्दृत्तास्थानो मनोरमः ॥
यः शुभ्रः परिवारोऽस्य यद्राज्यं या विभूतयः ।
यच्चातुलं महत्तेजो विष्टरं तत्र कारणम् ॥
किं वात्र बहुनोक्तेन पुरं लोका महागिरिः ।
शिखरं सत्पुरं लोका मण्डपो वरवेदिका ॥
राजायं सह सैन्येन राज्यं भुवनसुन्दरम् ।
जगज्ज्येष्ठमिदं सर्वं माहात्म्येनास्य नन्दति ॥

तथाहि ।

यद्येतन्न भवत्यत्र जीववीर्यं वरासनम् ।
महामोहादिभिः सर्वं तदिदं परिभूयते ॥
विद्यमाने पुनर्वत्स जीववीर्यवरासने ।
महामोहादयो नैव प्रविशन्त्यत्र मण्डपे ॥

अन्यच्च ।

क्वचित्तिरस्कृतं तात महामोहादिभिर्बलम् ।
इदमाविर्भवत्येव जीववीर्यप्रभावतः ॥
इदं सिंहासनं वत्स यावदत्र प्रकाशते ।
तावद्धि सर्वतोभद्रं राजा सैन्यं गिरिः पुरम् ॥
तदिदं वर्णितं वत्स जीववीर्यवरासनम् ।
परिवारयुतो राजा साम्प्रतं ते निवेद्यते ॥

प्रकर्षेण चिन्तितं । अये यान्येतानि प्रतिपादितान्यनेन मे वस्तूनि तेषामेव भावार्थो मम स्फुरति हृदये । यदुत ।

अकामनिर्जरापेचं जन्तुवीर्यं यदुत्कटम्।
मिथ्यादृष्टेर्विनाज्ञानं तद्धि सात्त्विकमानसम्॥
ये तेन संयुता लोका वास्तव्यास्ते प्रकीर्तिताः।
त एव तत्प्रभावेण प्रयान्ति विबुधालये॥
धनपुत्रकलत्रादेः शरीरात्कर्मणस्तथा।
अन्योऽहं भेदतो दृष्टा महामोहादिशत्रवः॥
अज्ञातजैनसिद्धान्ते कर्मनिर्जरणाञ्जने।
या स्यादेवंविधा बुद्धिः स विवेक इहेष्यते॥
विवेकादप्रमत्तत्वं कषायादिनिवर्तने।
यद्भवेल्लघुदोषाणां शिखरं तदुदाहृतम्॥
चतुर्वर्णमहासङ्घप्रमोदपरकारणम्।
द्वादशाङ्गं पुनर्जैनं वचनं पुरमुच्यते॥
वास्तव्यका जनास्तत्र ये तदादेशकारिणः।
त एव च चतुर्वर्णा यथोक्तगुणभूषणाः॥
एष एव च मारोऽत्र यथार्थो वरमण्डपः।

यतः।

विना चित्तसमाधानं पुरमेतन्न शोभते॥
वेदिका वामनं वेदं कथितं प्रकटाचरैः।
यथार्थमेव विज्ञेयमिदं द्वितयमञ्जसा॥
ततो येन मया सर्वमिदं भावार्थसंयुतम्।
बुद्धं सोऽहं नृपं सैन्यं भोक्ष्ये नास्यत्र संशयः॥

ततश्च।

बोधावष्टम्भतुष्टात्मा स प्राह निजमातुलम्।
माम वर्णय राजानं येनाहमवधारये॥
ततस्तन्मातुलेनोक्तं वत्स योऽयं नराधिपः।
लोके चारित्रधर्मोऽयं प्रसिद्धोऽत्यन्तसुन्दरः॥
अनन्तवीर्यो विख्यातः सगुणो जगते हितः।
सम्बुद्धः कोशदण्डाभ्यां ज्ञेयः सर्वगुणाकरः॥
यान्यस्य वत्स दृश्यन्ते चत्वारि वदनानि भोः।
तेषां नामानि ते वच्मि वीर्याणि च निबोध मे॥
दानं शीलं तपस्तात चतुर्थं शुद्धभावनम्।
एतानि ननु वक्त्राणां नामान्येषां यथाक्रमम्॥
तत्राद्यं दापयत्यत्र पात्रेभ्यो जैनसत्पुरे।
सज्ज्ञानं मोक्षज्ञानार्थमभयं जगतः प्रियम्॥

तथा।

सद्धर्माधारदेहानां यदुपग्रहकारणम्।
आहारवस्त्रपात्रादि दीयतामिति भाषते॥
दीनान्धकृपणेभ्यश्च दीयमानं कृपापरैः।
आहारादिकमेतद्धि वदनं न निषेधति॥
गवाश्वभूमिहेमानि यच्चान्यदपि तादृशम्।
तन्नेच्छति गुणाभावाद्दीयमानमिदं मुखम्॥

अन्यच।

सदाशयकरं बाह्यमाधश्छेदकारकम्।
इदं जगति लोकानामनुकम्पाप्रवर्तकम्॥

दानाख्यं तदिदं भद्र वर्णितं प्रथमं मुखम्।
भूपतेरस्य शीलाख्यं द्वितीयमधुना शृणु॥
य एते साधवो वत्स वर्त्तन्ते जैनसत्पुरे।
यदिदं भाषते वक्त्रं तत्ते सर्वं प्रकुर्वते॥
अष्टादशसहस्राणि नियमानां नरोत्तमाः।
अस्यादेशेन कुर्वन्ति सदैते वत्स साधवः॥
इदमेव हि सर्वस्वमिदमेव विभूषणम्।
इदमालम्बनं वत्स साधूनां शीलमुत्तमम्॥
तेभ्यः संपूर्णमादेशं मुखमेतत्प्रयच्छति।
किंचिन्मात्रं प्रकुर्वन्ति वचोऽस्य मुनिशेषकाः॥
शीलाख्यं वदनं वत्स तदिदं वर्णितं मया।
तृतीयं तु तपोनाम वदनं तन्निबोध मे॥
चारित्रधर्मराजस्य वक्त्रमेतन्मनोहरम्।
आकाङ्क्षार्त्तिविनाशेन जनेऽत्र कुरुते सुखम्॥
विशिष्टज्ञानसंवेगशमसातकरं परम्।
तपःसंज्ञमिदं वक्त्रमव्याबाधसुखावहम्॥
इदमस्य नरेन्द्रस्य वदनं वीक्ष्य सज्जनाः।
आराध्य च महासत्त्वा निर्वृतिं यान्ति लीलया॥
तदिदं ते तपोनाम भूपतेर्वदनं मया।
कथितं साम्प्रतं वक्ष्ये चतुर्थं शुद्धभावनम्॥
यत्तं निरीक्षितं भक्त्या सज्जनैरिदमञ्जसा।
निःशेषपापसङ्घातदलनं कुरुते सुखम्॥

अथादेशादिमे जैना भावयन्तीह सज्जनाः ।
समस्तवस्तुविस्तारमतितुच्छं विनश्वरम् ॥
नास्तीह शरणं लोके दुःखपीडितदेहिनाम् ।
एकश्च जायते जन्तुर्म्रियते च भवोदधौ ॥
यदिदं देहिनां किंचिच्चित्तावन्धविधायकम् ।
शरीरं धनमन्यद्वा सर्वं तद्भिन्नमात्मनः ॥
मूत्रान्त्रक्लेदजाम्बालपूरितं च कलेवरम् ।
तद्द्वात्यन्तवीभत्से शुचिगन्धो न विद्यते ॥
माता भूत्वा पुनर्भार्या भवत्यत्र भवोदधौ ।
कर्मास्रवो भवत्येव पापानुष्ठानकारिणाम् ॥
निवृत्तानां कदाचाराज्जायते वरसंवरः ।
तपसा तु भवत्येव सततं कर्मनिर्जरा ॥
मृता जाताश्च सर्वेषु लोकोद्देशेषु जन्तवः ।
भक्षितानि च सर्वेषु रूपिद्रव्याणि जन्तुना ॥
संसारसागरोत्तारकारकश्च जिनोदितः ।
धर्मः सुदुर्लभा चात्र बोधिः सर्वज्ञदर्शने ॥
ये चैवं भावयन्त्यत्र शुद्धाः संशुद्धबुद्धयः ।
आदेशं वदनस्यास्य ते धन्यास्ते मनस्विनः ॥
चारित्रधर्मराजस्य वदनं चारुदर्शनम् ।
इदं वत्स प्रकृत्यैव सर्वसौख्यकरं परम् ॥
तदेष वदनेनैतं चतुर्भिः पुरवासिनाम् ।
एषां निःशेषसौख्यानि करोत्येव महानृपः ॥

किं च ।

सर्वेषामेव सुखदो भुवनोदरचारिणाम् ।
वत्स चारित्रधर्मोऽयमस्तं कस्य दुःखदम् ॥
तथापि पापिनः सत्त्वा भवचक्रनिवासिनः ।
एके नैनं विजानन्ति निन्दन्त्यन्ये विपुण्यकाः ॥
तदेष ते महाराजश्चतुर्वदनसुन्दरः ।
वर्णितः साम्प्रतं वच्मि परिवारमथाधुना ॥
येषा विलोक्यते वत्स शुद्धस्फटिकनिर्मला ।
अर्धासने निविष्टास्य नारी सर्वाङ्गसुन्दरी ॥
इयं हि विरतिर्नाम भार्यास्य वरभूपतेः ।
समानगुणवीर्या च भूभुजानेन वर्तते ॥

तथा हि ।

आल्हादजननी लोके निर्वृतेर्मार्गदेशिका ।
गता तादात्म्यमेतेन न भिन्नेयं प्रतीयते ॥
य एते पञ्च दृश्यन्ते राजानोऽभ्यर्णवर्तिनः ।
एतस्यैव नरेन्द्रस्य स्वाङ्गभूता वयस्यकाः ॥

तत्र च ।

आद्यः सामयिकाख्योऽयं भूपतिर्जैनसत्पुरे ।
निःशेषपापविरतिं वत्स कारयते सदा ॥
छेदोपस्थापनो नाम द्वितीयो वत्स भूपतिः ।
पापानुष्ठानसङ्घातं विशेषेण निषेधति ॥
परिहारविशुद्धीयस्तृतीयस्तु नरेश्वरः ।

सधूनां दर्शयत्युग्रं तपोऽष्टादशमासिकम् ॥
यस्त्वेष दृश्यते वत्स चतुर्थो वरभूपतिः ।
स सूक्ष्मसंपरायाख्यः सूक्ष्मपापाणुनाशकः ॥
अत्यन्तनिर्मलो वत्स निर्धूताशेषकल्मषः ।
एष सारो यथाख्यातः पञ्चमो वरभूपतिः ॥
शरीरं जीवितं प्राणाः सर्वस्वं तत्त्वमुत्तमम् ।
चारित्रधर्मराजस्य पञ्चाप्येते वयस्यकाः ॥
यस्त्वेष निकटे वत्स दृश्यते मूलभूपतेः ।
सोऽस्यैव यतिधर्माख्यः सुतो राज्यधरः परः ॥
बहिर्विलोकिता भद्र ये त्वया मुनिपुङ्गवाः ।
अत्यन्तवल्लभस्तेषामेष राजसुतः सदा ॥
येनैष दशभिर्वत्स परिवारितविग्रहः ।
मानुषाणि प्रकुर्वन्ति तानि यत्तन्निबोध मे ॥
योषिदाद्या क्षमा नाम मुनीनामपि वल्लभा ।
तेषामुपदिशत्येषा सदा रोषनिवारणम् ॥
डिम्भरूपमिदं तात द्वितीयमिह मार्दवम् ।
करोति निजवीर्येण साधूनामतिनम्रताम् ॥
तृतीयमार्जवं नाम डिम्भरूपमिदं सदा ।
सर्वत्र सरलं भावं विधत्ते वत्स सद्क्रियाम् ॥
एषा तु मुक्तता तात चतुर्थी बालना सदा ।
निःसङ्गं बहिरन्तश्च मुनीनां कुरुते मनः ॥
तपोयोग इति ख्यातः संशुद्धः पञ्चमो नरः ।

युक्तो द्वादशभिर्वत्स ख्याङ्गिकैर्वरमानुषैः ॥
एतेषां च प्रभावेण मानुषाणां नरोत्तमः ।
यदेष कुरुते जैने पुरे तत्ते निवेदये ॥
सर्वाहारपरित्यागान्निःस्पृहं कुरुते जनम् ।
वीर्यं च वर्धयत्येष कारयन्नूनभोजनम् ॥
अस्यादेशेन कुर्वन्ति नानाभिग्रहसुन्दरम् ।
मुनयो वृत्तिसङ्क्षेपं शमसातविवर्धनम् ॥

तथा ।

रसभोगं न कुर्वन्ति मोहोद्रेकादिकारणम् ।
अस्यादेशान्निषेवन्ते कायक्लेशं सुखावहम् ॥
कषायेन्द्रिययोगेषु संलीनास्तात साधवः ।
विविक्तचर्यया नित्यमासते तेन चोदिताः ॥
प्रायश्चित्तं च दशधा विनयं च चतुर्विधम् ।
वैयावृत्यं च कुर्वन्ति दशधैवास्य वीर्यतः ॥
पञ्चप्रकारं स्वाध्यायं द्वेधा ध्यानं च सत्तमम् ।
सततं कारयत्येष मुनिलोकं नरोत्तमः ॥
गणोपधिशरीराणामाहारस्य च निःस्पृहाः ।
प्राप्ते काले प्रकुर्वन्ति त्यागमेतेन चोदिताः ॥
निशोद्देशादिदं वत्स तपोयोगविचेष्टितम् ।
वर्णितं विस्तरेणास्य वर्णने नास्ति निष्ठितिः ॥
यत्त्वयं दृश्यते वत्स पष्ठोऽमीषां मनोरमः ।
वदभो मुनिलोकस्य संयमाख्यो नरोत्तमः ॥

स भवद्भिर्नियुक्तो मानुषैर्जिनमत्पुरे ।
यथा विजृम्भते तात तत्ते सर्वं निवेदये ॥
पापास्रवपिधानेन शान्तबोधनिराकुलम् ।
पञ्चेन्द्रियविरोधेन संतुष्टं विगतस्पृहम् ॥
कषायतापप्रशमाच्चित्तनिर्वाणबन्धुरम् ।
मनोवाक्कायनियोगानां नियमेन मनोहरम् ॥
सततं धारयत्येष मुनिलोकं नरोत्तमः ।
संयमाख्यः स्ववीर्येण निमग्नं धृतिसागरे ॥

अथवा ।

इलाजलानलगतामनिलाखिलशाखिनाम् ।
हिंसां द्वित्रिचतुष्पञ्चहृषीकाणां निषेधति ॥
अचित्तमपि यद्वस्तु हिंसाकरमसुन्दरम् ।
ग्रहणं तस्य यत्नेन वारयत्येष संयमः ॥
प्रेक्षणं स्थण्डिलादीनां गृहस्थानामुपेक्षणम् ।
स्थानादिकरणं सम्यक् तद्भूमीनां प्रमार्जनम् ॥
आहारोपधिशय्यानामशुद्धाधिकभावतः ।
परिष्ठापनमन्यत्र मनोवाक्काययन्त्रणम् ॥
विमुक्तभवकर्तव्यैः सततं सुसमाहितैः ।
मुनिभिः कारयत्येष सर्वमेतन्नरोत्तमः ॥
तदिदं लेशतो वत्स चरितं परिकीर्तितम् ।
नरस्य संयमाख्यस्य शेषाणां शृणु सांप्रतम् ॥
य एष सप्तमो वत्स दृश्यते पुरुषोत्तमः ।

यतिधर्मपरीवारे सत्यनामातिसुन्दरः ॥
हितं मिताचरं काले जगदाह्लादकारणम् ।
अस्यादेशेन भाषन्ते वचनं मुनिपुङ्गवाः ॥
शौचाभिधानो यो वत्स वर्तते चाष्टमो नरः ।
द्रव्यभावात्मिकां शुद्धिमस्यादेशेन कुर्वते ॥
यदिदं नवमं तात डिम्भरूपं मनोहरम् ।
आकिञ्चन्यमिदं नाम मुनीनामतिवल्लभम् ॥
अवाप्तसौष्ठवं वत्स बाह्यान्तरपरिग्रहम् ।
मुनिभिर्मोचयत्येतच्छुद्धस्फटिकनिर्मलम् ॥
इदं तु दशमं तात गर्भरूपं मनोहरम् ।
ब्रह्मचर्यमिति ख्यातं मुनीनां हृदयप्रियम् ॥
दिव्यौदारिकसम्बन्धं मनोवाक्काययोगतः ।
अब्रह्म वारयत्येतत्तत्कारणमोदनैः ॥
तदेष दशभिर्वत्स मानुषैः परिवारितः ।
पुरेऽत्र विलसत्येवं यतिधर्मः स्वलीलया ॥
एषा च विलसत्यत्र बालिकामललोचना ।
सद्भावसारता नाम भार्यास्य मुनिवल्लभा ॥
अस्यां जीवति जीवन्त्यां मरणेऽस्या न जीवति ।
अत्यर्थरतचित्तोऽस्यां राजसूनुरयं सदा ॥
किं चेह बहुनोक्तेन दाम्पत्यमिदमीदृशम् ।
निर्मिथ्यस्नेहगर्भार्थं न दृष्टं क्वचिन्मया ॥
यः पुनर्दृश्यते तात द्वितीयोऽयं कुमारकः ।

गृहिधर्माभिधानोऽसौ कनिष्ठोऽस्य सहोदरः ॥
यदेष कुरुते वत्स युक्तो द्वादशमानुषैः ।
जैनेन्द्रसत्पुरे चित्तं लब्धमुद्रामलीलया ॥
तदहं वर्णयिष्यामि पुरतस्ते वरेक्षण ।
चेतः समाहितं कृत्वा तच्च वत्सावधारय ॥
अत्यन्तस्थूलवत्सायाः क्वचिद्विरतिसुन्दरम् ।
स्थूलालीकनिवृत्तं च करोत्येष पुरे जनम् ॥
स्थूलस्तेयनिवृत्तं च परदारपराङ्मुखम् ।
क्वचित्संचिप्रमानं च सकलेऽपि परिग्रहे ।
परित्यक्तनिशाभक्तं कृतमानं च संवरे ।
युक्तोपभोगसम्भोगं कर्मानुष्ठानकारकम् ॥
अनर्थदण्डविरतं सामायिकरतं सदा ।
देशावकाशिके सक्तं पौषधे कृतनिश्चयम् ॥
अतिथेः संविभागेन परिपूतमनोमलम् ।
करोत्येष जनं वत्स गृहिधर्मोऽत्र सत्पुरे ॥

किं च ।

यो यावन्तं करोत्यत्र निर्देशं शक्तितो जनः ।
तस्य तावत्करोत्येष फलं नास्त्यत्र संशयः ॥
या त्वेषा बालिका वत्स विस्फारितवरेक्षणा ।
दृश्यतेऽस्यैव भार्येयं सात्वा सद्गुणरक्तता ॥
वत्सला सुनिर्लोकस्य शुक्रणी विनयोद्यता ।
भर्तरि स्नेहबद्धेयं वत्स सद्गुणरक्तता ॥

तदेतौ जैनलोकानां राजपुत्रौ सभार्यकौ ।
विज्ञातव्यौ प्रकृत्यैव सततानन्दकारकौ ॥
अनयोश्च सदा पित्रा विहितः परिपालकः ।
अयं महत्तमो वत्स सम्यग्दर्शननामकः ॥
अनेन रहितावेतौ दृश्येते न कदाचन ।
एतौ हि वर्धयत्येष निकटस्थोऽतिवत्सलः ॥

अन्यच्च ।

यानि ते कथितान्यत्र सप्त तत्त्वानि सत्पुरे ।
दृढनिश्चयमेतेषु भवचक्रे पराङ्मुखम् ॥
शमसंवेगनिर्वेदकृपास्तिक्यविराजितम् ।
मैत्रीप्रमोदकारुण्यमाध्यस्थ्यैर्भावितात्मकम् ॥
सदा प्रयाणकारूढं निर्वृतौ गमनेच्छया ।
करोत्येष जनं वत्स सम्यग्दर्शननामकः ॥
या लेषा दृश्यते वत्स शुभवर्णा मनोहरा ।
इयमस्यैव सद्भार्या सुदृष्टिर्नाम विश्रुता ॥
इयं हि जैनलोकानां सन्मार्गे वीर्यशालिनी ।
चित्तस्थैर्यकरी ज्ञेया विधिना पर्युपासिता ॥

एवं च स्थिते ।

योऽसौ निवेदितस्तुभ्यं कुदृष्टिसहितः पुरा ।
विचित्रचरितस्तात महामोहमहत्तमः ॥
तदाचारविरुद्धं हि सर्वमस्य विचेष्टितम् ।
विज्ञेयं जगदानन्दं सुविचारितसुन्दरम् ॥

स तन्त्रयति यत्नेन महामोहबलं सदा।
चारित्रधर्मराजस्य बलमेव महत्तमः॥
सम्यग्दर्शनसंज्ञस्य तस्मादत्र व्यवस्थितः।
स एव शत्रुः परमो मिथ्यादर्शननामकः॥

एवं च स्थिते।

चिद्रूपस्य भवत्येव किंचिदासाद्य कारणम्।
क्षयेण प्रतिपक्षस्य प्रशमेनोभयेन वा॥
तत्र रूपत्रयं वत्स जायेतास्य स्वभावतः।
यदा संपादयेदेष मन्त्री सद्बोधनामकः॥
अयं हि सचिवो वत्स सद्बोधो भुवनोदरे।
तन्नास्ति यन्न जानीते पुरुषार्थप्रसाधकम्॥
भवद्भूतभविष्यत्सु भावेषु भवभाविषु।
विज्ञातुं प्रभवत्येष सूक्ष्मव्यवहितेषु च॥
किं चात्र बहुनोक्तेन जगदेष चराचरम्।
अनन्तद्रव्यपर्यायं वीक्षते विमलेक्षणः॥
निपुणो नीतिमार्गेषु वत्सलश्च महीपतेः।
चिन्तको राज्यकार्याणां बले च विहितादरः॥
प्रियो महत्तमस्योच्चैस्तस्य च स्थिरताकरः।
सकलेऽपि जगत्यत्र सचिवो नास्त्यमदृशः॥

किं च।

ज्ञानसंवरणस्यायं प्रतिपक्षतया स्थितः।
क्षयोपशमतश्चास्य क्षयाच्च द्विविधो मतः॥

इयं तु निकटे वत्स निर्मलाङ्गी सुलोचना।
भल्लिणोऽवगतिर्नाम भार्यास्यैव वरानना॥
स्वरूपं जीवितं प्राणाः सर्वस्वं वर्ततेऽनघा।
इयमस्य सदा पत्नी शरीराव्यतिरेकिणी॥

तथा।

य एते पञ्च दृश्यन्ते त इमे पुरुषोत्तमाः।
अस्यैव तु सद्बोधस्य स्वाङ्गीभूता वयस्यकाः॥
आद्योऽत्राभिनिबोधोऽयं वयस्यः पुरवासिनाम्।
इन्द्रियानिन्द्रियज्ञानं जनानां जनयत्यलम्॥
द्वितीयः पुरुषो भद्र प्रसिद्धोऽयं सदागमः।
यस्यादेशे स्थितं सर्वं पुरमेतन्न संशयः॥
कार्याणि मन्त्रयत्येष निखिलान्यपि भूभुजाम्।
वचःपाटवयुक्तोऽयं मूकाः शेषा मनुष्यकाः॥
यतः सदागमस्यास्य दृष्ट्वा वचनकौशलम्।
सद्बोधोऽनेन भूपेन मन्त्रिले स्थापितः पुरा॥
अयं सदागमोऽमीषां सर्वेषां वत्स भूभुजाम्।
बहिश्च जैनलोकानां श्रेयः परमकारणम्॥
अनेन रहितं वत्स न कदाचिदिदं बलम्।
पुरं चेदं जगच्चैव स्वरूपेण प्रकाशते॥
तदेष सर्वकार्याणामुपदेष्टा सदागमः।
द्वितीयः पुरुषो वत्स प्रधानोऽनेन हेतुना॥
तृतीयोऽवधिनामायं सद्बोधस्य वयस्यकः।

अनेकरूपविस्तारकारकोऽयमुदाहृतः ॥
क्वचिद्दीर्घं क्वचिद्ध्रस्वं क्वचित् स्तोकं क्वचिद्बहु ।
वस्तुजातं भगत्यच विलोकयति धीस्तथा ॥
चतुर्थः पुरुषो वत्स मनःपर्यायनामकः ।
साक्षात्करोति वीर्येण परेषां यन्मनोगतम् ॥
मनुष्यलोके नास्त्यत्र चित्तं तत्तात किंचन ।
अनेन यन्न दृश्येत धीमता भाववेदिना ॥
पञ्चमः पुरुषो वत्स केवलो नाम विश्रुतः ।
निःशेषज्ञेयविस्तारमेष पश्यति सर्वदा ॥
निर्वृतिं नगरीं यान्ति ये जना जैनसत्पुरात् ।
तेषामेष प्रकृत्यैव नायकः पुरुषोत्तमः ॥
तदेष पञ्चभिर्वत्स वयस्यैः परिवारितः ।
सद्बोधसचिवो लोके साक्षादिव दिवाकरः ॥
प्रकर्षेणोदितं माम स सन्तोषमहीपतिः ।
न दर्शितस्त्वयाद्यापि यच मेऽत्यन्तकौतुकम् ॥
ततस्तन्मातुलेनोक्तं वत्स योऽयं पुरः स्थितः ।
संयमस्य स विज्ञेयः सन्तोषो नात्र संशयः ॥

प्रकर्षेणोक्तम् ।

यस्योपरि समायाता महामोहादिभूभुजः ।
विवेकेन स सन्तोषो नैष किं मूलनायकः ॥
विमर्शेनोदितं वत्स नैवायं मूलनायकः ।
चारित्रधर्मराजस्य पदातिरिति गद्यताम् ॥

शूरो नीतिपरो दृप्तः सन्धिविग्रहवेदकः ।
तेनैष तन्त्रपालत्वे नियुक्तो मूलभूभुजा ॥
संपूर्णबलसामग्र्या भ्रमतोद्दामलीलया ।
अनेन स्पर्शनादीनि तानि दृष्टानि कुत्रचित् ॥
ततोऽभिभूय तान्येष स्वमाहात्म्येन निर्दती ।
नयति स्म जनं कंचिद्दलेनैषां महीभुजाम् ॥
ततो विज्ञाय वृत्तान्तमेनं ते जनवार्तया ।
महामोहादिभूपालाश्चलिता रणकाम्यया ॥
ततस्तैः स्वधिया वत्स कल्पितो मूलनायकः ।
पदातिरपि सन्तोषस्तेदं हन्त कारणम् ॥
तावन्मात्रं जनो वेत्ति यावन्मात्रं किलेक्ष्यते ।
यतः शितोदरोऽपीह कृष्णः सर्पोऽभिधीयते ॥
अनेन स्पर्शनादीनि निहतानीति वार्तया ।
अस्योपरि यथा रोषस्तेषां शेषेषु नो तथा ॥
सन्तोषमुररीकृत्य ततो विग्रहवाञ्छया ।
महामोहादयो वत्स स्वपुरेभ्यो विनिर्गताः ॥
चित्तवृत्तिमहाटव्यां रणमेषामनेकधा ।
संजातं न च संजातौ स्फुटौ जयपराजयौ ॥

यतः ।

क्वचिज्जयति सन्तोषस्तन्त्रपालोऽरिसंहतिम् ।
प्रभवन्ति क्वचित्तेऽपि महामोहादिभूभुजः ॥

एवं च स्थिते ।

सदा सैन्यद्वयस्यास्य स्यान्योन्यं जिगीषतः ।
काले गच्छति पश्चाच्च न जाने किं भविष्यति ॥
स एष दर्शितस्तुभ्यं मया सन्तोषतन्त्रपः ।
आख्यातश्चास्य वृत्तान्तो यत्र तेऽत्यन्तकौतुकम् ॥
या तस्य पार्श्वे पश्चाची दृश्यते वत्स बालिका ।
सा निष्पिपासिता नाम भार्यास्यैव वरानना ॥
शब्दरूपरसस्पर्शगन्धेषु सुधियां मनः ।
निस्तृष्णकं करोत्येषा रागद्वेषविवर्जितम् ॥
लाभालाभे सुखे दुःखे सुन्दरेऽसुन्दरेऽपि च ।
तथाहारादिके जाते सन्तुष्टिं जनयत्यलम् ॥
तदेवं वत्स बुध्यस्व निर्विकल्पेन चेतसा ।
चारित्रधर्मराजोऽत्र नायकः परमार्थतः ॥

अस्य च

यतिधर्मः सुतो ज्यायान् गृहिधर्मः कनिष्ठकः ।
मन्त्री सद्बोधनामायं निविष्टो राज्यचिन्तकः ॥
महत्तमस्तु विज्ञेयः सम्यग्दर्शननामकः ।
सन्तोषस्तन्त्रपालोऽयमेवं वत्सावधारय ॥
महामोहादयः सर्वे यथा भुवनतापकाः ।
तथैते वत्स विज्ञेया भुवनाह्लादकारिणः ॥
एते हि जगदालम्बा एते हितविधायकाः ।
एते समस्तजन्तूनां पारमार्थिकबान्धवाः ॥
एते निरन्तसंसारसागरोत्तारकारकाः ।

अनन्ताल्हादसन्दोहदायका जगतो मताः ॥
चारित्रधर्मराजाद्याः सर्वेऽप्येते नरेश्वराः ।
सुखहेतव एवात्र सर्वेषामपि देहिनाम् ॥
तदेते खाङ्गिकास्तात तावदित्थं मयाखिलाः ।
चारित्रधर्मराजस्य बान्धवास्ते निवेदिताः ॥
ये त्वमी वेदिकाभ्यर्णे वर्तन्ते मण्डपस्थिताः ।
शुभाशयादयस्तात तेऽप्यस्यैव पदातयः ॥
अस्यादेशेन कुर्वन्ति सुन्दराणि सदा जने ।
एते कार्याणि भूपाला निर्मिथ्यमस्तोपमाः ॥

किं च ।

मनुष्या योषितो डिम्भा ये लोकसुखहेतवः ।
विवर्तन्ते समस्तास्ते मध्येऽमीषां महीभुजाम् ॥

ततश्च ।

असंख्यातजनं वत्स पूरितं भूरिभूमिपैः ।
निःशेषमिदमास्थानं को हि वर्णयितुं क्षमः ॥
ततो मयेदं ते वत्स समासेन निवेदितम् ।
गच्छावः साम्प्रतं द्वारे यदि पूर्णं कुतूहलम् ॥
एवं भवतु तेनोक्ते विनिर्गत्य विलोकितम् ।
चतुरङ्गं बलं ताभ्यां तदीयं तच्च कीदृशम् ॥
गाम्भीर्यौदार्यशौर्यादिनामभिः स्यन्दनैः सदा ।
प्रेङ्खद्घण्टणाराबपूरिताशेषदिक्पथम् ॥
यशःसौष्ठवसौजन्यप्रश्रयादिमहागजैः ।

विलसत्कण्ठनिर्घोषसंरुद्धभुवनोदरम् ॥
बुद्धिपाटववाग्मित्वनैपुण्यादितुरङ्गमैः।
महाहेषारवापूर्णसत्प्रजाकर्णकोटरम् ॥
अचापलमनस्खित्वदाक्षिण्यादिपदातिभिः।
अलब्धगाधविस्तीर्णस्तिमितोदधिविभ्रमम् ॥
ततश्चैवंविधं वीक्ष्य चतुरङ्गं महाबलम्।
प्रकर्षश्चेतसा तुष्टः प्रोवाच निजमातुलम् ॥
यथेष्टमधुना माम पूरितं मे कुतूहलम्।
यदत्र किंचिद्द्रष्टव्यं तत्सर्वं दर्शितं त्वया ॥

तथाहि।

दर्शितं भवचक्रं मे नानावृत्तान्तसङ्कुलम्।
महामोहादिवीर्यं च कारणैरपरापरैः ॥
विवेकपर्वतश्चायं दर्शितो मे मनोहरः।
निवेदितं च सल्लोकैः पूर्णं सात्त्विकमानसम् ॥
शिखरं चाप्रमत्तत्वं जैनं चेदं माहपुरम्।
युक्तं महात्मभिर्लोकैर्दर्शितं मम सुन्दरम् ॥
तथा चित्तसमाधानो मण्डपो वेदिका च मे।
त्वया निःस्पृहताख्याता जीववीर्यं च विष्टरम् ॥
वर्णितश्च महाराजः साक्षात्कारणपूर्वकम्।
प्रत्येकं वर्णिताः सर्वे भूपालास्तस्य सेवकाः ॥
इदं च दर्शितं रम्यं चतुरङ्गं महाबलम्।
एवं च कुर्वता माम नास्ति तद्यन्न मे कृतम् ॥

जनितः पूतपापोऽहं कृतो दृढदनुग्रहः ।
कृपापरीतचित्तेन पूरिता मे मनोरथाः ॥
तथापि रमणीयेऽत्र वस्तुमिच्छामि साम्प्रतम् ।
दिनानि कतिचिन्माम लीलया जैनसत्पुरे ॥

किं च ।

यथा यथात्र तिष्ठामि सद्विचारपरायणः ।
पुरे तथा तथा प्राज्ञो जायेऽहं त्वत्प्रभावतः ॥
अहं च परमां काष्ठां नेयो मामेन सर्वथा ।
अतो जैनपुरे तावदत्र त्वं वस्तुमर्हसि ॥
ततस्तन्मातुलेनोक्तं या तवेच्छा प्रवर्तते ।
तामेव त्वत्सुखाकाङ्क्षी किं भनक्ति वशो जनः ॥
महाप्रसाद इत्युक्त्वा ततस्तत्रैव सत्पुरे ।
स्थितो मासद्वयं यावत्स प्रकर्षः समातुलः ॥
इतश्च मानवावासे वसन्तो लङ्घितस्तदा ।
आदेशेन महादेव्याः प्राप्तो ग्रीष्मः सुदारुणः ॥

यत्र ग्रीष्मे ।

जगत्कोष्ठकमध्यस्थो लोहगोलकसन्निभः ।
ध्मायते चण्डवातेन जगद्दाहकरो रविः ॥

जायते पत्रशाटस्तृष्णामलं हीयते देहिनां यत्र देहे बलम् ।
पीयते प्राणिभिर्भूरिधाराजलं शुष्यते चारुसेयां द्रुयात्यर्गलम् ॥
दह्यते तीव्रतापेन सर्वो जनः खिद्यते खेदनिर्वेदितं तन्मनः ।
वान्ति वाताः सतप्ता जगत्तापिनः शुष्कपत्रावलीमर्मरारराविणः ॥

अपि च ।

भानोरिव प्रतापेन संतुष्टं वर्धितं दिनम् ।
स्वामिनोऽभ्युदये सर्वः सन्तोषादभिवर्धते ॥

यत्र च विदलिता मल्लिकाः । विकसिता जात्यपाटलाः । श्यामलितं कुसुमभरेण शिरीषवनं । सुभगीभूताश्चन्द्रकिरणाः । हृदयदयिता जलाशयाः । मनोभिरुचिता मौक्तिकहारयष्टयः । अतिवल्लभानि विमलहर्म्यतलानि । प्रियतमानि चन्दनविलेपनानि । अमृतायन्ते तालवृन्तव्यजनकानि । सुखायन्ते शिशिरकिसलयकुसुमस्रस्तराः । लगन्ति बहिःशरीरनिहिता अपि जनानामन्तर्मानसे चन्दनजलार्द्रा इति ।

ततश्चैवंविधे काले भागिनेयमभाषत ।
गच्छावः साम्प्रतं वत्स स्वस्थानमिति मातुलः ॥
प्रकर्षः प्राह गमने दारुणोऽवसरोऽधुना ।
तन्नाहं माम शक्नोमि गन्तुमेवंविधेऽध्वनि ॥
ततो मासद्वयं तिष्ठ माम सन्तापदारुणम् ।
येनाहं शीतलीभूते दिक्चक्रे यामि सत्वरम् ॥

किंच ।

विचारपरयोः स्थानमावयोर्गुणकारणम् ।
अत्र जैनपुरे माम मा मंस्था निष्प्रयोजनम् ॥

यतः ।

मम स्थैर्यं भवेदेवं पुरस्यास्य गुणोत्करे ।
ततस्तातोऽपि जायेत मद्गुणाद्दच बद्धधीः ॥

एवं भवतु तेनोक्ते ततस्तत्रैव सत्पुरे।
तिष्ठतोः प्रावृडायाता तयोः सा हन्त कीदृशी॥

घनतुङ्गपयोधरभारधरा लसदुज्ज्वलविद्युदलङ्करणा।
कृतसन्ततगर्जितधीररवा दृढगोपितभास्करजाररता॥
रटदुद्भटदर्दुरखिन्ननरा चलशुभ्रवलाहकहासपरा।
गिरिकोटरनृत्तशिखण्डिवरा बहुलोकमनोहररूपधरा॥
सुसुगन्धिकदम्बपरागवहा विटकोटिविदारणमोदसहा।
इति रूपविलाससलसत्कपटा भुवनेऽत्र रराज यथा कुलटा॥

अथ तां तादृशीं वीक्ष्य प्रावृषं हृष्टमानसः।
प्रकर्षो गमनोद्युक्तः प्रोवाच निजमातुलम्॥
गम्यतामधुना माम त्वरितं तातसन्निधौ।
यतोऽसौ शीतलीभूता वर्तन्ते सुगमाः पथाः॥
विमर्शेनोदितं वत्स मैवं वोचः कदाचन।
यतोऽधुना व्यवच्छिन्नौ विशेषेण गमागमौ॥

तथाहि।

सुच्छन्नघटहमध्यस्थाः स्वाधीनदयितानना:।
वर्षासु धन्या गण्यन्ते जनैर्ये न प्रवासिनः॥

तथाहि। पश्यतु वत्सः।

जलपूरितमार्गेषु पङ्कक्लिन्नेषु गच्छतः।
स्खलिता पतितानेते हसन्ति कुटजोत्कराः॥
निपतद्वारिधारौघहता ये यान्ति पापिनः।
देशान्तरेषु तान्मेघो मारयामीति गर्जति॥

एवं व्यवस्थिते तात मुच्यतां गमनादरः ।
यथेयन्तं स्थितः कालं तिष्ठात्रैव तथाधुना ॥

किं च ।

गच्छन्नत्र वक्रः कालो न दोषाय गुणावहः ।
यतः सोऽनुचरणं वत्स जायते तव वृद्धये ॥
एवं भवतु तेनोक्ते पुनर्मासचतुष्टयम् ।
स्थिता समागतौ गेहे हृष्टौ स्वस्त्रीयमातुलौ ॥
अथ प्रविष्टौ तौ गेहे दृत्तास्थाने शुभोदये ।
भार्यायुक्ते च तत्रैव निकटस्थे विचक्षणे ॥
ततो विधाय सद्भक्त्या प्रणामं विहिताञ्जली ।
तेषां पुरो निविष्टौ तौ विनयाच्छुद्धभूतले ॥
दत्तादुत्थाप्य बुद्ध्यासौ विमर्शः स्निग्धचेतसा ।
आलिङ्गितः प्रयत्नेन तद्भर्त्रा च पुनः पुनः ॥
प्रकर्षोऽपि समालिङ्ग्य स्नेहनिर्भरमानसैः ।
निजाङ्के स्थापितः सर्वैः परिपाट्यातिवल्लभः ॥
आघ्रातो मूर्धदेशे च कुशलं च मुहुर्मुहुः ।
आनन्दोदकपूर्णाक्षैः पृष्टः सर्वैः समातुलः ॥
ततो यथा विनिर्गत्य गेहाद्वाह्येषु हिण्डितौ ।
ततोऽन्तरङ्गदेशेषु यथा पर्यटितौ पुनः ॥
यथा पुरद्वयं दृष्टं यथा दृष्टा महाटवी ।
विलोकितं यथा स्थानं महामोहादिभूभुजाम् ॥
रसनामूलशुद्धिश्च यथा सम्यग्विनिश्चिता ।

यथेयं वर्तते पुरी रागकेसरिसन्निभः ॥
कुतूहलवशेनैव भवचक्रं यथा गतौ।
निरीक्षितं च तत्सर्वं नानावृत्तान्तसङ्कुलम् ॥
यथा दृष्टा महात्मानो विवेकवरपर्वते।
चारित्रधर्मराजस्य यथा स्थानं विलोकितम् ॥
यथा दृष्टः स सन्तोषो यच्च तेन विचेष्टितम्।
यच्च कारणमुद्दिश्य भूरिकालोऽतिवाहितः॥
तदिदं तेन निःशेषं विमर्शेन परिस्फुटम्।
पुरो विचक्षणादीनां विस्तरेण निवेदितम् ॥
इतश्च मांसमद्यार्थैर्लालयंस्तामसौ जडः।
रसनां लोलतावाक्यैर्न चेतयति किंचन॥
स तस्या लालने सक्तः कुर्वाणः कर्म गर्हितम्।
न पश्यति महापापं न लज्जां न कुलक्रमम् ॥
अन्यदा लोलतावाक्यैर्मद्यविह्वलचेतसा।
महाजं मारयामीति मारितः पशुपालकः॥
ततश्च तमजारूढं पशुभ्रान्त्या निपातितम्।
निरीक्ष्य लोलतादुःखाज्जडेनेदं विचिन्तितम् ॥
लालिता रसना नूनं मांसैर्नानाविधैर्मया।
इदं तु मानुषं मांसं नैव दत्तं कदाचन ॥
ततोऽधुना ददामीदमस्यै पश्यामि यादृशः।
अनेन जायते तोषो रसनायाः सुखावहः ॥
ततः संस्कृत्य तद्दत्तं तेन जाता प्रमोदिता।

रसना लोलता तुष्टा सोऽपि हर्षमुपागतः ॥
भूयश्च लोलतावाक्यैरपरापरमानुषान् ।
निहत्य भार्यया सार्धं खादञ्जातः स राक्षसः ॥
ततो बालजनेनापि निन्दितो बन्धुवर्जितः ।
लोकेन परिभूतश्च स जातः पापकर्मणा ॥
अन्यदा लोलतायुक्तो मनुष्याणां जिघांसया ।
प्रविष्टश्चौरवद्रात्रौ गृहे शूरकुटुम्बिनः ॥
ततः प्रसुप्तं तत्सूनुं गृहीत्वा निःसरन् बहिः ।
स दृष्टस्तेन शूरेण जडः क्रोडान्धचेतसा ॥
ततः कलकलारावं कुर्वता सह बान्धवैः ।
तेनास्फोट्य निबद्धोऽसौ मारितो यातनाशतैः ॥
प्रभाते च स वृत्तान्तः संजातः प्रकटो जने ।
तथापि किंचिच्छूरस्य न कृतं जडबन्धुभिः ॥

किं तर्हि प्रत्युत तैश्चिन्तितं । यदुत ।

शूरेण विहितं चारु यदसौ कुलदूषणः ।
अस्माकं लाघवोत्पादी जडः पापो निपातितः ॥
अमुं च जडवृत्तान्तं निरीक्ष्य स विचक्षणः ।
ततश्च चिन्तयत्येवं निर्मलीमसमानसः ॥

अये ।

इह लोके जडस्येदं रसनालालने फलम् ।
संजातं परलोके तु दुर्गतिः संजनिष्यति ॥
ततोऽत्यर्थं विरक्तोऽसौ रसनालालनं प्रति ।

स्थितो विचक्षणः पूर्वं यावत्तौ समुपागतौ ॥

ततश्च ।

कथितायां विमर्शेन मूलशुद्धौ विचक्षणः ।
रसनां त्यक्तुकामोऽसौ पितरं प्रत्यभाषत ॥
तात दृष्टविपाकेयं रसना साम्प्रतं जडे ।
दुहिता दोषपुञ्जस्य रागकेसरिमन्त्रिणः ॥
तदेनामधुना दुष्टां भार्यां दुष्टकुलोद्गताम् ।
सर्वथा त्यक्तुमिच्छामि तातारं त्वदनुज्ञया ॥
ततः शुभोदयेनोक्तं भार्येति प्रथिता जने ।
तवेयं रसना तस्मान्नाकाण्डे त्यागमर्हति ॥
अतः क्रमेण मोक्तव्या त्वयेयं वत्स सर्वथा ।
यदत्र प्राप्तकालं ते तदाकर्णय साम्प्रतम् ॥
ये ते तुभ्यं महात्मानो विमर्शेन निवेदिताः ।
विवेकपर्वतारूढा महामोहादिसूदनाः ॥
तेषां मध्ये स्थितस्त्वेयं तदाचारेण तिष्ठतः ।
दुष्टापि रसना वत्स न ते किंचित्करिष्यति ॥
तस्मादारुह्य यत्नेन तं विवेकमहागिरिम् ।
रसनादोषनिर्मुक्तस्तिष्ठ त्वं सकुटुम्बकः ॥
ततो विचक्षणेनोक्तं तात दूरे स पर्वतः ।
कथं कुटुम्बसहितस्तत्राहं गन्तुमुत्सहे ॥
शुभोदयोऽब्रवीदत्र न कार्यं भवता भयम् ।
विमर्शो यस्य ते बन्धुर्दिनानामपि रिवातुलः ॥

यतोऽस्य विद्यते वत्स विमर्शस्य वराञ्जनम् ।
तद्बलाद्दर्शयत्येष तमिहैव महागिरिम् ॥
प्रकर्षेणोदितं तात सत्यमेतन्न संशयः ।
अनुभूतं मयाप्यस्य योगाञ्जनविजृम्भितम् ॥

किं बहुना ।

यावदेष महावीर्यं न प्रयुङ्क्ते वराञ्जनम् ।
तावदेव न दृश्यन्ते ते पर्वतपुरादयः ॥
यदा तु विमलालोकमयं युङ्क्ते तदञ्जनम् ।
तदा सर्वत्र भासन्ते ते पर्वतपुरादयः ॥
ततो विचक्षणेनोक्तो विमर्शो भद्र दीयताम् ।
मह्यं तदञ्जनं तूर्णं यद्यस्ति तव तादृशम् ॥
ततोऽनुग्रहबुद्धैव सादरं प्रतिपादितम् ।
विचक्षणाय निःशेषं विमर्शेन तदञ्जनम् ॥
ततस्तदुपयोगेन क्षणादेव पुरः स्थितम् ।
विचक्षणेन यद्दृष्टं तदिदानीं निबोधत ॥
यत्तल्लोकशताकीर्णं पुरं सात्त्विकमानसम् ।
यत्रासौ विमलस्तुङ्गो विवेको नाम पर्वतः ॥
यच्च तच्छिखरं रम्यमप्रमत्तत्वनामकम् ।
यत्रोपरिष्टात्तस्यैव निविष्टं जैनसत्पुरम् ॥
ये च लोका महात्मानः साधवस्तन्निवासिनः ।
यश्च चित्तसमाधानो मध्यस्थस्तत्र मण्डपः ॥
या च निःस्पृहता नाम वेदिका तत्र संस्थिता ।

तस्यास्योपरि यच्चारु जीववीर्यं महासनम् ॥
चारित्रधर्मराजस्य परिवारविवेष्टितः ।
ये च तस्य गुणाः शुभ्रा ये च तेषां महीभुजाम् ॥
तदिदं भो महाराज तदानीं नरवाहन ।
विचक्षणेन निःशेषं साक्षादेवावलोकितम् ॥

ततश्च भो भो महानरेन्द्र नरवाहन स विचक्षणः सदैव तेन शुभोदयेन पित्रा युक्त एव तथा निजचारुतया मात्रा आलिङ्गित एव तथा प्रियभार्यया बुद्ध्या संहित एव तेन श्वशुर्येण विमर्शेन अन्वित एव वक्षःस्थलशायिना तेन प्रकर्षेण प्रियतनयेन समुपेत एव वदनकोटरवने वर्तमानया रसनाभार्यया सर्वथा सकुटुम्बक एव। केवलं तामेकां लोलतां दासचेटीं परित्यज्य निराकृत्य च परूपक्रियया संप्राप्य गुणधरनामानमाचार्यं प्रव्राजितस्तेन स्थितस्तेषां जैनपुरनिवासिनां भगवतां साधूनां मध्ये किलाहं प्रव्रजित इति मन्यमानः। ततः शिक्षितः समस्तोऽपि तेन तेषामाचारो निषेवितः परमभक्त्या विसर्जिता सा रसना सर्वथा विहितात्यर्थमकिञ्चित्करी। ततः स्थापितस्तेन गुरुणा निजपदे स विचक्षणः। स चान्यत्रापि दृश्यमानः परमार्थतस्तत्रैव विवेकगिरिशिखरवासिनि जैनपुरे द्रष्टव्यः। यतो भो महाराज नरवाहन स विचक्षणोऽहमेव विज्ञेयः। एते च ते महात्मानः साधवो मन्तव्याः। ततो महाराज यद्भवद्भिरभ्यधायि यदुत किं ते वैराग्यकारणमिति तदिदं मम वैराग्यकारणं। इयं चेदृशी मदीया प्रव्रज्येति। एवं च व्यवस्थिते।

भार्यादोषेण यो नाम प्रव्रज्यां समुपागतः।
न च माऽपि परित्यक्ता सर्वथा येन पापिनी॥
यश्च पालयतेऽद्यापि कुटुम्बं तदवस्थितम्।
तस्य मे कीदृशी नाम प्रव्रज्या भूप कथ्यताम्॥
तथापि ते महाराज यन्ममोपरि गौरवम्।
तर्कयन्नपि तत्राहं न जाने बत कारणम्॥

यतः।

सद्दोषेऽपि गुणारोपी जगदाल्हादकारकः।
किमेषोऽचिन्त्यसौन्दर्यः सज्जनप्रकृतेर्गुणः॥

तथाहि।

नूनमेषा सतां दृष्टिश्चापयष्टिरपूर्विका।
अकारणेऽपि या नित्यं गुणारोपपरायणा॥
किं वा भुवनवन्द्यस्य गुणोऽयं हतविद्विषः।
अस्यैव जैनलिङ्गस्य यच्चैते संस्थिता वयम्॥

तथाहि।

सुरेन्द्रा अपि वन्दन्ते तं भक्तिभरपूरिताः।
करस्थं यस्य पश्यन्ति जैनेन्द्रं लिङ्गमञ्जसा॥
किं वान्यत्कारणं किंचिद्दृश्लाघारधारकः।
येनेदृशोऽपि ते राजन्नहं दुष्करकारकः॥

एवं च वदति भगवति विगलितमदचेतसि विचक्षणसूरौ नरवाहनराजेन चिन्तितं। अहो निजचरितकथनेन भगवता जनितो मे मोहविस्मयः। अहो भगवतां वचनविन्यासः। अहो

विवेकित्वं । अहो मय्यनुग्रहपरता । अहो दृष्टपरमार्थतेति ।
विज्ञातश्च मया सर्वस्यास्य भगवद्भाषितस्य गर्भार्थः ।

ततोऽभिहितमनेन ।

भदन्त यादृशं लोके संपन्नं ते कुटुम्बकम् ।
अधन्यास्तादृशं नूनं प्राप्नुवन्ति न मादृशाः ॥
इदं च पोषयन्नत्र जैनलिङ्गे च संस्थितः ।
भदन्त भगवानेव गृहस्थो भवतीदृशः ॥

अन्यच्च ।

कृताकिञ्चित्करी येन रसनापि महात्मना ।
अत्यन्तदुर्जया लोके लोलता च निराकृता ॥
महामोहादिवर्गंच जित्वा यो जैनसत्पुरे ।
स्थितोऽसि साधुमध्यस्थः कुटुम्बसहितो मुने ॥
स चेत्त्वं न भवस्यत्र हन्त दुष्करकारकः ।
कीदृशास्ते भवन्त्यन्ये ब्रूहि दुष्करकारकाः ॥
यथायं तव संपन्नो वृत्तान्तो जगदद्भुतः ।
एतद्वृत्तान्तयुक्ता ये ते वन्द्याः प्रतिभान्ति मे ॥
तद्भदन्त किमेतेषां साधूनामयमीदृशः ।
संपन्न एव वृत्तान्तः किं वा नेति निवेद्यताम् ॥
ततो विचक्षणेनोक्तं सर्वेषामयमीदृशः ।
साधूनां भूप संपन्नो वृत्तान्तो नास्ति संशयः ॥

अन्यच्च ।

संपद्यते तवापीह वृत्तान्तोऽयं नरेश्वर ।

यदि त्वं कुरुषे सद्यो यादृशं मादृशैः कृतम् ॥
दर्शयामि क्षणेनैव तं विवेकमहागिरिम्।
ततस्तज्ज्ञायते तेऽत्र स्वयमेव कुटुम्बकम् ॥

ततश्च।

महामोहादिवर्गं च स्वयमेव विजेष्यसे।
लोलतां च निराकृत्य रंस्यसे साधुमध्यगः॥
ततो भगवतो वाक्यमाकर्ण्येदं मनोरमम्।
स्वचित्ते चिन्तयत्येवं नरवाहनपार्थिवः॥
अहो भगवता प्रोक्तमिदमत्र परिस्फुटम्।
य एवोत्सहते दोर्भ्यां तस्यैव प्रभुता करे॥
ततो भागवतीं दीक्षां गृहाण किल भूपते।
तव संपद्यते येन संपन्नं यत्तु मादृशाम्॥
अहो भगवता चारु ममादिष्टं महात्मना।
गृह्णाम्येवाधुना दीक्षामिति चित्तेऽवधारितम्॥
ततो विघटितानिष्टदुष्टपापाणुसंचयः।
अवोचत गुरुं नत्वा स राजा नरवाहनः॥
भदन्त यदि मे काचिद्विद्यते योग्यतेदृशी।
ततः करोम्यहं तादृक् कृतं यादृग् भवादृशैः॥

किं चानेन।

दीयतां जिनदीक्षा मे क्रियतां मदनुग्रहः।
ततो युष्मत्प्रसादेन सर्वं चारु भविष्यति॥
सूरिणाभिहितं भूप सुन्दरस्ते विनिश्चयः।

युक्तमेतद्धि भव्यानां कृत्यमेतद्भवादृशाम् ॥
नूनं मदीयवाक्यस्य सद्भावार्थोऽवधारितः ।
संजातस्तेन ते भूप महोत्साहोऽयमीदृशः ॥

तथाहि ।

तादृशु वल्गमानेषु महामोहादिशत्रुषु ।
को वा नाश्रयते दुर्गं सुक्षेमं जैनसत्पुरम् ॥
निश्चिन्तो गृहवासेऽत्र को वा दुःखौघपूरिते ।
आसीत विदिते जैने सत्पुरे सुखसागरे ॥
अलं कालविलम्बेन राजन्नत्र महाभये ।
एवं ते ज्ञाततत्त्वस्य युक्तमत्र प्रवेशनम् ॥
ततो भावगतं वाक्यं श्रुत्वा संतुष्टचेतसा ।
तदेतच्चिन्तितं राज्ञा दीक्षाग्रहणकाम्यया ॥
राज्ये कं स्थापयामीति को वा योग्योऽस्य मत्सुतः ।
ततो विस्फारिता दृष्टिर्नीलाब्जदलकासिनी ॥
अथागृहीतसङ्केते तदाहं रिपुदारणः ।
तथा निषण्णस्तत्रैव निर्भाग्यो रोररूपकः ॥

इतश्च ।

कृशोऽप्यसौ शरीरेण तथा तातस्य पश्यतः ॥
पुण्योदयो वयस्यो मे मनाक् सस्फुरतां गतः ॥

ततश्च ।

दृष्टो निरीक्ष्यमाणेन तातेनामलचेतसा ।
ततो मां वीक्ष्य तातस्य पुनः प्रत्यागतं मनः ॥

चिन्तितं च ततस्तेन स एष रिपुदारणः ।
मया बहिष्कृतो गेहात्तपस्वी शोच्यतां गतः ॥
हा हा मयेदं नो चारु कृतं यत्सुतभर्त्सनम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥
तदिदं प्राप्तकालं मे तथेदं जनकोचितम् ।
इदमेव सतां युक्तमिदं दुष्कृतशोधनम् ॥

यदुत ।

एनं राज्येऽभिषिञ्चामि संपूज्य रिपुदारणम् ।
ततश्च कृतकृत्योऽहं दीक्षां गृह्णामि निर्मलाम् ॥
भद्रेऽगृहीतसङ्केते तथाहं दोषपुञ्जकः ।
तातस्य तादृशं चित्तं तत्रेदं हन्त कारणम् ॥
नवनीतसमं मन्ये सुकुमारं सतां मनः ।
तत्पश्चात्तापसम्पर्काद् द्रवत्येव न संशयः ॥
आत्मा स्फटिकशुद्धोऽपि सद्दोषः प्रतिभासते ।
परस्तु दोषपुञ्जोऽपि निर्मलोऽमलचेतसाम् ॥
परोपकारसाराणां कारणेऽपि च निष्ठुरम् ।
कृतं कर्म करोत्येव पश्चात्तापं महाधियाम् ॥
ततश्चाहूय तातेन निजोत्सङ्गे निवेशितः ।
तदाहं प्रश्रितश्चेत्थं सूरिर्गद्गदभाषिणा ॥
भदन्त विदितस्तावन्नूनमेष भवादृशाम् ।
ज्ञानालोकवतां लोके यादृशो रिपुदारणः ॥
तदस्य सत्कुले जन्म मामपीयं मनोहरा ।

संजाता किं पुनर्जातं तादृशं चरितं पुरा ॥
सूरिणाभिहितं भूप न दोषो ऽस्य तपस्विनः ।
शैलराजमृषावादावस्य सर्वस्य कारणम् ॥

तातेनोक्तं ।

अनर्थसार्थहेतुभ्यां भदन्तेह कदा पुनः ।
आभ्यां पापवयस्याभ्यां वियोगोऽस्य भविष्यति ॥
सूरिराह महाराज वियोगो ऽद्यापि दुर्लभः ।
शैलराजमृषावादौ यतो ऽस्यात्यन्तवल्लभौ ॥
कारणेन पुनर्येन वियोगोऽस्य भविष्यति ।
भूरिकाले गते तत्ते संप्रत्येव निवेदये ॥
शुद्धाभिसन्धिर्विख्यातो नगरे शुभ्रमानसे ।
राजास्ति तस्य द्वे भार्ये वरतावर्यते किल ॥
मृदुतासत्यते नाम तस्य द्वे कन्यके शुभे ।
विद्येते भुवनानन्दकारिके चारुदर्शने ॥
साधादमृतरूपे ते ते सर्वसुखदायिके ।
अत्यन्तदुर्लभे भूप मृदुतासत्यते जनैः ॥

एवं च स्थिते ।

कदाचिदेष ते कन्ये लप्स्यते रिपुदारणः ।
तल्लाभे च वयस्याभ्यामाभ्यामेष वियोक्ष्यते ॥

यतः ।

गुणसन्दोहभूते ते तथेमौ दोषपुञ्जकौ ।
तस्मात्ताभ्यां सहावस्था नानयोर्भूप पापयोः ॥

ततः प्रयोजनस्यास्य कश्चिदन्यो विचिन्तकः ।
यत्तु तेऽभिमतं भूप तदेवाचर साम्प्रतम् ॥
तच्छ्रुत्वाचिन्तयद्राजा स तदा नरवाहनः ।
अहो कष्टमहो कष्टं सूनोर्मम तपस्विनः ॥
यस्येदृशौ रिपू नित्यं पार्श्वस्थौ दुःखदायिनौ ।
अहो वराको नैवासौ यथार्थो रिपुदारणः ॥
ततः किं क्रियतामत्र नैवास्यास्य प्रतिक्रिया ।
त्यक्तसङ्गो ऽधुनाहं तत्करोमि हितमात्मने ॥
ततोऽभिषिच्य मां राज्ये कृत्वा सर्वं यथोचितम् ।
विचक्षणगुरोः पार्श्वे निष्क्रान्तो नरवाहनः ॥

ततश्च ।

विवेकगिरिरस्थोऽपि स विचक्षणसूरिणा ।
सार्धं बाह्येषु देशेषु विजहार महामतिः ॥
ममापि राज्ये संपन्ने लब्धावसरमौष्ठवौ ।
शैलराजमृषावादौ नितरामभिवर्धितौ ॥
तत्प्रातुर्ल्यं जगत्सर्वं पश्यामि सुतरां ततः ।
जलगण्डूपमंकाग्रमनृतं प्रतिभाति मे ॥

एवं च ।

विद्वद्भिः श्लाघ्यमानस्य निन्द्यमानस्य पण्डितैः ।
तुष्टस्य धूर्तवचनैरन्यैर्कैदाटुकर्मभिः ॥
पुण्योदयस्य माहात्म्याद्राज्यं पालयतो मम ।
गतानि कतिचिद्भद्रे वर्षाणि किल मौग्ध्यया ॥

इतश्चोग्रप्रतापज्ञः सार्वभौमो द्विषंतपः ।
चक्रवर्ती तदा लोके तपनो नाम भूपतिः ॥
स सर्वबलसामग्र्या महीदर्शनलीलया ।
भ्रमंस्तत्र समायातः पुरे सिद्धार्थनामके ॥
ततो विदिततद्वार्तैरहं मन्त्रिमहत्तमैः ।
हितकारितया प्रोक्तो विज्ञातनृपनीतिभिः ॥

यदुत ।

चक्रवर्ती जगज्ज्येष्ठस्तपनोऽयं महीपतिः ।
तदस्य क्रियतां देव गत्वा सन्मानपूजनम् ॥
पूज्योऽयं सर्वभूपानामर्चितस्तव पूर्वजैः ।
विशेषतो गृहायातः साम्प्रतं मानमर्हति ॥
अहं तु शैलराजेन विधुरीकृतचेतनः ।
आध्मातस्तब्धसर्वाङ्गस्तानाभाषे तदेदृशम् ॥

यदुत ।

अरे विमूढाः को नाम तपनोऽयं ममाग्रतः ।
येनास्य पूजनं कुर्यामहं न पुनरेष मे ॥

तदाकर्ण्य मन्त्रिमहत्तमैरुक्तं। देव मा मैवं वदतु देवः। अस्य हि पूजनमकुर्वता देवेन लङ्घितः पूर्वपुरुषक्रमः परित्यक्ता राजनीतिः प्रलयं नीताः प्रकृतयः समुज्झितं राज्यसुखं परिहापितो विनयः अपकर्णितमस्मद्वचनं भवति। तन्नैवं वदितुमर्हति देवः। क्रियतामस्माकमनुरोधेन तपनराजस्याभ्युद्गमनं देवेनेति वदन्तः पतिताः सर्वेऽपि मम चरणयोः। ततो मृदूभूतो मनाङ् मे

शैलराजीयह्रदयावलेपनावष्टब्धः । केवलं संश्रितोऽहं मृषावादेन । ततो मयाभिहितं । न ममात्र क्षणे चित्तोत्साहः । तद्गच्छत यूयं कुरुत यथोचितं । अहं तु पश्चादागमिष्यामि । दत्तास्थाने राजनि प्रवेक्ष्यामीति । ततो यदाज्ञापयति देव इति वदन्तो निर्गतास्तपनाभिमुखं मन्त्रिमहत्तमा राजलोकश्च । सन्ति च तस्य · तपननृपतेर्विविधदेशभाषावेषवर्णस्वरभेदविज्ञानान्तर्धान-विज्ञातारो बहवश्चरविशेषाः । ततः केनचिच्चरेण विदितोऽयं वृत्तान्तो निवेदितस्तपनाय । इतश्च मन्त्रिमहत्तमैर्विहिता तपन-राजस्य प्रतिपत्तिरुपस्थापितानि महार्हप्राभृतानि समावर्जितं हृदयं । दत्तं चास्थानं तपननरेन्द्रेण । पृष्टा रिपुदारणवार्ता । मन्त्रिमहत्तमैरुक्तं । देव देवपादप्रसादेन कुशली रिपुदारणः । समागच्छति चैष देवपादमूलमिति । ततो दत्ता ममाज्ञायकाः । विजृम्भितौ शैलराजमृषावादौ । ततस्ते मयाभिहिताः । यदुत

अरे वदत तान् गत्वा सर्वान्मन्त्रिमहत्तमान् ।
यथा केनात्र प्रहिता यूयं दुरात्मानो नराधमाः ॥

ततो मया नागन्तव्यमेव । तूर्णमागच्छत यूयं । इतरथा नास्ति भवतां जीवितमिति । तदाकर्ण्य गतास्तत्समीपमाज्ञायकाः । निवेदितं मन्त्रिमहत्तमानां मदीयवचनं । ततस्ते तत्र स्थाने सवैलक्ष्याः सत्रासाः सोद्वेगा नष्टजीविताशाः परस्पराभिमुखमीक्ष-माणा अहो रिपुदारणस्य मर्यादेति चिन्तयन्तः किमधुना कर्तव्य-मिति विमूढाः सर्वेऽपि मदीयमन्त्रिमहत्तमाः । लक्षितास्तपन-नरेन्द्रेण । ततोऽभिहितमनेन । भो भो लोका धीरा भवत ।

मा भैषुर्न दोषोऽयं भवतां। प्रतीतं मे रिपुदारणस्य शीलं। ततोऽहं स्वयमेव तेन भलिष्यामि। केवलं भवद्भिरवस्तुनिर्बन्धपरैर्न भाव्यं। मोक्तव्यस्तस्योपरि स्वामिवञ्चमानः। नोचितोऽसौ राजलक्ष्म्याः। न योग्यो युष्मद्विधपदातीनाम्।

तथाहि शुभ्ररूपाणां रतानां शुद्धमानसे।
न जातु राजहंसानां काको भवति नायकः॥

तन्मुञ्चत सर्वथा तस्योपरि स्नेहभावं। ततो मयि विरक्तत्वात्तेषामभिहितं सर्वैरपि। यदाज्ञापयति देव इति। ततोऽभिहितस्तपनराजेन योगेश्वरनामा तन्त्रवादी कर्णे। यदुत गत्वा तस्येदमिदं कुरुष्वेति। योगेश्वरेणोक्तं। यदाज्ञापयति देवः। ततः समागतो मत्समीपे सह भूरिराजपुरुषैर्योगेश्वरः। दृष्टो ऽहं कृतावष्टम्भशैलराजेन समालिङ्गितो मृषावादेन परिवेष्टितस्त्रोत्रासनपरैर्बहिरङ्गैः पिङ्गलोकैः। ततः पुरतः स्थित्वा तेन योगेश्वरेण तन्त्रवादिना प्रहतोऽहं मुखे योगचूर्णमुष्ट्या। ततोऽचिन्त्यतया मणिमन्त्रौषधीनां प्रभावस्य तस्मिन्नेव क्षणे संजातो मे प्रकृतिविपर्ययः। संपन्नं शून्यमिव हृदयं प्रतिभान्ति विपरीता इवेन्द्रियार्थाः चित्र इव महागह्वरे न जानाम्यात्मस्वरूपं। तपनभक्तोऽयं योगेश्वर इति भीतो मदीयपरिवारः स्थितः किंकर्तव्यतामूढो मोहितश्च तेन योगशक्त्या। ततो विहितभ्रुकुटिना रे पाप दुरात्मन्नागच्छसि त्वं देवपादमूलमिति वदता ताडितोऽहं वेत्रलतया योगेश्वरेण। उपन्नं मे भयं। गतो दैन्यं पतितस्तच्चरणयोः। अत्रान्तरे नष्टोऽसौ मदयनः पुण्योदयः। तिरोभूतो शैलराज-

मृषावादी। ततः संज्ञिता योगेश्वरेणात्ममनुष्यकाः। ततोऽहं क्षणेनैव संजातोन्मादो वेदयमानस्तीव्रमन्तस्तापं विहितस्तैर्यथाज्ञातः कृतः पञ्चजटो विलिप्तो भूत्या चर्चितो माषपुण्ड्रकैः। प्रवृत्तास्ते तालारवं कर्तुं। समवतारितोऽहं रासमध्ये। ततो मां नाटयन्तः प्रारब्धास्ते मनुष्यास्तितालकं रासं दातुं। कथम्।

यो हि गर्वमविवेकभरेण करिष्यते
बाधकं च जगतामनृतं च वदिष्यते।
नूनमत्र भव एव स तीव्रविडम्बनां
प्राप्नुवीत निजपापभरेण भृशं जनः॥ ध्रुवकः॥

एवं च मोल्लासमुद्गायन्तस्ते वल्गमानाः कुण्डकमध्ये मां कृत्वा विजृम्भितुं प्रवृत्ताः। ततोऽहं पतामि तेषां प्रत्येकं पादेषु। नृत्यामि हास्यकरं जनानां। समुल्लसामि तेषूल्लसमानेषु। ददामि च तालाः। ततस्तैरभिहितं।

पश्यतेह भव एव जनाः कुतूहलं
शैलराजवरमित्रविलासकृतं फलम्।
यः पुरैष गुरुदेवगणानपि नो नतः
सोऽद्य दासचरणेषु नतो रिपुदारणः॥

पुनर्ध्रुवकः। यो हि गर्वमविवेकभरेण करिष्यत इत्यादि।

ततो ममापि मुखं स्फुटितेदमागतं। यदुत।

शैलराजवशवर्तितया निखिले जने
हिण्डितोऽहमनृतेन वृथा किल पण्डितः।
मारिता च जननी हि तथा नरसुन्दरी

तेन पापचरितस्य ममाच विडम्बनम् ॥

पुनर्भुवकः। यो हि गर्वमविवेकभरेण करिष्यत इत्यादि।

ततो रासदायकाः प्रोक्ता विदितपूर्ववृत्तान्तेन योगेश्वरेण। अरेरे एवं गायत। इदं च कुरुत।

योऽत्र जन्मगतिदायिगुरूनवमन्यते
सोऽत्र दासचरणाग्रतलैरपि हन्यते।
यस्त्वलीकवचनेन जनानुपतापयेत्
तस्य तपननृप इत्युचितानि विधापयेत् ॥

पुनर्भुवकः। यो हि गर्वमित्यादि।

ततस्तेदं गायन्तस्ते गाढं पार्ष्णिप्रहारैर्मां निर्दयं चूर्णयितुं प्रवृत्ताः। ततो निविडलोहपिण्डैरिव समकालं निपतद्भिरेतावद्भिः पादैर्दलितं मे शरीरं। विमूढा गाढतरं मे चेतना।

तथापि ते राजपुरुषा नरकपाला इव मम कुण्डकान्निःसारम-यच्छन्तस्तथैवोल्ललमाना मां बलादाखेटयन्तस्त्रिताालकं रासं दद-माना एव प्राप्तास्तपननरेन्द्रास्थानं। दर्शितं तत्र विशेषतस्तत्प्रेक्षणकं। प्रवृत्तं प्रहसनं। ईदृशस्यैव योग्योऽयं दुरात्मेति संजातो जनवादः। ततो योगेश्वरेण रासकदायकमध्ये स्थित्वाभिहितम्। यथा।

नो नतोऽसि पितृदेवगणं न च मातरं
किं हतोऽसि रिपुदारण पश्यसि कातरम्।
नृत्य नृत्य विहिताहति देवपुरोऽधुना
निपत निपत चरणेषु च सर्वमहीभुजाम् ॥

पुनर्भुवकः। यो हि गर्वमविवेकभरेण करिष्यत इत्यादि।

ततोऽहमुन्मादवशेन जीवितभयेन च दैन्यमुररीकृत्य नाटितोऽनेकधा पतितोऽन्यजनानामपि चरणेषु संजातस्सर्वस्त्रभूतः ॥

तपननरेन्द्रेण तु मदीय एव कनिष्ठो भ्राता कुलभूषणो नामाभिषेचितः सिद्धार्थपुरे राज्ये। ततो भद्रेऽगृहीतसङ्केते तथा तैर्गाढपार्ष्णिप्रहारैर्जर्जरितशरीरस्य मे निपतितमुदरे रक्तं संजातः सन्तापातिरेकः ॥

ततो जीर्णा मे एकभववेद्या गुडिका। दत्ता च ममान्या गुडिका भवितव्यतया। तन्माहात्म्येन गतोऽहं तस्यां पापिष्ठनिवासायां नगर्यां महातमःप्रभाभिधाने पाटके समुत्पन्नः पापिष्ठकुलपुत्रकरूपः। स्थितस्तत्रैव त्रयस्त्रिंशत्सागरोपमानि कन्दुकवदुच्छलमानोऽधस्तादुपरि च वज्रकण्टकैस्तुद्यमानः। तदित्थमवगाहितो मयातितीव्रतरदुःखभरसागरः। ततस्तत्पर्यन्ते जीर्णायां पूर्वदत्तगुडिकायां दत्ता ममान्या गुडिका भवितव्यतया। तत्तेजसा समागतोऽहं पञ्चाक्षपशुसंस्थाने नगरे। दर्शितस्तत्र जम्बुकाकारधारको भवितव्यतया। एवं च भद्रेऽगृहीतसंकेते केलिपरतया तया निजभार्यया भवितव्यतया तस्यां पापिष्ठनिवासायां नगर्यामुपर्युपरि स्थितेषु सप्तसु पाटकेषु तथा पञ्चाक्षपशुसंस्थाने विकलाक्षनिवासे एकाक्षनिवासे मनुजगतौ किं बहुना तदसंव्यवहारनगरं विहायापरेषु प्रायेण सर्वस्थानेषु। जीर्णायां तस्यामेकभववेद्याभिधानायां कर्मपरिणाममहाराजसमर्पितायां पुनरपरापरां गुडिकां योजयन्त्यारघट्टघटीयन्त्रन्यायेन भ्रमितोऽहमनन्तं कालं प्रतिस्थानमनन्तवाराः। सर्वस्थानेषु च पर्यटतो मे जघन्या जाति-

निन्दितं कुलं अत्यन्तहीनं बलं गर्हितं रूपं निन्द्यं तपश्चरणं आजन्म दारिद्र्यं सततं च मूर्खता अलाभसन्तापदारुणं याचकत्वं सकलजनानिष्टत्वं च गुडिकाप्रयोगेणैव प्रकटितं भवितव्यतया। तथा जिह्वोत्पाटनं तप्तताम्रपानं मूकत्वं मन्मनत्वं जिह्वोच्छेदमित्यादि च विधापितवती।

एवं च वदति संसारिजीवे प्रज्ञाविशालया चिन्तितं। अहो मानमृषावादयोर्दारुणता। तथाहि। तद्वशवर्तिनानेन संसारिजीवेन हारितो मनुष्यभावः प्राप्तास्तत्रैव विडम्बनाः अवगाहितोऽनन्तः संसारसागरोऽनुभूतानि विविधदुःखानि प्राप्तानि गर्हितानि जात्यादीनीति। संसारिजीवः प्राह। ततोऽन्यदा दर्शितोऽहं भवचक्रपुरे मनुष्यरूपतया। संजाता मे तत्र मध्यमगुणता। ततस्तुष्टा ममोपरि भवितव्यता। आविर्भावितस्तया पुनरपि स सहचरो मे पुण्योदयः। ततोऽभिहितमनया। आर्यपुत्र गन्तव्यं मनुजगतौ भवता वर्धमानपुरे। स्थातव्यं तत्र यथासुखासिकया। अयं च तवानुचरः पुण्योदयो भविष्यति। मयाभिहितं। यदाज्ञापयति देवी। ततो जीर्णायां प्राचीनगुडिकायां दत्ता पुनरेकभववेद्या सा ममापरा गुडिका भवितव्यतयेति॥

भवगहनमनन्तं पर्यटद्भिः कथंचि-<br>
न्नरभवमतिरम्यं प्राप्य भो भो मनुष्याः।<br>
निरुपमसुखहेतावादरः संविधेयो<br>
न पुनरिह भवद्भिर्मानजिह्वानृतेषु॥<br>
इतरथा यकृद्दुःखशतैर्हता

मनुजभूमिषु लब्धविडम्बनाः ।
मदरसानृतगृद्धिपरायणा
ननु भविष्यथ दुर्गतिगामुकाः ॥
एतन्निवेदितमिह प्रकटं मया भो
मध्यस्थभावमवलम्ब्य विशुद्धचित्ताः ।
मानानृते रसनया सह संविहाय
तस्माज्जिनेन्द्रमतलम्पटतां कुरुध्वम् ॥

इत्युपमितिभवप्रपञ्चायां कथायां मानमृषा-
वादरसनेन्द्रियविपाकवर्णनश्चतुर्थः
प्रस्तावः समाप्तः ॥ ४ ॥

## अथ पञ्चमः प्रस्तावः ।

अथ तल्लोकविख्यातं सर्वसौन्दर्यमन्दिरम् ।
बहिरङ्गं जगत्यस्ति वर्धमानं पुरोत्तमम् ॥
पूर्वाभाषी शुचिः प्राज्ञो दक्षिणो जातिवत्सलः ।
नरवर्गः सदा यत्र जैनधर्मपरायणः ॥
विनीतः शीलसंपन्नः सर्वावयवसुन्दरः ।
सलज्जाभूषणो यत्र धार्मिकः सुन्दरीजनः ॥
तत्र दर्पोद्धुरारातिकरिकुम्भविदारणः ।
अभूत्रिर्व्याजसद्वीर्यो धवलो नाम भूपतिः ॥
यः शशाङ्कायते नित्यं स्वबन्धुकुमुदाकरे ।
कठोरभास्कराकारं बिभर्ति रिपुतामसे ॥
तस्यास्ति सर्वदेवीनां मध्ये लब्धपताकिका ।
सौन्दर्यशीलपूर्णाङ्गी देवी कमलसुन्दरी ॥
तस्या गर्भे समुद्भूतः सद्भूतगुणमन्दिरम् ।
सुतोऽस्ति विमलो नाम तयोर्देवीनरेन्द्रयोः ॥
यस्तदा बालकालेऽपि वर्तमानो महामतिः ।
लघुकर्मतया धन्यो न स्पृष्टो बालचेष्टितैः ॥
अथ तत्र पुरे ख्यातः समस्तजनपूजितः ।
अभ्यद्भुतहितः श्रेष्ठी सोमदेवो महाधनः ॥
धनेन धनदं धन्यो रूपेण मकरध्वजम् ।

धिया सुरगुरुं धीरो यो विजिग्ये गतस्मयः ॥
तस्यानुरूपा शीलाढ्या लावण्यामृतशालिनी ।
भर्तृभक्ताभवद्भार्या नाम्ना कनकसुन्दरी ॥
ततोऽहं गुडिकादानाद्भवितव्यतया तया ।
तस्याः प्रवेशितः कुक्षौ भद्रे पुण्योदयान्वितः ॥
अथ संपूर्णकालेन प्रविभक्तशरीरकः ।
स्थितस्ताहं बहिर्योनेर्रङ्गमध्ये यथा नटः ॥
ततः किल प्रसूताहं जातो मे पुत्रकोऽनघः ।
इति भावनया चित्ते जनन्या प्रविलोकितः ॥
सोऽपि पुण्योदयो जातः केवलं नेक्षितस्तया ।
जनदृष्ट्या न दृश्यन्ते तेऽन्तरङ्गजना यतः ॥
ज्ञातोऽहं सोमदेवेन परिवारनिवेदितः ।
ततश्च कारितस्तेन सुतजन्ममहोत्सवः ॥
दत्तानि भूरिदानानि पूजिता गुरुसंहतिः ।
प्रनृत्ता बान्धवाः सर्वे वादितानेकमर्दलाः ॥
अथातीतेऽतितोषेण द्वादशाहे च सोत्सवम् ।
ततो मे विहितं नाम वामदेव इति स्फुटम् ॥
ततः संवर्धमानोऽहमत्यन्तसुखलालितः ।
यावद्भद्रे समापन्नो व्यक्तचैतन्यसंगतः ॥
तावद्दृष्टौ मया भद्रे कृष्णाकारधरौ नरौ ।
तयोश्च निकटे वक्रा नारी वलितदेहिका ॥
चिन्तितं च मया हन्त किमिदं मानुषत्रयम् ।

मत्समीपे समायातं किं वाश्रित्य प्रयोजनम् ॥
अथैकस्तत्र मां गाढं बलादालिंग्य मानवः।
निपत्य पादयोस्तेषां ततश्चेत्थमभाषत ॥
मित्र प्रत्यभिजानीषे किं मां किं नेति वा पुनः ।
मयोक्तं नेति तच्छ्रुत्वा स जातः शोकविक्लवः ॥
मयोक्तं तात किं जातस्त्वमेवं शोकविक्लवः ।
तेनोक्तं चिरदृष्टोऽपि यतोऽहं विस्मृतस्तव ॥
मयोक्तं कुत्र दृष्टोऽसि त्वं मया वरलोचन ।
तेनोक्तं कथयाम्येष समाकर्णय साम्प्रतम् ॥
पुरेऽसंव्यवहारे त्वमासीर्वास्तव्यकः पुरा ।
तत्रासन्नाद्दृशास्तात बहवस्ते वयस्यकाः ॥
केवलं तत्र नाभूवमहमद्यापि ते सखा ।
अन्यदा निर्गतोऽसि त्वं ततो भ्रमणकाम्यया ॥
ततश्चैकाचवासे त्वं विकलाचपुरे भ्रमन् ।
पञ्चाचपशुसंस्थाने कदाचित्पुनरागतः ॥
तत्र ये गर्भजाः सन्ति संज्ञिनः कुलपुत्रकाः ।
अन्यस्थानानि पर्यट्य तेषु प्राप्तोऽसि सुन्दर ॥
अथ तत्र स्थितस्यायं जातस्तव वयस्यकः ।
तिरोभूतपरत्वेन न सम्यग् लक्षितस्त्वया ॥
ततो भ्रमणशीलत्वात्तातानन्तेषु धामसु ।
अनन्तवारा भ्रान्तोऽसि सह सौयमहेलया ॥
कुटुम्बरत्नगेनाथ पुरे सिद्धार्थनामके ।

बहिरङ्गे गतस्तात कदाचित्त्वं सभार्यकः ।
नरवाहनराजस्य भवने त्वं तदा स्थितः ॥
दिनानि कतिचिन्नाम्ना प्रसिद्धो रिपुदारणः ।
संसारिजीव इत्येतत्तात ते नामपूर्वकम् ।
वासके वासके नाम जायते चापरापरम् ॥
ततस्तत्र स्थितेनाहं भवता वरलोचन ।
वयस्य प्रत्यभिज्ञातो मृषावाद इति स्फुटम् ॥
ततस्तत्र मया सार्धं ललितोऽसि वरानन ।
संजाता च परा प्रीतिर्मदीयज्ञानकौशले ॥
पृष्टश्चाहं त्वया तोषाद्यथेदं तव कौशलम् ।
जातं कस्य प्रसादेन मनानन्दविधायकम् ॥
मयोक्तं प्रतिपन्नास्ति भगिनी मे महत्तमा ।
मूढतानन्दिनी माया रागकेसरिणोऽङ्गजा ॥
इदं तस्याः प्रसादेन संजातं मम कौशलम् ।
सा हि संनिहिता नित्यं मम मातेव वत्सला ॥
यत्र यत्र मृषावादस्तत्र तत्रेह मायया ।
भवितव्यमिति प्रायो विज्ञातं बालकैरपि ॥
त्वयोक्तं दर्शनीयेति सात्मीया भगिनी मम ।
मयापि प्रतिपन्नं तत्तावकीनं वचस्तदा ॥
ततस्तद्वचनं तात स्मरन्नेषोऽहमागतः ।
भगिनीं पुरतः कृत्वा दर्शयामीति ते किल ॥

यावता ।

स तदा तादृशः स्नेहस्तत्र तात मया सह ।
ते तादृशाः समुल्लापाः सा च मैत्री मनोहरा ॥

तथापि ।

न त्वं प्रत्यभिजानीषे दृष्टमप्यधुना जनम् ।
महत्तरमतोऽपि स्यात्किं शोकभरकारणम् ॥
तदेष मन्दभाग्योऽहं भवता परिवर्जितः ।
क्व यामि क्व च तिष्ठामि संजातश्चिन्तयातुरः ॥
मयोक्तं न स्मरामीमं वृत्तान्तं भद्र भावतः ।
तथापि हृदये मेऽस्ति यथा त्वं चिरसंगतः ॥

यतः ।

दृष्टिर्मे शीतलीभूता चित्तमानन्दपूरितम् ।
त्वयि भद्र मृषावादे जाते दर्शनगोचरे ॥
नूनं जातिस्मरा मन्ये दृष्टिरेषा शरीरिणाम् ।
प्रिये हि विकसत्येषा दृष्टे दन्दह्यते ऽप्रिये ॥
तस्मादत्र न कर्तव्यः शोको भद्रेण वस्तुनि ।
वयस्यः प्राणतुल्यस्त्वं ब्रूहि यत्ते प्रयोजनम् ॥
तेनोक्तमियदेवात्र मम तात प्रयोजनम् ।
यदेषात्मीयभगिनी दर्शिता तेऽतिवत्सला ॥
मायेति सुप्रसिद्धापि जनैश्चरितरञ्जितैः ।
इयं बकुलिका तात प्रियनाम्नाभिधीयते ॥
तदेनया समं तात वर्तितव्यं यथा मया ।
अहं तिरोभविष्यामि नास्ति मेऽवसरोऽधुना ॥

किं तु ।

यत्रेयमास्ते तत्राहं स्थित एवेह तत्त्वतः ।
परस्परानुविद्धं हि स्वरूपमिदमावयोः ॥
अयं तु पुरुषस्तात कनिष्ठो मे सहोदरः ।
युक्तस्ते मित्रभावस्य तेन संदर्शितो मया ॥
स्तेयनामा महावीर्यस्तिरोभूतः स्थितः पुरा ।
प्रस्तावमधुना ज्ञात्वा सोऽयं तात समागतः ॥
तदेषोऽपि त्वया नित्यं यथाहमवलोकितः ।
तथैव स्नेहभावेन द्रष्टव्यः प्रियबान्धवः ॥

मयोक्तं ।

येयं ते भगिनी भद्र सा ममापि न संशयः ।
यस्ते सहोदरो भ्राता स ममाप्येष बान्धवः ॥

तेनोक्तं ।

अहो महाप्रसादो मे विहितो मदनुग्रहः ।
संजातः कृतकृत्योऽहमेवं सति नरोत्तम ॥
इत्युक्त्वा स मृषावादस्तिरोभावमुपागतः ।
ततो मे हृदि संजातो वितर्कः स च कीदृशः ॥
अहो मे धन्यता नूनं संपन्नं जन्मनः फलम् ।
भगिनी भ्रातरौ यस्य समापन्नौ ममेदृशौ ॥
ततो विलसतस्ताभ्यां सार्धं मे मनसीदृशः ।
जाता वितर्ककल्लोला भद्रे विभ्रान्तचेतसः ॥
वञ्चयामि जगत्सर्वं नानारूपैः प्रतारणैः ।

कुमार परिहासोऽयं व्युत्पत्त्यर्थं मया कृतः ।
तद्ब्रूहि सर्वं यद्वाच्यं द्विगुणोऽयमनुग्रहः ॥

विमलेनोक्तं ।

उत्तुङ्गाः पृथुलास्ताम्राः स्निग्धा दर्पणसन्निभाः ।
नखा भवन्ति धन्यानां धनभोगसुखप्रदाः ॥
सितैः श्रमणता ज्ञेया रूक्षपुष्पितकैः पुनः ।
जायते किल दुःशीलो नखैर्लोकेऽत्र मानवः ॥
मध्ये संक्षिप्तपादस्य स्त्रीकार्ये मरणं भवेत् ।
निर्मांसावुत्कटौ पादौ न प्रशस्तावुदाहृतौ ॥
कूर्मोन्नतौ घनौ स्निग्धौ मांसलौ समकोमलौ ।
सुश्लिष्टौ चरणौ धन्यौ नराणां सुखसाधकौ ॥
ये काकजङ्घाः पुरुषास्तथैवोद्बद्धपिण्डिकाः ।
ये दीर्घस्थूलजङ्घाश्च दुःखितास्तेऽध्वगामिनः ॥
ये हंसशिखिमातङ्गवृषगत्यनुकारिणः ।
नरास्ते सुखिनो लोके दुःखिनोऽन्ये प्रकीर्तिताः ॥
जानुद्वयं भवेद्गूढं गुल्फौ वा सुसमाहितौ ।
यस्यासौ सुखितो ज्ञेयो घटजानुर्न सुन्दरः ॥
ह्रस्वं राजीवसच्छायमुन्नतं मणिके शुभम् ।
वक्रं दीर्घं विवर्णं च न लिङ्गमिह शस्यते ॥
दीर्घायुष्का भवन्तीह प्रलम्बवृषणा नराः ।
उत्कटाभ्यां पुनस्ताभ्यां ह्रस्वायुष्काः प्रकीर्तिताः ॥
मांसोपचितविस्तीर्णं शुभकारि कटीतटम् ।

तदेव दारिद्र्यकरं विज्ञेयं कुम्भसङ्कटम् ॥
यस्योदरं भवेत्तुल्यं सिंहव्याघ्रशिखण्डिनाम् ।
तथैव वृषमत्स्यानां भोगभोगी स मानवः ॥
वृत्तोदरोऽपि भोगानां भाजनं किल गीयते ।
शूरो निवेदितः प्राज्ञैर्मण्डूकसमकुक्षिकः ॥
गम्भीरा दक्षिणावर्ता नाभिरत्रेह सुन्दरा ।
वामावर्ता च तुङ्गा च नेष्टा लक्षणवेदिभिः ॥
विशालमुन्नतं तुङ्गं स्निग्धलोमशमार्दवम् ।
वक्षःस्थलं भवेद्धन्यं विपरीतमतोऽपरम् ॥
कूर्मसिंहाश्वमातङ्गसमपृष्ठाः सुशोभनाः ।
उद्बद्धबाहवो दुष्टा दासास्तु लघुबाहवः ॥
प्रलम्बबाहवो धन्याः प्रशस्ता दीर्घबाहवः ।
अकर्मकठिनौ हस्तौ विज्ञेयाः पादवन्नखाः ॥
दीर्घौ मेषसमः स्कन्धो निर्मांसो भारवाहकः ।
मांसलो लक्षणज्ञानां लघुस्कन्धो मतः किल ॥
कण्ठो दुःखकरो ज्ञेयः कृशो दीर्घश्च यो भवेत् ।
स कम्बुसन्निभः श्रेष्ठो वलित्रयविराजितः ॥
लम्बोष्ठो दुःखितो नित्यं पीनोष्ठः सुभगो भवेत् ।
विषमोष्ठो भवेद्भीरुर्लम्बोष्ठो भोगभाजनम् ॥
शुद्धाः समाः शिखरिणो दन्ताः स्निग्धा घनाः शुभाः ।
विपरीताः पुनर्ज्ञेया नराणां दुःखहेतवः ॥
द्वात्रिंशद्दन्तो राजा भोगी स्यादेकहीनकः ।

तद्वर्णनं हि को नाम पारयेत्कोऽवधारयेत् ॥

अतः समासतस्तुभ्यं यदि गाढं कुतूहलम् ।

ततोऽहं कथयाम्येष लक्षणं नरयोषितोः ॥

मयोक्तं । अनुग्रहो मे । विमलेनोक्तं ।

रक्तस्निग्धमवक्रं च पद्माभं मृदु कोमलम् ।

प्रशस्तं वर्णितं प्राज्ञैः सुश्लिष्टं पादयोस्तलम् ॥

शशिवज्राङ्कुशच्छत्रशङ्खादित्यादयस्तले ।

पादयोर्यस्य दृश्यन्ते स धन्यः पुरुषोत्तमः ॥

एत एव च चक्राद्या यद्यसंपूर्णभिन्नकाः ।

भवेयुः पश्चिमाभोगाः संपद्यन्ते तदा नरे ॥

रासभो वा वराहो वा जम्बुको वा परिस्फुटम् ।

दृश्येत पादतलयोर्यस्यासौ दुःखितो नरः ॥

मयोक्तं ।

लक्षणे प्रस्तुते वक्तुं लपेदमपलक्षणम् ।

किमुक्तं विमलः प्राह समाकर्णय कारणम् ॥

लक्ष्यते दृष्टमात्रस्य नरस्येह शुभाशुभम् ।

येन तल्लक्षणं प्रोक्तं तद्द्वेधा सुन्दरेतरम् ॥

ततः सर्वं समासेन सुखदुःखनिवेदकम् ।

शरीरसंस्थितं चिह्नं लक्षणं विदुषां मतम् ॥

तेनापलक्षणस्यापि यदिदं प्रतिपादनम् ।

युक्तं तद्भद्र जानीहि प्रस्तुते नरलक्षणे ॥

मयोक्तं ।

परेषां धनसर्वस्वं मुष्णामि च यथेच्छया ॥
ततोऽहं वञ्चनेऽन्येषां हरणे चान्यसम्पदाम् ।
प्रवर्तमानो निःशङ्कस्तुखितो लोकबान्धवैः ॥
ततस्तत्तादृशं वीच्य मामकीनं कुचेष्टितम् ।
गणितस्तृणतुल्योऽहं तैः सर्वैर्लोकबान्धवैः ॥
इतश्च नृपतेर्भार्या या सा कमलसुन्दरी ।
साभूत्कनकसुन्दर्याः सर्वकालं सखी प्रिया ॥
ततोऽसौ तनयस्तस्या विमलो राजदारकः ।
जातो मे मातृसम्बन्धात्सखा निर्व्याजवत्सलः ॥
सदोपकारपरमः स्नेहनिर्भरमानसः ।
स महात्मा मया सार्धं शाठ्यहीनः प्रमोदते ॥
अहं तु तस्या वीर्येण भगिन्याः शठमानसः ।
निर्मलेऽपि मलापूर्णः संजातः कौटिल्यालयः ॥
निर्मिथ्यशाठ्यभावेन तदेवं वर्तमानयोः ।
अनेकक्रीडनासारसावयोर्यान्ति वासराः ॥

ततश्च ।

कौमारे वर्तमानेन विमलेन महात्मना ।
आसाद्य सदुपाध्यायं गृहीताः सकलाः कलाः ॥
योषितां नयनानन्दं मीनकेतनमन्दिरम् ।
लावण्यसागराधारं तारुण्यकमवाप सः ॥
अथान्यदा मया सार्धं ललमानो महामतिः ।
स क्रीडानन्दनं नाम संप्राप्तो वरकाननम् ॥

तच्च कीदृशम् ।

अशोकनागपुन्नागबकुलाङ्कोल्लराजितम् ।
चन्दनागरुकर्पूरतरुषण्डमनोहरम् ॥
द्राक्षामण्डपविस्तारवारितातपसुन्दरम् ।
विलसत्केतकीगन्धश्रद्धान्धीकृतषट्पदम् ॥
अनेकतालहिंतालनालिकेरमहाद्रुमैः ।
यद्धङ्कयति हस्ताभैः समर्धमिव नन्दनम् ॥

अपि च ।

विविधाद्भुतचूतलताग्टहकं क्वचिदागतसारसहंसबकम् ।
सुमनोहरगन्धरणद्भ्रमरं द्युसदामपि विस्मयतोषकरम् ॥
स च तत्र मया सहितो विमलः सरलो मनसा बकपूतमलः ।
उपगत्य तदा सुचिरं विजने रमते स्म मृगाक्षि मनोज्ञवने ॥

अत्रान्तरे किं संपन्नं ।

नूपुरारवसंमिश्रः साशङ्को निभृतो ध्वनिः ।
कयोश्चिज्जल्पतोर्दूरादागतः कर्णकोटरम् ॥

ततो विमलेनाभिहितं । वयस्य वामदेव कस्यायं ध्वनिः श्रूयते । मयोक्तं । कुमार अस्फुटाक्षरतया न सम्यङ् मयापि लक्षितो बहूनां चात्र ध्वनिः संभाव्यते । यतोऽत्र काननाभोगे विचरन्ति यक्षाः परिभ्रमन्ति नरवराः संभाषन्ते विबुधा रमन्ते सिद्धा हिण्डन्ति पिशाचाः संभवन्ति भूता गायन्ति किन्नराः पर्यटन्ति राक्षसा निवसन्ति किम्पुरुषा विलसन्ति महोरगा ललन्ते गान्धर्वाः क्रीडन्ति विद्याधराः । तस्मात्पुरतो गत्वा निरूपयावः येन निश्ची-

कुमार परिहासोऽयं व्युत्पत्त्यर्थं मया कृतः।
तद्ब्रूहि सर्वं यद्वाच्यं द्विगुणोऽयमनुग्रहः॥

विमलेनोक्तं।

उत्तुङ्गाः पृथुलास्ताम्राः स्निग्धा दर्पणसन्निभाः।
नखा भवन्ति धन्यानां धनभोगसुखप्रदाः॥
सितैः श्रमणता ज्ञेया रूक्षपुष्पितकैः पुनः।
जायते किल दुःशीलो नखैर्लोकेऽत्र मानवः॥
मध्ये संक्षिप्तपादस्य स्त्रीकार्ये मरणं भवेत्।
निर्मांसावुत्कटौ पादौ न प्रशस्तावुदाहृतौ॥
कूर्मोन्नतौ घनौ स्निग्धौ मांसलौ समकोमलौ।
सुश्लिष्टौ चरणौ धन्यौ नराणां सुखसाधकौ॥
ये काकजङ्घाः पुरुषास्तथैवोद्बद्धपिण्डिकाः।
ये दीर्घस्थूलजङ्घाश्च दुःखितास्तेऽध्वगामिनः॥
ये हंसशिखिमातङ्गवृषगत्यनुकारिणः।
नरास्ते सुखिनो लोके दुःखिनोऽन्ये प्रकीर्तिताः॥
जानुद्वयं भवेद्गूढं गुल्फौ वा सुसमाहितौ।
यस्यासौ सुखितो ज्ञेयो घटजानुर्न सुन्दरः॥
ह्रस्वं राजीवसच्छायमुन्नतं मणिके शुभम्।
वक्रं दीर्घं विवर्णं च न लिङ्गमिह शस्यते॥
दीर्घायुष्का भवन्तीह प्रलम्बवृषणा नराः।
उत्कटाभ्यां पुनस्ताभ्यां ह्रस्वायुष्काः प्रकीर्तिताः॥
मांसोपचितविस्तीर्णं शुभकारि कटीतटम्।

तदेव दारिद्र्यकरं विज्ञेयं कृस्सपङ्कटम् ॥
यस्योदरं भवेत्तुल्यं सिंहव्याघ्रशिखण्डिनाम् ।
तथैव वृषमत्स्यानां भोगभोगी स मानवः ॥
वृत्तोदरोऽपि भोगानां भाजनं किल गीयते ।
शूरो निवेदितः प्राज्ञैर्मण्डूकसमकुक्षिकः ॥
गम्भीरा दक्षिणावर्ता नाभिरुक्तेह सुन्दरा ।
वामावर्ता च तुङ्गा च नेष्टा लक्षणवेदिभिः ॥
विशालमुन्नतं तुङ्गं स्निग्धलोमशमार्दवम् ।
वक्षःस्थलं भवेद्धन्यं विपरीतमतोऽपरम् ॥
कूर्मसिंहाश्वमातङ्गसमपृष्ठाः सुशोभनाः ।
बद्धबाहवो दुष्टा दासास्तु लघुबाहवः ॥
प्रलम्बबाहवो धन्याः प्रशस्ता दीर्घबाहवः ।
अकर्मकठिनौ हस्तौ विज्ञेयाः पादवन्नखाः ॥
दीर्घो मेषसमः स्कन्धो निर्मांसो भारवाहकः ।
मांसलो लक्षणज्ञानां लघुस्कन्धो मतः किल ॥
कष्टो दुःखकरो ज्ञेयः क्षगो दीर्घश्च यो भवेत् ।
स कम्बुसन्निभः श्रेष्ठो वलित्रयविराजितः ॥
लम्बोष्ठो दुःखितो नित्यं पीनोष्ठः सुभगो भवेत् ।
विषमोष्ठो भवेद्भीरुर्लम्बोष्ठो भोगभाजनम् ॥
शुद्धाः समाः शिखरिणो दन्ताः स्निग्धा घनाः शुभाः ।
विपरीताः पुनर्ज्ञेया नराणां दुःखहेतवः ॥
द्वात्रिंशद्रदनो राजा भोगी स्यादेकहीनकः ।

त्रिंगता मध्यमो ज्ञेयस्ततोऽधस्ताच्च सुन्दरः ॥
स्तोकदन्ता अतिदन्ता ग्यामदन्ताश्च ये नराः।
मूषकैः समदन्ताश्च ते पापाः परिकीर्तिताः ॥
बीभत्सैश्च करालैश्च दन्तैर्विषमसंस्थितैः।
तेऽत्यन्तपापिनो ज्ञेया दुष्टशीला नराधमाः ॥
या पद्मदलसच्छाया सूक्ष्मा सा शास्त्रवेदिनाम्।
भवेज्जिह्वा विशालाचिचिचिता मद्यपायिनाम् ॥
शूराणां पद्मसच्छायं भवेत्तालु मनोरमम्।
कृष्णं कुलक्षयकरं नीलं दुःखस्य कारणम् ॥
हंससारसनादानुकारिणः सुस्वरा नराः।
भवन्ति सुखिनः काकखरनादास्तु दुःखिताः ॥
दीर्घया सुखिनो नित्यं सुभगस्तु विशुद्धया।
नसा चिपिटया पापश्चौरः कुञ्चितनासिकः ॥
नीलोत्पलदलच्छाया दृष्टिरिष्टा मनस्विनाम्।
मधुपिङ्गा प्रशस्तैव पापा मार्जारसन्निभा ॥
सद्दृष्टिर्जिह्मदृष्टिश्च रौद्रदृष्टिश्च केकरा।
दीनातिरक्ता रूक्षा च पिङ्गला च विगर्हिता ॥
इन्दीवराभा धन्यानां गम्भीरा चिरजीविनाम्।
विपुला भोगिनां दृष्टिरुच्छला स्तोकजीविनाम् ॥
काणादरतरोऽन्धः स्यात्केकराद्पि काणकः।
वरमन्धोऽपि काणोऽपि केकरोऽपि न कातरः ॥
अवद्धलच्या सततं घूर्णते कारणं विना।

रूक्षाभा म्लानरूपा च सा दृष्टिः पापकर्मणाम् ॥
अधो निरीक्षते पापः सरलं ऋजुरीक्षते ।
ऊर्ध्वं निरीक्षते धन्यस्तिरश्चीनं तु कोपनः ॥
दीर्घे पृथुलरूपे च मानसौभाग्यशालिनाम् ।
भ्रुवौ नराणां हीने तु योषिदर्थे महापदाम् ॥
लघुस्थूलौ महाभोगौ कर्णौ तौ धनभागिनाम् ।
आखुकर्णे भवेन्मेधा लोमशौ चिरजीविनाम् ॥
ललाटपट्टो विपुलश्चन्द्राभः सम्पदाकरः ।
दुःखिनामतिविस्तीर्णः संक्षिप्तः स्वल्पजीविनाम् ॥
वामावर्तो भवेद्यस्य वामायां दिशि मस्तके ।
निर्लक्षणः क्षुधाक्षामो भिक्षामश्नात्यसौ रूक्षिकाम् ॥
दक्षिणो दक्षिणे भागे यस्यावर्तस्तु मस्तके ।
तस्य नित्यं प्रजायेत कमला करवर्तिनी ॥
यदि स्याद्दक्षिणे वामो दक्षिणो वामपार्श्वके ।
पश्चात्काले ततस्तस्य भोगा नास्त्यत्र संशयः ॥
स्फुटिता रूक्षमलिनाः केशा दारिद्र्यहेतवः ।
सुखदास्ते मृदुस्निग्धा वल्गुभाः केशिहेतवः ॥

अन्यच्च ।

उरोमुखललाटानि पृथूनि सुखभागिनाम् ।
गम्भीराणि पुनस्त्रीणि नाभिः सत्त्वं स्वरस्तथा ॥
केशदन्तनखाः सूक्ष्मा भवन्ति सुखहेतवः ।
कण्ठः पृष्ठं तथा जङ्घे ह्रस्वं लिङ्गं च पूजितम् ॥

रक्ता जिह्वा भवेद्धन्या पाणिपादतलानि च।
पृथुलाः पाणिपादास्तु धन्यानां दीर्घजीविनाम्॥
स्निग्धदन्तः शुभाहारः सुभगः स्निग्धलोचनः।
नरोऽतिदीर्घो ह्रस्वश्च स्थूलः कृष्णश्च निन्दितः॥
त्वचि रोमसु दन्तेषु जिह्वायां चिकुरेषु च।
नेत्रयोश्चातिकृष्णा ये ते न धन्याः प्रकीर्तिताः॥
पञ्चभिः शतमुद्दिष्टं चतुर्भिर्नवतिस्तथा।
त्रिभिः षष्टिः समुद्दिष्टा लेखाङ्कैर्भालवर्तिभिः॥
चत्वारिंशत्पुनः प्रोक्तं वर्षाणि नरजीवितम्।
ताभ्यां द्वाभ्यां तथैकेन त्रिंशद्वर्षाणि सुन्दर॥

किं च।

अक्षिष्वर्थाः सुखं मांसे त्वचि भोगाः स्त्रियोऽस्थिषु।
गतौ यानं स्वरे चाज्ञा सर्वं सत्त्वे प्रतिष्ठितम्॥
गतेर्धन्यतरो वर्णो वर्णाद्धन्यतरः स्वरः।
स्वराद्धन्यतरं सत्त्वं सर्वं सत्त्वे प्रतिष्ठितम्॥
यथा वर्णस्तथा रूपं यथा रूपं तथा मनः।
यथा मनस्तथा सत्त्वं यथा सत्त्वं तथा गुणाः॥
तदिदं ते समासेन वर्णितं नरलक्षणम्।
अधुना योषितां भद्र लक्षणं मे निशामय॥

मयोक्तं।

कुमार भवता तावदाधारमिह कीर्तितम्।
सर्वस्य लक्षणस्यास्य सत्त्वमत्यन्तनिर्मलम्॥

तच्च किं यादृशं जातं तादृगेवात्र तिष्ठते।
किं वा कथंचिद्वर्धेत नराणामिह जन्मनि॥

विमलेनोक्तं।

सन्ति संवर्धनोपायाः सत्त्वस्यात्रैव जन्मनि।
ते चेमे ज्ञानविज्ञानधैर्यस्मृतिसमाधयः॥
ब्रह्मचर्यं दया दानं निःस्पृहत्वम्तं तपः।
औदासीन्यं च सर्वत्र सत्त्वसंशुद्धिहेतवः॥
एतैरविमलं सत्त्वं शुद्ध्युपायैर्विशुध्यति।
मृज्यमान इवादर्शः क्षारचेलकरादिभिः॥

यतः।

भावस्तेहं निराकृत्य रूक्षयन्ति न संशयः।
भावा एतेऽन्तरात्मानं सेव्यमानाः पुनः पुनः॥
रूक्षीभूतात्पतत्यस्मादात्मनो मलसञ्चयः।
ततः शुद्धा भवेल्लेश्या सा च सत्त्वमिहोच्यते॥
शुद्धे च सत्त्वे कुर्वन्ति लक्षणानि वहिर्गुणम्।
अपलक्षणदोषाश्च जायन्ते नैव बाधकाः॥
तदेवं भद्र विद्यन्ते ते भावा यैर्विवर्धते।
समस्तगुणसंभाराधारं तत्सत्त्वमुत्तमम्॥

एवं च वदति विमले

मया भद्रे न विज्ञातो भावार्थस्तत्र कश्चन।
तथापि भगिनीदोषात्तं प्रतीदं प्रजल्पितम्॥
कुमार साधु साधूक्तं नष्टो मे संशयोऽधुना।

तत्तावद्वर्णयेदानीं लक्षणं मम योषिताम् ॥
अन्यच्च कीदृशं तावदिदं ते प्रतिभासते।
मिथुनं लक्षणैर्येन जातस्ते विस्मयोऽतुलः ॥

विमलेनोक्तं। आकर्णय।

चक्रवर्ती भवत्येव नरोऽमूदृशलक्षणैः।
ललनापीदृशी भद्र भार्या तस्यैव जायते ॥
तेन मे विस्मयो जातो दृष्ट्वेदं मिथुनोत्तमम्।
निशामय ततो भद्र लक्षणं योषितोऽधुना ॥

मयोक्तं। कथयतु कुमारः। विमलेनोक्तं।

मुखमर्धं शरीरस्य सर्वं वा मुखमुच्यते।
ततोऽपि नासिका श्रेष्ठा नासिकातोऽपि लोचने ॥
चक्रं पद्मं ध्वजं छत्रं स्वस्तिकं वर्धमानकम्।
यासां पादतले विद्यास्ताः स्त्रियो राजयोषितः ॥
दासत्वं पृथुलैः पादैर्वक्रैः शूर्पनिभैस्तथा।
शुष्कैर्दारिद्र्यमाप्नोति प्रोक्तं चेति मुनेर्वचः ॥
अङ्गुल्यो विरला रूक्षा यस्याः कर्मकरी तु सा।
स्थूलाभिर्दुःखमाप्नोति दारिद्र्यं च न संशयः ॥
श्लक्ष्णाभिः संहताभिश्च सुवृत्ताभिस्तथैव च।
रक्ताभिर्नातिदीर्घाभिरङ्गुलीभिः सुखान्विता ॥
पीनौ सुसंहतौ स्निग्धौ सिरारोमविवर्जितौ।
हस्तिहस्तनिभौ यस्या जङ्घोरू सा प्रशस्यते ॥
विस्तीर्णमांसला गुर्वी चतुरस्रातिशोभना।

समुन्नतनितम्बा च कटिः स्त्रीणां प्रशस्यते ॥
उदरेण शिरालेन निर्मांसेन क्षुधार्दिता ।
विलग्नमध्यशोभेन तेनैव सुखभागिनी ॥
कुनखैः सव्रणैः खिन्नैर्विस्तीर्णैः रोमशैः खरैः ।
विकृतैः पाण्डुरै रूक्षैर्नार्यो हस्तैः सुदुःखिताः ॥

यावच्चैवं किल विस्तरेण निवेदयिष्यति मम नारीलक्षणं विमलास्तावदकाण्ड एव किं संपन्नं ।

आकाशे भास्कराकारौ निष्कृष्टासी विभीषणौ ।
नरौ विलोकितौ तूर्णमागच्छन्तौ तदा मया ॥

ततः ससंभ्रमं तदभिमुखमवलोकयता मयाभिहितं । कुमार कुमारेति। ततो विमलेनापि विस्फारिता किमेतदिति चिन्तयता तदभिमुखं विमलकोमलकमलदलविलासलासिनी दृष्टिः। अत्रान्तरे प्राप्तौ लतागहनकस्योपरि तौ पुरुषौ । ततोऽभिहितमेकेन। अरेरे निर्लज्ज पुरुषाधम नास्ति नश्यतोऽपि भवतो मोक्षः । तदिदानीं सुदृष्टं कुरु जीवलोकं । स्मरेष्टदेवतां पुरुषो वा भवेति। एतच्चाकर्ण्यासौ लतागहनकमध्यवर्ती पुरुषो धीरो भवेति संस्थाप्य तां ललनामरेरे न विस्मर्तव्यमिदमात्मजल्पितं पश्याम को वाच नश्यतीति ब्रुवाणः समाकृष्य करवालमुत्पतितस्तदभिमुखं ।

ततस्ताभ्यां समं तस्य विमलत्खड्गवारणम् ।
प्रेङ्खत्खणखणारावसिंहनादातिभीषणम् ॥
अनेककरणोद्दामवल्गनोद्धतिबन्धुरम् ।
जातमायोधनं भीममाकाशे कृतविस्मयम् ॥

तयोश्चैकः पुरुषो मुहुर्मुहुर्लतागृहकं प्रवेष्टुमभिवाञ्छति स्म। ततः सा बाला भयविह्वला वेपमानपयोधरा हरिणिकेव सिंहत्रासिता दशस्वपि दिक्षु चक्षुः क्षिपन्ती निर्गत्य पलायितुं प्रवृत्ता। ततो दृष्ट्वा विमलकुमारमभिहितमनया। त्रायस्व पुरुषोत्तम त्रायस्व गतास्मि तवाहं शरणं। विमलेनोक्तं। सुन्दरि धीरा भव नास्त्यधुना ते भयं। अत्रान्तरे तद्ग्रहणार्थं प्राप्तः स पुरुषः। स च विमलकुमारगुणगणोपार्जिततया तस्मिन्नेव गगने स्तम्भितो वनदेवतया।

ततो विस्फारिताक्षोऽसौ विलक्षो विगतक्रियः।
चित्रभित्ताविव न्यस्तो गगनस्थः स्थितो नरः॥

अत्रान्तरे स तस्य द्वितीयः पुरुषो निर्जितस्तेन मिथुनकेन पलायितुं प्रवृत्तः। लग्नस्तत्पृष्ठतो मिथुनकः। दृष्टः स्तम्भितनरेण। गृहीतोऽसौ रोषोत्कर्षेण। प्रवृत्ता पृष्ठतो गमनेच्छा। लक्षितो देवतया तद्भावः। ततश्चोत्तम्भितोऽसावनया। प्रवृत्तः पृष्ठतो वेगेन। इतश्च लङ्घितौ दृष्टेर्गोचरमितरौ। गतः सोऽपि तदनुमार्गेणादर्शनं। ततः सा बाला आर्यपुत्र हा आर्यपुत्र क्व यासि मां मुक्त्वा मन्दभाग्यामिति प्रलपितुं प्रवृत्ता। संस्थापिता कथंचिद्विमलेन मया च। गता कियत्यपि वेला। अत्रान्तरे

जयश्रिया परीताङ्गो लसत्कान्तिमनोहरः।
समागतः स वेगेन तस्या मिथुनको नरः॥

ततस्तं दृष्ट्वा सा बालिकामृतसेकसिक्तेव गता परमपरितोषं। निवेदितश्च तया तस्मै वृत्तान्तः। ततः स पुरुषो विमलकुमारं प्रणम्येदमाह।

बन्धुर्भ्राता पिता माता जीवितं च नरोत्तम ।
त्वं मे येन प्रिया धीर रचितेयं मम त्वया ॥

अथवा ।

दासोऽहं किङ्करो वश्यः प्रेष्यस्ते कर्मकारकः ।
तद्दीयतां ममादेशः किं करोमि तव प्रियम् ॥

विमलेनोक्तं । महासत्त्व अलमत्र सम्भ्रमेण । के वयमत्र रचितुं । रचितेयं स्वमाहात्म्येनैव भवता । केवलं महत्कौतुकं मे । कथयतु भद्रः कोऽयं वृत्तान्तः किं वा ते गतस्य संपन्नमिति । तेनोक्तं । यद्येवं ततो निषीदतु कुमारः । महतीयं कथा । ततो निषण्णाः सर्वेऽपि लतागृहके । स प्राह । कुमाराकर्णय ।

अस्ति शरच्छशधरकरनिकरधवलो रजतमयो वैताढ्यो नाम पर्वतः । तत्र चोत्तरदक्षिणे द्वे श्रेणी । तयोश्च षष्टिः पञ्चाशच्च यथाक्रमं विद्याधरपुराणि वसन्ति । तत्र दक्षिणश्रेण्यामस्ति गगनशेखरं नाम पुरं । तत्र मणिप्रभो राजा । तस्य कनकशिखा देवी । तस्याश्च रत्नशेखरस्तनयो रत्नशिखामणिशिखे च दुहितरौ । तत्र रत्नशिखा मेघनादस्य दत्ता मणिशिखा त्वमितप्रभस्य । ततस्तयो रत्नशिखामेघनादयोर्जातोऽहं तनयः । प्रतिष्ठितं मे नाम रत्नचूड इति । मणिशिखामितप्रभयोस्तु द्वौ सूनू जातावचलश्च चपलश्च । रत्नशेखरस्य च रतिकान्ता पत्नी । तस्याश्चेयमेका चूतमञ्जरी दुहिता जातेति । सहक्रीडितानि सर्वाण्यपि वयं बालकाले । प्राप्तानि कुमारभावं । गृहीताः कुलक्रमायाता विद्याः । इतश्च रत्नशेखरस्य बालवयस्योऽस्ति चन्दनो नाम सिद्धपुत्रकः । स च ।

सर्वज्ञागमसद्भावभावितो निपुणस्तथा।
निमित्ते ज्योतिषे मन्त्रे सतन्त्रे नरलक्षणे॥
ततस्तदीयसम्पर्कात्संजातो रत्नशेखरः।
गाढं रक्तो दृढं भक्तो धर्मे सर्वज्ञभाषिते॥
ततो मदीयतातार्य मेघनादाय सादरम्।
दत्तस्तेनापि सद्बुद्धौ भगिन्यै मह्यमेव च॥

इतश्च।

निर्दिष्टश्चन्दनेनाहं किंचिदालोक्य लक्षणम्।
यथायं दारको विद्याचक्रवर्ती भविष्यति॥

अत्रान्तरे मयोक्तं। कुमार संवदति तत्तावकीनं वचनं। विमलेनोक्तं। वयस्य वामदेव न मामकीनं तत्किं तर्ह्यागमवचनं। तत्र च कुतो विसंवादः। रत्नचूडेनोक्तं। ततस्तेन मदीयमातुलेन रत्नशेखरेण साधर्मिकोऽयमुचितोऽयं सलक्षणोऽयमिति मत्वा दत्ता मह्यमियं चूतमञ्जरी। परिणीता मया। ततः प्रकुपितावचलचपलौ। न च मां परिभवितुं शक्नुतः। मृगयेते छिद्राणि। ततो मया छलघाताशङ्कया मुक्तो मुखरनामा चरः। तेन चागत्य निवेदितं मे। यथा कुतश्चिदवाप्ता ताभ्यामचलचपलाभ्यां काली विद्या तत्साधनार्थं तौ कुत्रचिद्गताविति। मयोक्तं। भद्र यदा तावागच्छतस्तदा निवेदनीयं भवता। मुखरेणोक्तं। यदाज्ञापयति देवः। ततोऽद्य प्रभातसमये निवेदितं तेन मे। यथा। देव समागतौ तौ। सिद्धा काली विद्या। जातं तयोर्मन्त्रणं। अभिहितमचलेन यथा चपल मया रत्नचूडेन सह योद्धव्यं भवता तु

चूतमञ्जरी हरणीयेति । एतदाकर्ण्य देवः प्रमाणं । ततो मया चिन्तितं । शक्तोऽहं सविद्ययोरपि तयोर्निराकरणे । केवलं न मारयितव्यौ मातृष्वसुः पुत्रौ तौ तावद्चलचपलौ मया धर्मचतिभयाल्लोकापवादभयाच्च । दुष्टशीलश्चासौ चपलः । ततश्छलेन हत्वा यद्येनां चूतमञ्जरीं विनाशयिष्यति ततो मे गृहतो मुञ्चतश्चैनां लाघवं संपत्स्यते । न चान्योऽस्ति मे सहायो यो युध्यमानस्य मे चूतमञ्जरीं रक्षति । तस्मादत्रावसरे ममापक्रमणं श्रेयः । ततो गृहीत्वा चूतमञ्जरीमपक्रान्तोऽहं । दृष्टपूर्वं च मयेदं बहुशः क्रीडानन्दनमुद्यानं । ततोऽत्र समागत्य स्थितो लतागृहके यावदनुमार्गेणैव मे समागतौ तावचलचपलौ । समाहूतश्चाहं गगनवर्तिनैव सतिरस्कारं मत्सर्धं निष्ठुरमचलेन । ततस्तद्वचनमाकर्णयतो मे हृदयं कीदृशं संपन्नं ।

> इतः प्रियतमास्नेहतन्तुभिर्बन्धकीलितम् ।
> इतश्च शत्रुदुर्वाक्यैः सङ्गामरसभासुरम् ॥
> न तिष्ठति न वा याति मूढं कर्तव्यताकुलम् ।
> डोलारूढमिवाभाति चणं मे हृदयं तदा ॥

तथापि गाढामर्षवशेन समुत्पतितोऽहं तदभिमुखं । सञ्जमायोधनं । दृष्टं च तन्नायो युष्माभिः । यावन्नष्टोऽचलो गतोऽहं तदनुमार्गेण । यावत्प्राप्तोऽसौ मया उत्तेजितः परुषवचनैः वलितो मदभिमुखं । पुनर्लग्नमायोधनं । ततो मया दत्त्वा बन्धमास्फोटितोऽसावचलो गगनस्थेनैव भूतले । ततस्तस्य चूर्णितान्यङ्गोपाङ्गानि विगलितं पौरुषं संजातं दैन्यं न वहन्ति विद्या निष्पन्दं शरीरं ।

ततो मया चिन्तितं। सर्वथा तथा संपन्नो यथा न पुनरागच्छति। किं तु।

हतं मुष्टिभिराकाशं कण्डितास्तु तुषा मया।
योऽस्याहं पृष्ठतो लग्नस्तां हित्वा चूतमञ्जरीम्॥
यतः सैकाकिनी बाला भयेनैव मरिष्यति।
अथवा चपलः पापः स तां नूनं हरिष्यति॥
यद्वा किमत्र वक्तव्यं हृतैव ननु बालिका।
गृहीत्वा तां गतो दुष्टः किं तु नो लक्षितो मया॥

तदधुना क्व याति स दुरात्मेति विचिन्त्य चलितोऽहं वेगेन। यावद्दृष्टो मया सम्मुखमागच्छंश्चपलः। ततो मया चिन्तितं। अये किमेष चपलः समागतः। किं न दृष्टानेन चूतमञ्जरी। किं वानिच्छन्ती सुरतं रोषान्निपातितानेन पापेन। सर्वथा तस्यां स्वाधीनायां जीवन्त्यां वा न कथंचिदस्यागमनं युज्यते। तथाहि।

शून्ये दधिघटीं दृष्ट्वा काकः स्थगनवर्जिताम्।
लब्धस्वादोऽपि तां मुक्त्वा कथमन्यत्र गच्छति॥

ततो निश्चितं न जीवति मे प्रियतमा। यावच्चैवमहं चिन्तयामि तावदापतितश्चपलः। लग्नं युद्धं। ततः सोऽपि मया तथैवास्फोटितो भूतले। जाता तथापि सैव वार्ता। ततो हा हन्त किं मृता सा किं नष्टा सा किं विनष्टा सा किं क्वचिद्गोपायिता सा किमन्यस्य कस्यचित्करीभूतेति प्रियतमागोचरानेककुविकल्पकल्लोलकल्लोलशालमालाकुलचेतोनदीस्रोतःप्रवे प्रवमानः प्राप्तोऽहमिममुद्देशं। दृष्टा प्रियतमा। ततः समुच्छ्वसितं हृदयेन पुलकितमङ्गेन

स्थिरीभूतं चेतनया कृतमास्पदं शरीरे सुखासिकया विगतं चित्तोद्वेगेनेति। कथितं चानया मे समस्तवृत्तान्तं भवदीयमाहात्म्यं। तदेष मया निवेदितः समासेन प्रस्तुतवृत्तान्तः। एवं च स्थिते।

तदेनां रचता तात रचितं मम जीवितम्।
कृता कुलोन्नतिर्धीर दत्तं मे निर्मलं यशः॥
किं वात्र बहुनोक्तेन नास्ति तद्वस्तु किंचन।
महानुभाव लोकेऽत्र यन्न मे विहितं त्वया॥

सुप्रसिद्धं चेदं लोके। यदुत

कृते प्रत्युपकारोऽत्र वणिग्धर्मो न साधुता।
ये तु तत्रापि मुह्यन्ति पशवस्ते न मानुषाः॥
तद्दीयतां ममादेशः क्रियतां मदनुग्रहः।
येन संपादयत्येष प्रियं ते किङ्करो जनः॥

विमलेनोक्तं। अहो कृतज्ञशेखर अलमतिसम्भ्रमेण। किं वा न संपन्नमस्माकं युष्मद्दर्शनेन। किमतोऽप्यपरं प्रियतरमस्ति। तथाहि।

वचःसहस्रेण सतां न सुन्दरं हिरण्यकोव्यापि न वा निरीक्षितम्।
अवाप्यते सज्जनलोकचेतसा न कौटिलचैरपि भावमीलनम्॥

किं वात्र मया विहितं ते येनैवमात्मानं पुनः पुनः संभ्रमयति भद्रः। इत्येवं वदति विमले कुतः सुजनेऽर्थित्वं कर्तव्यश्चास्य मया कश्चित्प्रत्युपकारो न भवत्यन्यथा मे चित्तनिर्वृत्तिरिति मन्यमानेन प्रकटितं रत्नचूडेनैकं रत्नं हस्ततले। तच्च कीदृशं।

किं नीलं किमिदं रक्तं किं पीतं यदि वा सितम्।
किं कृष्णमिति सुव्यक्तं लोकदृष्ट्या न लक्ष्यते॥

द्योतिताशेषदिक्चक्रं सर्ववर्णविराजितम्।
लसदच्छप्रभाजालैर्दिक्षु बद्धेन्द्रकार्मुकम्॥

तच्च दर्शयित्वाभिहितं रत्नचूडेन। कुमार।

सर्वरोगहरं धन्यं जरादारिद्र्यनाशनम्।
गुणैश्चिन्तामणेस्तुल्यमिदं रत्नं सुमेचकम्॥
दत्तं ममेदं देवेन तोषितेन स्वकर्मणा।
इह लोके करोत्येतत्सर्वाशापूरणं नृणाम्॥

तदस्य ग्रहणेन ममानुग्रहं करोतु कुमारो नान्यथा मे धृतिः संपद्यते। विमलेनोक्तं। महात्मन्न कर्तव्यो भवताग्रहो न च विधेया चेतस्यवभावना। दत्तमिदं त्वया गृहीतं मया। केवलं तवैवेदं सुन्दरं। अतः संगोप्यतामिदं। मुच्यतामतिसंभ्रमः। ततश्चूतमञ्जर्योक्तं। कुमार न कर्तव्यो भवतार्यपुत्रस्यायमभ्यर्थनाभङ्गः। तथाहि।

निःस्पृहा अपि चित्तेन दातरि प्रणयोद्यते।
सन्तो नाभ्यर्थनाभङ्गं दाक्षिण्यादेव कुर्वते॥
एवं च चूतमञ्जर्यां वदन्त्यां विमलः किल।
किमुत्तरं ददामीति यावच्चिन्तयते हृदि॥
तावदस्याञ्चले तस्य रत्नचूडेन सादरम्।
तद्रत्नं बद्धमेवोच्चैर्दिव्यकर्पटके स्थितम्॥
अथ तादृशरत्नस्य लाभेऽपि विगतस्पृहम्।
मध्यस्थं हर्षनिर्मुक्तं विमलं वीक्ष्य चेतसा॥
स रत्नचूडः स्वे चित्ते तद्गुणैर्गाढभावितः।
तदा विचिन्तयत्येवं विस्मयोत्फुल्ललोचनः॥

अहो अपूर्वं माहात्म्यमहो निःस्पृहतातुला ।
इदमस्य कुमारस्य लोकातीतं विचेष्टितम् ॥
यदा यस्येदृशं जातं चित्तरत्नं महात्मनः ।
तस्यास्य बाह्यैर्लोकेऽत्र किं वा रत्नैः प्रयोजनम् ॥
एतदेवंविधं चित्तं जायते पुण्यकर्मणाम् ।
प्रायोऽनेकभवैर्धर्मकर्मरञ्जितचेतसाम् ॥
ये तु पापाः सदा जीवाः शुद्धधर्मबहिष्कृताः ।
तेषां न संभवेत्प्रायो निर्मलं चित्तमीदृशम् ॥

ततश्चैवमवधार्य चिन्तितं रत्नचूडेन । अये पृच्छामि तावेदन-मस्य कुमारस्य सहचरं । यदुत कुतत्योऽयं कुमारः किंनामा किंगोत्रः किमर्थमिहागतः किं वास्यानुष्ठानमिति । ततः पृष्टोऽहं यथाविवचितमेकान्ते कृत्वा रत्नचूडेन । मयापि कथितं तस्मै । यथा । अत्रैव वर्धमानपुरे क्षत्रियस्य धवलनृपतेः पुत्रोऽयं विमलो नाम । अभिहितं चानेन । यथा वयस्य वामदेव यदिदं क्रीडा-नन्दनमुद्यानमतिरमणीयं जनवादेन श्रूयते तन्मम जन्मापूर्वं ततो ऽद्य गच्छावस्तद्दर्शनार्थं । मयोक्तं । यदाज्ञापयति कुमारः । ततः समागताविह । श्रुतो युवयोः शब्दः । तदनुसारेण गच्छद्भ्यां दृष्टा पदपद्धतिः । तया लक्षितं नरमिथुनं । ततो लतागृहके दृष्टौ युवां । निरूपितौ कुमारेण । कथितं मे लक्षणं । निर्दिष्टं च यथायं चक्र-वर्तीयं चास्यैव भार्या भविष्यति । तदिदमिहास्यागमनप्रयोजनं । अनुष्ठानं पुनरस्य सर्वं यथा चेष्टितं ज्ञापनीयं विदुषामभिमतं लोकानामाह्लादकं बन्धूनामभिहचितं वयस्यानां स्पृहणीयं मुनीना-

अथ वायुप्रदानेन संजातः स्पष्टचेतनः।
पृष्टं किमेतदित्येवं रत्नचूडेन सादरम्॥
ततः प्रादुर्भवद्भक्तिः स्फुटरोमाञ्चभूषणः।
हर्षोत्फुल्लविशालाक्षः प्रबद्धाञ्जलिबन्धुरः॥
विमलो रत्नचूडस्य गृहीत्वा चरणद्वयम्।
आनन्दोदकपूर्णाक्षः प्रणनाम मुहुर्मुहुः॥

प्राह च।

शरीरं जीवितं बन्धुर्नाथो माता पिता गुरुः।
देवता परमात्मा च त्वं मे नास्त्यत्र संशयः॥
येनेदं दर्शनादेव पापप्रक्षालनक्षमम्।
त्वया मे दर्शितं धीर यद्बिम्बं भवभेदिनः॥

एतद्धि दर्शयता रत्नचूड भवता दर्शितो मे मोक्षमार्गः कृतं परमसौजन्यं छेदिता भववल्लरी उन्मूलितं दुःखजालं दत्तं सुखकदम्बकं प्रापितं शिवधामेति। रत्नचूडेनोक्तं। कुमार नाहमद्यापि विशेषतोऽवगच्छामि किमत्र संपन्नं भवतः। विमलेनोक्तं। आर्य संपन्नं मे जातिस्मरणं। स्मृतोऽद्यदिनमिवातीतो भूरिभवसन्तानः। यतः पुरोऽपि निवेशिता मया भक्तिभरनिर्भरेण भूरिभवेषु वर्तमानेन भगवद्बिम्बे दृष्टिः निर्मलीकृतं सम्यग्ज्ञाननिर्मलजलेन चित्तरत्नं रञ्जितं सम्यग्दर्शनेन मानसं सात्मीकृतं सदनुष्ठानं भावितो भावनाभिरात्मा वासितं तत्साधुपर्युपासनयान्तःकरणं सात्मीभूता मे समस्तभूतेषु मैत्री गतोऽङ्गाङ्गीभावं गुणाधिकेषु प्रमोदः धारितं यक्ष्यशिश्ये क्लिश्यमानेषु कारुण्यं

दृढीभूता दुर्विनीतेषूपेक्षा निश्चलीभूतं वैषयिकसुखदुःखयोरौदासीन्यं तथा परिणतः प्रशमः परिचितः संवेगः चिरसंस्तुतो भवनिर्वेदः प्रगुणिता करुणा अनुगुणितमास्तिक्यं प्रगुणीभूता गुरुभक्तिः चेत्त्रीभूतौ तपःसंयमाविति ततो यावद्दृष्टं मयेदं भुवनभर्तुर्भगवतो निष्कलङ्कं बिम्बं तावदहं सिक्त इवामृतरसेन पूरित इव रत्या स्वीकृत इव सुखासिकया भृत इव प्रमोदेन। ततः स्फुरितं मम हृदये। यदुत

रागद्वेषभयाज्ञानशोकचिह्नैर्विवर्जितः।
प्रशान्तमूर्त्तिर्देवोऽयं लोचनानन्ददायकः॥
दृश्यमानो यथा धत्ते ममाह्लादं तथा पुरा।
नूनं क्वचिन्मया मन्ये दृष्टोऽयं परमेश्वरः॥
एवं च चिन्तयन्नेव लोकातीतं रसान्तरम्।
प्रविष्टोऽनुभवद्वारसंवेद्यमतिसुन्दरम्॥
यतो भवात्समारभ्य प्राप्तं सम्यक्त्वमुत्तमम्।
ततः स्मृता मया सर्वे तदाराच्चिखिला भवाः॥

तदिदं महात्मस्तव मे संपन्नं। अतः कृतं तन्मे भवता यत्परमगुरवः कुर्वन्तीति ब्रुवाणो रत्नचूडचरणयोर्निपतितः पुनर्विमलकुमारः। ततो नरोत्तम अलमलमतिसंभ्रमेणेति वदता समुत्थापितोऽसौ रत्नचूडेन साधर्मिक इति वन्दितः सविनयं अभिहितं च। कुमार संपन्नमधुना मे समीहितं परिपूर्णा मनोरथाः कृतस्ते प्रत्युपकारो यदेवं मादृशजनोऽपि ते परिचिततत्त्वमार्गप्रत्यभिज्ञाने कारणभावं प्रतिपन्न इति। स्थाने च कुमारस्यायं हर्षातिरेकः।

मपीति। केवलं न प्रतिपन्नमनेनाद्यापि किंचिद्दर्शनं। रत्नचूडेन चिन्तितं। अये सर्वं सुन्दरमाख्यातमनेन। तदिदमत्र प्राप्तकालं। दर्शयाम्यस्य भगवद्बिम्बं। उचितोऽयं तद्दर्शनस्य। संपत्स्यतेऽस्य तद्दर्शनेन महानुपकारः। एवं च कुर्वतो ममापि प्रत्युपकारकरणमनोरथः परिपूर्णो भविष्यतीति। विचिन्त्याभिहितोऽनेन विमलकुमारः। यथा। कुमार इह क्रीडानन्दने समागतः कश्चित्पूर्वं मदीयमातामहो मणिप्रभः। प्रतिभातमिदमतिकमनीयं काननं। ततोऽत्र पुनः पुनर्विद्याधराणामवतारार्थं महाभवनं विधाय प्रतिष्ठितं तेन भगवतो युगादिनाथस्य बिम्बं। अत एव वञ्चगोऽहमिहागतः पूर्वं। ततो ममानुग्रहेण तद्द्रष्टुमर्हति कुमारः। विमलेनोक्तं। यदादिशत्यार्यः। तदाकर्ण्य हृष्टो रत्नचूडः। ततो गता वयं भवनाभिमुखं। दृष्टं भगवतो मन्दिरं। तच्च कीदृशम्।

विमलस्फटिकच्छायं स्वर्णराजिविराजितम्।
तडिद्वलयसंयुक्तशरदम्बुधरोपमम्॥
विलसद्वज्रवैडूर्यपद्मरागमणित्विषा।
नष्टान्धकारसम्बन्धमुद्योतितदिगन्तरम्॥

अपि च।

लसदच्छाच्छनिर्मलस्फटिकमणिनिर्मितकुट्टिमसंक्रान्तबिम्बस्थापनीयमानं स्तम्भविन्यस्तविद्रुमकिरणकदम्बकरम्बमुक्ताफलावचूलं अवचूलविरचितमरकतमयूखश्यामायमानसितचमरनिकरं सितचमरनिकरदण्डचामीकरप्रभापिञ्जरितादर्शमण्डलं आदर्शमण्डलगतविराजमानारुणमणिहारनिकुरम्बं हारनिकुरम्बावलम्बितविशदहाटक-

किङ्किणीजालमिति। तत्र चैवंविधे भुवननाथस्य भवने प्रविश्य तैरवलोकितं भगवतो युगादिनाथस्य बिम्बं। तच्च।

दिचु प्रेङ्खत्प्रभाजालं शातकुम्भविनिर्मितम्।
शान्तं कान्तं निराटोपं निर्विकारं मनोहरम्॥

ततः सर्वैरपि विहितो हर्षभरविस्फारिताचैः प्रणामः। वन्दितं च विशदानन्दपुलकोद्भेदसुन्दरं वपुर्दधानाभ्यां विधिवच्चूतमञ्जरी-रत्नचूडाभ्यां। तच्चेदृशं सचराचरभुवनबन्धोर्भगवतो बिम्बं निरूपयतो विमलकुमारस्य सहसा समुल्लसितं जीववीर्यं विदारितं भूरि-कर्मजालं वृद्धिमुपगता सद्बुद्धिः प्रादुर्भूतो दृढतरं गुणानुरागः। ततश्चिन्तितमनेन। अहो भगवतोऽस्य देवस्य रूपं। अहो सौम्यता अहो निर्विकारता अहो सातिशयत्वं अहो अचिन्त्यमाहात्म्यता। तथाहि।

आकार एव व्याचष्टे निष्कलङ्को मनोहरः।
अनन्तमस्य देवस्य गुणसंभारगौरवम्॥
वीतरागो गतद्वेषः सर्वज्ञः सर्वदर्शनः।
सुनिश्चितमयं देवो बिम्बादेवावगम्यते॥
यावत्संचिन्तयत्येवं मध्यस्थेनान्तरात्मना।
विमलः चालयन्नुच्चैर्मलमात्मीयचेतसः॥
तावत्तस्य समुत्पन्नं स्वजातेः स्मरणं तदा
अतीतभवसन्तानवृत्तान्तस्मृतिकारणम्॥
अथ संजातमूर्छोऽसावचिन्त्यरसनिर्भरः।
पतितो भूतले सद्यः सर्वेषां हृतसंभ्रमः॥

यतः ।

सत्कलत्रे सुते राज्ये द्रविणे रत्नसञ्चये ।
अवाप्ते स्वर्गसौख्ये च नैव तोषो महात्मनाम् ॥

तथाहि ।

तुच्छानि स्वल्पकालानि सर्वाणि परमार्थतः ।
एतानि तेन धीराणां नैव तोषस्य कारणम् ॥
जैनेन्द्रं पुनरासाद्य मार्गं भीमे भवोदधौ ।
सुदुर्लभं महात्मानो जायन्ते हर्षनिर्भराः ॥

तथाहि ।

संप्राप्तस्तत्क्षणादेव मार्गः सर्वज्ञभाषितः ।
शमसातामृतास्वादसंवेदनकरो नृणाम् ॥
अनन्तानन्दसंपूर्णमोक्षहेतुश्च निश्चितः ।
अतः सतां कथं नाम न हर्षोल्लासकारणम् ॥

अन्यच्च ।

सत्त्वानुरूपं वाञ्छन्ति फलं सर्वेऽपि जन्तवः ।
श्वा हि तुष्यति पिण्डेन गजघातेन केसरी ॥
मूषको व्रीहिमासाद्य नृत्यत्युत्तालहस्तकः ।
गजेन्द्रोऽवज्ञया भुङ्क्ते यत्सदत्तं सुभोजनम् ॥

तथा ।

अदृष्टतत्त्वा ये मूढाः स्तोकचित्ता मनुष्यकाः ।
धनराज्यादिकं प्राप्य जायन्ते ते मदोत्कटाः ॥

त्वं तु पूर्वं

चिन्तामणिसमे रत्ने लब्धे मध्यस्थतां गतः।
न लचितो मया धीर हर्षदोषकलङ्कितः॥
अधुनैवं पुनर्धन्यः स्फुटरोमाञ्चसुन्दरः।
सन्मार्गलाभे तुष्टोऽसि साधु साधु नरोत्तम॥

केवलमत्र जने नैवमतिगुरुत्वमारोपणीयं कुमारेण। किमत्र मया विहितं कुमारस्य। निमित्तमात्रं अत्र संपन्नोऽहं। स्वयमेव योग्योऽसि त्वमेवंविधकल्याणपरम्परायाः। मयापि हि तावकीनां पात्रतामुपलभ्यायं विहितो यत्नः। तथाहि।

स्वयंविज्ञातसद्भावा लोकान्तिकसुरैस्तदा।
यदि नाम प्रबोध्यन्ते तीर्थनाथाः कथंचन॥
तथापि ते सुरास्तेषां न भवन्ति महात्मनाम्।
गुरवस्तादृशो पचे द्रष्टव्योऽयं त्वया जनः॥

विमलेनोक्तं। महात्मन्मा मैवं वोचः। न सदृशमिदमस्योदितं भवता। नहि भगवति बोधयितव्ये लोकान्तिकसुराणां निमित्तभावः। भवता तु दर्शयता भगवद्बिम्बं संपादितमेव ममेदं सकलं कल्याणं। इह च।

निमित्तमात्रतां योऽपि धर्मे सर्वज्ञभाषिते।
प्रतिपद्येत जीवस्य स गुरुः पारमार्थिकः॥
एवं मे विदधानस्त्वं गुरुरेव न संशयः।
उचितं तु सतां कर्तुं सद्गुरोर्विनयादिकम्॥

तस्मादुचितमेवेदं सर्वं तावकोपकारस्येति। किं च।

एषा भगवतामाज्ञा सामान्यस्यापि सुन्दरम्।

कार्यः साधर्मिकस्येह विनयो वन्दनादिकः ॥
किं पुनस्ते महाभाग नैवं सद्धर्मदायिनः ।
युज्यते विनयः कर्तुं निर्मिथ्यस्यापि सद्गुरोः ॥
रत्नचूडेनोक्तं । मा मैवमादिशतु कुमारः । तथाहि ।
गुणप्रकर्षरूपस्त्वं पूजनीयः सुरैरपि ।
त्वमेव गुरुरस्माकं तन्नैवं वक्तुमर्हसि ॥
विमलेनोक्तं ।
गुणप्रकर्षरूपाणां कृतज्ञानां महात्मनाम् ।
इदमेव स्फुटं लिङ्गं यद्गुरोर्भक्तिपूजनम् ॥
स महात्मा स पुण्यात्मा स धन्यः स कुलोद्गतः ।
स धीरः स जगद्वन्द्यः स तपस्वी स पण्डितः ॥
यः किङ्करत्वं प्रेष्यत्वं कर्मकारत्वमञ्जसा ।
दासत्वमपि कुर्वाणः सद्गुरूणां न लज्जते ॥
स कायः श्लाघितः पुंसां यो गुरोर्विनयोद्यतः ।
सा वाणी या गुरोः स्तोत्री तन्मनो यद्गुरौ रतम् ॥
अनेकभवकोटीभिरुपकारपरैरपि ।
धर्मोपकारकर्तॄणां निष्क्रयो न विधीयते ॥

अन्यच्चेदमधुना पर्यालोच्यं भवता सार्धं मया । यदुत विरक्तं तावन्मे भवचारकवासाच्चित्तं गृहीता दुःखात्मकतया विषयाः भाविता लोकोत्तरायातास्वादरूपतया प्रशमः । न स्थातव्यमधुना गृहपञ्जरे । गृहीतव्या भागवती दीक्षा । केवलं सन्ति मे तातप्रभृतयो बहवो बान्धवाः । तेषां कः प्रतिबोधनोपायः स्यात् ।

एवं हि तेषां मया बन्धुत्वकार्यमाचरितं भवति यदि तेऽपि मन्नि-
मित्तकं भगवद्भाषिते धर्मे प्रतिबुध्यन्ते नान्यथा। रत्नचूडेनोक्तं।
अस्ति बुधो नामाचार्यः। स यदीह कथंचिदागच्छेत्ततस्तानपि तव
ज्ञातीनवश्यं प्रतिबोधयेत्। स हि भगवान्निधिरतिशयानामा-
करश्चित्तज्ञतानैपुण्यस्य प्रकर्षः प्राणिप्रशमलब्धेरियत्ताभूमिर्वचन-
विन्यासस्येति। विमलेनोक्तं। आर्य क्क पुनरसौ दृष्टो बुध-
सूरिर्भवता। रत्नचूडेनोक्तं। अत्रैव क्रीडानन्दने ऽस्यैव च भगव-
द्भवनस्य द्वारभूमिभागे दृष्टोऽसौ मया यतः समागतोऽहमतीता-
ष्टम्यां सपरिकरो भगवत्पूजनार्थमिह मन्दिरे। प्रविशता च दृष्टं
मया बृहत्तपोधनमुनिवृन्दं। तस्य च मध्ये स्थितः कृष्णो वर्णेन
बीभत्सो दर्शनेन त्रिकोणेन शिरसा वक्रदीर्घया शिरोधरया
चिपिटया नासिकया विरलविकरालेन दशनमण्डलेन लम्बेनोदरेण
सर्वथा कुरूपतयोद्वेगहेतुर्दृश्यमानः केवलं परिशुद्धमधुरगम्भीरेण
ध्वनिना विशदेन वर्णोच्चारणेनार्थसमर्पिकया गिरा धर्ममाचक्षाणो
दृष्टो मयैकस्तपस्वी। संजातश्च मे चेतसि वितर्कः। यथा बत भग-
वतो न गुणानुरूपं रूपं। प्रविष्टोऽहं चैत्यभवने। निवेशिता भक्ति-
सारं भगवद्बिम्बे दृष्टिः। अवतारितं निर्माल्यं। विधापितं सम्मा-
र्जनं। कारितमुपलेपनं। विरचिता पूजा। विकीर्णः पुष्पप्रकरः।
प्रज्वालिता मङ्गलप्रदीपाः। समुल्लासितः सुगन्धिधूपः। निःशेषितं
पूर्वकरणीयं। प्रमार्जितमुपवेशनस्थानं। न्यस्तानि भूमौ जानुकर-
तलानि। निबद्धा भगवद्वदने दृष्टिः। प्रवर्धितः सद्भावनया शुभ-
परिणामः। संजातो भक्त्यतिशयः। प्रावितमानन्दोदकबिन्दुनिष्यन्द-

सन्दोहेण लोचनयुगलं। संपन्नं कदम्बकुसुमसन्निभं रूढहर्षानन्दविशदपुलकोद्भेदसुन्दरं मे शरीरं। पठितो भावार्थानुसारेणगर्भं भक्तिनिर्भरतया शक्रस्तवः। कृतः पञ्चाङ्गप्रणिपातः। निषण्णो भूतले। स्तुतः 'सर्वज्ञप्रणीतप्रवचनोन्नतिकरैर्योगमुद्रया प्रधानस्तोत्रैर्भावसारं भगवान्। रञ्जितं भगवद्गुणैरन्तःकरणं। विहितो भूयः पञ्चाङ्गप्रणिपातः। तदवसरेणैव वन्दिताः प्रमोदवृद्धिजनकाः सूरिप्रभृतयः। समुत्थितो जिनमुद्रया। संपादितं चैत्यवन्दनं। तदन्ते कृतं प्रणिधानं मुक्ताशुक्तिमुद्रया॥ अत्रान्तरे मत्परिवारेण निर्वर्तितं भगवतो बलिविधानं सज्जीकृतं स्नात्रोपकरणं विस्तारिता विविधवस्त्रालङ्कारोल्लोचाः। प्रारब्धं सङ्गीतकं। समापूरिताः कलकाहलाः। चालिताः सुघोषघण्टाः। राणितानि कणकणकभाणकानि। ध्वानिता दिव्यदुन्दुभयः। नादिता मधुरशङ्खाः। वादिताः पटुपटहाः। आस्फालिता घर्घरिकया मृदङ्गाः। समुच्छलितानि कंसालकानि। विजृम्भितः स्तोत्ररवः। प्रवर्तितो मन्त्रजापः। विसृष्टं कुसुमवर्षं। झणझणायिता मधुपावली। अभिषेचितं महार्घरसगन्धौषधिसत्तीर्थोदकैर्विधिना जगज्जीवबन्धोर्भगवतो बिम्बं। प्रवृत्ता मन्थरं चूतमञ्जरी। विलसितमुद्दामानन्दोचितं शेषविलासिनीजनेन। दत्तानि महादानानि। कृतमुचितकरणीयं॥ एवं महता विमर्देन विधाय भगवदभिषेकपूजनं निर्गतोऽहं साधुवन्दनार्थं यावत्तत्रैव तस्य सुसाधुवृन्दस्य मध्ये स्थितः स तपस्वी निविष्टः कनककमले रतिविरहित इव मकरकेतनो रोहिणीवियोजित इव मृगलाञ्छनः शचीविनाकृत इव पुरन्दरः उत्तमकान्तिस्वरभास्वरेणाकारेण उल्लसन्महाप्रभाप्रवाह-

पिञ्जरितमुनिमण्डलः कूर्मोन्नतेन पादतलेन गूढशिराजालेन प्रशस्तलाञ्छनलाञ्छितेन दर्पणाकारनखेन सुश्लिष्टाङ्गुलिना चरण-युगलेन वरकरिकराकारेण जङ्घाद्वयेन कठिनपीनसुवृत्तविस्तीर्णेन केसरिकिशोरलीलाविडम्बिना कटीतटेन चुटितमनोहरेणोदर-देशेन विशालेन वक्षःस्थलेन प्रलम्बेन भुजदण्डयुगलेन मत्तमहेभ-कुम्भास्फालनसहाभ्यां कराभ्यां त्रिवलिविराजितेन कण्ठेन अधरित-शशधरारविन्दशोभेन वदनेन उत्तुङ्गसुसंस्थितेन नासिकावंशेन सुश्लिष्टमांसलप्रलम्बेन कर्णयुगलेन अपहसितकुवलयदलाभ्यां लोच-नाभ्यां संहतसमया स्फुरत्किरणजालरञ्जिताधरपुटया दन्तपङ्क्त्या सुश्लिष्टाष्टमीशशधरसन्निभेन ललाटपट्टेन अधस्तनावयवचूडामणि-नोत्तमाङ्गभागेन किं बहुना सर्वथोपमातीतरूपधारी दृष्टोऽसौ मया तथैव धर्ममाचचाणः । प्रत्यभिज्ञातश्च तेन पूर्वावधारि-तेन ध्वनिना । संजातो मे मनसि विस्मयः । ततश्चिन्तितं मया । स एवायं तपस्वी । कथं पुनरीदृशकमनीयरूपः क्षणादेव संपन्न इति । अथवा किमत्राश्चर्यं । निवेदितं मे पूर्वं धर्मगुरुणा चन्दनेन । यथा । भवन्ति भगवतां सुसाधूनां लब्धयः । तन्माहात्म्येन च भवन्त्येते यथेच्छया विविधरूपधारिणः । जायन्ते परमाणुवत्सूक्ष्माः । संपद्यन्ते पर्वतवद्गुरवः । वर्तन्तेऽर्कतूलवल्लघवः । पूरयन्ति स्वदेहविस्तारेण भुवनं । आज्ञापयन्ति किङ्करमिव देवेश्वरं । निमज्जन्ति कठिन-शिलातले । कुर्वन्त्येकघटाद्घटशतसहस्रं । दर्शयन्त्येकपटात्पटशत-सहस्रं । आकर्णयन्ति सर्वाङ्गोपाङ्गैः । हरन्ति स्पर्शमात्रेण निःशेष-रोगगणं । गच्छन्ति पवनवद् गगने । सर्वथा नास्ति किंचिदसाध्य-

मेतेषां भगवतां सुसाधूनां। प्राप्तलब्धयो ह्येते सर्वस्य कारणपटवो भवन्ति। अतोऽयं मुनिसत्तमः पूर्वं तथा कुरूपो मया दृष्टोऽधुना पुनरेवंविधरूपधारी दृश्यते। तन्नूनं प्राप्तलब्धिरेष भगवानित्यहो भगवतोऽतिशयः। ततः प्रहृष्टचेतसा वन्दितो मया भगवानन्यमुनयश्च। अभिनन्दितोऽहं सर्वैः स्वर्गापवर्गमार्गसंसर्गनिसर्गहेतुना धर्मलाभेन। निविष्टो भूतले। श्रुता चामृतकल्पा आक्षेपकारिणी भव्यचित्तानां विक्षेपजननी विषयविषाभिलाषस्य अभिलाषोत्पादनी शिवसुखे निर्वेदसम्पादनी भवप्रपञ्चे बाधनी विमार्गस्य भगवतो धर्मदेशना। रञ्जितोऽहं तस्य गुणप्राग्भारेण। पृष्टश्च निकटोपविष्टः शनैरेको मुनिर्मया। यदुत कोऽयं भगवान् किंनामा कुतत्यो वेति। तेनोक्तं। सूरिरेष गुरुरस्माकं बुधो नाम। स धरातलपुरवास्तव्यस्तदधिपतेरेव शुभविपाकनृपतेस्तनयो निजसाधुतानन्दनस्तृणवदपहाय राज्यं निष्क्रान्तः साम्प्रतमनियतविहारेण विहरतीति। ततोऽहमाकर्ण्य तच्चरितं दृष्ट्वा तदतिशयं निरीक्ष्य रूपं श्रुत्वा धर्मदेशनाकौशलं संचिन्त्य च हृदये यथाहो रत्नाकरकल्पमिदं भगवतां दर्शनं यत्रैवंविधानि पुरुषरत्नान्युपलभ्यन्ते ततः संजातो भगवदर्हत्प्रणीते मार्गे मेरुशिखरवन्निष्प्रकम्पः। स्थिरीभूतश्च धर्मे तेनैव बुधसूरिदर्शनेन मदीयः सर्वोऽपि परिकरः। ततोऽभिवन्द्य भगवन्तं गतोऽहं स्वस्थानं। भगवानपि क्वचिदन्यत्र विहरतीति। तेनाहं ब्रवीमि। यद्यसौ बुधसूरिरागच्छेत्ततस्ते बन्धुवर्गं बोधयति। परोपकारकरणैकव्यसनी हि स भगवान्। यतस्तदापि मम मत्परिकरस्य च सद्धर्मे स्थैर्यार्थं विहितं तेन तत्तादृशं

वैक्रियरूपमिति॥ विमलेनोक्तं। आर्य सोऽपि कथंचिद्विज्ञागमनाय भवतैवाभ्यर्थनीयः। रत्नचूडेनोक्तं। यदादिशति कुमारः। केवलमस्मद्वियोगेन साम्प्रतं विधुरस्तातो विसंस्थुलाम्बा वर्तते। तद्गच्छामि तावदहं तयोः संधीरणार्थं स्वस्थाने। ततः करिष्यामि युष्मदादेशं। नात्र कुमारेण विकल्पो विधेय इति। विमलेनोक्तं। आर्य किं गन्तव्यं। रत्नचूडः प्राह। कुमार

युष्मत्सङ्गामृतचोदत्त्वास्वादस्य मेऽधुना।
गन्तव्यमिति वक्तव्ये भारती न प्रवर्तते॥

तथाहि।

जडोऽपि सज्जने दृष्टे जायते तोषनिर्भरः।
उदिते विकसत्येव शशाङ्के कुमुदाकरः॥
स तत्र क्षणमात्रेण प्रीतिसंबद्धमानसः।
जीवन्नेव न तं मुक्त्वा नूनमन्यत्र गच्छति॥

किं च।

संसारेऽनन्तदुःखौघपूरितेऽप्यमृतं परम्।
इदमेकं बुधैरुक्तं यत्सद्भिश्चित्तमीलनम्॥
कोऽर्थं कर्तुं समर्थोऽत्र सतां सङ्गस्य भूतले।
यदि तद्विघटने हेतुर्न स्यादिरहमुद्गरः॥
चिन्तामणिमहारत्नममृतं कल्पपादपम्।
स दृष्टं संत्यजेन्मूढः सज्जनं यो विमुञ्चति॥
कुमारविरहोद्दामाग्निङ्गा ज्वलति तावके।
तथापि पुरतो मेऽद्य गन्तव्यमिति जल्पतः॥

इदं वज्राशनेस्तुल्यमिदमत्यन्तनिष्ठुरम् ।
यन्मे भवादृशामग्रे गच्छाम इति जल्पनम् ॥

तथापि

तातास्वाचित्तसन्तापरूपं संचिन्त्य कारणम् ।
मद्दन्नत्यमेवेति मयेदमभिधीयते ॥

विमलेनोक्तं । आर्य यद्येवं ततो गम्यतां भवता । केवलं न विस्मरणीयमिदमार्येण मदीयमभ्यर्थनं आनेतव्यः स कथंचिदत्र बुधसूरिरिति । रत्नचूडेनोक्तं । कुमार कोऽत्र विकल्पः । ततो भाविसुजनदर्शनविच्छेदकातरहृदया चूतमञ्जरी सबाष्पगद्गदया गिरा विमलं प्रत्याह । कुमार

सहोदरोऽसि मे भ्राता देवरोऽसि नरोत्तम ।
शरीरं जीवितं नाथस्त्वं मे भवसि सुन्दर ॥
तदेष गुणहीनोऽपि स्मरणीयः कश्चिज्जनः ।
भवादृशां महाभाग धन्या हि स्मृतिगोचरे ॥

विमलेनोक्तं । आर्य

गुरुश्च गुरुपत्नी च यदि न स्मृतिगोचरे ।
ततो मे कीदृशो धर्मः किं वा सौजन्यमुच्यताम् ॥

एवं च कृत्वा मयापि सह सम्भाषणं गतौ चूतमञ्जरीरत्नचूडौ । मम पुनरगृहीतसङ्केते भद्रे समाकर्णयतोऽपि तथा विमलरत्नचूडयोः सम्बन्धिनं धर्मजल्पं गुरुकर्मतया दूरभव्यतया च मत्तस्येव सुप्तस्येव विक्षिप्तचित्तस्येव मूर्छितस्येव प्रोषितस्येव मृतस्येव न तदा परिणतमेकमपि धर्मपदं हृदये वज्रशिलाशकलघटितमिव मना-

गपि द्राविते जिनवचनामृतरससेकेनापि चित्तं। ततो विशेषतः संस्तुत्य भगवन्तं निर्गतश्चैत्यभवनान्मया सहितो विमलः। ततोऽभिहितमनेन। वयस्य वामदेव यदिदं रत्नचूडेन मह्यं दत्तं रत्नं महाप्रभावमिदमाख्यातं तेन। ततः कदाचिदिदमुपयुज्यते क्वचिन्महति प्रयोजने। मम च नास्याधुना रत्नादिके। ततो गृहीतमिदमनादरेण कथंचिन्नंक्ष्यति। तस्मादत्रैव क्वचित्प्रदेशे निधाय गच्छाव इति। मयोक्तं। यदादिशति कुमारः। ततो विमोच्य वस्त्राञ्चलं समर्पितं तद्रत्नं मे विमलेन। निखातं मयैकत्र भूप्रदेशे। कृतो निरुपलक्षः स प्रदेशः। प्रविष्टौ नगरे। गतोऽहं स्वभवने। इतः स्तेयबहुलिकाभ्यां मम शरीरेऽनुप्रवेशः। ततश्चिन्तितं मया।

तद्रत्नं रत्नचूडेन सर्वकार्यकरं परम्।
निवेदितं समक्षं मे तुल्यं चिन्तामणेर्गुणैः॥
तत्तादृशमनर्घेयं रत्नं को नाम मुञ्चति।
हरामि त्वरितं गत्वा किं ममापरचिन्तया॥

ततोऽवलम्ब्य जघन्यतां विस्मृत्य विमलस्नेहं अविगणय्य सद्भावार्पणं अपर्यालोच्यायतिं अनाकलय्य महापापं अविचार्य कार्याकार्यं अधिष्ठितः स्तेयबहुलिकाभ्यां गतोऽहं तं प्रदेशं। उत्खातं तद्रत्नं निखातमन्यत्र प्रदेशे। चिन्तितं च मया। कदाचिदधुनैवागच्छति विमलः। ततो रिक्तेऽस्मिन्दृष्टे प्रदेशे भवेदस्य विकल्पो यथा वामदेवेन गृहीतं तद्रत्नं। यदि पुनरत्र प्रदेशे यथेदं कर्पटावगुण्ठितं निखातं तथैवान्यस्तत्प्रमाणः पाषाणो निखन्यते ततो विमलस्य तं दृष्ट्वा भवेदेवंविधो वितर्कः यथा तद्रत्नं ममैवापुण्यैरेवं

इदं वज्राशनेस्तुल्यमिदमत्यन्तनिष्ठुरम्।
यन्मे भवादृशामग्रे गच्छाम इति जल्पनम्॥

तथापि

तातान्वाचित्तसन्तापरूपं संचिन्त्य कारणम्।
मन्दभाग्यस्य मेवेति मयेदमभिधीयते॥

विमलेनोक्तं। आर्य यद्येवं ततो गम्यतां भवता। केवलं न विस्मरणीयमिदमार्येण मदीयमभ्यर्थनं आनेतव्यः स कथंचिदत्र बुधसूरिरिति। रत्नचूडेनोक्तं। कुमार कोऽत्र विकल्पः। ततो भाविसुजनदर्शनविच्छेदकातरहृदया चूतमञ्जरी सवाष्पगद्गदया गिरा विमलं प्रत्याह। कुमार

सहोदरोऽसि मे भ्राता देवरोऽसि नरोत्तम।
शरीरं जीवितं नाथस्त्वं मे भवसि सुन्दर॥
तदेष गुणहीनोऽपि स्मरणीयः कश्चिज्जनः।
भवादृशां महाभाग धन्या हि स्मृतिगोचरे॥

विमलेनोक्तं। आर्य

गुरुश्च गुरुपत्नी च यदि न स्मृतिगोचरे।
ततो मे कीदृशो धर्मः किं वा सौजन्यमुच्यताम्॥

एवं च कृत्वा मयापि सह सम्भाषणं गतौ चूतमञ्जरीरत्नचूडौ। मम पुनरगृहीतसङ्केते भद्रे समाकर्णयतोऽपि तथा विमलरत्नचूडयोः सम्बन्धिनं धर्मजल्पं गुरुकर्मतया दूरभव्यतया च मत्तस्येव सुप्तस्येव विक्षिप्तचित्तस्येव मूर्छितस्येव प्रोषितस्येव मृतस्येव न तदा परिणतमेकमपि धर्मपदं हृदये वज्रशिलाशकलघटितमिव मना-

गपि द्रावितं जिनवचनामृतरससेकेनापि चित्तं। ततो विशेषतः संस्तुत्य भगवन्तं निर्गतश्चैत्यभवनान्मया सहितो विमलः। ततोऽभिहितमनेन। वयस्य वामदेव यदिदं रत्नचूडेन मह्यं दत्तं रत्नं महाप्रभावमिदमाख्यातं तेन। ततः कदाचिदिदमुपयुज्यते क्वचिन्महति प्रयोजने। मम च नास्थाधुना रत्नादिके। ततो गृहीतमिदमनादरेण कथंचिन्नंक्ष्यति। तस्मादत्रैव क्वचित्प्रदेशे निधाय गच्छाव इति। मयोक्तं। यदादिशति कुमारः। ततो विमोच्य वस्त्राञ्चलं समर्पितं तद्रत्नं मे विमलेन। निखातं मयैकत्र भूप्रदेशे। कृतो निरुपलक्षः स प्रदेशः। प्रविष्टौ नगरे। गतोऽहं स्वभवने। कृतः स्तेयबहुलिकाभ्यां मम शरीरेऽनुप्रवेशः। ततश्चिन्तितं मया।

> तद्रत्नं रत्नचूडेन सर्वकार्यकरं परम्।
> निवेदितं समक्षं मे तुल्यं चिन्तामणेर्गुणैः॥
> तत्तादृगमनर्घेयं रत्नं को नाम मुञ्चति।
> हरामि त्वरितं गत्वा किं ममापरचिन्तया॥

ततोऽवलम्ब्य जघन्यतां विस्मृत्य विमलस्नेहं अविगणय्य महापायं अपर्यालोच्यायतिं अनाकलय्य महापापं अविचार्य कार्याकार्यं अधिष्ठितः स्तेयबहुलिकाभ्यां गतोऽहं तं प्रदेशं। उत्खातं तद्रत्नं निखातमन्यत्र प्रदेशे। चिन्तितं च मया। कदाचिदधुनैवागच्छति विमलः। ततो रिक्तेऽस्मिन्दृष्टे प्रदेशे भवेदस्य विकल्पो यथा वामदेवेन गृहीतं तद्रत्नं। यदि पुनरत्र प्रदेशे यदेतत् कर्पटावगुण्ठितं निखातं तदेतावत्प्रमाणः पाषाणो निधीयते ततो विमलस्य तं दृष्ट्वा भवेदेवंविधो वितर्कः यथा तद्रत्नं ममैवापुण्यैरेवं

पाषाणीभूतमिति। एवं च विचिन्त्य मया निखातस्तत्प्रमाणः कर्पटावगुण्ठितस्तत्र प्रदेशे पाषाणः। समागतो गृहं। लङ्घितं तद्दिनं। समायाता रजनी। स्थितोऽहं पर्यङ्के। समुत्पन्ना मे चिन्ता। अये विरूपकं मया कृतं यदानीतं तद्रत्नं। दृष्टः केनचिदहं तथा कुर्वाणः। यद्दीष्यति कश्चिदन्यस्तद्रत्नं। तदधुना किं करोमीति। वितर्ककल्लोलमालाकुलितचित्तवृत्तेश्चित्तसन्तापेन विनिद्रस्यैवातीता सर्वापि शर्वरी। प्रभाते च समुत्थायातित्वरितं गतोऽहं पुनस्तं प्रदेशं। इतश्च समागतो मद्भवने विमलः। न दृष्टोऽहमनेन। पृष्टो मत्परिजनः क्व वामदेव इति। कथितमनेन यथा क्रीडानन्दनोद्यानाभिमुखं गत इति। ततः समागतो ममानुमार्गेण विमलः। स चागच्छन् दूरे दृष्टो मया। ततः संजाता ममाकुलता। विस्मृतो रत्नप्रदेशः। समुत्खातः पाषाणो गोपितः कटीपट्यां। कृतो निरुपलक्षः स प्रदेशः। गतोऽहमन्यत्र गहनान्तरे। संप्राप्तो विमलः। दृष्टोऽहमनेन। लक्षितो भयतरलललोचनः। ततोऽभिहितमनेन। वयस्य वामदेव किमेकाकी त्वमिहागतः। किं वा भीतोऽसि। मयोक्तं। श्रुतः प्रभाते मया त्वमिहागतः। तेनाहमप्यागतः। ततो न दृष्टस्त्वमत्र। तेन संजातो मम हृदये त्रासः क्व कुमारो गत इति चिन्तया। साम्प्रतं तु त्वयि दृष्टे यदि परं स्वस्थीभविष्यामीति। विमलेनोक्तं। यद्येवं ततः सुन्दरमिदं संपन्नं यदिहागतौ। साम्प्रतं गच्छावो भगवद्भवने। मयोक्तमेवं भवतु। ततो गतौ जिनमन्दिरे। प्रविष्टोऽभ्यन्तरे विमलः। स्थितोऽहं द्वारदेशे। चिन्तितं मया। नूनं विज्ञातमनेन। ततो नश्यामि त्वरितं। इतरथा ममेद-

मेष रत्नमुद्दालयिष्यति । न चात्र पुरे तिष्ठतो ममास्यस्मान्मोचः । अतः पलामि निर्दिंग इति । ततः पलायितोऽहं वेगेन । क्रान्तो वङ्गविषयं । ऊढस्तीणि रात्रिंदिनानि । गतोऽष्टाविंशतिर्योजनानि । छोटितो रत्नग्रन्थिः । दृष्टो निष्ठुरपाषाणः । ततो हा हतो ऽस्मीति गतो मूर्छां । लब्धा कृच्छ्रेण चेतना । गृहीतः पश्चात्तापेन प्रारब्धः प्रलपितुं भ्रष्टोऽहं । कथंचित्ततः स्थानात् तत्पुनर्गृह्णामीत्यभिप्रायेण वलितः स्वदेशाभिमुखं ।

इतश्च जिनसदनान्निर्गतेन न दृष्टोऽहं विमलेन । ततः संजाता विम[illegible]चिन्ता क्व पुनर्गतो वामदेव इति । गवेषितः सर्वत्र कानने न[illegible]तो आग[illegible] ततो भवने पुरे च सर्वत्र गवेषितो यावत्तत्रापि न दृष्टः [illegible]ततः संवादस्तु प्राहता ममान्वेषकपुरुषाः । प्राप्तोऽहमेकैर्भीतिस्तेभ्यः । अभिहितस्तैः । यथा वामदेव शोकार्तस्त्वद्वियोगेन विमलो वर्तते वयमानेतारस्तवानेन प्रहितास्तेन गम्यतामिति । ततो मया चिन्तितं । अये न लक्षितोऽहं विमलेन । ततो विगतं मे भयं । नीतोऽहं तैर्विमलसमीपे । दृष्टो विमलेन समालिङ्गितः स्नेहेन । मुक्तमुभाभ्यां नयनैर्विमलजलं किं तु मया कपटेन प्रियमीलकमुदा विमलेन । निवेशितोऽहमर्धासने अभिहितश्चानेन । वयस्य वामदेव वर्णय किमनुभूतं भवता । मयोक्तं । कुमाराकर्णय । अस्ति ताव-त्प्रविष्टस्त्वं जिनमन्दिरे । ततो यावत्तत्र किलाहमपि प्रविशामि तावद्दृष्टा मया तूर्णमागच्छन्ती गगनतलेऽम्बरचरी । सा च कीदृशी ।

प्रकाशयन्ती दिक्चक्रं रूपलावण्यशालिनी ।
आकृष्टकरवाला च यमजिह्वेव भीषणा ॥

ततस्तां दृष्ट्वा यावदहमभिलाषोल्लासमंकीर्णं रसान्तरमनुभवामि· तावदुत्पाटितस्तया नेतुमारब्धो गगनमार्गेण। ततोऽहं

हा कुमार कुमारेति रटन्नुच्चैः सुविह्वलः।
नीत एव तया दूरं भो विद्याधरयोषिता ॥

किं च। पयोधरभरेणोच्चैः सस्नेहमवगूहितः।
चुम्बितश्च बलादङ्गे प्रार्थितो रतकाम्यया ॥
तथा रक्तापि सा बाला विषरूपा प्रभासते।
कुमार वरमित्रेण त्वया विरहितस्य मे ॥

चिन्तितं च तदा मया। यदुत।

अनुरक्ता सुरूपा च यद्यप्येषा तथापि मे
वरमित्रवियुक्तस्य न सुखाय प्रकल्पते ॥

अत्रान्तरे समायातान्याम्बरचरी। विलोकितोऽहमनया। गता सापि मय्यभिलाषं। प्रवृत्ता चोद्दालने। ततश्च

आः पापे कुत्र यासीति शब्दसन्दर्भभीषणम्।
जातं परस्परं युद्धं तयोः खचरयोषितोः ॥

ततो व्याकुलितायां निस्रुटितोऽहं हस्तात्पतितो भूतले चूर्णितो गात्रभारेण। चिन्तितं मया। यद्यपि दलितोऽहं न शक्नोमि वेदनया नंष्टुं तथापि यावदनयोरेका न गृह्णाति मां तावन्नश्यामि येन जीवन्नेव विमलकुमारवरवयस्यं पश्यामि। ततः पलायितोऽहं त्वरया दृष्टश्चामीभिर्मनुष्यैः प्रापितः कुमारसमीपं। तदिदं कुमार मयानुभूतमिति। तच्छ्रुत्वा रञ्जितो विमलो मदीयनिष्कृत्रिमस्नेहेन। यदा मेऽन्तर्गता वञ्चकिता किन्न प्रत्यायितोऽयं मया

विमलो मुग्धबुद्धिरिति ॥ अत्रान्तरे ग्रस्त इव मकरेण दलित इव वज्रेण समाघ्रात इव कृतान्तेन न जाने कां प्राप्तोऽहमवस्थां। यतः समुन्मूलयदिवान्त्राणि मे प्रादुर्भूतमुदरशूलं उत्पाटयन्तीव लोचने प्रवृद्धा शिरोवेदना प्रकम्पितानि सन्धिबन्धनानि प्रचलितं रदनजालं समुच्छ्वसितः श्यामशरीरतः भग्ने नयने निरुद्धा भारती। समाकुलीभूतो विमलः। कृतो हाहारवः। समागतो धवलराजः। मिलितो जनसमूहः। समाहूतं वैद्यमण्डलं। प्रयुक्तानि भेषजानि। न संजातो विशेषः। स्मृतं विमलस्य तद्रत्नं। अयमवसरस्तस्येति मत्वा गतो वेगेन तत्प्रदेशं। निरूपितं यत्नेन यावन्न दृश्यते तद्रत्नं ततो जाता विमलस्य महतीयं चिन्ता। कथमसौ जीविष्यति। ततः समागतो मम समीपे॥ अत्रान्तरे विजृम्भितैका वृद्धनारी। मोटितमनया शरीरं उद्वेल्लितं भुजयुगलं मुत्कलीभूताः केशाः कृतं विकरालरूपं मुक्ताः फेत्काररावाः वल्गितमुद्दामदेहया। भीतः सराजको जनः। ततो विधाय पूजामुत्पाद्य धूपं पृष्टासौ। भट्टारिके का त्वमसीति। सा प्राह। वनदेवताहं। मयायमेवं विहितो वामदेवो यतोऽनेन पापेन मद्भावमतिपन्नोऽपि वञ्चितोऽयं सरलो विमलः। यतस्तस्य रत्नं शिलातलमध्यप्रदेशे पुनरदृष्टेना नष्टः पुनरागतेन रचितमात्मजालं। एवं च कथितं तथा वनदेवतया सविस्तरं मदीयं विलसितं दर्शितं तत्प्रदेशे रत्नं। आह च। तदेव मया दुर्नीयो दृष्टात्मा वामदेवः। विमलेनोक्तं। सुन्दरि मा मैवं कार्षीः। रानेवं क्रियमाणे मम चित्तसन्तापः संपद्यते। ततो विमलाभ्यर्थनया मुक्तोऽहं वनदेवतया। निन्दितोऽहं

लोकेन धिक्कारितः शिष्टजनेन हसितो बालसार्थेन बहिष्कृतः स्वजनवर्गेण। जातस्तृणादपि जनमध्ये लघुतरोऽहमिति। तथापि महानुभावतया विमलो मामवलोकयति चिरन्तनस्थित्या न दर्शयति विप्रियं न मुञ्चति स्नेहभावं न शिथिलयति प्रसादं न रहयति मां क्षणमप्येकं। वदति च। वयस्य वामदेव न भवता मनागप्यन्यजनवचनैश्चित्तोद्वेगो विधेयः। यतो दुराराधोऽयं लोकस्ततो भवादृशामेष केवलमवधीरणामर्हतीति। न च न प्रतीतं तस्य महात्मनो विमलस्य तदा मदीयचरितं। तथापि

अहं बकुलिकादीयात्तादृशो दुष्टचेष्टितः।
स तादृशो महाभागस्तत्रेदं विद्धि कारणम्॥
वारुण्यामुदयं गच्छेदस्तं प्राच्यां दिवाकरः।
लङ्घयेत स्वमर्यादां यद्वा क्षीरमहार्णवः॥

अथवा।

वह्निपिण्डोऽपि जायेत कदाचिद्धिमशीतलः।
अलाबुवत्तरेन्नीरे निक्षिप्तो मेरुपर्वतः॥
निर्व्याजस्नेहकारुण्यः सदाक्षिण्यमहोदधिः।
तथापि सुजनो भद्रे प्रतिपन्नं न मुञ्चति॥

अन्यच्च।

जानन्नपि न जानीते पश्यन्नपि न पश्यति।
स अद्भुते च शुद्धात्मा सज्जनः शुद्धचेष्टितम्॥
ततोऽहं बन्धुभिस्त्यक्तो लोके संजातलाघवः।
विचरामि तदा सार्धं विमलेन महात्मना॥

अथान्यदा मया युक्तो विमलो विमलेक्षणः।
संप्राप्तस्तत्र जैनेन्द्रमन्दिरे वन्दनेच्छया॥
विधायाशेषकर्तव्यं प्रणिपत्य जिनेश्वरम्।
अथासौ स्तोतुमारब्धो विमलः कलया गिरा॥
अत्रान्तरे लसद्दीप्तिर्विद्योतितदिगन्तरः।
स रत्नचूडः संप्राप्तः खचरैः परिवेष्टितः॥
अथासौ मधुरध्वानमाकर्ण्य श्रुतिपेशलम्।
ततः संचिन्तयत्येवं रत्नचूडः प्रमोदितः॥
अये स स्तौति धन्यात्मा विमलो जन्तुबान्धवम्।
भगवन्तं महाभागं तत्तावच्छ्रूयतामिदम्॥
ततो निभृतसञ्चारो मूकीकृत्य स्वखेचरान्।
सद्दैव चूतमञ्जर्या विचन्यस्त इव स्थितः॥
अथ गम्भीरनिर्घोषः स्फुटकण्ठकभूषणः।
आनन्दोदकपूर्णाक्षः चिप्तदृष्टिर्जिनानने॥
सद्भावविशयोगेन साक्षादिव पुरः स्थितम्।
जिनेशं परमात्मानं भगवन्तं सनातनम्॥
सोपालम्भं सविश्रम्भं सस्नेहं प्रणयान्वितम्।
ततः संस्तोतुमारब्धो विमलोऽमलमानसः॥

अपारघोरसंसारनिमग्नजनतारक।
किमेष घोरसंसारे नाथ ते विस्मृतो जनः॥
सद्भावप्रतिपन्नस्य तारणे लोकबान्धव।
मयास्य भुवनानन्द येनाद्यापि विलम्ब्यते॥

आपन्नशरणे दीने करुणामृतसागर ।
न युक्तमीदृशं कर्तुं जने नाथ भवादृशाम् ॥
भीमेऽहं भवकान्तारे मृगशावकसन्निभः ।
विमुक्तो भवता नाथ किमेकाकी दयालुना ॥
इतश्चेतश्च निक्षिप्तचक्षुस्तरलतारकः ।
निरालम्बो भयेनैव विनश्येऽहं त्वया विना ॥
अनन्तवीर्यसम्भार जगदालम्बदायक ।
विधेहि निर्भयं नाथ मामुत्तार्य भवाटवीम् ॥
न भास्करादृते नाथ कमलाकरबोधनम् ।
यथा तथा जगन्नेत्र त्वदृते नास्ति निर्वृतिः ॥
किमेष कर्मणां दोषः किं ममैव दुरात्मनः ।
किं वास्य हतकालस्य किं वा मे नास्ति भव्यता ॥
किं वा सद्भक्तिनिर्ग्राह्य सद्भक्तिस्त्वयि तादृशी ।
निश्चलाद्यापि संपन्ना न मे भुवनभूषण ॥
लीलादलितनिःशेषकर्मजाल कृपापर ।
मुक्तिमर्पयते नाथ येनाद्यापि न दीयते ॥
स्फुटं च जगदालम्ब नाथेदं ते निवेद्यते ।
नास्तीह शरणं लोके भगवन्तं विमुच्य मे ॥
त्वं माता त्वं पिता बन्धुस्त्वं स्वामी त्वं च मे गुरुः ।
त्वमेव जगदानन्द जीवितं जीवितेश्वर ॥
त्वयावधीरितो नाथ मीनवज्जलवर्जिते ।
निराशो दैन्यमालम्ब्य म्रियेऽहं जगतीतले ॥

स्वसंवेदनसिद्धं मे निश्चलं त्वयि मानसम् ।
साक्षाद्भूतान्यभावस्य यद्वा किं ते निवेद्यताम् ॥
मच्चित्तं पद्मवन्नाथ दृष्टे भुवनभास्करे ।
त्वयीह विकसत्येव विदलत्कर्मकोशकम् ॥
अनन्तजन्तुसन्तानव्यापाराचणिकस्य ते ।
ममोपरि जगन्नाथ न जाने कीदृशी दया ॥
समुन्नते जगन्नाथ त्वयि सद्धर्मनीरदे ।
नृत्यत्येष मयूराभो मद्दोर्दण्डशिखण्डिकः ॥
तदस्य किमियं भक्तिः किमुन्मादोऽयमीदृशः ।
दीयतां वचनं नाथ कृपया मे निवेद्यताम् ॥
मञ्जरीराजिते नाथ सचूते कलकोकिलः ।
यथा दृष्टे भवत्येव लसत्कलकलाकुलः ॥
तथैष सरसानन्दबिन्दुसन्दोहदायक ।
त्वयि दृष्टे भवत्येवं मूर्खोऽपि मुखरो जनः ॥
तदेनं मावमन्येथा नाथासंबद्धभाषिणम् ।
मत्वा जनं जगज्ज्येष्ठ सन्तो हि नतवत्सलाः ॥
किं बालोऽलीकवाचाल आलजालं लपन्नपि ।
न जायते जगन्नाथ पितुरानन्दवर्धनः ॥
तथालीकाक्षरोल्लापजल्पाकोऽयं जनस्तव ।
किं विवर्धयते नाथ तोषं किं नेति कथ्यताम् ॥
अनाद्यभ्यासयोगेन विषयाशुचिकर्दमे ।
गर्ते सूकरसंकाशं याति मे चटुलं मनः ॥

न चाहं नाथ शक्नोमि तन्निवारयितुं चलम्।
अतः प्रसीद तद्देव देव वारय वारय॥
किं ममापि विकल्पोऽस्ति नाथ तावकशासने।
येनैवं लपतोऽधीश नोत्तरं मम दीयते॥
आरूढमियतीं कोटीं तव किङ्करतां गतम्।
मामप्येतेऽनुधावन्ति किमद्यापि परीषहाः॥
किं चामी प्रणताशेषजनवीर्यविधायक।
उपसर्गा ममाद्यापि पृष्ठं मुञ्चन्ति नो खलाः॥
पश्यन्नपि जगत्सर्वं नाथ मां पुरतः स्थितम्।
कषायारातिवर्गेण किं न पश्यसि पीडितम्॥
कषायाभिद्रुतं वीक्ष्य मां हि कारुणिकस्य ते।
विमोचने समर्थस्य नोपेक्षा नाथ युज्यते॥
विलोकिते महाभाग त्वयि संसारपारगे।
आसितुं क्षणमप्येकं संसारे नास्ति मे रतिः॥
किं तु किं करवाणीह नाथ मामेष दारुणः।
आन्तरो रिपुसङ्घातः प्रतिबध्नाति सत्वरम्॥
विधाय मयि कारुण्यं तदेनं विनिवारय।
उद्दामलीलया नाथ येनागच्छामि तेऽन्तिके॥
तवायत्तो भवो धीर भवोत्तारोऽपि ते वशः।
एवं व्यवस्थिते किं वा स्थीयते परमेश्वर॥
तद्दीयतां भवोत्तारो मा विलम्बो विधीयताम्।
नाथ निर्गतिकोपायं न शृण्वन्ति भवादृशाः॥

इत्येवं विमलो यावत्सद्भावार्पितमानसः ।
भूतनाथमभिष्टुत्य पञ्चाङ्गप्रणतिं गतः ॥
तावद्दृष्टासितानन्दपुलकोद्भेदसुन्दरः ।
संतुष्टस्तस्य भारत्या रत्नचूडः स खेचरः ॥
साधु साधु कृतं धीर स्तवनं भवभेदिनः ।
लयेत्येवं ब्रुवाणोऽसौ प्रादुरासीत्तदा पुनः ॥
धन्यस्त्वं कृतकृत्यस्त्वं जातोऽसि त्वं महीतले ।
यस्येदृशी महाभाग भक्तिर्भुवनबान्धवे ॥
मुक्त एवासि संसारान्निश्चितस्त्वं नरोत्तम ।
प्राप्य चिन्तामणिं नैव नरो दारिद्र्यमर्हति ॥
एवं च कलवाक्येन विमलं खचराधिपः ।
अभिनन्द्य ततो नाथं वन्दित्वा भक्तिनिर्भरः ॥
तदन्ते विमलस्योच्चैर्वन्दनं प्रविधाय सः ।
प्रथमं वन्दितस्तेन निविष्टः शुद्धभूतले ॥
ततो विहितकर्तव्या निषण्णा चूतमञ्जरी ।
विद्याधरनरेन्द्रस्य निषण्णा नतमस्तका ॥
अथ पृष्टतमूदन्तौ जाततोषौ परस्परम् ।
विमलो रत्नचूडस्य सम्भाषं कर्तुमुद्यतौ ॥
उक्तं च रत्नचूडेन महाभाग निशम्यताम् ।
हेतुना येन संजातं मम कालविलम्बनम् ॥
नानीतो भवदादिष्टः स सूरिर्बुधनामकः ।
तत्रापि कारणं किंचिन्महाभाग निशामय ॥

इतो गतोऽहं वैताढ्ये दृष्टाम्बा शोकविक्लवा।
तातश्च मद्वियोगेन तौ च संधीरितौ मया॥
अथातीते दिने तस्मिन् सङ्गमानन्दबन्धुरे।
रात्रौ स्थितोऽहं शय्यायां कृतदेवनमस्कृतिः॥
ध्यायतः परमात्मानं भगवन्तं जिनेश्वरम्।
समागता च मे निद्रा द्रव्यतो न तु भावतः॥
तावद् भो भो महाभाग भुवनेश्वरभक्तक।
उत्तिष्ठेति गिरं शृण्वन् विबुद्धोऽहं मनोहराम्॥
अथ विद्योतिताशेषदिक्चक्रप्रतिभास्वराः।
तदाहं पुरतः साक्षात्पश्यामि बह्वदेवताः॥
ततः ससम्भ्रमोत्थानविहितातुलपूजनम्।
ताभिर्मां श्लाघयन्तीभिरिदमुक्तं वचस्तदा॥
धन्योऽसि कृतकृत्योऽसि पूजनीयोऽसि मादृशाम्।
यस्य भागवतो धर्मः स्थिरस्ते नरसत्तम॥
रोहिण्याद्या वयं विद्यास्तव पुण्येन चोदिताः।
सर्वास्ते योग्यतां मत्वा समायाताः स्वयंवराः॥
आवर्जिता गुणैस्तात तावकीनैः सुनिर्मलैः।
अत्यन्तमनुरक्तास्ते सर्वाः सर्वात्मना वयम्॥
यस्य भागवतो धीर नमस्कारो हृदि स्थितः।
सदा जाज्वल्यते लोके तस्य ते किमु दुर्लभम्॥
एताः पञ्चनमस्कारमन्त्रमाहात्म्ययन्त्रिताः।
आगत्य स्वयमेवेह वयं किङ्करतां गताः॥

करिष्यामः प्रवेशं ते शरीरे पुरुषोत्तम ।
प्रतीच्छ भवितव्यं च भवता चक्रवर्तिना ॥
एतच्चास्माभिरादिष्टं विद्याधरबलं तव ।
पदातिभावमापन्नमायातं द्वारि वर्तते ॥
लसत्कुण्डलकेयूरकिरीटमणिभास्वराः ।
ततः प्रविश्य ते सर्वे खेचरा मे नतिं गता ॥

अत्रान्तरे प्रहतमुद्दामातोद्यशब्दं प्राभातिकतूर्यं। पठितं च कालनिवेदकेन । यदुत

एष भो भास्करो लोके स्वभावादुदयं गतः ।
प्रबोधकारको नृणां दृष्टिप्रसरदायकः ॥
सदनुष्ठानहेतुश्च सर्वासामर्थसम्पदाम् ।
सम्पादक इति ख्यातः सद्धर्म इव वर्तते ॥

ततः ।

भो भो लोकाः समुत्थाय सद्धर्मे कुरुतादरम् ।
येन वोऽतर्किता एव संपद्यन्ते विभूतयः ॥

एतच्चाकर्ण्य चिन्तितं मया । अये भगवद्भाषितसद्धर्ममाहात्म्यमिदं यदतर्कितोपनता एव सिद्धा ममैताः सर्वविद्याः । न चेदं मे हर्षस्थानं । विघ्नः खल्वेष समुपस्थितो मे । न भविष्यति विमलेन सार्धं दीक्षाग्रहणं । यतः पुण्यानुबन्धि पुण्यमपि भगवता सौवर्णिकनिगडतुल्यं व्याख्यातं । आदिष्टं च पूर्वमेव मे चन्दनेन विद्याधरचक्रवर्तित्वं समर्थितं च महात्मना विमलेन। तत्का गतिः। भवितव्यमेवमनेन । तदेवं चिन्तयत एव मे हृतो देवताभिः

शरीरेऽनुप्रवेशः। प्रारब्धो विद्याधरसमूहैर्मे राज्याभिषेकः। कृतानि कौतुकानि विहितानि माङ्गलिकानि समुपनीतानि सत्तीर्थोदकानि प्रकटितानि रत्नानि सज्जीकृताः कनकरत्नकलशाः। एवं च महता विमर्देन निर्वर्तितो मे राज्याभिषेकः। ततः पूजयतो देवान् सन्मानयतो गुरून् स्थापयतो राजनीतिं निरूपयतो भृत्यवर्गं कुर्वतो यथार्हप्रतिपत्तिं समाचरतोऽभिनवराज्योचितं सर्वं करणीयं लङ्घितानि मम कियन्त्यपि दिनानि। ततो निराकुलीभूतस्य मे संस्मृतो युष्मदादेशः। चिन्तितं च। अये नान्वेषितो ऽसौ मया बुधसूरिर्न नीतो विमलसमीपं। अहो मे प्रमत्तता। ततस्तदन्वेषणार्थं स्वयमेव भ्रान्तोऽहं भूरिभूमिमण्डलं। दृष्टश्चैकत्र नगरे मया बुधसूरिः। निवेदितो युष्मद्वृत्तान्तः। ततोऽभिहितमनेन। गच्छ त्वं तावदिदमिदं च विमलाय निवेदय। अहं तु पश्चादागमिष्यामि। अयमेव हि विमलबन्धूनां प्रतिबोधनोपायो मान्यः। ततः कर्णाभ्यर्णे स्थित्वा शनैः कथितो विमलाय रत्नचूडेन स प्रच्छन्नो बुधसूरिसन्देशकः। स तु मया नाकर्णित इति। आह च रत्नचूडः। तदनेन कारणेन संजातो मे कालविलम्बः। अमुना च हेतुना नानीतो बुधसूरिरिति। विमलेनोक्तं। सुन्दरमनुष्ठितमार्येण। ततः प्रविष्टाः सर्वेऽपि नगरे। स्थित्वा च महाप्रमोदेन दिवाणि दिनानि गतः स्वस्थानं रत्नचूडः।

विमलस्तु ततः प्रभृति गाढतरमभ्यस्ततया कुशलभावस्य प्रक्षीणतया कर्मजालस्य विशुद्धतया ज्ञानस्य हेयतया विषयाणां उपादेयतया प्रशमस्य अविद्यमानतया दुश्चरितानां प्रबलतया जीववीर्यस्य

प्रत्याधन्नतया परमपदसम्पत्तेर्न बहुमन्यते राज्यश्रियं न कुरुते शरीर-संस्कारं न ललति विचित्रलीलाभिः नाभिलषति ग्राम्यधर्मसम्बन्ध-गन्धमपीति । केवलं भवचारकविरक्तचित्तः शुभध्यानानुगतः कालं गमयति । तं च तथाविधमवलोक्य पितुर्धवलनृपतेर्मातुश्च कम-लसुन्दर्याः समुत्पन्ना चिन्ता । यदेष विमलकुमारः सत्यपि मनो-हरे तारुण्ये विद्यमानेऽप्यपहसितधनदविभवे विभवे पराभ्यधरिता-मरसुन्दरीलावण्या नरेन्द्रकन्यका अधःकृतमकरकेतनोऽपि रूपाति-शयेन संगतोऽपि कलाकलापेन नीरोगोऽपि देहेन संपूर्णोऽपीन्द्रिय-सामग्र्या रहितोऽपि मुनिदर्शनेन नालीयते यौवनविकारैर्न निरी-क्षते ऽर्धाचिनिरीक्षितेन न जल्पति मन्मनस्खलितवचनेन न सेवते गेयादिकला न बहुमन्यते भूषणानि न श्लाघते मदान्धतया न विमुच्यते सरलतया न विपद्यते विषयसुखनामापीति । तत्कि-मिदमीदृशमस्य संसारातीतमलौकिकं चरितं । यावच्चैष प्रिय-पुत्रको विषयसुखविमुखः खल्वेवं मुनिवद्वर्तिष्ठते तावदावयोरिदं निष्फलं राज्यं अकिञ्चित्करी प्रभुता निष्प्रयोजना विभवा मृत-समानं जीवितमिति । ततः कथं पुनरेष विषयेषु प्रवर्तिष्यते कुमार इति संपन्नो देवीनृपयो रहसि पर्यालोचः । स्थापितः सिद्धान्तः । यदुत स्वयमेव तावदभिधीयतां विषयसुखानुभवं प्रति कुमारः । स हि विनीततया दाक्षिण्यधनतया च न कदाचन पित्रोर्वचनमतिलङ्घयिष्यतीति । मत्वा ततोऽन्यदाभिहितो रहसि जननीजनकाभ्यां विमलकुमारः । यथा पुत्र मनोरथशतैस्त्वमावयो-र्जातोऽसि राज्यधूर्धरणक्षमश्च वर्तसे । तत्किमिति मानुषीलपसि

निजावस्थानुरूपं । किं नाधितिष्ठसि राज्यं । किं न कुरुषे दारसंग्रहं । किं नानुभवसि विषयग्रामं । किं न वर्धयसि कुलसन्ततिं । किं नोत्पादयसि प्रजानामानन्दं । किं नाह्लादयसि बन्धुवर्गं । किं न पूरयसि प्रणयिजनं । किं न तर्पयसि पितृदेवान् । किं न सन्मानयसि मित्रवर्गं । किं न जनयसि वचनमिदं कुर्वन्नावयोः प्रमोदसन्दोहमिति । विमलेन चिन्तितं । सुन्दरमिदमाभ्यामभिहितं । भविष्यत्ययमेव प्रतिबोधनोपायः । ततोऽभिहितमनेन । यदाज्ञापयति तातो यदादिशत्यम्बा तत्समस्तं मादृशां करणोचितं । नात्र विकल्पः । किं तु ममायमभिप्रायः । यदि सर्वेषां स्वराज्ये दुःखितलोकानामपहृत्य बाधां संपाद्य च सुखं ततः स्वयं सुखमनुभूयते तत्सुन्दरं । एवं हि प्रभुत्वमाचरितं भवति नान्यथा । तथाहि ।

विधाय लोकं निर्बाधं स्थापयित्वा सुखेऽखिलम् ।<br>
यः स्वयं सुखमन्विच्छेत्स राजा प्रभुरुच्यते ॥<br>
यस्तु लोके सुदुःखार्ते सुखं भुंक्ते निराकुलः ।<br>
प्रभुत्वं हि कुतस्तस्य कुक्षिंभरिरसौ मतः ॥

तदिदमद्य प्राप्तकालं । वर्तते तावदेष संतापिताशेषभूमण्डलो ग्रीष्मसमयः । ततोऽहमत्रैव मनोनन्दनाभिधाने गृहोपवने युष्मो बन्धुवर्गेण परिवृतो मित्रवृन्देन सेव्यमानो धर्मसमयोचितां राजलीलां संपादयामि तातायम्बयोः सम्बन्धिनमादेशं । केवलं नियुज्यन्तां राजपुरुषा ये सर्वं दुःखदौर्गत्योपहतं लोकं गवेषयित्वा समानीय च मया सार्धं सुखमनुभावयन्तीति । एतच्चाकर्ण्य प्रहृष्टो

धवलराजः प्रमुदिता कमलसुन्दरी । ततोऽभिहितमाभ्यां । साधु वत्स गुरुवत्सल साधु चारु अभिहितं वत्सेन युक्तमिदमीदृशमेव भवतो विवेकस्येति ॥ ततश्च मनोनन्दने गृहोपवने सज्जीकारितमतिविशालं नरेन्द्रेण हिमगृहं । तच्चाच्छादितं निरन्तरं नलिनीदलैः समन्तादुपगूढं मरकतहरितैः कदलीवनैर्वेष्टितं सततवाहिन्या कर्पूरपूरितोदकप्रवाहया गृहनद्या विलिप्तं मलयजकर्पूरचोदगार्या कृतविभागसुशीरमृणालनालकल्पितैर्भित्तिभागैः । ततश्च तादृशे ग्रीष्मसन्तापहारिणि शिशिरसुखोत्कम्पकारिणि महति हिमभवने विरचितानि शिशिरपल्लवशयनानि कल्पितानि शिशिरसुखदम्हदून्यासनानि प्रवेशितः सह लोकसमूहेन विमलकुमारः । ततः समस्तेनापि जनसमुदयेन सहित एव विलिप्तः सरसचन्दनेन गुण्डितः कर्पूररेणुना मालितः सुरभिपाटलादामभिर्विराजितो मल्लिकाकुसुमस्तबकैरालिङ्गितः स्थूलमुक्ताफलकलापेन निवसितः सूक्ष्मकोमलवसनैर्वीज्यमानः शिशिरबिन्दुवर्षिभिस्तालवृन्तैर्लालितः स्वादुकोमलेनाहारेण प्रीत इव सुरभिताम्बूलेन प्रमोदित इव मनोहारिकाकलिगीतेन सानन्द इव विविधकरणाङ्गहारहारिणा नृत्तेन साह्लाद इव ललितविलासिनीलोककुवलयदलललोललोचनमालावलोकनेन प्रविष्ट इव सह लोकेनावगाहितुं रतिसागरं । तदेवं जननीजनकयोः प्रमोदसन्दोहदानार्थं सर्वेषामपि लोकानामात्मनोऽप्यधिकतरं बहिःसुखं संपादयसामितुं प्रवृत्तो विमलकुमारः । प्रवेशयन्ति च यथादृष्टं राजादेशेन नियुक्तपुरुषा दुःसहदौर्गत्योपहतं तत्र लोकं । ततः क्रियते तेषां दुःखापनोदः संपाद्यते चानन्दातिरेक इति । एवं च ।

नृपतोषविधायिविलासकरे सुखसागरवर्तिनि राज्यधरे ।
अथ तत्र सुते सुभगे विमले प्रमदः क्रियते नगरे सकले ॥

एवं चानन्दिते राजनि तुष्टायां महादेव्यां प्रमुदिते सकले जने विमलसुखसागरावगाहनेन प्रविष्टाः केचिन्नियुक्तपुरुषास्तत्र हिमगृहे। दत्ता तैरन्तरा जवनिका। तया च व्यवहितमेकं पुरुषं संस्थाप्य कृतप्रणामैर्विज्ञपितं तैः। यथा देव देवादेशेन विचरद्भिरस्माभिर्दृष्टोऽयमत्यन्तदुःखितः पुरुषः समानीतश्च देवसमीपं। न चैष गाढबीभत्सतया देवदर्शनयोग्य इति मत्वा जवनिकया व्यवहितोऽस्माभिरिह प्रवेशित इत्येतदाकर्ण्य देवः प्रमाणं। धवलराजेनोक्तं। भो भद्राः क्व दृष्टोऽयं युष्माभिः कथं चात्यन्तदुःखित इति। ततोऽभिहितमेकेन। देव अस्ति तावदितो निर्गता वयं देवादेशेन दुःखदारिद्र्योपहतलोकानयनार्थं। निरूपितं नगरं यावद्दृष्टं समस्तमपि तत्सततानन्दं। ततो गता वयमरण्ये यावद्दृष्टो दूरादयं पुरुषः। कथं।

वर्तमानेऽतिमध्याह्ने भूतले वह्निसन्निभे ॥
उत्तप्तलोहपिण्डाभे जगत्तपति भास्करे।
निर्दाहिमुर्मुराकारे सूक्ष्मधूलीमहाचये ॥
पादत्राणविनिर्मुक्तो गच्छन्नेष विलोकितः।

ततोऽयं दुःखित इति कृत्वा दूरादुच्चैरभिहितो ऽस्माभिः। यदुत भो भो भद्र तिष्ठ तिष्ठेति। अनेनोक्तं। भो भद्राः स्थितोऽहं यूयं तिष्ठतेति। ब्रुवाणो गन्तुं प्रवृत्तः। ततो मया गत्वा वेगेन बलादानीतोऽयं तरुमूले। निरूपितः सर्वैं राज-

पुरुषैः यावद्दृष्टवन्तोऽस्माभिः पुरुषोऽतिकृष्णो वर्णेन बुभुक्षाक्षामेणोदरेण पिपासाशोषितेनाधरोष्ठेन अध्वखेदनिःसहेनाङ्गेन बहिरन्तस्तापसूचकेन खेदजलेन कुष्ठेन गलता कृमिजालोल्वणेन देहेन अन्तःशूलनिवेदकैर्मुखभङ्गैः प्रकम्पमानया जराजीर्णकपोलया गात्रयष्ट्या महाज्वरसूचकेन दीर्घोष्णनिःश्वासजालेन मलाविलेनाश्रुगलनाविकलेन लोचनयुगलेन प्रविष्टया नासिकया शटितप्रायैः करचरणैरभिनवलुञ्चितेन मस्तकेनात्यन्तमलिनैश्चीवरखण्डैर्लम्बमानेन कम्बलेन गृहीतेन मृद्धण्डेनालाबुद्वयेन करतलविलम्बिनोर्णिकपिच्छेन। सर्वथा

> निधानं सर्वदुःखानां दारिद्र्यस्य परा गतिः।
> अयमेवेति सर्वेषां तदास्माकं हृदि स्थितम्॥
> एनं वीक्ष्य नरं नाथ गाढं बीभत्सदर्शनम्।
> चिन्तितं च तदास्माभिः सोऽयं प्रत्यक्षनारकः॥

ततोऽभिहितोऽस्माभिः। भद्र किमित्येवंविधे मध्याह्ने पर्यटसि। किमिति शीतलच्छायायामुपविष्टः सुखासिकया न तिष्ठसीति। अनेनोक्तं। भद्रा न खल्वहं स्वायत्तोऽस्मि। गुरोरादेशेन पर्यटामि। तदायत्तोऽहं। अस्माभिश्चिन्तितं। अये परवशोऽयं वराकः। अहो कष्टमिदमस्य महत्तरं दुःखकारणं यदीदृशावस्थस्यापि पराधीनत्वं नाम। ततोऽभिहितमस्माभिः। भद्र किं पुनरेवमहर्निशमादेशं कुर्वतस्ते स गुरुः करिष्यति। अनेनोक्तं। भद्राः सन्ति मम कृतान्तभट्टगा सक्तिनोऽष्टादशिकाः। तेभ्यो यन्निदानेन मां मोचयिष्यति। ततोऽस्माभिश्चिन्तितं। अहो कष्टतरमि-

द्रमस्य वराकस्य महत्तमं दुःखकारणं यदेवंविधावस्थस्यापि दान-ग्रहणं तन्मोचनदुराशा चेति । सर्वथा नातः परतरो दुःखी जगति लभ्यते । ततोऽस्माभिरुक्तं । भद्र प्रवर्तस्व गच्छ राजकुले येन ते सर्वदुःखदारिद्र्यक्षणविमोचः क्रियते । अनेनोक्तं । अलं भवतां मदीयचिन्तया । न खलु भवादृशैर्मोचितो मुच्येऽहमिति । ब्रुवाणो गन्तुं प्रवृत्तः । ततश्चिन्तितमस्माभिः । अरे श्वोन्माद इवायं दुरात्मा । तथापि कर्तव्यं राजशासनं । नेतव्योऽयं देवसमीपमित्याकलय्यानीतोऽस्माभिरिति । धवलराजेनोक्तं । महत्कुतूहलं मे । पश्याम्येनं । अपनयत जवनिकामिति । ततोऽपनीता तैर्जवनिका । दृष्टो यथानिर्दिष्टस्वरूपः पुरुषः । विस्मितः सपरिवारो राजा । विमलेन चिन्तितं । अये समागतः स एष भगवान् बुधसूरिः । अहो भगवतो वैक्रियरूपकरणातिशयः अहो ममोपरि करुणा अहो परोपकारकरणैकरसत्वं अहो स्वसुखकार्यनिरपेक्षता अहो निर्व्याजसौजन्यातिरेक इति । तथाहि ।

> स्वकार्यमवधीर्यैव परकार्ये कृतोद्यमाः ।
> भवन्ति सततं सन्तः प्रकृत्यैव न संशयः ॥

अथवा ।

> स्वकार्यमिदमेतेषां यत्परार्थे प्रवर्तनम् ।
> भानोः किं किंचिदस्त्यन्यल्लोकोद्योतादृते फलम् ॥

अथवा ।

> निजे सत्यपि साधूनां कार्ये नैवादरः क्वचित् ।
> सलाञ्छनो जगद्द्योती दृष्टान्तोऽत्र निशाकरः ॥

नाभ्यर्थिताः प्रवर्तन्ते परकार्ये महाधियः।
येन हि प्रार्थिता लोके वृष्टये धीर नीरदाः॥
स्वप्नेऽपि न स्वदेहस्य सुखं वाञ्छन्ति साधवः।
क्लिश्यन्ते यत्परार्थे ते सैव तेषां सुखासिका॥
यथाग्निर्दाहपाकाय जीवनाय यथामृतम्।
स्वभावेन तथा लोके परार्था साधुसन्ततिः॥
कथं ते नामृतं सन्तो ये परार्थपरायणाः।
तृणायापि न मन्यन्ते समुखे धनजीविते॥
इत्येवं ते महात्मानः परार्थे कृतनिश्चयाः।
आत्मनोऽपि भवन्त्येव नूनं सिद्धप्रयोजनाः॥

कुलकम्।

तदेष भगवानेवं रूपमास्थाय वैक्रियम्।
बोधनार्थं समायातो मद्वन्धूनां कृतोद्यमः॥

संदिष्टं चानेन मम भगवता रत्नचूडस्य हस्ते। यथा-हमागमिष्यामि रूपान्तरेण भवता च दुःखितमत्वान्वेषणं कार्यं। न चाहं विज्ञातोऽपि वन्दनीयः। न तावदात्मा परैश्चर्चयितव्यो भवता यावत्स्वार्थसिद्धिर्न संपद्येति। ततः कृतो विमलेन बुधसू-रेर्मानसिको नमस्कारः। कथं।

नमस्ते ज्ञातसद्भाव नमस्ते भव्यवत्सल।
नमस्ते मूढजन्तूनां सम्बोधकरणे पटो॥
अज्ञानापारनीरेशसंसारतरणपरायण।
स्वागतं ते महाभाग चारु चारु मया कृतम्॥ इति।

भगवतापि मनस्वेवाभिहितं ।

संसारसागरोत्तारी सर्वकल्याणकारकः ।
स्वकार्यसिद्धये भद्र धर्मलाभोऽस्तु तेऽनघ ॥

अत्रान्तरे हिमभवनमध्ये प्रवेशितः स राजपुरुषैः पुरुषः । स च खेदनिःसहतया द्राटित्य निषण्णो भूतले प्रचलायितुं प्रवृत्तः । ततस्तं तादृशमवलोक्य केचिदुपहसन्ति केचिच्छोचन्ति केचिन्निन्दन्ति केचिदवधीरयन्ति । तथान्ये परस्परं जल्पन्ति । यदुत

दुःखी दीनो रुजाक्रान्तः श्रान्तः क्लान्तो बुभुक्षितः ।
एष प्रेतवणकप्रायः समायातो नराधमः ॥
क्वानीतः केन वानीतः किंचिदेष सुदुःखितः ।
न वराको विजानीते केवलं प्रचलायते ॥

एतच्चाकर्ण्य तेन रूपान्तरवर्तिना बुधसूरिणा किं कृतम् ।

प्रदीपभास्वरौ कृत्वा स्वनन्तावक्षिगोलकौ ।
कोपाटोपात्तदास्थानं ज्वलतेव निरीक्षितम् ॥

उक्तं च ।

आः पापाः किमहं जातो युष्मत्तोऽपि विरूपकः ।
दुःखितो वा यतो यूयं मामेवं हसथाधमाः ॥
कृष्णवर्णा बुभुक्षार्तास्तृष्णार्ताः खेदनिःसहाः ।
तापार्ताः कुष्ठिनो यूयं नाहं भो मूढमानवाः ॥
शूलाक्रान्ता जराजीर्णा महाज्वरविबाधिताः ।
सोन्मादा विकलाङ्गाश्च यूयं नाहं नराधमाः ॥
यूयमेव परायत्ता यूयमेव क्षणार्दिताः ।

यूयं च प्रचलायध्वे नाहं भो मूढमानवाः॥
हे पापाः कलिता यूयं नूनं कालेन चाक्षिणाः।
मुनिं मां दुर्बलं मत्वा तेनैवं हसथाधुना॥
अथ तौ भास्कराकारौ दृष्ट्वा तस्याक्षिगोलकौ।
आज्वल्यमानौ सहसा प्रकाशितदिगन्तरौ॥
जिह्वां च विद्युदाभासां दन्तपङ्क्तिं च भास्वराम्।
दृष्ट्वा श्रुत्वा च तां वाचं जगतः कम्पकारिणीम्॥
क्षणादेव तदास्थानं भीतकम्पितमानसम्।
संजातं सिंहनादेन यथा हरिणयूथकम्॥
ततो धवलराजेन विमलं प्रति भाषितम्।
कुमार नैष कोऽपीह नरः प्रकृतिमानुषः॥

तथाहि।

मलाविलं पुरा चक्षुरधुना भास्कराधिकम्।
अस्य देदीप्यते वत्स तेजसा वक्त्रकोटरम्॥
अनेकरणसङ्घट्टभटकोटिविदारिणः।
श्रुत्वास्य भारतीं वत्स कम्पते मम मानसम्॥
तदेष न भवत्येव तावत्सामान्यमानवः।
देवः कश्चिदिहायातः प्रच्छन्नो मुनिवेषकः॥

एवं च स्थिते।

यावन्न तेजसा वत्स सर्वं भस्मीकरोत्ययम्।
तावत्प्रसादयाम्येनं क्रोधान्धं मुनिपुङ्गवम्॥

विमलेनोक्तं।

एवमेतन्न सन्देहः सम्यग्ज्ञातेन निश्चितम्।
नैष सामान्यपुरुषो विषमः कोऽप्ययं महान्॥

ततश्च

तूर्णं प्रसाद्यतामेष यावन्नो याति विक्रियाम्।
भक्तिग्राह्या महात्मानः क्रियतां पादवन्दनम्॥
तच्छ्रुत्वा विलसल्लोलकिरीटकटकुण्डलः।
धावन्नुच्चैर्महाराजो मुनेः पादनतिं गतः॥
ततो दृष्ट्वा महाराजं पतितं क्रमयोस्तथा।
तथैव प्रणतं सूरेः सर्वं जनकदम्बकम्॥

उक्तं च नरपतिना।

चाम्यत्वेनं महाभागो दोषमज्ञजनैः कृतम्।
ददातु च प्रसादेन स्वीयं मे दिव्यदर्शनम्॥
ततो यावन्नृपो भूमेरुत्थाय पुनरीक्षते।
तावत्स कीदृशस्तेन सलोकेन विलोकितः॥
लोचनानन्दिलावण्यनिर्जितामरविग्रहः।
विलसद्दीप्तिविस्तारः साक्षादिव दिवाकरः॥
अशेषलक्षणोपेतः सर्वावयवसुन्दरः।
निषण्णः कमले दिव्ये सत्कार्तस्वरभास्वरे॥
अथ तं तादृशं वीक्ष्य कान्तरूपं मुनीश्वरम्।
समुपास्ते जना जाता विस्मयोत्फुल्ललोचनाः॥

परस्परं च जल्पितुं प्रवृत्ताः। यदुत

कथं वा तादृशः पूर्वं कथमेवंविधोऽधुना।

नूनमेष महाभागो देव एव न संशयः ॥
ततः कृत्वा नरेन्द्रेण ललाटे करकुड्मलम् ।
स पृष्टो भगवानेवं कस्त्वं भो नाथ कथ्यताम् ॥

मुनिरुवाच ।

यतिरस्मि महाराज न देवो नापि दानवः ।
विशेषयतिरूपं तु लिङ्गादेवावगम्यते ॥

धवलराजेनोक्तं ।

यद्येवं किमिदं नाथ विहितं भवताद्भुतम् ।
ईदृशं रूपनिर्माणं पूर्वं बीभत्सदर्शनम् ॥
कुष्ठवर्णादयो दोषा निजदेहविवर्तिनः ।
अस्माकं भवतादिष्टाः किं वा संचिन्त्य कारणम् ॥
कथं वा क्षणमात्रेण दिव्यरूपधरः परः ।
भगवान्नाथ संपन्नो मादृशां कृतविस्मयः ॥
तदिदं मे प्रसादेन सर्वं नाथ निवेदय ।
ममोत्पन्नं मनोमध्ये महदत्र कुतूहलम् ॥
मुनिराह महाराज कृत्वा मध्यस्थमानसम् ।
कथ्यमानमिदं सर्वं समाकर्णय साम्प्रतम् ॥
इदं विरचितं पूर्वं मया रूपं नरेश्वर ।
निदर्शनार्थं जीवानां संसारोदरवर्तिनाम् ॥

यतः

एवं भूता इमे सर्वे जीवाः संसारवर्तिनः ।
तथापि न विजानन्ति स्वरूपं मूढमानसाः ॥

अतोऽमीषां प्रबोधार्थं तादृग् बीभत्सदर्शनम् ।
दृष्टान्तभूतं भूतानां रूपं भूप निरूपितम् ॥
मुनिवेषधरं तच्च यन्मया भूप निर्मितम् ।
कृष्णवर्णादयो दोषा युष्माकं ये च योजिताः ॥
तत्रापि कारणं भूप वर्ण्यमानं मया स्फुटम् ।
विधाय निपुणां बुद्धिं धीर चित्ते ऽवधारय ॥
मुनयो ये महात्मानो बुद्धाः सर्वज्ञदर्शने ।
तपःसंयमयोगेन क्षालिताखिलकल्मषाः ॥
ते कृष्णवर्णा बीभत्साः क्षुत्पिपासादिपीडिताः ।
कुष्ठिनोऽपि बहिर्भूप सुन्दराः परमार्थतः ॥
एते तु लोका राजेन्द्र ये सद्धर्मबहिष्कृताः ।
गृहस्थाः पापनिरताः विषयामिषगृध्नवः ॥
एते यद्यपि दृश्यन्ते नीरोगाः सुखनिर्भराः ।
तथापि तत्त्वतो ज्ञेया दुःखिता रोगपीडिताः ॥

किं च ।

कृष्णवर्णादयो दोषा गृहिणां सन्ति ते यथा ।
तथा न सन्ति साधूनां तदिदं ते निवेद्यते ॥
बहिः कनकवर्णोऽपि पण्डितैः परमार्थतः ।
अन्तः पापतमोलिप्तः कृष्णवर्णोऽभिधीयते ॥
बहिरङ्गारवर्णोऽपि चित्ते स्फटिकनिर्मलः ।
नरो विचक्षणैर्भूप स्वर्णवर्णो ऽभिधीयते ॥
एवं च कृष्णवर्णोऽपि साधुः संशुद्धमानसः ।

विज्ञेयः परमार्थेन स्वर्णवर्णो नराधिप ॥
यस्त्वस्तु सदा भूप पापारम्भपरायणः ।
हेमावदातदेहोऽपि विज्ञेयः कृष्णवर्णकः ॥
अनेन परमार्थेन मयोक्तमिदमञ्जसा ।
न कृष्णवर्णोऽहं लोका यूयमेव तथाविधाः ॥

तथा ।

संप्राप्तैरपि नो तृप्तिर्विषयैर्या नराधिप ।
विद्वद्भिः परमार्थेन सा बुभुक्षा प्रकीर्तिता ॥
तया बुभुक्षिताः सर्वे भुवनोदरचारिणः ।
अमी वराकाः सद्धर्मविकला मूढजन्तवः ॥
ते हि यद्यपि दृश्यन्ते तृप्ताः संपूरितोदराः ।
तथापि तत्त्वतो ज्ञेया बुभुक्षाक्षामितोदराः ॥
साधवस्तु महात्मानः सदा सन्तोषपोषिताः ।
न पीडितास्तया भूप भीमभावबुभुक्षया ॥
तेन यद्यपि दृश्यन्ते विरिक्तजठराः परम् ।
तथापि तत्त्वतो ज्ञेयास्ते तृप्ताः स्वस्थमानसाः ॥
इदं कारणमालोच्य बुभुक्षार्ताः पुरा मया ।
यूयमुक्ता धरानाथ तृप्तश्चात्मा प्रकाशितः ॥

तथा ।

अनागतेषु भोगेषु योऽभिलाषो नराधिप ।
सा पिपासेति विज्ञेया भावकण्ठस्य शोषणी ॥
तया पिपासिताः सर्वे पिबन्तोऽप्युदकं जनाः ।

ये केचिद्भूप दृश्यन्ते जैनधर्मबहिष्कृताः ॥
मुनयस्तु सदा धन्या भाविभोगेषु निःस्पृहाः ।
तेनोदकं विनाप्येते पिपासादूरवर्तिनः ॥
अतः पिपासिता यूयमहं तु न तृषार्दितः ।
मयेदं कारणं मत्वा पुरा राजन्निवेदितम् ॥

तथा ।

अलब्धमूलपर्यन्तो दोषचौरशताकुलः ।
विषमो विषयव्यालो दुःखधूल्या प्रपूरितः ॥
अयं नरेन्द्र संसारो विद्वद्भिर्भावचक्षुषा ।
अध्वा निरीक्षितो घोरः खेदहेतुः शरीरिणाम् ॥
एते च सततं जीवा गृहीत्वा कर्मशम्बलम् ।
वहन्तो भवमार्गेऽत्र न कुर्वन्त्युत्प्रयाणकम् ॥
तेनामी जैनसद्धर्मरहिता मूढजन्तवः ।
संसाराध्वमहाखेदखेदिताः सततं मताः ॥
ततो यद्यपि दृश्यन्ते गृहे शीतलमण्डपे ।
तथापि तत्त्वतो ज्ञेया गच्छन्तः पथि ते सदा ॥
मुनयस्तु सदा भूप विवेकवरपर्वते ।
आरूढाः सतताह्लादे वर्तन्ते जैनसत्पुरे ॥
तत्र चित्तसमाधानं मण्डपं हिमशीतलम् ।
आसाद्य निर्वृतात्मानस्तिष्ठन्ति विगतश्रमाः ॥
ततो यद्यपि दृश्यन्ते ते बहिः खेदनिःसहाः ।
विज्ञेयाः खेदनिर्मुक्तास्तथापि परमार्थतः ॥

तदिदं कारणं मत्वा भवन्तः खेदनिःसहाः ।
अहं तु नेति राजेन्द्र मया पूर्वं निवेदितम् ॥

तथा ।

क्रोधो मानस्तथा माया लोभश्चेति चतुर्विधः ।
तापः संसारिणां भूप सर्वाङ्गीणः सुदारुणः ॥
तेन दन्दह्यमानास्ते तापार्ताः सततं मताः ।
यद्यपीह विलोक्यन्ते चन्दनादिविलेपिताः ॥
साधवस्तु महाराज संततं शान्तमानसाः ।
निष्कषाया महात्मानो निस्तापाः पापसूदनाः ॥
ततो यद्यपि दृश्यन्ते ते बहिस्तापपीडिताः ।
तथापि परमार्थेन विज्ञेयास्तापदूरगाः ॥
इदमेव मया ज्ञात्वा यूयं तापार्दिताः पुरा ।
अहं तु नेति राजेन्द्र प्रतिज्ञातमशङ्कया ॥

तथा ।

कुविकल्पशमिस्थाने मिथ्यात्वं भूप देहिनाम् ।
गलदास्तिक्यजाम्बालं कुष्ठमुक्तं मनीषिभिः ॥
विनाशयति तद्रूप सद्बुद्धिवरनासिकाम् ।
घर्घराव्यक्तघोषं च नरं धत्ते मदोद्धतम् ॥
शमसंवेगनिर्वेदकारुण्यानि च मूलतः ।
हस्तपादसमान्येषां शाटयत्येव देहिनाम् ॥
तेन मिथ्यात्वकुष्ठेन विद्वदुद्वेगहेतुना ।
आक्रान्ताः पृथिवीनाथ सदामी मूढजन्तवः ॥

ततो यद्यपि दृश्यन्ते सर्वावयवसुन्दराः ।
तथापि भावतो ज्ञेयाः कृमिजालचताङ्गकाः ॥
सम्यग्भावेन पूतानां मुनीनां पुनरीदृशम् ।
कुष्ठं नास्त्येव तेनामी सर्वावयवसुन्दराः ॥

ततश्च ।

कथंचिदपि यद्येते बहिः कुष्ठसमन्विताः ।
भवेयुर्भावतो भूप तथापि न तथाविधाः ॥
अत एव मया पूर्वमिदमालोच्य कारणम् ।
तथोक्ताः कुष्ठिनो यूयं नाहं कुष्ठीति चोदितम् ॥

तथा ।

परेषु देषदुष्टानां समृद्धिं वीक्ष्य देहिनाम् ।
ईर्ष्या या जायते भूप सा शूलमभिधीयते ॥
ईर्ष्याशूलेन चाक्रान्ताः परेषां व्यसने चमाः ।
देषाघाताः प्रकुर्वन्ति वक्षभङ्गं पुनः पुनः ॥
तच्च नास्ति महाशूलं मुनीनां धरणीपते ।
सर्वच समचित्तास्ते वीतदेषा हि साधवः ॥
इदं कारणमाश्रित्य शूलाक्रान्ताः पुरा मया ।
यूयमुक्तास्तथात्मा च शूलहीनः प्रकाशितः ॥
अनादिभवचक्रे ऽच यया भ्रान्ताः कथंचन ।
तयाद्यापि प्रवर्तन्ते सदामी भूप जन्तवः ॥
कदाचिन्न पुनः प्राप्तं विद्याजन्म मनोहरम् ।
मैतैर्विवेकतारुण्यं न स्मृता भावस्त्र्यमा ॥

जराजीर्णास्ततो भूप यावत्संसारजीविनः ।
जन्तवोऽनन्तदुःखालीवलीपलितसंगताः ॥
बहिस्ते तरुणाकारं धारयन्तोऽपि मानवाः ।
विज्ञेयास्तत्त्वतो भूप जराजीर्णकपोलकाः ॥
साधुभिर्भूपते लब्धं विद्याजन्म मनोहरम् ।
प्राप्तं विवेकतारुण्यं दीक्षासद्योगसुन्दरम् ॥
अप्राप्य तां जरां घोरां तारुण्ये वर्तमानकाः ।
तथा च ते मरिष्यन्ति यथोत्पत्तिर्न जायते ॥
अतः सर्वे जराजीर्णा ये भवे दीर्घजीविनः ।
सन्तस्तु यौवनारूढाः कर्मनिर्दलनक्षमाः ॥

तथा ।

यतोऽमी देहिनो मूढा रागसन्तापतापिताः ।
तेनोच्यन्ते मया भूप महाज्वरविबाधिताः ॥
सत्साधूनां पुनर्नैव रागगन्धोऽपि विद्यते ।
ते बहिर्ज्वरवन्तोऽपि विज्ञेयास्तेन विज्वराः ॥

तथा ।

यत् कृत्यं सदनुष्ठानं तन्न कुर्वन्ति मूढकाः ।
वारिता अपि कुर्वन्ति पापानुष्ठानमञ्जसा ॥
ततोऽमी जगतीनाथ येऽपि पण्डितमानिनः ।
सोन्मादा इति विज्ञेयास्तेऽपि भावेन देहिनः ॥
सदनुष्ठानरक्तानां साधूनां पुनरीदृशः ।
नोन्मादोऽस्ति धरानाथ तस्मात्ते शुद्धबुद्धयः ॥

जराजीर्णा रुजाक्रान्ताः सोन्मादा इति तत्पुरा ।
यूयं नाहमिति प्रोक्तं सर्वमेतेन हेतुना ॥

तथा ।

पश्यन्तोऽपि विशालेन चक्षुषा बहिरञ्जसा ।
अन्तर्वसुंधरानाथ कामान्धा मूढजन्तवः ॥
विकलाक्षा मया पूर्वं तेनामी परिकीर्तिताः ।
साधूनां विकलाक्षत्वं कामजन्यं न विद्यते ॥
अतो यद्यपि दृश्यन्ते ते बहिर्नष्टदृष्टयः ।
तथापि साधवो नैव विकलाक्षा नराधिप ॥
तेनामी जन्तवः प्रोक्ता विकलाक्षा मया पुरा ।
आत्मा प्रकाशितो भूप सञ्जातचारुलोचनः ॥
राजन्नेते परायत्ता यथा गेहस्थजन्तवः ।
साधवस्तु परायत्तास्तथा ते कथ्यतेऽधुना ॥
निःशेषं परमार्थेन भिन्नकर्मविनिर्मितम् ।
इदं कलत्रपुत्रादि तत्पोषणसदोद्यताः ॥
अदृष्टपरमार्थानामत्यन्तं मनसः प्रियम् ।
तत्त्वभूतमिदं तेषां मूढानां प्रतिभासते ॥
ततस्तदर्थं क्लिश्यन्ते दासाः कर्मकरा यथा ।
रात्रौ दिवा च मोहेन पशुभूता वराककाः ॥
आहारयन्ति न स्वस्था रात्रौ निद्राविवर्जिताः ।
चिन्तयाकुलिता नित्यं धनध्यानपरायणाः ॥
तदेवं ते कुटुम्बस्य सदैवादेशकारिणः ।

परायत्ता न जानन्ति परमार्थममेधसः ॥

तथाहि ।

माता भ्राता पिता भार्या दुहिता पुत्र इत्यपि ।
सर्वेऽपि जन्तवो जाता निरादिभवचक्रके ॥
ततो विज्ञातसद्भावः को हि नाम सकर्णकः ।
तदायत्तो भृशं भूत्वा स्वकार्यं हारयेन्नरः ॥
अत एव महात्मानस्तत्कलत्रादिपञ्जरम् ।
संपरित्यज्य निःशेषं जाता निःसङ्गबुद्धयः ॥
त एव ह्यपरायत्तास्त एव कृतिनो नराः ।
त एव स्वामिनो भूप सर्वस्य जगतोऽनघाः ॥
गुरूणां ते परायत्ता भवन्तोऽपि महाधियः ।
निर्मुक्ता गृहपाशेन तस्मादत्यन्तमुत्कलाः ॥
इदं च हृदये कृत्वा कारणं मानवेश्वर ।
यूयमुक्ताः परायत्ता मयात्मा तद्विलक्षणः ॥

तथा ।

ये च तेऽष्टौ मया पूर्वमृद्दणिकाः संप्रकाशिताः ।
विद्धि तान्यष्ट कर्माणि दुःखदानीह देहिनाम् ॥
ते चामी सततं जीवाः कदर्थ्यन्ते मुहुर्मुहुः ।
दानग्रहणिकैर्भूप कर्मभिस्तीव्रदारुणैः ॥
बुभुक्षिताः क्वचिद्दीना धार्यन्तेऽत्यन्तविक्लवाः ।
क्वचिद्गाढं प्रपीड्यन्ते क्षिप्ता नरककोष्ठके ॥
साधूनामपि ते सन्ति ग्रहणिकाः किं तु नो तथा ।

कदर्थनं प्रकुर्वन्ति शुद्धप्रायम्हणं यतः ॥
प्रोधयन्ति च ते नित्यं साधवः कृतनिश्चयाः ।
क्षणं तत्तेन ते तेषाम्हणिका नैव बाधकाः ॥
क्षणार्दिता मया पूर्वं यूयमेतेन हेतुना ।
प्रोक्ता भूप तथात्मा च क्षणमुक्तः प्रकाशितः ॥
यथा च प्रचलायन्ते भावतोऽमी नरेश्वर ।
जैनधर्मबहिर्भूता जन्तवस्तन्निशामय ॥
दुरन्तः कर्मसन्तानो घोरः संसारसागरः ।
रौद्रा रागादयो दोषास्तरलं देहिनां मनः ॥
चटुलश्चेन्द्रियग्रामो दृष्टनष्टं च जीवितम् ।
चला विभूतयः सर्वा देहश्च क्षणभङ्गुरः ॥
शत्रुः प्रमादो जीवानां दुस्तरः पापसञ्चयः ।
असंयतत्वं दुःखाय भीमो नरककूपकः ॥
अनित्याः प्रियसंयोगा भवन्त्यप्रियसङ्गमाः ।
क्षणरक्तविरक्ताश्च योषितो मित्रबान्धवाः ॥
उग्रो मिथ्यात्ववेतालो जरा करविवर्तनी ।
भोगास्वादनमदुःखाय दारुणो मृत्युभूधरः ॥
एतत्सर्वमनालोच्य कृत्वा पादप्रसारिकाम् ।
विवेकचक्षुः संमील्य स्वपन्ति ननु जन्तवः ॥
महाघुरघुरारावं कुर्वन्तो नष्टचेतनाः ।
कथंचित् प्रबुध्यन्ते शब्दैरपि विवेकिनाम् ॥
विबुद्धा अपि कृच्छ्रेण घूर्णमानेन चक्षुषा ।

भूयो भूयः स्वपन्त्येव ते महामोहनिद्रया ॥

अन्यच्च ।

कुतो वयं समायाताः प्रापिताः केन कर्मणा ।
क्वागताः क्व च यास्यामो विदन्त्येतन्न मूढकाः ॥
ततो यद्यपि दृश्यन्ते वल्गमानाः पृथग्जनाः ।
तथापि तत्त्वतो भूप विज्ञेयाः प्रचलायिताः ॥
साधूनां पुनरेषा भो महामोहतमोमयी ।
निद्रा नास्त्येव धन्यानां तेन ते नित्यजागराः ॥
सर्वज्ञागमदीपेन साधवस्ते महाधियः ।
गत्यागती प्रपश्यन्ति स्वस्यान्येषां च देहिनाम् ॥

ततश्च ।

ते बहिर्निद्रया भूप सुप्ता अपि कथंचन ।
असुप्ता इति विज्ञेया विवेकोन्मीलितेक्षणाः ॥
इदमेव मया सर्वं संचिन्त्य हृदये पुरा ।
यूयं भोः प्रचलायध्वे नाहमित्येव भाषितम् ॥

तथा ।

यूयमेव न जानीथ स्वरूपं मोहनिद्रिताः ।
मम प्रत्यक्षमेवेदं विवेकस्फुटचक्षुषः ॥

अन्यच्चैवं व्यवस्थिते ।

ये सद्धर्मबहिर्भूतास्त एव परमार्थतः ।
देहिनो भूप विज्ञेया दारिद्र्याक्रान्तमूर्तयः ॥

तथाहि ।

ज्ञानदर्शनचारित्रवीर्यादीनि नरेश्वर ।
न सन्ति भावरत्नानि तेषां पापहतात्मनाम् ॥
तान्येव धनसाराणि तान्येवैश्वर्यकारणम् ।
तान्येव सुन्दराणीह तैर्विना कीदृशं धनम् ॥
अतस्ते रहिता येऽत्र दृश्यन्ते धनपूरिताः ।
विज्ञेयास्तेऽपि राजेन्द्र निर्धनाः परमार्थतः ॥
तस्माधूनां पुनस्तानि भावरत्नानि भूपते ।
चित्तापवरके नित्यं जाज्वल्यन्ते महात्मनाम् ॥
अतस्ते धनिनो धन्यास्त एव परमेश्वराः ।
ते शक्ता भुवनस्यापि पोषणे नास्ति संशयः ॥
मलिना मलिनैर्भूप बहिश्चीवरखण्डकैः ।
अलाबुहस्ता दृश्यन्ते दरिद्रा इव मुग्धकैः ॥
तथापि परमार्थेन ते महारत्ननायकाः ।
विज्ञेयाः पण्डितैर्भूप मुनयः परमेश्वराः ॥

किं च ।

तृणाग्राद्रत्नकोटीश्च पातयन्ति स्वतेजसा ।
यदि कार्यं भवेत्ताभिस्तेषां भूप महात्मनाम् ॥
अतः स्वकीयं दारिद्र्यमनालोच्य भवादृशैः ।
महाधनोऽपि मादृचः कथमुक्तो दरिद्रकः ॥
मलिनोऽपि स एवात्र यः कर्ममलपूरितः ।
बहिः क्षालितसद्वाचवस्त्रोऽपि जगतीपते ॥
तुषारहारगोक्षीरनिर्मलीमसमानसः ।

यद्विर्मलधरोऽप्यत्र निर्मलो मानवेश्वर ॥
तदिदं भावमालिन्यमविचार्यात्मनि स्थितम् ।
अहं हा दूषितः केन कारणेन पुरा जनाः ॥
सुभगोऽपि जगत्यत्र सद्धर्मनिरतो नरः ।
विवेकिनां समस्तानां यस्मादत्यन्तवल्लभः ॥
सुरासुरसमायुक्तं जगदेतच्चराचरम् ।
बन्धुभूतं हि वर्तेत सद्धर्मगतचेतसाम् ॥
तस्मात्साधुः सदाचारो लोके सौभाग्यमर्हति ।
तत्र ये कुर्वते द्वेषं पापिष्ठास्ते नराधमाः ॥
पुमानधर्मभूयिष्ठो दुर्भगो भावतो मतः ।
निन्दन्ति तं यतः सर्वे महाराज विवेकिनः ॥
तस्मात्पापे रतः प्राणी लोके दौर्भाग्यमर्हति ।
तमप्यत्र प्रशंसन्ति ये ते पापा नराधिप ॥

एवं च स्थिते ।

धार्मिको मुनिवेषेण प्रकटोऽपि पुरा जनैः ।
दुर्भगैः सुभगोऽप्यस्मि केन कार्येण निन्दितः ॥

एवं च स्थिते महाराज ये इमे जिनवचनामृतबहिर्भूताः संसारोदरवर्तिनो जन्तवोऽनवरतं वराका बध्यन्ते दृढकर्मसन्तानरज्ज्वा पीड्यन्ते विषयासन्तोषबुभुक्षया शुष्यन्ति विषयाशापिपासया खिद्यन्ते निरन्तरभवचक्रभ्रमणेन सततोपतप्ताः कषायघर्मोष्मणा गृह्यन्ते मिथ्यात्वमहाकुष्ठेन तुद्यन्ते परेर्ष्याशूलेन जीर्यन्ते दीर्घसंसारावस्थानेन दन्दह्यन्ते रागमहाज्वरेण अन्धीक्रियन्ते कामकाच-

पटलेन आक्रम्यन्ते भावदारिद्रेण अभिभूयन्ते जराराचसा आच्छाद्यन्ते मोहतिमिरेण आहन्यन्ते हृषीकतुरङ्गमैः पापच्यन्ते क्रोधतीव्रवह्निना अवष्टभ्यन्ते मानमहापर्वतेन वेष्ट्यन्ते मायाजालिकया झाप्यन्ते लोभसागरप्लवेन परिताप्यन्त इष्टवियोगवेदनया दोदूयन्ते ऽनिष्टसङ्गमतापेन दोलायन्ते कालपरिणतिवशेन तन्त्यन्ते कुटुम्बपोषणपरायणतया कदर्थ्यन्ते कर्मदानग्रहणिकैः अभिद्रूयन्ते महामोहनिद्रया कवलीक्रियन्ते मृत्युमहामकरेणेति, त इमे महाराज जन्तवो यद्यपि शृण्वन्ति वेणुवीणामृदङ्गकाकलीगीतानि पश्यन्ति विभ्रमविब्बोककारिमनोहारिरूपाणि आस्वादयन्ति सुसंस्कृतकोमलपेशलहृद्येष्टविशिष्टाहारप्रकारजातं आजिघ्रन्ति कर्पूरागुरुकस्तूरिकापारिजातमन्दारनमेरुहरिचन्दनसन्तानकसुमनोहरकोष्ठपुटपाकादिगन्धजातं आलिङ्गन्ति कोमललुलितललनातूल्यादिस्पर्शजातं तथा ललन्ते सह स्निग्धमित्रवृन्देन विलसन्ति मनोरमकाननेषु विचरन्ति यथेष्टचेष्टया क्रीडन्ति नानाक्रीडाभिः भवन्ति सुखाभिमानेनानाख्येयरसवशनिर्भरा निमीलिताक्षाः तथाप्यमीषां जन्तूनां क्लेशरूप एवायं यथासुखानुशयः। एवंविधविविधदुःखहेतुशतव्रातपूरितानां हि महाराज कीदृशं सुखं का वा मनोनिर्वृतिरिति।

> तदिमे दुःखपूरेण पूरिताः परमार्थतः।
> मोहादेवावगच्छन्ति जन्तवः सुखमात्मनः॥
> व्याधैर्विलुप्यमानस्य शक्तिनाराचतोमरैः।
> यत्सुखं हरिणस्येह तत्सुखं भूप गेहिनाम्॥
> गलेन गृह्यमाणस्य निर्भिन्ने तालुमर्मके।

यत्सुखं मूढमौनस्य तत्सुखं भूप गेहिनाम् ॥
एतावद्दुःखसङ्घातपातनिर्भिन्नमस्तकाः।
सद्धर्मरहिता भूप गेहिनो नारकोपमाः ॥

सत्साधूनां पुनर्भगवतां महाराज नश्यन्त्येवामी पूर्वोदिताः सर्वेऽपि चुद्रोपद्रवाः। यतस्तेषां भगवतां प्रनष्टं मोहतिमिरं आविर्भूतं सम्यग्ज्ञानं निवृत्तः सर्वबाधहविशेषः परिणतं सन्तोषामृतं व्यपगता दुष्टक्रिया त्रुटितप्राया भववल्लरी स्थिरीभूतो धर्ममेघसमाधिः। तथा गाढानुरक्तमन्तरङ्गमन्तःपुरं। यतस्तेषां भगवतां सन्तोषदायिनी धृतिसुन्दरी चित्तप्रसादहेतुः श्रद्धा आल्हादकारिणी सुखासिका निर्वाणकारणं विविदिषा प्रमोदविधायिनी विज्ञप्तिः सद्बोधकारिणी मेधा प्रमदातिरेकनिमित्तमनुप्रेक्षा अनुकूलचारिणी मैत्री अकारणवत्सला करुणा सदानन्ददायिनी मुदिता सर्वोद्वेगघातिनी उपेक्षेति।

तदेताभिः समायुक्ताः सुन्दरीभिर्नरेश्वर।
दृष्टाभिर्दृढरक्ताभिर्मोदन्ते ते मुनीश्वराः ॥
संसारसागरोत्तीर्णं निर्वाणसुखसागरे।
निमग्नं ते सदात्मानं मन्यन्ते मुनिपुङ्गवाः ॥
नेन्द्राणां तच देवानां नापि तच्चक्रवर्तिनाम्।
सद्ध्यानपरिपूतानां यत्सुखं शान्तचेतसाम् ॥
ये स्वकेऽपि महात्मानो वर्तन्ते देहपञ्जरे।
परा इव सुखं तेषां भूप कः प्रष्टुमर्हति ॥
संसारगोचरातीतं यत्सुखं वेदयन्ति ते।

त एव यदि जानन्ति रसं तस्य न चापरे ॥
एवं व्यवस्थिते राजन् दुःखिभिः सुखपूरितः ।
परमार्थमनालोच्य निन्दितोऽस्मि मुधा जनैः ॥
किं वा सुखाभिमानेन यूयमेवं विनाटिताः ।
न लक्षयथ राजेन्द्र परमार्थसुखं परम् ॥

नृपतिरुवाच । भगवन्

यद्येवं विषया दुःखं प्रशमः सुखमुत्तमम् ।
तदेष लोकः सर्वोऽपि कस्मान्नेदं प्रबुध्यते ॥
मुनिराह महाराज महामोहवशादिदम् ।
न बुध्यते जनस्तत्त्वं यथासौ वठरो गुरुः ॥

धवलराजेनोक्तं । भदन्त कोऽसौ वठरगुरुः कथं चासौ न बुध्यते स्म तत्त्वं । बुधसूरिराह । महाराजाकर्णय ।

अस्ति भवो नाम विस्तीर्णो ग्रामः । तस्य च मध्ये स्वरूपं नाम शिवायतनं । तच्च सदा पूरितमनर्घ्यरत्नैः भृतं मनोज्ञैर्विविधखण्डखाद्यकैः समायुक्तं द्राक्षापानादिपानकैः समृद्धं धनेन निचितं धान्येन संपन्नं हिरण्येन पर्याप्तं कनकेन अन्वितं वरचेलेन पुष्टमुपस्करेण ।

सर्वथा सर्वसामग्र्या संयुक्तं सुखकारणम् ।
तद्देवमन्दिरं शैवं तुङ्गं स्फटिकनिर्मलम् ॥

तत्र च शिवभवने तस्य स्वामी सारगुरुर्नाम शैवाचार्यः सकुटुम्बकः प्रतिवसति । स चोन्मत्तको हितमपि वत्सलमपि सुन्दरमपि तदात्मीयं कुटुम्बकं न पालयति न च जानीते तस्य स्वरूपं

न लक्षयति तां शिवभवनसमृद्धिं । ततो विज्ञातमिदं तस्य चेष्टितं तद्ग्रामवासिभिस्तस्करैः । ततो धूर्ततया तैरागम्य कृता तेन भौतेन सह मैत्री । तस्य चोन्मत्तकतयैव ते तस्कराः सुन्दरा वत्सला हितकारिणो वल्लभाश्च प्रतिभासन्ते । ततोऽपकर्ण्य तदात्मीयं कुटुम्बकं तैरेव सार्धमनवरतं विलसन्नास्ते । ततोऽसौ वारितो माहेश्वरैः । यथा भट्टारक चौराः खल्वेते मा कार्षीरमीभिः सह सम्पर्कमिति । स तु न शृणोति तद्वचनं । ततो मूर्ख इति मत्वा तैर्माहेश्वरैः सारगुरुरिति नामापहृत्य तस्य वठरगुरुरिति नाम स्थापितं । परित्यक्तं च सर्वमाहेश्वरैर्धूर्ततस्करपरिकरितं तच्छिवभावमापन्नं वठरगुरुमुपलभ्य तद्देवमन्दिरं। ततो लब्धप्रसरैस्तैर्धूर्ततस्करैर्योगदानेन तस्य वर्धितो गाढतरमुन्मादो वशीकृतं शिवायतनं अभिभूतं तत्कुटुम्बकं क्षिप्तं मध्यापवरके तालितं तस्य द्वारं । ततो वशीभूतमस्माकं सर्वमिति मत्वा तुष्टचित्तैस्तैरेकः स्थापितो महाधूर्तस्तस्करो नायकः । ततः कृततालारवास्तस्याग्रतस्तं वठरगुरुं नाटयन्तस्तिष्ठन्ति । गायन्ति चेदं गीतकं । यदुत ।

> धूर्तभावमुपगम्य कथंचिद्धो जना
> वञ्चयध्वमपि मित्रजनं हृतभोजनाः ।
> मन्दिरेऽत्र वठरस्य यथेष्टविधायका
> एत एत ननु पश्यथ वयमिति नायकाः ॥

क्वचित्पुनरेवं गायन्ति । यदुत ।

> वठरो गुरुरेष गतो वशतां
> वसतिं वयमस्य सरलगताम् ।

निजधूर्ततया प्रकटं जगतां
खादेम पिबेम च हस्तगताम् ॥

स पुनरधन्यो वठरगुरुर्न लक्षयति तामात्मविडम्बनां नावबुध्यते निजकुटुम्बव्यतिकरं न जानीते मन्दिरग्निवायतनहरणं नावगच्छति तेषां रिपुरूपतां मन्यते च महामित्रभावं । ततो हृष्टतुष्टो रात्रौ दिवा च तेषां तस्कराणां कुटुम्बस्य मध्यगतो नृत्यन्नास्ते । तत्र च ग्रामे चत्वारः पाटकाः प्रतिवसन्ति । तद्यथा । जघन्योऽतिजघन्य उत्कृष्ट उत्कृष्टतरश्चेति । ततोऽसौ वठरगुरुर्बुभुक्षाक्षामक्षान् भोजनं याचते । ततस्तैः समर्पितं तस्य तस्करैर्महाघटकर्परं। चर्चितो मषीपुण्ड्रकैरभिहितश्च । वयस्य गुरो भिक्षामट । विहितमेव तत्तेन। ततस्तैः परिवेष्टित एव गतोऽसौ तत्रातिजघन्यपाटके भिक्षार्थं । ततो गृहे गृहे नृत्यन्नसौ वेष्टितस्तैर्विहिततालारवैर्विचरितुं प्रवृत्तः । संज्ञितास्तस्करैः पिङ्गलोकाः यथा चूर्णयतैनं । ततस्तैः किं कृतं ।

यष्टिमुष्टिमहालोष्टप्रहारैस्ताडितो भृशम् ।
स वराको रटन्नुच्चैः कृतान्तैरिव दारुणैः ॥
अनुभूय महादुःखं चिरं भिक्षाविवर्जितः ।
निर्गतः पाटकात्तस्मात्ततोऽसौ भग्नकर्परः ॥

ततः समर्पितं तैस्तस्करैस्तस्य शरावं। नीतस्तत्र जघन्यपाटके । तत्रापि न लभते भिक्षां बाध्यते पिङ्गजनेन ।

ततस्तत्रापि पर्यट्य चिरं भग्ने शरावके ।
उत्कृष्टपाटके नीतस्तैर्दत्त्वा ताम्रभाजनम् ॥

तत्रासौ विरलां भिक्षां लभते छायया तया।
यथायं देवगेहस्य रत्नपूर्णस्य नायकः॥
कदर्थ्यते च तत्रापि पिङ्गलोकैस्तथा परैः।
अथान्यदा क्वचित्तस्य भग्नं तत्ताम्रभाजनम्॥
तत्र भग्ने पुनः पात्रे दत्त्वा राजतभाजनम्।
तथैव वेष्टितश्चौरैर्नीतोऽसौ तुर्यपाटके॥
तत्र चात्यन्तविख्यातः किलायं रत्ननायकः।
ततः सुसंस्कृतां भिक्षां लभतेऽसौ गृहे गृहे॥
एवं ते तस्करास्तेषु पाटकेषु पुनः पुनः।
भ्रमयन्त्येव तं भीतं नाटयन्तो दिवानिशम्॥
हसन्तश्चूर्णयन्तश्च वल्गमाना गृहे गृहे।
कृततालारवा दुष्टा नानारूपैर्विडम्बनैः॥
स तथा क्रियमाणोऽपि तस्करैर्वठरो गुरुः।
भिक्षामात्रेण हृष्टात्मा वल्गते पूरितोदरः॥

गायति च। कथम्।

अतिवत्सलको मम मित्रगणः
कुरुते विनयं च समस्तजनः।
तदिदं मम राज्यमहो प्रकटं
भ्रियते जठरं सुधया विकटम्॥

आत्मानं मन्यते मूढो मग्नं च सुखसागरे।
द्वेष्टि तस्करदोषाणां कथकं स जडो जनम्॥

न पुनरसौ वराको बहिर्भावितं रत्नादिसद्भावालोकभवना-

च्छावितमसुरक्तसुन्दरनिजकुटुम्बात् पातितं दुःखसमुद्रे शोच्यमात्मानमाकलयतीति ॥

तदेष महाराज निवेदितस्ते मया वठरगुरुर्येन सदृशोऽयं लोक इति ॥ नृपतिराह । कथमेतत् । भगवतोक्तं । आकर्णय ।

ग्रामोऽत्र भूप संसारो विस्तीर्णस्तस्य मध्यगम् ।
स्वरूपं जीवलोकस्य विज्ञेयं शिवमन्दिरम् ॥
तदेव ज्ञानवीर्यादिरत्नपूरैश्च पूरितम् ।
संपूर्णं सर्वकामैश्च परमानन्दकारणम् ॥
जीवलोकस्य तत्स्वामी भौताचार्यो निगद्यते ।
तस्य स्वाभाविकाः सर्वे ये गुणास्तत्कुटुम्बकम् ॥
तत्तु स्वाभाविकं तस्य सुन्दरं हितकारि च ।
तथापि जीवलोकस्य न चित्ते प्रतिभासते ॥
सोऽयं लोकः सदोन्मत्तः कर्मयोगेन वर्तते ।
न जानीते निजं रूपं गुणरत्नादिपूरितम् ॥
रागादिदोषाः सर्वेऽपि तस्कराः परिकीर्तिताः ।
त एव हि महाधूर्ता जीवलोकस्य वञ्चकाः ॥
सुहृदस्ते प्रभाषन्ते जीवलोकस्य वल्लभाः ।
ते च गाढं प्रकुर्वन्ति कर्मोन्मादस्य वर्धनम् ॥
ते स्वरूपं वशीकृत्य जीवलोकस्य ये गुणाः ।
कुटुम्बमन्तस्तत्क्षिप्रा चित्तद्वारं निरुन्धते ॥
तदेवं ते धरानाथ गुणसम्भारपूरितम् ।
स्वरूपं जीवलोकस्य हृत्वा मन्दिरसन्निभम् ॥

अभिभूय तिरोधाय तस्य भावकुटुम्बकम् ।
ग्रहहूतोपमं राज्ये महामोहं निधाय च ॥
रागादिदोषाः सर्वेऽपि तस्यार्थे दृष्टमानसाः ।
तं लोकं वर्धितोन्मादं नाटयन्ति वशीकृतम् ॥
स एष श्रूयते भूप महाकोलाहलः सदा ।
गीततालरवोन्मिश्रः कृतो रागादितस्करैः ॥
माहेश्वरास्तु विज्ञेयास्ते जीवा जैनदर्शने ।
प्रबुद्धास्ते हि तं लोकं वारयन्ति क्षणे क्षणे ॥

कथं ।

जीवलोक न युक्तस्ते सङ्गो रागादितस्करैः ।
सर्वस्वहारका दुष्टास्त्वेते भावशत्रवः ॥
स तु कर्ममहोन्मादविक्लवीभूतचेतनः ।
हितं तत्तादृशं वाक्यं जीवलोकोऽवमन्यते ॥
सुन्दराः सुहृदो धन्या ममैते हितहेतवः ।
एवं हि मन्यते मूढो रागादीनेष भावतः ॥
ततो माहेश्वराकारैः स सारगुरुसन्निभः ।
तैर्ज्ञाततत्त्वैर्मूर्खत्वाद्दठरो गुरुरुच्यते ॥
तं लोकभीतं विज्ञाय धूतं रागादितस्करैः ।
जैनमाहेश्वरास्तस्य त्यजन्ति शिवमन्दिरम् ॥
यथा च याचितास्तेन क्षुधाक्षामेण भोजनम् ।
ते तस्कराः करे दत्तं तैस्तस्य घटकर्परम् ॥
विक्षिप्तस्य मषीपुण्ड्रैर्नीतो भिक्षाटनेन सः ।

तदिदं जीवलोकेऽपि समानमिति गृह्यते ॥

तथाहि ।

भोगाकांक्षाक्षुधाक्षामो जीवलोकोऽपि वर्तते ।
रागाद्यैरेष यत्नेन याचते भोगभोजनम् ॥
ततस्तेऽपि भवग्रामे भिक्षाटनविधित्सया ।
निःसारयन्ति दर्पिष्ठास्तं लोकं भौतसन्निभम् ॥
कथम् ।
कृष्णपापमषीलेपपुण्ड्रकैर्गाढचर्चितम् ।
विग्राह्यनरकायुष्कवितीर्णघटकर्परम् ॥
तिर्यङ्नारकमानुष्यदेवसम्बन्धिनो भवाः ।
विज्ञेयास्ते भवग्रामे चत्वारः पाटकास्त्वया ॥
जघन्यातिजघन्यौ द्वौ तत्राद्यौ परिकीर्तितौ ।
उत्कृष्टो मानुषो ज्ञेयस्तथोत्कृष्टतरः परः ॥
कर्परं च शरावं च ताम्रं राजतमेव च ।
भाजनं लोकभौतस्य तदायुष्कमुदाहृतम् ॥
स एष जीवलोकस्तैर्वेष्टितो भावतस्करैः ।
पापात्मा नरकं यायादाद्यपाटकसन्निभम् ॥
तत्रासौ याचमानोऽपि नाश्नुते भोगभोजनम् ।
घोरैर्नरकपालैश्च पीड्यते पिङ्गसन्निभैः ॥
तीव्रानन्तमहादुःखसङ्घातमनुभूय च ।
आयुष्ककर्परे भग्ने निर्गच्छेष ततः क्वचित् ॥
अथ तिर्यग्भवं प्राप्य द्वितीयमिव पाटकम् ।

ततोऽसौ पर्यटेत्तत्र भोगभोजनलम्पटः ॥
अथ तत्रापि नैवासौ लभते भोगभोजनम्।
क्षुदादिपिङ्गलोकेन केवलं परिपीड्यते ॥
पुनश्च तिर्यगायुष्के क्वचिच्छिद्रं गते सति।
तृतीयपाटकाकारं मानुष्यकमवाप्नुते ॥
अथ तत्र भवेदस्य पुण्यलेशः कथंचन।
आन्तरैश्वर्ययुक्तत्वे सा छाया परिकीर्तिता ॥

ततश्च।

या छायास्य महाराज सा पुण्यलवलक्षणा।
तया हि जीवलोकोऽत्र लभते भोगभोजनम् ॥
तथा मनुष्यभावेऽपि राजदायदतस्करैः।
रागादिभिश्च पीड्येत धूर्तोन्नजनसन्निभैः ॥
स तासभाजनाकारे नरायुष्केऽनिलङ्घिते।
गच्छेद्देवभवं लोकस्तुर्यपाटकसन्निभम् ॥
अन्तरङ्गमहारत्नच्छाया तत्र गरीयसी।
नरेन्द्र जीवलोकस्य देवलोके विभाव्यते ॥
ततस्तत्र भवे भूरि लभते भोगभोजनम्।
दधानो राजताकारममरायुष्कभाजनम् ॥
एवमेष महाराज लोकभीतो दिवानिशम्।
बुभुक्षितो भवग्रामे बम्भ्रमीति पुनः पुनः ॥
उन्मत्तः कर्मयोगेन पापमय्या विलेपितः।
रागादिभिः क्षतारावैर्वेष्टितो धूर्ततस्करैः ॥

हसन् गायन् रटन्नुच्चैर्नृत्यन्नुद्दामलीलया ।
तेषु तेषु महाराज योनिगेहेषु हिण्डते ॥
यथा च हृदये तुष्टः स भौतो भिक्षया तया ।
वराको नैव जानीते हृतं रत्नभृतं गृहम् ॥
अभिभूतं कुटुम्बं च सुन्दरं गाढवत्सलम् ।
न लक्षयति चात्मानं दुःखसागरमध्यगम् ॥
केवलं मोहदोषेण संतुष्टः सुखनिर्भरः ।
वल्गमानो जने गाढं करोत्यात्मविडम्बनम् ॥
तथायमपि राजेन्द्र जीवलोकः कथंचन ।
संसारे यद्यवाप्नोति तुच्छं वैषयिकं सुखम् ॥

तथा।

इन्द्रत्वं विबुधत्वं वा राज्यं रत्नधनादिकम् ।
पुत्रं कलत्रमन्यद्वा लभते यदि किंचन ॥
ततोऽलीकाभिमानेन किलाहं सुखनिर्भरः ।
मीलन्निःस्पन्दमन्दाक्षो न चेतयति किंचन ॥

ततश्च ।

अहो सुखमहो स्वर्गो धन्योऽहमिति भावितः ।
एवं विचेष्टते भूप यथायं तावको जनः ॥
अनन्तदर्शनज्ञानवीर्यानन्दादिभिः सदा ।
भावरत्नैर्भृतं त्वात्मस्वरूपं नावबुध्यते ॥
वराको न च जानीते यथेदं भावतस्करैः ।
हृतं रागादिभिर्मेऽत्र स्वरूपं मन्दिरोपमम् ॥

क्षमामार्दवसत्यादिरूपं भावकुटुम्बकम् ।
न चायं बुध्यते लोकः सुन्दरं हितवत्सलम् ॥
दृष्टं च न विजानीते चित्तापवरके यथा ।
अमीभिरेव रागाद्यैरभिभूय तिरोहितम् ॥
ततोऽयं तादृशैश्वर्यादनन्तानन्ददायिनः ।
भ्रंशितः सुखहेतोश्च कुटुम्बात्तैर्वियोजितः ॥
चिप्तश्चात्र भववामे दुःखसङ्घातपूरिते ।
तथापि लोको रागादीन् वयस्यानिव मन्यते ॥
भिक्षाभूतमिदं लब्ध्वा तथा वैषयिकं सुखम् ।
हृष्टो नृत्यति मूढात्मा यथासौ वठरो गुरुः ॥
तदेवमेव राजेन्द्र जनस्तत्त्वं न बुध्यते ।
दुःखसागरमध्यस्थः सुखितं तेन मन्यते ॥

धवलराजेनोक्तं । भदन्त यद्येवं ततः सततमुन्मत्ता वयं विषमा रागादितस्कराः मुषितं स्वरूपशिवायतनं नाशितं भावकुटुम्बं पर्यटामो भववासे सुदुर्लभा भोगभिक्षा तल्लवलाभेन तुष्टा वयं निमग्नाः परमार्थतो दुःखसागरे। अतः कथं पुनरितोऽस्माकं मोक्षो भविष्यतीति । बुधसूरिणोक्तं । महाराज भविष्यति भवतामितो भवविडम्बनान्मोक्षो यदि यादृशं तस्य वठरगुरोर्दशान्तरं संपन्नं तादृशं भवतामपि संपद्येत । नृपतिराह । भदन्त किं पुनस्तस्य संपन्नं । भगवतोक्तं । महाराज स तथानवरतं तैर्धूर्ततस्करैः खली-क्रियमाणं वठरगुरुमुपलभ्य समुत्पन्ना कस्यचिदेकस्य महामाहेश्वरस्य तस्योपरि करुणा । यदुत कथमस्य दुःखविमोक्षो जायेत । ततः

पृष्टोऽनेनैको महावैद्यः । दत्तस्तेनोपदेशः । सम्यगवधारितोऽनेन । गृहीतमुपकरणं । गतो रात्रौ शिवायतनं । इतश्च बृहतीं वेलां नाटयित्वा वठरगुरुं श्रान्ता इव प्रसुप्तास्ते तस्मिन्नवसरे धूर्ततस्कराः । ततः प्रविष्टो माहेश्वरः । प्रज्वालितोऽनेन शिवमन्दिरे प्रदीपः । ततो दृष्टोऽसौ वठरगुरुणा माहेश्वरः । तथाभव्यतया च संजातखेदेन याचितोऽसौ जलपानं । माहेश्वरः प्राह । भट्टारक पिबेदं तत्त्वरोचकं नाम सत्तीर्थोदकं । पीतमनेन । ततः प्रनष्टः क्षणादुन्मादो निर्मलीभूता चेतना विलोकितं शिवमन्दिरं दृष्टास्ते धूर्ततस्कराः । किमेतदिति पृष्टो माहेश्वरः । कथितोऽनेन शनैः शनैः सर्वोऽपि वृत्तान्तः । ततोऽभिहितं शैवेन । तर्हि किं मयाधुना विधेयं । ततः समर्पितो माहेश्वरेणास्य वज्रदण्डः । प्राह च । भट्टारक वैरिणस्तवैते । ततो निपातय मा विलम्बिष्ठाः । ततः समुत्थाय चूर्णिता वज्रदण्डेन ते सर्वेऽपि तस्कराः शैवेन । प्रविघाटितश्चित्तापवरकः । प्रकटीभूतं कुटुम्बकं । आविर्भूता रत्नराशयः । प्रविलोकिता सर्वापि निजशिवमन्दिरविभूतिः । संजातः प्रमोदातिरेकः । ततो बहुतस्करं परित्यज्य तं भवग्रामं स्थितस्ततो वहिर्भूते निरुपद्रवे शिवालयाभिधाने गत्वा महामठे स सारगुरुरिति । तदयमीदृशो वृत्तान्तस्तस्य संपन्नः ॥

नृपतिरुवाच । भदन्त कथमेष वृत्तान्तोऽत्र जने समानः । भगवानाह । महाराजाकर्णय । महामहेश्वरस्थानीयोऽत्र सद्धर्मप्रबोधकरो गुरुर्द्रष्टव्यो । यतः ।

विडम्ब्यमानं रागादितस्करैर्दुःखपीडितम् ।

भावैश्वर्यपरिभ्रष्टं स्वकुटुम्बवियोजितम् ॥
लोकभीतं भवग्रामे वीक्ष्य भिक्षाचरोपमम् ।
तन्मात्रेणैव संतुष्टं कर्मोन्मादेन विक्लवम् ॥
सद्धर्मगुरुरेवात्र जायते करुणापरः ।
अमुष्माद्दुःखसन्तानात्कथमेष वियोच्यते ॥ इति ।

ततो जिनमहावैद्योपदेशादवधारयति सद्धर्मगुरुस्तत्रोपायं । ततो धूर्ततस्करेष्विव सुप्तेषु रागादिषु क्षयोपशममुपगतेषु प्रज्वालयति जीवस्वरूपशिवमन्दिरे सज्ज्ञानप्रदीपं पाययति सम्यग्दर्शनामलजलं समर्पयति चारित्रवज्रदण्डं । ततोऽयं जीवलोकः सज्ज्ञानप्रदीपोद्योतितस्वरूपशिवमन्दिरे महाप्रभावसम्यग्दर्शनसलिलपाननष्टकर्मोन्मादो गृहीतचारित्रदण्डभासुरो गुरुवचनेनैव निर्दलयति सद्धर्ममाहत्य महामोहादिधूर्ततस्करगणं । तं च निर्दलयतोऽस्य जीवलोकस्य विशालीभवति कुशलाशयः क्षीयन्ते प्राचीनकर्माणि न बध्यन्ते नूतनानि विलीयते दुश्चरितानुबन्धः समुल्लसति जीववीर्यं निर्मलीभवत्यात्मा परिणमति गाढमप्रमादो निवर्तन्ते मिथ्याविकल्पाः स्थिरीभवति समाधिरत्नं प्रक्षीयते भवसन्तानः । ततः प्रविघाटयत्येष जीवलोकश्चित्तापवरकावरणकपाटं । ततः प्रादुर्भवति स्वाभाविकगुणकुटुम्बकं । विस्फुरन्ति ऋद्धिविशेषाः । विलोकयति तानेष जीवलोको विमलसंवेदनालोकेन । ततः संजायते निरभिष्वङ्गानन्दसन्दोहः । समुत्पद्यते बद्धदोषभवग्रामजिहासा । उपशाम्यति विषयमृगतृष्णिका । स्थिरीभवत्यमार्गभीः । विघटन्ति सूक्ष्मकर्मपरमाणवः । व्यावर्तते चिन्ता । संतिष्ठते विशुद्धध्यानं ।

दृढीभवति योगरत्नं। जायते महासामायिकं। प्रवर्ततेऽपूर्वकरणं। विजृम्भते क्षपकश्रेणी। निहन्यते कर्मजालशक्तिः। विवर्तते शुक्लध्यानानलः। प्रकटीभवति योगमाहात्म्यं। विमोच्यते सर्वथा घातिकर्मपाशेभ्यः क्षेत्रज्ञः। स्थाप्यते परमयोगे। देदीप्यते विमलकेवलालोकेन। कुरुते जगदनुग्रहं। विधत्ते च केवलिसमुद्घातं। समानयति कर्मशेषं। संपादयति योगनिरोधं। समारोहति शैलेश्यवस्थां। त्रोटयति भवोपग्राहि कर्मबन्धनं। विमुञ्चति सर्वथा देहपञ्जरं। ततो विहाय भवग्राममेव जीवलोकः सततानन्दो निराबाधो गत्वा तत्र शिवालयाभिधाने महामठे सारगुरुरिव सभावकुटुम्बकः सकलकालं तिष्ठतीति॥ अनेन हेतुना महाराज मयोक्तं। यथा यादृशं तस्य सारगुरोर्वृत्तान्तान्तरं संपन्नं तादृशं यदि भवतामपि संपद्येत ततो भवेदितो विडम्बनान्मोचो नान्यथेति।

ततः श्रुत्वा मुनेर्वाक्यमिदमत्यन्तसुन्दरम्।
हृष्टः स धवलो राजा ते च लोकाः प्रमोदिताः॥

ततश्च।

विदलत्कर्मजालैस्तैः समस्तैर्भक्तिनिर्भरैः।
इदमुक्तमनूचानैर्ललाटे कृतकुड्मलैः॥
येषां नो भगवन्नाथः संपन्नोऽत्यन्तवत्सलः।
तेषां न दुर्लभो नाम वृत्तान्तोऽयं यतीश्वर॥
अतो भगवतास्माकं निर्विकल्पेन चेतसा।
दीयतामधुनादेशो मादृशैः किं विधीयताम्॥

बुधसूरिराह ।

साधु साध्वदितं भद्राः सुन्दरा भवतां मतिः ।
विज्ञातं ननु युष्माभिः सर्वं मामकभाषितम् ॥
बुद्धो मदीयवाक्यार्थः सभावार्थो नरोत्तमाः ।
साम्प्रतं हि महाराज सफलो मे परिश्रमः ॥
इयानेव ममादेशो भवद्भिः क्रियतामिह ।
यन्मया विहितं भूप तद्भवद्भिर्विधीयताम् ॥

नृपतिरुवाच । भदन्त किं भवद्भिर्विहितं । बुधसूरिराह ।

पर्यालोच्य मयासारं संसारं चारकोपमम् ।
दीक्षा भागवती भूप गृहीता तन्निवर्हिणी ॥
युष्माकमपि चेज्जातो मदीयवचनेन भोः ।
अनन्तदुःखविस्तारे निर्वेदो भवचारके ॥
ततो गृह्णीत तां दीक्षां संसारोच्छेदकारिणीम् ।
हे लोका मा विलम्बध्वं धर्मस्य त्वरिता गतिः ॥

नृपतिरुवाच ।

यदादिष्टं भदन्तेन स्थितं तन्मम मानसे ।
किंचित्तु भवता तावत्कथ्यतां मे कुतूहलम् ॥
एते प्रबोधिता नाथ यत्नेन भवता वयम् ।
भवांस्तु बोधितः केन कथं वा कुत्र वा पुरे ॥
किं वा जातः स्वयंबुद्धो भदन्त परमेश्वरः ।
सर्वं निवेद्यतां नाथ ममेदं हितकाम्यया ॥
सूरिराह महाराज साधूनामात्मवर्णनम् ।

नैवेह युज्यते कर्तुं तद्धि लाघवकारणम् ॥
ममात्मचरिते तच्च कथ्यमाने परिस्फुटम्।
यतः संपद्यते तस्मान्न युक्तं तस्य कीर्तनम् ॥
ततो धवलराजेन प्रणम्य चरणद्वयम्।
स पृष्टः कौतुकावेशान्निर्बन्धेन पुनः पुनः ॥
अथ विज्ञाय निर्बन्धं तादृशं तस्य भूपतेः।
कुतूहलं जनानां च ततः सूरिरभाषत ॥
यद्यस्ति ते महाराज महदत्र कुतूहलम्।
ततो निवेद्यते तुभ्यं समाकर्णय साम्प्रतम् ॥

अस्ति लोके सुविख्यातं विस्तीर्णमतिसुन्दरम्।
अनेकाद्भुतवृत्तान्तं पुरं नाम धरातलम् ॥
तत्र प्रसिद्धमाहात्म्यो जगदाह्लादकारकः।
राजा शुभविपाकोऽस्ति प्रतापाक्रान्तभूतलः ॥
तस्यातिवल्लभा साध्वी समस्ताङ्गमनोहरा।
विद्यते विदिता लोके सुन्दरी निजसाधुता ॥
अन्यदा कालपर्यायादासाद्य निजसाधुताम्।
समुत्पन्नो बुधो नाम तत्सुतो लोकविश्रुतः ॥
आकरो गुणरत्नानां कलाकौशलमन्दिरम्।
स वर्धमानः संजातो रूपेण मकरध्वजः ॥
भ्राता शुभविपाकस्य जगत्तापकरः परः।
तथाशुभविपाकोऽस्ति भीषणो जनमेजयः ॥
तस्य विख्यातमाहात्म्या लोकसन्तापकारिणी।

देवी परिणतिर्नाम विद्यते भीमविग्रहा ॥
अथ ताभ्यां समुत्पन्नो दारुणाकारधारकः ।
विषाङ्कुरोपमः क्रूरो मन्दो नाम सुताधमः ॥
आवासो दोषकोटीनां गुणगन्धविवर्जितः ।
संपन्नो वर्धमानोऽसौ तथापि मदविक्लः ॥
पितृव्यपुत्रभावेन तयोश्च बुधमन्दयोः ।
यदृच्छया वा संपन्ना भ्रातोर्मैत्री मनोहरा ॥
सहितावेव तौ नित्यं नगरे काननेषु च ।
ततो विचरतः स्वेच्छाक्रीडारसपरायणौ ॥
अथास्ति धिषणा नाम पुरे विमलमानसे ।
शुभाभिप्रायराजस्य दुहिता चारुदर्शना ॥
सा तेन यौवनस्थेन बुधेन वरलोचना ।
गृहे स्वयंवरायाता परिणीता हृतोत्सवा ॥
तस्याश्च कालपर्यायान्निःशेषगुणमन्दिरम् ।
मनोरथशतैर्जातो विचारो नाम पुत्रकः ॥
अथान्यदा निजे क्षेत्रे क्रीडतोर्बुधमन्दयोः ।
यत्तदानीं समापन्नो वृत्तान्तस्तं निबोधत ॥
अस्य क्षेत्रस्य पर्यन्ते दृष्टस्ताभ्यां मनोरमः ।
ललाटपट्टसंज्ञामा विशालो वरपर्वतः ॥
तस्योपरिष्टादुत्तुङ्गे शिखरे सुमनोहरा ।
निलीनालिकुलच्छाया कबर्याख्या वनावली ॥
ललाटपट्टनामानं पर्वतं तं निरीक्षितुम् ।

अथ तौ लीलया तत्र प्रदेशे समुपागतौ ॥
यावद्दृष्टा सुदीर्घाभिः शिलाभिः परिनिर्मिता।
तस्याधस्ताद्गता दूरं नासिकाख्या महागुहा ॥
अथ तां तादृशीं वीक्ष्य रमणीयां महागुहाम्।
तन्निरूपणसाम्यर्थं संजातं बुधमन्दयोः ॥
अथाग्रे संस्थितौ तस्यास्तन्निरीक्षणलालसौ।
यावद्दृष्टं सुगम्भीरं तत्रापवरकद्वयम् ॥
युक्तं तदन्धकारेण लोचनप्रसरातिगम्।
अदृश्यमानपर्यन्तं द्वाराभ्यामुपलक्षितम् ॥
ततो मन्दो बुधं प्राह पश्यापवरकद्वयम्।
अनेनैव विभक्तेयं नासिकाख्या महागुहा ॥
तदाकर्ण्य बुधेनोक्तं भ्रातः सम्यग्विनिश्चितम्।
एषा शिलानयोर्मध्ये विभागार्थं विनिर्मिता ॥
एवं च जल्पतोर्दूरं तदानीं बुधमन्दयोः।
गुहातो निर्गता काचिद्दारिका चटुलाकृतिः ॥
प्रणम्य पादयोस्तूर्णं तयोः सा राजपुत्रयोः।
पुरतो दर्शितप्रीतिस्ततश्चेत्यमभाषत ॥
स्वागतं भवतोरद्य विहितो मदनुग्रहः।
प्रतिजागरणं नेऽद्य युवाभ्यां यदनुष्ठितम् ॥
ततो मन्दो लसत्तोषो दृष्ट्वा वचनपाटवम्।
तां दारिकां मृदूल्लापैः सस्नेहं समभाषत ॥
कथम्।

निवेदयावयोर्बाले कासि त्वं वरलोचने।
किमर्थं वा वसस्यत्र गुहाकोटरचारिणी॥
एतच्च वचनं श्रुत्वा सा शोकभरपीडिता।
मूर्छया पतिता बाला भूतले नष्टचेतना॥
ततो वायुप्रदानाद्यैर्मन्देनाश्वासिता पुनः।
स्थूलमुक्ताफलानीव साश्रुबिन्दूनमुञ्चत॥
भद्रे किमेतदित्येवं पृच्छतश्च पुनः पुनः।
मन्दस्य सावबीद्देवं स्नेहगद्गदया गिरा॥
नाथ मे मन्दभाग्यायाः किं स्तोकं शोककारणम्।
युवयोर्विस्मृतास्मीति याहं स्वस्वामिनोरपि॥
अहं भुजङ्गता नाम भवतोः परिचारिका।
युवाभ्यामेव देवाभ्यां गुहायां विनियोजिता॥
अस्यां हि भवतोरस्ति घ्राणनामा वयस्यकः।
तिष्ठामि युष्मदादेशात्तस्याहं परिचारिका॥
चिरकालमदृष्टं हि युवयोस्तेन संगतम्।
यथा चेदं तथा नाथ समाकर्णय साम्प्रतम्॥
पुरेऽसंव्यवहाराख्ये पुराभूद्भवतोः स्थितिः।
ततः प्रचलितौ कर्मपरिणामस्य शासनात्॥
गतावेकाक्षसंस्थाने विकलाक्षे पुनस्ततः।
भूरिलोकाकुलं तत्र विद्यते पाटकत्रयम्॥
द्वितीये पाटके सन्ति यत्र वः कुलपुत्रकाः।
तत्र त्रिकरणे नाम तन्मध्ये संस्थितौ युवाम्॥

स कर्मपरिणामाख्यो नरेन्द्रस्तत्र तिष्ठतोः।
प्रसन्नो युवयोस्तेन दत्तेयं वां महागुहा॥
अयं च घ्राणसंज्ञोऽत्र वयस्यो हितकारकः।
युवयोर्विहितस्तेन गुहायाः परिपालकः॥
सुखसागरहेतुश्च युवयोरेष वत्सलः।
वयस्योऽचिन्त्यमाहात्म्यस्ततः प्रभृति वर्तते॥

किं तु।

राजादेशवशादेष न गुहाया विनिर्गतः।
तत्रैव वर्तमानोऽयं युवाभ्यां लालितः पुरा॥
तथाविधेषु स्थानेषु यत्र यत्र गतौ युवाम्।
लालितस्तत्र तत्रायं गन्धैर्नानाविधैः पुरा॥
पुरीं मनुजगत्याख्यामन्यदा क्वचिदागतौ।
तस्यां पुनर्विशेषेण युवाभ्यामेष लालितः॥
अहं च विहिता स्नेहादस्यैव परिचारिका।
युवाभ्यामेव मित्रस्य मन्दभाग्या भुजङ्गता॥
तदेवं चिररूढैषा घ्राणेन सह मैत्रिका।
युवयोरनुचरी लोके प्रसिद्धाहं भुजङ्गता॥
तथापि देवौ यद्येवं कुर्वाते गजमीलिकाम्।
अतः परतरं नाथ, किं शोकभरकारणम्॥
तस्माच्चिरन्तनस्थित्या दृश्यतां किङ्करो जनः।
युवाभ्यां नाथ निर्मिथ्यं पाल्यतामेष बान्धवः॥
एवं वदन्ती सालीकस्नेहदर्शितसम्भ्रमा।

पादेषु पतिता गाढं बालिका बुधमन्दयोः ॥
बुधेन चिन्तितं हन्त दारिका नैव सुन्दरा।
इयं हि धूर्ततासारा कारणैः प्रविभाव्यते ॥

यतः।

कपोलस्रुचितं हास्यं सलज्जं मृदुभाषितम्।
भवतीह कुलस्त्रीणां निर्विकारं निरीक्षितम् ॥
एषा तु दृढदाटोपा विलासोल्लासिलोचना।
वागाडम्बरसारा च ततो दुष्टा न संशयः ॥
ततोऽवधार्य चित्तेन बुधेनेत्थं महात्मना।
कृतावधीरणा तस्याः किंचिन्नो दत्तमुत्तरम् ॥
मन्दस्तु पादपतितां समुत्थाप्य भुजङ्गताम्।
संजातनिर्भरस्नेहस्ततश्चेदमवोचत ॥
विषादं मुञ्च चार्वङ्गि धीरा भव वरानने।
एवं हि गदितुं बाले युक्तं ते चारुलोचने ॥
वृत्तान्तो विकृतोऽप्येष तथा संपादितस्त्वया।
अनेन स्नेहसारेण यथा प्रत्ययतां गतः ॥
तदत्रभवती तावन्निवेदयतु मेऽधुना।
यदेष कुरुते भद्रे स्नेहकौतो जगत्स्व ॥
तयोक्तमियदेवात्र कर्तव्यं नाथ साम्प्रतम्।
अयं चिरन्तनस्त्विष्या स्वामिनीयो वयस्यकः ॥
मन्दः प्राह यथा कार्ये मानसं कमलानने।
सदास्य वर्तमिषस्य तत्सर्वं मे निवेदय ॥

भुजङ्गताह सद्गन्धलुब्धबुद्धिरयं सदा।
अतः सुगन्धिभिर्द्रव्यैः क्रियतामस्य लालनम्॥
चन्दनागरुकर्पूरकुरङ्गमदमिश्रितम्।
कुङ्कुमचोद्गन्धाढ्यं रोचतेऽस्मै विलेपनम्॥
एलालवङ्गकर्पूरसज्जातिफलसुन्दरम्।
तथा सुगन्धिताम्बूलं स्वदतेऽस्मै मनोरमम्॥
सधूपा विविधा गन्धा वर्तिकाः पुष्पजातयः।
यत्किंचित्सौरभोपेतं तदेवास्यातिवल्लभम्॥
दुर्गन्धिवस्तुनामापि नैवास्य प्रतिभासते।
तस्मात्सुदूरतस्त्याज्यं तदस्य सुखमिच्छता॥
तदेवं क्रियतां तावल्लालनं मित्रपालनम्।
एतद्धि भवतोर्दुःखवारणं सुखकारणम्॥
यदेवं लालितेनेह घ्राणेन भवतोः सुखम्।
संभविष्यति तद्दे्व को हि वर्णयितुं क्षमः॥
मन्देनोक्तं विशालाक्षि सुन्दरं गदितं त्वया।
सर्वं विधीयते सुभ्रु तिष्ठ भद्रे निराकुला॥

एवं च वदतो मन्दस्य

पादयोः पतिता भूयो हर्षविस्फारितेक्षणा।
महाप्रसाद इत्येवं वदन्ती सा भुजङ्गता॥
बुधस्तु मौनमालम्ब्य शून्यारण्ये मुनिर्यथा।
अवस्थितो यतस्तेन शठोऽयं लक्षितस्तया॥
ततो न किंचिदुक्तोऽसौ काकली विहिता परम्।

बुधेन तु तदालोक्य चित्तेनेदं विवेचितम् ॥

अये

घ्रेवं मदीयं शैलस्य नासिकेयं महागुहा ।
अतोऽस्यां यः स्थितो घ्राणः स मे पाल्यो न संशयः ॥
केवलं यदियं वक्ति दारिका भायसारिका ।
तन्मया नास्य कर्तव्यं लालनं सुखकाम्यया ॥

किं तु

यावत् घ्रेवं न मुञ्चामि तावदस्यापि पालनम् ।
कार्यं विशुद्धमार्गेण लोकयात्रानुरोधतः ॥
एवं निश्चित्य चित्तेन बुधस्तं पालयन्नपि ।
घ्राणं न युज्यते दोषैर्लभते सुखमुत्तमम् ॥
मन्दस्तु तां पुरस्कृत्य शठचित्तां भुजङ्गताम् ।
घ्राणलालनलाम्पट्याल्लभते दुःखसागरम् ॥

कथं ।

सुगन्धिद्रव्यसंभारकरणोद्यतमानसः ।
तन्तम्यते स्वया मूढस्तन्निमित्तं दिवानिशम् ॥
दुर्गन्धपरिहारं च कुर्वाणः खिद्यते मुधा ।
शमसौख्यं न जानीते हस्यते च विवेकिभिः ॥
तथापि मोहदोषेण सुगन्धमन्दर्भनिर्भरम् ।
आत्मानं मन्यते मन्दः समस्तो घ्राणनामने ॥
इतश्च यौवनारूढो विचारो राजदारकः ।

कथंचिल्लीलया गेहाद्देशकालिकया गतः ॥
बहिरङ्गान्तरङ्गेषु स देशेषु पुनः पुनः।
पर्यट्य क्वचिदायातः स्वगेहे राजदारकः ॥
अथ तत्र समायाते प्रहृष्टौ धिषणाबुधौ।
संजातौ दृढदानन्दः संतुष्टं राजमन्दिरम् ॥

ततश्च

वृत्ते महाविमर्देन समागममहोत्सवे।
सा ज्ञाता मैत्रिका तेन घ्राणेन बुधमन्दयोः ॥
ततो रहसि संस्थाप्य तमात्मपितरं बुधम्।
स विचारः प्रणम्येत्थं प्रोवाच कृतकुड्मलः ॥
तात यो युवयोर्जातो घ्राणनामा वयस्यकः।
सोऽयं न सुन्दरो दुष्टस्तत्राकर्णय कारणम् ॥
अस्ति तावदहं तात देशदर्शनकाम्यया।
अपृष्ट्वा तातमम्बां च निर्गतो भवनात्तदा ॥
ततोऽनेकपुरग्रामखेटाकरमनोहरा।
विलोकिता मया तात भ्रान्त्वा भ्रान्त्वा वसुन्धरा ॥
अन्यदा भवचक्रेऽहं संप्राप्तो नगरे परे।
राजमार्गे मया दृष्टा तत्रैका वरसुन्दरी ॥
सा मां वीक्ष्य विशालाक्षी परितोषमुपागता।
रसान्तरं भजन्ती च कीदृशी प्रविलोकिता ॥
सिक्तेवामृतसेकेन कल्पपादपमञ्जरी।
दृष्टा नीरदनादेन नृत्यन्तीव मयूरिका ॥

प्रगे सहचरस्येव मिलिता चक्रवाकिका।
अभ्रोद्बन्धनेनेव विमुक्ता चन्द्रलेखिका॥
राज्ये कृताभिषेकेव क्षिप्तेव सुखसागरे।
मया सा लक्षिता साध्वी प्रीतिविस्फारितेक्षणा॥
ततस्तां वीक्ष्य संपन्नो ममापि प्रमदस्तदा।
चित्तं ह्यार्द्रीभवेद्दृष्टे सज्जने स्नेहनिर्भरे॥
ततः कृतप्रणामोऽहं प्रोक्तो दत्ताशिषा तया।
ब्रूहि वत्स कुतस्त्योऽसि त्वं मे हृदयनन्दनः॥
मयोक्तमम्ब जातोऽहं धिषणाया धरातले।
पुत्रोऽहं बुधराजस्य देशकालिकया गतः॥
एतदाकर्ण्य सा नारी विलसन्नयनोदका।
स्नेहेन मां परिष्वज्य चुम्बिता मस्तके मुहुः॥
ततः माह महाभाग चारु चारु कृतं त्वया।
[त्वमादावेव मे वत्स विदितश्चित्तलोचनैः॥
जातिस्मरे जनस्यैते लोचने हृदयं च भोः।
यतोऽमूनि विजानन्ति दृष्टमात्रं प्रियाप्रियम्॥]
वत्स त्वं नैव जानीषे मां प्रायेण विशेषतः।
लघिष्ठोऽसि मया वत्स विमुक्तो बालकस्तदा॥
अहं हि मातुस्ते वत्स धिषणाया वयस्यिका।
वल्लभा बुधराजस्य साध्वी मार्गानुसारिता॥
शरीरं जीवितं प्राणाः सर्वस्वं मम सानघा।
तव माता महाभाग पिता ते जीविताधिकः॥

तयोरेव समादेशादहं लोकविलोकनम् ।
कर्तुं विनिर्गता वत्स जातमात्रे पुरा त्वयि ॥
अतोऽस्मे भागिनेयस्त्वं पुत्रस्त्वं जीवितं तथा ।
सर्वस्वं परमात्मा च सर्वं भवसि सुन्दर ॥
सुन्दरं च कृतं वत्स देशदर्शनकाम्यया ।
यदेवं निर्गतो गेहाज्जिगीषुस्त्वं न संशयः ॥

तथाहि ।

यो न निर्गत्य निःशेषां विलोकयति मेदिनीम् ।
अनेकाद्भुतवृत्तान्तां स नरः कूपदर्दुरः ॥

यतः ।

क्व विलासाः क्व पाण्डित्यं क्व बुद्धिः क्व विदग्धता ।
क्व देशभाषाविज्ञानं क्व चैषाचारचारुता ॥
यावद्भूतशताकीर्णा नानावृत्तान्तसङ्कुला ।
नानेकशः परिभ्रान्ता पुरुषेण वसुन्धरा ॥
तयेदं सुन्दरतरं वत्सेन विहितं हितम् ।
भवचक्रे यदायातस्त्वमत्र नगरे परे ॥
इदं हि नगरं वत्स भूरिवृत्तान्तमन्दिरम् ।
अनेकाद्भुतभूयिष्ठं विदग्धजनसङ्कुलम् ॥
विलोकयति यः सम्यगेतद्धि नगरं जनः ।
तेन सर्वमिदं दृष्टं भुवनं सचराचरम् ॥

अथवा किमनेन बहुना ।

धन्यास्मि कृतकृत्यास्मि यस्या मे दृष्टिगोचरम् ।
स्वत एवागतोऽसि त्वं वत्स भद्रकपुञ्जकः ॥
मयोक्तमम्ब यद्येवं ततो मे चारु वेधसा ।
इदं संपादितं हन्त मीलितोऽहं यदम्बया ॥
अधुना दर्शयत्वम्बा प्रसादेन विशेषतः ।
ममेदं वत निःशेषं भवचक्रं महापुरम् ॥
ततः सा बाढमित्युक्त्वा तात मार्गानुसारिता ।
समस्तं भवचक्रं मे सवृत्तान्तमदर्शयत् ॥
अथैकत्र मया दृष्टं पुरं तत्र महागिरिः ।
तच्छिखरे रमणीयं च निविष्टमपरं पुरम् ॥

ततो मयोक्तं ।

निवेदयाम्ब किंनाम पुरमेतदवान्तरम् ।
किंनामायं गिरिः किं च शिखरे दृश्यते पुरम् ॥
मार्गानुसारिता प्राह वत्स नो लक्षितं त्वया ।
सुप्रसिद्धमिदं लोके पुरं सात्त्विकमानसम् ॥
एषोऽपि सुप्रसिद्धोऽत्र विवेकवरपर्वतः ।
प्रख्यातमप्रमत्तत्वमिदं च शिखरं जने ॥
इदं तु भुवनख्यातं वत्स जैनं महापुरम् ।
तव विज्ञातसारस्य कथं प्रष्टव्यतां गतम् ॥
यावत्ता कथयत्येवं मम मार्गानुसारिता ।
तावज्जातो ऽपरस्तत्र वृत्तान्तस्तं निबोध मे ॥
गाढं प्रहारनिर्भिन्नो नीयमानः सुविक्लवः ।

पुरुषैर्वेष्टितो दृष्टो मयैको राजदारकः ॥

ततो मयोक्तं ।

क एष दारको मातः किं वा गाढप्रहारितः ।
कुत्र वा नीयते रुग्णः के वामी परिचारकाः ॥
मार्गानुसारिता प्राह विद्यतेऽत्र महागिरौ ।
राजा चारित्रधर्माख्यो यतिधर्मस्तु तत्सुतः ॥
तस्यायं संयमो नाम पुरुषः ख्यातपौरुषः ।
एकाकी च क्वचिद्दृष्टो महामोहादिशत्रुभिः ॥
ततो बहुलाच्चूर्णो प्रहारैर्जर्जरीकृतः ।
अयं निर्वाहितो वत्स रणभूमेः पदातिभिः ॥
अमी पदातयो वत्स नेष्यन्तीमं स्वमन्दिरे ।
अस्य चात्र पुरे जैने सर्वे तिष्ठन्ति बान्धवाः ॥

मयोक्तं । अम्बिके ।

दृष्टेमं यत्करिष्यन्ति शत्रुभिः परिपीडितम् ।
चारित्रधर्मराजाद्या दृहन्मे तत्र कौतुकम् ॥
अतो महाप्रसादेन नीत्वा मां गिरिमस्तके ।
अधुना दर्शयत्वम्बा स्वामिनोऽस्य विचेष्टितम् ॥

मार्गानुसारितयोक्तं । वत्सैवं क्रियते ।

ततस्तदनुमार्गेण विवेकगिरिमस्तके ।
आरूढा सा मया सार्धं तत्र मार्गानुसारिता ॥
अथ तत्र पुरे जैने राजमण्डलमध्यगः ।

दृष्टश्चित्तसमाधाने मण्डपे स महानृपः ॥
नामतो गुणतः सर्वे वर्णितास्ते पृथक् पृथक् ।
समाये ते महीपालास्तथा विज्ञाततत्त्वथा ॥
इतश्च तैर्नरैस्तूर्णं समानीतः स संयमः ।
दर्शितश्च नरेन्द्रस्य वृत्तान्तश्च निवेदितः ॥
ततस्तं तादृशं ज्ञात्वा शत्रुजन्यं पराभवम् ।
तत्रास्थाने समस्तास्ते सुभटाः क्षोभमागताः ॥

ततश्च

भीमध्वानैः कराघातप्रकम्पितमहीतलैः ।
तैर्जातं तत्सदः क्षोभविभ्रान्तोदधिसन्निभम् ॥
केचिन्मुञ्चन्ति हुङ्कारं कुपितान्तकसन्निभाः ।
भुजमास्फालयन्त्यन्ये पुलकोद्भेदसुन्दराः ॥
रोषरक्ताननाः केचिज्जाता भ्रुकुटिभीषणाः ।
अन्ये त्वत्तानितोरस्काः खड्गे विन्यस्तदृष्टयः ॥
क्रोधान्धबुद्धयः केचित्कंपमाना रक्तलोचनाः ।
अन्ये स्फुटाट्टहासेन गर्जिताखिलभूधराः ॥
अन्येऽन्तस्तापसंरम्भाद्विगलत्स्वेदबिन्दवः ।
केचिद्रक्ताङ्गभीमाभाः साक्षादिव कृशानवः ॥
अतस्तं तादृशं वीक्ष्य क्षुभितं राजमण्डलम् ।
चारित्रधर्मराजेन्द्रं सद्बोधः प्रत्यभाषत ॥
देव नैष सतां युक्तो धीराणां कातरोचितः ।
अकालनीरदारावसन्निभः क्षोभविभ्रमः ॥

तस्मादेते निवार्यन्तामलमुत्तालमानसाः ।
राजानः क्रियतामेषामभिप्रायपरीक्षणम् ॥
ततो निवारणाकूतलीलया प्रविलोकिताः ।
चारित्रधर्मराजेन क्षणं मौनेन ते स्थिताः ॥

उक्ताश्च ते तेन नराधिपेन ।

यथा भो भो महीपाला ब्रूत यद्दो विवर्चितम् ।
एवं व्यवस्थिते कार्ये किमत्र क्रियतामिति ॥

एतच्चाकर्ण्य

सत्यशौचतपस्त्यागब्रह्माद्यास्ते नराधिपाः ।
प्रवृद्धरभसोत्साहा योद्धुकामाः प्रभाषिताः ॥
इत्थं महापराधे तैः संयमस्य कदर्थने ।
प्रकट्ठ विहिते देव किमद्यापि विलम्ब्यते ॥
येऽपराधक्षमापथ्यसेवया वृद्धिमागताः ।
तेषामुच्छेदनं देव केवलं परमौषधम् ॥
अन्यच्चेह कुतस्तावत्सुखगन्धोऽपि मादृशाम् ।
न यावत्ते हताः पापा महामोहादिशत्रवः ॥
यावच्च देवपादानां नेच्छा तत्र प्रवर्तते ।
न स संपद्यते तावद्घातस्तेषां दुरात्मनाम् ॥

यतः ।

एकैकोऽपि भटो नाथ तावकीनो महाहवे ।
सर्वांश्चिर्दलयत्येव कुरङ्गानिव केसरी ॥
क्षणेन म्लावयन्तीमे क्षुभिताम्भोधिविभ्रमाः ।

रिपुसैन्यं न चेदेषां स्यात्तवाज्ञा विधारिका ॥
एवं च ते महीपालाः शौण्डीरा रणशालिनः ।
सर्वेऽपि स्वामिनोऽध्यक्षमेकवाक्यतया स्थिताः ॥
रणकण्डूपरीताङ्गांस्तानेवं वीक्ष्य भूभुजः ।
दुर्दान्तमत्तमातङ्गनिर्दारिहरिसन्निभान् ॥
स राजा मन्त्रिणा सार्धं सद्बोधेन सभान्तरे ।
प्रविष्टो गुह्यमन्त्रार्थमाहूय च महत्तमम् ॥
अथ तत्रापि सा तात साध्वी मार्गानुसारिता ।
अन्तर्धानं विधायोच्चैः प्रविष्टा सहिता मया ॥
ततस्तत्रोचितं राज्ञा पृष्टौ मन्त्रिमहत्तमौ ।
स सम्यग्दर्शनस्तावद्राजानं प्रत्यभाषत ॥
देव यत्सुभटैः प्रोक्तं सत्याद्यैः प्रत्यविक्रमैः ।
तदेव प्राप्तकालं ते कर्तुं को ह्यत्र संशयः ॥

यतः ।

वध्यानां दुष्टचित्तानामपकारं सुदुःसहम् ।
शत्रूणामीदृशं प्राप्य मानी कः स्यातुमिच्छति ॥
वरं मृतो वरं दग्धो मा संभूतो वरं नरः ।
वरं गर्भे विलीनोऽसौ योऽरिभिः परिभूयते ॥
स धूलिः स तृणं लोके स भस्म स न किंचन ।
योऽरिभिर्मृद्यमानोऽपि स्वस्थचित्तोऽवतिष्ठते ॥
यस्यैकोऽपि भवेद्राज्ञः शत्रुः सोऽपि जिगीषति ।
तत्तेन युज्यते स्यातुमनन्ता यस्य शत्रवः ॥

अतो निर्भिद्य निःशेषं शत्रुवर्गं नराधिप ।
निष्कण्टकां महीं कृत्वा ततो भव निराकुलः ॥
तदेवमुद्धतं वाक्यमभिधाय महत्तमः ।
मौनेनावस्थितः सद्यः कृत्वा कार्यविनिर्णयम् ॥
अथाभिधातुं यत्कृत्यं लीलामन्थरया दृशा ।
चारित्रधर्मराजेन सद्बोधः प्रविलोकितः ॥
ततो निर्णीय गर्भार्थं कार्यतत्त्वस्य कोविदः ।
सद्बोधः सचिवः सारं वाक्यमित्थमभाषत ॥
साधु साधूदितं देव विदुषा तेन ते पुरः ।
संप्रत्यसाम्प्रतं वक्तुं मादृशामत्र वस्तुनि ॥
तथापि ते महाराज यन्ममोपरि गौरवम् ।
तदेव लम्भितोत्साहं वाचालयति मादृशम् ॥

ततः सम्यग्दर्शनं प्रत्याह ।

अहो तेजःप्रधानत्वमहो वाचि प्रगल्भता ।
अहो ते स्वामिभक्तत्वं चारु चारु महत्तम ॥
सत्यं मानवतां धीर दुःसहोऽरिपराभवः ।
सत्यं पराभिभूतस्य लोके निःसारता परा ॥
सत्यं दुष्टाः शठा वध्या महामोहादिशत्रवः ।
सत्यं तद्घातुकाः सर्वे देवपादानुजीविनः ॥

किं च ।

तिष्ठन्तु पुरुषास्तावद्देवशासनवर्तिनः ।
नार्योऽपि देवसैन्यस्य तेषां निर्घातने क्षमाः ॥

किं तु ।

प्रस्तावरहितं कार्यं नारभेत विचक्षणः ।
नीतिपौरुषयोर्यस्मात्प्रस्तावः कार्यसाधकः ॥
अथवा देवपादानां भवतश्च पुरो मया ।
नीतिशास्त्रं यदुच्येत हन्त तत्पिष्टपेषणम् ॥

तथाहि ।

षड् गुणाः पञ्च चाङ्गानि शक्तित्रितयमुत्तमम् ।
सोदयाः सिद्धयस्तिस्रस्तथा नीतिचतुष्टयम् ॥
चतस्रो राजविद्याश्च यच्चान्यदपि तादृशम् ।
प्रणीतं युवयोः सर्वं तद्धि किं तत्र वर्ण्यते ॥

यतः ।

स्थानं यानं तथा सन्धिर्विग्रहश्च परैः सह ।
संश्रयो द्वैधभावश्च षड् गुणाः परिकीर्तिताः ॥

तथा ।

उपायः कर्मसंरम्भे विभागो देशकालयोः ।
पुरुषद्रव्यसम्पच्च प्रतीकारस्तथापदाम् ॥
पञ्चमी कार्यसिद्धिश्च पर्यालोच्यमिदं किल ।
अङ्गानां पञ्चकं राज्ञा मन्त्रमार्गे विजानता ॥

तथा ।

उत्साहशक्तिः प्रथमा प्रभुशक्तिर्द्वितीयिका ।
तृतीया मन्त्रशक्तिश्च शक्तित्रयमिदं परम् ॥
शक्तित्रितयसंपाद्यास्तिस्र एवोदयास्तथा । -

हिरण्यमित्रभूमीनां लाभाः सिद्धित्रयं विदुः ॥

तथा ।

सामभेदोपदानानि दण्डश्चेति चतुष्टयम् ।
नीतीनां सर्वकार्येषु पर्यालोच्यं विजानता ॥

तथा ।

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्तथा परा ।
विद्यास्ततो भूपानां किलैताः सन्ति गोचरे ॥
तदेतद्देवपादानां भवतश्च विशेषतः ।
प्रतीतमेव निःशेषं वर्ण्यतां किं महत्तम ॥
केवलं ज्ञातशास्त्रोऽपि स्वावस्थां यो न बुध्यते ।
तस्याकिञ्चित्करं ज्ञानमन्धस्येव सुदर्पणः ॥
प्रवर्ततावविवेकेन स ह्यसाध्येऽपि वस्तुनि ।

ततश्च ।

लोके स जायते हास्यः समूलश्च विनश्यति ॥
इदं मूलविनष्टं हि तात सर्वं प्रयोजनम् ।
अतोऽद्य तावकोत्साहः कुत्र नामोपयुज्यताम् ॥

यतः ।

भवचक्रमिदं सर्वं वयं ते च महारयः ।
स कर्मपरिणामाख्यो यस्य राजा महाबलः ॥
आयत्तं सर्वमेवेदं तस्यैकस्य महात्मनः ।
तात संसारिजीवस्य यस्यायत्ता महाटवी ॥
स चाद्यापि न जानीते नामापि खलु मादृशाम् ।

महामोहादिसैन्यं तु मन्यते गाढवस्रमम् ॥

दमस्य ।

यत्र संसारिजीवस्य पक्षपातो बलेऽधिकः ।
तस्यैव विजयो नूनं स हि सर्वस्य नायकः ॥
ततो यावन्न जानीते सोऽस्माकं सैन्यमुत्तमम् ।
यावच्च पक्षपातोऽस्य नास्माप्यस्मासु जायते ॥
तावन्न युक्तः संरम्भो न यानं न च विग्रहः ।
युक्तं साम तदा स्थानमुपेक्षा गजमौलिका ॥
संकुचन्ति हि विद्वांसः कार्यं संचिन्त्य किंचन ।
केसरी गजनिर्घाते यथोत्पातविधित्सया ॥
न पौरुषं गलत्यत्र नश्यतोऽपि विजानतः ।
मेषो ह्यपसरत्येव दृढदास्फोटदित्सया ॥

सम्यग्दर्शनेनोक्तं ।

आर्य संसारिजीवोऽसौ न जाने ज्ञास्यते न वा ।
अस्मानेतेऽरयो नित्यमधुनैवं विबाधकाः ॥
तदद्य संयमस्तावदित्यमेभिः कदर्थितः ।
श्वः सर्वानपि हन्तारस्ततः स्थातुं न युज्यते ॥

सद्बोधेनोक्तं ।

आर्य मोत्तालतां कार्षीः कालसाध्ये प्रयोजने ।
ध्रुवं संसारिजीवोऽसौ ज्ञास्यते नः कदाचन ॥

यतः ।

स कर्मपरिणामाख्यो नरेन्द्रोऽत्र बलद्वये ।

समानपक्षपातेन सदा प्रायेण वर्त्तते ॥

इतश्च ।

तस्य संसारिजीवोऽपि निःशेषं कुरुते वचः ।

अतोऽस्मानेष तस्योच्चैः कदाचिज्ज्ञापयिष्यति ॥

ततश्च ।

ज्ञाताः संसारिजीवेन सप्रसादेन पूजिताः ।

वयमार्य भविष्यामः शत्रुनिर्दलनक्षमाः ॥

केवलमसावपि कर्मपरिणामः क्वचिदवसरे पर्यालोच्य महत्तम-भगिन्या सह लोकस्थित्या दृष्ट्वा चावसरं निजभार्यां कालपरिणतिं कथयित्वात्मीयमहत्तमाय स्वभावाय ज्ञात्वा विदितं नियतियदृच्छादीनां निजपरिजनानामनुकूलयित्वा संसारिजीवस्यैव महादेवीं भवितव्यतामपेक्ष्य सप्रसादोऽयमिति विज्ञप्तिकावसरं ततः संसारिजीवस्य समस्तमस्मद्वृत्तान्तं सर्वेषामभिरुचिते सति विज्ञापयिष्यति । ततः प्रतिबन्धकाभावाद्गमिष्यति सा विज्ञप्तिका । भविष्यति संसारिजीवोऽस्मासु सप्रसादः । ततश्च ।

निर्मूलान्नाशयिष्यामः शत्रूनेतान्महत्तम ।

तेन कालविलम्बोऽत्र रुचितो मे प्रयोजने

सम्यग्दर्शनेनोक्तं ।

यद्येवं प्रेष्यतां तावद्दूतस्तेषां दुरात्मनाम् ।

न लङ्घयन्ति मर्यादां येन ते दूतभर्त्सिताः ॥

महाबोधेनोक्तं ।

न कार्यं तत्र दूतेन प्रहितेन महत्तम ।

तिष्ठामस्तावदद्यैव वकवन्निभृतेन्द्रियाः ॥

सम्यग्दर्शनेनोक्तं ।

न भाव्यमतिभीतेन भवता पुरुषोत्तम ।

सुदुष्टा अपि ते पापाः किं करिष्यन्ति मादृशाम् ॥

अन्यच्च ।

यदि नो रोचते तात दूतस्ते दण्डपूर्वकः ।

ततः सन्धिविधानार्थं सामपूर्वः प्रहीयताम् ॥

सद्बोधेनोक्तं । आर्य मा मैवं वोचः । यतः ।

कोपाध्माते कृतं साम कलहस्य विवर्धकम् ।

जाज्वलीति हि तोयेन तप्तं सर्पिर्न संशयः ॥

अथवा ।

फलेन दृश्यतामेतत्पूर्यतां ते कुतूहलम् ।

येन संपद्यते तात प्रत्ययो मम जल्पिते ॥

दूतः प्रहीयतां तेषां यदि देवाय रोचते ।

ततो विज्ञाय तद्भावमुचितं हि करिष्यते ॥

अथ चारित्रधर्मेण तद्वाक्यमनुमोदितम् ।

ततस्तैः प्रहितो दूतः सत्याख्यः शत्रुसंहतेः ॥

अथ दूतानुमार्गेण मापि मार्गानुसारिता ।

गता तात मया सार्धं महामोहबले तदा ॥

प्रमत्ततानदीतीरे चित्तविक्षेपमण्डपे ।

दृष्टश्च विहितास्थानो महामोहमहानृपः ॥

अथ दूतः स सत्याख्यस्तत्रास्थानेऽरिपूरिते ।

प्रविष्टः प्रतिपत्त्या च निविष्टः शुभविष्टरे ॥
ततः धृष्टतनूदन्तो वाक्यमेवमुदारधीः ।
स प्राह साहसाढ्योऽपि कोपाग्नेः शान्तिकाम्यया ॥
चित्तवृत्तिमहाटव्यां यः प्रभुः परमेश्वरः ।
लोके संसारिजीवोऽसौ तावद्भो मूलनायकः ॥
बहिरङ्गान्तरङ्गाणां संसारोदरचारिणाम् ।
राज्ञां ग्रामपुराणां च स स्वामी नात्र संशय ॥

एवं च स्थिते ।

यूयं वयं च ये चान्ये केचिदान्तरभूभुजः ।
ते कर्मपरिणामाद्याः सर्वे तस्यैव किङ्कराः ॥
ततश्चैकमिदं राज्यं सर्वेषामेक एव च ।
स्वामी संसारिजीवोऽतः को विरोधः परस्परम् ॥

यतः ।

प्राप्ताः स्वस्वामिनो भक्ताः संहताश्च भवन्ति ते ।
भृत्या बन्धूपमा नैव स्वपक्षक्षयकारकाः ॥
तदस्तु सततानन्दमतः प्रभृति सुन्दरम् ।
युष्माभिः सह राजेन्द्र प्रेम नः प्रीतिवर्धनम् ॥
इदं सत्योदितं सत्यं वाक्यमाकर्ण्य सा सभा ।
माहामोही महाक्षोभमय प्राप्ता मदोद्धुरा ॥

ततश्च ।

दष्टोष्ठा रक्तसर्वाङ्गा भूमिताडनतत्पराः ।
क्रोधान्धबुद्धयः सर्वे समकालं प्रभाषिताः ॥

अरे रे दुष्ट केनेदं दुरात्मंस्ते निवेदितम् ।
यथा संसारिजीवो नः स्वामी सम्बन्धिनो वयम् ॥
पातालेऽपि प्रविष्टानां नास्ति मोक्षः कथंचन ।
युष्माकमालजालेन किमनेन नराधमाः ॥
संसारिजीवो नः स्वामी यूयं सम्बन्धिनः किल ।
अहो सम्बन्धघटना अहो वाक्यमहो गुणाः ॥
तत्तूर्णं गच्छ गच्छेति देवतास्मरणोद्यताः ।
यूयं भवत शान्त्यर्थमेते वो वयमागताः ॥

एवं च ।

सहस्ततालमुत्तालाः प्रविहस्य परस्परम् ।
तथान्ये निष्ठुरैर्वाक्यैः कृत्वा दूतकदर्थनम् ॥
चलितास्तत्क्षणादेव क्रोधान्धास्ते महीभुजः ।
संनद्धबद्धकवचा महामोहपुरस्सराः ॥
सत्येनापि समागत्य सर्वं तच्चेष्टितं प्रभोः ।
चारित्रधर्मराजस्य विस्तरेण निवेदितम् ॥
अथाभ्यर्णगतं मत्वा महामोहमहाचमूम् ।
चारित्रधर्मराजीयं संनद्धमखिलं बलम् ॥
ततः परिसरे रम्ये लग्नमायोधनं तयोः ।
चित्तवृत्तिमहाटव्यां सैन्ययोः कृतविस्मयम् ॥

तच्च कीदृशं ।

विलसितभटकोटिसङ्घातहेतिप्रभाजालविस्तारसञ्चारनिर्नाशिता-
शापतामिस्रमेकत्र चारित्रधर्मानुसञ्चारिराजेन्द्रवृन्दैरतोऽन्यच्च दुष्टा-

भिसन्ध्याद्यनेक-प्रचण्डोग्रभूपेन्द्रप्रहङ्काङ्गसच्छायकायप्रभोल्लासवद्धान्ध-कारप्रतानप्रनष्टाखिलज्ञानसद्योतसन्तानजातं ततो भीषणे तादृशे कातराणां नराणां महाभीतिसम्पादके वादितानेकबिब्बोकवादिच-निर्घातसंत्रासिताशेषसंसारसञ्चारिजीवौघसंग्राम-सम्मर्दनालोकिसत्सि-द्धविद्याधरे भो रणे ते महामोहराजेन्द्रसक्ता भटाः पाटयन्तः परानीकमुद्देलिता इति ॥

ततश्च ।

बङ्गदारुणशस्त्रशतैः प्रहतं दलिताखिलवारणवाजिरथम् ।
श्रुतभीषणवैरिनिनादभयात्तदशेषमकम्पत धर्मबलम् ॥
ततश्चारित्रधर्मोऽसौ सबलो बलशालिना ।
महामोहनरेन्द्रेण जितस्तात महाहवे ॥
नंष्ट्वा प्रविष्टः स्वस्थाने ततस्ते रिपवस्तकम् ।
समत्कलकलारावा रोधयित्वा व्यवस्थिताः ॥
ततः परिणतं राज्यं महामोहनराधिपे ।
चारित्रधर्मराजस्तु निरुद्धोऽभ्यन्तरे स्थितः ॥
मार्गानुसारिता प्राह दृष्टं तात कुतूहलम् ।
सुष्ठु दृष्टं मयाप्युक्तमम्बिकायाः प्रसादतः ॥
केवलं कलहस्यास्य मूलमम्ब परिस्फुटम् ।
अहं विज्ञातुमिच्छामि तन्निवेदय साम्प्रतम् ॥
मार्गानुसारिता प्राह रागकेसरिणोऽग्रतः ।
योऽयं दृष्टस्त्वया वत्स मन्त्री निर्व्याजनैपुणः ॥
अनेन मन्त्रिणा पूर्वं जगत्साधनकाम्यया ।

मानुषाणि प्रयुक्तानि पश्चात्सौयानि कुत्रचित् ॥
अभिभूतानि तानीह सन्तोषेण पुरा किल।
चारित्रधर्मराजस्य तन्त्रपालेन लीलया ॥
तन्निमित्तः समस्तोऽयं जातोऽमीषां परस्परम्।
कलहो वत्स साटोपमन्तरङ्गमहीभुजाम् ॥

मयाभिहितं। अम्बिके किन्नामानि तानि मानुषाणि कथं वा पश्चैतानि जगत्साधयन्ति। मार्गानुसारितयोक्तं। वत्स विचार स्पर्शरसनाघ्राणदृष्टिश्रोत्राणि तान्यभिधीयन्ते।

तानि च

स्पर्शे रसे च गन्धे च रूपे शब्दे च देहिनाम्।
आक्षेपं मनसः कृत्वा साधयन्ति जगत्त्रयम् ॥
एकैकं प्रभवत्येषां वशीकर्तुं जगत्त्रयम्।
यत्पुनर्वत्स पश्चापि तत्र किं चित्रमुच्यताम् ॥
ततो मयोक्तं संपूर्णं देशदर्शनकौतुकं।
अधुना तातपादानां पार्श्वं यास्यामि सत्वरम् ॥
तयोक्तं गम्यतां वत्स निरूप्य जनचेष्टितम्।
अहमप्यागमिष्यामि तत्रैव तव सन्निधौ ॥
अथाहमागतस्तूर्णं निश्चित्येदं प्रयोजनम्।
ततस्तात वयस्योऽयं घ्राणनामा न सुन्दरः ॥
वञ्चको मुग्धबुद्धीनां पर्यटत्येष देहिनाम्।
मानुषाणां तृतीयोऽयं रागकेसरिमन्त्रिणाम् ॥
यावन्निवेदयत्येवं बुधाय निजदारकः।

मार्गानुसारिता तावदायाता भो नरेश्वर ॥
समर्थितं तया सर्वं विचारकथितं वचः ।
त्यजामि घ्राणमित्येवं बुधस्यापि हृदि स्थितम् ॥

इतश्च ।

भुजङ्गतासमायुक्तो घ्राणलालनलालसः ।
मन्दः सुगन्धिगन्धानां सदान्वेषणतत्परः ॥
तत्रैव नगरे भूप लीलावत्याः कथंचन ।
स देव राजभार्याया भगिन्या भवने गतः ॥

ततश्च ।

सपत्नीपुत्रघातार्थं तस्मिन्नेव क्षणे तया ।
आत्तो डोम्बीकराद्गन्धसंयोगो मारणात्मकः ॥

ततश्च ।

तां गन्धपुटिकां द्वारे मुक्त्वा लीलावती गृहे ।
प्रविष्टा स च संप्राप्तो मन्दः सा तेन वीक्षिता ॥
ततो भुजङ्गतादेशाच्छोटयित्वा निरूपिता ।
दत्ता घ्राणाय ते गन्धास्ततस्तेन दुरात्मना ॥
ततश्चाघूर्णिते घ्राणे तैर्गन्धैस्तस्य मूर्च्छया ।
स्नेहमोहितचित्तत्वात्स मन्दः प्रलयं गतः ॥
ततो विनष्टमालोक्य घ्राणलालनलम्पटम् ।
तं मन्दं घ्राणसम्पर्काद्विरक्तो नितरां बुधः ॥
ततश्च सा बुधेनेदं पृष्टा मार्गानुसारिता ।
भद्रे कथं ममानेन संसर्गो न भविष्यति ॥

मार्गानुसारिता प्राह देव हित्वा भुजङ्गताम् ।
तिष्ठ त्वं साधु मध्यस्थः सदाचारपरायणः ॥
ततोऽयं विद्यमानोऽपि दोषसंश्लेषकारणम् ।
न ते संपत्स्यते देव ततस्त्यक्तो भविष्यति ॥
बुधेनापि कृतं सर्वं विज्ञाय हितमात्मने ।
मार्गानुसारितावाक्यं तत्तदा प्राप्य सद्गुरुम् ॥
ततो गृहीतदीक्षोऽसौ साध्वाचारपरायणः ।
विज्ञातागमसद्भावो गुरुपासनतत्परः ॥
आचार्यैः पात्रतां मत्वा गच्छनिक्षेपकाम्यया ।
उत्पन्नलब्धिमाहात्म्यः सूरिस्थाने निवेशितः ॥
स एष भवतां भूप सत्प्रबोधविधित्सया ।
विहाय गच्छमेकाकी बुधसूरिः समागतः ॥
सोऽयं निवेदयत्येवं शृण्वन्ति च भवादृशाः ।
सोऽहमेव धरानाथ बुधनामेति गृह्यताम् ॥
प्रबोधकारणं भूप तदिदं संविधानकम् ।
मम संपन्नमेतद्धि तुल्यं युष्मादृशामपि ॥

यतः ।

विचरन्ति सदा तानि मानुषाणि जगत्त्रये ।
तत्पृष्ठतोऽनुधावन्ति महामोहादिशत्रवः ॥

ततश्च ।

यो यत्नैः प्राप्यते प्राणी स सर्वो गाढदारुणैः ।
निर्भिद्य खड्गैः शत्रूणां क्षणेनैव विलुप्यते ॥

इदमेव परं भूप निर्भयस्थानमुत्तमम्।
अमीभिर्लुप्यमानस्य जैनेन्द्रं वरशासनम्॥
एवं च ज्ञाततत्त्वानां प्रवेष्टुमिह युज्यते।
न युक्तं क्षणमप्येकं धरानाथ विलम्बितुम्॥
त्यज्यन्तां विषया भूप कालकूटविषोपमाः।
आस्वाद्यतामिदं दिव्यं प्रशमामृतमुत्तमम्॥
ततो धवलराजेन विहस्य विमलः क्षणम्।
तथा सर्वेऽपि ते लोकाः साकूतं प्रविलोकिताः॥

उक्तं च।

भो भो लोका यदादिष्टं भदन्तेन महात्मना।
इदमाकर्णितं चित्ते लग्नं च भवतां वचः॥
ततस्ते बुधसद्भानोः प्रतापेन प्रबोधिताः।
कमलाकरसङ्काशा प्रोत्फुल्लमुखपङ्कजाः॥
भक्त्या ललाटपट्टेषु विन्यस्तकरकुड्मलाः।
सर्वेऽपि लोकास्तचेदं समकालं प्रभाषिताः॥
बाढमाकर्णितं देव वचोऽस्माभिर्महात्मनः।
विज्ञातस्तस्य सद्भावो महाभागप्रसादतः॥
विधूयाज्ञानतामिस्रं मनोऽनेन प्रकाशितम्।
जीविताशामृतेनैव मिथ्यात्वविषघूर्णिताः॥
तल्लग्नमिदमस्माकं चित्ते गाढं मुनेर्वचः।
संपाद्यतां तदादिष्टं मा विलम्बो विधीयताम्॥
एतच्चाकर्ण्य राजेन्द्रः परं हर्षमुपागतः।

ततो राज्याभिषेकार्थं विमलं प्रत्यवोचत ॥
गृह्णामि पुत्र प्रव्रज्यां राज्यं त्वमनुशीलय ।
पुण्यैर्मे भगवानेष संपन्नो गुरुरुत्तमः ॥
विमलः प्राह किं तात नाहं ते चित्तवल्लभः ।
येन दुःखाकरे राज्ये मां स्थापयितुमिच्छसि ॥
इत्थं क्षिपसि मां तात संसारे दुःखपूरिते ।
स्वयं गच्छसि निर्वाणमहो ते तात चारुता ॥
ततो गाढतरं तुष्टस्तच्छ्रुत्वा वैमलं वचः ।
साधु साधूदितं वत्स न मुञ्चामीत्यभाषत ॥
ततः कमलनामानं राज्ये संस्थाप्य पुत्रकम् ।
विधाय जिनपूजां च दिनान्यष्ट मनोहराम् ॥
तथा दत्त्वा महादानं विधाय नगरोत्सवम् ।
विहिताशेषकर्तव्यः शुभकाले समाहितः ॥
विमलेन समं राजा सपत्नीकः सबान्धवः ।
सपौरलोकः सहसा निष्क्रान्तो विधिपूर्वकम् ॥

किं बहुना ।

यैः समाकर्णितं सूरेस्तदावाक्यममृतोपमम् ।
तेषां मध्ये जनाः स्तोका ये गृहेषु व्यवस्थिताः ॥
तेऽपि चावाप्तसम्यक्त्वा व्रतरत्नविभूषिताः ।
जाता रत्नाकरे प्राप्ते कः स्याद्दारिद्र्यभाजनम् ॥
अहं तु भद्रे तत्रापि वामदेवतया स्थितः ।
दृष्ट्वा तत्तादृशं सूरे रूपनिर्माणकौशलम् ॥

श्रुत्वा तत्तादृशं वाक्यं महामोहतमोपहम् ।
तथापि च न बुद्धोऽस्मि तत्राकर्णय कारणम् ॥
यासौ वञ्चलिका पूर्वं योगिनी भगिनी मम ।
शरीरेऽनुप्रविष्टासीत्सा मे तत्र विजृम्भिता ॥
यतोऽग्टहीतसङ्केते तद्वशेन दुरात्मना ।
स तादृशो महाभागो वञ्चकः परिकल्पितः ॥
चिन्तितं च मया हन्त मुनिवेषविडम्बकः ।
सिद्धेन्द्रजालचातुर्यः कश्चिदेष समागतः ॥
अहो शाठ्यमहो जालमहो वाचालतातुला ।
अहो मूढा नरेन्द्राद्या येऽमुनापि प्रतारिताः ॥

तथाहि ।

अङ्गे वञ्चलिका येषां विवर्तेत दुरात्मनाम् ।
ते हि सर्वं शठप्रायं मन्यन्ते भुवनत्रयम् ॥
तदेवं तं बुधाचार्यं तदालीकविकल्पनैः ।
विकल्पयन्नहं भद्रे न प्रबुद्धो दुरात्मकः ॥
प्रव्रज्यावसरे तेषां राजादीनां मया पुनः ।
इदं विचिन्तितं भद्रे स्वचित्ते पापकर्मणा ॥

अये ।

प्रव्रज्यां ग्राहयेदेष विमलो मां बलादपि ।
आदितो वञ्चयित्वेमं ततो नश्यामि सत्वरम् ॥
बद्ध्वा मुष्टिद्वयं गाढं ततोऽहं तारलोचने ।
तथा नष्टो यथा नैव गन्धमप्येष बुध्यते ॥

अथ दीक्षादिने प्राप्ते विमलेन महात्मना ।
क्व वामदेव इत्येवं सर्वत्राहं निरूपितः ॥
अदृष्ट्वा मां पुनः पृष्टो बुधसूरिर्महात्मना ।
क्व गतो वामदेवोऽसौ किं वा संचिन्त्य कारणम् ॥
ज्ञानालोकेन विज्ञाय विमलाय निवेदितम् ।
ततो मदीयचरितं निःशेषं बुधसूरिणा ॥
विमलेनोदितं नाथ किं न भव्यः स मे सुहृत् ।
श्रुतेऽपि तावके वाक्ये येनेत्थं बत चेष्टते ॥
सूरिणाभिहितं भद्र नाभव्यः किं तु कारणम् ।
यत्तस्य तादृशे क्लीबे तत्ते सर्वं निवेदये ॥
एका बहुलिका नाम भगिनी तस्य वल्लभा ।
अस्त्यनारङ्ग भ्राता च द्वितीयः स्तेयनामकः ॥
ताभ्यामधिष्ठितेनेदं वामदेवेन चेष्टितम् ।
पुरा च विहितं तात रत्नस्य हरणादिकम् ॥
तस्मात्तस्य न दोषोऽयं प्रकृत्या सुन्दरो हि सः ।
स्तेयो बहुलिका चास्य दोषसंश्लेषकारणम् ॥
विमलेनोदितं नाथ किं ताभ्यां स वराककः ।
कथिन्मुच्येत पापाभ्यां किं वा नेति निवेद्यताम् ॥
सूरिराह महाभाग भूरिकालेऽतिलङ्घिते ।
स ताभ्यां मोक्ष्यते तत्र कारणं ते निवेद्यताम् ॥
शुभाभिसन्धिनृपतेः पुरे विमदमानसे ।
भार्ये स्तो निर्मलाचारे शुद्धतापापभीरुते ॥

तयोश्च गुणसंपूर्णे जनतानन्ददायिके ।
ऋजुताचोरते नाम विद्येते कन्यके शुभे ॥
अत्यन्तसरला साध्वी सर्वलोकसुखावहा ।
ऋजुता सा महाभाग प्रतीतैव भवादृशाम् ॥
अचोरतापि लोकेऽत्र निःस्पृहा शिष्टवल्लभा ।
सर्वाङ्गसुन्दरी नूनं विदितैव भवादृशाम् ॥
ते च कन्ये क्वचिद्धन्ये सुवृत्ते परिणेष्यति ।
सोयोऽयं बकुला चास्य ततो भो न भविष्यतः ॥
तयोरार्भ्या महावस्था प्रकृत्यैव न विद्यते ।
ततस्तात तयोर्लाभे दाभ्यामप्येष मोच्यते ॥
ततो न योग्यताद्यापि वामदेवस्य विद्यते ।
धर्मं प्रतीति निश्चित्य कुरु तस्यावधीरणम् ॥
ततश्चेदं मुनेर्वाक्यं विमलेन महात्मना ।
श्रुत्वा तथेति वदता विहिता मेऽवधीरणा ॥

अहं तु प्राप्तः काञ्चनपुरे प्रविष्टो हट्टमार्गे। दृष्टः सरलो नाम वाणिजः। गतस्तस्यापणे। विजृम्भिता बकुलिका। कृतमस्य पादपतनं। नष्टेनेव स्रुतमानन्दोदकस्य नयनयुगलं। तदवालोक्यार्द्रीभूतः सरलः। ततोऽभिहितमनेन। भद्र किमेतत्। मयोक्तं। तात युष्मानवलोक्य मयात्मजनकस्य स्मृतं। सरलेनोक्तं। यद्येवं ततो वत्स पुत्र एवासि त्वं। ततो नीतोऽहमनेन स्वभवने समर्पितो बन्धुमत्याः स्वभार्यायाः। कारितः स्नानभोजनादिकं। पृष्टो नामकुलादिकं। निवेदितं मया। सजातीयोऽयमिति तुष्टः सरलः। अभिहितमनेन।

अपुत्रयोः प्रिये पुत्रो वृद्धयोः परिपालकः ।
दत्तः संचिन्त्य दैवेन वामदेवोऽयमावयोः ॥

तदाकर्ण्य हृष्टा बन्धुमती । निचितं सरलेन मयैव गृहं । दर्शितमापणनिहितं रत्नादिकमन्तर्धनं । स च तस्यैव मूर्छया मया सहितस्तत्रैवापणे स्वपिति स्म । अन्यदा सन्ध्यायामावयोर्गृहे तिष्ठतोः समागतः सरलस्य बन्धुलनामकः प्रियमित्रस्य गृहाद्राह्वायकः । यथा मम पुत्रस्य षष्ठीजागरे भवतागत्येह वस्तव्यमिति । ततोऽभिहितोऽहं सरलेन । पुत्र वामदेव गन्तव्यं मया बन्धुलगृहे । त्वं पुनरापणे गत्वा वसेति । मयोक्तं । अलं मे तातरहितस्यापणे गमनेनाद्य तावदम्बाया एव पादमूले वत्स्यामि । ततोऽहो स्नेहसारोऽयमिति चिन्तयन्नेवं भवत्विति वदन् गतः सरलः । स्थितोऽहं गृहे । रात्रौ विजृम्भितः स्तेयः । चिन्तितं मया । हरामि तदन्तर्धनं । ततोऽर्धरात्रे गतस्तमापणं । उद्घाटयतश्च समागता दाण्डपाशिकाः । दृष्टोऽहमेतैः प्रत्यभिज्ञातश्च । ततः पश्चामस्तावत्किमेषोऽर्धरात्रे करोत्यापणमुद्घाट्येति संचिन्त्य स्थितास्तूष्णींभावेन प्रच्छन्नाः । उत्खातं मया तदन्तर्धनं निखातं तस्यैवापणस्य पश्चाद्भागे । विभातप्रायायां च रजन्यां कृतो हाहारवः । मिलितो नगरलोकः । संप्राप्तः सरलः । प्रकटीभूता दाण्डपाशिकाः । प्रवृत्तः कलकलः । सरलेनोक्तं । वत्स वामदेव किमेतत् । मयोक्तं । हा तात मुषिता मुषिताः स्म इति । दर्शितश्चोद्घाटितापणो निधानस्थानं च । सरलेनोक्तं । पुत्र त्वया कथमिदं ज्ञातं । मयोक्तं । अस्ति तावन्निर्गतस्तातः । ततो मे तातविरहवेदनया नागता निद्रा ।

स्थितः शय्यायां विपरिवर्तमानः। रात्रिशेषे च चिन्तितं मया। अयि यदि परमेतस्यां तातस्पर्शपूतायां आपणशय्यायां निद्रासुखं संपद्यते नान्यत्रेति संचिन्त्य समागतोऽहमापणे। दृष्टमिदमीदृशं चौरविलसितं। ततः कृतो हाहारव इति। दाण्डपाशिकैश्चिन्तितं। निश्चितमेतत्तस्करोऽयं दुरात्मा वामदेवः। अहो अस्यालजालचातुर्यं अहो वाचालता अहो वञ्चकत्वं अहो कृतघ्नता अहो विश्रम्भघातित्वमहो पापिष्ठतेति। ततस्तैरुक्तं। श्रेष्ठिन्निराकुलो भव। लब्ध एवास्तेऽस्माभिश्चौरः। ततः साकूतमवलोकितं सर्वैर्मदभिमुखं। ज्ञातोऽहमेतैरिति संजातं मे भयं। ततः पुनः सलोप्त्रं ग्रहीष्याम इत्यालोच्य गतास्तावद्दाण्डपाशिकाः। दत्तो ममावरचकः। अनेककुविकल्पाकुलस्य मे खण्डितं तद्दिनं। सन्ध्यायां गृहीत्वा तदन्नार्धनं पलायमानोऽहं गृहीतो दाण्डपाशिकैः। जातः कोलाहलः। निर्धितं पुनर्नगरं। कथितो दाण्डपाशिकैः समस्तोऽपि लोकाय मदीयव्यतिकरः। संजातो मच्चरितेन विस्मयः। नीतो ऽहं रिपुसूदनराजसमीपे। आज्ञापितस्तेन वध्यतया। समागतः सरलः। पतितो नृपचरणयोः। अभिहितमनेन।

> ममायं पुत्रको देव वामदेवोऽतिवल्लभः।
> अतो मेऽनुग्रहं कृत्वा मुच्यतामेष बालकः॥
> गृह्यतां मम सर्वस्वं मैष देव निपात्यताम्।
> अन्यथा जायते देव मरणं मे न संशयः॥
> ततोऽतिसरलं मत्वा सरलं तं नराधिपः।
> अमुञ्चन्मां प्रसादेन तस्मायच्छच्च तद्धनम्॥

केवलं करलग्नेन तदा प्रोक्तो महीभुजा।
श्रेष्ठिनेष सुपुत्रस्ते समीपे मम तिष्ठतु॥

यतः।

अयं विषाङ्कुराकारस्तस्करो जनतापकः।
तदेष मद्गृहाद्बाह्यो वामदेवो न सुन्दरः॥

इतश्च।

पुरापि दुर्बलीभूतः साम्प्रतं नष्ट एव सः।
पुण्योदयो वयस्यो मे दृष्ट्वा तद्दुष्टचेष्टितम्॥

ततश्च।

श्रेष्ठिना प्रतिपन्नं तन्नरेन्द्रवचनं तदा।
धिक्कारविहतो दीनः स्थितोऽहं राजमन्दिरे॥
राजदण्डभयादुग्राद्भयेन प्रशमं गते।
भद्रे निवसतस्तत्र ते से स्तेयबद्धलिके॥
तथापि लोको मां भद्रे सर्वकार्येषु शङ्कते।
अन्येनापि हृतं चौर्यं ममोपरि निपात्यते॥
ब्रुवाणस्यापि सद्भूतं न प्रत्येति च मे जनः।
धिक्कारैर्हन्ति मामेवं दृष्टा ते सत्यवादिता॥
सर्वस्योद्वेगजनकः क्षणाद्देमुन्नतां गतः।
तत्राग्रहीतमद्कृते बहुकालं विडम्बितः॥
अन्यदा श्रीगृहं राज्ञो विद्यासिद्धेन केनचित्।
निःशेषं मुषितं भद्रे स च चौरो न लक्षितः॥
ततोऽहं दुष्टदोषत्वादस्मैवंविधघाटसम्।

तथाहि।

पूर्वं तावदनेनोक्तं यथासीत्किल सर्वदा।
पुरेऽसंव्यवहाराख्ये वास्तव्योऽहं कुटुम्बिकः॥
कालं तत्र स्थितोऽनन्तं भवितव्यतया सह।
स्वकर्मपरिणामाख्यराजादेशेन निर्गतः॥
एकाचपशुसंस्थाने तथान्येषु च भूरिषु।
तथाविधेषु स्थानेषु भ्रान्तो दुःखैः प्रपूरितः॥
अन्यच्चेदमनेनोक्तमनन्तं कालमेकशः।
सर्वेषु तेषु स्थानेषु नाटितः किल भार्यया॥

तथाहि।

नन्दिवर्धनरूपेण रिपुदारणलीलया।
वामदेवविधानेन किलाहं भ्रमितस्तया॥
अतीतोऽनन्तकालश्च सर्वेषामन्तरान्तरा।
कृतान्यनन्तरूपाणि तथान्यानि स्वभार्यया॥
गुडिकादानयोगेन किलेदं विहितं तया।
तदस्य चरितं सर्वं विरुद्धमिव भासते॥

तथाहि।

पुरुषश्चेत्कथं तत्र स्थितिः कालमनन्तकम्।
किं वाजरामरो हन्त भविष्यत्येष तस्करः॥
तावत्कालस्थितिर्हन्त का चेयं भवितव्यता।
कथं वा निजभार्यापि प्रतिकूलमागता॥
का चेयं गुडिका नाम महावीर्या यया कृतः।

एकोऽप्यनन्तरूपोऽयं भवितव्यतया तया ॥

अन्यच्च ।

नगराण्यन्तरङ्गाणि मित्राणि स्वजनास्तथा ।
येऽमुना गदितास्तेऽपि न मया परिनिश्चिताः ॥
तदिदं स्वप्नसङ्काशमिन्द्रजालाधिकं गुणैः ।
अस्य संसारिजीवस्य चरितं प्रतिभाति मे ॥
इयं च मुखरागेण बुध्यमानेव लक्ष्यते ।
साध्वी प्रज्ञाविशालेदं निःशेषं चरितं यदि ॥

अन्यच्च ।

इदं मे लेशतः सर्वं निर्दिष्टमनया पुरा ।
अस्य संसारिजीवस्य वृत्तं प्रज्ञाविशालया ॥
केवलं विस्मृतप्रायं मम तद्वर्ततेऽधुना ।
अकाण्डे पृच्छतयेत्थं संज्ञायेत ममाज्ञता ॥
तत्तावत्कथयत्येष तस्करो यद्विवक्षितम् ।
अहं तु प्रश्नयिष्यामि पश्चादेनां रहःस्थिताम् ॥
इदं निश्चित्य हृदये स भव्यपुरुषस्तदा ।
वचः संसारिजीवस्य तूष्णीमाकर्णयन् स्थितः ॥
मुखं संसारिजीवस्य पश्यन्ती विस्मितेक्षणा ।
स्थिताऽगृहीतसङ्केता सम्यगज्ञातभावना ॥
महागमस्तु भगवान्निःशेषं तस्य चेष्टितम् ।
वेत्ति संसारिजीवस्य ततो मौनेन संस्थितः ॥

संसारिजीवेनोक्तं ।

अथाहमन्यदा भद्रे तुष्टया निजभार्यया ।
संजातकृपया प्रोक्तः केनचिच्छुभकर्मणा ॥

संभाव्यं नापरस्येति ग्राहितस्तेन भूभुजा ॥
अनेकयातनाभिश्च नानारूपैर्विडम्बनैः।
ततोऽहं गाढरुष्टेन तेन भद्रे कदर्थितः ॥
न स्थितः सरलस्यापि वचनेन नराधिपः।
उल्लम्बितो विशालाचि ततोऽहं विरटज्जनम् ॥
अत्रान्तरे च सा जीर्णा गुडिका मम पूर्विका।
भवितव्यतया दत्ता ततोऽन्या गुडिका मम ॥
तस्याः प्रभावतो भद्रे तीव्रदुःखौघसम्पदि।
गतः पापिष्ठवासायां नगर्यामन्धपाटके ॥
तत्रानुभूय दुःखानि तीव्रानन्तानि विह्वलः।
असंख्यकालं भूयोऽपि गुडिकादानयोगतः ॥
पञ्चाचपशुसंस्थाने समागत्य पुरे ततः।
भ्रान्तोऽहं बहुशोऽन्येषु नगरेषु पुनः पुनः
तत्रास्ति नगरं भद्रे ग्रामो वा वरलोचने।
मुक्तासंव्यवहाराख्यं बहुशो यत्र वीचितम् ॥
तथापि पशुसंस्थाने योषिदाकारधारकः।
बहुशो वडलिकादोषादिशेषेण विडम्बितः ॥
सोढानि नानादुःखानि स्थाने स्थाने मया तदा।
ताभ्यां पापवयस्याभ्यां प्रेरितेन वरानने ॥
एवं वदति संसारिजीवे प्रज्ञाविशालया।
इदं विचिन्तितं गाढं संवेगापन्नचित्तया ॥
अहो दुरन्तः स्तेयोऽसौ माया चात्यन्तदारुणा।

यथोरासक्तचित्तोऽयं वराको भूरि नाटितः ॥

तथाहि ।

वञ्चितस्तादृशोऽनेन महात्मा विमलः पुरा ।
तन्माहात्म्येन लोके च गतोऽयं लघुतुच्छताम् ॥
सरलो वत्सलः स्निग्धो सुपिता च प्रतारितः ।
प्राप्तोऽयं तत्प्रसादेन तत्र घोरविडम्बनम् ॥

तथा ।

यदयं तादृशेनापि महाभागेन सूरिणा ।
बुधेन बोधितो नासीत्सा माया तत्र कारणम् ॥
ब्रुवाणस्यापि सद्भूतं न प्रत्येति स्म यज्जनः ।
धिक्करोति च तत्रापि सैव मायापराध्यति ॥
यदन्यजनितेनापि दोषेणायं विबाधितः ।
संसारिजीवस्तत्रापि स्तेयो माया च कारणम् ॥
एवं चानन्तदोषाणामाकरस्ते दुरात्मिके ।
तथापि लोकः पापिष्ठः स्तेयमाये न मुञ्चति ॥

अन्यच्च ।

तथा संसारिजीवे भोः कथयत्यात्मचेष्टितम् ।
स भव्यपुरुषस्तत्र चिन्तयामास विस्मितः ॥
अपूर्वमिदमस्याहो तस्करस्यातिजल्पितम् ।
अतिचित्रमसंभाव्यं लोकमार्गातिदूरगम् ॥
अप्रसिद्धं ममात्यन्तं चद्द्याचेपकारि च ।
तदस्य परमार्थो यः स मया नावधारितः ॥

त्वयार्यपुत्र गन्तव्यमधुना लोकविश्रुते ।
आनन्दनगरे तत्र वस्तव्यं चारुलीलया ॥

मयोक्तं ।

यद्देवि रोचते तुभ्यं कर्तव्यं तन्मया ध्रुवम् ।
ततः पुण्योदयो भूयः स तया मे निदर्शितः ॥
तथान्यः सागरो नाम सहायो मे निरूपितः ।
प्रस्तावोऽयमिति विज्ञाय भवितव्यतया तया ॥

उक्तं च ।

मूढतानन्दनो नाम रागकेसरिणोऽङ्गजः ।
मयायं विहितोऽद्यैव सहायस्ते मनोहरः ॥
ततोऽहं सहितस्ताभ्यां सहायाभ्यां प्रवर्तितः ।
आनन्दनगरे गन्तुं गुडिकादानयोगतः ॥ इति ।

ये घ्राणमायानृतचौर्यरक्ता भवन्ति पापिष्ठतया मनुष्याः ।
इहैव जन्मन्यतुलानि तेषां भवन्ति दुःखानि विडम्बनाश्च ॥
तथा परत्रापि च तेषु रक्ताः पतन्ति संसारमहासमुद्रे ।
अनन्तदुःखौघचितेऽतिरौद्रे तेषां ततश्चोत्तरणं कुतस्त्यम् ॥
जैनेन्द्रादेशतो वः कथितमिदमहो लेशतः किंचिदत्र
प्रस्तावे भावसारं हतविमलधियो गाढमध्यस्थचित्ताः ।
एतद्विज्ञाय भो भो मनुजगतिगता ज्ञाततत्त्वा मनुष्याः
स्तेयं मायां च हित्वा विरहयत ततो घ्राणलाम्पट्यमुच्चैः ॥

## इत्युपमितिभवप्रपञ्चायां कथायां मायास्तेयघ्राणेन्द्रियविपाकवर्णनः पञ्चमः प्रस्तावः समाप्तः ॥

---

## अथ षष्ठः प्रस्तावः ।

अथास्ति सततानन्दमन्दिरं दोषदूरगम् ।
आनन्दनामकं लोके बहिरङ्गं महापुरम् ॥
विलासोल्लाससलावण्यललिता लोचनैर्नराः ।
सौन्दर्येर्यत्र भाव्यन्ते देवेभ्योऽभिन्नमूर्तयः ॥
आहृष्टदृष्टयो नृणां नार्यो निष्पन्दलोचनाः ।
यत्र संपादयन्त्युच्चैरमराकारधारिताम् ॥
चित्रांशुरत्नसञ्चारतारं यत्र विभाव्यते ।
आखण्डलधनुर्दण्डखण्डमण्डितमम्बरम् ॥
परेभकुम्भनिर्भेदवर्धितोत्साहसाहसः ।
तत्राक्रान्तमहीपीठः केसरी नाम भूपतिः ॥
अनेकसुन्दरीवृन्दमध्ये लब्धपताकिका ।
देवी कमलपत्राक्षी तस्यास्ति जयसुन्दरी ॥
अथास्ति नगरे तत्र वल्लभस्तस्य भूपतेः ।
निःशेषनगराधारो वाणिजो हरिशेखरः ॥
येन मेघायितं दानादर्थिसस्येषु सर्वदा ।
सुहृत्कमलखण्डेषु सततं भास्करायितम् ॥
तस्यास्ति हृदयश्रेष्ठा लावण्यामृतकुण्डिका ।
साध्वी बन्धुमती नाम भार्यार्यकुलसम्भवा ॥
या रूपमिव रूपस्य प्रत्यादेश इव श्रियः ।

आवाम इव शीलस्य भर्दभक्तेस्तु मन्दिरम् ॥
अथागृहीतसङ्केते भवितव्यतया तया।
तदाहं गुडिकादानात्तस्याः कुक्षौ प्रवेशितः ॥
ततः संपूर्णकालेन मित्राभ्यां परिवारितः।
नरकादिव निष्क्रान्तो योनियन्त्रनिपीडितः ॥
ततो बन्धुमती तुष्टा मुदितो हरिशेखरः।
संजातं पुत्रजन्मेति कारितश्च महोत्सवः ॥
आनन्दपूर्वकं ताभ्यां द्वादशाहेऽतिलङ्घिते।
प्रतिष्ठितं च मे नाम यथार्थं धनशेखरः ॥
जातावपि मया सार्धं तौ पुण्योदयसागरौ।
अन्तरङ्गवयस्यौ मे जनकाभ्यां न लक्षितौ ॥
ततोऽहं सहितस्ताभ्यां वर्धमानः सुखैः किल।
संप्राप्तो यौवनं भद्रे मीनकेतनमन्दिरम् ॥
अथ कंचित्समासाद्य कलाचार्यं तदा मया।
एकां धर्मकलां मुक्त्वा गृहीताः सकलाः कलाः ॥
संपादिताः स्ववीर्येण चित्तकल्लोलकाश्च मे।
तदानेन वयस्येन सागरेण क्षणे क्षणे ॥

अथ कीदृशाः पुनस्ते सागरवीर्योल्लासितास्चित्तकल्लोलाः संपादिताः ॥

धनमेव जगत्सारं धनमेव सुखाकरः।
धनमेव जनश्लाघ्यं धनमेव गुणाधिकम् ॥
धनमेव जगद्वन्द्यं धनं तत्त्वमनुत्तमम्।

धनं हि परमात्मेति धने सर्वं प्रतिष्ठितम् ॥
धनेन रहितो लोके पुरुषः परमार्थतः ।
तृणं भस्मांशुचिर्धूलिर्यद्वा नास्त्येव किंचन ॥
धनादिन्द्रो धनाद्देवा धनादेते महीभुजः ।
अन्येभ्योऽभ्यधिका भान्ति नान्यत्किंचन कारणम् ॥
एको दाता परोऽर्थीति स्वाम्येकः सेवकोऽपरः ।
पुरुषत्वे समानेऽपि धनस्येदं विजृम्भितम् ॥
तदेव परमार्थोऽयं सर्वयत्नेन तद्धनम् ।
स्वीकर्तव्यं नरेणोच्चैरन्यथा जन्म निष्फलम् ॥

एवं च स्थिते ।

कुलक्रमागतं भूरि यद्यप्यस्ति गृहे धनम् ।
ममात्मीयं तथाप्यन्यदर्जयामि ततोऽधिकम् ॥
कुतः सुखासिका तावज्जायेत मम मानसे ।
विलसद्दीप्तयो यावन्न दृष्टा रत्नराशयः ॥
गत्वा देशान्तरं कृत्वा सर्वकर्माणि सर्वथा ।
मयात्मभवनं कार्यं रत्नराशिप्रपूरितम् ॥
ततोऽनेकविकल्पैस्तैराकुलीकृतमानसः ।
तदागृहीतसङ्केते ताताभ्यर्णमहं गतः ॥

उक्तं च मया ।

तात मामनुजानीहि धनोपार्जनकाम्यया ।
गच्छाम्यहं विदेशेषु करोमि पुरुषक्रियाम् ॥

हरिशेखरेणोक्तं ।

विद्यते विपुलं वत्स कुलक्रमसमागतम्।
धनं ते दानसम्भोगविलासकरणक्षमम्॥
तत्तदेव धनं वत्स नियुञ्जानो यथेच्छया।
गृहे तिष्ठ न शक्तोऽस्मि स्थातुं हि रहितस्त्वया॥

मयोक्तं।

या पूर्वपुरुषैस्तात भूरिलक्ष्मीरुपार्जिता।
तां भुञ्जानस्य सत्पुंसः कथं न त्रपते मनः॥
मातेव स्तनपानेन सा बालैः परिभुज्यते।
अवाप्तपौरुषाणां तु तद्भोगो लज्जनीयकः॥
भुज्यमाना च सा तात कियत्कालं भविष्यति।
बिन्दुभिः क्षयमायाति समुद्रोऽप्यनुपार्जनः॥
तन्मे धनार्जनोत्साहं न तातो भंक्तुमर्हति।
अत एव विषोढव्या तातेन विरहव्यथा॥

किं बहुना।

यावद्भुजबलेनोच्चैर्नोपात्ता रत्नराशयः।
गत्वा देशान्तरं तात तावन्मे न सुखासिका॥
तत्सर्वथापि गन्तव्ये मदीयमनसि स्थिते।
कथं विघातस्तातेन गमनस्य विधीयताम्॥
ततो विज्ञाय निर्बन्धं तादृशं हरिशेखरः।
मामुवाच तथा भद्रे स्नेहार्द्रीभूतमानसः॥
यद्येष निश्चयो वत्स स्थितस्ते मनसि स्थिरः।
तद्विधेहि निजाकूतं पूर्यतां ते मनोरथः॥

केवलं वत्स सुखलालितस्त्वमसि सरलः प्रकृत्या। दवीयो देशान्तरं। विषमा मार्गाः। कुटिलहृदया लोकाः। वञ्चनप्रवणाः कामिन्यः। भूयांसो दुर्जनाः। विरलविरलाः सज्जनाः। प्रयोगचतुरा धूर्ताः। मायाविनो वाणिजकाः। दुष्परिपालं भाण्डजातं। विकारकारि नवयौवनं। दुरधिगमाः कार्यगतयः। अनर्थरुचिः कृतान्तः। अनपराधक्रुद्धाश्चौरचरटादयः। तत्सर्वथा भवता क्वचित्पण्डितेन क्वचिन्मूर्खेण क्वचिद्दक्षिणेन क्वचिन्निष्ठुरेण क्वचिद्दयालुना क्वचिन्निष्कृपेण क्वचित्सुभटेन क्वचित्कातरेण क्वचित्त्यागिना क्वचित्कृपणेन क्वचिद्वकवृत्तिना क्वचिद्विदग्धेन सर्वथा परैरलब्धमध्यागाधदुग्धनीरधिधीरगम्भीरधिषणेन भवितव्यं। मयोक्तं।। तात महाप्रसादः। सम्यगनुशिष्टोऽस्मि तातेन। पश्यतु च तातो मे बुद्धिपौरुषमाहात्म्यं। तथाहि।

सत्त्वमात्रधनो गत्वा रूपकेण विवर्जितः।
आगच्छेयं कृतार्थोऽहं यदि तात पुनर्गृहम्॥

ततः।

धनशेखरनामाहं तव सूनुर्न संशयः।
अन्यथा मृत एवास्मि दातव्यो मे जलाञ्जलिः॥

यतः।

सार्थभाण्डसहायादिसामग्रीं धनसाधनीम्।
प्राप्यार्जयति योपापि धनं किमु युवा नरः॥
मम त्वेष विशेषः स्यात्सामग्रीरहितोऽपि यत्।
पूरयामि गृहं तात स्वोपात्तै रत्नराशिभिः॥

एवं ब्रुवाणस्तातस्य वन्दित्वा चरणद्वयम्।
नत्वा चाम्बां सुतस्नेहजाताश्रुकृतदुर्दिनाम्॥
कृतार्थस्फालको गेहान्निर्गतः कृतनिश्चयः।
सार्धमन्तरमित्राभ्यां ततोऽहं रुदतोस्तयोः॥

ततः पौरुषमवलम्ब्य स्थापिता रुदती हरिशेखरेण बन्धुमती। अभिहितमनेन। प्रियतमे मा रुदिहि हर्षस्थानमेतत्। तथाहि।

या साहसविनिर्मुक्तमलसं दैवतत्परम्।
निर्वीर्यं जनयेत्पुत्रं सा हि रोदितुमर्हति॥
त्वया तु जनितो धीरः सुतोऽयं कुलभूषणः।
निर्व्याजसाहसस्तस्मान्नास्ति रोदनकारणम्॥
अयं नूनं गुणोऽस्माकं व्यवसायपरायणः।
यदेष पुत्रको जातस्ततो मुञ्च विषादिताम्॥

इति। इतश्च निर्गतोऽहं नगरात्प्रन्तुं प्रवृत्तो दक्षिणसमुद्रवेलाकूलाभिमुखं। प्राप्तश्च क्रमेणोदधितटाभ्यर्णवर्तिनि जयपुरे। निषण्णो बहिष्कानने। तत्र तु चिन्तितुं प्रवृत्तः। कथं।

विलसल्लोलकल्लोलमालं किं मकराकरम्।
लङ्घयित्वा प्रजाम्युच्चैं रत्नद्वीपे धनाकरे॥
किं वा रणे विनिर्भिद्य हठाद्वीश्वरमण्डलम्।
नरश्रीं स्वीकरोम्यस्या न दुष्टो हि स्वयंग्रहः॥
किं वा पाटितदोर्दण्डखण्डै रुधिरपिच्छिलैः।
चण्डिकां तर्पयित्वोच्चैस्तुष्टां तां धनमर्थये॥
किं वा रात्रिं दिवं गेयव्यापाररहितः स्वयम्।

खनामि रोहणं यावत्पातालतलमुच्चकैः ॥
अहो गिरिदरीं गत्वा संप्राप्य रसकूपिकाम्।
धातुवादबलेनैव दधे स्वर्णं यथेच्छया ॥
एवं विविधकल्लोलैर्धनोपार्जनकाम्यया।
मिथ्यासागरवीर्येण हृतोऽहं बकुलस्तदा ॥
अत्रान्तरे मचिन्तस्य दृष्टिस्तरलतारिका।
पुरःस्थिते गता भद्रे मम किंशुकपादपे ॥
यावद्विनिर्गतस्तस्य शाखाया वीक्षितो मया।
प्ररोहो भूमिसंप्राप्तः कणीयान् कृतविस्मयः ॥

तं च किंशुकपादपप्ररोहमवलोक्य स्मृतो मयाभिनवशिक्षितः खन्यवादः। चिन्तितं च। नूनमस्यत्र किंचिद्धनजातं। यतोऽभिहितं खन्यवादे।

नास्त्येव क्षीरवृक्षस्य प्ररोहो धनवर्जितः।
स्तोकं वा भूरि वा तत्र ध्रुवं बिल्वपलाशयोः ॥
प्ररोहे भूरि तत् स्थूले तनुके स्तोकमुच्यते।
रात्रौ ज्वलति तद्भूरि सोष्मणि स्वल्पमीरितम् ॥
विद्धे तत्र भवेद्रक्तं यदि रत्नानि लक्षयेत्।
अथ क्षीरं ततो रूप्यं पीतं चेत् कनकं भवेत् ॥
प्ररोहः स्यादुपर्युच्चैर्यन्मात्रोऽधोऽपि तावति।
प्रदेशे निहितं नूनं विद्यते तन्निधानकम् ॥
उपरिष्टात्तनुर्यः स्यादधस्तात् पृथुलो यदि।
प्ररोहोऽसौ निधिं प्राप्तो विपरीतस्तु सोऽन्यथा ॥

ततो निरूपितोऽसौ मया पलाशपादपप्ररोहो यावत्तुङ्गः। तत्र चिन्तितं मया। स्तोकमत्र द्रविणं। ततो नखशुक्त्या विद्धोऽसौ मया यावन्निर्गतं पीतवर्णं क्षीरं ततः स्थितं मम मानसे यथा कनकेनात्र भवितव्यं। ततः प्रेरितोऽहं सागरेण तस्योत्खननार्थं। ततो नमो धरणेन्द्राय नमो धनदाय नमो धनपालायेति मन्त्रं पठता खातः प्रदेशो मया। दृष्टं दीनारभृतं ताम्रभाजनं। हृष्टः सागरः। परिगणितं प्रयत्नेन यावल्लक्षमात्रं। तच्च मे तेन पुण्योदयेन निजवीर्येण संपादितं। मम तु तदा महामोहवशात्संजातः सागरे पक्षपातो ममेदमनेन जनितमिति भावनया। ततः संपन्नं मे तावद्भाण्डमूल्यमिति तुष्टोऽहं चेतसा। प्रविष्टो जयपुरेऽवतीर्णो हट्टमार्गे दृष्टो बकुलश्रेष्ठिना। चोदितोऽसौ मत्पुण्योदयेन समागतो मम समीपं। कृतं सम्भाषणं। संजाता प्रीतिः। प्रसारिताः स्नेहतन्तवः। नीतोऽहं स्वभवने। समादिष्टा भार्या भोगिनी। कुरुष्वातिथेयमस्मै। ततः कारितोऽहं मज्जनं परिधापितो कोमलदुकूलयुगलं निवेशितो वरविष्टरे भोजितो मनोहारि भोजनं सह श्रेष्ठिना ग्राहितः सुरभि ताम्बूलं। पृष्टः सप्रणयं कुलाभिधानादिकं। यथावस्थितमेव निवेदितं सर्वं मया। ततः कुलेन शीलेन यौवनेन रूपेण सर्वथायमुचितो मद्दुहितुर्भर्तेति संचिन्त्य समुपस्थापिता मेऽपकर्णितमकरकेतनवधूरूपविभवा कमलिनी नाम कन्यका। शुभमुहूर्ते ग्राहितोऽहं पाणिमस्याः। ततोऽभिहितोऽहं बकुलश्रेष्ठिना। वत्स स्वभवनमिदं ते। ततो ऽत्र निरुद्विग्नो वत्सया सह सततमास्तिष्ठेति। मयोक्तं। तात

यावन्निजभुजाभ्यां भो नार्जिता रत्नराशयः ।
तावत्सर्वामहं मन्ये भोगलीलां विडम्बनाम् ॥
ततस्तात न दातव्यो ममादेशोऽयमीदृशः ।
प्रस्थापय सुसार्थेन रत्नद्वीपं व्रजाम्यहम् ॥

श्रेष्ठिनोक्तं । यद्येवं ततः

अलं ते वत्स दुर्लङ्घ्यसागरोत्तरणेच्छया ।
मदीयधनमादाय कुर्वन्नेव धनार्जनम् ॥

मयोक्तं । तात यद्येष ते निर्बन्धो यदुत न गन्तव्यमन्यत्र मया ततः

भाण्डमूल्यं ममास्त्वेव न गृह्णामि च तावकम् ।
पृथग्गृहे स्थितस्तेन पणेऽहं पृथगापणे ॥

यकुलेनोक्तं । एवं कुरु । ततः प्रारब्धोऽहं वाणिज्यं विधातुं । तेन च सागरेण प्रियमित्रेण प्रतिक्षणं प्रेर्यमाणस्य मे विवर्धन्ते मनोरथकल्लोलाः विगलति धर्मबुद्धिः अपसरति दयालुता नश्यति सरलता प्रभवति धने तत्त्वबुद्धिः विघटते दाक्षिण्यं प्रक्षीयते सन्तोषोऽपीति । ततः संगृह्णामि धान्यानि । भाण्डशालयामि कार्पासतैलादिकं । स्वीकरोमि खातां । व्यवहरामि शुल्किकया । पीडयामि जन्तुसंसक्ततिलान् । दाहयाम्यङ्गारान् । छेदयामि वनं । जल्पाम्यलीकं । मुष्णामि मुग्धजनं । वञ्चयामि विश्रब्धक्रायकं । करोम्यूनाधिकं मानोन्मानेन विनिमयं । सर्वथा

न पिबामि तृषार्तोऽपि न भुञ्जे च बुभुक्षितः ।
रात्रावपि न सुप्तोऽहं धनोपार्जनलोलुपः ॥

नैव भङ्गायितं तस्याः कमलिन्याः क्वचिन्मया।
वदनाम्बुरुहे दिव्ये धनाघूर्णितचेतसा॥

ततश्च।

तावता क्लेशजातेन कालेन कमलेक्षणे।
तद्दीनारसहस्रं मे सार्धं वर्धयतः स्थितम्॥
ततः प्रवृत्ता मे वाञ्छा सहस्रदशमीलने।
तत्रापि जाते जातोऽहं दीनारायुतलालसः॥
कथंचित्तच्च संपन्नं ततो लक्षे मतिर्गता।
नानोपायैर्मया भद्रे कृतं तस्यापि मीलनम्॥
ततोऽपि लक्षदशके सागरप्रेरितस्य मे।
बुद्धिर्धावति कालेन भूयसा तच्च मीलितम्॥
ततः स सागरो भूयः कोटीमीलनकाम्यया।
उत्साहयति मां भद्रे नियुञ्जानः क्षणे क्षणे॥
सा च पूर्वोक्तवाणिज्यैर्न कथंचित्प्रपूर्यते।
ततः कृता बहूपायास्तस्याः पूरणकाम्यया॥

तद्यथा। प्रवर्तिता देशान्तरेषु बृहद्भाण्डसार्थाः। प्रस्थापिता महोद्रमण्डलिकाः। प्रेषितान्यनेकबोहित्थानि। प्रवाहितानि रासभमण्डलानि। निरूपिता भामहवाणिजकाः। गृहीता राजकुलहस्तादेशाः। कारितानि षण्डपोषणानि। विहिता धनोपार्जनगणिकाः। समाश्रिता देयवृत्तवृत्तिका। विधापितो रससन्धानविक्रयः। क्रापिता वरकरिदशनाः। वापिता विविधकृषिसङ्घाताः। प्रकीर्णानि महेक्षुकरणानि। सर्वथा

नास्ति प्रायेण तल्लोके धनोपार्जनसाधनम्।
यत्तदा न कृतं भद्रे सागरस्येच्छया मया॥
नास्ति मे पातकाशङ्का न तदा क्लेशभीरुता।
न सुखेच्छा न वा तोषस्तस्याज्ञावशवर्तिनः॥
अथानेकमहापापैर्मया कालेन भूयसा।
पुण्योदयस्य माहात्म्यात्सा कोटिः परिपूरिता॥
ततः स सागरो भूयः प्रवृत्तोत्साहसाहसः।
अवाप्तप्रसरो नित्यं प्रेरयत्येव मामलम्॥

कथं।

यथेदं भवत्प्रसादेन संपन्नं विपुलं धनम्।
तथोत्साहेन ते रत्नकोटयोऽपि न दुर्लभाः॥
ततः संपादिता तेन बुद्धिः सागरसङ्गने।
मम रत्नौघलाभाय देवैरप्यनिवर्तिका॥

ततः कथितो मकुलश्रेष्ठिने मया निजोऽभिप्रायः। तेनाभिहितं। वत्स।

यथा यथायं पुरुषः पूर्यते भूरिभिर्धनैः।
तथा तथास्य गुरवो विवर्धन्ते मनोरथाः॥
नैव ते विनिवर्तन्ते रत्नकोटिशतैरपि।
को हि वैश्वानरं दीप्तमिन्धनैस्तर्पयिष्यति॥
तत्सन्तोषः परं श्रेयात्तार्जितं विपुलं धनम्।
इदमेव निषुञ्जानस्तिष्ठाधैव निराकुलः॥

मयोक्तं। तात मा मैवं वद। यतः।

भूरिप्रकारेण वृत्तान्तशतेन तद्रत्नपूर्णं मणाद्वीपमुद्दिश्य प्रयातानि तानि प्रमोदेन तूर्णमिति॥

ततः समुत्तीर्णा वाणिजकाः। गृहीतं दर्शनीयं। दृष्टो नरपतिः। विहितोऽनेन प्रसादः। वर्तितं शुल्कं। परिकलितं भाण्डं। दत्ता हस्तसंज्ञाः। विक्रीतं स्वरुच्या। गृहीतं प्रतिभाण्डं। वितीर्णं दानं। प्रतिनिवृत्ताः स्वकूलाभिमुखं शेषवाणिजकाः। स्थितोऽहं सागरेण। उक्तं चानेन। वयस्य।

निम्बपत्रादिभिर्यत्र लभ्यन्ते रत्नसञ्चयाः।

विमुच्य तदिदं द्वीपं किं झटित्येव गम्यते॥

ततः स्थितोऽहं विधायापणं। प्रारब्धं रत्नग्रहणवाणिज्यं॥

अन्यदा समागतैका वृद्धनारी। तयाभिहितं। वत्स अस्ति भवता सह किंचिद्वक्तव्यं। मयोक्तं। वदतु भवती। तयोक्तं। अस्त्यानन्दपुरे केसरी नाम राजा। तस्य द्वे भार्ये जयसुन्दरी कमलसुन्दरी च। स च राज्यसुखलोलतया जाताञ्जातान्निजसुतान्मारयति। अतः सा कमलसुन्दरी संजातगर्भापत्यस्नेहमोहिता मां सहचरीं गृहीत्वा रात्रौ पलायिता। पतिता महाटव्यां। अनुभूतो भूरिक्लेशः। संजातो रात्रिशेषः। अत्रान्तरे तस्या मे स्वामिन्या विजृम्भितं नितम्बबिम्बं स्फुरितं सवेदनं नाभिमण्डलं प्रवृत्तानि दारुणानि उदरशूलानि स्तम्भितमूरुयुगलं विदलन्ति चाङ्गानि समुद्वेल्लितं हृदयेन मुकुलिते लोचने प्रवृत्ता जृम्भिका। ततोऽभिहितमनया। सखि वसुमति न शक्नोम्यहं गन्तुं। महती मे शरीरबाधा वर्तते। मया चिन्तितं। हा हन्त किमेतत्। ततो

लक्षितं मया। अये प्रत्यासन्नोऽस्याः प्रसवसमयः। ततो धीरा भवेति वदन्त्या एव मम कुर्वत्यास्तत्कालोचितं कर्म वेदनाविह्वला झटित्कृत्य पतिता स्वामिनी भूतले। तस्मिंश्चेतश्चेतश्च वेल्लमाना करुणानि कूजितुं प्रवृत्ता। निर्गच्छति च योनिद्वारेण दारके विमुक्ता प्राणैः। निर्गतो दारकः। ततोऽहं मन्दभाग्या तं तादृशं वृत्तान्तमुपलभ्य वज्राहतेव भीतेव विलक्षेव नष्टसर्वस्वेव मूर्छितेव मृतेव ग्रहगृहीतेव सर्वथा शून्यहृदया न जाने किं करोमि स्म केवलं विलपितुं प्रवृत्ता। कथं।

हा देवि देहि मे वाचं किं न जल्पसि सुप्रिये।
जातस्ते तनयो दिव्यः पश्येमं चारुलोचने॥
यस्यार्थे सुन्दरं राज्यं भर्तारमतिवत्सलम्।
हित्वा क्वचित् प्रवृत्तासि पश्येमं तं सुपुत्रकम्॥
हा हा हतास्मि दैवेन गाढवैशसकारिणा।
येन संपादितो वत्सः स्वामिनी च निपातिता॥
हा हा वत्स न युक्तं ते यत्ते रचणतत्परा।
मातातिवत्सला साध्वी जायमानेन घातिता॥
किलैषा पुत्रसौख्यानि प्राप्स्यते त्यक्तभर्तृका।
यावदीदृक्सुखं मातुस्त्वया वत्स विनिर्मितम्॥

एवं प्रलपन्त्या एव मे विभाता रजनी समुद्गतो दिनकरः। समागतस्तेन पथा सार्थः। दृष्टाहं प्रलपन्ती सार्थवाहेन। संस्थापितानेन। पृष्टो वृत्तान्तः। कथितो मया। विस्मितोऽसौ। पृष्टश्च मया। क्व यातव्यं भवता। तेनोक्तं। वेलाकूलं प्राप्य बोहित्थेन

यावन्नरो निरारम्भस्तावल्लक्ष्मीः पराङ्मुखा ।
सारम्भे तु नरे लक्ष्मीः स्निग्धलोलविलोचना ॥
आश्लिष्टमपि मुञ्चेत्सा नरं साहसवर्जितम् ।
कुलटेव विटभ्रान्त्या गृहीतं दुर्भगं नरम् ॥
निर्माय कार्यं योऽन्यत्र दत्तधीस्तं निरीक्षते ।
कमला कुलबालेव व्याचिन्न लज्जया प्रियम् ॥
विषमस्थोऽपि यो धीरो धनोत्साहं न मुञ्चति ।
वक्षःस्थले पतत्युच्चैस्तस्य लक्ष्मीः स्वयंवरा ॥
यो बध्नाति धिया धीरो विक्रमेण नयेन च ।
पद्मा प्रतीक्षते तं भो यथा प्रोषितभर्तृका ॥
यस्तु स्तोकां समासाद्य लक्ष्मीं तुष्यति मानवः ।
तं तुच्छप्रकृतिं मत्वा सा लक्ष्मीर्नाभिवर्धते ॥
इत्येवं स्वगुणैः पद्मां यो नरो नैव रञ्जयेत् ।
सिद्धोऽपि न भवेत्तस्य प्रेमावन्धस्थिरं तया ॥
तस्मान्न तोषः कर्तव्यो विदुषा धनसङ्ग्रहे ।
अतस्तातोऽनुजानातु रत्नदीपे गमं मम ॥

श्रेष्ठिनोक्तं । वत्स ।

पाताले मेरुशिखरे रत्नदीपे गृहेऽपि च ।
पूर्वोपात्तं भवेत् पुंसः मोक्षमस्येतरस्य च ॥
तथापि यदि निर्बन्धस्तवायमतुलस्ततः ।
अनुज्ञातो मयावत्स गम्यतां यच रोचते ॥

मयोक्तं । तात महाप्रसादः । ततो गृह्यन्ते भाण्डानि उप-

पर्यन्ते निर्यामकाः गण्यते गमनदिनं विचार्यते लग्नशुद्धिः निरूप्यन्ते निमित्तानि क्रियन्तेऽभ्युतयः संस्मर्यन्तेऽभीष्टदेवताः पूज्यते समुद्रदेवः सज्जीक्रियन्ते सितपटाः ऊर्ध्वीक्रियन्ते कूपकस्तम्भाः बध्यन्ते काष्ठसञ्चयाः भ्रियन्ते जलभाजनानि आरोप्यते भाण्डोपस्करः विधीयते रणसामग्री मील्यन्ते तद्द्वीपगामिनः सांयात्रिका इति ।

संपूर्णसर्वसामग्र्या सममन्यैर्महाधनैः ।
स्थितोऽहं गमने सज्जो हित्वा भार्यां पितुर्गृहे ॥
अथ प्राप्ते शुभे काले कृतनिःशेषमङ्गलः ।
यानपात्रे समारूढो मित्राभ्यां परिवारितः ॥

चलत्सु च यानपात्रेषु प्रहतानि तूराणि प्रवादिताः शङ्खाः प्रगीतानि मङ्गलानि पठन्ति पटुबटवः आशिषं ददतो निवर्तन्ते गुरुजनाः दैन्यमवलम्बन्ते मुक्तप्रियतमाः हृष्टविषण्णो मित्रलोकः मनोरथप्रवणाः सज्जना इति । एवं च ।

पूरयित्वार्थिसङ्घातं कृत्वा कालमहोत्सवम् ।
अनुकूले लसद्वाते सर्वेऽपि चलिता वयम् ॥

ततः पूरिताः सितपटाः । उत्क्षिप्ता नङ्गराः । चलिताश्चावल्पकाः । दत्तावधानाः कर्णधाराः । पतितानि वर्तन्यां यानपात्राणि । प्रवृत्तो मनोभिमतः पवनः । ततश्च

प्रबलपवनवेगकल्लोलमत्स्यौघपुच्छच्छटाघातसंजातखात्कारवित्रस्तयादःसमूहेन संवल्गफेनेन निर्नष्टकूर्मेण मार्गेण गन्तुं प्रवृत्तानि तानि प्रभूतानि बोहित्थरूपाणि विस्तीर्णदीर्घं च तीर्णं समुद्रेऽत्र

रत्नद्वीपं यास्यामि। मया चिन्तितं। श्रुतो मयास्ति रत्नद्वीपे कमलसुन्दर्याः सहोदरो नीलकण्ठो राजा। तदेनं दारकं भागिनेयमनेनैव सुसार्थेन गत्वा तस्मै मातुलाय समर्पयामि। ततः समागताहं तेन धरणेन सार्थवाहेन सार्धमिमं द्वीपं। दारकस्नेहेन च प्रस्रुतं मे स्तनयुगलं। वर्धितोऽसौ मदीयस्तन्येन। दर्शितो नीलकण्ठाय। कथिता कमलसुन्दरीवार्ता। जातो नीलकण्ठस्य विषादगर्भो हर्षः। प्रतिष्ठितं दारकस्य हरिरिति नाम। अपि च।

वर्धमानः क्रमेणासौ जीवितादपि वल्लभः।
भागिनेयोऽस्य संपन्नो नीलकण्ठस्य भूपतेः॥

ततो ग्राहितः कलाकलापं संप्राप्तो यौवनं संजातः सुरकुमाराकारधारक इति। कथितश्चास्य मया पूर्वको वृत्तान्तः। श्रुतश्च तेन भवान् यदानन्दपुरादागत इति। ततो वत्स स हरिकुमारो भवन्तं सदेशजं मत्वा द्रष्टुमभिलषति। ततस्तत्समीपं गन्तुमर्हति वत्सः।

मयोक्तं। यदाज्ञापयत्यम्बा। ततः सह तया वसुमत्या गतोऽहं हरिकुमारसमीपं। दृष्टो मित्रवृन्दमध्यगतो हरिकुमारः। विहितो मया पादप्रणामः। निवेदितोऽहमस्मै वसुमत्या। ततः

मद्दर्शनात्स तुष्टात्मा प्रीतिविस्फारितेक्षणः।
गाढमाश्लिष्य मां स्वीये स्थापयत्यर्धविष्टरे॥

उक्तं चानेन। भद्र

अम्बया कथितस्तात वयस्यो हरिशेखरः।
मया तस्य च सूनुस्त्वं विज्ञातो जनवार्तया॥
ततो भ्रातासि मे भद्र शरीरं जीवितं तथा।

संपन्नं सुन्दरं चेदं यदत्रागमनं तव ॥

मयोक्तं।

देव श्रुतो मया सर्वो वृत्तान्तः कथितोऽमुया।
अत्यादरं भृत्यजने न देवः कर्तुमर्हति ॥
यथानुजीवी तातो मे तत्र केसरिभूपतेः।
तथाहमपि देवस्य किङ्करो नात्र संशयः ॥
ततो गाढतरं तुष्टः श्रुत्वा तन्मामकं वचः।
स हरिः कारयत्युच्चैर्मित्रागममहोत्सवम् ॥
ततो हरिकुमारेण सार्धं मित्रसमायुजा।
ललमानस्य मे तत्र लीलया यान्ति वासराः ॥

अन्यदा मन्मथोद्दीपो वनराजिविभूषणः।
प्रमोदहेतुर्जन्तूनां वसन्तः समुपागतः ॥
ततो हरिकुमारोऽसौ गृहीत्वा मित्रमण्डलम्।
बंभ्रमीति मया युक्तो दिदृक्षुः काननश्रियम् ॥
अथ चूतवनं प्राप्य प्रकूजत्कलकोकिलम्।
सहितो मित्रवृन्देन निविष्टस्तत्र लीलया ॥
यावज्जराविशीर्णाङ्गी रौद्राकारविधारिणी।
आशीर्वादं च कुर्वाणा प्रतिनी काचिदागता ॥
अथ प्रणामसम्भाषैः कुमारेणाभिनन्दिता।
सा दर्शयति सानन्दं चित्रविन्यस्तकन्यकां ॥
तां चार्पयित्वा सा प्रौढा गाढदर्शितविक्रिया।
कुमारभावं पश्यन्ती संस्थिता स्तिमितेक्षणा ॥

ततः कुमारमाक्षिप्तं सविकारं विलोक्य सा।
प्रजामीत्यभिधायोच्चैः शीघ्रमेव विनिर्गता॥
कुमारोऽपि च तां पश्यन्नशरीरशरैरितः।
विकारकातरः सर्वैर्वयस्यैरुपलक्षितः॥

यतः।

क्षणं हुङ्कारकरणं क्षणं मूर्ध्नः प्रकम्पनम्।
क्षणं च स्फोटिकादानं क्षणमव्यक्तभाषणम्॥
क्षणं दीर्घोष्णनिःश्वासं क्षणं च करधूननम्।
मुहुर्मुहुश्चित्रगतां तां वीक्ष्य कुरुते हरिः॥
क्षणं स्मेरमुखोऽत्यन्तं विस्फारयति लोचने।
क्षणं निष्पन्दमन्दाक्षः स्निग्धचक्षुर्निरीक्षते॥

ततोऽभिहितं स्मितबन्धुरं मन्मथेन। कुमार किमिदमात्मगत-विविधरसभारमप्रकटितकरणाङ्गहारं नरीनृत्यते। ततः कृतमाकारसंवरणं हरिणा। अभिहितमनेन। अहो रञ्जितोऽहमनेन चित्रकरकौशलेन। तथाहि। अत्र सुविशुद्धा रेखा संगतानि भूषणानि उचितक्रमा वर्णविच्छित्तिः परिस्फुटो भावातिशय इति। दुष्करं च चित्रे भावाराधनं तदेव चाभिमतमतिविदग्धानां। तस्य चात्र प्रकर्षः परिस्फुटो दृश्यते। यस्मादुपारूढयौवना समदना चेयमालिखिता कन्यका तदस्यां सम्बन्धिनममुं भावविशेषमनिवेदितमपि लक्षयन्ति बालका अपि किमुत विद्वांसः। तथाहि।

लावण्यमुद्गिरन्तीव प्रोद्भिन्नस्तनचूचुका।
एषा प्रोद्दामतारुण्यमात्मानं कथयत्यलम्॥

उन्नामितैकभ्रूभङ्गैर्लीलामन्थरितेक्षणा ।
मन्दं निवेदयत्येषा वचनैरिव कन्यका ॥
कपोलस्फुरितैर्दिव्यैः स्मेरवक्त्राब्जबन्धुरा ।
विभाव्यतेऽतिलोभावी वहन्ती मकरध्वजम् ॥

तदनेन केनचिच्चित्रकरेणालिखितामूं कन्यकां जनितो मे चेतश्चमत्कारः। स्थितमिदं मनसि मे यथा नास्तीदृशमन्यस्य जगति कौशलमिति । मन्मथः प्राह । पद्मकेसर किं सत्यमिदं । पद्मकेसरेणोक्तं । सखे सत्यं । केवलं विचित्ररूपाः प्राणिनां चित्तवृत्तयः । ततो मे चित्रकरादपि चित्रे कुशलतरेयमेव कन्यका प्रतिभासते । ललितेनोक्तं । सखे किमनया विहितं । कश्चिच्चित्रमवलोकितं भवता । पद्मकेसरः प्राह । बाढमवलोकितं । विलासेनोक्तं । सखे वर्णय तत्कीदृशं । पद्मकेसरः प्राह । यदनया कन्यकया दुर्गमममन्यनारीणां दुर्लङ्घममम्बरचरीणामहार्यं किन्नरीणां असाध्यममरसुन्दरीणां अविषयो गन्धर्वादिपुरस्त्रीणां मदनातुराणामपि मर्त्यकमारमपहस्तितरजस्तमोविकारं कुमारमानसं चित्रविन्यस्तरूपयापि दृढमवगाहितं इदमनया कन्यकया चित्रं विहितं। तच्च मयैव न केवलमवलोकितं किं तर्हि स्फुटतरं भवद्भिरपि। विभ्रमः प्राह । नन्वाश्चर्यमिदं कथं चित्रं । पद्मकेसरेणोक्तं । ननु मूर्खचूडामणे आश्चर्यमेव चित्रशब्देनोच्यते । कपोलः प्राह । कथमिदमवगतं भवता यथा कुमारमानसमनयावगाहितमिति । पद्मकेसरेणोक्तं । ननु वठरशेखर किमिदमेतावन्मात्रमपि न लक्षयसि । तथाहि ।

ततो विहस्योक्तं हरिकुमारेण। प्रथमं तावदेवं भज्यते। दासी असि गणिका भवसि तेन कारणेन तव हस्ताद्विषां न गृह्णामि। शेषं स्फुटमेव। द्वितीयस्य पुनरेष भङ्गः। करो हस्तोऽतिकठिनो गाढनिष्ठुरस्तव हे राजन् अरीभकटघट्टनं शत्रुकरिकुम्भास्फालनं विधत्ते कुरुते तथा करवालस्ते निर्मूलां शत्रुसंहतिं विधत्त इति समन्वयः। मन्मथेनोक्तं। अहो कुमारस्य प्रज्ञातिशयः। इतश्च तस्मिन्नेव क्षणे मयापि चिन्तितं गूढचतुर्थकमेकं। निवेदितं हरिकुमाराय। ततस्तदुक्तेन पठितं मया। यदुत

विभूतिः सर्वसामान्या परं शौर्यं चपा मदे।
भूत्यै यस्य स्वतः प्रज्ञा ॥

विचिन्त्य हरिकुमारेण लब्धं हृदये। तुष्टश्चेतसाभिहितमनेन। साधु सखे धनशेखर साधु चारु विरचितं गूढचतुर्थं भवता। ततः समस्तैरभ्यधायि। कुमार कीदृशोऽस्य तुरीयः पादः। कुमारेणोक्तं। "पात्रभूतः स भूपतिः" इति। एतदाकर्ण्य विस्मिता वयस्याः। कपोलः प्राह। मदीयमपि गूढचतुर्थमाकर्णयतु कुमारः। वद वदेत्युक्ते हरिणा पठितं कपोलेन।

न भायणः परावर्णे यः समो रोषवर्जितः।
भूतानां गोपकोऽचमतः ॥

तदनन्तरमेवोक्तं हरिकुमारेण। "स नरो गोत्रभूषणः"। कपोलः प्राह। मादृशामिदं कुर्वतां केवलं कालविलम्बोऽभूत्स पुनः कुमारस्य। अहो सर्वत्राप्रतिहतशक्तिः कुमारस्य बुद्धिप्रकर्षः। शेषैरभिहितं। एवमिदं नात्र सन्देहः॥

एवं दत्तावधानस्य हरेः प्रश्नोत्तरादिषु ।
सा चित्रकन्यका भद्रे विस्मृतासीत्तदा क्षणम् ॥
अथ पारापतं दृष्ट्वा गृहदीर्घिकाश्यादकारिणम् ।
सा कन्यका पुनश्चित्ते तस्य शीघ्रं समागता ।

ततः प्रदीप इव खरतरपवनोत्कलिकया हृद इव पतन्त्या महाशिलया दरिद्र इव निजकुटुम्बभरणचिन्तया मानधन इव परपरिभूत्या अविरतसम्यग्दृष्टिरिव संसारभीरुतया क्षणादेव चेतसि विवर्तमानया तया गाढमाघूर्णितोऽसौ हरिकुमारः । ततश्च

बहिर्व्याक्षेपनिर्मुक्तः सोऽस्माभिस्तत्परायणः ।
योगीव ध्यानमारूढः क्षणादेव निरीक्षितः ॥

ततो मयोक्तं । कुमार किमेतत् । कुमारः प्राह । सखे धनशेखर नागतासीन्मे शिरोवेदनया रात्रौ निद्रा । तथाद्यापि च मे मनाक्कणकणायते मस्तकं । तदेते गच्छन्तु मन्मथादयोऽद्यैव वा यथेष्टं विहरन्तु । त्वमेकोऽत्र मे पार्श्ववर्ती भव । येनाच प्रविश्य चन्दनलतागृहके तावन्निद्रामासादयामि । मयोक्तं । यदादिशति कुमारः । ततो गता मन्मथादयः । स्थितोऽहं । प्रविष्टो लताभवने कुमारः । विरचितं मया शिशिरपल्लवशयनीयं । समारूढो ऽसौ । तत्र च मत्स्य इव तप्तसैकते दन्दह्यमानो न लभते रतिं । ततो विहितं मया कोमलमासनं । उपविष्टो हरिकुमारः । तथापि शूलिकाशिरःप्रोततस्कर इव न प्राप्नोति सुखासिकां । ततो मदीयस्कन्धावलग्नः करोतीतश्चेतश्च चङ्क्रमणं । यावता तथापि न मुच्यतेऽन्तस्तापेन । सर्वथा

नो झङ्कारादयस्तावङ्गवन्त्येवं परिस्फुटाः।
भद्र कल्लोलका यावन्न क्षुब्धं मानसं सरः।

यदि च मद्वचने न प्रत्ययो भवतस्ततः कुमारमेव पृच्छ येन परिस्फुटीभवत्येषोऽर्थः। हरिकुमारेणोक्तं। सखे पद्मकेसर अलमनेनासंबद्धप्रलापेन। पठ तावत्किंचिच्चारुप्रश्नोत्तरं। ततः सहासमभिहितमनेन। यदाज्ञापयति कुमारः। पठितं च।

पश्यन् विस्फारिताक्षोऽपि वाचमाकर्णयन्नपि।
कस्य को याति नो तृप्तिं किं च संसारकारणम्॥

हरिकुमारेण तु तया चित्रोपलब्धकन्यकयापहृतचित्तेन दत्तः शून्यो झङ्कारः। पद्मकेसरेण चिन्तितं। नेदं प्रायः सम्यगवधारितं कुमारेण। ततः पुनः स्फुटतरं पठामि। पठितमनेन। पुनर्दत्तो हरिकुमारेण शून्य एव झङ्कारः। ततो लक्षितं पद्मकेसरेण यथा शून्यीकृतहृदयोऽयमनया चित्रकन्यकया। ततो हसितमनेन। निरूपितानि समस्तैः स्मितगर्भं परस्परं वदनानि। तदालोक्य प्रत्यागतं हरिकुमारस्य चित्तं। अमीभिरप्याकलितोऽहमिति संजातोऽस्याभिमानः। संवृतः कुविकल्पः। विहितोऽवष्टम्भः। संपन्नो दत्तावधानः। प्रवर्तितो विमर्शः। ततोऽभिहितमनेन। भो हस सखे। पुनः पठ। पठितः पद्मकेसरेण पश्यन्नित्यादि पुनः प्रश्नः। ततोऽनन्तरमेव हरिकुमारेणोपलब्धमुत्तरं। उक्तमनेन। ऊं ममल-मिति। विस्मितः पद्मकेसरः। पुनरन्यत्पठितमनेन।

कस्मा बिभ्यद्भीरुर्न भवति सङ्ग्रामलम्पटमनस्कः।
वाताकम्पितदृष्टा निदाघकाले च कीदृक्षाः॥

हरिकुमारेणोक्तं। पुनः पठ। पठितं पद्मकेसरेण। विचिन्त्योक्तं हरिणा। इदमत्रोत्तरं दलनायाः। ततोऽर्हद्दर्शनवासितमतिनाभिहितं विलासेन। कुमार मयापि चिन्तितं किंचित्प्रश्नोत्तरं। हरिकुमारेणोक्तं। पठ। पठितं विलासेन।

कीदृग्राजकुलं विघोदति विभो नश्यन्ति के पावके
कोऽध्यं काननमच्युतश्च वहवः काले भविष्यन्त्यलम्।
कीदृक्षाश्च जिनेश्वरा वद विभो कस्मै तथा रोचते
गन्धः कीदृशि मानवे जिनवरे भक्तिर्न संपद्यते॥

हरिकुमारः प्राह। कृहदिदं व्यस्तं समस्तं च। अतो भूयः स्पष्टतरं पठतु भवान्। पठितं विलासेन। विमृश्योक्तं हरिणा। इदमत्रोत्तरं। अकुशलभावनाभावितमानसे। हसितं विभ्रमेण। कुमारेणोक्तं। भद्र किमेतत्। विभ्रमेणोक्तं। कुमार चाह विहितं भवता यदस्य विलासस्यापनीतः प्रश्नोत्तरगर्वः। न लब्धमिदमस्माभिरासीत्। ततोऽयं गर्वितोऽभूदिति। विलासेनोक्तं। वत्स न केवलं मम किं तर्हि निर्दलयति सर्वेषामप्यत्र गर्वं कुमारः। पठत्वन्योऽपि येन यत्किंचिच्चिन्तितमिति। मन्मथेनोक्तं। कुमार मया स्पष्टान्धकद्वयं चिन्तितं। कुमारेणोक्तं। झटिति पठतार्थः। पठितं मन्मथेन।

दास्यसि प्रकटं तेन गृह्णामि न करात्तव।
भिक्षामित्युदिता काचिद्भिक्षुणा लज्जिता किल॥

तथा

करोति कठिनो राजन्नरीभकटघट्टनम्।
विधत्ते करवालस्ते निर्मूलां शत्रुसंहतिम्॥

न सुप्तो नोपविष्टोऽसौ नोर्ध्वो न भ्रमणोद्यतः
सुखमाप्नोति दुःखार्त्तो नरकेष्विव नारकः ॥
एवं दन्दह्यमानस्य हरेर्मदनवह्निना ।
लङ्घिता महती वेला शीतलेऽपि लतागृहे ॥
कुतूहलवशात्तच्च प्रच्छन्नैर्मन्मथादिभिः ।
स्थितैर्निरीक्षितं सर्वं कुमारस्य विचेष्टितम् ॥

अत्रान्तरे

पूत्कुर्वन्निव नामेदं कामस्तापाय देहिनाम् ।
मध्याह्नसमये दीर्घः शङ्खनादः समुत्थितः ॥
ततः सर्वेऽपि संभूय वयस्या मन्मथादयः ।
निनीषवो हरिं गेहे लतागृहमुपागताः ॥

ततस्तैः समस्तैरभिहितं ।

गम्यतां भवने देव मध्याह्नो वर्ततेऽधुना ।
क्रियतां देवपूजादि कर्तव्यं दिवसोचितम् ॥

हरिकुमारेणोक्तं ।

यात यात गृहे यूयं विमुच्य धवशेखरम् ।
अहमप्यागमिष्यामि यावच्छाम्यति वेदना ॥
गाढं मे शिरसः शूलमन्तस्तापोऽभिवर्धते ।
अतोऽहं स्थातुमिच्छामि शीतलेऽत्र लतागृहे ॥
तच्च प्रतीतं सर्वेषां तस्यान्तस्तापकारणं ।
तथापि कैतवान्मिथैरित्थं जल्पः प्रवर्तितः ॥

भो भो कपोल निपुणोऽसि त्वमायुर्वेदे । तन्निरूपय किंनि-

मित्तकः खल्वयमीदृशः कुमारस्य शरीरविकारः को वास्य शमनोपायो भविष्यति । कपोलेनोक्तं । एवं भो तावद् वैद्यकशास्त्रे पठ्यते । यदुत ।

वायुः पित्तं कफश्चोक्तः शारीरो दोषसङ्ग्रहः ।
मानसः पुनरुद्दिष्टो रजश्च तम एव च ॥

ततः ।

प्रशाम्यत्यौषधैः पूर्वो दैवयुक्तिव्यपाश्रयैः ।
मानसो ज्ञानविज्ञानधैर्यस्मृतिसमाधिभिः ॥

अन्यच्च ।

रूक्षः शीतो लघुः सूक्ष्मश्चलोऽथ विशदः खरः ।
विपरीतगुणैर्द्रव्यैर्मारुतः संप्रशाम्यति ॥
[सस्नेहमुष्णं तीक्ष्णं च द्रवमम्लं रसं पटुः ।
विपरीतगुणैः पित्तं द्रव्यैराशु प्रशाम्यति ॥]
गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छिलाः ।
श्लेष्मणः प्रकृतिं यान्ति विपरीतगुणैर्गुणाः ॥
स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च ।
कषाय इति षट्कोऽयं रसानां सङ्ग्रहो मतः ॥

तत्र ।

कफं स्वाद्वम्ललवणाः कषायकटुतिक्तकाः ।
जनयन्त्यनिलं पित्तं कट्वम्ललवणा रसाः ॥
स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः ।
जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥

[आमे सद्रूगगन्धः स्याद्विदग्धे धूमगन्धता ।
विष्टब्धे गात्रभङ्गश्च रसशेषेऽन्नद्वेषिता ॥
आमेषु वमनं कुर्याद्विदग्धे चाम्लकं पिबेत् ।
विष्टब्धे स्वेदनं कुर्याद्रसशेषे तथा स्वपेत् ॥]

अन्यच्च ।

अजीर्णप्रभवा रोगास्तच्चाजीर्णं चतुर्विधम् ।
आमं विदग्धं विष्टब्धं रसशेषं तथा परम् ॥

एवं च स्थिते यथायं कुमारस्यान्तस्तापस्तथाजीर्णविकारो लक्ष्यते । विदग्धावस्थां गतेन हि तेन चोभितमस्य वायुना सहितं पित्तं । ततो जनितोऽयमन्तस्तापः । विहितं शूलं । यत एवं पठ्यते ।

भुक्ते जीर्यति जीर्णेऽन्ने जीर्णे भुक्ते च जीर्यति ।
जीर्णे जीर्यति भुक्तेऽन्ने दोषैर्नानाभिभूयते ॥

विभ्रमेणोक्तं । सखे कपोल न सम्यग् लक्षितं भवता । वैद्येन ह्यातुरं निरूपयता रोगनिदानमेवमुपलब्धव्यं । आदित एवातुरस्य समुपलक्षणीया प्रकृतिः पर्यालोच्यं शरीरसारं विचार्यं संहननं विज्ञातव्यं प्रमाणं लक्षयितव्यं सात्म्यं वेदितव्यं सत्त्वं मन्तव्याहारशक्तिः बोद्धव्यं व्यायाममौष्ठवं परिकलनीयं वयःप्रमाणमिति ।

अन्यच्च ।

संचयं च प्रकोपं च प्रसरं स्थानसंश्रयम् ।
व्यक्तिभेदांश्च यो वेत्ति दोषाणां स भिषग्वरः ॥
सञ्चयेऽपहृता दोषा लभन्ते नोत्तरां गतिम् ।

ते दूत्तरास्तु गतिषु भवन्ति बलवत्तराः ॥

त्वया पुनरत्र किंचिन्नालोचितं। केवलमुद्घाटमुखतया विहितः कुमारशरीरविकारनिर्देशः। कपोलः प्राह। ननु प्रतीता एव कुमारस्य सम्बन्धिनो मे प्रकृत्यादयः। संचयादयोऽपि दोषाणां ज्ञायन्त एव। तथाहि।

> ग्रीष्माहोरात्रवयसामन्तेऽजीर्णस्य चानिलः।
> कफस्तदादौ तन्मध्ये पित्तं कुप्येच्चरन्नपि ॥
> ग्रीष्मादेषु समीरस्य पित्तस्य प्रावृडादिषु।
> चयप्रकोपप्रशमाः कफस्य शिशिरादिषु ॥
> हेमन्तशिशिरौ तुल्यौ शिशिरेऽल्पं विशेषणम्।
> रूक्षमादानजं शीतं मेघमारुतवर्षजम् ॥

अथवा परिस्फुरति मम हृदये सर्वमिदं। किं बहुनालोचितेन। अजीर्णविकार एवायं कुमारस्य। ततोऽहो विमूढतास्य कपोलस्येति चिन्तयता हसितं हरिकुमारेण। वयस्यैरुक्तं। कुमार किमेतत्। कुमारेणोक्तं। भो भावितोऽहमस्य कपोलस्य मूर्खतया। ततः मसुद्भूतं मे धारयतोऽपि हसनं। पद्मकेसरेणोक्तं। कुमार महाप्रसादः। सिद्धं नः समीहितं। तथाहि।

> कुमारस्य विनोदार्थं मनस्तापनिवृत्तये ॥
> इदमस्माभिरारब्धमसाखजालप्रभाषणम्।

यतः।

> चित्तोद्वेगनिराशार्थं सुहृदां तोषवृद्धये।
> तज्ज्ञाः प्रहसनं दिव्यं कुर्वन्त्येव विचक्षणाः ॥

भेषजं पुनरस्य निर्मूलोच्छेदकं भवतो विकारस्य यदि परं सैव परिव्राजिका विज्ञास्यति संपादयिष्यति वा नापरः। तद्विधीयतां कुमार तस्याः पर्येषणमलं कालविलम्बेन। कुमारेणोक्तं। पद्मकेसर यत्त्वं जानासि तदेव क्रियतां। पद्मकेसरः प्राह। यद्येवं तर्हि कस्तदन्वेषणार्थं प्रहीयतामिति। ततः शेषमित्रेष्वविश्वासात्कुमारेणोक्तं। धनशेखरः प्रस्थाप्यतामिति। मयोक्तं। महाप्रसादः।

ततो निर्गतोऽहं। गन्तुं प्रवृत्तो नगराभिमुखं। दृष्टान्तराले सा परिव्राजिका। विहितः प्रणामः। पृष्टा च। भगवति कोऽयं चित्रपट्टिकावृत्तान्तः का सा कन्यका किमर्थं चोच्चलितासि। तयोक्तं। आकर्णय। अस्ति तावत्प्रत्यूषस्येव प्रविष्टाहं कणभिक्षार्थं। इतश्चास्यैव नीलकण्ठनरपतेरस्ति शिखरिणी नाम महादेवी। प्राप्ताहं तस्या भवने यावद्दृष्टा मया सचिन्ता महादेवी समुद्विग्नः परिकरो विषण्णः कन्यकाजनः पर्याकुलाः कञ्चुकिनः आशीर्वादमुखरः स्थविरिकालोक इति। ततो मया चिन्तितं। हा किमेतत्। उपसर्पिता शिखरिणी। विहितमाशीर्दानं। कृतस्तया मे शिरःप्रणामः। दापितमासनं। उपविष्टाहं। अभिहितमनया। भगवति वन्मुखे प्रतीतैव तावदियं भगवत्या मम जीवितादपि वल्लभतरा मयूरमञ्जरी वत्सा। इयं चाद्य सूर्योदयादारभ्य केनचित्कारणेन समध्यासिता चिन्तया गृहीता रणरणकेन स्वीकृता दृढदरत्या प्रतिपन्ना विकारजालेन अङ्गीकृता शून्यतया अवष्टब्धा महाज्वरेण। परित्यक्तमनया राजकन्योचितं करणीयं। न करोति देवगुरुप्रणामं। न परिवर्तयति रात्रिवस्त्राणि। न गृह्णाति

भूषणानि। न विदधत्यङ्गरागं। न समानयति ताम्बूलं। न प्रतिजागर्ति स्वयमारोपितं बालारामकं। न सम्मानयति वयस्याजनं। न संभालयति शुकसारिकागणं। न ललते लीलाकन्दुकेन। आलिखति विद्याधरमिथुनानि। प्रलोकयति सारसयुगलानि। धावति पुनः पुनर्द्वाराभिमुखं। निन्दति मुहुर्मुहुरस्फुटाचरैरात्मानं। रुष्यति निष्कारणमेव सखीजनाय। न ददाति पृष्टापि प्रतिवचनं। किं बहुना।

उन्मत्तेव शून्येव भूताविष्टेव सर्वदा।
मयूरमञ्जरी वत्सा चणादन्येव संस्थिता॥

तत्कथय भगवति—निपुणासि त्वं निमित्तशास्त्रे—किं पुनरेषा चिन्तयति। अन्यच्च। लप्स्यते तदभीष्टं वस्तु न वा कियता वा कालेनेति। मयोक्तं। एषा निरूपयामि। ततः क्रष्टुमारब्धा मया होरा। न्यस्तं सिद्धिरिति पदं। आलिखितं सरस्वतीवदनं। विन्यस्ता ध्वजाद्योऽष्टायाः। विरचितं नारीहृदयवर्तिनी कौटिल्यगोमूत्रिकात्रयं। व्युत्सृष्टा विगणय्य विगणय्याष्टकाः। पातितमनुक्रमं तच्छेषानुसारेणाङ्कत्रयं। ततोऽभिहितं मया। महादेवि समाकर्णय।

ध्वजो धूमस्तथा सिंहः श्वा बलीवर्द इत्यपि।
खरो गजेन्द्रो ध्वांचश्च अष्टायाः परिकीर्तिताः॥

एतेषां चाष्टानामथायानामष्टविधं बलं भवति। तद्यथा।

कालवासरवेलानां मुहूर्तककुभोस्तथा।
नचत्रग्रहयोश्चैव निसर्गबलमष्टमम्॥

तत्रामी महादेवि

ध्वजः खरस्तथा ध्वांक्षः प्रस्तुतेऽत्र प्रयोजने।
समापन्नास्त्रयो ह्यायास्तेषां बुध्यस्व यत्फलम्॥
प्रथमाज्ज्ञायते चिन्ता द्वितीयात्तु शुभाशुभम्।
तृतीयात्कालनिर्देशं कुर्यादार्यादिति श्रुतिः॥

तत्र।

शुनि ध्वजे वृषे चैव जीवचिन्ता प्रकीर्तिता।
सिंहवायसयोर्मूलं धातुं धूमेभरासभे॥

अतो ध्वजस्य प्रथमं पातादियं मयूरमञ्जरी वत्सा जीवं चिन्तयति। कालवेलादिभिश्च लक्षयामि तमपि जीवं पुरुषं तमपि राजपुत्रं तमपि हरिनामकमेषा चिन्तयति। तस्य चावश्यं भावी लाभो यतो धूमस्योपरि निपतितोऽत्र रासभः। तत्र चैवं पठ्यते।

स्थानं लाभं च कुरुते रासभो ध्वजधूमयोः।
सिंहस्योपरि नाशं भोः शेषेषु तु स मध्यमः॥

तस्य तु कालतोऽद्यैव लाभो भविष्यति। यतोऽत्र तृतीयो निपतितो ध्वांक्षः। तत्र चेदमुक्तं।

ध्वजकुञ्जरयोर्वर्षं मासो वृषभसिंहयोः।
पक्षः श्वखरयोर्ज्ञेयो धूमवायसयोर्दिनम्॥

ततः संजातप्रत्यया चिन्तानिर्वाटनेन हृष्टा प्रत्यासन्नेष्टजामातृलाभेन निपतिता मच्चरणयोः शिखरिणी। प्राह च। भगवति महाप्रसादः। सत्यमिदं यदादिष्टं भगवत्या। कथितं हि मे वत्साया मयूरमञ्जर्याः प्रियसख्या लीलावत्या। यथा दृष्टोऽनया

सूर्योदयसमये मित्रवृन्दपरिकरितो लीलासुन्दरमुद्यानं प्रति प्रवृत्तो हरिकुमारः। चिरं च विलोकितो लोललोचनया वत्सया। न च कथंचिद्दृष्टिगोचरमागता तस्य वत्सा मयूरमञ्जरी। ततस्तदभिलाषेण दुर्भगताशङ्कया चात्मनस्तत एव क्षणादारभ्येयमीदृशीमवस्थां प्राप्तेति। तदिदं ज्ञानालोकेन यथावलोकितं भगवत्या तथा भगवत्येव करोतु तेन सह वत्सायाः समागममिति। मयोक्तं। यद्येवं ततो निरूपयामि तस्य कुमारस्य कीदृशोऽभिप्राय इति। महादेवी प्राह। यत्त्वं जानीषे किमत्र वयं ब्रूम इति। ततो निवर्त्य लिखिता मया तथा चित्रपट्टिकायां मयूरमञ्जरी। गता लीलासुन्दरोद्याने। दृष्टो हरिकुमारः। समर्पिता चित्रपट्टिका। निरूपितोऽस्य भावः। लक्षितोऽयं साभिलाषः। ततः सिद्धं नः समीहितं पृच्छामि यदतः परं कर्तव्यं महादेवीमिति चिन्तयन्ती शीघ्रं ततोऽपक्रान्ताहं। निवेदितं महादेव्यै। यथा मुष्टिमध्ये मम वर्तते हरिकुमारः। तत्कथय किमधुना क्रियतामिति। तदाकर्ण्य हृष्टा शिखरिणी दुहितरं प्रत्याह। वत्से मयूरमञ्जरि समाकर्णितं त्वयेदं भगवतीवचनं यस्तवासौ हृदयवल्लभ इति। मयूरमञ्जरी प्राह। आः मातः किमित्येवमालजालेन मां विप्रतारयसि। ततो नास्याः संप्रत्यय इति किं कालक्षेपेणेति कथितो महाराजाय शिखरिण्या समस्तोऽपि व्यतिकरः। ततोऽभिहितो नीलकण्ठाय मयूरमञ्जर्या वरो हरिकुमारः। ततस्तदानयनार्थमहमेव प्रहिता ताभ्यामिति। तदेष भद्र चित्रपट्टिकावृत्तान्तः। एषा सा कन्यका। एतदर्थं चाहमुच्चलितास्मि॥ मयोक्तं।

भगवति किं पुनरिदं करे तव दृश्यते। बन्धुलयोक्तं। भद्र मयू-रमञ्जरीखहस्तलिखितं चित्रमिदं। मयोक्तं। किमर्थमिदं गृहीतं भगवत्या। बन्धुलयोक्तं। मा भूत्कुमारस्य मदीयवचनादसंप्रत्ययः। अतस्तस्याः स्वभावसूचकमेतत्। मयोक्तं। चारु विहितं भगवत्या। दत्ता कुमारस्य प्राणाः। ततो मया सहिता गता सा हरिकुमा-रसमीपं। निवेदितं राजशासनं बन्धुलया। कथितो मयापि तन्निवेदितः समस्तोऽपि वृत्तान्तः। न च श्रद्धत्ते हरिकुमारः। ततः समर्पितो बन्धुलयासौ द्विपुटसंवर्तितश्चित्रपटः। प्रविघाट्य निरूपितो हरिकुमारेण। यावद्दृष्टमालिखितमेकपुटे सुविभक्तो-ज्ज्वलेन वर्णक्रमेण अलक्ष्यमाणैस्तूलिकापदकैरनुरूपया सूक्ष्मरेखया प्रकटदर्शनेन निम्नोन्नतविभागेन समुचितेन भूषणकलापेन सुवि-भक्तावयवरचनयातिविलक्षणया बिन्दुवर्तिन्या अभिनवस्नेहरसोत्सु-कतया परस्परं हर्षोत्फुल्लबद्धदृष्टिकं समारूढप्रेमातिबन्धुरैकतयाल-क्षितचित्तनिवेशं विद्याधरमिथुनकमिति। दृष्टं च तस्याधस्तालि-खितमिदं द्विपदीखण्डं। तद्यथा।

> प्रियतमरतिविनोदसंभाषणरभसविलासलालिताः।
> सततमहो भवन्ति ननु धन्यतमा जगतीह योषितः॥
> अभिमतवदनकमलरसपायनलालितलोललोचनाः।
> सुचरितफलमनर्घ्यमनुभवति शमियमम्बरचरी यथा॥

ततो निरीक्षितं राजतनयेन द्वितीयं चित्रपटपुटं। यावत्तत्र दृष्टा दवप्लोषितेव वनलतिका हिमदग्धेव नलिनिका दिनकरकर-निकरमुषितप्रभेव चन्द्रलेखिका उत्खोटितस्रग्गेव चूतमञ्जरिका

प्रणयिवर्गः संवर्गितो राजलोकः तोषिताः प्रकृतयः कृतमुचित-करणीयं । वृत्तो विवाहानन्द इति ।

अथ तां नीलकण्ठस्य जीवितादपि वल्लभाम् ।
मयूरमञ्जरीं प्राप्य भार्यां सर्वाङ्गसुन्दराम् ॥
स हरिर्मित्रवृन्देन परिवारितविग्रहः ।
लभमानः परां ख्यातिं रत्नद्वीपे तदा गतः ॥
असूनोर्नीलकण्ठस्य परिवारः सबान्धवः ।
तत्रानुरक्तः संपन्नो हरौ भूरिगुणोत्करे ॥
अन्तःपुरं पुरं लोकाः सदेशं राजमण्डलम् ।
नाम्ना हरिकुमारस्य जायते तोषनिर्भरम् ॥

इतश्च ।

ममागृहीतसङ्केते स हरिः स्नेहनिर्भरः ।
वियोगं क्षणमप्येकं नेच्छत्येव तदात्मना ॥
मम पुण्योदयेनासौ जनितस्तेन मीलकः ।
सद्भावस्नेहसारेण वयस्येन महात्मना ॥

तथाहि । तेन सह तिष्ठतो मे निरुपमं विषयसुखं देवदुर्लभा विलासा विशिष्टजनस्पृहणीया गोष्ठी वर्धते प्रज्ञातिशयः समुल्लसति लोके यशःपटहः संपद्यते गौरवं ।

तथापि प्रेर्यमाणस्य सागरेण क्षणे क्षणे ।
मम जातास्तदा भद्रे विकल्पा मनसीदृशाः ॥

यदुतार्थोपार्जनक्षतिहेतुरेष मम हरिकुमारसम्बन्धः । न सुन्दरो मे ग्रहगोचरः । अनर्थः पर्युपस्थितोऽयं । कृतोऽहमात्मनो

निर्मूल्यकर्मकरोऽनेन हरिणा । न विठपितास्ते मयेहापि प्राप्ते-
नाभीष्टा रत्नसञ्चयाः । तदिदमापतितं यद्गीयते लोके ।
यदुत ।

> रासभः किल संप्राप्तः स्वर्गं सर्वसुखाकरे ।
> यावत्तत्रापि संप्राप्तो रजको दामहस्तकः ॥

तथाहि ।

> निर्विघ्नः किल लास्यामि रत्नसङ्घातमुच्चकैः ।
> यावदत्रापि संजातो विघ्नोऽयं मित्ररूपकः ॥

न चैषोऽधुना सर्वथा परिहर्तुं शक्यो यतो राजपुत्रोऽयं प्रच-
ण्डश्च दुष्टः सर्वस्वमपहरति । तस्मात्

> क्वचिदत्यन्तदूरेण क्वचिदासन्नवर्तिना ।
> क्वचित्सामान्यरूपेण वर्तितव्यं मया सदा ॥
> रत्नोपार्जनतन्निष्ठः स्वार्थक्षतिविवर्जकः ।
> हरेरपि क्वचिद्गत्वा करिष्ये चित्तरञ्जनम् ॥

ततः कृतं मया यथा चिन्तितं । मीलितो रत्नराशिः । तत्र
च मूर्छितः करोमि विवेकिलोकहास्या नानारूपा विडम्बनाः ।

> तथाहि तानि रत्नानि मूर्छाविक्लवचेतनः ।
> क्वचिद्विस्फारिताक्षोऽहं संपश्यामि पुनः पुनः ॥
> क्वचित्स्पृशामि हस्तेन मुहुरुच्छालयामि च ।
> क्वचिद्वक्षःस्थले दत्त्वा हृष्टतुष्टो भवामि च ॥
> निखनामि क्वचिद्गर्तं कृत्वा चिह्नशतानि च ।
> दृष्टः केनचिदित्येवमुत्खनामि पुनः क्षणात् ॥

निखाय पुनरन्यत्र लाञ्छितप्रतिलाञ्छितम्।
कृत्वा निरीक्षमाणस्तं निधिं तिष्ठामि सर्वतः॥
अविश्वासान्न मे रात्रौ निद्रा नापि दिवा सुखम्।
धने मूर्छितचित्तस्य भद्रे सागरदोषतः॥
ततोऽन्तरान्तरा गत्वा क्वचित्पश्यामि तं हरिम्।
तिष्ठामि सततं गेहे रत्नोपार्जनलोलुपः॥
चिन्तयामि च रत्नानि द्वीपे यान्यत्र कानिचित्।
यद्यहं तानि सर्वाणि गृहीत्वा यामि पत्तनम्॥
एवं च तिष्ठतस्तत्र रत्नद्वीपे तदा मम।
भद्रे योऽन्योऽपि संपन्नो वृत्तान्तस्तं निशामय॥
या कर्मपरिणामस्य महादेवी पुरोदिता।
सा कालपरिणत्याख्या प्रसिद्धा भुवनत्रये॥
तस्या अनुचरौ लोके ख्यातौ यौवनमैथुनौ।
अत्यन्तरसिकौ भद्रे कचिदेवं प्रजल्पितौ॥

यौवनेनोक्तं।

मित्र संसारिजीवोऽसौ संप्राप्तो वशवर्तिताम्।
धनशेखररूपेण वर्तमानो ममाधुना॥
अतोऽस्ति तत्समीपे भो भवतोऽपि न संशयः।
प्रस्तावो गन्तुमित्येवं संस्थिते गम्यतामिति॥

मैथुनेनोक्तं।

यद्येवं दर्शयैनं मे कुत्रचिद्धनशेखरम्।
सम्बन्धं च ममानेन मित्र योजय साम्प्रतम्॥

यौवनेनोक्तं।

गतोऽहं पूर्वमेवास्य समीपं सेवितो मया।
ततो बाढं नयामि त्वां सम्बन्धं लगयामि च॥
एवं तौ कृतसम्भाषावन्तरङ्गवयस्यकौ।
अथ तत्र समभ्यर्णं प्राप्तौ यौवनमैथुनौ॥

यौवनेनोक्तं।

अयं मया समानीतो वयस्योऽत्यन्तवत्सलः।
अतो मामिव सर्वत्र पश्येमं धनशेखर॥
अत्यन्तसुखहेतुस्ते वयस्योऽयं मया युतः।
यद्वा नियुक्तवत्सा गौर्नैवं श्लाघनमर्हति॥
स चानन्तमहादुःखगर्तसम्पातकारणम्।
तथापि च मया भद्रे मोहदोषान्न लक्षितः॥
न स्थितः सागरं हत्वा वयस्यं मे विधिस्तदा।
मैथुनं चाकरोदेष तदिदं लोकजल्पितम्॥

यथा।

महाभारसमाक्रान्तमूर्तेरारटिकारिणः।
यत्पृष्ठे माति नोष्ट्रस्य गलके तन्निबध्यते॥
ततो यौवनवाक्येन मोहविह्वलचेतसा।
प्रतिपन्नौ मया भद्रे तौ हि मैत्ताग्गरात्मना॥

इतश्च।

समान्तरङ्गप्रासादो विद्यते स्वागतनामकः।
अथ तस्य कृतः स्वामी स तदा मैथुनो मया॥

तथा।

तस्यैव प्रतिबद्धोऽस्ति द्वितीयो गात्रनामकः।
प्रासादः स्थापितस्तत्र स मया यौवनस्तदा॥
अथ तौ निजवीर्येण ततः प्रासादयोस्तयोः।
ललमानौ मया सार्धं किं किं कर्तुं समुद्यतौ॥
यौवनेन कृता भद्रे बलान्मेऽतिमनोहराः।
लीलाविलासविब्बोकहास्यशौर्यादयो गुणाः॥
मैथुनेन पुनर्भद्रे कृतोऽहं योषितां शतैः।
सुभुक्तैरप्यतृप्तात्मा दावानल इवेन्धनैः॥
प्रधानगणिकासक्तं कुर्वाणं मैथुनेच्छया।
मागधो वारयत्युच्चैः सागरो धनलम्पटः॥
इतो हि मैथुनस्याज्ञा इतः सागरवारणम्।
स व्याघ्रदुस्तटीन्यायः संजातो मे सुदुस्तरः॥
तथातिवल्लभो भद्रे सागरो मे विशेषतः।
केवलं मैथुनस्याज्ञां नाहं लङ्घयितुं क्षमः॥
उभयस्यापि कर्तव्यं मयेति वचनं किल।
एवं संचिन्त्य विहितं मयेदं कर्म दारुणम्॥

किं च तत्कर्म।

याः काश्चिद्बालविधवा रण्डाः प्रोषितभर्तृकाः।
प्रतिन्योऽन्याश्च मूल्येन विनैव वशगाः स्त्रियः॥
तासु सागरभीतोऽहं मैथुनाज्ञाविपाककः।
कार्याकार्यमनालोच्य प्रवृत्तो मूढचेतनः॥

ततोऽहं त्यक्तमर्यादो गाढं निर्लज्जतां गतः ।
अन्त्यजास्वप्यलप्तात्मा प्रवृत्तो मैथुनेच्छया ॥

ततश्च ।

बहुशस्ताडितो भद्रे बद्धो गाढं विगोपितः ।
प्रापितो लाघवं लोके योषित्सम्बन्धिभिर्नरैः ॥
केवलं हरिदाक्षिण्यात्पुण्योदयबलेन च ।
न मारितस्तदा स्त्रीणां स्वजनैर्नापि दण्डितः ॥
धिक्कारविहितो लोके निन्द्यः सर्वविवेकिनाम् ।
तदा मैथुनदोषेण संजातोऽहं सुलोचने ॥
तथापि मूढचित्तस्य तदा भद्रे स मैथुनः ।
सुखसागरहेतुर्मे निर्व्याजं प्रतिभासते ॥
चिन्तयामि च यस्यायं मैथुनो न वयस्यकः ।
किं तेन जीवितेनेह जीवन्नेव मृतो ह्यसौ ॥
ततोऽहं तत्र निर्मिथ्यप्रेमनिर्भरमानसः ।
तस्य दोषान्न पश्यामि पश्यामि गुणसंहतिम् ॥
एवं विपर्यस्तधियः स मे वल्लभतां गतः ।
ततोऽपि वल्लभतरः सागरो मे विशेषतः ॥

चिन्तितं च तदा मया ।

प्रभावः सागरस्यायं यदेते देवदुर्लभाः ।
अक्लिष्टेन संप्राप्ता मया गणिकयाश्रयः ॥
तदेवं मित्रयुग्मेन तेन दुःखैः प्रपीडितः ।
तथापि सुहितंमन्यो मोहादस्मि सितोऽनघे ॥

अथ तं नीलकण्ठस्य राज्यमन्तःपुरं पुरम्।
अनुरक्तं हरौ सर्वं स्नेहनिर्भरमानसम्॥
ततः कोशेन दण्डेन हरिर्वृद्धिमुपागतः।
जनानुरागप्रभवाः सुप्रसिद्धा हि सम्पदः॥
अथासौ राजलोकेन वेष्टितो वरकुञ्जरम्।
आरूढो मित्रवृन्देन वृतो लोकविलोकितः॥
उद्दण्डपुण्डरीकेण ध्रियमाणेन शक्रवत्।
मयूरमञ्जरीयुक्तो विचचार पुरेऽखिले॥

ततश्च।

जनानुरागमतुलं हरौ वीक्ष्य दुराशया।
संजातं नीलकण्ठस्य चित्तं कालुष्यदूषितम्॥
चिन्तितं च ततस्तेन वृद्धोऽहं पुत्रवर्जितः।
अनुरक्तं हरौ सर्वं मम तन्त्रं सबान्धवम्॥

एवं च व्यवस्थिते।

बलादुत्तोल्य मामेष वर्धमानो महाबलः।
हरिर्हरिष्यते सर्वं मम राज्यं न संशयः॥
तस्मान्नोपेक्षणीयोऽयं गीतं नीतिविशारदैः।
अर्धराज्यहरं भृत्यं यो न हन्यात्स हन्यते॥
अतः सुबुद्धिना सार्धं पर्यालोच्य सुमन्त्रिणा।
हरिं निपातयामीति चित्ते तेनावधारितम्॥
अथाहूय रहस्ये तं सुबुद्धिवरमन्त्रिणम्।
स नीलकण्ठराजेन्द्रः स्वाभिप्रायं न्यवेदयत्॥

स च तादृशवाक्येन वज्राहत इवान्तरा ।
तथापि नीलकण्ठस्य कृतवाननुवर्तनम् ॥

उक्तं च तेन सुबुद्धिमन्त्रिणा । यदुत ।

एवं विधीयतां देव यत्ते मनसि रोचते ।
अयुक्ते न प्रवर्तन्ते बुद्धयो हि महात्मनाम् ॥

ततश्च ।

स सुबुद्धिर्नरेन्द्रश्च कर्तव्यं हरिमारणम् ।
एवं संस्थाप्य सिद्धान्तं स्वं स्वं गेहमुपागतौ ॥
अथावदातसद्बुद्धेः सुबुद्धेर्मनसीदृशाः ।
तदा विकल्पाः संजातास्तच्छ्रुत्वा राजजल्पितम् ॥
धिग् धिग् भोगसुखासङ्गं धिगज्ञानविजृम्भितम् ।
धिगहो राज्यलाम्पट्यं कुविकल्पशतालयम् ॥
यदेष पूर्वं देवस्य जीवितादपि वल्लभः ।
जामाता भागिनेयश्च हरिः सर्वगुणाकरः ॥
अधुना वर्तते देव्यो वध्यः शत्रोः समर्गलः ।
तदत्र भोगतृष्णान्ध्यं विगुणत्वस्य कारणम् ।

तथाहि ।

कथं विनीतः शुद्धात्मा निर्लोभः पापभीरुकः ।
स हरिः स्वप्नकालेऽपि हरेद्देवस्य शासनम् ॥
तदयं राज्यमोहेन मूढो राजा न संशयः ।
तथापि रक्षणीयोऽसौ रक्षणीयो मया हरिः ॥

ततो दमनको नाम खचेटस्तेन मन्त्रिणा ।
प्रच्छन्नं प्रहितस्तूर्णं हरेर्वृत्तान्तसूचकः ॥
संदिष्टं च यथा शीघ्रं कुमार कुलभूषण ।
त्वया ममानुरोधेन देशः संत्यज्यतामयम् ॥
ततो दमनकाच्छ्रुत्वा सुबुध्यभ्यर्थनां हरिः ।
समुद्रलङ्घने चित्तमभीतोऽपि चकार सः ॥
अथैकान्ते ममानेन वृत्तान्तो निखिलस्तदा ।
कथितो हरिणा भद्रे गाढं विश्रब्धचेतसा ॥

उक्तं च हरिणा ।

अकार्यकुपितो राजा समादिष्टं च मन्त्रिणा ।
अतः समुद्रमुल्लंघ्य गन्तव्यं भारते मया ॥
न चाहं क्षणमप्येकं शक्नोमि रहितस्त्वया ।
स्थातुं ततः प्रतिष्ठस्व गच्छामो धनशेखर ॥

मया चिन्तितं ।

रत्नोपार्जनविघ्नो हि सर्वथायं हरिर्मम ।
तथापि का गतिर्नूनं गन्तव्यममुना सह ॥

ततो मयोक्तं । कुमार यत्ते रोचते किमत्र वयं ब्रूमः । हरिराह । यद्येवं ततो वयस्य निरूपय किंचिच्छिद्रं यानपात्रं । यतोऽस्ति मे भाण्डागारे महत्तमो रत्नराशिस्तं गृहीत्वा गच्छाम इति । मयोक्तं । यदादिशति कुमारः । ततो निरूपिते द्वे यानपात्रे । एतमेकं हरिरत्नानामपरमात्मरत्नानामिति । ततः संजातः प्रदोषसमयः । गतो वञ्चयित्वा निःशेषं परिजनं वसुमतीमयूरम-

शरीरसहितो जलधितीरं हरिकुमारोऽहं च। निरूपिताः सांयात्रिकपुरुषाः। अतिलङ्घिता स्तोकवेला। समुद्गतः कामिनीगण्डपाण्डुरः शशधरः। समागता संक्षोभितजलचरनिनादगर्भा समुद्रवेला। समारूढो यानपात्रमात्मीयं सपत्नीको हरिकुमारः। अहं तु स्वकीयं यानपात्रमारुरुक्षुरुक्तो हरिणा। यथा धनशेखर त्वमप्यत्रैव मदीयपोते समारुह। न शक्नोम्यहं भवन्तं विहाय निमेषमप्यासितुं। ततः समारूढोऽहमपि तत्समीपे। कृतानि मङ्गलानि। उपयुक्तः कर्णधारः। आपूरिते यानपात्रे प्रवृत्ते पवनवेगेन। तथा वहतां च गतानि कतिचिद्दिनानि। लङ्घितो बंहीयान् समुद्रः। अत्रान्तरे

> ममाग्रहीतसङ्केते भद्रे पापवयस्यकौ।
> सागरो मैथुनश्चोच्चैः प्रेरकौ समुपस्थितौ॥

ततश्च।

> सागरेण कृता बुद्धिर्ममैषा पापकर्मणा।
> यथेदं रत्नसंपूर्णं बोहित्थं कस्य मुच्यते॥

ततो मया चिन्तितं। अहो मे भाग्यातिशयः। तथाहि।

> एकं तावन्ममात्मीयं बोहित्थं रत्नपूरितम्।
> द्वितीयमिदमायातं संपूर्णा मे मनोरथाः॥
> विहिता मैथुनेनापि मम बुद्धिर्दुरात्मना।
> तदेदृशी महापापपूरपूरितचेतसः॥
> मयूरमञ्जरी यावन्न भुक्तेयं वरानना।
> पृथुस्तनी विशालाक्षी क्षाममध्यातिकोमला॥

इहमितम्भविम्बेन मन्दसञ्चारमन्थरा।
लावण्यामृतपूर्णाङ्गी सर्वथा भुवनातिगा॥
तावत्किं जीवितेनेह निष्फलेन प्रयोजनम्।
अतोऽहं मानयाम्येनां सर्वथा चारुलोचनाम्॥
तदिदं रत्नवोचित्यमेषा च हरिणेक्षणा।
न मे संपद्यते तावद्यावन्नो घातितो हरिः॥
ततः पातकपूर्णेन मित्रद्वयवशात्तदा।
हरिं व्यापादयामीति मया चित्तेऽवधारितम्॥
नालोचितं हरेश्चित्तं निर्व्याजस्नेहनिर्भरम्।
न विज्ञातं महापापं न दृष्टं कुलदूषणम्॥
लङ्घिता च परा मैत्री विस्मृता साधुकारिता।
उपचाराः परिभ्रष्टा निर्नष्टं सत्यपौरुषम्॥
अथ बोहित्यपर्यन्ते रात्रावुत्थाय संस्थितः।
हरिः शरीरचिन्तार्थं पापेन प्रेरितो मया॥
ततो मां वीक्षमाणोऽसौ किमेतदिति चिन्तया।
व्याकुलो विषमस्थलाद्द्राङ्कृत्य पतितो जले॥
द्राङ्कारादुत्थिता लोकाः कोलाहलपरायणाः।
मयूरमञ्जरी त्रस्ता स्थितोऽहं शून्यमानसः॥
अथ तत्तादृशं वीक्ष्य नृशंसं कर्म मामकम्।
समुद्राधिपतिर्देवो गतः कोपं ममोपरि॥
तुष्टो हरिकुमारस्य कुन्देन्दुविशदैर्गुणैः।
स कृत्वा भीषणं रूपमायातो घोरमानसः॥

तेन चासौ चणादेव देवेन विहितादरम् ।
उत्पाद्य जलधेर्नीराद्गोहित्ये स्थापितो हरिः ॥

इतश्च

योऽभूत्पुण्योदयो नाम वयस्योऽत्यन्तवत्सलः ।
अत्रान्तरे स नष्टो मे दुष्टवद्दुष्टकर्मणा ॥
अथाकाशे लसद्दीप्तिविद्योतितदिगन्तरः ।
स देवो भीषणं रूपमास्थाय मम सम्मुखम् ॥
ततो रे रे महापाप दुर्बुद्धे कुलदूषण ।
निर्लज्ज त्यक्तमर्याद हीनसत्त्व नराधम ॥
विधायापीदृशं कर्म घोरं रौद्रेण चेतसा ।
तथापि न त्वमद्यापि शतशर्करतां गतः ॥
एवं ब्रुवाणो दष्टौष्ठो भीमभ्रुकुटिदारुणः ।
स देवः कम्पमानं मां गृहीत्वा गगने स्थितः ॥
ततो हरिकुमारस्तं देवं प्रणतमस्तकः ।
इत्थं विज्ञापयत्युच्चैर्मयि स्नेहपरायणः ॥

यथा ।

ममोपरि दया देव यद्यस्ति तव मानसे ।
ततः पादनतस्यायं वयस्यो मुच्यतां मम ॥
आकृष्टोऽहं त्वया देव शतान्तवदनादिव ।
अतः प्रियवयस्यं मे न देवो हन्तुमर्हति ॥
रहितस्य ममानेन निष्फलं मत जीवितम् ।
धनं सुखं शरीरं च देव तन्मुच्यतामयम् ॥

विज्ञातेऽपि महाभागो मदीये खलचेष्टिते ।
तथापीदृचचित्तोऽसौ निर्विकारा हि साधवः ॥
स तु देवो महाकोपादाकर्ण्य हरियाचनाम् ।
मयि गाढतरं रुष्टस्तं प्रतीदमभाषत ॥
मुग्धोऽसि त्वं महाभाग गच्छाभिमतपत्तनम् ।
अहमस्यानुरूपं तु करोम्येष दुरात्मनः ॥
ततस्तेनोल्ललमानेन तत्रागाधे महोदधौ ।
आस्फोटितस्तथा भद्रे यथावनितलं गतः ॥
ततस्तमोऽन्धपाताले नरकेष्विव नारकः ।
स्थिताहं पुनरुद्भूतो भद्रे पापेन कर्मणा ॥
स तु देवो मृतं मत्वा मां स्वस्थानमुपागतः ।
वेलाकूले च संप्राप्तं हरेः पोतद्वयं क्रमात् ॥
इतश्चानन्दनगरे स केसरिनराधिपः ।
मृतो हरिकुमारेण विज्ञातो जनवार्तया ॥
ततो हरिकुमारेण शीघ्रं गत्वा सबान्धवम् ।
भद्रे तत्पैतृकं राज्यं क्लेशहीनमधिष्ठितम् ॥

यतो निवेदितो वसुमत्या समस्तोऽपि बान्धवानां कमलसुन्दरीवृत्तान्तः स्थापितः केशरिराजपुत्रतया हरिकुमारः ततोऽनुरक्ताः सर्वेऽपि हरिकुमारे लोकाः परिणतं राज्यं । संजातो भूरिमण्डलाधिपतिर्निजपुण्यप्राग्भारेण । समर्पितं च मदीयपितुर्हरिशेखरस्य तन्नामकं रत्नबोहित्थं हरिकुमारेणेति ॥

अतश्चाहं तथा पातालतलादुन्मग्नस्ततः प्रेर्यमाणः शैलकू-

टविकटैः चारजलकल्लोलैरास्फोट्यमानो गुरुमत्स्यपुच्छच्छटाघातैर्बध्यमानस्तनुकतन्तुजन्तुसन्तानैर्विलोलमानो धवलशङ्खकुलावलीमण्डले विमुह्यमानो घनविद्रुमवनगहनेषु जनितभयो विविधमकरजलमानुषविषधरनक्रचक्रैरुल्लिख्यमानः कठिनकमठपृष्ठकण्टकैः कथंचित्कण्ठगतप्राणः सप्तरात्रेण संप्राप्तो जलधितीरं । आश्वासितः पवनेन । लब्धा चेतना । ततो बाधते मां बुभुक्षा अभिभवति पिपासा । ततोऽहं फलजलार्थी पर्यटितुं प्रवृत्तो यावत्

पुण्योदयस्य नष्टत्वाद्भ्रमताच मया वनम् ।
प्राप्तं पुष्पफलैः शून्यं मरुभूमेः समप्रभम् ॥

तथापि तत्र वने

अद्यापि करणीयं मे यतोऽस्ति बहुपातकम् ।
ततः कृच्छ्रेण संपन्ना प्राणवृत्तिः कथंचन ॥
अथ ग्रामपुराकीर्णं वसन्तं देशमागतः ।
न च शून्याभिमानेन पितुः पार्श्वमहं गतः ॥

किं तु

नष्टपुण्योदयस्ताभ्यां भिक्षाभ्यां परिवारितः ।
भ्रान्तो विविधदेशेषु भूयो भूयो धनेच्छया ॥

तत्र च

यद्याचरामि वाणिज्यं रूपेणार्धं प्रजायते ।
करोमि कर्षणं तत्र वृष्टिर्दग्धेऽपि नश्यति ॥
ततः सेवां करोम्युच्चैर्विनयोद्यतमानसः ।
यावन्मम विना कार्यं स राजा रोषमागतः ॥

तोषार्थं स्वामिनो भीमे रणे योद्धुमुपागतः ।
तत्रापि तीक्ष्णशस्त्रौघप्रहारैः पीडितः परम् ॥
अथान्यदा बलीवर्दवाहनं विहितं मया ।
यावत्तिलकरोगेण मृताः सर्वेऽपि ते वृषाः ॥
अथ रासभसार्थेन वाणिज्यं कर्तुमुद्यतः ।
यावच्चौरैः पतित्वासौ सर्वः सार्थो विलोपितः ॥
ततः कुटुम्बिनो गेहे जातोऽहं कर्मकारकः ।
स चोल्लामपि मे वृत्तिं न ददाति प्रकुप्यति ॥
ततो भूयः समुद्रेऽहं वणिजोऽन्यस्य सेवकः ।
भूत्वा प्रविष्टो बोहित्थं समारुह्य वरानने ॥
यावन्ममानुभावेन तदपि प्रलयं गतम् ।
यानपात्रं समुत्तीर्णः फलकेन कथंचन ॥
अथ रोधनमासाद्य द्वीपं संतुष्टमानसः ।
ततः खनितुमारब्धो यावद्धूलिः परं करे ॥
अथान्यच्च पुनर्गत्वा नरेन्द्रं प्राप्य कंचन ।
धातुवादः समारब्धो विधातुं धनकाम्यया ॥
पाषाणैर्मूलजालैश्च मृद्भिः पारदमर्दनैः ।
क्षपितोऽहं तदा भद्रे जातः क्षारः परं करे ॥
ततो द्यूतं मया चित्रं शिक्षितं धनकाम्यया ।
यावत्तत्रापि जित्वाहं बद्धो द्यूतकरैर्नरैः ॥
भ्रष्टः कथंचित्तेभ्योऽपि समासाद्य परं नरम् ।
गृहीतपुस्तको रात्रौ प्रविष्टो रसकूपिकाम् ॥

यावद्घोषणनादेन लाङ्गूलोल्लासकारिणा ।
चाभितो मृगनाथेन कथंचिन्न मृतस्तदा ॥

किं बहुना ।

यद्यत्कृतं मया कर्म तदानीं धनकाम्यया ।
तत्तत्पुण्योदयाभावाद्विपरीतमुपस्थितम् ॥
किं वापरं निगद्येत बुभुक्षाक्षामकुक्षिणा ।
भिक्षापि च न लब्धाहो मया पुण्योदयं विना ॥
ततो विषादमापन्नः सर्वकर्मपराङ्मुखः ।
स्थितोऽहं मौनमालम्ब्य कृत्वा पादप्रसारिकाम् ॥
ततः स सागरो भद्रे ममोत्साहविधित्सया ।
हितोपदेशदायीति तवाहमिति जल्पितः ॥

उक्तं च तेन सागरेण । यथा ।

न विषादपरैरर्थः प्राप्यते धनशेखर ।
अविषादः श्रियो मूलं यतो धीराः प्रचक्षते ॥

ततः सर्वथा विषादं विरहय्य प्रतिकूलेऽपि विधौ पुरुषः पुरुषकारेण धनमुपार्जयन्नेव पौरुषं लभते नान्यथा । किं बहुना । अलीकमपि गदित्वा परमपि मुषित्वा मित्रद्रोहमपि कृत्वा मातरमपि हत्वा पितरमपि व्यापाद्य सहोदरमपि निपात्य भगिनीमपि विनाश्य बन्धुवर्गमपि मारयित्वा समस्तपातकान्यपि विधाय पुरुषेण सर्वथा धनं स्वीकर्तव्यं । यतः कृतपातकोऽपि पुरुषो धनी धनमाहात्म्यादेव पूज्यते लोकेन परिवार्यते बन्धुवर्गेण श्लाघ्यते बन्दिवृन्देन बहुमन्यते विद्वज्जनेन गम्यते विशुद्धधार्मिकजनादपि

समर्गलतरो धार्मिक इति । ततो भो भो धनशेखर विमुञ्च विषादं अवलम्बस्व धैर्यं कुरु पुनर्धनार्जनोत्साहं पश्य मदीयवीर्यं विधेहि मामकमेनमुपदेशमिति ।

ततोऽहं तेन चार्वङ्गि सागरेण दुरात्मना ।
एवं विधाय दुर्बुद्धिं पातकेषु प्रवर्तितः ॥
कृतानि च मया तानि नानादेशविचारिणा ।
यानि यान्युपदिष्टानि तेन पापानि बन्धुना ॥
केवलं पापकर्माणि कुर्वतोऽप्यनिशं मम ।
न जातो धनगन्धोऽपि भद्रे पुण्योदयं विना ॥

अन्यच्च ।

पुण्योदयविनिर्मुक्तो मिथ्यामानेन सुन्दरि ।
न गतः श्वशुरस्यापि बकुलस्य गृहे तदा ॥

किं च ।

स यौवनवयस्येन युक्तो मैथुननामकः ।
मां तस्यामप्यवस्थायां प्रेरयन्नेव तिष्ठति ॥
केवलं तदवस्थं मां पुण्योदयविवर्जितम् ।
नारी निर्धनमेकापि काणाद्यापि न वीक्षते ॥
ततो दन्दह्यते चेतो गाढं मे मैथुनेच्छया ।
न च संपद्यतेऽभीष्टं किंचित्पुण्योदयं विना ॥
एवं विविधदेशेषु दुःखसङ्घातपीडितः ।
मैथुनेच्छापरीतोऽहं बम्भ्रमीमि धनाशया ॥
इतश्चानन्दनगरे तेन भूरिगुणाकरः ।

दृष्टो हरिनरेन्द्रेण सूरिरुत्तमनामकः ॥
सत्साधुसङ्घमध्यस्थमयोद्याने मनोरमे।
दृष्ट्वा तमुत्तमाचार्यं हरिस्तोषमुपागतः ॥
ततश्च।
सहितो राजवृन्देन तं मुनिं स नरेश्वरः।
वन्दित्वा सपरीवारं निषणः शुद्धभूतले ॥
ततो भगवता तेषाममृतास्वादनोपमा।
सर्वेषामेव जन्तूनां विहिता धर्मदेशना ॥
ततो भगवतो वाक्यमाकर्ण्य स महीपतिः।
अत्यन्तं रञ्जितश्चित्ते ततश्चेदमचिन्तयत् ॥
सूक्ष्मव्यवहितातीतभाविभावेषु भूरिषु।
नूनं भगवतो ज्ञानमस्य सर्वेषु विद्यते ॥
तदेनं प्रश्नयाम्यद्य सूरिं किं तत्र कारणम्।
येनाहं प्रेरितस्तेन वयस्येन जले तदा ॥
वल्लभोऽहं पुरा तस्य स च मे धनशेखरः।
किं पुनः क्षणमात्रेण तेन तादृग् विचेष्टितम् ॥
किं वा दृष्टः स देवोऽस्य कस्मादास्फोटितस्तथा।
किं जीवति मृतो वा मे वयस्यो धनशेखरः ॥
यावत्स चिन्तयत्येवं चेतसा हरिपार्थिवः।
तावद्विज्ञाय तत्सर्वं सूरिरित्यमवोचत ॥
यच्चिन्तितं त्वया भूप किं पुनस्तत्र कारणम्।
वत्सलेनापि मित्रेण यदहं प्रेरितो जले ॥

तच्चाकर्णय।

अन्तरङ्गौ हि विद्येते तस्य सागरमैथुनौ।
वयस्यौ स तयोर्दोषो नैव तस्य तपस्विनः॥
स हि चारुः स्वरूपेण भद्रको धनशेखरः।
ताभ्यां पापवयस्याभ्यां केवलं क्रियतेऽन्यथा॥

तथाहि। तस्य वराकस्य धनशेखरस्य

मयूरमञ्जरीं भुञ्जे मैथुनेन कृता मतिः।
हरामि रत्नवोहित्थं सागरेण कृतं मनः॥
ततस्तु तदधात्तेन प्रेरितस्त्वं तथा जले।
अत एव गतः कोपं समुद्राधिपतिस्तदा॥
तेन त्वं रचितो नीतः स पातालतलं तथा।
तथापि न मृतस्तीर्णः समुद्रं धनशेखरः॥
अधुनानेकदेशेषु नानारूपा विडम्बनाः।
ताभ्यां पापवयस्याभ्यां स वराको विधास्यते॥
एवं तेन चतुर्ज्ञानयुक्तेन वरसूरिणा।
निवेदिते तथा भद्रे मदीये दुष्टचेष्टिते॥
स हरिश्चिन्तयत्येवमहो ज्ञानं महामुनेः।
अहो निपतितः क्लेशे वराको धनशेखरः॥
ततो हरिनरेन्द्रेण करुणागतचेतसा।
पृष्टः स उत्तमाचार्यः प्रणम्येदं सुमेधसा॥

यथा।

स ताभ्यां पापमित्राभ्यां भदन्त धनशेखरः।

कदा पुनर्वियुज्येत येन स्यात्सुखभाजनम् ॥

सूरिरुवाच ।

अस्ति भोः सततानन्दं शुभ्रचित्तं महापुरम् ।
विद्यते भुवनानन्दस्तत्र राजा सदाश्रयः ॥
तस्य चास्ति महादेवी लोके ख्याता वरेण्यता ।
तस्या द्वे कन्यके धन्ये विद्येते चारुलोचने ॥
एका ब्रह्मरतिर्नाम द्वितीया मुक्ततोच्यते ।
तयोश्च गुणविस्तारं कोऽत्र वर्णयितुं क्षमः ॥

तथाहि ।

यं नरं चारुसर्वाङ्गी विलोकयति लीलया ।
लोके ब्रह्मरतिः साध्वी स पवित्रो निगद्यते ॥
सा हि सर्वगुणाधारा सा वन्द्या योगिनामपि ।
सानन्तवीर्यसन्दोहदायिनीति निगद्यते ॥
सा मैथुनाभिधानस्य धनशेखरवैरिणः ।
तिष्ठतो मित्ररूपेण केवलं नाशकारिणी ॥
मुक्तता हि महाराज निःशेषगुणमन्दिरम् ।
अशेषदोषसंशोषकारिणी च न संशयः ॥
विरोधोऽस्ति तया सार्धं स्वभावेनैव सर्वदा ।
धनशेखरमित्रस्य सागरस्यास्य पापिनः ॥
तां शुद्धधर्मसंपूर्णाङ्गीमेव सागरनामकः ।
पापात्मा कन्यकां दृष्ट्वा दूरतः प्रपलायते ॥

एवं च स्थिते ।

यदा ते कन्यके भार्ये लप्स्यते धनशेखरः।
तदाभ्यां पापमित्राभ्यां निःसन्देहं वियोच्यते ॥
ललमानस्ततस्ताभ्यां सार्धमेष खलीलया।
अनन्तानन्दसन्दोहभाजनं च भविष्यति ॥
ततो हरिनरेन्द्रेण भूयोऽपि स मुनिस्तदा।
पृष्टो ललाटविन्यस्तकरकुड्मलशालिना ॥

यथा।

गुणसन्दोहसंपूर्णे पापमित्रवियोजिके।
कथं ते लप्स्यते कन्ये भदन्त धनशेखरः ॥

सूरिणोक्तं।

अन्तरङ्गो महाराजः प्रतापाक्रान्तमण्डलः।
स कर्मपरिणामाख्यः प्रतीतो हि भवादृशाम् ॥
स तोषितो महादेव्या काले भाविनि जातुचित्।
तत्पित्रा तव मित्राय ते कन्ये दापयिष्यते ॥
ततो वयस्यस्ते भूयः प्राप्स्यते परमं सुखम्।
नान्यः कश्चिदुपायोऽस्ति विमुञ्चाकुलचित्तताम् ॥
तदाकर्ण्य मुनेर्वाक्यं मां प्रत्येष निराकुलः।
संजातो हरिराजेन्द्रः पुनरित्थमभाषत ॥

भदन्त यदुक्तं भगवता यथा तेन धनशेखरेण पापमैथुनसागरदोषात्तादृशं कर्माचरितं स्वरूपेण पुनर्भद्रकोऽसौ धनशेखर इति तत्र ममायमधुना वितर्को यथा किं स्वरूपेण निर्मलः परदोषेणापि दुष्टः पुरुषो भवति। सूरिणोक्तं। महाराज भवत्येव।

तथाहि । द्विविधोऽत्र लोको बहिरङ्गोऽन्तरङ्गश्च । तत्र बहिरङ्ग-लोकदोषाः पुरुषस्य लगन्ति वा न वा । अन्तरङ्गलोकदोषाः पुनर्लगन्त्येव ।

तत्रान्तरङ्गलोकानां दोषकारित्वसूचकम् ।
आकर्णय महाराज कथयिष्ये कथानकम् ॥

नृपतिराह । निवेदयतु भगवान् । सूरिणोक्तं । प्रतीतमेव तावदिदं भवादृशां यथा कर्मपरिणाममहाराजस्य कालपरिणतेश्च महादेव्याः सम्बन्धीन्यपत्यानि दुर्जनचक्षुर्दोषभयाद्विवेकादिभि-र्मन्त्रिभिर्भुवने गोपितानीति । इतश्चास्ति प्रवृद्धसत्यवादी समस्तस-त्त्वसङ्घातहितकारी सर्वभावस्वभाववेदी तयोः कालपरिणतिकर्म-परिणामयोर्देवीनृपयोः समस्तरहस्यस्थानेष्वत्यन्तभेदज्ञः सिद्धान्तो नाम परमपुरुषः । तस्य चाप्रबुद्धो नाम संपन्नो विनेयः । स च तं पप्रच्छ । भगवन्निह पुरुषस्य किमिष्टं किं वानिष्टमिति । सिद्धान्तः प्राह । भद्र सुखं पुरुषस्येष्टं दुःखं पुनरनिष्टमिति। सुखार्थं हि सर्वे पुरुषाः प्रवर्तन्ते दुःखात्तु सर्वे निवर्तन्त इति । अप्रबुद्धः प्राह । भदन्त किं पुनस्तस्य सुखस्य कारणं किं वा दुःखस्य । सिद्धान्ते-नोक्तं । राज्यं सुखस्य कारणं तदेव च दुःखस्य । अप्रबुद्धः प्राह । भदन्त एकमेव द्वयस्यापि कारणं ननु विरुद्धमिदं । सिद्धान्तेनोक्तं। नास्त्यत्र विरोधः । यतः सुपालितं तत्सुखस्य कारणं दुष्पालितं तदेव दुःखस्येति । अप्रबुद्धः प्राह । किं राज्यमेव सुखदुःखयोः कारणं नापरं किंचिदपि । सिद्धान्तः प्राह । बाढं राज्यमेव सुखदुःखयोः कारणं नापरं किंचिदपि । अप्रबुद्धेनोक्तं । ननु

प्रत्यक्षविरुद्धमिदं। यतः स्वल्पतराणामिह जीवानां राज्यमुपलभ्यते यावता सर्वेऽपि जीवाः सुखं दुःखं चानुभवन्तो दृश्यन्ते। सिद्धान्तेनोक्तं। भद्र न बहिरङ्गमिदं राज्यं यत्सुखदुःखयोः कारणं किं तर्ह्यन्तरङ्गं। तच्च सर्वेषां संसारोदरविवरवर्तिनां जीवानामस्त्येव। ततो ये जीवास्तत्सम्यक् पालयन्ति तेषां सुखं संपादयति। ये तु दुष्पालितं तद्राज्यं कुर्वन्ति तेषां दुःखं जनयति। ततो नास्ति प्रत्यक्षविरोधः। अप्रबुद्धः प्राह। भदन्त तत् किमेकरूपं राज्यं किं वानेकरूपं। सिद्धान्तेनोक्तं। सामान्येनैकरूपं विशेषेण पुनरनेकरूपं। अप्रबुद्धः प्राह। यद्येवं ततस्तच सामान्यराज्ये तावत्को राजा कः कोशः किं बलं कात्र भूमिः के देशाः का वा सामग्रीति श्रोतुमिच्छामि। सिद्धान्तेनोक्तं। भद्राकर्णय।

सर्वस्याधारभूतोऽस्य राज्यभारस्य सुन्दर।
एकः संसारिजीवोऽत्र महाराजो निगद्यते॥
कोशस्तत्र महाराज्ये भाविके रत्नराशिभिः।
परिपूर्णः शमध्यानज्ञानवीर्यादिभिः परैः॥
भुवनानन्दसन्दोहदायकं चात्र सुन्दरम्।
क्षीरनीरधिसङ्काशं चतुरङ्गं महाबलम्॥

तत्र च महासैन्ये गाम्भीर्यौदार्यशौर्यादयः स्यन्दनाः। यशःसौष्ठवसौजन्यप्रश्रयादयः करिवराः। बुद्धिपाटववाग्मित्वनैपुण्यादयस्तुरङ्गमाः। अचापलसौमनस्यमनस्वित्वदाक्षिण्यादयः पदातिवर्गाः। संसारिजीवमहाराजहितकारी चतुर्मुखश्चारित्रधर्मनामा प्रतिनायकः। तस्य च सम्यग्दर्शनो नाम महत्तमः सद्बोधो मन्त्री यति-

धर्मराद्दिधर्मौ सुतौ सन्तोषस्तन्त्रपालः शुभाशयाद्यो महाभटाः । अपि च ।

संसारिजीवराजेन सौराज्यं प्रकटीकृतम् ।
चतुरङ्गं महासैन्यं कस्तद्वर्णयितुं क्षमः ॥
अनन्तगुणसम्भारगौरवं तस्य सुन्दरम् ।
स एव विमलीभूतः केवलं यदि बुध्यते ॥
भूमिस्तत्र महाराज्ये चित्तवृत्तिर्महाटवी ।

सर्वाधारतया वर्तते । तस्यां निविष्टानि सात्त्विकचित्तजैनपुरविमलमानसशुभ्रचित्तादीनि नानारूपाणि नगराणि । तदनुकारिणो ग्रामाकरादयः । तदुपलक्षिता विविधरूपा देशाः । तस्यां च राज्यभुक्तिभूमौ विद्यन्ते घातिकर्मसंज्ञा भूयांसश्चरटाः सन्तीन्द्रियनामानस्तस्कराः परिभ्रमन्ति कषायरूपा लूषकाः विचरन्ति नोकषायाख्या लुण्टाकाः उपप्लवन्ते परीषहाङ्गाख्यारभटाः संभवन्त्युपसर्गाभिधाना दुष्टभुजङ्गाः विलसन्ति प्रमादनामकाः पिङ्गाः । तेषां च सर्वेषां द्वौ भ्रातरौ सर्वप्रधानौ कर्मपरिणामो महामोहश्च ।

एतौ चात्यन्तदर्पिष्ठौ सम्बद्धौ रणशालिनौ ।
चतुरङ्गबलोपेतौ भटकोटिभिरावृतौ ॥

ततश्चेमौ मन्येते । यदुत ।

कोऽयं संसारिजीवोऽत्र को वा चारित्रधर्मकः ।
आवयोर्भुक्तिभूरेषा चित्तवृत्तिर्महाटवी ॥
अस्मदीयमिदं राज्यं नास्त्यन्यः परिपन्थिकः ।

स कर्मपरिणामाख्यस्ततो राजा व्यवस्थितः ॥

निवेशितानि राजसचित्ततामसचित्तरौद्रचित्तपुरादीनि भिल्लपल्लिप्रायाणि नानाविधनगराणि । प्रस्थापितस्तेषु महामोहनरेन्द्रः । समर्पितं तस्य चतुरङ्गं बलं । व्यवस्थापिता समस्तराज्यनीतिः । न्यस्तः समस्तोऽपि महामोहे राज्यभारः । स्वयं पुनरसौ कर्मपरिणामः सह महादेव्या कालपरिणत्या मनुजगतौ संसाराभिधानं नाटकं पश्यन्नास्ते । केवलं स कर्मपरिणामो जानन्निव संसारिजीवमहाराजवीर्यमाकलयन्निव चारित्रधर्मप्रतिनायकसामर्थ्यं लक्षयन्निव सद्बोधमन्त्रिमन्त्रशक्तिं परिच्छिन्दन्निव सम्यग्दर्शनमहत्तमबलं निश्चिन्वन्निव सन्तोषतन्त्रपालव्यवसायं पश्यन्निव शुभाशयाद्यनेकभटकोटियुक्तचतुरङ्गबलोत्साहं नात्यन्तनिरपेक्षः संसारिजीवराज्ये ऽपेक्षते चायतिं कुरुते चारित्रधर्मादीनामनुवर्तनं दर्शयत्यात्मभावं वर्धयति प्रीतिं संपादयति कानिचित्सुन्दरप्रयोजनानि । [ततस्तैरपि चारित्रधर्मादिभिर्मध्यस्थोऽयमिति कृत्वा गृहीतोऽसौ कर्मपरिणामः स्वामिबुद्ध्या । जातः संसारिजीवमहाराजस्यापि प्रष्टव्यस्थाने] । महामोहः पुनर्निजभुजबलावलेपेन सांसारिजीवं चारित्रधर्मादिकं तावद्बलं न तृणतुल्यं मन्यते । ततो यावन्न जानीते संसारिजीवस्तदात्मीयं महाराज्यं न लक्षयति तच्चतुरङ्गं महाबलं न वेदयते तां महासमृद्धिं नो कलयत्यात्मनः परमेश्वरतां तावदसौ महामोहो लब्धावसरस्वरटवृन्दपरिकरितः समाक्रामति समस्तां तां राजभुक्तिं स्वीकरोति निःशेषनगरग्रामाकरादीन् विलसति यथेच्छया करोत्यकिंचित्करं संसारिजीवं निर्णाशयति

तद्बलं भवति स्वयमेव तत्र संसारिजीवमहाराज्ये प्रभुरिति । यदा तु कथंचित्संसारिजीवस्तदात्मीयं राज्यं बलं समृद्धिं स्वरूपं च लक्षयेत् तदा विग्रहाति तेन महामोहेन सार्धमुत्कर्षयति निजबलं वर्धयति स्वसमृद्धिं । विग्रहारूढश्च बहुशो महामोहं विजयते ऽनेकशो महामोहेनाप्यसौ विजीयते । यावन्मात्रं यदा विजयते तावन्मात्रं तदा सुखमाप्नोति । यावन्मात्रं यदा विजीयते तावन्मात्रं तदा दुःखमास्कन्दति ।

यदा तु वीर्यमाप्नोति सञ्ज्ञमाभ्याससयोगतः ।
भद्र संसारिजीवोऽसावचिन्त्यमतुलं किल ॥
तदा निःशेषमुन्मूल्य महामोहपुरःसरम् ।
शत्रुवर्गं समाप्नोति राज्यं निष्कण्टकं हि सः ॥
ततो विगतचित्तोऽसौ सततानन्दपूरितः ।
स्लाघमानः सुखेनास्ते साम्राज्यं प्राप्य सुन्दरम् ॥
तदेवं तस्य तद्राज्यं कारणं सुखदुःखयोः ।
पालनापालनाज्जातमेकमेव न संशयः ॥
सुखदुःखनिमित्तस्य सामान्यस्य तदीदृशी ।
तस्यान्तरङ्गराज्यस्य सामग्री भद्र कीर्तिता ॥

अप्रबुद्धेनोक्तं । भदन्त किमधुना तस्य संसारिजीवस्य सौराज्यं किं वा दौराज्यमिति । सिद्धान्तः प्राह । भद्रात्र प्रस्तावे तावत्तस्य दौराज्यं वर्तते । न जानीते वराकोऽद्यापि संसारिजीवस्तदात्मीयं राज्यं न बलं न समृद्धिं नापि स्वरूपमिति । स हि तपस्वी संसारिजीवो बहिरङ्गेषु देशेषु दुःखसागरावगाढो मैथुनसागरा-

भ्यामधुना भण्यते। तत्पुनस्तस्य सम्बन्धि चारित्रधर्मादिकं समस्तमपि महाबलं महामोहादिशत्रुभिर्निरुद्धमास्ते। अप्रबुद्धेनोक्तं। श्रुतं तावदिदं मया सामान्येनैकरूपं सुखदुःखकारणं तदन्तरङ्गराज्यं। अथ यदुक्तं भगवता यथा तदेव विशेषेणानेकरूपमिति तदधुना श्रोतुमिच्छामि। सिद्धान्तेनोक्तं। आकर्णय।

स कर्मपरिणामाख्यो यो मया वर्णितः पुरा।
स प्रमाणं कृतस्तेन राज्ञा सर्वेषु कर्मसु॥

ततश्च।

ददमेव महाराज्यं परिपूर्णं पृथक् पृथक्।
सर्वेभ्यो निजपुत्रेभ्यः स ददाति यथेच्छया॥
सूनवस्तस्य चानन्तास्तेभ्यस्तद्दत्तमुच्चकैः।
अनेकरूपतां याति राज्यं पात्रविशेषतः॥

ततस्तेषां भद्र कर्मपरिणाममहाराजपुत्राणामनन्तरूपाणां तद्राज्यं केषांचिद्दुःखकारणं केषांचित्सुखकारणमतो विशेषेणानेकरूपं भवति। अप्रबुद्धेनोक्तं। भदन्त तेषां कर्मपरिणामसुतानां तद्राज्यं कुर्वतां कस्य किं संपन्नमिति श्रोतुमिच्छामि। सिद्धान्तेनोक्तं। निवेदितमेव भद्राय यथानन्तास्ते कर्मपरिणामपुत्राः। ततः कियतां सम्बन्धि स्वरूपं भद्राय कथयिष्यते। तथापि यदि महत्कुतूहलं भद्रस्य ततोऽस्त्येको व्यापकः कथनोपायः। तेनैव कथयिष्ये। अप्रबुद्धेनोक्तं। अनुग्रहो मे। सिद्धान्तेनोक्तं। भद्र सन्ति तस्य कर्मपरिणामस्य षट् पुत्राः। तद्यथा। निकृष्टोऽधमो विमध्यमो मध्यम उत्तमो वरिष्ठश्चेति। तेभ्योऽहं कथंचिद्वचनवि-

न्यायेन कर्मपरिणाममहाराजमभ्यर्थ्यैकैकं संवत्सरं राज्यं दापयिष्यामि। ततो भवता तेषां षण्णामपि राज्यानां निरीक्षणार्थं प्रहितव्योऽन्तरङ्गो वितर्को नामायमात्मीयोऽनुचरः। ततस्तेषु षट्सु राज्येषु दृष्टेषु भवतः सर्वोऽप्ययमर्थः प्रतीतो भविष्यति। अप्रबुद्धेनोक्तं। यदाज्ञापयति भगवान्। ततोऽनुष्ठितं सिद्धान्तेन सर्वं यथोक्तं। प्रहितोऽप्रबुद्धेन निरीक्षणार्थं वितर्कः। समागतो लङ्घिते तन्मनुष्यजन्माभिधाने वर्षपट्के। दृष्टोऽप्रबुद्धः। विहिता प्रतिपत्तिः। अभिहितमनेन। देव अस्ति तावत्प्रविष्टोऽहं तत्रामन्तरङ्गराज्यभुक्तौ। श्रुतो मया नगरग्रामादिषु दीयमानस्तन्मनुष्यभावावेदनाभिधानो डिण्डिमकः। तत्र चेदमुद्घोषितं। यथा।

> निकृष्टो वर्तते राजा प्राक्प्रवाहेन हे जनाः।
> समाचरत कृत्यानि तथा पिबत खादत ॥
> ततस्तां घोषणां श्रुत्वा सर्वं तद्राजमण्डलम्।
> कीदृक् स्यादेष राजेति चिन्तया क्षोभमागतम् ॥
> आलोचयन्ति राजानः स्वस्थानेषु परस्परम्।
> मन्त्रयन्ति च विद्मो न इति भोः किं भविष्यति ॥
> संप्रसारं प्रकुर्वन्ति स्वगेहेषु कुटुम्बिनः।
> कीदृशोऽयं भवेद्राजा निकृष्ट इति चिन्तया ॥
> ते च सर्वेऽपि संभूय घरटा निशंसदि।
> महामोहादयो देव पर्यालोचमुपागताः ॥

ततो विषयाभिलाषमन्त्रिणा महामोहनरेन्द्रं प्रत्यभिहितं। यथा

किलैष राजा संजातो निकृष्टो यत्करिष्यति।
तन्न जानीम इत्येवं जाताश्चिन्तातुरा वयम्॥
तदेष देव संजातः क्षोभो नो निर्निमित्तकः।
वृथाऽलमाकुलीभूता वयमत्र प्रयोजने॥

यतः।

स कर्मपरिणामेन निकृष्टः स्वयमेव भोः।
जनितस्तादृशो यादृग् न क्षमोऽस्मत्प्रपीडने॥

किं तर्हि।

वशवर्ती सदास्माकमाज्ञानिर्देशकारकः।
अस्मत्पदातिवर्गेऽपि किङ्करः कर्मकारकः॥
तत्कर्मपरिणामेन चेत्तस्मै विनियोजितम्।
इदं राज्यं ततो देव वयमेवात्र नायकाः॥
लब्धे निष्कण्टके राज्ये तदेवं देव भावतः।
हर्षस्थाने किमस्माभिरातुरैर्वत भूयते॥
अथ प्राह महामोहो द्रुतमार्य निवेद्यताम्।
स कर्मपरिणामेन कीदृशो जनितः किल॥

विषयाभिलाषेणोक्तं। देवाकर्णय।

कुरूपो दुर्भगः क्रूरः परलोकपराङ्मुखः।
धर्मार्थकाममोक्षेभ्य दूरतः परिवर्जितः॥
गुरूणां निन्दकः पापो देवविद्वेषकारकः।
विशुद्धाध्यवसायस्य गन्धेनापि विनाकृतः॥
जगदुद्वेगहेतुश्च साक्षादिव विषाङ्कुरः।

निःशेषदोषसङ्घस्य स निकृष्टो निकेतनम् ॥
गाम्भीर्यौदार्यशौण्डीर्यधैर्यवीर्यादयो गुणाः ।
ततो निकृष्टात्सद्देव दूराद्दूरतरं गताः ॥
स ईदृशो महाराज्ये लब्धेऽप्यत्राधमाधमः ।
निःशेषशक्तिशून्यात्मा किमस्माकं करिष्यति ॥

अन्यच्च ।

न जानीते वराकोऽसौ राज्यं नापि निजं बलम् ।
न सम्यद्धिं न वा मूढः स्वरूपमपि तत्त्वतः ॥
न चास्मान् गणयत्येष चरटान् राज्यहारकान् ।
मन्यते बन्धुभूतांश्च स्वामिभूतांश्च भावतः ॥
तदेवं संस्थिते देव विहायाकुलतां हृदि ।
महावर्धनकं युक्तं विधातुं जनतुष्टये ॥
ततो यदादिशत्यार्य इत्युक्त्वा हर्षनिर्भरः ।
तदेव कारयत्युच्चैर्महामोहनराधिपः ॥
अथ तच्चरितं लोके निःशेषं सन्निभायितम् ।
ततो वर्धनके तुष्टास्तत्र नृत्यन्ति ते जनाः ॥
गायन्ति च महामोहराजपादानुजीविनः ।
ज्ञात्वा निकृष्टराज्यं तन्निर्भरानन्दपूरिताः ॥

कथं ।

येनेदमवाप्तमीदृशं राज्यमनन्तविभूतिपूरितं ।
सोऽस्माकमहो वशे स्थितो नृपतिः शेषजनं न बुध्यते ॥
तदिदं बत जातमुत्तमं सुखकरमद्य निकृष्टराज्यकम् ।

खादत पिबताथ गायत प्रसभं नृत्यत चारु हे जनाः ॥

एवं च तेषु भिल्लपल्लिप्रायेषु महामोहसम्बन्धिषु नगरग्रामाकरादिषु प्रवृत्तं लक्षावर्धनकं । कारिता हट्टशोभाः । समुच्छ्रायिता ध्वजपताकाः । ग्रभविष्याम इति समुल्लसिता घातिकर्मचरटाः । हरिष्याम इति परितुष्टा इन्द्रियतस्कराः । लूषयिष्याम इति प्रमोदिताः कषायलूषकाः । लुण्टयिष्याम इति हृष्टा नोकषायलुण्टाकाः । उपप्लावयिष्याम इति समानन्दिताः परीषहचारभटाः । विनाशयिष्याम इति विजृम्भिता उपसर्गदुष्टभुजङ्गाः । उपहसिष्याम इति तरलिताः प्रमादषिङ्गलोकाः । अपि च ।

येऽन्यदापि मदेनान्धा महामोहादयः सदा ।
निष्कण्टके राज्ये संजाते किं किं किं ते न कुर्वते ॥
तदिदं तावदाख्यातं महामोहादिचेष्टितम् ।
चारित्रधर्मसैन्येऽपि यज्जातं तन्निबोध मे ॥
तेऽपि चारित्रधर्माद्याः श्रुत्वा तां राज्यघोषणाम् ।
कीदृशः स्यादेष राजेति पर्यालोचमुपागताः ॥
सद्बोधमन्त्रिणा प्रोक्तं देव विज्ञातमेव ते ।
निःशेषस्यास्य यद्रूपमेकान्तेन दुरात्मनः ॥
अयं दुरात्मा राज्यस्य नामाप्यस्य न बुध्यते ।
न चास्मान् गणयत्येष शत्रुभूतांश्च मन्यते ॥
पक्षपातान्महामोहसाधनं वर्धयत्यलम् ।
स्वराज्यलोकदेशानां वार्तामपि न पृच्छति ॥

ततश्च ।

एकं तावत्पराभूता महामोहादिभिर्वयम् ।
द्वितीयमीदृशो राजा देवो दुर्बलघातकः ॥

एवं च स्थिते ।

निकृष्टराज्यं देवेदं यज्जातं दैवदोषतः ।
अहो प्रलयकालोऽयं जातोऽस्माकं न संशयः ॥
तदाकर्ण्य महामन्त्रिवचनं ते नरेश्वराः ।
सलोकास्तत्क्षणादेव विद्राणवदनाः स्थिताः ॥
यादृशो बन्धुवर्गे स्वे मृते लोकस्य वल्लभे ।
संजायते महाशोको दैन्यवैक्लव्यदारुणः ॥
निकृष्टराज्ये संजाते श्रुत्वा सद्बोधभाषितम् ।
चारित्रधर्मलोकानां जातस्तादृश एव भोः ॥

तथा ।

चारित्रधर्मराजस्य वर्तन्ते यानि भुक्तिषु ।
तेषु सात्त्विकचित्तादिपुरेषु यत भूरिषु ॥
निरानन्दा निराटोपास्ते लोकाः शोकपूरिताः ।
श्रुत्वा निकृष्टराज्यं तत्संजाता दैन्यविह्वलाः ॥
अथ तत्तादृशं वीक्ष्य सैन्ययोर्महदन्तरम् ।
आनन्दशोकसम्पत्तेर्जातं मम कुतूहलम् ॥

यदुत ।

क वर्तते निकृष्टोऽसौ राजा यस्येदृशा गुणाः ।
द्रष्टास्मीहागतं यदा रौज्यार्थं तं नरेश्वरम् ॥
यावत्तस्य वराकस्य राज्ये तत्र प्रवेशनम् ।

न दत्तमेव तैर्देव महामोहादितस्करैः ॥

किं तर्हि।

स्वयमेव वशीकृत्य निःशेषं भूमिमण्डलम्।
चारित्रधर्मसैन्यं च विनिर्जित्य विनाश्य च ॥
तदन्तरङ्गतद्राज्यं महामोहादितस्करैः।
अधिष्ठितं बहिष्कृत्य निकृष्टं स्वयमेव भोः ॥
ततस्तत्तादृशं दृष्ट्वा देव सर्वं विसंस्थुलम्।
गतोऽहं बहिरङ्गेषु तं दिदृक्षुर्जनेषु भोः ॥
अथ दृष्टो मया देव स निकृष्टो नराधिपः।
बहिरङ्गेषु देशेषु राज्यभ्रष्टः सुदुःखितः ॥

स च कीदृशः।

पापकर्मरतो दीनः क्रूरात्मा लोकनिन्दितः।
निःशेषपुरुषार्थेभ्यः परिभ्रष्टो नराधमः ॥
स्फुटिताङ्गो मलक्लिन्नः पापपुञ्जकसन्निभः।
स निकृष्टो मया दृष्टः परप्रैष्यकरः सदा ॥
स्वीयराज्यपरिभ्रष्टो लोके दुर्भगतां गतः।
यो गृहे परिभूतोऽत्र स बहिः परिभूयते ॥
विक्रीय तृणकाष्ठानि कृत्वा वा हलखेटनम्।
हत्वा वा जन्तुसङ्घातं नीत्वा वा लेखमालिकाम् ॥
विधाय निन्द्यकर्माणि सोढाक्रोशशतानि च।
स निकृष्टः करोत्युच्चैर्दुष्पूरोदरपूरणम् ॥
ये केचिद्दुःखिताः पापाः क्रूरकर्मविधायिनः।

लोके मातङ्गडोम्बाद्यास्तेषां रूपं भजत्यसौ ॥

तथापि वल्लभास्तेऽस्य महामोहादितस्कराः।

चारित्रधर्मसैन्यस्य नामाप्येष न बुध्यते ॥

किं च।

दुष्पालितं हतं राज्यं भवतैतस्य चोपरि।

स कर्मपरिणामाख्यो राजा रोषमुपागतः ॥

ततोऽस्ति भवचक्रे यद्दुष्करं पापिपञ्जरम्।

नीतस्तत्र निकृष्टोऽसौ तेन राज्ञा वराककः ॥

पीड्यते च महादुःखैस्तत्रागन्तैरनेकशः।

स कर्मपरिणामेन निकृष्ट इति विश्रुतम् ॥

ततो मया चिन्तितं।

एकं राज्ये प्रवेशोऽपि न लब्धस्तेन तस्करैः।

हारितं च निजं राज्यं समृद्धं सैन्यमुत्तमम् ॥

स्थितयोर्हापि दुःखार्त्तो राज्यभ्रष्टो बहिष्कृतः।

द्वितीयं पीड्यते तत्र स निकृष्टो निरर्थकम् ॥

तदस्य सकलं हन्त निकृष्टस्य दुरात्मनः।

अज्ञानदोषतो जातमिदं दुःखकदम्बकम् ॥

तथाहि।

यद्यात्मानं विजानीत तद्राज्यं रत्नपूरितम्।

चारित्रधर्मसैन्यं च प्रपद्येत सदुत्तमम् ॥

महामोहादिसैन्यं च यद्यसौ शत्रुसञ्चिभम्।

अवगच्छेत्ततस्तस्य कुतो दुःखपरम्परा ॥

यतः ।

हत्वा चरटचक्रं तं नयपौरुषसंयुतः ।
सदा निष्कण्टकं राज्यं स भुञ्जीत न संशयः ॥

अथ वा ।

किं तस्य चिन्तयास्माकं राजादेशो मया परम् ।
कर्तव्योऽतः प्रपश्यामि द्वितीयस्यापि चेष्टितम् ॥
ततोऽधमस्य तद्राज्यं संजातं देव वत्सरे ।
द्वितीये घोषितं चोच्चैर्डिण्डिमेन यथा पुरा ॥
समस्तोऽपि च संपन्नो वृत्तान्तो यो निवेदितः ।
निकृष्टराज्ये सोऽस्यापि राज्ये सैन्यद्वये तथा ॥
वर्णितास्च गुणास्तस्य महामोहस्य मन्त्रिणा ।
यादृशाः परिषन्मध्ये तानहं ते निवेदये ॥

उक्तं हि तदा विषयाभिलाषेण मन्त्रिणा । यथैवंविधोऽयमव-
धमराजो जनितः कर्मपरिणामेन निजपित्रा । यदुत ।

इहलोकपरो गाढं परलोकपराङ्मुखः ।
धर्ममोक्षकृतद्वेषः प्रतिबद्धोऽर्थकामयोः ॥
शब्दे रूपे रसे गन्धे स्पर्शे चात्यन्तलोलुपः ।
तपोदानदयाशीलब्रह्मचर्यविदूषकः ॥
अत्यन्तवत्सलोऽस्माकं सदैवादेशकारकः ।
चारित्रधर्मसैन्यस्य विद्विष्टो वैरिसन्निभः ॥
न चायमपि जानीते राज्यं नापि निजं बलम् ।
न स्वरूपं न चास्माकं तस्कराकारधारिताम् ॥

ततश्च ।

अधमस्यापि यद्राज्यं तद्राज्यं परमार्थतः ।
अस्माकमेव संपन्नं देव नास्त्यत्र संशयः ॥
केवलं न प्रवेशोऽस्य दातव्यो भुक्तिमण्डले ।
प्रविष्टो हि विजानीयादास्माकीनं विचेष्टितम् ॥
अस्ति किंचनमात्रं हि वीर्यमस्य दुरात्मनः ।
बहिष्करणमेवातो युक्तं नात्र प्रवेशनम् ॥
ततः प्राह महामोहो यः स्यादस्य बहिष्कृतौ ।
उपायः कोऽपि निःशेषं तमार्या वक्तुमर्हति ॥
ततः प्राह महामन्त्री देव विज्ञापितं मया ।
यथासावधमो राजा प्रतिबद्धोऽर्थकामयोः ॥
ततः सर्वेऽपि संभूय वयं तं धनकामयोः ।
आसक्तं बाह्यदेशेषु धारयामो बहिष्कृतम् ॥

ततः ।

एवं विधीयतामार्य महामोहेन जल्पितम् ।
बहिष्करणकामेन सज्जीभूताय तस्य ते ॥
अथास्ति मन्त्रिणस्तस्य सुता परमयोगिनी ।
दृष्टिर्नाम विशालाक्षी सा तत्रेदमभाषत ॥
देव यूयं जिताशेषदेवदानवमानुषाः ।
सोऽधमः कियती मात्रा यतस्तं प्रति गामुकाः ॥
तद्दीयतां ममादेशोऽन्येन तं वशवर्तिनम् ।
एकाप्यहं करोम्येषा युष्माकं किं विचिन्तया ॥

राज्यभ्रष्टं बहिर्भूतं भवतां कर्मकारकम् ।
स्वसैन्यदुष्टं तं देव करिष्यामि न संशयः ॥

अन्यच ।

यत्र मे प्रभवो देव तत्रैते सहचारिणः ।
स्पर्शनाद्या भवन्त्येव सोदर्याः स्त्रीयमानुषाः ॥
सन्निधानं भवत्येव भावतो भवतामपि ।
सर्वेषां तत्र पुरुषे यो वशीक्रियते मया ॥

तथाहि ।

धनकामविहीनोऽपि भवद्भिर्युक्तया मया ।
निकृष्टोऽपि पुरा देव प्रापितः पापिपञ्जरम् ॥
तद्दीयतां ममादेशो मा विलम्बो विधीयताम् ।
गच्छाम्यहं वहिष्कर्तुमधमं तं नरेश्वरम् ॥
ततो योग्येत्यनुज्ञाता महामोहमहीभुजा ।
सा दृष्टिः प्रगता तत्र यत्रास्ते सोऽधमो नृपः ॥

इतश्च ।

वृत्तान्तं तादृशं श्रुत्वा सर्वं तद्भूमिमण्डलम् ।
चारित्रधर्मसैन्यं च जातं चस्तप्रकम्पितम् ॥
निकृष्टराज्ये ये जाताः शोकाक्रन्दादयः पुरा ।
अधमस्यापि ते राज्ये संपन्नाः साधुमण्डले ॥
अथ सा योगिनी गत्वा कृतान्तर्धानविभ्रमा ।
अधमस्य नरेन्द्रस्य तस्य लोचनयोः स्थिता ॥
ततश्च तद्बलेनासौ रूपालोकनलोलुपः ।

संजातोऽन्यन्न जानीते संसारे सुखकारणम् ॥
स्त्रीणां कटाक्षविक्षेपविभ्रमेङ्गितसंस्थितम् ।
लावण्यं हसितं लीलां लोलचक्षुर्निरीक्षते ॥
नेत्रवक्त्रस्तनाद्येषु तदङ्गेषु च मूढधीः ।
नीलाब्जेन्दुलसत्कुम्भकल्पनां प्रतिपद्यते ॥
विलासलासबिब्बोकहावभावविराजितम् ।
रूपाढ्यं सुन्दरीसारं प्रेक्षणं वीक्ष्य मोदते ॥
विचित्रचित्रविन्यासांस्तथान्यच्च सकौतुकम् ।
सोऽधमो रूपमुत्पश्यन्नानन्दमवगाहते ॥

चिन्तयति च ।

अहो सुखमहो स्वर्गस्तथाहो पुण्यकर्मता ।
यस्य मे जायते नित्यं साश्चर्यं रूपदर्शनम् ॥
ततो रात्रिंदिवं मूढो रूपदर्शनलोलुपः ।
सोऽन्यत्किंचिन्न जानीते कोऽहं किं वा मया कृतम् ॥
तथा च वर्तमानस्य स्पर्शनाद्यैस्तथापरैः ।
महामोहादिभिस्तस्य स्वं स्वं वीर्यं निदर्शितम् ॥
अथ तैर्लुप्तसंज्ञानः सोऽधमो निजराज्यतः ।
बहिर्भूतः कृतो देव प्रसक्तो धनकामयोः ॥
न ज्ञातं तेन तद्राज्यं निजं न च महाबलम् ।
न मत्ताद्भिर्न वा तेन राजाहमिति निश्चितम् ॥
गृहीता बन्धुबुद्ध्या च स्वा दृष्टिस्तेन योगिनी ।
महामोहमहामैन्यं सुहृद्भूतं निरीक्षितम् ॥

ततश्चरटसैन्येन तेन तद्राज्यमञ्जसा ।
वशीकृत्य हृताः सर्वे तस्यानुचरपार्थिवाः ॥
स तु राज्यपरिभ्रष्टः स्वीयबान्धववर्जितः ।
रिपुसैन्यवृतोऽप्युच्चैर्मन्यते सुखमात्मनः ॥
दुःखरूपं पुनर्दुःखकारणं दुःखजन्मकम् ।
मन्यते हि विपर्यासाच्छब्दाद्यनुभवं सुखम् ॥
राजसेवकशैलूषबन्दिद्यूतकरोपमः ।
संजातो बहिरङ्गेषु स देशेषु महीपतिः ॥
षिङ्गप्रायो महापापः कृपास्थानं विवेकिनाम् ।
नास्तिको हतमर्यादो धर्मानुष्ठानदूषकः ॥
मन्यते धार्मिकं लोकं सहास्यं भोगवञ्चितम् ।
विदग्धं मन्यते मोहादर्थकामपरायणम् ॥

चिन्तयति च ।

यस्य रूपेचणं नित्यं गृहिणी वशवर्तिनी ।
धनं च भूरि तस्येह मोचः शेषा विडम्बनाः ॥
एवं च बहिरङ्गेषु स देशेषु विचेष्टते ।
राजा विलुप्तसर्वस्वः सुखंमन्यस्तथापि च ॥
अन्यदा तेन मातङ्गी वीचिता रूपशालिनी ।
तस्यामध्युपपन्नस्य ततोऽसौ दृष्टिदोषतः ॥

ततश्च ।

अनालोच्य कुलस्योच्चैः कलङ्कमतिदारुणम् ।
अदृष्टा पापसङ्घातमहत्यायतिवीचणम् ॥

अनाकलय्य लोकेऽसौ लाघवं चात्मनोऽतुलम्।
कार्याकार्यविचारेण रहितात्मा स पार्थिवः॥
तां मातङ्गीं समादाय सद्रूपालोकलम्पटः।
तदङ्गमीचमाणोऽसौ नान्यत्किंचन बुध्यते॥
ततस्तं तादृशं वीक्ष्य वृत्तान्तं सोऽधमो नृपः।
बहिरङ्गजनेऽप्युच्चैर्निन्दायाः पात्रतां गतः॥
समस्तैरपि संभूय स गाढाकार्यकारकः।
राज्यादिष्कासितो लोकैर्गुणाः सर्वत्र पूजिताः॥
ततो दुःखशतापूर्णः क्लिश्यमानो बहिर्जने।
प्राप्तो निष्ठुरराजीयामवस्थां पापिपञ्जरे॥
स कर्मपरिणामेन राज्यं दुष्टं हृतं त्वया।
इत्युक्त्वा पीड्यते दुःखैरनन्तैस्तत्र रोषतः॥
ततो मया चिन्तितं।
इदमत्यस्य संजातमधमस्येदृशं फलम्।
अज्ञानदोषतो हन्त नान्यत्किंचन कारणम्।
तृतीयवत्सरे देव जातो राजा विमध्यमः॥
राज्ये तथान्तरङ्गे च विहितं घोषणादिकम्।
समस्तोऽपि च वृत्तान्तः पर्यालोचादिकस्तथा॥
ततः सैन्यद्वये जातो यथान्तरराज्ययोः।
ततश्च।
महामोहमहाराजो मन्त्रिणं प्रत्यभाषत।
आर्य वर्णय कीदृशो गुणैरेष विमध्यमः॥

मन्त्रिणोक्तं महाराज वत्सलोऽयं नराधिपः।
अस्माकं किं तु चारित्रधर्मसैन्यमपीचते ॥

तथाहि।

यथास्मान्मन्यते चित्ते बन्धुभूतानयं सदा।
तथानुवर्तयत्येष सैन्यं तदपि पार्थिवः ॥
केवलं पक्षपातोऽस्य गाढमस्मासु दृश्यते।
चारित्रधर्मसैन्ये तु राजायं शिथिलादरः ॥
इहलोके यथा सक्तं चित्तमस्य महीभुजः।
तथान्तरान्तरा किंचित्परलोकमपीचते ॥
प्रतिबद्धं मनो नित्यं यथास्य धनकामयोः।
तथानुशीलयत्येष धर्मकार्यमपि क्वचित् ॥
भद्रकः सर्वदेवानां श्रोता सर्वतपस्विनाम्।
दानशीलपरः किंचिन्न मच्छास्त्रविदूषकः ॥
तदेवं देव राजायं नास्माकमतिसुन्दरः।
यस्माच्चारित्रधर्मादिसैन्यं जानाति किंचन ॥
तद्यावद्दितैर्भाव्यं देवास्माभिः प्रयोजने।
प्रवेशोऽस्यापि राज्येऽच न दातव्यः कथंचन ॥
प्रविष्टो हि भवेदेष स्वसैन्यपरिपालकः।
आस्माकीनं पुनः सैन्यं बाधते नाच संशयः ॥
बहिर्भूतः स्वसैन्यस्य यद्येष परिपालनम्।
कुर्यात्तथापि नास्माकं भवेदत्यन्तबाधकः ॥
अस्यापि च तदेवाच बहिष्करणकारणम्।

दृष्ट्वा सह यदस्माभिरधमस्य कृतं पुरा ॥
अकालहीनं भो देव तत्तदेव विधीयताम् ।
यावन्नाक्रामति प्राज्यं राज्यमेष विमध्यमः ॥
एवं भवतु तेनोक्ते महामोहमहीभुजा ।
बहिष्कृतः स तैश्चौरैः सर्वैर्दुष्टैरुरःसरैः ॥
वशीकृतं च तद्राज्यं किं तु नात्यन्तपीडितम् ।
चारित्रधर्मसैन्यं च मनागेतैरपेक्षितम् ॥
स तु राजा बहिर्भूतो मानसन्मानपूजनैः ।
तदात्मसैन्यं राज्यं च पालयत्यन्तरान्तरा ॥
प्रविभागेण संस्थाप्य सोऽहोरात्रं क्षणे क्षणे ।
धत्ते धर्मार्थकामेषु कार्यं कालोचितं सदा ॥
तेऽपि चारित्रधर्माद्या मनागप्यायितास्तया ।
तेन राज्ञा न कुर्वन्ति शोकाक्रन्दनरोदनम् ॥
राजानो ब्राह्मणाद्याश्च ये सदाचारवर्तिनः ।
त्रिवर्गसाधनोद्युक्तास्तेषां रूपं भजत्यसौ ॥
अथ तत्तादृशं कुर्वन्निजराज्यं स पार्थिवः ।
जनमध्ये गतः श्लाघां धन्योऽयं पुण्यकर्मकः ॥
स कर्मपरिणामाख्यो यः पिता तस्य भूपतेः ।
असावपि मनाक् तुष्टो दृष्ट्वा तत्तस्य चेष्टितम् ॥
ततस्तं पशुसंस्थाने कदाचित्सुखकारणे ।
कदाचिन्मानवावासे नगरे सुखपूरिते ॥
कदाचिच्च सुखोपेते नगरे विबुधालये ।

प्रापयत्येष राजेन्द्रो मयेत्याकर्णितं तदा ॥
अथातीते पुनस्तत्र भुक्तराज्ये विमध्यमे ।
जातोऽन्तरङ्गराज्येऽसौ मध्यमो नाम भूपतिः ॥
विहितं घोषणं जातः पर्यालोचो महीभुजाम् ।
निवेदितास्तु तत्रापि गुणास्तेनैव मन्त्रिणा ॥

कथं ।

अयं राजा महाराज मध्यमः सततोद्यतः ।
धर्मार्थकाममोक्षेषु पुरुषार्थेषु भावतः ॥
परमार्थं तथाप्येकं मन्यते मोक्षमञ्जसा ।
तद्धेतुभूतं धर्मं च न प्रसक्तोऽर्थकामयोः ॥
उदारसत्त्वविरहात्केवलं धनकामयोः ।
प्रवृत्तिं कुरुते नित्यं तद्दोषांश्चिन्तयन्नपि ॥
बन्धुपुत्रकलत्रादिरूपं यद्भावबन्धनम् ।
तत्रोटनं न शक्नोति कर्तुमेष नराधिपः ॥
तदिदं मन्त्रिणा तावत्महामोहादिभूभुजाम् ॥
निवेदितं मया तत्र श्रुतं च जनवार्तया ।

प्रकर्षेणोक्तं । किं पुनरपरमाकर्णितं जनवार्तया भवता ।
वितर्केणोक्तं । आकर्णयतु देवः ।

येन ते कथितं देव सिद्धान्तेनाखिलं पुरा ।
सार्धं परिचयस्तेन तस्याप्यस्ति महीपतेः ॥
गतस्तदुपदेशेनानेन मध्यमभूभुजा ।
तदात्मीयं महाराज्यं लेशोद्देशेन लक्षितम् ॥

तस्य चारित्रधर्माद्यं सैन्यमीषद्धि भावितम् ।
सम्यग्दृष्टिर्निजरूपं च विज्ञातप्रायमञ्जसा ॥
महामोहादिभिश्चूर्णा तेषां चरटवृत्तिता ।
तेनावधारिता राज्ञा सिद्धान्तवचनात्किल ॥
ततोऽसौ मध्यमो राजा वीर्येण कियतीमपि ।
आक्रम्य भूमिं राज्यस्य मध्यभागे व्यवस्थितः ॥
अथ चारित्रधर्माद्याः स्वाङ्गभूताः पदातयः ।
मनागाह्लादितास्तेन चौराक्षेपविपीडिताः ॥
ततस्तद्वीर्यमुद्वीक्ष्य महामोहादितस्कराः ।
सेवका इव तल्लीनाः स्थिताः कम्पितमानसाः ॥
मनागाह्लादिताश्चित्ते स्वामिवीर्यं निरीक्ष्य ते ।
नृपाश्चारित्रधर्माद्याः ससैन्यपुरबान्धवाः ॥
यया वशीकृताः पूर्वं राजानः सापि योगिनी ।
तस्य मध्यमराजस्य दृष्टिर्नात्यन्तबाधिका ॥
ततोऽसौ मध्यमो राजा मनाङ्निर्जितमण्डलः ।
राज्यं यापनयात्मीयं कालापेक्षी भुनक्ति तत् ॥
बहिरङ्गेषु देशेषु सज्जने श्लाघ्यतां गतः ।
धन्योऽयं पुण्यकर्मेति लब्धमार्गो नराधिपः ॥

किं बहुना ।

ये केचिल्लब्धसन्मार्गा जीवा जैनेन्द्रशासने ।
जीवादितत्त्ववेत्तारः श्रद्धासंशुद्धमानसाः ॥
यथाशक्ति कियद्भ्योऽपि पापेभ्यो विरतास्तथा ।

समस्तभुवनाह्लादकारिणः शुक्ललेश्यया ॥
तेषां हि यदनुष्ठानं तत्तेनापि निषेवितम् ।
देव मध्यमराजेन तद्राज्यं भुञ्जताखिलम् ॥
ये चान्ये तादृशा लोकाः परलोककृतोद्यमाः ।
गृहीतमोचतत्त्वार्थास्तद्रूपोऽसौ नराधिपः ॥
ततोऽसौ यः पिता तस्य सार्वभौमो नरेश्वरः ।
स कर्मपरिणामाख्यस्तोषितस्तेन कर्मणा ॥
ततोऽसंख्यसुखापूर्णे नगरे विबुधालये ।
स राजा मध्यमस्तेन नीतो राज्येऽतिलङ्घिते ॥
ततोऽहं चरितं वीक्ष्य चतुर्णामपि भूभुजाम् ।
तेषां सकौतुको जातः पञ्चमः किं करिष्यति ॥
यावत्तत्र महाराज्ये ग्रामेषु नगरेषु च ।
घोषितं डिण्डिमेनोच्चैरुत्तमोऽत्र महीपतिः ॥
ततस्तां घोषणां श्रुत्वा तेऽन्तरङ्गनराधिपाः ।
पुनः पर्याकुलीभूताः सुन्दरा इतरेऽपि च ॥
ततश्चारित्रधर्माय तेन सद्बोधमन्त्रिणा ।
सन्धीरणार्थं सैन्यस्य तद्गुणा प्रतिवेदिताः ॥
उक्तं हि तेन सद्बोधमन्त्रिणा ।
मा भैषुरत्र भो लोकाः सुन्दरोऽयं नराधिपः ।
अत्यन्तवत्सलोऽस्माकं महानन्दविधायकः ॥
आमात्येप निजं राज्यमिदं रत्नौघपूरितम् ।
अस्माय लघयत्येष नामतो गुणतोऽपि च ॥

यत्सैन्यं ये गुणास्तस्य ये ग्रामनगराकराः।
ये देशा येऽत्र चरटा ये लोकाः शुद्धवृत्तयः ॥
या च राज्यस्थितिः काचिदत्र राज्येऽतिसुन्दरा ।
तदिदं बुध्यते देव सर्वमुत्तमभूपतिः ॥
वर्धकोऽस्मद्बलस्यायं महामोहादिसूदनः ।
सर्वैर्नृपगुणैर्युक्तस्त्वादरेष महीपतिः ॥
तदस्य यदिदं राज्यं तद्राज्यं परमार्थतः ।
अस्माकमेव संजातं देव नास्त्यत्र संशयः ॥
सद्बोधमन्त्रिणो वाक्यमेवमाकर्ण्य ते नृपाः ।
जाताश्चारित्रधर्माद्याः प्रोत्फुल्लमुखपङ्कजाः ॥
ततश्चारित्रधर्माद्यैः कृतलोकचमत्कृति ।
कृतं वर्धनकं तोषादानन्दरसनिर्भरम् ॥

गायन्ति च ते। यथा ।

इदमुत्तमराज्यमहो प्रबलं
दलिताखिलतस्करवृन्दबलम् ।
अचिरेण भविष्यति तत्सदृशं
प्रमदाय च साधुजनस्य भृशम् ॥

इतश्च ।

महामोहादयः सर्वे श्रुत्वा राज्यं तदौत्तमम् ।
*मलीना वयमित्येवं मुह्यमाना इव स्थिताः* ॥
क्व यामः क्व च नश्यामः कथं जीवितरक्षणम् ।
इत्येवमाकुलीभूतास्ते किं किं किं न कुर्वते ॥

अथ राज्यं समासाद्य पितुस्तेन महीभुजा।
उत्तमेन स सिद्धान्तः पृष्टो राज्यस्थितिं तदा॥

तद्यथा।

कथं नाथ प्रवेच्यामि तत्र राज्येऽतिदुर्गमे।
कथं वा निहनिष्यामि प्रचण्डचरटानहम्॥
कया वशीभवेन्नीत्या तत्सुराज्यं ममाखिलम्।
कुत्र स्थाने मया नाथ नियोज्यं निजपौरुषम्॥
सर्वोपायविधेर्वेत्ता त्वं महाभाग वर्तसे।
यथा निष्कण्टकं राज्यं स्यान्मे तद्वक्तुमर्हसि॥
तदेवमुत्तमेनोक्ते सिद्धान्तः समभाषत।
वत्स योग्योऽसि राज्यस्य तस्य नास्त्यत्र संशयः॥

तथाहि।

मोक्षकांक्षैकतानस्त्वं तदर्थं धर्मसाधकः।
संसाराद्विरतोऽत्यन्तमर्थकामपराङ्मुखः॥
मोक्षे प्रवर्तमानस्य या कीर्तिर्यच्च ते सुखम्।
प्रसङ्गजनितं तत्ते वत्स नो बन्धकारणम्॥
भवप्रपञ्चः सर्वोऽपि विदितो भवतः स्फुटम्।
तच्च राज्यं त्वया ज्ञातं यत्पित्रा ते निवेदितम्॥
यस्तु प्रवेशनोपायस्तत्र राज्ये नरोत्तम।
तं ते निवेदयिष्यामि निःशेषमवधारय॥

तत्र भोः प्रविशतान्तरङ्गराज्ये नरपतिना प्रथममेव प्रष्टव्या गुरवः। सम्यगनुष्ठेयस्तदुपदेशः। विधेयाहिताग्निनेवाग्नेस्तदुपचर्या।

कर्तव्यं धर्मशास्त्रपारगमनं। विमर्शनीयस्तात्पर्येण तद्भावार्थः। जनयितव्यस्तेन चेतसोऽवष्टम्भः। अनुशीलनीया धर्मशास्त्रे यथोक्ताः क्रियाः। पर्युपासनीयाः सन्तः। परिवर्जनीयाः सततमसन्तः। रक्षणीयाः स्वरूपोपमया सर्वजन्तवः। भाषितव्यं सत्यं सर्वभूतहितमपरुषमनतिकाले परीक्ष्य वचनं। न ग्राह्यमणीयोऽपि परधनमदत्तं। विधेयं सर्वासामस्मरणमसंकल्पनमप्रार्थनमनिरीक्षणमनभिभाषणं च स्त्रीणां। कर्तव्यो बहिरङ्गान्तरङ्गसङ्गत्यागः। धारणीयः संयमोपकारी महायतिवेषः। यापनीयं नवकोटिविशुद्धेनाहारोपधिशय्यादिनात्मशरीरं। विहर्तव्यमनियतविहारेण। न दातव्यस्तन्द्रानिद्रालस्यविषादादीनामवकाशः। न मूर्च्छितव्यं मृदुस्पर्शेषु। न गर्धितव्यं स्वादुरसेषु। न मोहितव्यं सुरभिगन्धेषु। नाध्युपपत्तव्यं कमनीयरूपेषु। नाभिकांक्षितव्यं कलध्वानेषु। नोद्वेजितव्यं कर्कशशब्देभ्यः। न जुगुप्सनीयानि बीभत्सरूपाणि। न द्वेष्टव्यममनोज्ञरसेषु। न निन्दितव्या दुरभिगन्धाः। न गर्हणीयमकान्तस्पर्शेषु। प्रतिक्षणं चालनीयो विशुद्धभावनयात्मा। भवितव्यं सदा संतुष्टचित्तेन। समाचरणीयं विचित्रं तपश्चरणं। विधातव्योऽनवरतं पञ्चविधः स्वाध्यायः। प्रणिधेयं परमेश्वरे सततमन्तःकरणं। वर्तितव्यं समितिगुप्तिपरिपूतेन मार्गेण। परिषोढव्याः क्षुत्पिपासादयः परीषहाः। तितिक्षितव्या दिव्याद्युपसर्गाः। अभ्यसनीयं धीधृतिस्मृतिबलाधानं। यतितव्यमसंपन्नयोगेषु। एवं हि कुर्वतो नृपतेर्भवति तत्र राज्ये प्रवेशः। तद्भवताप्येवं तत्र प्रवेष्टव्यं। उक्तमेनोक्तं। यदाज्ञापयति नाथः। सिद्धान्तेनोक्तं। वत्स यद्येवं ततो

भविष्यति तत्र राज्ये तव प्रवेशः। केवलं ग्रहीतव्यस्त्वयायमन्तरङ्गोऽभ्यासनामा स्वाङ्गिकः सहायः। तथा चारित्रधर्मसैन्यादागमिष्यति ते वैराग्याभिधानो द्वितीयः सहचरः। ततस्ताभ्यामभ्यासवैराग्याभ्यां सहितेन भवता तत्र राज्ये प्रवेष्टव्यं। निरोद्धव्यो महामोहादिसैन्यस्य यत्नतो बहिःप्रचारः। निहन्तव्या यथादर्शं बलान्निर्गच्छन्तस्तत्सैनिकाः। संधीरणीयं चारित्रधर्मसैन्यं। स्थिरीकर्तव्या चित्तवृत्तिराज्यभूमिः। प्रवर्तितव्या मैत्रीमुदिताकरुणोपेक्षाभिधानाश्चतस्रो महादेव्यः। ततः समग्रसामग्रीकेण सता पूर्वद्वारेण प्रवेष्टव्यं तत्र राज्ये भवता। तस्य च वामे दिग्भागे महामोहादिसैन्याधारभूतानि सर्वाण्यपि ग्रामनगराकरपर्वतनद्यादीनि प्रतिवसन्ति। दक्षिणे तु दिग्भागे चारित्रधर्मसैन्यस्य सम्बन्धीनि ग्रामादीनि विद्यन्ते। सर्वाधारा पुनस्तेषां चित्तवृत्तिर्महाटवी वर्तते। तस्याश्च पर्यन्ते पश्चिमे दिग्भागे विद्यते निर्वृतिर्नाम नगरी। सा हि तां महाटवीमतिलङ्घ्य व्यवस्थिता। तां च निर्वृतिनगरीं प्राप्तस्य ते परिपूर्णं भविष्यत्यस्य राज्यस्य फलं। अतस्तद्गमनार्थमेव प्रस्थानं विधेयं। न कर्तव्योऽन्यत्र भवता प्रतिबन्धः। गन्तव्यं च तस्यां नगर्यामनवरतप्रयाणकैश्चित्तवृत्तिमध्यभागवर्तिनात्यन्तप्रगुणेन महामोहादिसैन्यास्पृष्टेन चारित्रधर्मादिसैन्यातिवल्लभेन सततमौदासीन्यनामकेन महाराजमार्गेण। इतश्चादावेवास्ति तावदध्यवसायो नाम महाह्रदः। स यदा पङ्ककलुषो भवति तदा प्रकृत्यैव महामोहादिसैन्यं पोषयति चारित्रधर्मानीकं तु पीडयति। यदा पुनः प्रसन्नतया स्वस्थो भवति तदा सोऽध्यवसायम-

शाहृदस्थचारित्रधर्मसैन्यं तत्स्वभावतया स्वंहयति महामोहादिबलं तु कर्षयति। अत एव महामोहादयस्तं स्वोपकारार्थं कलुषयन्ति चारित्रधर्मादयस्त्वात्मोपकारार्थमेव तं प्रसादयन्ति। भवता तु तस्याध्यवसायमहाहृदस्य प्रसादनार्थं तावत्तत्रोऽपि महादेव्यो नियोज्याः। यतो निपुणास्तास्तस्य नितरामनलताकरणे। ततः प्रसन्नीभूते तत्रादिमहाहृदे पुष्टीभूतेषु चारित्रधर्मादिषु स्वाङ्गिकाभूपेषु कर्शितेषु महामोहादितस्करेषु पुनरयतो गन्तव्यं। ततो भविष्यति तस्मादेव महाहृदात् प्रवृत्ता धारणा नाम महानदी। सा च स्थिरसुखयानासनोपविष्टेनोच्छ्वासरहितमतिवेगेन गच्छता परित्यज्य निःशेषमिन्द्रियव्याक्षेपं भवता प्राप्तव्या। तस्यां च जनयिष्यन्ति ते महामोहादिशत्रवो विविधविकल्पकल्पकल्लोलकान्। ते भवतात्यन्तावहितेन भञ्जनीयाः। ततो द्रक्ष्यसि त्वं धर्मध्याननामानमतिप्रगुणं दण्डोलकं। तेन च गन्तव्यं। स च गत्वा पतिष्यति सबीजयोगाभिधाने महति मार्गे। तेन च गच्छतस्ते प्रतिक्षणं प्रलयीभविष्यन्ति सर्वेऽपि महामोहादिशत्रवः। समुच्चलिष्यन्ति तेषां सम्बन्धीनि समस्तस्थानानि। प्रबलीभविष्यन्ति चारित्रधर्मादयः। धवलतां धारयिष्यति समस्तापि राज्यभूमिः। न भविष्यति च रजस्तमसोर्नामापि। ततो लप्स्यसे त्वं शुक्लध्यानाभिधानं दण्डोलकं। तेन च गच्छतो भविष्यति ते विमलकेवलालोकः। ततः स दण्डोलको गत्वा मिलिष्यति निर्बीजयोगाख्ये रहति मार्गे। तत्र च स्थितेन त्वया विषमरिपुसमीकरणाय विधातव्यः केवलिसमुद्घाताख्यः प्रयत्नो निहन्तव्यास्च

योगाख्यास्तयो दुष्टवेतालाः। ततः परं भविष्यति शैलेशी नाम वर्तनी। तया गन्तव्यं। सैव तस्यां निर्वृतिनगर्यां भवन्तं प्रापयिष्यति। सा यतोऽनारतस्तिष्ठतीति। एते च सर्वे तमौदासीन्यनामकं महाराजमार्गमसुञ्चत एव भवतः संपत्स्यन्ते व्यतिकराः। अन्यच्च। तत्र गच्छता भवता ग्रहीतव्या समता नाम योगनलिका। तस्यां च पातनीया निजा दृष्टिः। ततस्तस्यां समतायां पतितदृष्टेस्तव भविष्यति यथावस्थितपदार्थदर्शनं। ततः स्वयमेव विज्ञाय प्रतिक्षणं यथोचितं करिष्यसि। किं बहुनोपदिष्टेनेति।

तस्यां च निर्वृतौ वत्स प्राप्तस्त्वं सततोत्सवः।
तस्यान्तरङ्गराज्यस्य फलं भोक्ता भविष्यसि॥
निर्बाधो नष्टनिःशेषशत्रुसञ्जातनिर्भयः।
स्थास्यसि त्वं महाभाग सततानन्दपूरितः॥
ये तेऽन्तरङ्गास्ते भूपास्तेऽपि भूतिसमन्विताः।
मोदिष्यन्ते त्वया सार्धं सर्वे तन्मयतां गताः॥

अन्यच्च।

कालाये रिपुहन्तारं भटं वैराग्यनामकम्।
विधायात्यन्तनिपुणमभ्यासं मार्गदेशकम्॥
राज्यप्रवेशादारभ्य गच्छतस्ते पदे पदे।
वर्धमाना महाभाग भविष्यन्ति विभूतयः॥

किं बहुना।

न मोक्तव्यस्त्वया मार्गो निहन्तव्याश्च शत्रवः।
नानुषङ्गो विधातव्यो बहिरङ्गविभूतिषु॥

पाल्यास्त्वयारित्रधर्माद्याः स्मर्तव्यं मामकं वचः ।
एवं ते कुर्वतो वत्स सर्वं चारु भविष्यति ॥
तद्गच्छ वत्स सिद्धिस्ते कुरु राज्यं सुनिर्मलम् ।
त्वया राज्यफले प्राप्ते सफलो मे परिश्रमः ॥

उत्तमेनोक्तं । यदाज्ञापयति नाथः ।

ततो यथोपदिष्टं तत्सिद्धान्तेन महात्मना ।
तथैव विहितं सर्वमुत्तमेन सुमेधसा ॥
ततः प्रविष्टोऽसौ तत्र राज्ये तेनैव वर्त्मना ।
विहिताशेषकर्तव्यो देवोत्तममहीपतिः ॥
अथ सा योगिनी दृष्टिर्महामोहादिशत्रुभिः ।
तस्यापि योजिता देव वशीकरणकार्मुकैः ॥
यावता न गतस्तस्याः स दृष्टेर्वशवर्तिताम् ।
किं तु निर्जित्य तां तेन तेऽपि सर्वेऽपि निर्जिताः ॥
ततो निर्दलिताशेषशत्रुवर्गो विकण्टकम् ।
उद्भूतभूतिकं स्फीतं राज्यमासाद्य सुन्दरम् ॥
पालयन्निजसैन्यानि सर्वाश्चाह्लादयन् प्रजाः ।
अमुत्र निर्वृतेर्मार्गे स लोके श्लाघ्यतां गतः ॥

कथं ।

धन्योऽयं कृतकृत्योऽयं महात्मा नरसत्तमः ।
*येनेदृशं महाराज्यं पालितं पुण्यकर्मणा ॥*

ततश्च ।

देवदानवमानुष्यशक्रचक्रधरैः स्तुतः ।

स्वत एव विजानीते सर्वां राज्यस्थितिं किल।
स वरिष्ठो महाभागो नान्यस्तस्योपदेशकः॥

अन्यच्च।

मौराज्ये निजवीर्येण विहिते तेन भूभुजा।
बहिरङ्गा महात्मानो जातास्तस्य पदातयः॥
बहिरङ्गपदातीनां धारयन्ति यतो गणम्।
ततस्ते विश्रुता लोके नाम्नेति गणधारिणः॥
ततस्तेन वरिष्ठेन तैरात्मगणधारिभिः।
उपकारीति विज्ञाय स सिद्धान्तो निरूपितः॥
अथोपलभ्य सिद्धान्तं राजादेशेन सादरम्।
समारयन्ति ते तस्य शरीरमतिसुन्दरम्॥
ततश्चाङ्गान्युपाङ्गानि संकल्प्य कृतनिश्चयाः।
संस्थापयन्ति ते तस्य सत्त्वानि गणधारिणः॥

एवं च स्थिते।

योऽजरामररूपोऽपि सिद्धान्तः परमार्थतः।
लोके प्रसिद्धिमायातो वरिष्ठेनैष कारितः॥
नोपदेष्टा वरिष्ठस्य तेनाशौ राज्यसाधने।
निजज्ञानबलेनैव तद्राज्यं तेन साधितम्॥
निरपेक्षो महाभागः स वरिष्ठो नरेश्वरः।
तदा परोपदेशानां संजातो निजवीर्यतः॥

किं च।

स कर्मपरिणामेन यादृशो जनितो नृपः।

तत्ते निवेदयिष्येऽहं विज्ञातं लोकवार्तया ॥

स हि देव भगवान् वरिष्ठो नरेन्द्रः सकलकालं परार्थव्यसनी उपसर्जनीकृतस्वार्थ उचितक्रियावान् देवगुरुबहुमानी दैन्यहीनहृदयः सफलारम्भी कृतज्ञाता परमेश्वरो दृढानुशयो विकलोऽत्यन्तधीरगम्भीराशयः। अयञ्चास्य परीषहेषु न भयमुपसर्गेषु न चिन्तापीन्द्रियवर्गे न गणनापि महामोहादिशत्रुवर्गे सात्मीभावश्चारित्रधर्मराजादिके निजबले ऽभिरतिर्भुवनोपकारकरणे। अन्यच्च।

प्रविष्टस्य महाराज्ये तत्र तस्य महीपतेः।
संजाते च जनानन्दे हतेषु चरटादिषु ॥
राज्यं परिणतं दिव्यं भुञ्जतः सततोत्सवम्।
बहिरङ्गा समुद्भूता भूतिर्या तां निबोध मे ॥
लसत्किरीटकेयूरहारकुण्डलभूषिताः।
द्योतिताशेषदिक्चक्राः शक्रास्तस्य पदातयः ॥
इदं त्रिभुवनं देव सदेवमनुजासुरम्।
तदा वरिष्ठराजस्य सर्वं किङ्करतां गतम् ॥
यात्र त्रिभुवने देव विभूतिः सा महात्मनः।
तस्य सर्वापि संपन्ना किं तु तस्यां स निःस्पृहः ॥
नगर्यां निर्वृतौ येन मार्गेण स नरेश्वरः।
प्रस्थितस्तं समस्तेभ्यो जन्तुभ्यो देशयत्यलम् ॥
तं च देशयतस्तस्य तैर्भक्तिभरनिर्भरैः।
सुरासुरनरैर्देव यत्कृतं तन्निवेदये ॥
राजतस्तपनीयाद्यश्चित्ररत्नैश्च निर्मितः।

स गच्छन्निर्वृतेर्मार्गे संप्राप्तः परपूजनम् ॥
तदेवं भुवनख्यातं सुखसन्दोहपूरितम्।
तद्राज्यमन्तरङ्गं भोः परिपाल्य मनोहरम् ॥
तेनौदासीन्यमार्गेण गच्छन्निःशेषचेष्टितम्।
सिद्धान्तोक्तं प्रकुर्वाणः पूर्वोक्तं दृढसंस्मृतिः ॥
स तस्यामुत्तमो राजा निर्वृतौ सततोत्सवः।
संप्राप्तः क्रमशो देव भुङ्क्ते राज्यस्य सत्फलम् ॥

अन्यच्च। देव मयाकर्णितं। यथा तस्यां निर्वृतौ नगर्यां

न मृत्युर्न जरा नार्तिर्न शोको नारतिर्न भीः।
न बुभुक्षा पिपासा च न च केचिदुपद्रवाः ॥

किं तर्हि।

स्वाभाविकं निराबाधं स्वाधीनमुपमातिगम्।
अनन्तं योगिगम्यं च सुखमेव हि केवलम् ॥

ततश्च।

एवं तत्पालितं तेन राज्यमुत्तमभूभुजा।
येन तस्यां स संप्राप्तो जातश्चिन्ताविवर्जितः ॥

अन्यच्च।

यो राज्यदाता प्रागासीत्पिता चोत्तमभूपतेः।
स कर्मपरिणामाख्यस्तेन जित्वा निराकृतः ॥
यद्युक्तः सा ह्यतिक्रान्ता पुरी यामुत्तमो गतः।

ततश्च।

न कर्मपरिणामाय ढौकमप्येष यच्छति ॥

किं तर्हि ।

अनन्तानन्दसद्वीर्यज्ञानदर्शनपूरितः ।
सततं मोदते धन्यस्तस्यां निःशेषितक्रियः ॥
चित्तवृत्तिमहाराज्ये फलमेतत्सुपालिते ।
यदनन्तं भवेत्कालमवस्थानं हि निर्वृतौ ॥
तदेवं देव तद्राज्यं परिपाल्य विधानतः ।
संप्राप्तो निर्वृतौ पुर्यामुत्तमः स महीपतिः ॥

अथ षष्ठे पुनर्वर्षे तत्र राज्ये नियोजितः ।
वरिष्ठो नाम राजेन्द्रः स्वपुत्रस्तेन भूभुजा ॥
विहितं घोषणं देशे डिण्डिमेन यथाक्रमम् ।
पर्यालोचादयो भावाः प्रवृत्ताश्च महीभुजाम् ॥
अथ निश्चित्य तद्रूपं महामोहादितस्कराः ।
निरानन्दा निराटोपाः संजाता मृतकल्पकाः ॥
दृष्टाश्चारित्रधर्माद्या मुदितं साधुमण्डलम् ।
संजातं च स्वदेशेषु महावर्धनकं परम् ॥
यथोत्तमस्य संपन्नो वृत्तान्तो राज्यसाधने ।
स एव च वरिष्ठस्य विशेषस्तु निगद्यते ॥
आसीत्परिचयस्तस्य सिद्धान्तेन पुरा गुरुः ।
विहितं तदपत्येन वरिष्ठेन सुमेधसा ॥
केवलं सिद्धमासाद्य राज्यं तेन महात्मना ।
न दृष्टः किंचिदप्येष सिद्धान्तो राज्यसाधनम् ॥

यतः ।

एते चयः प्रभोर्भान्ति प्राकारास्तस्य निर्मलाः ॥
भ्रमद्भ्रमरविस्तारताररङ्कारवन्धुरः ।
अशोकपादपो भाति मनोनन्दनपल्लवः ॥
रणद्विरेफसंकीर्णा सुरासुरकरेरिता ।
पुष्पवृष्टिः पतत्युच्चैर्गन्धामोदितदिक्पथा ॥

तथा ।

प्राकारचयमध्यस्थे कुर्वाणे मार्गदेशनाम् ।
वरिष्ठे सततानन्दिनिर्घोषः श्रूयते किल ॥
मृणालनालसत्तन्तुसन्तानाकारधारिताम् ।
आचरन्ति विराजन्ते चामराणि जगद्विभोः ॥
विचित्ररत्नविच्छित्तिनिर्मितानि महान्ति च ।
सिंहासनानि शोभन्ते चत्वारि चतुराकृतेः ॥
प्रकाशितनभोभागं भास्कराकारधारकम् ।
राजते तत्तनूत्थापि प्रभामण्डलमुत्तमम् ॥
उल्लासितजनाह्लादः सुरकिङ्करताडितः ।
ध्वनते दुन्दुभिर्दिव्यो जगतां कर्णपेशलः ॥
आतपत्रत्रयं भाति भुवनत्रयनायकः ।
अयं वरिष्ठ इत्येवं ख्यापनार्थमिव प्रभोः ॥
इत्येवमादिभिर्दिव्यैर्देवदानवनिर्मितैः ।
प्रातिहार्यैर्महाभागः स वरिष्ठो विराजते ॥

अन्यच्च ।

सुगन्धिर्विमलो देहः प्रस्वेदामयवर्जितः ।

गोक्षीरहारसङ्काशं रक्तं मांसं च भूपतेः ॥
निर्हाराहारचेष्टा च न दृश्या मांसचक्षुषाम् ।
निश्वासः सुरभिस्तस्य जन्माद्येयं गुणावली ॥
कोटीकोट्योऽपि मान्त्युच्चैः क्षेत्रे योजनमात्रके ।
एकापि भारती भाति सर्वेषां निजभाषया ॥
पूर्वोत्पन्नाः प्रशाम्यन्ति वैरमारीरुगीतयः ।
प्रादुर्भावं न यान्त्येता भाविन्यस्तस्य तेजसा ॥
योजनानां शते नास्ति दुर्भिक्षं तत्प्रभावतः ।
अतिवृष्टिरतिवृष्टिश्च न स्तः स्तेनादितश्च भीः ॥
इत्येते सद्गुणास्तस्य महामोहादिवैरिणाम् ।
समुद्धननतो देव संजाता वरभूपतेः ॥
चक्रं छत्रं ध्वजो रत्नैश्चर्चितश्चारुविभ्रमः ।
भाति राजीवराजिश्च क्रमतः क्रमवर्तिनी ॥
अधोमुखाश्च तिष्ठन्ति कण्टकास्तत्प्रभावतः ।
अवस्थितं तदा तस्य नखरोमादिकं प्रभोः ॥
शब्दरूपरसस्पर्शगन्धा हृदयहारिणः ।
ऋतवश्च भवन्त्युच्चैः प्रभावेण जगत्प्रभोः ॥
भूमिर्गन्धोदकासिक्ता पुष्पप्रकरराजिता ।
आजानूत्सेधिभिः पुष्पैः पञ्चवर्णैः सुगन्धिभिः ॥
पक्षिणोऽपि जगन्नाथं तं कुर्वन्ति प्रदक्षिणम् ।
वाति तस्य सदाकालमनुकूलः समीरणः ॥
नमन्ति पादपास्तस्य सम्मुखं भक्तिनिर्भराः ।

कोटिर्न याति देवानां पादमूलात्कदाचन ॥
इत्येतेऽतिशयास्तस्य देवभक्तिविनिर्मिताः ।
प्रादुर्भूता निजं राज्यं भुञ्जतो वरभूपतेः ॥
एवं सकलकल्याणसन्दोहोद्दामलाभिनी ।
भूतिर्वरिष्ठराजस्य देव वाग्गोचरातिगा ॥
इत्थं त्रिभुवनानन्दकारकः स नरेश्वरः ।
नगर्यां निर्वृतौ लोकान् प्रापयेन्मार्गदेशकः ॥
ततस्तत्तादृशं राज्यं कुर्वाणस्तेन वर्त्मना ।
अघावपि गतो देव निर्वृतौ चारु भूमिपः ॥
यथोत्तमस्य निर्दिष्टो वृत्तान्तोऽरिवधादिकः ।
स एवास्यापि विज्ञेयो वरिष्ठस्य न संशयः ॥

अन्यच्च ।

विहिता लोचनस्यापि दृष्टिः परमयोगिनी ।
तेनाकिंचित्करी देव वरिष्ठेन महीभुजा ॥
निजबन्धुवियुक्ता सा सर्वशक्तिविवर्जिता ।
ततो दृष्टिर्विलयेव सर्वथा प्रलयं गता ॥
तदेवं कृतकृत्यत्वान्निर्वृतौ स नरेश्वरः ।
आस्ते शान्तो निराबाधः सततानन्दपूरितः ॥

एवं च स्थिते ।

तद्भवद्भिर्यदादिष्टं रागपद्मनिरीक्षणम् ।
तदेवं देव वृत्तान्तमागतस्तव सन्निधौ ॥
ततश्चेदं वितर्क्यास्य भावितं स महीपतिः ।

अप्रबुद्धः समाकर्ण्य चेतसा पर्यचिन्तयत् ॥

अये।

यथैव दिष्टं पूर्वं मे सिद्धान्तेन महात्मना।
तथैव सकलं जातं नान्यथा तस्य भाषितम् ॥

तथाहीदं तेन सिद्धान्तेन भाषितं पूर्वमासीत्। तद्यथा।

किंचैकमपि तद्राज्यं कारणं सुखदुःखयोः।
भवेत्पालनमाश्रित्य नृणां पात्रविशेषतः ॥
तच्चेदं मे वितर्केण तथैवात्र निवेदितम्।
संभवेदन्यथाभावः कुतः सिद्धान्तभाषिते ॥

तथाहि।

निकृष्टाधमयोर्जातं तद्दुःखस्यैव कारणम्।
दुष्पालितं कृतं ताभ्यां तद्राज्यं सर्वथा यतः ॥
विमध्यमस्य संपन्नं तत्स्वल्पसुखकारणम्।

यतः।

बहिर्भूतेन तेनेदं विहितं मन्दपालितम् ॥
मध्यमस्य पुनर्जातं तद्दीर्घसुखकारणम्।
यतः प्रविश्य तेनेदं पालितं किंचिदादरात् ॥
निःशेषसुखसंभारकारणं राज्यमुत्तमैः।
विशिष्टपालनाज्जातं तदुत्तमवरिष्ठयोः ॥

किं च।

एतदापिकराज्यानां पुष्टं कलयता मया।
सर्वमेव हि विज्ञातं यतः प्रोक्तं मनीषिभिः ॥

ते गुणास्तत्सुखं सा च विभूतिस्तच्च चेष्टितम् ।
ममापीह महाराज संपन्नं नास्ति संशयः ॥
इदं हि राज्यं कुर्वाणो भक्तिपह्वैः सुरादिभिः ।
अहं गुणगणोपेत इति धन्यतया स्तुतः ॥

तथा ।

स्वसंवेदनसंसिद्धं यदत्र परमं सुखम् ।
राज्ये मे तिष्ठतो भूप तत्तु वक्तुं न पार्यते ॥

तथा ।

कोटयो रत्नराशीनामसंख्यातं च मे बलम् ।
चतुरङ्गं महाराज विभूतिरियमीदृशी ॥

तथा ।

यत्सिद्धान्तोदितं कृत्यं कृतं तेन महात्मना ।
उत्तमेन तु देवाहं करोमीति विचेष्टितम् ॥
तत्कर्मपरिणामस्य यथाहमधुनोत्तमः ।
ज्ञातः सुतस्तथान्येऽपि निश्चष्टाद्या न संशयः ॥
अविच्छिन्नप्रवाहेण तद्राज्यमपरे ऽपरे ।
एकरूपमनेकेऽपि युगपद्भुञ्जन्ति पार्थिवाः ॥

ततो गृहीतभगवद्वचनभावार्थेनाभिहितं हरिनरेन्द्रेण । भदन्त यद्येते भुवनोदरविवरचारिणः सर्वेऽपि देहिनस्तस्य कर्मपरिणाम-महाराजस्य सूनवः परमार्थेन यदि च तदन्तरङ्गं चित्तवृत्ति-महाभूमिराज्यं तेभ्यः सर्वेभ्यस्तेन कर्मपरिणामेन दीयते तच्च दत्तं यदेकरूपमपि पात्रविशेषादनेकरूपतया परिणमति नानारूपाणां

च तेषां देहिनां विविधसुखदुःखहेतुत्वं प्रतिपद्यते तदेवं स्थिते वयमपि तस्य कर्मपरिणाममहाराजस्य सुता वर्तामहे । ततश्चास्माकमपि तद्राज्यमाभवत्येव । उत्तमसूरिणाभिहितं । महाराज सम्यग् निश्चितं बाढमाभवत्येव तद्राज्यं भवतः । पालयसि च त्वं विमध्यमराज्यं । केवलं न लक्षयसि । यतः साधयसि त्वं विभज्य रात्रिंदिवं धर्मार्थकामलक्षणं परस्परमबाधया त्रिवर्गं । एतदेव च विमध्यमराज्यलक्षणं प्राग्व्याख्यातं । तत्किं नावधारितं भवता । हरिराजेनोक्तं । अलं ममानेन विमध्यमराज्येन । भदन्त दाप्यतां मह्यमपीदमात्मीयमुत्तमराज्यं । सूरिराह । महाराज सुन्दरमिदं । केवलं ।

यथैतैः साधुभिर्लब्धमिदं राज्यं नरोत्तम ।
तथैव लभ्यते नूनं नापरं लाभकारणम् ॥
एतेऽप्यस्मिन् मयाख्याते स्वराज्येऽतिमनोहरे ।
अत्यन्तसस्पृहा जातास्तल्लाभार्थं यथा भवान् ॥
ततो मयोदिता भूप पूर्वमेते सुसाधवः ।
यथा भागवतीं दीक्षां विना नैतदवाप्यते ॥
ततोऽमीभिः प्रपन्ना सा दीक्षा कल्मषनाशनी ।
प्राप्तं च तन्महाराज्यं सुखसंभारकारणम् ॥
अतस्तवापि यद्यस्ति तत्र वाञ्छा नरेश्वर ।
राज्ये तद्गृह्यतामेषा दीक्षा भागवती त्वया ॥

हरिराजेनोक्तं ।

एतावन्मात्रतो नाथ प्रशमन्दोहदायकम् ।
यद्याप्यते महाराज्यं तत्ततः किं विलम्ब्यते ॥

येन संवत्सरो दृष्टः सहत्कामस्य सेवितः ।
तेन सर्वमिदं दृष्टं पुनरावर्तकं जगत् ॥
तत्सिद्धान्तप्रसादेन विज्ञाय सुखदुःखयोः ।
हेतुं जातः प्रबुद्धोऽहं विनष्टैवाप्रबुद्धता ॥
एवं च परितुष्टात्मा स प्रबुद्धो नराधिपः ।
तद्राज्यषद्धं निश्चित्य त्यागाज्जातो निरातुरः ॥
इदं प्रसङ्गतः सर्वं तुभ्यं हरिनरेश्वर ।
निवेदितं मया योऽर्थः प्रस्तुतस्तं निबोध मे ॥
यथा दोषाय संजाता महामोहादिसैन्यवः ।
सा च दृष्टिर्विशेषेण निकृष्टाधमयोस्तथा ॥
तथान्येऽप्यन्तरङ्गा भो लोका दोषाय देहिनाम् ।
दुष्टा विज्ञानशून्यानां जायन्ते नात्र संशयः ॥
यतो यद्भवता पृष्टमाकर्ण्य धनशेखरम् ।
भ्रमन्तमन्तरङ्गाभ्यां मित्राभ्यां परिपीडितम् ॥
यथान्यस्यापि दोषेण किं दोषी जायते नरः ।
येनासौ मित्रदोषेण पीड्यते धनशेखरः ॥
तदेवं भो महाराज युज्यते धनशेखरे ।
तादृक्मित्रदोषेण तादृग्भूतं विचेष्टितम् ॥

हरिनरेन्द्रेणोक्तं ।

एवमेतन्महाभाग नष्टो मे संशयोऽधुना ।
किं त्वन्योऽस्ति ममाद्यापि सन्देहः सोऽपनीयताम् ॥
ये कर्मपरिणामस्य षडमी परिकीर्तिताः ।

पुत्रास्तेषु गतेष्वेवं परतः किमजायत ॥
किं षडेव हि जातानि तानि राज्यानि नापरम्।
किं वा भवन्ति तादृंशि राज्यान्यत्र पुनः पुनः ॥
सूरिराह महाराज य एते भुवनोदरे।
विद्यन्ते देहिनः केचिन्नानाकाराश्चराचराः ॥
ते कर्मपरिणामस्य सर्वेऽपि परमार्थतः।
विज्ञेयाः षड्विधाकाराः पुत्रा नात्यत्र संशयः ॥
ततस्तेषु गतेष्वेवं तद्राज्यमपरे सुताः।
तादृशा एव भुञ्जन्ति दत्तं तेन महीभुजा ॥
तेषामपि भवत्येव तत्सुखासुखकारणम्।
निकृष्टाद्यभिधानं च तद्गुणैः संप्रवर्तते ॥

किं च।

तिष्ठन्ति दूरगास्तावदपरे तस्य सूनवः।
मामेव हि महाराज तस्य पुत्रं विलोकय ॥
यः कर्मपरिणामेन दत्तराज्यस्ततः परम्।
सिद्धान्तादिष्टसन्मार्गो वैराग्याभ्यासमंयुतः ॥
कृतपूर्वक्रियो राज्ये प्रविष्टस्तत्र सुन्दरे।
हतारिवर्गश्चारित्रधर्मसैन्यस्य पोषकः ॥
सोऽहमेभिः समायुक्तः सहायैर्वत साधुभिः।
राज्यं भुञ्जन्निहायात उत्तमो नाम तत्सुतः ॥
ये गुणा यत्सुखं या च विभूतिर्यच्च चेष्टितम्।
मया निवेदितं पूर्वं तस्य पञ्चमभूपतेः ॥

तद्दीयतां प्रसादेन मह्यमेषा लघु त्वया।
नाथ भागवती दीक्षा मा विलम्बो विधीयताम्॥
ततः सूरिस्तदाकर्ण्य हर्षविस्फारितेक्षणः।
हरिं प्रत्याह चाहक्तं चारु चारु नरेश्वर॥

तथाहि।

इदं विज्ञाय सद्राज्यं दीक्षालभ्यं सुखप्रदम्।
कर्त्ता सकर्णो नादाय लोकेन बकं हारयेत्॥
योग्यस्त्वमसि दीक्षाया भागवत्या न संशयः।
अपात्रे न वयं कुर्मो यत्नं तद् गृह्यतामियम्॥
ततस्तथेति भावेन प्रतिपद्य गुरोर्वचः।
सविवेकैः समालोच्य समं मन्त्रिमहत्तमैः॥
निजराज्ये च संस्थाप्य पुत्रं शार्दूलनामकम्।
दिनान्यष्ट जिनेन्द्राणां प्रविधाय महोत्सवम्॥
पूरयित्वार्थिसङ्घातं मानयित्वा गुरुजनम्।
विधाय नगरानन्दं कृत्वा सर्वं यथोचितम्॥
समं मयूरमञ्जर्या प्रधानैश्च नरेश्वरैः।
तस्योत्तमगुरोः पार्श्वे निष्क्रान्तो विधिपूर्वकम्॥
ततः संप्राप्य तद्राज्यं सततानन्दसुन्दरम्।
मोदमानो महाभागो विजहार महीतले॥

इतश्च।

भद्रेऽगृहीतसङ्केते मैथुनेन समेयुषा।
तेन सागरमित्रेण नाटितोऽहमनेकधा॥

नानारूपेषु देशेषु ततोऽहं धनलोलुपः ।
क्लेशराशिनिमग्नात्मा पर्यटामि पुनः पुनः ॥
अथान्यदा महारण्ये पतितोऽहं सुभीषणे ।
उपविष्टः श्रमोपेतो बिल्वपादपसन्निधौ ॥

ततश्च ।

तच्छाखानिर्गतं दृष्ट्वा प्रारोहं भूमिगामिनम् ।
खातवर्णैर्लक्षितं भद्रे मया तत्र निधानकम् ॥
ततः स सागरो भद्रे ज्ञातो मे प्रेरकस्तदा ।
उत्खनेदं यथा शीघ्रं निधानं धनशेखर ॥
ततः खाता मया भूमिर्दृष्टः सद्रत्नपूरितः ।
महाकुम्भः प्रभाजालैः प्रकाशितदिगन्तरः ॥
ततः प्रमुदितश्चित्ते तदाहं वरलोचने ।
प्रवृत्तो ग्रहणे तस्य सागरस्याज्ञया द्रुतम् ॥
यावद्भीषणनादेन स्फोटयन्निव दिक्पथम् ।
उद्भूतस्तत्र वेतालः कालाकारः सुदारुणः ॥
नयनोष्मासितज्वालः फेत्कारारावभासुरः ।
दीर्घदंष्ट्राकरालेन वदनेन यमाधिकः ॥
तेनाहमारटन्मुष्टेः कृत्वा वदनकोटरे ।
त्रिपाटितो यथा भद्रे गाढं कटकटायता ॥
अथान्तरे जरां प्राप्ता गुडिका मे चिरन्तनी ।
भूयो दत्तापरा तूर्णं भवितव्यतया तया ॥
ततस्तदीयमाहात्म्यात्संप्राप्तोऽहं यथा पुरा ।

तस्यां पापिष्ठवासायां पुर्यां सप्तमपाटके ॥
तत्रानुभूय दुःखानि भूयो भूयो वरानने ।
भ्रान्तोऽनन्तं पुनः कालं सर्वस्थानेषु सर्वथा ॥
न तद्दुःखं जगत्यस्ति यन्न प्राप्तं मयानघे ।
अन्यदा कृतसत्कर्मा प्रोक्तोऽहं भार्यया तया ॥

यथा ।

अस्त्यार्यपुत्र विख्यातं साह्लादं नाम पत्तनम् ।
बहिरङ्गं त्वया तत्र गत्वा स्थेयं यथा पुरा ॥

मयोक्तं । यदाज्ञापयति देवी । ततः कृतस्तया मम पुण्योदयः सहचरः । वितीर्णा गुडिका । विहितं मया प्रस्थानमिति ।

यदिदमसुलभं भो लभ्यमेभिर्मनुष्यै-
र्बहुविधभवचारात्यन्तरीणैर्नरत्वम् ।
तदपि नयनलोला मैथुनेच्छापरीता
लघु धनवललुब्धा नाशयन्त्येव मूढाः ॥

ततश्च ।

विगलितास्त इमे नरभावतः प्रबलकर्ममहाभरपूरिताः ।
सततदुःखमटन्ति पुनः पुनः सकलकालमनन्तभवाटवीम् ॥
तदिदमत्र निवेदितमञ्जसा जिनवचो ननु भव्यजना मया ।
इदमवेत्य निराकुरुत द्रुतं नयनसागरमैथुनलोलताम् ॥

इत्युपमितिभवप्रपञ्चायां कथायां लोभमैथुनचक्षुरिन्द्रियविपाकवर्णनः षष्ठः प्रस्तावः समाप्तः ॥

---

## अथ सप्तमः प्रस्तावः ।

अथास्ति जगदाह्लादं साह्लादं नाम तत्पुरम् ।
निःशेषभुवनाश्चर्यकारणं दुःखवारणम् ॥
यत्र रूपेण वीर्येण मिथःस्नेहेन लीलया ।
मिथुनानि प्रकुर्वन्ति रतिमन्मथविभ्रमम् ॥
तत्र निर्दलिताशेषशत्रुपूगो महारथः ।
तेजःप्रणतसामन्तो जीमूतो नाम पार्थिवः ॥
तस्यास्ति रतिसङ्काशा रतिसन्दोहदायिका ।
लीला नाम महादेवी सर्वान्तःपुरनायिका ॥
अथागृहीतसङ्केते भवितव्यतया तया ।
तदाहं गुडिकादानात्तस्याः कुक्षौ प्रवेशितः ॥
ततोऽहं नरकाकारे मासान्नव समर्गलान् ।
तत्र स्थित्वा विनिष्क्रान्तो योनियन्त्रनिपीडितः ॥
अथ मां वीक्ष्य सा लीला स्निग्धलोलविलोचना ।
जातो मे पुत्रकश्चारुरिति तोषमुपागता ॥
जात एवं मया सार्धं सोऽपि पुण्योदयस्तथा ।
केवलं नान्तरङ्गत्वात् दृष्टो वत लीलया ॥
अथ जीमूतराजाय प्रियङ्कर्या निवेदितः ।

दत्तं तस्मै महादानं तेन संतुष्टचेतसा ॥
प्रवर्तितो महानन्दः कृतं बन्धनमोचनम् ।
प्रहृष्टं निखिलं राज्यं वादितानन्दमर्दलम् ॥
गानपानमहादानखादनप्रवणे जने ।
अथ निर्वर्तितप्राये तत्र जन्ममहोत्सवे ॥
ज्योतिःशास्त्रे कृतोद्योगः सिद्धार्थो नाम विश्रुतः ।
पृष्टो जीमूतराजेन महासांवत्सरस्तदा ॥

यथा । निवेदयतार्यः कुमारजन्मनक्षत्रस्य कीदृशी ग्रहावलोकनेति । सिद्धार्थेनोक्तं । यदाज्ञापयति देवः । समाकर्णयत तावत् । अयमानन्दः संवत्सरः । ऋतुः शरत्कालः । मासः कार्त्तिकः । तिथिर्द्वितीयेऽति भद्रा । वारो बृहस्पतिः । नक्षत्रं कृत्तिका । राशिर्वृषः । योगो धृतिः । सौम्यग्रहनिरीक्षितं लग्नं । उच्चस्थानस्थिताः सर्वे ग्रहाः । ऊर्ध्वमुखा होरा । एकादशस्थानस्थिताः शुभतराः पापग्रहा इति । अपि च ।

जातोऽयमीदृशे राशौ कुमारो देव सुन्दरे ।
येनास्य संपदस्तुङ्गा भविष्यन्ति न संशयः ॥

राज्ञाभिहितं । आर्य क एते राशयः के वामीषां गुणा इति श्रोतुमिच्छामि । सिद्धार्थेनोक्तं । देव समाकर्णय । राशयस्तावदेते मेषो वृषो मिथुनः कर्कः सिंहः कन्या तुला वृश्चिको धनुर्मकरः कुम्भो मीन इति । एतेषाममी गुणाः । तद्यथा ।

चतुर्लोलः सदारोगी धर्मार्थे कृतनिश्चयः ।
पृथुजङ्घः कृतघ्नश्च विक्रान्तो राजपूजितः ॥

कामिनीहृदयानन्ददायको जलभीरुकः ।
चण्डकर्मा मृदुश्चान्ते मेषे जातो भवेन्नरः ॥
अपमृत्युर्भवेत्तस्य किलाष्टादशवत्सरे ।
पञ्चविंशतिपर्यन्तवर्षे वापि कथंचन ॥
भष्टत्ताभ्यां पुनर्जीवेच्छतमेकं म्रियेत वा ।
कृत्तिकास्वर्धरात्रेऽसौ चतुर्दश्यां च मङ्गले ॥
भोगी दाता शुचिर्दक्षः स्थूलगण्डो महागलः ।
तेजस्वी रागबहुलः कण्ठरोगी सुपुत्रकः ॥
सविलासगतिः सख्यो लाञ्छनी स्कन्धगण्डयोः ।
एवं गुणगणोपेतो वृषे जातो भवेन्नरः ॥
स समानां शतं जीवेत्पञ्चविंशतिको यदि ।
अश्वेचतुष्पदात्तस्य मरणं रोहिणीबुधे ॥
पुष्टाङ्गो दृष्टिलोलश्च मैथुनासक्तमानसः ।
धनाढ्यः करुणोपेतः कण्ठरोगी जनप्रियः ॥
गान्धर्वनाट्यकुशलः कीर्तिभागी गुणोत्कटः ।
गौरो दीर्घः पटुर्वाचि मिथुनोद्भूतमानवः ॥
जले तस्यापमृत्युः स्याद्वत्सरे किल षोडशे ।
अशीतिको म्रियेतासौ पौषमासे जलानले ॥
कार्यकारी धनी शूरो धर्मिष्ठो गुरुवत्सलः ।
शिरोरोगी महाबुद्धिः कृशाङ्गः कृतवेदकः ॥
प्रवासशीलः कोपान्धो बाल्ये दुःखी सुमित्रकः ।
भृतभृत्यो मनाग्वक्रः कर्कटोद्भूतमानवः ॥

पतनेन म्रियेतासौ वर्षाणां विंशतौ नरः ।
अशीतौ वा पुनः पौषे मृगशीर्षे सिते निशि ॥
क्षमी मानी क्रियायुक्तो वत्सलो मद्यमांसयोः ।
देशभ्रमणशीलश्च विनीतः शीतभीरुकः ॥
क्षिप्रकोपी सुपुत्रश्च जननीजनकप्रियः ।
व्यसनी प्रकटो लोके सिंहे जातो मनुष्यकः ॥
पञ्चाशत्को म्रियेतासौ यदि वा शतिको मघौ ।
मघासु जीवितं मुक्तेत्पुष्यचैत्रे शनैश्चरे ॥
विलासिनीजनाह्लाददायको धनपूरितः ।
दाता दक्षः कविर्वृद्धभावे धर्मपरायणः ॥
सर्वलोकप्रियो नाट्यगान्धर्वव्यसने रतः ।
प्रवासशीलः स्त्रीदुःखी कन्याजातो भवेन्नरः ॥
त्रिंशत्को म्रियते शस्त्राज्जलाद्वा यदि वा पुनः ।
अशीतौ मूलनक्षत्रे वैशाखे बुधवासरे ॥
अस्थानरोषणो दुःखी स्फुटभाषी क्षमान्वितः ।
चलाक्षश्चललक्ष्मीको गृहे दर्शितविक्रमः ॥
वाणिज्यदक्षो देवानां पूजको मित्रवत्सलः ।
प्रवासी सुहृदामिष्टस्तुलाजातो भवेन्नरः ॥
म्रियेत विंशतौ कुड्यपातादिभ्योऽथवा पुनः ।
अशीतावनुराधासु ज्येष्ठे मङ्गलवासरे ॥
बाल्यप्रवासी क्रूरात्मा शूरः पिङ्गललोचनः ।
परदाररतो मानी निष्ठुरः स्वजने जने ॥

साहसावाप्तलक्ष्मीको जनन्यामपि दुष्टधीः ।
धूर्तश्चौरोऽफलारम्भी वृश्चिकोद्भूतमानवः ॥
स चेच्चौरादिशस्त्राभ्यो म्रियेताष्टादशाब्दकः ।
पञ्चविंशतिको वापि ततो जीवति सप्ततिम् ॥
शूरः सत्यो धिया युक्तः सात्त्विको जननन्दनः ।
शिल्पविज्ञानसंयुक्तो धनाढ्यो वरभार्यकः ॥
मानी चारित्रसंपन्नो ललिताचरभाषकः ।
तेजस्वी स्थूलदेहश्च कुलघ्नो धनुजातकः ॥
स चोत्पत्तिदिनान्नो चेन्म्रियेताष्टादशे दिने ।
ततो जीवति वर्षाणां किलासौ सप्तसप्ततिम् ॥
कुजनेष्टो वशः स्त्रीणां पण्डितः पारदारिकः ।
गीतज्ञो लाञ्छनी गुह्ये पुत्राढ्यो मातृवत्सलः ॥
धनी त्यागी सुरूपश्च शीतालुर्भूरिबान्धवः ।
परिचिन्तितसौख्यश्च संजातो मकरे नरः ॥
म्रियते विंशतौ नोचेत्ततः शूलेन सप्ततौ ।
शनैश्चरे भाद्रपदे जीवितं स विमुञ्चति ॥
दातालसः कृतघ्नश्च गजेन्द्रतुरगस्वनः ।
शालूरकुक्षिर्निर्भीको धनभागी सशङ्कितः ॥
लब्धवृद्धियशो दक्षो मानविद्याकृतोद्यमः ।
पुण्याढ्यः स्नेहहीनश्च कुम्भे जातो भवेन्नरः ॥
स चेदष्टादशे वर्षे व्याघ्रेण न हतस्ततः ।
जीवेदशीतिं वर्षाणां चतुर्भिरधिकां नरः ॥

गम्भीरचेष्टितः शूरः पटुवाक्यो नरोत्तमः ।
कोपप्रसारणश्रेष्ठो न त्यागी बन्धुवत्सलः ॥
गान्धर्ववेदको नित्यं सेवकश्चेतरे जने ।
गच्छति त्वरया मार्गे मौने जातो मनुष्यकः ॥
तदेवं देव ये प्रोक्ता मेषादीनां गुणा मया ।
एते पूर्वं स्वशिष्येभ्यः सर्वज्ञेन निवेदिताः ॥

तथाहि ।

ज्योतिर्ज्ञानं निमित्तं च यच्चान्यदपि तादृशम् ।
अतीन्द्रियार्थं तच्छास्त्रं सर्वं सर्वज्ञपूर्वकम् ॥
ततोऽत्र व्यभिचारः स्यात् केवलं नरदोषतः ।
विभागं हि न जानीते शास्त्रस्याल्पश्रुतो नरः ॥

एवं च स्थिते ।

क्रूरग्रहैर्न दृष्टाश्चेद्बलवन्तश्च राशयः ।
ततोऽमीषां गुणाः सत्या नान्यथेत्यवधारय ॥

ततो जीमूतराजेनोक्तं । एवमेतन्नास्त्यत्र सन्देहः । सम्यगावेदितमार्येण । ततः परिपूज्य दानसम्मानादिना प्रहितः सिद्धार्थः । प्रतिष्ठितं च महानन्दपुरःसरं समुचितसमये मम घनवाहन इति नाम । इतश्चास्ति तस्य जीमूतनृपतेः कनिष्ठो भ्राता नीरदो नाम । तस्य पद्मा नाम महादेवी । सापि तस्मिन्नेवावसरे दारकं प्रसूता । प्रतिष्ठितं तस्याकलङ्क इत्यभिधानं ।

ततोऽहं लालितोऽत्यन्तं स च नीरदनन्दनः ।
क्रमेण सुखसन्दोहैस्तत्र वृद्धिमुपागतौ ॥

क्रीडितं च समं तेन बाल्ये धूल्यादिना मया ।
पितृव्यपुत्रभावेन न जातो विरहः क्वचित् ॥
ततश्च ।
कौमारे वर्तमानस्य भवितव्यतया तया ।
सार्धं तेनाकलङ्केन मम मैत्री नियोजिता ॥
जातः परस्परं स्नेहो निर्मिथ्यं गाढमावयोः ।
एकोपाध्यायहस्ताच्च गृहीताः सकलाः कलाः ॥
तथा च लालमानोऽहमकलङ्कय सुन्दरि ।
प्राप्तौ क्रमेण तारुण्यं मकरध्वजमन्दिरम् ॥
स चाकलङ्को बाल्येऽपि कौमारे यौवनेऽपि च ।
लघुकर्मतया धन्यो न स्पृष्टो दुष्टचेष्टितैः ॥
किं तर्हि
प्रशान्तमूर्तिः पुण्यात्मा विनीतो देवपूजकः ।
प्रियवादी स्थिरोऽत्यन्तं निर्मलोमममानसः ॥
लोकरागः प्रकृत्यैव विकाररहितः सदा ।
अज्ञातपरमार्थोऽपि तत्त्ववेदीव भासते ॥
ततः सुसाधुसम्पर्कादुद्रिक्तस्तस्य विवेकः ।
व्याख्यानश्रवणाज्जातः कुशलोऽसौ जिनागमे ॥
तथापि स्नेहभावेन मया सार्धं दिने दिने ।
सोऽकलङ्कस्तदा भद्रे विलसत्येव लीलया ॥
अथान्यदा मया नीतः प्रभाते स विचक्षणः ।
मनोहारिणि क्रीडार्थमुद्याने सुधमन्दने ॥

ततो मनोपरोधेन क्रीडिला प्रहरद्वयम् ।
अथ मध्याह्नकालेऽसौ प्रस्थितो गृहसंमुखम् ॥
मयोक्तमत्र विश्रम्य मन्दिरे काननान्तरे ।
ततो गेहे गमिष्यावः स्थीयतां चणमात्रकम् ॥
ततोऽकलङ्कस्तच्छ्रुत्वा मामकं वचनं, तदा ।
उद्यानमध्यभागस्थे प्रविष्टो जिनमन्दिरे ॥
तत्राभिवन्द्य सद्भक्त्या भगवन्तं जिनेश्वरम् ।
निर्गतेन मया सार्धं दृष्टास्तेन सुसाधवः ॥
ते च तत्राष्टमीं मत्वा स्वकीयवसतेस्तदा ।
आगता लोकनाथस्य वन्दनार्थमुपोषिताः ॥
ततस्ते विधिवत्सर्वे वन्दित्वा भुवनेश्वरम् ।
बहिः सिद्धान्तसूत्राणि गुणयन्ति पृथक् पृथक् ॥
परस्परं स्थिता दूरे स्थिरा निर्मलकान्तयः ।
बहिर्द्वीपसमुद्रेषु चन्द्रा इव महाधियः ॥
अत्यन्तसुन्दराकारा यथेष्टफलदायिनः ।
तदानीं ते विराजन्ते कल्पपादपसन्निभाः ॥

ततोऽभिहितमकलङ्केन । कुमार घनवाहन पश्य पश्यैमे मुनयो भगवन्तो मकरकेतना इव रूपेण दिनकरा इव तेजस्वितया सुरशिखरिण इव स्थिरतया सागरा इव गम्भीरतया महर्द्धिसुरकुमारा इव लावण्यसमुदयेन दृश्यन्ते। तत् किं पुनर्भगवताममीषामेवंविधगुणयोगेन भुवनराज्योचितानामपीदृशामत्यन्तदुष्करकष्टचर्याग्रहणे कारणमभूदिति सकौतुकं मञ्चेतः। तदेहि

वानेन महात्मना विरचिते मन्त्रमण्डले प्रविशत येनेदं प्रशाम्यति भवतां यथास्मद्गृहेषु प्रशान्तं । ते तु लोकास्तेषां वचनं केचिदाकर्णयन्ति केचिदवधीरयन्ति केचिदुपहसन्ति केचिदुल्लुण्ठयन्ति केचिद्विघ्नन्ति केचित्प्रतिकूलयन्ति केचित्तान्प्रति दुष्यन्ति केचित्प्रहरन्ति । ततस्ते मण्डलस्था लोकाः स्थितास्तान्प्रति मौनेन । केचित्तु पुण्यभाजस्तेषां वचनं कुर्वन्ति । ततो ममापि तथाभव्यतया प्रतिभातं तत्तेषां मण्डलस्थानां लोकानां सम्बन्धि वचनं । प्रहृष्टोऽहमुत्प्लुत्य तत्र मण्डले । दृष्टास्ते मया ग्रामीणलोकाः प्रबलपवनप्रेरणादतिभरीभूतेन तेन प्रदीपनकेन बलादारटन्तो दह्यमानाः । ते तु मण्डलस्था लोकाः कियन्तोऽपि प्रव्रजिताः । ततोऽहमपि तेषां मध्ये प्रव्रजित । तदिदं भद्र मम वैराग्यकारणमिति ॥

ततो हृष्टोऽकलङ्कस्तेनाथ चलितो द्वितीयमुनेरभिमुखं । न बुद्धो मया कथानकभावार्थः । ततः पृष्टो मयाकलङ्कः । यथा कुमार

किमनेन तवाख्यातमीदृग् वैराग्यकारणम् ।
इदं चाकर्ण्य सहसा किं वा हृष्टोऽसि चेतसा ॥

अकलङ्केनोक्तं । आकर्णय ।

योऽयं लोकोदरो ग्रामो मुनिना भो निवेदितः ।
यत्र वास्तव्यको ह्येष स संसारः प्रतीयताम् ॥
रात्रिरेव सदा तत्र महामोहतमोमयी ।
रागद्वेषाग्निना तस्यां नित्यलग्नं प्रदीपनम् ॥
धूमोऽत्र तामसो भावः स च तत्र प्रसर्पति ।
ज्वालाकलापसंकाशो राजसो भाव उच्यते ॥

अन्यच। तत्र संसारप्रदीपनके

समुल्लसन्ति कलहा वंशस्फोटरवैः समाः।

रागद्वेषाग्निनोत्तप्ताः समुत्तिष्ठन्ति जन्तवः॥

ते च कोलाहलं तत्र कुर्वन्त्येव सुदारुणम्।

क्रन्दन्ति डिम्भरूपाभाः कषायाग्निसंतापिनः॥

अशुद्धलेश्यासंज्ञाश्च धावन्त्येता महेलिकाः।

अन्धा इव रटन्त्यत्र मूर्खा रागाग्नितापिताः॥

जानन्तोऽपि क्रियाहीना नराः क्रोशन्ति पङ्गवः।

सदा किलिकिलायन्ते नास्तिकाः पिङ्गसन्निभाः॥

मुष्णन्ति धर्मसर्वस्वं नृणामिन्द्रियतस्कराः।

तथात्मगेहसाराणि दह्यन्ते रागवह्निना॥

केचित्तु परिदेवन्ते तद्दृष्ट्वा कृपणा इव।

किं कुर्मः शक्यते नेदं विध्यापयितुमीदृशम्॥

तदेवमीदृशं भद्र सदा गाढविसंस्थुलम्।

भवप्रदीपनं रौद्रं साधुना तेन वर्णितम्॥

परस्परं हि लोकानां तत्र त्राता न विद्यते

अमातापुत्रकं तेन कारणेन निवेदितम्॥

मन्त्रवादी पुनस्तत्र विबुद्धः परमेश्वरः।

सर्वज्ञस्तेन चोत्थाय विहितं तीर्थमण्डलम्॥

तच्च गोचन्द्रकाकारे मध्यलोके प्रकाशितम्।

कृतात्मकवचेनैव सूत्रमन्त्रस्य रेखया॥

आह्वानं जीवलोकानां धर्मदेशनया कृतम्।

उत्थापितास्ते तेन तीर्थकृन्मन्त्रवादिना ॥
ततः केचिन्महासत्त्वा भव्याः कल्याणभागिनः ।
श्रुत्वा भगवतो वाक्यं स्थितास्तत्तीर्थमण्डले ॥
ते केवलमतिस्तोका यतस्ते भवचारिणाम् ।
अनन्तभागे वर्तन्ते ते च मुक्ताः प्रदीपनात् ॥
अन्ये पुनर्महामूढा रागद्वेषाग्निदीपितम् ।
विध्यापयन्ति विषयैस्तत्संसारप्रदीपनम् ॥
यद्वाः पुत्रकलत्रादौ कुर्वन्ति धनसञ्चयम् ।
तदिदं तृणकाष्ठानां भारैर्गाढं विवर्धनम् ॥

तथा ।

मायालोभमदक्रोधान् कुर्वन्ति सततं जनाः ।
स एष घृतकुम्भानां प्रक्षेपस्तस्य वर्धकः ॥
तीर्थमण्डलमध्यस्थैर्न तिष्ठन्ति निवारिताः ।
नापि प्रशमतोयेन तत्ते विध्यापयन्त्यहो ॥
प्रवेशं च न कुर्वन्ति तत्र सत्तीर्थमण्डले ।
नाकर्णयन्ति तद्वाक्यमुपहासादि कुर्वते ॥
केचिदेव प्रबुध्यन्ते यथायं मुनिसत्तमः ।
प्रबुद्धो वचनात्तेषां प्रविष्टस्तीर्थमण्डले ॥
दृष्टाग्नानेन ते लोकाः संसारोदरचारिणः ।
रागद्वेषाग्निनात्यन्तं दह्यमानाः सुविक्लवाः ॥
अशुद्धाध्यवसायाख्यः पवनः प्रेरयत्यलम् ।
तत्र लोकोदरग्रामे तं रागद्वेषपावकम् ॥

ततः सोऽतिभरीभूतो जीवान् ग्रासेयकानिव।
दहत्यारटतोऽमीषां मुनीनां पश्यतामपि॥

यत्पुनरनेन मुनिनाभिहितं यथा ते तु मण्डलस्था लोकाः कियन्तोऽपि प्रव्रजितास्ततोऽहमपि तेषां मध्ये प्रव्रजितः तद्भद्र घनवाहन वक्रोक्तिगर्भमवगन्तव्यं। मयोक्तं। कुमार कथमीदृशी पुनरत्र वक्रोक्तिः। अकलङ्केनोक्तं।

सत्तीर्थमण्डले तत्र यतो लोकाश्चतुर्विधाः।
साधवः श्रावकाः साध्यः श्राविकाश्च व्यवस्थिताः॥
ततः प्रव्रजितास्तत्र कियन्तोऽपि न शेषकाः।
एषोऽपि च मुनिस्तेषां मध्ये प्रव्रजितः स्फुटम्॥
तदेवमीदृशं भद्र वक्रोक्त्या तेन साधुना।
प्रदीपनकमुद्दिष्टं चारु वैराग्यकारणम्॥
इदं च सकलं बुद्धं यच्चमत्कारकारणम्।
मया कथयतोऽस्यैव हृष्टोऽहं तेन चेतसा॥
चिन्तितं च मया भद्र सत्यमेतन्मुनेर्वचः।
सतां सदा प्रदीप्तो हि भवो वैराग्यकारणम्॥

तथाहि।

प्रदीपनकदाहेन दाह्यन्तीह मानवाः।
आत्मानं ये जडास्तस्मान्निःसरन्ति महाधियः॥

अन्यच्च।

आवयोः प्रतिबोधार्थमिदमेतेन साधुना।
प्रदीपनकमुद्दिष्टमात्मवैराग्यकारणम्॥

तथाहि किल ।

प्रदीपनकसङ्काशे संसारे दह्यमानयोः ।
युवयोरपि युक्तं हि प्रवेष्टुं तीर्थमण्डले ॥
भावतोऽत्र प्रविष्टानां धन्यानां तीर्थमण्डले ।
रागद्वेषाग्निना दाहो न समस्ति कदाचन ॥
एतच्च रोचते मह्यं मुनेराकूतमुत्तमम् ।
तुभ्यं किं रोचते नेति न जाने घनवाहन ॥
ततो मयाकलङ्कस्य तच्छ्रुत्वा वचनं तदा ।
मौनमालम्बितं भद्रे पापपूरितचेतसा ॥

अत्रान्तरे द्वितीयस्य मुनेर्मूलं मया सह ।
सोऽकलङ्कस्तदा प्राप्तो विहितं तस्य वन्दनम् ॥
पृष्टश्चावसरे साधुः किं ते वैराग्यकारणम् ।
मुनिराह यथा सौम्य समाकर्णय साम्प्रतम् ॥
आपानकं मया दृष्टं मद्यपानपरायणम् ।
तदेव मम संजातं भद्र वैराग्यकारणम् ॥
मदाघूर्णितसर्वाङ्गस्तत्राहं मत्तपालकः ।
आसं ततः कृपोपेतैर्ब्राह्मणैः प्रतिबोधितः ॥

अकलङ्केनोक्तं ।

यादृगापानकं तद्भो भवांस्तत्र यथा स्थितः ।
ये च ते ब्राह्मणाः सर्वमेतदाख्यातुमर्हसि ॥

मुनिनोक्तं ।

अनेकवृत्तवृत्तान्तमनन्तजनसङ्कुलम् ।

यथास्थितं तदापानं को हि वर्णयितुं क्षमः ॥
तथापि लेशतः किंचित्तत्स्वरूपं नरोत्तम ।
पुरस्ते वर्णयिष्यामि तत्सम्यगवधारय ॥

तद्यथा ।

बहुभेदवरासवतुष्टजनं वरभाजनराजि विचित्रसुरम् ।
शितिनीरजरञ्जितसच्चषकं जनमोदनकारणसत्सरकम् ॥
मदिरामदघूर्णितसर्वजनं बहुलासविलासविकासकरम् ।
लसदुद्भटबोलविगानपरं कृततालमहारवरासशतम् ॥

अन्यच्च ।

प्रौढमनोरमकान्तजनाढ्यं गाढमदोद्धुरयोषिदुपेतम् ।
आदिनिवेशविहीनमनन्तं लोकनभोभिधभूमिनिविष्टम् ॥
वादितमर्दलकोटिसकांस्यं वैणिकनादविवर्धिततोषम् ॥
वंशविरावसमुद्धतबोट्टं बोट्टविघोषितगोत्रसहस्रम् ॥

एवं च ।

नर्तनगानविलासनपानैः खादनदानविभूषणमानैः ।
संततभावरसैः समुपेतं लोकचमत्कृतिकारणमेतत् ॥

तदेवं सर्वसामग्रीयुक्तं दर्शितविभ्रमम् ।
आपानकं मया भद्र तस्य नित्यं निषेवितम् ॥
लोके नास्ति तदाश्चर्यं नापि तत्संविधानकम् ।
यत्तत्रापानके सौम्य न मया प्रविलोकितम् ॥
अनन्तास्तत्र विद्यन्ते ये लोका मदघूर्णिताः ।
न चेष्टन्ते न भाषन्ते चिन्तयन्ति न किंचन ॥

न च संव्यवहारं ते कंचित्कुर्वन्ति लौकिकम् ।
मृतमूर्छितरूपेण सदा तिष्ठन्ति केवलम् ॥
अनन्तास्त्वपरे लोकाः सद्रूपाकारधारकाः ।
किं तु ते लोककार्याणि विदधत्यन्तरान्तरा ॥
तथान्ये तादृशा एव मदिरामदघूर्णिताः ।
असंख्यास्तत्र विद्यन्ते नरा भोः पार्थिवादयः ॥
अन्ये पुनरसंख्याता निर्भरं मद्यपायिनः ।
न जिघ्रन्ति न पश्यन्ति नापि शृण्वन्ति किंचन ॥
लुठन्तः केवलं भूमावाराटीर्मुञ्चमानकाः ।
लिहन्ति जिह्वया किंचिन्मदेन हतमानसाः ॥
तथापरे पुनस्तत्र लोका जिघ्रन्ति किंचन ।
न शृण्वन्ति न पश्यन्ति तेऽप्यसंख्याः प्रकीर्तिताः ॥
अन्ये तु लोचनोन्मेषात्पश्यन्तोऽपि पुरःस्थितम् ।
नाकर्णयन्त्यसंख्याता मदाघूर्णितचेतनाः ॥
संख्यातीताः पुनर्भद्र लोकास्तत्रापरे मया ।
मदिरामददोषेण लक्षिताः शून्यमानसाः ॥
अन्ये पुनरसंख्याता दृष्टाः प्रस्पष्टचेतनाः ।
केवलं तेषु दुर्मद्यं सदाकालमवस्थितम् ॥

ततश्चैते

छिद्यन्ते भद्र भिद्यन्ते पाट्यन्ते दुष्टवैरिकैः ।
परस्परमदाघाताः कुर्वन्ते तीव्रवेदनाः ॥
असंख्याः पुनरन्येऽपि लोकास्तत्र विलोकिताः ।

आपानके मया सौम्य मदिरोद्भ्रान्तचेतसः ॥
नास्ति तेषामकर्तव्यं बिभ्रतां पशुरूपताम् ।
आराटीस्तेऽपि मुञ्चन्ति गच्छन्ति जननीमपि ॥
धर्माधर्मं न जानन्ति सर्वकार्याणि कुर्वते ।
अव्यक्तघोषास्तिष्ठन्ति लोलमाना महीतले ॥
केचिदुत्प्लुत्य गच्छन्ति मदिरान्धा विहायसा ।
केचिज्जले निमज्जन्ति नितरां मदनिर्भराः ॥

अन्यच्च ।

तेऽपि कुर्वन्ति दुर्मद्यं युध्यन्ते च परस्परम् ।
सहन्ते तीव्रदुःखानि मद्यं सर्वापदां पदम् ॥
तथान्ये तत्र विद्यन्ते संख्यातीता मनुष्यकाः ।
ते पुनर्द्विविधा ज्ञेया गाढमत्तास्तथेतरे ॥
अत्र ये गाढमत्तास्ते लोलमाना भुवस्तले ।
वान्तं पित्तं शकृन्मूत्रं भक्षयन्ति वराककाः ॥
इतरे भद्र संख्येयास्ते पुनर्मदिरातुराः ।
युध्यन्ते बहु वल्गन्ते नृत्यन्त्युच्चैर्हसन्ति च ॥
गायन्ति बहु भाषन्ते पर्यटन्ति निरर्थकम् ।
लुठन्ति भूयो धावन्ति विलासोल्लासतत्पराः ॥
मलाविलानि लाम्बालिस्रेसपूर्णानि योषिताम् ।
चुम्बन्ति वक्त्रनेत्राणि आचरन्त्यसमञ्जसम् ॥
अनेकबिब्बोकपरा भ्रातापित्रादिमारणम् ।
अनार्यकार्यचौर्यादि सर्वं ते कुर्वते नराः ॥

गृह्यन्ते राजपुरुषैः सहन्ते तीव्रवेदनाः।
मद्यान्नैव विरज्यन्ते मार्यमाणा अपि स्फुटम्॥
अन्ये पुनरसंख्यातास्तुच्छन्दव्यवस्थिताः।
लोकाः सन्ति मदाघाताः सदा कलकलप्रियाः॥
वेणुवीणाकलं गीतं नाटकप्रेक्षणानि च।
विलासास्तूर्यनिर्घोषा नोपशाम्यन्ति तत्पुरः॥
तेऽपि नृत्यन्ति वल्गन्ते हसन्त्युच्चै रुदन्ति च।
सार्धं तेऽप्यात्मयोषाभिः कुर्वन्त्यात्मविडम्बनम्॥

किं च।

मदिरामददोषेण शोकेर्ष्यागर्वविह्वलाः।
चतुष्टयेऽपि ते लोकाः सदुःखाः सुखमानिनः॥
संख्याताः पुनरन्येऽत्र सन्त्यापानकवर्तिनः।
ये नो पिबन्ति तन्मद्यं मध्यस्थाः परमासते॥
ततस्ते तेन लोकेन सततं मद्यपायिना।
अपिबन्तोऽभिधीयन्ते ब्राह्मणा इत्यसूयया॥

तथा।

तस्मादापानकादन्ये बहिर्भूता महाधियः।
अनन्ता भद्र विद्यन्ते लोकास्ते मदवर्जिताः॥
आपानकं हि पश्यन्तस्तादृशं ते विसंस्थुलम्।
तस्मान्मुक्ताः प्रमोदन्ते निर्बाधाः सततोत्सवाः॥

इतश्च।

आद्येषु भद्र लोकेषु स्थित्वाहं मदघूर्णितः ।
लुठंस्ततः प्राप्तो द्वितीयेषु कथंचन ॥
ततस्तेषु पुनः स्थित्वा तथैव मदघूर्णितः ।
गतस्तृतीयलोकेषु लुठन्नुद्दामलीलया ॥
स्थित्वा तेष्वपि भूयांसं कालं मद्येन विक्लवः ।
गतश्चतुर्थलोकेषु ततोऽहं मदिरातुरः ॥
एवं च ये मया पूर्वं कथितास्ते चयोदश ।
लोकभेदाः समासेन स्वरूपेण च वर्णिता ॥
तेषामाद्यश्च यो भेदो यौ च पर्यन्तवर्तिनौ ।
एतत्त्रयं विमुच्याहं शेषभेदेषु हिण्डितः ॥
दशापि ते मया भेदा भद्रापानकवर्तिनः ।
अनन्तवाराः पापेन भूयो भूयो निषेविताः ॥

ततश्च ।

वान्तपित्ताशुचिश्लेष्ममूत्रजाम्बालपिच्छिले ।
अतिबीभत्सदुर्गन्धे तत्रापानकभूतले ॥
क्वचिल्लुठन् क्वचिद्रिङ्गन् क्वचित्सर्पंस्ततस्ततः ।
उत्तिष्ठन्निपतन्नुच्चैरारटन्मद्यवेगतः ॥
हसन्नृत्यन् रुदन् धावन् युध्यमानो जनैः सह ।
आस्फोट्यमानो बलिभिः कुट्यमानः क्षणे क्षणे ॥
प्रहारजर्जरो देहे दुःखलक्षैः प्रपीडितः ।
एवं विचरितस्तत्र भद्राहं बहुशस्तदा ॥

अन्यदा दृष्टोऽहं तैरापानकमध्यस्थैर्माहणैः । संजाता तेषां

भगवतां ममोपरि करुणा। चिन्तितमेतैः। यथा। अयं मद्यदोषेण भूरि दुःखमनुभवति वराकः। ततः कथंचित्कारयामोऽमुं मद्यविरतिं येन यथा वयं सुखिनः संपन्नास्तथायमपि सुखितो भवति। ततो विहितस्तैर्मम प्रतिबोधनार्थं यत्नः। अहं तु मदिरामदाघूर्णितः पूत्कुर्वतामपि तेषां न किंचिच्चेतयामि अलब्धचेतनश्च पुनः पुनः पर्यटामि तेषु सर्वेषु लोकभेदेषु। बहुशो वदतां पुनः क्वचित्तेषां ब्राह्मणानां दत्तो मया हुंकारः। ततस्तावत्तैर्धर्तितं यावदपगतो मे मदिराघस्मरकः। समासादिता चेतना। दत्तं प्रतिवचनं। ततः कथितास्तैर्मम मद्यदोषाः। प्रत्यायितोऽहं। कारितो मद्यविरतिं। संजातोऽहमपि तादृशो ब्राह्मणः। ते तु ब्राह्मणाः सर्वेऽपि प्रव्रजिताः। ततोऽहमपि तेषां मध्ये प्रव्रजितः। केवलं न जीर्यति ममाद्यापि निःशेषं मद्याजीर्णं। तदपि प्रव्रज्यया जरयिष्यामि। तदिदं भद्र मम वैराग्यकारणमिति। तदेवं भद्रेऽष्टचीतसङ्केते यावदिदमावेदयति स साधुस्तावदकलङ्कस्य किमनेन निवेदितमिति प्रवृत्तो विमर्शः। ततो विचारयतः संजातं जातिस्मरणं। स्मृतं पूर्वभवाभ्यस्तं श्रुतं। ततो लक्षितो मुनिवचनस्य भावार्थः। प्रमुदितो मनसा। वन्दितो मुनिवरः। प्रवृत्तस्तृतीयमुनेरभिमुखं।

पूर्ववत्पुनः पृष्टो मया यथा किमनेनाख्यातमिति। ततोऽभिहितमकलङ्केन। भद्र घनवाहन अयमपि संसार एवापानकरूपतयानेन मुनिनात्मनो वैराग्यकारणमित्याख्यातः। तथाहि। सत्यमापानकरूप एवायं हन्त संसारो वर्तते। यतोऽत्र वृत्ता वर्तन्ते वर्त्स्यन्ति चानन्ता वृत्तान्ताः। मत्तपालकायन्तेऽचानन्ता जीवाः।

विविधमद्यायतेऽष्टविधं कर्मप्रकृतिजालं। विशेषतः पुनरासवायन्ते कषायाः। सरकायन्ते नोकषायाः। सुरायन्ते घातिकर्माणि। विचित्रभाजनायन्ते आयूंषि। तदाधारतया चषकायन्ते जन्तुशरीराणि। कर्ममद्योपयोगहेतुतया नीलनीरजायन्ते तेषु हृषीकाणि तद्विभूषकतया। लौल्यहेतुतया च घूर्णन्ते कर्ममद्यमत्ताः सर्वेऽमी जन्तवः। कुर्वन्ति रासविलासलासविकासहासविब्बोकादिकलकलं। मर्दलायन्तेऽत्र कलहाः। कंसालकायन्ते सगमगायन्तः खलजनाः। वीणायन्ते दुःखितजनपरिदेवनानि। वंशरवायन्ते सशोकलोककरुणकूजितानि। मुगुन्दशब्दायन्त आपद्गतजनतिमितिमायितानि। कंसिकायन्ते प्रियविप्रयोगादौ जनदैन्यरुण्टितानि। वोद्रवृन्दायन्ते गाढमत्ततया मूर्खलोकाः। कमनीयनरायन्ते विबुधाः। प्रौढललनायन्ते तदाप्सरसः। अनादिनिधनं चेदं संसारापानकं सदा निविष्टं लोकाकाशभूमौ युक्तं नर्तनगानविलसनखादनपानदानमानविभूषणादिभिः समस्तभावैर्लौल्याभिवृद्धिकारणं जडानां विरागताहेतुर्विवेकिनां। ये चानेन मुनिना तत्रापानके त्रयोदशभेदा लोकाः कथितास्तेऽत्र जीवा द्रष्टव्याः। तथाहि। प्रथमं प्रतिपादितस्तावदसांव्यवहारिको जीवराशिः। तदनन्तरं निवेदिताः सांव्यवहारिका वनस्पतयः। ततः कथिताः पृथिव्यप्तेजोवायवः। ततो दर्शिता द्वीन्द्रियाः। ततो निर्दिष्टास्त्रीन्द्रियाः। ततो वर्णिताश्चतुरिन्द्रियाः। ततः प्रख्यापिता असंज्ञिपञ्चेन्द्रियाः। ततः प्रकीर्तिता नारकाः। ततः संगीताः पञ्चेन्द्रियतिर्यञ्चः। तदनन्तरमुद्दिष्टाः संमूर्छनजगर्भजभेदेन द्विविधा मनुष्याः। ततः प्रकाशिताश्चतुर्नि-

कायवर्तिनो देवाः। ततः प्रकाशिता ब्राह्मणा इति वाचोयुक्त्या संयतमनुष्याः। ततः संशब्दिताः संसारापानकाद्दहिर्भूता भगवन्तो मुक्तात्मानः। उद्योतितं सर्वेषां सम्बन्धि संख्याप्रमाणं। निगदितं लेशोद्देशतो लक्षणं। सूचितानि तेषां सम्बन्धीनि विविधसंविधानकानि। अभिहितश्च स तदा तन्मध्ये कर्ममद्यपानेन मुनिनात्मा। आख्यातमसांव्यवहारिकजीवराशिमध्ये प्रथममात्मनोऽवस्थानं। प्रकटितमनन्तकालात्कथंचित्ततो निर्गमनं। तदनन्तरमाविर्भावितः सांव्यवहारिकवनस्पतिष्वात्मनो निवासः। ततो व्याहृतं दशस्वपि स्थानेषु भूयो भूयः पर्यटनं। निषिद्धमसांव्यवहारिकसंयतमनुष्यमुक्तात्मसु गमनं। विस्फारितास्तेषु दशसु स्थानेष्वात्मनः संभविन्यस्तीव्रदुःखविडम्बनाः।

> तदेवं भद्र संसारो महापानकसन्निभः।
> आत्मनो दुःखहेतुश्च मुनिना तेन दीपितः॥
> यत्तु तैर्ब्राह्मणैः पश्चाद्दृष्टोऽहं प्रतिबोधितः।
> यत्नेनेत्यादि तत्सर्वं युज्यमानमुदाहृतम्॥

तथाहि।

> अनादिभवभावस्य तत्स्वभावत्वयोगतः।
> उत्कृष्टाद्यास्वतीतासु तथा कर्मस्थितिष्वलम्॥
> भूयो भूयः सुसाधूनां सम्पर्केऽपि नरादिषु।
> प्राप्ते द्रव्यश्रुते भूरिवाराघर्षणघूर्णनात्॥
> यद्वावाप्नोति सम्यक्त्वं न ज्ञानं नापि सत्क्रियाम्।
> जीवः सुसाधुमध्येऽपि कर्ममद्येन घूर्णितः॥

सोऽयं घस्मरको भद्र घोरो भूरिभवावहः ।
येन विश्रान्तचित्तोऽयं बभ्रमीति पुनः पुनः ॥
समस्तेष्वनुकूलेषु ततः कालादिहेतुषु ।
राधावेधोपमं भद्र जीवोऽयमतिदुर्लभम् ॥
सद्दर्शनमवाप्नोति कर्मग्रन्थिं सुदारुणम् ।
निर्भिद्य शुभभावेन कदाचित्कश्चिदेव हि ॥
सुसाधुब्राह्मणानां भो जीवं पूत्कुर्वतामलम् ।
धर्मदेशनया बोधः सोऽयं झंकार उच्यते ॥
दर्शनं मुक्तिबीजं च सम्यक्त्वं तत्त्ववेदनम् ।
दुःखान्तकृत्सुखारम्भः पर्यायास्तस्य कीर्तिताः ॥
सति चास्मिन्नसौ धन्यः सम्यग्दर्शनसंयुतः ।
तत्त्वश्रद्धानपूतात्मा रमते न भवोदधौ ॥
स पश्यत्यस्य यद्रूपं भावतो बुद्धिचक्षुषा ।
सम्यक् शास्त्रानुसारेण रूपं सद्याचिरोगवत् ॥
तद्दृष्टा चिन्तयत्येवं प्रशान्तेनान्तरात्मना ।
भावगर्भं यथाभावं परं संवेगमाश्रितः ॥

यदुत

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुतः ।
क्लेशाय केवलं पुंसामहो भीमो भवोदधिः ॥
सुखाय तु परं मोक्षो जन्मादिक्लेशवर्जितः ।
भयशक्त्या विनिर्मुक्तो व्याबाधावर्जितः सदा ॥
हेतुर्भवस्य हिंसादिर्दुःखाद्यन्वयदर्शनात् ।

मुक्तिः पुनरहिंसादिर्य्याबाधाविनिर्मुक्तितः ॥
बुद्ध्वैवं भवनैर्गुण्यं मुक्तेश्च गुणरूपताम्।
तदर्थं चेष्टते नित्यं विशुद्धात्मा यथागमम् ॥
दुष्करं क्षुद्रसत्त्वानामनुष्ठानं करोत्यसौ।
मुक्तौ दृढानुरागत्वात्कामीव वनितान्तरे ॥
उपादेयविशेषस्य न च सम्यक्प्रसाधनम्।
दुनोति चेतोऽनुष्ठानं तद्भावप्रतिबन्धतः ॥
ततश्च दुष्करं तत्र सम्यगालोच्यते यदा।
अतोऽन्यद्दुष्करं न्यायाद्धेयवस्तुप्रसाधनम् ॥
व्याधिग्रस्तो यथारोग्यलेशमासादयन् बुधः।
कष्टेऽप्युपक्रमे धीरः सम्यक्प्रीत्या प्रवर्तते ॥
संसारव्याधिना ग्रस्तस्तद्विज्ञेयो नरोत्तमः।
शमारोग्यलवं प्राप्य भावतस्तदुपक्रमे ॥
प्रवर्तमान एवं च यथाशक्ति स्थिराशयः।
शुद्धं चारित्रमासाद्य केवलं लभते क्रमात् ॥
ततः स सर्वविद्भूत्वा भवोपग्राहिकर्मणः।
ज्ञानयोगात्क्षयं कृत्वा मोक्षमाप्नोति शाश्वतम् ॥
सत्साधुगुरुसंपाद्या सेयं कल्याणमालिका।
प्रायेण चास्य जीवस्य यतः प्रोक्तं मनीषिभिः ॥

किं तत्।

साधुसेवा सदा भक्त्या मैत्री सत्त्वेषु भावतः।
आत्मीयग्रहमोक्षश्च धर्महेतुप्रसाधनम् ॥

उपदेशः शुभो नित्यं दर्शनं धर्मचारिणाम् ।
स्थाने विनय इत्येतत् साधुसेवाफलं महत् ॥

तथा ।

मैत्रीं भावयतो नित्यं शुभो भावः प्रजायते ।
ततो भावोदकाज्जन्तोर्द्वेषाग्निरुपशाम्यति ॥

तथा ।

अशेषदोषजननी निःशेषगुणघातिनी ।
आत्मीयपक्षमोक्षेण तृष्णा हि विनिवर्तते ॥
एवं गुणगणोपेतो वि शुद्धात्मा स्थिराशयः ।
तत्त्वविद्भिः समाख्यातः सम्यग्धर्मस्य साधकः ॥
ततोऽनेनापि मुनिना ब्राह्मणाकारधारकैः ।
अहं बोधित इत्युक्तं साधुभिः करुणापरैः ॥
ततोऽमुनानुसारेण यद्नेन कथानके ।
प्रागुक्तं तत्त्वयं योज्यं स्पष्टत्वाभाभिधीयते ॥

अपि च ।

कर्ममद्यरताः सर्वे भद्राविरतजन्तवः ।
भवापानकमध्येऽपि साधवस्तत्पराङ्मुखाः ॥
तैरेव यत्नतः साधुः कर्ममद्याभिवारितः ।
ततः प्रव्रजितो जात इदं वैराग्यकारणम् ॥
प्रव्रज्यया च तत्कर्म मद्याजीर्णमयं मुनिः ।
जरयित्वा भवापानाद्धहिर्भूतो भविष्यति ॥

किं च ।

न युक्तमीदृशे स्थातुमावयोरपि पिच्छिले।
संसारापानके भद्र दुःखदे घनवाहन॥
ततोऽगृहीतसङ्केते भद्रे तत्तादृशं वचः।
आकलङ्कं न सेऽद्यापि बोधकारणतां गतम्॥
स्थितोऽहं मौनमालम्ब्य शून्यारण्ये मुनिर्यथा।
अथाकलङ्कः संप्राप्तो मुनेर्मूलं मया सह॥
तदंह्रियुगलं नत्वा भक्तिपूरितचेतसा।
ततः पृष्टोऽकलङ्केन सोऽपि वैराग्यकारणम्॥
तेनोक्तमरघट्टो मे जातो वैराग्यकारणम्।
तदाकर्ण्याकलङ्केन चेतसा परिचिन्तितम्॥

अये।

यादृशं मुनिना पूर्वं प्रदीपनकमीरितम्।
आपानकं च तन्नूनमरघट्टोऽपि तादृशः॥
अथोक्तमकलङ्केन तदानीं स्मितबन्धुरम्।
निवेदय महाभाग तं मम प्रकटाचरैः॥
मुनिनोक्तं मया दृष्टः सोऽरघट्टो नरोत्तम।
नित्यं युक्तो वहत्युच्चैः संपूर्णो भवनामकः॥
रागद्वेषमनोभावमिथ्यादर्शननामकाः।
चत्वारः कर्षकास्तत्र ते च सारथयो मताः॥
महामोहः पुनस्तत्र सर्वसीरपतिः स्मृतः।
सोऽरघट्टो वहत्यस्य प्रतापेन महात्मनः॥
विनापि वारीपानीयं वेगवन्तो बलोद्धताः।

कषायसंज्ञकास्तत्र यत्नीवर्दास्तु षोडश ॥
हास्यशोकभयाद्यास्तु निपुणाः कर्मकारकाः।
जुगुप्सारत्यरत्याद्यास्तिर्या च परिचारिकाः॥
दुष्टयोगप्रमादाख्यं तत्र तुम्बयं महत्।
विलासोल्लासविब्बोकरूपाश्चारकाः कृताः॥
पापाविरतिपानीयपूर्णोऽदृष्टतलः सदा।
तथासंयतजीवाख्यः कूपो दृष्टो भयङ्करः॥
पापाविरतितोयौघमग्नपूरितरेचितम्।
सुदीर्घं जीवलोकाख्यं घटीयन्त्रमुदाहृतम्॥
मरणाख्यैः पुनर्नित्यं वहन्नेव विभाव्यते।
पट्टिकाघट्टखाट्टारैर्दूरादपि विवेकिभिः॥
अज्ञानमन्निनात्माख्यो शेयश्च प्रतीच्छकः।
दृढं मिथ्याभिमानाख्यं तस्य दार्पटिकं मतम्॥
संक्लिष्टचित्तता नाम तत्र निर्वहणी मता।
भोगलोलुपता नाम कुल्या तत्रातिदीर्घिका॥
जन्मसन्तानसंज्ञं तु तत्र थावमुदाहृतम्।
अपरापरजन्माख्यास्तत्र केदारका मताः॥
कर्मप्रकृतिजालाख्यं तत्र बीजमुदाहृतम्।
तज्जीवपरिणामाख्यो वापकस्तस्य कीर्तितः॥

ततश्च।

उप्तं तेनारघट्टेन सिक्तं निष्पत्तिमागतम्।
सुखदुःखादिसस्यौघजनकं तदुदाहृतम्॥

सेचनार्थं पुनस्तस्य सदोत्साहपरायणः ।
पानान्तिकोऽस्त्यसद्बोधो महामोहनिरूपितः ॥
तदेवं सर्वसामग्रीसंयुक्ते सततभ्रमे ।
भवारघट्टे तत्राहं प्रसुप्तः सुचिरं स्थितः ॥

इतश्च ।

योऽयं मुनिवरो भद्र दृश्यते ध्यानतत्परः ।
दूरवर्ती महाभागो गुरुरेष ममाधुना ॥
अनेन तत्र सुप्तोऽहं गाढसंमूढचेतनः ।
कृपापरीतचित्तेन यत्नतः प्रतिबोधितः ॥
ततः संदर्शितोऽनेन समस्तोऽपि यथास्थितः ।
भवारघट्टो मे भद्र ततश्चेदं निवेदितम् ॥

यदुत

स्वामी त्वमस्य सर्वस्य फलभोक्ता न संशयः ।
जन्तो भवारघट्टस्य किं न जानासि मूढक ॥

केवलं

अनन्तदुःखसन्तानहेतुस्ते नात्र संशयः ।
जन्तो भवारघट्टोऽयं ततस्त्वमं परित्यज ॥

मयोक्तं ।

यथा त्यक्तो भवत्येष साधो तन्मे निवेदय ।
मुनिनोक्तं महासत्त्व प्रव्रज्या गृह्यतामियम् ॥
एनां भागवतीं दीक्षां ये गृह्णन्ति नरोत्तमाः ।
भावतस्तैः प्रक्षीणोऽयमरघट्टो भवत्यलम् ॥

ततस्तथेति भावेन प्रतिपद्य मुनेर्वचः ।
कृतं मयेदं मे भद्र जातं वैराग्यकारणम् ॥
ततोऽकलङ्कस्तच्छ्रुत्वा तं मुनिं प्रत्यभाषत ।
भदन्त चारु संपन्नं तव वैराग्यकारणम् ॥
कस्य वा न भवत्येष सकर्णस्य विरक्तये ।
भवारघट्टो जीवस्य दृष्टिगोचरतां गतः ॥

ततोऽभिनन्द्य तं साधुं वन्दित्वा भक्तिनिर्भरः ।
सोऽकलङ्को मया सार्धं तुर्यसाध्वन्तिके गतः ॥
अथ वन्दनकं कृत्वा मम बोधविधित्सया ।
पृष्टस्तेन महाभागः सोऽपि वैराग्यकारणम् ॥
मुनिराह वयं चट्टा नानारूपाः क्वचिन्मठे ।
तिष्ठामस्तत्र चायातमस्मद्भक्तं कुटुम्बकम् ॥
अनेकमानुषैर्युक्तं पञ्चमानुषतन्त्रितम् ।
अस्माभिः प्रतिपन्नं तत्किलेदं हितवत्सलम् ॥
शत्रुरूपं च तद्भद्र वर्तते परमार्थतः ।
ततस्तेन कृतं चित्रं सादरं छात्रभोजनम् ॥
अथाविज्ञातसद्भावाश्चित्रभोजनलोलुपाः ।
ते छात्रा भक्षणाज्जाता नितरां पूरितोदराः ॥
तच्च तैर्मानुषैस्तादृङ्मन्त्रयोगैर्विनिर्मितम् ।
भोजनं येन तज्जातं सन्निपातस्य कारणम् ॥
तथोन्मादकरं भद्र जीर्यमाणं भवत्यलम् ।
केषांचित्तत्र चट्टानां तदन्नमतिदारुणम् ॥

ततो निरुद्धगलका जिह्वासंजातकण्टकाः।
कण्ठे घरघरायन्तो नष्टसंज्ञाः सुविक्लवाः॥
क्वचित्तापार्तिदग्धाङ्गाः क्वचिच्छीतार्तिबाधिताः।
क्वचिदुद्भ्रान्तचित्तत्वाल्लोलमाना भुवस्तले॥
सन्निपातवशादन्ये वृथैवार्दवितर्दकम्।
क्वचिज्जगज्जगायन्ते ते छात्राः शोच्यतां गताः॥
ये तून्मत्ताः समापन्नास्तदा भोजनभक्षणात्।
ते देवमुनिसङ्घानां निन्दां कुर्वन्ति पापिनः॥
लपन्ति विपरीतानि कुर्वते दुष्टचेष्टितम्।
मदोपप्लुतचित्तानां किं स्यात्तेषां हि सुन्दरम्॥
अन्यत्सर्वेऽपि ते छात्राः पशुवन्नष्टधर्मकाः।
विषघारितवन्मूढा जाता भोजनदोषतः॥

ततश्च।

योऽयं स्वाध्यायपूतात्मा दृश्यते मुनिपुङ्गवः।
महावैद्यकशास्त्रस्य विद्यतेऽतिशयो महान्॥
ततोऽहं भद्र चट्टानां तेषां मध्ये कथंचन।
सन्निपातातिमूढात्मा दृष्टोऽनेन महात्मना॥
ततः करुणयानेन सन्निपातो निजौषधैः।
ममापनीतो जातोऽहं मनाग् विस्पष्टचेतनः॥
ततो मे छात्रसंसर्गादुन्मादोऽप्यभवत्तदा।
सोऽप्यनेन महायत्नादपनीतो महात्मना॥
ततश्चायं महाभागो दृष्ट्वा मां स्खलमानकम्।

उन्मत्तं सन्निपातार्थं षट्वृन्दमदर्शयत् ॥
दृष्टाश्च ते मया छात्राः कूजन्तो घूर्णमानकाः ।
प्रलापिनः सुदुःखार्ता गाढं जातं च मे भयम् ॥

मुनिनोक्तं ।

भद्र भोजनदोषेण त्वमप्येवंविधोऽभवः ।
विद्यते किंचिदद्यापि तवाजीर्णं शरीरके ॥
ततो मदुपदिष्टं चेत्त्वं क्रियां न करिष्यसि ।
भूयोऽप्येवंविधो भद्र दुःखग्रस्तो भविष्यसि ॥
ततः प्रत्ययसम्पत्तेर्भयाच्च मुनिनोदिता ।
गृहीतेयं मया दीक्षा भोजनाजीर्णशोधनी ॥

अधुना तु ।

यां यामुपदिशत्येष क्रियां मे मुनिपुङ्गवः ।
तां तामहं करोम्युच्चैरिदं वैराग्यकारणम् ॥
ततोऽकलङ्कस्तच्छ्रुत्वा प्रीतिविस्फारितेक्षणः ।
वन्दित्वा तं मुनिं भूयः प्रवृत्तोऽन्यं मुनिं प्रति ॥

मयोक्तं ।

न विज्ञातं मयाद्यापि वयस्य मुनिभाषितम् ।
सम्यगेतदतो व्यक्तं मह्यमाख्यातुमर्हसि ॥

अकलङ्केनोक्तं ।

अनेनापि मुनीन्द्रेण संसारो घनवाहन ।
दृष्टश्चट्टमठाकारः स चेत्थं मे निवेदितः ॥
अयःशलाकासङ्काशा नानारूपाश्च जन्तवः ।

परस्परमसंबद्धास्तत्प्रायाः प्रकीर्तिताः ॥

तथाहि।

नामीषां विद्यते माता न पिता न च बान्धवाः।
न धनं परमार्थेन च्छिन्नच्छोरा हि जन्तवः ॥
तेषां च जीवचट्टानां संसारमठवर्तिनाम्।
आगच्छत्येव तद्भक्तं बन्धहेतुकुटुम्बकम् ॥
विचित्रास्तच विद्यन्ते भूयांसो बन्धहेतवः।
तेषां संग्रहकाः पञ्च तत्तु मानुषपञ्चकम् ॥

यतः।

प्रमादो योगमिथ्यात्वे कषायाविरती तथा।
एत एव हि जन्तूनां पञ्च बन्धस्य हेतवः ॥
अनादिमोहसामर्थ्याज्ज्ञातीदं हितवत्सलम्।
सदैव जीवचट्टानां बन्धहेतुकुटुम्बकम् ॥
अरातिरूपमेतच्च वर्तते भद्र देहिनाम्।
तथाप्यस्य न जानन्ति स्वरूपं मन्दबुद्धयः ॥
निवर्तयति तत्कर्म च्छात्रभोजनसन्निभम्।
विचित्रं सरसं जीवचट्टसौख्यविधायकम् ॥
तन्महामोहमन्त्राढ्यं ज्ञानावरणयौगिकम्।
बन्धहेतुकुटुम्बेन ढौकितं कर्मभोजनम् ॥
जीवच्छात्राः समासाद्य मोहादत्यन्तलोलुपाः।
आत्मानं पूरयन्त्युच्चैस्ते न जानन्ति चायतिम् ॥
ततश्च तद्विपाकेन यदज्ञानं सुदारुणम्।

अनभियहमिथ्यात्वसन्निपातः स कीर्तितः ॥

ततोऽमी जन्तवस्तेन मिथ्याज्ञानमयेन महातमोरूपेण भावसन्निपातेन सन्निपन्नाः सन्तः काष्ठवन्नष्टचेतना भवन्त्येकेन्द्रियावस्थायां । अव्यक्तघोषतया घरघरायन्ते द्वीन्द्रियदशायां । इतश्चेतश्च लोठन्ते त्रीन्द्रियत्वावसरे । झणझणायन्ते च चतुरिन्द्रियरूपतया । अर्दवितर्दकं चेष्टन्ते असंज्ञिपञ्चेन्द्रियाकारेण । आलजालं झगझगायन्ते गर्भजपञ्चेन्द्रियाकारधारितया । निरुद्धगलका इव वर्तन्ते अपर्याप्तकावस्थासु । आविर्भूतजिह्वाकण्टका इव विसंस्थुला दृश्यन्ते विविधदुःखविधुरतया । बाध्यन्ते तीव्रतापेन नरकेषु । पीड्यन्ते तेष्वेव शीतार्तिवेदनतया । न चेतयन्ति किंचिद् भूतपशुभावमापन्नाः। मुहुर्मुहुर्मुह्यन्ति कुत्सितमनुष्यभावाः । अवष्टभ्यन्ते महामोहनिद्रया देवावस्थायां । नष्टधर्मसंज्ञा जायन्ते सर्वावस्थासु ।

तदेवं भद्र जीवानां कर्मभोजननिर्मितः ।

मिथ्याज्ञानतमोरूपः सन्निपातः सुदारुणः ॥

येषां पुनर्जन्तूनां नारकतिर्यङ्नरामरभवेषु विवर्तमानानामकल्याणभाजनतया संजातो मनसि सर्वज्ञशासनविपरीतोऽभिनिवेशः तद्वशेन यैर्गृहीतो रागद्वेषमोहकलुषितः परमात्मा प्रतिपन्न एकान्तनित्यः क्षणिको वा सर्वगतो वा पञ्चभूतात्मको वा श्यामाकतण्डुलादिरूपो वा आत्मा अङ्गीकृताः सृष्टिवादादयः कृतः शेषतत्त्वानामपि विपर्यासः तेषां जन्तूनां तदभिगृहीतमिथ्यादर्शनकर्मभोजनसामर्थ्यजनितमुन्माद इत्युच्यते । यतस्तेनोपप्लुतचित्तास्ते प्रलपन्तीव सन्मार्गदूषणेन हसन्तीव तपोनिकृवेन नृत्यन्तीव यथेष्ट-

चेष्टाचारितोपदेशेन वल्गन्तीव नास्त्यात्मा नास्ति परलोको नास्ति पुण्यं नास्ति पापमित्यादि भाषमाणाः हसन्तीव सर्वज्ञमतज्ञैर्निराक्रियमाणा गायन्ति च निजतर्कदण्डोलकान् घोषयन्तः । एवं च स्थिते ।

इति नर्तनवल्गनगानपरा हसनप्रविलापपरोदनकाः ।
ननु भद्र भवन्ति जिनेन्द्रमताद्विपरीतदृशो बहुरूपधराः ॥

अन्यच्च ।

सर्वेऽमी जन्तवः कर्मविषवेगेन घारिताः ।
विनष्टधर्मसंज्ञाश्च वर्तन्ते नात्र संशयः ॥
यच्चोक्तं मुनिनानेन यथायं मुनिपुङ्गवः ।
मद्गुरुर्वैद्यके शास्त्रे कृतगाढपरिश्रमः ॥
कृपापरीतचित्तेन सन्निपातात्सुदारुणात् ।
मोचितोऽहं ततोऽनेन मुनिना निजभेषजैः ॥
घटमानमिदं भद्र यतोऽमी मुनिपुङ्गवाः ।
सिद्धान्त वैद्यकाकारे भवन्त्येव कृतश्रमाः ॥
ततः समस्तजन्तूनां संसारोदरचारिणाम् ।
प्रत्येकं लक्षयन्त्येते स्वरूपं मुनिसत्तमाः ॥

ततश्च ।

कर्मभोजनजन्येन सन्निपातेन पीडितम् ।
तं जीवलोकमालोक्य भवन्ति करुणापराः ॥
चिन्तयन्ति च ते धन्याः कथमेते वराककाः ।
संसारक्लेशनिर्मुक्ता भविष्यन्तीह देहिनः ॥

एत एव सुसाधूनां निन्दाक्रोशनताडनम् ।
आचरन्तोऽपि न क्रोधकारणं भवजन्तवः ॥

तथाहि ।

ये कर्मसन्निपातेन वराका गाढपीडिताः ।
मिथ्यात्वोन्मादसंतप्ताः स्वपापविषघूर्णिताः ॥
सदा दुःखभराक्रान्ता नष्टसद्धर्मचेतनाः ।
परायत्ताः प्रकुर्वन्ति निन्दाक्रोशनताडनम् ॥
तेषामुपरि कः कोपं विदधीत विचक्षणः ।
ग्रहे हि चारनिक्षेपं कुर्वन्ति न कृपापराः ॥

किं च ।

न केवलं कृपास्थानं कर्मवेष्टितजन्तवः ।
विवेकिनां भवोद्वेगकारणं च भवन्ति ते ॥

तथाहि ।

एतानेवंविधान् दृष्ट्वा जीवान् संसारचारिणः ।
उन्मत्तमत्तसङ्काशान् भावतः सन्निपातकान् ॥
लब्धे मनुष्यभावेऽपि जिनेन्द्रमतवेदकः ।
सकर्णकोऽत्र को नाम रज्येत भवचारके ॥
ततोऽयं गुरुणा भद्र करुणाद्रचेतसा ।
स्वकर्मसन्निपातार्तो बोधितो मुनिपुङ्गवः ॥
स एव हि महावैद्यो येनायं काचसन्निभः ।
साधुः स्वस्थीकृतो भद्र वचनामृतभेषजैः ॥

यथोक्तं ।

ततो मे ह्यात्र्यसर्गादुन्मादोऽप्यभवत्तदा ।
सोऽप्यनेन महायत्नादपनीतो महात्मना ॥

तदेवं बोद्धव्यं । यदुत

आभिग्रहिकमिथ्यात्वे विधायावुधबोधनम् ।
महाघस्मरकाकारे नाशिते गुरुणाद्य भोः ॥
ततस्तीर्थिकसम्पर्काज्जातमुन्मादसन्निभम् ।
आभिग्रहिकमिथ्यात्वं गुरुणा तदपि हतम् ॥
ततश्चट्टमठाकारः सम्यग्भावस्थितस्य भोः ।
सर्वः संसारविस्तारो गुरुणास्य प्रकाशितः ॥
दृष्टास्ततोऽमुना जीवाश्चट्टा इव पुरोदिताः ।
उन्मत्ताः सन्निपातार्ताः कर्मभोजनदोषतः ॥
गाढं दुःखभराक्रान्तान् कूजतो घूर्णमानकान् ।
प्रलापिनश्च तान् दृष्ट्वा जातमस्य महाभयम् ॥

ततोऽभिहितो निजगुरुरनेन मुनिना । यदुत

चतुर्गतिकसंसारे त्वयामी दर्शिताः स्फुटम् ।
ममोद्वेगकरा नाथ दुःखिताः सर्वजन्तवः ॥

गुरुणोक्तं ।

यादृशा दुःखसन्दोहग्रस्तास्त्राणविवर्जिताः ।
दृश्यन्तेऽमी तथा पूर्वमभूद्भद्र भवानपि ॥
विद्यते च तवाद्यापि कर्माजीर्णं शरीरके ।
विधेहि त्वमतस्तस्य जरणार्थं मम क्रियाम् ॥
अथ त्वं मामिकामेनां सत्क्रियां न करिष्यसि ।

ततो भूयोऽपि संसारे दुःखदग्धो भविष्यसि ॥
ततः श्रुत्वा गुरोर्वाक्यं प्रव्रज्या पारमेश्वरी ।
गृहीतानेन मुनिना सत्क्रिया च प्रसेविता ॥
तत्कर्मभोजनाजीर्णं जरयन्नेष तिष्ठति ।
मुनिनेदं समाख्यातं भद्र वैराग्यकारणम् ॥

किं च ।

न केवलमयं साधुरन्नाजीर्णेन बाधितः ।
वयं च बाधितास्तेन संसारे घनवाहन ॥
ततः संप्राप्य मानुष्यमावयोरपि युज्यते ।
दीक्षाविधानतः कर्तुं कर्मान्नाजीर्णशोधनम् ॥
अहं तु पापभारेण भूरिणाच्छादितस्तदा ।
आकलङ्क वचो मोहादवाजीगणमीदृशम् ॥
अथैवं भाषमाणोऽसौ मया सार्धमुदारधीः ।
अकलङ्को गतः साधोः पञ्चमस्यांह्रिसन्निधौ ॥
ततः प्रणम्य तं साधुं श्रुत्वा तद्धर्मदेशनाम् ।
प्रस्तावे प्रश्नितः सोऽपि तेन वैराग्यकारणम् ॥
मुनिराह समाख्यातं सूरिणैकं कथानकम् ।
तदेव मम संजातं भद्र वैराग्यकारणम् ॥

अकलङ्केनोक्तं ।

यत्तत्ते नाथ संपन्नं सदा वैराग्यकारणम् ।
तदेवानुग्रहं कृत्वा कथ्यतां मे कथानकम् ॥

मुनिनोक्तं । आकर्णय ।

वसन्तपुरवास्तव्यास्तत्वारः प्रीतिनिर्भराः ।
सार्थवाहसुताः केचित्परस्परवयस्यकाः ॥
अनेकावर्तसत्त्वौघभयकोटिसमाकुलम् ।
लङ्घयित्वा समुद्रं ते रत्नद्वीपे परागताः ॥
चारुर्योग्यो हितज्ञश्च मूढश्चेति यथाक्रमम् ।
तेषां नामानि जानीहि यथार्थानि नरोत्तम ॥

इतश्च ।

सर्वेषां रत्नराशीनामाकरस्तदुदाहृतम् ।
रत्नद्वीपं विना पुण्यैर्दुष्प्रापमतिसुन्दरम् ॥

किं तु ।

तत्रापि न विनोपायं प्राप्यन्ते रत्नराशयः ।
को हि हस्तं विना भुङ्क्ते पुरोवर्त्यपि भोजनम् ॥

एवं च स्थिते ।

स चारुस्तत्र तद्द्वीपे शेषाकांक्षाविवर्जितः ।
रत्नग्रहणवाणिज्यं कुरुते शुद्धमानसः ॥
आवर्जयति तल्लोकान्नानोपायैर्विचक्षणः ।
विधत्ते रत्नराशीनां सञ्चयं च दिने दिने ॥
तथा च वर्तमानस्य तस्य निश्चितचेतसः ।
अकालहीनं बोहित्थं रत्नपूगेन पूरितम् ॥
जानाति च स रत्नानां गुणदोषपरीक्षणम् ।
विधातुं न च तस्यास्ति काननादौ कुतूहलम् ॥
ततः स चारुर्ध्यानेन सदाचारपरायणः ।

तत्र द्वीपे गतो भद्र संजातः स्वार्थसाधकः ॥
योग्योऽपि कुरुते किंचिद्वाणिज्यं रत्नकाम्यया ।
केवलं विद्यते तस्य कौतुकं काननादिषु ॥
जानीते सोऽपि रत्नानां गुणदोषविचारणम् ।
कर्तुं कुतूहलेनोच्चैः केवलं ह्रियते बलात् ॥

ततश्च ।

आरामकाननोद्यानसरोवरदिदृक्षया ।
भ्रमतोऽहर्निशं तस्य वृथा गच्छन्ति वासराः ॥
क्वचिदेव भयाच्चारोराजवेष्टिप्रमानकम् ।
अनादरेण कुरुते स रत्नानामुपार्जनम् ॥
तथापि मिलितान्यस्य भद्र कालेन भूयसा ।
तथाविधानि योग्यस्य माणिक्यानि कियन्त्यपि ॥

केवलं ।

विशिष्टरत्नसंभारं नादत्तेऽसौ कुतूहली ।
रत्नद्वीपेऽपि संप्राप्तः स्तोकेन बहु हारयेत् ॥
हितज्ञस्तु न जानीते स्वयं रत्नपरीक्षणम् ।
कर्तुं परोपदेशात्तु केवलं लक्षयत्यसौ ॥
विहारारामचित्रादिदर्शने च महत्तमम् ।
कुतूहलं हितज्ञस्य रत्नवाणिज्यबाधकम् ॥
ततोऽसौ रत्नवाणिज्यं न करोति प्रमादतः ।
कुर्वन्नपि च मूर्खत्वान्मूर्खलोकेन वञ्च्यते ॥
यतश्चिकिचिकायन्ते प्रस्तुकाचकपर्दकाः ।

ततस्तद्ग्रहणोद्युक्तो धूर्तलोकेन वञ्चितः ॥
रत्नद्वीपेऽपि संप्राप्तः संजायेताकृतार्थकः ॥
मूढस्तु न विजानीते स्वयं रत्नपरीक्षणम् ।
कर्तुं नापि परेणोक्तं मोहादेष प्रपद्यते ॥
पद्मखण्डवनोद्यानचित्रदेवकुलादिषु ।
तथास्य भद्र मूढस्य विद्यतेऽत्यन्तकौतुकम् ॥

ततश्च ।

स देष्टि सत्यरत्नानि हिण्डते काननादिषु ।
गृह्णाति धूर्तहस्ताच्च शङ्खकाचकपर्दकान् ॥
अथ संभृतबोहित्थः स्वस्थानगमनेच्छया ।
किं वर्तते मदीयानां मित्राणामिति चिन्तया ॥
स चारुस्तस्य योग्यस्य तदा मूलमुपागतः ।
उक्तं चाहं गमिष्यामि मित्र किं वर्तते तव ॥
योग्यः प्राह न मेऽद्यापि बोहित्थं बत पूर्यते ।
स्तोकान्येवार्जितानीह मया रत्नानि कानिचित् ॥
चारुणाभिहितं मित्र किं पुनर्महदन्तरम् ।
ततो योग्येन कथितं सर्वमात्मीयचेष्टितम् ॥
चारुणोक्तं न युक्तं ते काननादिकुतूहलात् ।
अनादानेन रत्नानामात्मवञ्चनमीदृशम् ॥
जानीषे तात रत्नानां त्वमेषां सुखहेतुताम् ।
तथाप्यनादरं कुर्वन्नात्मनो वैरिकायसे ॥
चिरादपि न सन्तोषो भद्र ते काननादिषु ।

तदर्थं विहितः स्वार्थः स्वार्थभ्रंशो हि मूर्खता ॥
प्राप्तोऽसि रत्नद्वीपे त्वं रत्नोपार्जनकाम्यया ।
अकुर्वन्नर्जनं तेषामात्मनः किं न लज्जसे ॥
अतो मद्वचनान्मुञ्च काननादिकुतूहलम् ।
कुरु भद्र सुरत्नानां सततं समुपार्जनम् ॥
अन्यथाहं गमिष्यामि संपन्नं मे प्रयोजनम् ।
एवं विचेष्टमानस्त्वं स्वार्थभ्रष्टो भविष्यसि ॥
ततश्चेदं वचश्चारोः श्रुत्वा योग्यः स्वमानसे ।
अत्यन्तलज्जितः स्वेन चेष्टितेन प्रभाषितः ॥
न गन्तव्यं त्वया तावन्महाभाग करोम्यहम् ।
यदादिशसि तत्सर्वं किं कर्तव्यं ममापरम् ॥
ततो विमुच्य तत्सर्वं काननादिकुतूहलम् ।
स रत्नोपार्जने लग्नो योग्यो वाक्येन धीमतः ॥
अथ चारुर्गतो मूलं हितज्ञस्य ततः परम् ।
सोऽप्युक्तोऽहं गमिष्यामि मित्र किं वर्तते तव ॥
ततश्चारोर्हितज्ञेन दर्शितं यदुपार्जितम् ।
ससंभ्रमेण सहसा तत्काचशकलादिकम् ॥
अत्यन्तखेदसारेण कथितं चात्मचेष्टितम् ।
ततश्चारुः कृपोपेतो हितज्ञं प्रत्यभाषत ॥
वयस्य वञ्चितोऽसि त्वं धूर्तलोकेन पापिना ।
मुग्धस्त्वं हि न जानीषे कर्तुं रत्नपरीक्षणम् ॥

अन्यच्च ।

रत्नोपार्जनवेषेण रत्नद्वीपमुपेयुषः ।
न युज्यते च ते कर्तुं काननादिकुतूहलम् ॥
तदाकर्ण्य वचश्चारोर्हितज्ञेन विचिन्तितम् ।
अहो वत्सलता चारोरहो वचनकौशलम् ॥
जानात्ययं महाभागः सर्वं यन्मे हिताहितम् ।
तदेनमेव पृच्छामि यत्कर्तव्यं मयाधुना ॥
ततः प्रोक्तो हितज्ञेन स चारुर्मित्रवत्सलः ।
नाधुनाहं करिष्यामि काननादिकुतूहलम् ॥
रत्नानां गुणदोषाश्च निवेद्यन्तां त्वयाधुना ।
काचादिपरिहारेण येन तान्यहमाददे ॥
ततस्त्वदुपदेशेन भृत्वा बोहित्थमञ्जसा ।
त्वया सार्धं गमिष्यामि प्रतीचस्व नरोत्तम ॥
चारुणा चिन्तितं योग्यो यथा जातो यथार्थकः ।
हितज्ञोऽपि तथा नूनं गुणनिष्पन्ननामकः ॥
ततो निवेदितास्तेन सर्वे रत्नगुणागुणाः ।
श्राहितश्च प्रयत्नेन हितज्ञस्तदुपार्जनम् ॥
ततश्चारूपदेशेन हित्वा सर्वं कुतूहलम् ।
काचादिपरिहारेण कुर्वन् सद्रत्नसङ्ग्रहम् ॥
ततः प्रभृति संजातो हितज्ञोऽपि विचक्षणः ।
स्वयं परीक्षकस्तेषां रत्नानामर्जने रतः ॥
अथ चारुर्गतः पार्श्वे तस्य मूढस्य सादरम् ।
सोऽप्युक्तोऽहं व्रजिष्यामि मित्र किं वर्तते तव ॥

मूढः प्राह वयस्य त्वं किं गतेन करिष्यसि।
रमणीयमिदं द्वीपं किं न पश्यसि सर्वतः॥
पद्मखण्डगृहोद्यानसरोवरविभूषितम्।
विहाराराममुख्याढ्यं वनराजिविराजितम्॥
तदत्र सुचिरं तावन्मानयित्वा परं सुखम्।
पश्चात्स्वस्थानगमनं करिष्यामो यथेच्छया॥
श्रुतं मयापि बोहित्थं रत्नानां मित्र वर्तते।
ततस्तद्दर्शितं तेन चारोर्बोहित्थमञ्जसा॥
अथाचगञ्जकौम्भिश्रकाचखण्डादिपूरितम्।
तद्दृष्ट्वा चिन्तयत्येवं स चारुश्चारुचेतनः॥
अहो वराको मूढोऽयं मूढ एव न संशयः।
यस्तः कुतूहलेनोच्चैर्धूर्तलोकेन वञ्चितः॥
तथापि शिक्षयामीमं यद्येष विनिवर्तते।
एवं विचिन्त्य तेनोक्तं चारुणा बुद्धिचारुणा॥
न युक्तं कौतुकं कर्तुमत्र मित्र वनादिषु।
आत्मवञ्चनमेतद्धि रत्नवाणिज्यबाधकम्॥
वञ्चितश्च दृढं मित्र धूर्तलोकेन पापिना।
अरक्षानि गृहीतानि रत्नबुद्ध्या यतस्त्वया॥
इदं कचवरं सर्वं तच्छीघ्रं संपरित्यज।
सुरत्नानि गृहाण त्वं तेषामेतच्च लक्षणम्॥
ततो यावत्किलाचष्टे स चारू रत्नलक्षणम्।
तावदुत्तेजितो मूढस्तं प्रतीदमभाषत॥

नाहं यास्यामि गच्छ त्वं प्रवृत्तो यत्र कुत्रचित्।
वयस्य एवमेव त्वं यत्त्वमेवं प्रभाषसे ॥
निराकरोषि त्वं तावदेकमुत्कलचारिताम्।
द्वितीयं मामकं रत्नसञ्चयं दूषयस्यलम् ॥
प्रभास्वराणि यद्येवं रत्नानि न भवन्ति ते।
पर्याप्तमपरैस्तात तावकैर्मम रत्नकैः ॥
ततश्चारुः पुनर्यावद्भाषणे स्फुरिताधरः।
प्रवृत्तस्तावदितरस्तं प्रतीदमवोचत ॥
कृतं कृतं ममानेन तावकीनेन मित्रक।
शिक्षणेन निजस्थानं गच्छ शीघ्रं निराकुलः ॥
तदाकर्ण्य निजे चित्ते चारुणा परिचिन्तितम्।
नैवास्य शिक्षणं कर्तुं मूढस्य वत पार्यते ॥

इतश्च।

उपदेशं सदा तस्य चारोः कुर्वाणयोर्मुदा।
ते भूते रत्नबोद्धित्ये तयोर्योग्यहितज्ञयोः ॥
ततश्चारुः परित्यज्य तं मूढं कृतनिश्चयः।
सार्धं योग्यहितज्ञाभ्यां गतः स्वस्थानमुच्चकैः ॥
रत्नानां विनियोगं च कुर्वाणास्तत्र ते त्रयः।
अनन्तामन्दसन्दोहपूरिताः सुखमासते ॥
मूढस्तु दुःखदारिद्र्यभाजनं समजायत।
निष्कासितस्ततो द्वीपात् येनचित्क्रुद्धभूभुजा ॥
प्रक्षिप्तः सागरे घोरे यादोभिः परिपूरिते।

अदृष्टतलपर्यन्ते दुरन्तावर्तभीषणे ॥
तदिदं ते मयाख्यातं सूरिप्रोक्तं कथानकम् ।
यत्तदा मम संजातं भद्र वैराग्यकारणम् ॥
ततो गृहीतभावार्थः प्रोत्फुल्लमुखपङ्कजः ।
सोऽकलङ्को मुनिं नत्वा प्रवृत्तोऽन्यमुनिं प्रति ॥

मयोक्तं ।

आख्याहि मित्र भावार्थं पृष्टे वैराग्यकारणम् ।
असंबद्धं किमाख्यातं मुनिनेदं कथानकम् ॥

अकलङ्केनोक्तं। भद्र घनवाहन नेदमसंबद्धमुदाहरणं। आकर्णय लमस्य भावार्थं । मयोक्तं । एष दत्तावधानोऽस्मि । अकलङ्केनोक्तं। वसन्तपुरस्थानीयोऽत्रासांव्यवहारिको जीवराशिः। वाणिजकाः पुनर्यथार्थनामानस्ततो निर्गताश्चतुर्विधा जीवाः। समुद्रः पुनरत्र जन्मजरामरणसलिलो मिथ्यादर्शनाविरतिगम्भीरो महाभीषणकषायपातालः सुदुर्लङ्घ्यमहामोहावर्तरौद्रो विविधदुःखौघदुष्टजलचरपूरितो रागद्वेषजवनपवनविक्षोभितः संयोगवियोगवीचीनिचयचटुलः प्रबलमनोरथवेलाकुलोऽनवलोकितपरापरपारः संसारविस्तारो विज्ञेयः। रत्नद्वीपस्थानीयो ऽयं मनुष्यभवो मन्तव्यः। काननादिकुतूहलं तु विषयाभिलाषो द्रष्टव्यः। अचगह्लकपर्दककाचशकलादिकल्पाः सर्वज्ञप्रणीतधर्मविपरीताः कुधर्मा बोद्धव्याः। धूर्तलोकः कुतीर्थिकवर्गो ज्ञातव्यः। बोहित्थस्थानीयानि पुनरत्र जीवस्वरूपाणि वर्तन्ते। स्वस्थानगमनं मोक्षावाप्तिर्मन्तव्या आत्मलाभरूपलाभस्तस्याः। यस्तु मूढस्योपरि क्रुद्धो नरेन्द्रः स स्वकर्मपरिणामो विज्ञेयः।

समुद्रमध्यप्रक्षेपस्तु मूढस्यानन्तभवभ्रमणं द्रष्टव्यमिति। एवं च स्थिते भो भो घनवाहन

सर्वःकथानकस्यास्य भावार्थः सुपरिस्फुटः।
तथापि ते प्रबोधाय विशेषेणाभिधीयते॥

तत्र यथा तेन चारुणा निर्गत्य वसन्तपुरादुल्लङ्घयित्वा समुद्रं समासाद्य रत्नद्वीपं विज्ञातः कृत्रिमाकृत्रिमरत्नविशेषः न कृतं काननादिषु कौतुकं लक्षिता धूर्तलोकाः न गृहीतानि कृत्रिमरत्नानि कृतं विशिष्टरत्नग्रहणवाणिज्यं उपात्तः सुन्दररत्ननिचयः आवर्जिता विशिष्टलोकाः पूरितं बोहित्थं संजातः स्वार्थसाधक इति तथा भद्र भव्यतया सुन्दरतमा जीवा निष्क्रम्यासांव्यवहारिकजीवराशेरतीत्यानन्तं संसारविस्तारं संप्राप्य मनुष्यभावं लघुकर्मतया विजानन्ति हेयोपादेयविभागं। चिन्तयन्ति च ते। यथातिदुर्लभमिदं मानुष्यमाकरो भावरत्नानां कारणं निर्वाणसुखस्य संप्राप्तमिदमधुनास्माभिः समारूढा वयं महत्तरां कोटिं तन्न युक्तोऽस्माकमधुना विषादपि विषमतरविपाकेषु विषयधनादिषु प्रतिबन्धः। समासादयन्ति च ते सर्वज्ञोपज्ञं धर्ममार्गं। ततो न विप्रलभ्यन्ते कुतीर्थिकैः। न प्रवर्तन्ते कुधर्मग्रहणे। कुर्वन्ति साधुधर्माङ्गीकरणलक्षणं वाणिज्यं। गृह्णन्ति चान्तिमार्दवार्जवमुक्तितपःसंयमसत्यशौचाकिञ्चनत्वब्रह्मचर्यसन्तोषप्रशमादिकं प्रतिक्षणं गुणरत्ननिचयं। आवर्जयन्ति सद्गुरुसाधुसाधर्मिकजनं। पूरयन्ति सद्गुणानामात्मानं। संजायन्ते स्वकार्यनिष्पादका इति।

यथा च योग्येन तत्र रत्नद्वीपे विज्ञातं गुणदोषविचारणं

कृतं किंचित्तद्ग्रहणार्थं वाणिज्यं केवलं संजातमस्य काननादिदर्शनव्यसनं तत्परायत्तेन गमितोऽनर्थको बहुः कालो मीलितानि कालेन भूयसा कियन्त्यपि रत्नकानि न विहितो विशिष्टरत्नसंचय इति तथा भद्र घनवाहन भव्यतया सुन्दरतरा जीवाः संप्राप्य मनुष्यजन्म लघुकर्मतया जानन्ति गुणागुणपरीक्षणं कुर्वन्ति सर्वज्ञदर्शनमवाप्य श्रावकोचितं कियदपि सद्गुणग्रहणवाणिज्यं केवलं दुर्जेयत्वेन लोभस्य चटुलतयेन्द्रियग्रामस्य संजायते तेषां धनविषयादिषु ममत्वव्यसनं तत्परायत्तास्च ते गमयन्ति निरर्थकं भूयांसं कालं तथापि मीलयन्ति ते भूयसा कालेन श्रावकधर्मोचितानि कियन्त्यपि गुणरत्नकानि न विदधति साधुधर्मसाध्यं विशिष्टगुणरत्नसञ्चयमिति ।

यथा च तेन हितज्ञेन प्राज्ञेनापि रत्नद्वीपे विज्ञातं स्वयं रत्नपरीक्षणं धारिता परोपदेशयोग्यता कृतं विहारारामादिषु महत्तरं कौतुकं न विहितं सुरत्नग्रहणं न लक्षितास्ते वञ्चका धूर्तलोकाः गृहीतानि चिकिचिकायमानानि काचशकलादीनि जनिता तेषु सुन्दराणीति बुद्धिः वञ्चितश्चाल्पदेशात्पूर्वमात्मेति तथा भद्र घनवाहन भव्यतया सुन्दरा जीवाः समासाद्य मनुष्यभावं मनाग्गुरुकर्मतया न विजानन्ति स्वयं कर्तुं धर्मगुणदोषपरीक्षणं धारयन्ति परोपदेशयोग्यतां कुर्वन्ति विषयधनादिषु महत्तरं प्रतिबन्धं न विदधति सर्वज्ञप्रणीतसद्गुणोपार्जनं न लक्षयन्ति कुतीर्थिकवञ्चकतां गृह्णन्ति प्रशमदयादमादिसाररहितानि दम्भप्रधानतया बहिश्चिकिचिकायमानत्वेिसरत्नतुल्यानि कुधर्मानुष्ठा-

नानि जनयन्ति तेषु सुन्दराणीति बुद्धिं वञ्चयन्ति च महुरूपदेशात्पूर्वमात्मानमिति ।

यथा च तेन मूढेन रत्नद्वीपगतेनापि न विहितं स्वयं रत्नगुणदोषपरीक्षणं नापि प्रतिपन्नं परोपदेशेन अनुशीलितं वनदेवकुलादिगोचरमत्यन्तकौतुकं विद्विष्टानि सत्यरत्नानि गृहीतानि काचशकलादीनि कृतस्तेषु सद्रत्नाभिनिवेशः मोषितो धूर्तलोकेन वञ्चितो नितान्तमात्मेति तथा भद्र घनवाहन लब्ध्वापि मनुष्यभवमभव्यतया दूरभव्यतया वातिक्लिष्टतमा जीवाः गुरुतरकर्मभराक्रान्ततया न विन्दत्येव स्वयं कर्तुं धर्मगुणदोषपरीक्षणं नापि प्रतिपद्यन्ते परोपदेशेन अनुशीलयन्ति विषयधनादिषु गाढलौल्यं विद्विषन्ति प्रशमदयादीनि सद्भूतानुष्ठानानि गृह्णन्ति धर्मबुद्ध्या स्नानहोमयागादीनि जीवघातोपमर्दकारीणि कदनुष्ठानानि कुर्वन्ति तेषु तत्त्वाभिनिवेशं मोषयन्ति कुतीर्थिकैः तदेवं वञ्चयन्ति ते नितान्तमात्मानमिति ।

यथा च स चारुः पूरयित्वा बोहित्थं कृतकृत्यः स्वयं गन्तुकामः स्वस्थाने योग्यं प्रत्याह यथाहं गमिष्यामि मित्र किं वर्तते तवेति योग्येनोक्तं न पूर्यते ममाद्यापि बोहित्थं स्तोकान्येव मयोपार्जितानि रत्नानि चारुणोक्तं किं पुनरत्र कारणं ततो योग्येन कथितं तदुपार्जनविघ्नभूतमात्मनः काननादिकुतूहलं तथा भद्र घनवाहन चारुतुल्या भगवन्तो मुनयो भृत्वात्मानं तपःसंयमप्रशमसन्तोषज्ञानदर्शनादीनां भावरत्नानां निष्ठितार्थाः स्वयं जिगमिषवो मोक्षलक्षणे स्वस्थाने योग्यरूपाणां देशविरतानां मोक्षगमनार्थमामन्त्रण-

मिव कुर्वाणाः कुर्वन्ति धर्मदेशनां ते तु निवेदयन्त्यात्मनः स्तोकगुणत्वं ततः साधवो ब्रुवते भो भद्रा मनुष्यभावे स्वाधीनं सर्वेषां सद्गुणार्जनं तत्किं न संपूर्णगुणा जाता यूयं यथा वयं ततः कथयन्ति देशविरताः संपूर्णगुणोपार्जनविघ्नभूतमात्मनो धनविषयादिषु ममत्वव्यसनं ततो यथा चारुणा योग्यं प्रत्युक्तं यथा भद्र न युक्तं ते प्राप्तस्य रत्नद्वीपे काननादिकुतूहलं कर्तुं वञ्चनमिदमात्मनो महाविघ्नः सुरत्नग्रहणस्य जानासि च त्वं सुरत्नानां सुखहेतुतां तथाप्यनादरमेवं तेषु कुर्वाणः किमात्मनो वैरिकायसे न च चिरेणापि ते कौतुकपरिपूर्तिस्तदरं स्वार्थे यतितमितरथा निरर्थकं रत्नद्वीपागमनं ततो भद्र मुञ्च वनादिकौतुकं कुरु मयि सन्निहिते सुरत्नोपार्जनमन्यथा स्वार्थभ्रष्टो भविष्यसि ततोऽत्यन्तलज्जितो योग्यः प्रतिपन्नं चारुवचनमनुष्ठितं विधानेन संजातः सुरत्नानां बोहित्थभरणेन स्वार्थसाधक इति तथा भद्र घनवाहन मुनयोऽपि देशविरतानेवमाचक्षते। यथा भो भद्रा न युक्तं युष्मादृशामवाप्ते मनुष्यभावे जानतां जिनवचनामृतरसं लक्षयतां भवनैर्गुण्यमाकलयतां कायकश्मलमलाविलतां वेदयतां यौवनस्य सन्ध्याभ्ररागभङ्गुरतां पश्यतां जीवितस्य घर्मोपतप्तशकुनिगलचञ्चलतां भावयतां स्वजनवर्गस्नेहादेरचिरद्युतिविलसितदृष्टनष्टतां कर्तुमीदृशं धनविषयादिममत्वव्यसनं वञ्चनमिदमात्मनो महान्तरायो ज्ञानादिसाधनस्य। जानन्ति च भद्राः। यथा परिणामदारुणा विषयाः कारणं चित्तविप्लवानां तरलहृदया योषितोऽभूमिः सद्भावसुखानां हेतुभूतमार्तरौद्रध्यानानां सुगतिमार्गप्रदीपो ग्रामं जनकं मानसाह्लादानां

कुयोनिगर्तातिपातहस्तावलम्बो दर्शनं सम्पादनमनन्तमनःप्रमोदानां सुखेनाचेपमोचनिक्षेपणं चारित्रं समर्पकं निरन्तरचित्तोत्सवानां अनादिजीववस्त्रमलक्षालनसलिलं तपो दायकं निःसङ्गादिसन्दोहानामनागतकर्मकचवरनिवारकः संयमो भावको भवभ्रमणभयाभावितभूरिभावहर्षाणां। तदेवमपि जानतां भवतां भो भद्राः केयमविद्या कोऽयं मोहः केयमात्मवञ्चनता केयमात्मवैरिकता येन यूयं गृध्यथ विषयेषु मुह्यथ कलत्रेषु लुभ्यथ धनेषु स्निह्यथ स्वजनेषु हृष्यथ यौवनेषु तुष्यथ निजरूपेषु पुष्यथ प्रियसङ्गतेषु रुष्यथ हितोपदेशेषु दुष्यथ गुणेषु नश्यथ सन्मार्गात्मतत्त्वस्मादृशेषु सहायेषु प्रीयथ सांसारिकसुखेषु न पुनर्यूयमभ्यस्यथ ज्ञानं नानुशीलयथ दर्शनं नानुतिष्ठथ चारित्रं नाचरथ तपः न कुरुथ संयमं न संपादयथ सद्भूतगुणसम्भारभाजनमात्मानमिति। एवं च तिष्ठतां भवतां भो भद्रा निरर्थकोऽयं मनुष्यभवो निष्फलमस्मादृशसन्निधानं निष्प्रयोजनो भवतां परिज्ञानाभिमानोऽकिंचित्करमिव भगवद्दर्शनासादनं। एवं हि स्वार्थभ्रंशः परमविशिष्यते। स च भवतामङ्गलमालक्षयति। न पुनश्चिरादपि विषयादिषु सन्तोषः। तन्न युक्तमेवमासितुं भवादृशां। अतो मुञ्चत विषयप्रतिबन्धं परिहरत स्वजनस्नेहादिकं विरहयत धनभवनममत्वव्यसनं परित्यजत निःशेषं सांसारिकमलजाम्बालं गृह्णीत भागवतीं भावदीक्षां विधत्त संज्ञानादिगुणगणसञ्चयं पूरयत तेनात्मानं भवत स्वार्थसाधका यावत्सन्निहिता भवतां वयं। अन्यथास्मदुपदेशाभावे सद्बुद्धिविकला यूयं स्वार्थभ्रष्टा एव सर्वथा भविष्यथेति। तदिदं भगवतां सन्मु-

नीनामुपदेशवचनामृतमुपालम्भगर्भमुपलभ्यते । योग्यकल्पा देशविरता नितरां लज्जन्ते स्वचरितेन न ददति बह्वोत्तराणि न कुर्वन्ति मनोदुष्प्रणिधानं किं तर्हि प्रतिपद्यन्ते हितमिति तत्साधुवचनं आचरन्ति यथोक्तविधानेन स्वीकुर्वन्ति पारमेश्वरं महाव्रतं तिष्ठन्ति पूरयन्तो गुणरत्नैरात्मयानपात्रमिति ।

यथा च स चारुर्गतो हितज्ञाभ्यर्णं विहितं स्वस्थानगमनार्थं तदामन्त्रणं ततो दर्शितं तस्मै हितज्ञेन स्वयमुपार्जितं तत्काचग्रकलादिकं निवेदितं काननादिकौतुकमारमात्मचेष्टितं तथा भद्र घनवाहन भद्रकेभ्यो भव्यमिथ्यादृष्टिभ्यः संपूर्णगुणाः सुसाधवो यद्च सद्धर्मकथनायाभिमुखीभवन्ति तच्चारुणा हितज्ञसमीपगमनमभिधीयते । ततः कुर्वन्ति ते साधवस्तेषां भद्रकभव्यमिथ्यादृष्टीनां धर्मदेशनया मोचगमनं प्रत्यामन्त्रणं । तेऽपि च तेभ्यो दर्शयन्ति यथा वयमपि कुर्म एव धर्मं यतोऽनुतिष्ठामो नित्यस्नानं जुहुमोऽग्निहोत्रं दद्मस्तिलसमिधः प्रयच्छामो गोभूमिहिरण्यादीनि कारयामो वापीकूपतडागप्रभृतीनि परिणयामः कन्यका इत्यादिकं काचग्रकलादिदर्शनं । अन्यच्च । ते सुसाधुभ्यो निवेदयन्ति यथा भो भट्टारकाः सुखेन वयमास्महे यतो भचयामो मांसं पिबामो मद्यं आस्वादयामो विचित्रं सुरसं भोजनं रमयामो वरस्त्रियः परिदध्मः सुकुमारोज्ज्वलवसनानि मानयामः पञ्चसुगन्धिकोन्मिश्रं ताम्बूलं विलसामो विविधमाल्यविलेपनैः मीलयामो धननिचयं विचरामो यथेष्टचेष्टया न सहामो रिपुगन्धं उल्लासयामो निजकीर्तिं दर्शयामः स्वस्य देवरूपतां अनुभवामो मनुष्य-

भवमारमित्यादि। तदिदं काननादिकौतुकमात्मचेष्टितकथनं। ततो यथा तेन चारुणा कृपापरिगतहृदयेन हितज्ञं प्रत्यभिहितं यदुत वयस्य वञ्चितोऽसि त्वं पापिना धूर्तलोकेन मुग्धतया न जानीषे विधातुं रत्नगुणदोषपरीक्षां अन्यच्च न युक्तं तव कर्तुं रत्नद्वीपमागतस्य काननादिकुतूहलं विप्रलब्धस्तत्रैव परमार्थेन ततो हितज्ञेन निश्चित्य तदीयवत्सलतां लक्षितः परिज्ञानातिरेकः ततो निवर्तितं काननादिकौतुकं पृष्टश्च स चारु रत्नलक्षणं दर्शितः शिष्यभावः चारुरपि रञ्जितस्तद्गुणैः निवेदितं रत्नलक्षणं याचित-स्तदुपार्जनोपायं हितज्ञश्चारुणा संजातो विचक्षणः परीक्षको रत्नानां ततः परिहृत्य कृत्रिमरत्नानि संपन्नः सत्यरत्नग्रहणोद्यत इति तथा भद्र घनवाहन सन्मुनयोऽपि करुणापरिगतमानसास्तानेवं वदन्तो भद्रकभव्यमिथ्यादृष्टीनित्यमाचक्षते। यदुत भो भद्राः सत्यं धर्म-शीला यूयं कुरुथ धर्ममात्मबुद्ध्या केवलं मुग्धतया न जानीथ तद्विशेषं। वञ्चिता यूयं कुधर्मशास्त्रकारैः। न खलु हिंसकर्माणि धर्मसाधनानि भवन्ति। सर्वभूतदयाप्रधानो हि भगवान् विशुद्ध-धर्मः। तद्विरोधीनि च यागहोमादीनि। तन्न युक्तं धर्मबुद्ध्या भवतामधर्मासेवनं। यत्पुनर्ब्रूथ यूयं यथा सुखेन वयं तिष्ठामो यतो भक्षयामो मांसमित्यादि तदपि मुग्धताविजृम्भितमेव भवतां हास्य-प्रायं विवेकिनां। यतः सन्निहिताशेषापाये काये वलात्सु विविध-रोगेषु त्वरागामिन्यां जरायां मनःशरीरसन्तापकारिषु राजाद्युप-द्रवेषु याथावरे यौवने सर्वथमसकारिणीषु सम्पत्सु मनोदाहिनीष्ट-वियोगे चित्तवैधुर्यकारिणि विप्रियसम्प्रयोगे सततमागामुके मरणे

सर्वथाशुचिनिधाने शरीरे पुद्गलपरिणाममात्रनिःसारेषु विषयेषु असंख्यदुःखलक्षपरिपूरिते जगति वर्तमानानामस्मतां कीदृशं नाम सुखं। परमार्थतो दुःखेऽपि सुखविपर्यास एष भवतां। कर्मजनितः खल्वेष विभ्रमः कारणमनन्तभवभ्रमणस्य। ततो भो भद्राः कृच्छ्रेण प्राप्ते मनुष्यभवे सन्निहितायां धर्मसामग्र्यां सत्यस्मदुपदेशे स्वाधीने गुणाधाने प्रकटे ज्ञानादिमोक्षमार्गे अनन्तानन्दरूपे जीवे तस्य स्वरूपलाभलक्षणे मोक्षे ज्ञानश्रद्धानुष्ठानमात्रायत्ते तल्लाभे न युक्तं भवतामीदृशमात्मवञ्चनं कर्तुं। तदिदं सन्मुनिवचनमाकर्ण्य ते हितप्रवृत्त्या भद्रकभव्यमिथ्यादृष्टयो जीवा निश्चिन्वन्ति तेषां भगवतां सन्मुनीनां वत्सलतां लक्षयन्ति परिज्ञानातिरेकं। ततो निवर्तयन्ति तदुपदेशेनावाप्तशुभवासनाविशेषाः सन्तो धनविषयगृद्धिप्रतिबन्धं पृच्छन्ति च विशेषतो मुनिजनं ते धर्ममार्गं दर्शयन्ति शिष्यभावं रञ्जयति गुरूनपि विनयादिगुणैः। ततः प्रसन्नहृदया गुरवस्तेभ्यो गृहस्थावस्थोचितं साधुदशायोग्यं च प्रतिपादयन्ति धर्ममार्गं ग्राहयन्ति तदुपार्जनोपायं महायत्नेन। यदुत भो भद्राः सद्धर्मसाधनयोग्यत्वमात्मनोऽभिलषद्भिर्भवद्भिस्तावदिदमादौ कर्तव्यं भवति यदुत सेवनीया दयालुता न विधेयः परपरिभवः मोक्तव्या कोपनता वर्जनीयो दुर्जनसंसर्गः विरहितव्यालीकवादिता अभ्यसनीयो गुणानुरागः न कार्या चौर्यबुद्धिः त्यजनीयो मिथ्याभिमानः वारणीयः परदाराभिलाषः परिहर्तव्यो धनादिगर्वः विधेया दुःखितदुःखत्राणेच्छा पूजनीया गुरवः वन्दनीया देवसङ्घाः सम्माननीयः परिजनः पूरणीयः प्रणयिलोकः अनुवर्तनीयो मित्रवर्गः

न भाषणीयः परावर्णवादो ग्रहीतव्याः परगुणाः लङ्घनीयं निजगुणविकत्थनेन स्मर्तव्यमणीयोऽपि सुकृतं यतितव्यं परार्थे संभाषणीयः प्रथमं विशिष्टलोकः अनुमोदनीयो धार्मिकजनः न विधेयं परमर्मोद्घट्टनं भवितव्यं सुवेषाचारैः ततो भविष्यति भवतां सर्वज्ञोपज्ञसद्धर्मानुष्ठानयोग्यता। तत्र च गृहस्थैः सद्भिः परिहर्तव्योऽकल्याणमित्रयोगः सेवितव्यानि कल्याणमित्राणि न लङ्घनीयोचितस्थितिः अपेक्षितव्यो लोकमार्गः माननीया गुरुसंहतिः भवितव्यमेतत्तन्त्रैः प्रवर्तितव्यं दानादौ कर्तव्योदारपूजा भगवतां निरूपणीयः साधुविशेषः श्रोतव्यं विधिना धर्मशास्त्रं भावनीयं महायत्नेन अनुष्ठेयस्तदर्थो विधानेन अवलम्बनीयं धैर्यं पर्यालोचनीयायतिः अवलोकनीयो मृत्युः भवितव्यं परलोकप्रधानैः सेवितव्यो गुरुजनः कर्तव्यं योगपट्टदर्शनं स्थापनीयं तद्रूपादि मानसे निरूपयितव्या धारणा परिहर्तव्यो विक्षेपमार्गः प्रयतितव्यं योगशुद्धौ कारयितव्यं भगवद्भुवनबिम्बादिकं लेखनीयं भुवनेशवचनं कर्तव्यो मङ्गलजपः प्रतिपत्तव्यं चतुःशरणं गर्हितव्यानि दुष्कृतानि अनुमोदयितव्यं कुशलं पूजनीया मन्त्रदेवताः श्रोतव्यानि सच्चेष्टितानि भावनीयमौदार्यं वर्तितव्यमुत्तमज्ञानेन ततो भविष्यति भवतां साधुधर्मानुष्ठानभाजनता। ततः कृतबहिरन्तरङ्गसङ्गत्यागैः परदत्तभोजिभिर्भावमुनिभिः सद्भिर्भवद्भिरासेवनीया ग्रहणशिक्षा विधेया वस्तुतत्त्वजिज्ञासा मृगणीयः स्वपरतन्त्ववेदिना परहितनिरतेन पराशयवेदिना यथार्थाभिमानेन गुरुणा सम्यक् सम्बन्धः प्रयोक्तव्यो गुरुविनयः अनुष्ठेया विधिपरता कर्तव्यो मण्डलिनिपद्यादौ

यत्नः अनुपालनीयो ज्येष्ठक्रमो भजनीयोचितासनक्रिया हेयो विकथादिविक्षेपः शीलनीया भावसारमुपयोगप्रधानता शिक्षणीयोऽयं श्रवणविधिः आचरणीया बोधपरिणतिः यतितव्यं सम्यग्ज्ञानस्थिरतायां कार्यं मनःस्थैर्यं न विधेयो ज्ञानदुर्लेकः नोपहसनीयास्तदज्ञाः परित्याज्यो विवादः परिहार्यमबुद्धबुद्धिभेदकरणं न विधेयः कुपात्रे शास्त्रनियोगः ततो भविष्यति भवतां पात्रता बहुमता गुणज्ञानां विग्रहवती शमश्रीः स्थाश्रयो भावसम्पदां। ततः संजनिष्यन्ते भवतामुपरि सप्रसादा गुरवः संप्रदापयिष्यन्ति सिद्धान्तसाराणि प्रवर्धिष्यन्ते भवतां शुश्रूषाश्रवणग्रहणधारणोहापोहतत्त्वाभिनिवेशाः प्रज्ञागुणा इति। तथानुशीलनीया भवद्भिरासेवनाशिक्षा समाचरणीया प्रत्युपेक्षणा भजनीया प्रमार्जना सात्मीभावमानेतव्या भिक्षाचर्या प्रतिक्रमणीयेर्यापथिका दातव्यालोचना शिक्षणीया निर्दोषा भोजनता विधेया भाजनपरिकर्मणा अनुष्ठेयागमिकी विचारचर्या निरीक्षणीयाः स्थण्डिलभूमयः कर्तव्यं समस्तोपाधिशुद्धमावश्यकं प्रवर्तितव्यं यथागमं कालग्रहणे आम्नातव्यः पञ्चविधः स्वाध्यायः तदेवमभ्यसनीया प्रतिदिनक्रिया पालनीयः पञ्चविधोऽप्याचारः आसेवनीये चरणकरणे अङ्गाङ्गीभावमानेयोऽप्रमादः स्थातव्यमत्युग्रविहारितया ततो भविष्यति भवतां मोक्षगमनप्रवणो गुणसन्दोहः। तदेवं ते भगवन्तः सन्मुनयो दर्शयन्ति तेभ्यः सद्गुणार्जनोपायं। ततस्ते तदुपदेशेन भद्रकभव्यमिथ्यादृष्टयः संजायन्ते विचक्षणाः भवन्ति परीक्षका भावरत्नानां विरहयन्ति कुधर्मासेवनं रमन्ते सद्गुणोपादाने वदन्ति च। यथा भो भो भट्टारकाः

अपायहेतुभिर्भोगैर्धूर्ताकारैश्च तीर्थिकैः।
एतावन्तं वयं कालं वञ्चिता मोहदोषतः॥
अधुना बोधिता धन्यैर्भवद्भिरतिवत्सलैः।
यथादिष्टं करिष्यामो नाथाः सर्वं पुरोदितम्॥
अयोपवृंहिता वाक्यैः साधुभिस्ते मनोहरैः।
यथोपदिष्टं कुर्वाणा जायन्ते स्वार्थसाधकाः॥

यथा च स चारुर्गतो मूढसमीपं कृतं गमनार्थमामन्त्रणं मूढेनोक्तं वयस्य किं गतेन करिष्यसि रमणीयतममिदं द्वीपं तथाहि पश्य पश्य भूषितमिदं पद्मखण्डैर्विराजितं गृहोद्यानैर्मण्डितं सरोवरैः कमनीयं विहारारामैः स्पृहणीयं सुगन्धिपुष्पभरवन्धुराभिर्वनराजिभिरभिलषणीयं सुन्दरलोकयोगेन तदत्र मानयित्वा सुचिरं सुखं पश्चात्स्वस्थानगमनं करिष्यामो न च मे गमनं रोचते भूतं च मयापि बोद्धित्थं वर्तते ततो दर्शितं तत्काचशकलादिपूरितं चारोरनेन संजाता चारोः करुणा दत्तस्तस्योपदेशो यथा न युक्तं ते काननादिकौतुकं कुरत्नानि च त्वया गृहीतानि रत्नबुद्ध्या तत्परित्यज मित्रामूनि गृहाण सुरत्नानि तेषां चेदं लक्षणं ततः प्रद्विष्टो मूढः प्राह च नाहं यास्यामि गच्छ त्वं यत्र प्रवृत्तोऽसि मित्त्रमेव न भवसि त्वं मे यस्त्वं मामकीनानि भास्वररत्नानि दूषयसि अलं मे तावकरत्नैः पुनः कृपयोपदेशदानोद्यतो निराकृतश्चारुरनेन संजातश्चारोरप्रज्ञापनीयोऽयमिति निश्चयः तथा भद्र घनवाहन चारुकल्पा भगवन्तो मुनयो मूढस्थानीयेभ्यो दूरभव्येभ्योऽभव्येभ्यो वा यदा धर्मोपदेशार्थमभिमुखीभवन्ति तदा तेषां

तत्तत्समीपगमनमभिधीयते। ततः कुर्वन्ति ते सद्धर्मदेशनया मोक्ष-गमनं प्रति तदामन्त्रणं। ततस्ते मूढकल्पा जन्तवः खल्वेवमाचचीरन्। यदुत भो भोः श्रमणकाः किं तेन यौष्माकीनेन मोक्षेण नः प्रयो-जनं भवतामप्यलमेव तत्र गमनेन। तथाहि

न तत्र खाद्यं नो पेयं न विलासा न भूतयः।
न स्त्रियः प्रियसंयोगो न कान्ताः कमलेक्षणाः॥
न भाषणं सविश्रम्भं न गीतं नापि नर्तनम्।
न हास्यं हन्त यौष्माकः स मोक्षो ननु बन्धनम्॥
अत्यन्तरमणीयोऽयमस्माकं प्रतिभासते।
सदा संसारविस्तारश्चित्ताह्लादविधायकः॥
यतोऽत्र सन्ति संसारे खाद्यं पेयं विभूतयः।
विलासा भूषणं नार्यः कामदाः पद्मलोचनाः॥
यथेष्टचेष्टाचारित्वं गीतं नृत्यं विलेपनम्।
विद्यते सर्वमेवात्र संपूर्णं सुखसाधनम्॥
अतो विमुच्य संसारं सुखसम्भारपूरितम्।
भो भोः श्रमणका यूयं न मोक्षं गन्तुमर्हथ॥
तदलं मोक्षवादेन संसारे सुन्दरा स्थितिः।
मानयित्वा सुखं दिव्यं पश्चान्मोक्षं गमिष्यथ॥
यश्च सद्धर्मवादोऽयं भवतां मनसि स्थितः।
अस्माकमपि सोऽस्त्येव किं यूयं धर्मगर्विताः॥

तथाहि।

भूरिभिर्महिषैश्छागैः शूकरैश्च निपातितैः।

कुर्महे चण्डिकादीनां वयं रुधिरतर्पणम् ॥
गोमेधमश्वमेधं च नरमेधं तथाजकैः।
कुर्मो यागं चतुर्भेदं भूतसङ्घातमर्दनम् ॥
कुयोनिवर्तिनः सत्त्वान् निःशेषान् दुःखपीडितान्।
हत्वा हत्वा वयं दुःखान्मोचयामः कृपापराः ॥
पापर्द्धौ जीवसङ्घातं मारयित्वा दिने दिने।
मांसावारितसत्रं च प्रयच्छामो यथेच्छया ॥
इत्येवमादिभिर्धर्मैः कृतकृत्यतया वयम्।
भावत्कस्यास्य धर्मस्य न तृप्तिं वत कुर्महे ॥
तदिदं मूढकल्पानामभव्यानां प्रभाषितम्।
आकर्ण्य मुनयो धीरा जायन्ते करुणापराः ॥
ततस्ते तत्प्रबोधार्थमित्यमाचक्षते तदा।
भो भद्रा नैव युक्तोऽयं भवतां भवविभ्रमः ॥
एते हि भोगा नागानां भोगा इव सुदारुणाः।
पर्यन्तकटुकाः पापास्तीव्रसंक्लेशवर्धनाः ॥
नार्योऽनार्याः कृताकार्याः सर्वमायाकरण्डिकाः।
विलासनृत्तसङ्गीतविब्वोकाद्या विडम्बनाः ॥
मोक्षस्तु भद्राः सततमनन्तानन्दसुन्दरः।
जीवस्यात्मव्यवस्थानं निःशेषक्लेशवर्जितः ॥
मनुष्यभवमासाद्य तन्न युक्तं भवादृशाम्।
खाद्यपेयविलासादिकौतुकेनात्मवञ्चनम् ॥
एतेषु सक्ता भोगेषु कतिचिद्दिनभाविषु

मा मोक्षमार्गमुत्सृज्य गच्छतानन्तके भवे ॥
धर्मानुष्ठानबुद्ध्या च यदिदं मारणादिकम् ।
यूयं कुरुथ तत्पापं सर्वं संसारवर्धनम् ॥
कुशास्त्रकारमोहेन मा कुरुध्वमथेदृशम् ।
अहिंसाद्यात्मकं धर्मं कुरुध्वं दोषसूदनम् ॥
अथेदृशं मुनीनां ते वाक्यमाकर्ण्य पेशलम् ।
मूढकल्पा जनास्तूर्णं प्रद्वेषं यान्ति पापिनः ॥
वदन्ति च ततो रुष्टा भो भोः श्रमणका वयम् ।
शिक्षणीया न युष्माभिर्यात यात यथागताः ॥
भोगाच्छिन्द्य पापिष्ठा धर्मं चास्मन्निषेवितम् ।
ततो नो वैरिका यूयं नेष्यामोऽन्तकमन्दिरम् ॥
ईदृशोऽपीह सद्धर्मो यद्ययं वो न रोचते ।
ततोऽलं युष्मदीयेन धर्मेण पुरुषाधमाः ॥
निवेदयत सद्धर्मं निजेभ्यः श्रमणाधमाः ।
आत्मीयजनकेभ्यो भो न ह्यस्माकं प्रयोजनम् ॥
तदिदं मूढजन्तूनां वाक्यमाकर्ण्य साधवः ।
ब्रूयुः करुणया यावद्भूयो धर्मस्य लक्षणम् ॥
तावत्ते नितरां क्रुद्धा दष्टौष्ठा रक्तलोचनाः ।
गाढप्रहारदानादौ प्रवर्तन्ते न संशयः ॥
ततस्तत्तादृशं वीक्ष्य मुनयो मूढचेष्टितम् ।
निश्चिन्वन्ति निजे चित्ते नैते साध्याः कथंचन ॥
ततस्ते साधवस्तेषामुपेक्षां कुर्वते यतः ।

न भवेद्दोहने चित्तं बन्ध्याभावे विनिश्चिते ॥

ततो यथा चारुपदेशं कुर्वतोस्तयोर्योग्यहितज्ञयोर्ग्रहते रत्नानां बोहित्थे ते तौ च गृहीत्वा गतश्चारुः स्वस्थाने जातास्तयो रत्नविनियोगेन सततमनन्तानन्दभाजनं मूढस्तु दुश्चरितक्रुद्धेन नरपतिना निष्कासितस्ततो द्वीपात् प्रक्षिप्तः समुद्रे संजातोऽनन्तदुःखभरभाजनमिति तथा भद्र घनवाहन मुनीनामुपदेशं पूर्वोक्तं कुर्वतां तेषां देशविरतानां भद्रकभव्यमिथ्यादृष्टीनां च क्रमेण कृते पारमेश्वरे व्रतग्रहणे वर्तन्ते ज्ञानादयो गुणाः भ्रियन्ते तेषामात्मानः ततः सर्वेऽपि गच्छन्ति परमपदे जायन्ते सततमनन्तानन्दसन्दोहभाजो ज्ञानदर्शनचारित्रविनियोगेन मूढजन्तवस्तु कुर्वन्ति पापभरपूरणं ततः क्रुद्धेनैव स्वकर्मपरिणामभूभुजा निर्वास्यन्ते मनुष्यभवरत्नद्वीपात् पात्यन्ते संसारसागरे भवन्ति निरन्तरदुःखसम्भारभाजनमिति ।

ततश्च ।

एवं कथानकस्यास्य ज्ञात्वा भावार्थमीदृशम् ।
अयं प्रसङ्गितो जातः साधुर्भो घनवाहन ॥
एवंविधविवेकस्य कारणे कर्मदारणे ।
को वा कथानके ह्यत्र श्रुते नो मुनितां भजेत् ॥
रत्नद्वीपसमे प्राप्ते मानुष्ये भद्र भाविकैः ।
रत्नैर्भृत्वात्मबोहित्थं को न गच्छेच्छिवालयम् ॥

ततो भद्रेऽगृहीतसङ्केते तदिदमीदृशमकलङ्कवचनमाकर्णयतो मे क्षमिता बह्वी कर्मस्थितिः संजातो भद्रकभावः सुस्वादितं मनागाकलङ्कं वचनं। तथापि स्थितोऽहं मौनेनैव। प्राप्तोऽकलङ्कः

चलितो मया पष्ठमुनिसमीपं। वन्दितो मुनिवरः। धर्म-लाभितोऽनेन। कृता प्रस्तावना। पृष्टः सोऽपि वैराग्यकारणं। मुनिनोक्तं।

नगरी संसृतिर्नाम श्रस्त्यनादिरनन्तिका।
तदीयो हट्टमार्गो मे जातो वैराग्यकारणम्॥

अकलङ्केन चिन्तितं।

अरघट्टः पुरा यादृग् मुनिना मे निवेदितः।
नूनं भो हट्टमार्गोऽपि तादृशोऽयं भविष्यति॥

ततः प्रोक्तमकलङ्केन।

निवेदय महाभाग मह्यमेनं स्फुटाक्षरैः।
हट्टमार्गः स संजातो यस्ते वैराग्यकारणम्॥
मुनिराह महाभागो योऽयं ध्यानस्थितो मुनिः।
अनेन जन्मसन्तानः स हट्टो मम दर्शितः॥
विराजितः सुदीर्घाभिर्भवावपनपंक्तिभिः।
भूरिभिः सुखदुःखाख्यैः स पण्यैः परिपूरितः॥
आकुलैः सद्व्ययोद्युक्तैः क्रयविक्रयतत्परैः।
जीववाणिजकैर्नित्यं स्वार्थनिष्ठैर्निषेवितः॥
पुण्यापुण्याभिधानैश्च लोकोत्कृष्टविमध्यमैः।
मूल्यैः पण्यानि लभ्यन्ते स्वानुरूपाणि तत्र भोः॥
नित्यं व्यवहरत्येष सदैवोद्घाटितापणः।
अपुण्यजीवरोरैश्च भूरिभिः परिपूरितः॥
महामोहाभिधानोऽत्र बलाधिकृत उच्यते।

कामक्रोधादयस्तस्य पुरुषाः परिचारकाः ॥
घोरैर्जीवाधमर्णानां कर्माख्यैर्धनिकैः सदा।
क्रियते धरणकं तत्र दुर्मोचमतिदारुणम् ॥
सदा कलकलायन्ते लोकोद्वेगविधायिनः।
मत्ताः कषायनामानस्तत्र दुर्दान्तडिम्भकाः॥
अनेकाश्चर्यभूयिष्ठो विचित्रः सतताकुलः।
नान्यो जगति तादृशो हट्टमार्गो नरोत्तम॥
केवलं ते मया लोका यावत्सम्यङ् निरीक्षिताः।
दृष्टे सर्वेऽपि विज्ञातास्तावदत्यन्तदुःखिताः॥
अथानेन महाभाग मुनिना मम लोचने।
अञ्जिते कृपया भद्र ज्ञानाञ्जनशलाकया॥
ततो विमलदृष्टित्वाद्दृष्टो दूरे व्यवस्थितः।
मया हट्टात्समुत्तीर्णो मठो नाम शिवालयः॥
तत्रानन्ता मया दृष्टाः सततानन्दसुन्दराः।
सद्बुद्धिदृष्ट्या भो लोका मुक्ताख्या बाधवर्जिताः॥
ततो मे तत्र संपन्नो हट्टमार्गे व्यहत्तमः।
वसतो भद्र निर्वेदो मठोन्मायक एव च॥
ततश्चायं महाभागो मुनिः प्रोक्तस्तदा मया।
हट्टमेनं परित्यज्य मठे यामः शिवालये॥

यतः।

नास्ति मे क्षणमप्यत्र रतिर्नाथ सुदारुणे।
हट्टमार्गे मजामोऽतस्त्वया सार्धं शिवालये॥

मुनिनोक्तं यदीच्छा ते मठे गन्तुं नरोत्तम ।
गृहाण मामिकां दीक्षां ततोऽस्य प्रापिकामरम् ॥
मयोक्तं दीयतां नाथ मा विलम्बो विधीयताम् ।
ततो दत्ता ममानेन दीक्षेयं पारमेश्वरी ॥
उपदिष्टं च कर्तव्यं मठप्रापणकारणम् ।
अहं तदेव कुर्वाणो भद्र तिष्ठामि साम्प्रतम् ॥

अकलङ्केनोक्तं ।

कीदृशं नाथ कर्तव्यं गुरुणा ते निवेदितम् ।
यद्बलेन मठे तत्र भगवन्गन्तुमिच्छसि ॥

मुनिनोक्तं । आकर्णय । अभिहितोऽहं भगवता तदानेन गुरुणा । यथा सौम्य अस्ति तावद्भवतः परिग्रहे कायाभिधानः पञ्चाक्षनामगवाक्षो निवासार्थमपवरकः । तत्र च कार्मणशरीरनामकमपवरकगवाक्षाभिमुखक्षयोपशमाभिधानरम्यं गर्भगृहकं । तत्र च चित्ताभिधानमतितरलं वानरलीवरूपं । मयोक्तं । बाढं समस्तमस्ति । गुरुणोक्तं । यद्येवं ततो गृहीतेनैव तेन सर्वेण तावद्भवता प्रव्रजितव्यं । यतो न शक्यते तदकाण्ड एव विरहयितुं । मयोक्तं । यदाज्ञापयति नाथः । ततः प्रव्रजितोऽहं । गुरुणोक्तं । भद्र त्वयेदं वानरलीवरूपं सुरक्षितं कर्तव्यं । मयोक्तं । यदादिशति नाथः । केवलं कुतो भयमिति कथयन्तु भगवन्तः । ततोऽभिहितमनेन मुनिना । यथा सौम्य विद्यन्ते तत्र गर्भगृहके वसतोऽस्य भूयांसः खलूपद्रवकारिणो यतो भक्ष्यते वराकमिदं कषायनामकैर्दुष्टमूषकैः तरलतरीक्रियते नोकषायाख्यैर्वधपटुभिर्दुष्टवृश्चिकैः खाद्यते संज्ञाख्याभिः

क्रूरमार्जारीभिः विलुप्यते रागद्वेषनामकाभ्यां भीषणकोलोन्दुराभ्यां ग्रस्यते महामोहसंज्ञेनातिरौद्रमार्जारेण उपताप्यते परीषहोपसर्गाहिः सततं चोठयद्भिर्दंशमशकैः विह्वलीक्रियते दुष्टाभिसन्धिवितर्काख्यैर्वज्रतुण्डैर्भचयद्भिर्मत्कुणैः उपद्रूयतेऽलीकचिन्तासंज्ञाभिर्गृहकोकिलिकाभिः अभिभूयते दारुणाकारैः प्रमादकृकलासैः तुद्यतेऽनवरतमविरतिजाम्बालनामकेन षट्पदिकाजालेन अन्धीक्रियते मिथ्यादर्शनसंज्ञेनातिघोरेण तमसा। तदेवमेते भद्र तव गर्भगृहके सततस्थायिनोऽस्य वराकस्योपद्रवविशेषाः। तदिदमेवमादिभिरुपद्रवैरुपद्रुतं चित्ताभिधानं वानरलीवरूपं वेदनाभरनिःसहतया निपतति रौद्रध्यानाभिधाने सुज्वलितखादिराङ्गारकुण्डे क्वचित्पुनः प्रविशत्यनेककुविकल्पाख्यलूतातन्तुजालावनद्धमुखे भीषणे गाढमार्तध्यानाभिधाने महाबिले। तदिदमप्रमत्तेन भवता सततं रक्षणीयं। मयोक्तं। भदन्त कः पुनरस्य रक्षणोपायः। गुरुराह। भद्र ये ते विद्यन्ते तत्रापवरके पञ्च गवाक्षास्तेषां द्वारेषु विषयनामानः पञ्चैव विषवृक्षा विद्यन्ते। ते चातिदारुणाः स्वरूपेण यतस्ते नाम्रापीदं वानरलीवरूपं विह्वलयन्ति गन्धेनापि घूर्णयन्ति दर्शनेनापि तरलयन्ति स्मरणेनापि मारयन्ति स्पर्शनेनास्वादनेन च पुनर्यदिदं निपातयन्ति तत्र किमाश्चर्यं। ते चास्यामीभिरुपद्रवैरुपद्रुतस्य विह्वलतया सहकारात्मका इति प्रतिभासन्ते। ततो निर्गच्छति तदभिमुखं तैर्मवाक्षैर्गाढाभिलाषेण रज्यते सुन्दराणीति बुद्ध्या केषु चित्तत्फलेषु विद्वेष्टि न सुन्दराणीति बुद्ध्या कानिचित्तत्फलानि बंभ्रमीति लौल्यातिरेकेणानवरतं तच्छाखान्तरेषु

लुठति नितरामर्थनिचयमंज्ञे तदधोवर्तिनि पत्रफलकुसुमरजः-कचवरे । ततस्तेषु परिभ्रमदिदमुद्दण्डं कर्मपरमाणुनिचयसंज्ञेन तदीयफलकुसुमरेणुना आर्द्रीक्रियते भोगस्नेहनामकेन मकरन्द-बिन्दुनिस्यन्दसन्दोहवर्षेण ॥ ततो मया गृहीतवचनभावार्थेन चिन्तितं ।• अये वृक्षास्तावेदते सामान्यरूपाः शब्दरूपरसगन्धस्पर्शा भविष्यन्ति कुसुमानि पुनरपरिस्फुटास्तद्विशेषाः फलानि तु परि-स्फुटास्तद्विशेषा एव शाखान्तराणि पुनस्तदाधारवस्तुस्थानानि तेषु च सञ्चरणं चित्तवानरलीवरूपस्य लोकोपचारेणाभिहितं यदाऊ-र्लौकिकाः अमुत्र गतं मे चित्तमिति । एवं च स्थिते बुद्धं मयेदं तावत्समस्तं मुनिना भाषितं भोत्स्यते चेति विचिन्त्य मयाभि-हितं । भदन्त ततस्ततः । गुरुराह । ततो भद्र भोगस्नेहार्द्रीभूते कर्मपरमाणुप्रचयरजोगुण्ठिते तत्र चित्तवानरलीवरूपशरीरे विकल-तया स्थैर्यस्य भेदकतया विषरूपत्वात्तस्य रजसः संजायन्ते व्रतानि संपद्यते जर्जरीभावः व्याप्यते समन्तान्मध्यदेशः दह्यते विषरूपेण तेन रजसा । ततो भजते कृष्णरूपतां तच्छरीरं क्वचित्संपद्यते रक्तीभावः । ततस्तत्र गर्भगृहके वर्तमानं तत्तेषां सर्वेषां पूर्वोक्ता-नामुपद्रवविशेषाणां गम्यं भवति । ततो बाध्यते नानाविधं तैरिति । तदेष भद्र तस्य चित्तवानरलीवरूपस्य संरक्षणोपायो यदुत गृहीत्वा स्ववीर्यसंज्ञेनात्महस्तेन दृढमप्रमादनामकं वज्रदण्डं तच्चित्तवानर-लीवरूपं तैरक्षनामकैर्गवाक्षैर्विषयवृक्षफलभक्षणस्पृहया निर्गच्छदा-स्फोट्य निवारणीयं । तथापि चटुलतया निश्चरत्पुनः पुनराक्रोड-नीयं । ततो निषिद्धबहिर्गमनस्य निवृत्तसहकाराशकाभिलाषस्य

तस्य शोषमुपयास्यत्यसौ भोगक्लेदसंपादितः शरीरार्द्रीभावः। ततः शुष्कशरीरात्परिशटिष्यति प्रतिचणं तद्रजो रोक्ष्यन्ति चतानि अपयास्यति जर्जरता न भविष्यति क्षामता विनंक्ष्यति रक्तीभावः आविर्भविष्यति धवलता संपत्स्यते शरीरस्थैर्यं संजनिष्यते दर्शनीयता। ततो न प्रभविष्यन्ति ते प्रागुपवर्णितास्तत्रापि शर्मगट्टके वर्तमानस्य तस्योपद्रवविशेषाः। किं च तेऽपि मार्जारमूषककोलोन्दुरादयस्तस्य वानरलीवस्योपद्रवकारिणः समस्तास्तेनैवाप्रमादनामकेन वज्रदण्डेन भवता चूर्णनीयाः। ततस्तेषु संचूर्णितेषु तद्गर्भगट्टकमार्गसञ्चरिष्णु वानरलीवरूपं निर्बाधं भविष्यति। तदयं भद्र तस्य संरचणोपायः। मयोक्तं। भदन्त तत्किं पुनस्तेनेत्थं संरचितेन मम सेत्स्यति प्रयोजनं। भगवताभिहितं। ननु भद्र यद्भवतोऽभिप्रेतं शिवालयमठगमनं तस्यैतदेव चित्तवानरलीवरूपं सुसंरचितमुपायभूतं वर्तते॥

> एतद्धि रचितं सम्यक् संभवत्येव कारणम्।
> निर्बाधं गमनस्योच्चैः पुरुषस्य शिवालये॥
> ततश्चेत्तत्र ते भद्र विद्यते गमने मतिः।
> अस्य संरचणेऽप्येवं ततो यत्नं समाचर॥

किं च।

> चक्रकं बहुकालीनं वर्तते भद्र दुस्तरम्।
> अस्य वानरलीवस्य यदिदं ते मयोदितम्॥

तथाहि।

> तत्तैरुपद्रवैर्गाढं पीडितं मूषकादिभिः।

वेदनाविह्वलं मोहाद्रासकेषु प्रवर्तते ॥

ततश्च ।

गुण्ड्यते रजसा भूयो भिद्यते स्यन्दबिन्दुभिः ।
ततः क्षतानि जायन्ते बाध्यते मूषिकादिभिः ॥
ततस्तद्भक्षणासक्ता वर्धन्ते मूषिकादयः ।
भूयश्च बाध्यमानं तैरासकेष्वेव धावति ॥
पुनर्गुण्डनमेवास्य स्नेहेन पुनरार्द्रता ।
पुनश्च क्षतसम्पत्तिः पुनः सर्वेऽप्युपद्रवाः ॥
तदेवं चक्रके भद्र गतमेतदनिष्ठिते ।
न मुक्ता तावकी रक्षा निर्बाधं हन्त जायते ॥
ततो योऽयं मया प्रोक्तो हेतुः संरक्षणे वरः ।
स एव भवता नित्यमनुष्ठेयो नरोत्तम ॥
ततो गृहीतभावार्थस्तदाहं पर्यचिन्तयम् ।
इदं मह्यं भदन्तेन मपञ्चेन निवेदितम् ॥

यदुत ।

रागाद्युपद्रुतं चित्तं विषयेषु प्रवर्तते ।
तेषु चास्य प्रवृत्तस्य वर्धते कर्मसञ्चयः ॥
अङ्गाङ्गीभावमाधत्ते सा भोगस्नेहवासना ।
ततः संसारसंस्काराः संजायन्ते क्षतोपमाः ॥
ततोऽत्र प्रभवन्त्येव सर्वे रागाद्युपद्रवाः ।
मूषकादिसमास्ते च विवर्धन्ते प्रतिक्षणम् ॥
भूयश्च प्रेर्यमाणं तैर्विषयेष्वेव धावति ।

पुनः कर्म पुनः स्नेहः पुनः सर्वेऽप्युपद्रवाः ॥
अदृष्टतलपर्यन्ते तदेवंविधचक्रके ।
निमग्नं दुःखकोटीभिश्चित्तमेतन्न मुच्यते ॥
वज्रदण्डः समाख्यातो गुरुणानेन रक्षकः ।
गृहीतो वीर्यहस्तेन सोऽप्रमादोऽस्य सत्तमः ॥
ततश्चैवं करिष्यामि सततं सुसमाहितः ।
गुरूद्दिष्टाप्रमादस्य तस्याहमनुशीलनम् ॥

यदुत ।

स्वप्नोऽयमिन्द्रजालं वा हरिश्चन्द्रपुरं तथा ।
शरीरं भूतयो भोगा यच्चान्यत्स्वजनादिकम् ॥
एवं निश्चित्य सद्बुद्ध्या भावयिष्यामि तत्त्वतः ।
ततः संसारजालान्मे चित्तबन्धो निवर्त्स्यति ॥
अनाद्यभ्यासयोगेन निःसरच्च पुनः पुनः ।
आत्मन्येवाहितं चित्तं धारयिष्यामि यत्नतः ॥
तथेदं शिक्षयिष्यामि चित्तं किं निर्गतेन ते ।
बहिः स्वरूपे तिष्ठ त्वं येनानन्दे निलीयसे ॥
संसारस्ते बहिश्चारः स च दुःखभराकरः ।
मोक्षः स्वरूपेऽवस्थानं स चानन्दभराकरः ॥
ततो बहिर्न युक्तं ते निर्गन्तुं सुखलिप्सया ।
युक्तमात्मन्यवस्थानं चित्त हित्वा बहिर्भ्रमम् ॥
आत्मन्यवस्थितस्येह जन्मन्येव सुखं तव ।
बहिर्निःसरतोऽत्रैव दुःखं तद्यदि बुध्यसे ॥

तथाहि ।

सर्वं दुःखं परायत्तं सर्वमात्मवशं सुखम् ॥
बहिश्च ते पराधीनं स्वाधीनं सुखमात्मनि ॥

अन्यच्च ।

यदात्मनो बहिर्भूतं वस्तुजातं तव प्रियम् ।
तत्सर्वं नश्वरं दुःखं निःस्वभावं मलाविलम् ॥
अतस्तदर्थं हे चित्त किं वृथा परिताम्यसि ।
किं वात्मानं विमुच्येत्थं संभ्रमीषि पुनः पुनः ॥
यदि स्यात्सुन्दरं किंचिद्बहिस्तस्य निवारणम् ।
संभवेत्तव दुःखाय तच्च चित्त न विद्यते ॥
दह्यमानं पुनर्घोरैर्भोगाङ्गारैर्निवारितम् ।
आत्मन्यानन्दरूपे त्वं मुधा ताम्यसि धारितम् ॥
अनन्तदर्शनज्ञानवीर्यानन्दप्रपूरिते ।
चित्त तत्रात्मनि स्थानं भव शीघ्रं निराकुलम् ॥
अत्र ते तिष्ठतो नित्यं भोगस्नेहस्य शोषणे ।
संजाते जायतेऽवश्यं रजःपातो न संशयः ॥

ततश्च ।

संश्लिष्टवासनाजन्या यथा रोहन्ति दारुणाः ।
तत्सद्बाधनिर्मुक्तं न त्वं भोगेषु रज्यसे ॥
पिण्डीप्राया बुधैः प्रोक्ता भोगादिस्पृहतेषु ते ।
अत एव मुहूर्तं ते भासन्ते स्वास्थ्यकारिणः ॥
मुहूर्तसुखमाधाय ते भुंक्ताः घनवर्धनम् ।

संक्लिष्टवासनाध्यानाञ्जनयन्ति सुदारुणम् ॥

इतरथा।

संक्लिष्टवासनोन्मुक्ते रूढे तव शरीरके।
निर्बाधे सततानन्दे तदिच्छैव न जायते ॥
तदेवं संस्थिते चित्त हित्वा सर्वं बहिर्भ्रमम्।
स्वरूपे सततं तिष्ठ लीनं हन्त निरातुरम् ॥
एवं च शिक्षयित्वेदं चित्तं सम्यग्विधानतः।
अस्यैव रक्षणोद्युक्तो भविष्यामि समाहितः ॥
तथानुशिष्टमप्येतच्चलत्येव दुरात्मकम्।
यत्नान्निराकरिष्यामि बहिर्धावत्पुनःपुनः ॥
कषायनोकषायाद्या ये चोपद्रवकारिणः।
अस्य तानपि निःशेषान् हनिष्याम्यप्रमादतः ॥
विशोदयेन ध्यानेन प्रतिपक्षनिषेवया।
यास्यन्ति प्रलयं सर्वे तूर्णं रागाद्युपद्रवाः ॥
ततस्तेषु प्रलीनेषु भविष्यन्ति न बाधकाः।
परीषहोपसर्गाद्या बहिःस्थास्तदुपद्रवाः ॥
आत्मारामं ततो भूत्वा मच्चित्तमवहिश्चरम्।
रागाद्युपद्रवैर्मुक्तं मोक्षायैव घटिष्यते ॥
एवं परिकलय्याहं हृदये सुविनिश्चितः।
तदेव कुर्वन्निशमेष तिष्ठामि साम्प्रतम् ॥

अकलङ्केनोक्तं। साधु भदन्त साधु सम्यग् बुद्धं भदन्तेन गुरुवचनं। सम्यक् चारब्धं तदाचरणं। सथापीदं चक्रकं भगवन्निवे-

दितमाकर्ण्यान्यदपि चक्रकमभ्यूहितं । तद्युक्तमयुक्तं वाकर्णयतु भगवान् । मुनिनोक्तं । निवेदयतु भद्रः । अकलङ्केनोक्तं ।

चित्तमेवं द्विधा तावद्द्रव्यतो भावतस्तथा ।
आद्यं पर्याप्तियुक्तात्मा गृहीतं पुद्गलात्मकम् ॥
तत्र प्रयुक्तो जीवस्तु भावचित्तं निगद्यते ।
तत्कार्मणशरीरस्थं तेन भिन्नं निवेद्यते ॥
तच्चित्तं नियमाज्जीवो जीवश्चित्तं न वा भवेत् ।
यतः केवलिनो जीवा भावचित्तविवर्जिताः ॥

एवं च स्थिते ।

मिथ्याज्ञानविपर्यासाज्जीवो रागादिसंततः ।
सततं दुःखरूपेषु सुखबुद्ध्या प्रवर्तते ॥
ततः कर्माणुसङ्घातमादत्ते स्नेहतन्तुभिः ।
ततो जन्मान्तरारम्भं विधत्ते तद्वशादयम् ॥
पुनस्तत्र विपर्यासः पुना रागादिसन्ततिः ।
पुनश्च विषयाकांक्षा पुनस्ते स्नेहतन्तवः ॥
पुनश्च कर्मग्रहणं पुनर्जन्मसमुद्भवः ।
पुनस्तत्र विपर्यासः पुना रागादिकः क्रमः ॥
एवं यावदविच्छिन्नं विपर्यासादिचक्रकम् ।
जीवस्य वर्तते तावदनिष्टा भवपद्धतिः ॥
इदमभ्यूहितं नाथ मया चक्रकमञ्जसा ।
युक्तमेतदयुक्तं वा यूयं विज्ञातुमर्हथ ॥
मुनिनोक्तं महाभाग युक्तमेतन्न संशयः ।

कथं वायुक्तवेत्तारो भतन्तीह भवादृशाः ॥
मयापीदं ततो ज्ञातं गुरुभिश्च समर्थितम् ।
अनिष्टितभवे हेतुर्विपर्यासादिचक्रकम् ॥
अत एव परित्याज्यो विपर्यासो विवेकिना ।
तदुच्छेदे प्रलीयन्ते निर्मूलत्वेन शेषकाः ॥
अयमेव विवेकोऽत्र तत्त्वज्ञानमिदं मतम् ।
अयं निरास्रवो धर्मो यद्विपर्यासवर्जनम् ॥
अविपर्यस्तविज्ञातुः पुरुषस्याप्रमादिनः ।
मनोविकारजालं हि खस्माद्भिन्नं प्रकाश्यते ॥
ततो विविक्तमात्मानं सदानन्दं प्रपश्यतः ।
नास्य संजायते द्वेषो दुःखे नापि सुखे स्पृहा ॥
निरभिष्वङ्गचित्तोऽसौ ततः कर्माण्यसञ्चयम् ।
विषयक्लेशसुक्तत्वान्न विधत्ते कदाचन ॥
ततोऽसौ बीजविरहान्निःस्पृहत्वाद्भवान्तरम् ।
मुक्तवान्नारभेतातश्चक्रकं विनिवर्तते ॥

यतः।

फलं ज्ञानक्रियायोगे सर्वमेवोपपद्यते।
तयोरपि च तद्भावः परमार्थेन नान्यथा॥
साध्यमर्थं परिज्ञाय यदि सम्यक्प्रवर्तते।
ततस्तत्साधयत्येव तथा चाह महामतिः॥
सम्यक्प्रवृत्तिः साध्यस्य प्राप्त्युपायोऽभिधीयते।
तदप्राप्तावुपायत्वं न तस्याच प्रपद्यते॥
असाध्यारम्भिणस्तेन सम्यग्ज्ञानं न जातुचित्।
साध्यानारम्भिणश्चेति द्वयमन्योन्यसंश्रयम्॥
अत एवागमज्ञस्य या क्रिया सा क्रियोच्यते।
आगमज्ञोऽपि यस्तस्यां यथाशक्त्या प्रवर्तते॥
चिन्तामणिस्वरूपज्ञो दौर्गत्योपहतो न हि।
तत्प्राप्त्युपायवैचित्र्ये सत्यन्यत्र प्रवर्तते॥
न चासौ तत्स्वरूपज्ञो योऽन्यत्रापि प्रवर्तते।
मालतीगन्धगुणविद्भ्रमे न रमते ह्यलिः॥
तदेवं स भवाभावान्मुक्तिमाप्नोति सन्नरः।
अलमत्र प्रसङ्गेन सम्यगभ्यूहितं त्वया॥
तदिदं गुरुभिर्भद्र कर्तव्यं मे निवेदितम्।
तस्य वानरलोकस्य सततं परिरक्षणम्॥

अकलङ्केनोक्तं।

केनोपायेन तस्माथ वानरं नयनक्षमम्।
शिवालयमठे तत्र गुरुणा प्रतिपादितम्॥

मुनिनोक्तं। आकर्णयतु भद्रः। प्रोक्तोऽहं तदानेन भगवता गुरुणा। यथा सौम्य तत्र गर्भगृहके लेश्या इति गोत्रेण प्रसिद्धाः कृष्णनीलकपोततैजसीपद्मशुक्लानामानः षडङ्गनाः परिपालिका विद्यन्ते। तास्व तत्रैव गर्भगृहके समुत्पन्नास्तेन सहैव संवर्धितास्तस्यैव चोपचयकारिण्यो वर्तन्ते। तासां च मध्ये प्रथमास्तिस्रो नार्यो यथाक्रमं क्रूरतमक्रूरतरक्रूराः स्वरूपेण कारणमनर्थपरंपराणां शत्रुभूतास्तस्य वानरलीवरूपस्याशुभवृद्धिहेतुभूतास्तस्य गर्भगृहकस्य धारिकास्तवाप्यत्रैव दुःखसङ्कुले हट्टमार्गे निवारिका मठगमनस्य। उपरितनाः पुनर्भद्र तिस्रो नार्यो यथाक्रमं शुद्धशुद्धतरशुद्धतमाः स्वरूपेण कारणमाह्लादपरंपराणां बन्धुभूतास्तस्य वानरलीवरूपस्य शुद्धवृद्धिहेतुभूतास्तस्य गर्भगृहकस्य निःधारिकास्तवाप्यस्मादसातसन्तातिपूरिताद्धट्टमार्गादनुकूलकारिका मठगमनस्य। ताभिश्च षड्भिरपि नारीभिर्विरचितस्तत्र गर्भगृहके स्वसामर्थ्यादुपर्युपर्यारोहणार्थं परिणामो नाम दर्दरः। तत्र च ताभिरेव नारीभिर्यथानुपूर्वं उपर्युपरि विरचिताः प्रत्येकमसंख्येयाः समस्ता अप्यसंख्येया विद्यन्ते व्यवसायस्थानाभिधानाः पदिकाः। तया प्रथमया विरचितास्तावदसंख्येयाः प्रथमाः कृष्णावर्णाः एवं द्वितीयया द्वितीया नीलावभासाः तृतीयया तृतीयाः कपोताभाः चतुर्थ्या च चतुर्थास्तेजोभास्वराः पञ्चम्या पञ्चम्यो धवलपद्मच्छायाः षष्ठ्या षष्ठ्यो विशुद्धस्फटिकनिर्मलास्ताः पदिका इति। तत्राद्ययोपिचितयनिर्मितासु पदिकासु वर्तमानं तद्वानरलीवरूपमुत्प्लुत्योत्प्लुत्य बलात् धावति गवाक्षकेलेश्यासकेषु लुठति तत्र रजःकचवरे।

गुण्ड्यते तेन रजसा। भिद्यते तैः स्नेहनिष्यन्दबिन्दुभिः। ततस्तया घनशतैर्जर्जरीभूतं तेषां मूषकमार्जारकोलोन्दुरादीनां सर्वेषामुपद्रवविशेषाणामभिभवनीयं भवति। ततः क्वचिन्नष्टमिव लक्ष्यते क्वचिद्घूर्णितमवतिष्ठते क्वचित्क्रूरतां धारयति सर्वथा सततसंतप्तं तदास्त इति। तत्रापि चानन्तदुःखपरंपराकारणं संपद्यते। तस्माद्भवता तद्वानरलीवं ताभ्यः पदिकाभ्यो निःसारणीयमुपर्यारोहणीयं। ततश्चतुर्थयोपिचिर्मितासु तासु पदिकासु प्रतिक्षणमारोहतस्तस्य वानरलीवरूपस्य स्तोकीभविष्यति सन्तापः प्रतनुतां यास्यन्ति बाधाकारिणस्ते मूषकादयः क्षुद्रोपद्रवाः मनाक् स्वल्पीभविष्यत्यासवकाभिलाषः। ततः शोषमीषदुपयास्यति सा मकरन्दनिष्यन्दार्द्रता परिशटिष्यति किंचिद्रजः। ततो लप्स्यते मनाक् सुखासिकां [×××] भविष्यति संतापः प्रतनुतरा भविष्यन्त्युपद्रवाः स्वल्पतरः संपत्स्यते ऽपथ्यासवकाभिलाषः शुष्कतरं भविष्यति शरीरकं निपतिष्यति तस्माद् बहुतरो रेणुनिचयः। ततो मनागस्य रोच्यन्ति घतविशेषाः आस्कन्दिष्यतीदमाह्लादं धारयिष्यति धवलतां वर्धिष्यति शरीरेण भविष्यति विशालतरं। ततः पञ्चलक्षणाविरचितपदिकासु भवता तदारोहणीयं। तासु चारोहतस्तस्य स्तोकतमीभविष्यति दुःखासिका प्रलयं यास्यन्त्युपद्रवविशेषाः अत्यन्तं स्वल्पतमीभविष्यत्यासवकाभिलाषः त्रुटिष्यति रजःकचवरलोठनेच्छा सर्वथा शोषमुपयास्यति मकरन्दरसार्द्रता। ततः शुष्कतरशरीरादिविशेषमनुभविष्यति भूयिष्ठो रेणुनिचयः संशटिष्यते तस्यततामाह्लादं भविष्यति शुभ्रस्फटिकनिर्मलता।

तल्लेश्यापरिणामेन क्लेशनिर्मोचनक्षमम् ।
विशुद्धाध्यवसायेषु गच्छेद्देवोपपद्यते ॥

किं च ।

न केवलं शिवस्योच्चैश्चित्तमेवेह कारणम् ।
भवस्यापि तदेवेति मुनयः संप्रचक्षते ॥
यतोऽपवरको योऽयं यच्चेदं गर्भगेहकम् ।
यच्च वानरकं भद्र तत्सर्वं प्राणिनां समम् ॥

ततश्च ।

यास्ता भो वर्णिताः पूर्वं पद्दिकास्तात्र ददृशे ।
तद्वानरं तदारूढं विचित्रभवकारणम् ॥
यस्यां यस्यां तदारुह्य करोत्युत्प्लवनं किल ।
शीघ्रं तत्पद्दिकास्थेषु स्थाने नयति देहिनः ॥

मयोक्तं । वयस्य कोऽस्य भावितस्यार्थः । अकलङ्केनोक्तं ।
आकर्णय ।

यल्लेश्याध्यवसायेषु म्रियन्ते किल देहिनः ।
आरूढचित्तास्तादृक्षु जायन्ते ते भवान्तरे ॥
असङ्ख्याध्यवसायेषु तच्चित्तं वर्तमानकम् ।
विचित्रयोनिरूपस्य भवस्यास्य विधायकम् ॥
सदोषं भवहेतुस्ते समान्येषां च देहिनाम् ।
निर्दोषं मोक्षहेतुस्ते चित्तं भो घनवाहन ॥
स्थितेदं चित्तमद्रव्यं तस्मादन्तर्धनं परम् ।
धर्मोऽधर्मः सुखं दुःखं यत्र सर्वं प्रतिष्ठितम् ॥

जीवात्त्व भावचित्ताच्च नास्ति भेदः परस्परम्।
आत्मातो रचितस्तेन चित्तं येनेह रचितम्॥
अयाथं भोगलौल्येन यावद्धावति सर्वतः।
चित्तं कुतस्त्यस्ते तावत्सुखगन्धोऽपि विद्यते॥
यदेदं निःस्पृहं भूत्वा परित्यज्य बहिर्भ्रमम्।
स्थिरं संपत्स्यते चित्तं तदा ते परमं सुखम्॥
भक्ते स्तोतरि कोपान्धे निन्दाकर्तरि चोत्थिते।
यदा समं भवेच्चित्तं तदा ते परमं सुखम्॥
स्वजने स्नेहसम्बद्धे रिपुवर्गेऽपकारिणि।
स्यात्तुल्यं ते यदा चित्तं तदा ते परमं सुखम्॥
शब्दादिविषयग्रामे सुन्दरेऽसुन्दरेऽपि च।
एकाकारं यदा चित्तं तदा ते परमं सुखम्॥
गोशीर्षचन्दनालेपिवासीच्छेदकयोर्यदा।
अभिन्नचित्तवृत्तिः स्यात्तदा ते परमं सुखम्॥
सांसारिकपदार्थेषु जलकल्पेषु ते यदा।
अश्लिष्टं चित्तपद्मं स्यात्तदा ते परमं सुखम्॥
दृष्टेषूद्दामलावण्यबन्धुराङ्गेषु योषिताम्।
निर्विकारं यदा चित्तं तदा ते परमं सुखम्॥
यदा सत्त्वैकसारत्वादर्थकामपराङ्मुखम्।
धर्मे रतं भवेच्चित्तं तदा ते परमं सुखम्॥
रजस्तमोविनिर्मुक्तं स्तिमितोदधिसन्निभम्।
निष्कम्पोत्सं यदा चित्तं तदा ते परमं सुखम्॥

अन्यच्च । तत्र योषिच्चितयसंपादितपद्दिकामार्गेऽनुचणमारोहत-स्तस्य लगिष्यति मन्दः सुखकारितया शीतः सन्तापहारितया सुरभिः सङ्गतगुणगणकमलवनमकरन्दरेणुधारितया धर्मध्यानाभि-धानः पवनः । तत्संबन्धे भविष्यति तत्सततं प्रमुदितं । इतश्च भीतमिव तेभ्योऽधस्तनेभ्यो मूषकमार्जारकोलोन्दुरवृश्चिककृकलास-गृहकोकिलिकादिभ्यो नानाविधोपद्रवेभ्यः समुद्विग्नमिव तेन विततेन बहलान्धकारेण आद्यनारीचयविरचितं पद्दिकामार्गमपहाय तत्र पश्चिमयोषित्त्रयविनिर्मिते भयविरहिते सततप्रकाशे पद्दिकामार्गे निलीनमास्ते तस्य वानरलीवरूपस्य सम्बन्धि वानरयूथं । ततस्तत्रा-रोहतस्तस्य तदशेषमधिष्ठितं प्रशमदमसन्तोषसंयमसद्बोधादि-नामकवानरपरिवारेण विशुद्धधर्ममहावानरेण समन्वितं धृति-श्रद्धासुखासिकाविविदिषाविज्ञप्तिस्मृतिबुद्धिधारणामेधाक्षान्तिनिः-स्पृहतादिसंज्ञाभिर्वरवानरीभिः सङ्कुलं धैर्यवीर्यौदार्यगाम्भीर्य-शौण्डीर्यज्ञानदर्शनतपःसत्यवैराग्याकिंचन्यमार्दवार्जवब्रह्मशौचादि-नामकैर्वरवानरलीवरूपैराविर्भविष्यति किंचित्कदाचित्कस्यांचित्प-द्दिकायां । तच्च तस्य भवदीयवानरलीवरूपस्य शरीरं जीवितं सर्वस्वं सहजमतिहितकरणशीलं वर्तते । किं च । तद्वानरयूथमपि स्थिरं स्वरूपेण दिनकरभास्वरं वर्णनाह्लादहेतुर्जगतो निरभिलाषुकं तेषु गवाक्षद्वारस्थितेषु महाकारागृहरूपतया कल्पितेषु विषयदृश्येषु विगत-स्पृहं तत्रार्थनिचयसम्पत्फलकुसुमरजःकचवरलोठने । ततस्तेनात्मीय-वानरयूथेन सह मीलितं तत्तावकं चित्तवानरलीवमत्यन्तप्रमुदितं शीघं याच्छ्रुपर्युपरिपद्दिकासु यावत्पर्यन्तनारीविरचितपद्दिकामार्गं।

तत्र च करिष्यति तस्य तद्वानरयूथं शुक्लध्यानाभिधानेन गोशीर्षचन्दन-
रसेन सेचनं। ततोऽतिक्रान्तेऽर्धमार्गमात्रे गाढानन्दनिर्भरं भविष्यति
तन्निःसहं। ततो नारोक्ष्यत्युपरितनपद्दिकासु। तस्मिंश्चारूढे भद्र
त्वमप्यारूढो भविष्यसि यतस्ते जीवितमन्तर्धनमात्मभूतं च तद्वानरकं।
ततो निःकर्मीभूतं तद्विमुच्य भवतोपरितनपद्दिकासु स्वयमेवारोढ-
व्यं। ततः पर्यन्ते पद्दिकामार्गमपि परित्यज्य स्वसामर्थ्येन
स्थित्वा पञ्चह्रस्वाक्षरोद्गिरणमात्रकालं निरालम्बनतया गगने ततो
विमुच्यापवरकमवरुह्य गर्भगृहकं परित्यज्य वानरकं विधायोत्प्लवनं
लङ्घयित्वा हट्टमार्गं गन्तव्यमेकक्रमेणोड्डीय तत्र मठे स्थातव्यमनन्त-
कालं पूर्वगतलोकमध्येऽनुभाव्योऽनन्तानन्द इति। मयोक्तं। यदा-
ज्ञापयति नाथः। तदेवमनेनोपायेन भद्र तद्वानरकं तत्र मठे
नयनक्षमं गुरुभिर्मे निवेदितमिति।

अथ निश्चित्य मौनीन्द्रं सभावार्थमिदं वचः।
ततोऽकलङ्कस्तं नत्वा मुनिमित्थमवोचत॥
चारु चारूपदिष्टं ते गुरुणा मुनिसत्तम।
सुन्दरं भवतारश्च युक्तमेतद्भवादृशाम्॥
ततोऽगृहीतसङ्केते सम्यग्बोधविधित्सया।
सोऽकलङ्को महाभागो मां प्रतीदमभाषत॥
एवं स्फुटाक्षरैः सर्वं यदनेन निवेदितम्।
तत्त्वया विदितं भद्र किं वा नो घनवाहन॥
अनेन हि समाख्यातं क्लिष्टनिर्मुक्तमञ्जसा।
चित्तमेवात्मनो युक्तं संसारोत्तारकारणम्॥

तल्लेश्यापरिणामेन क्लेशनिर्मोचनक्षमम् ।
विशुद्धाध्यवसायेषु गच्छन्देवोपपद्यते ॥

किं च ।

न केवलं शिवस्योच्चैश्चित्तमेवेह कारणम् ।
भवस्यापि तदेवेति मुनयः संप्रचक्षते ॥
यतोऽपवरको योऽयं सचेदं गर्भगेहकम् ।
यच्च वानरकं भद्र तत्सर्वं प्राणिनां समम् ॥

ततश्च ।

यास्ता भो वर्णिताः पूर्वं पद्मिकास्तच्च ददृरे ।
तदानरं तदारूढं विचित्रभवकारणम् ॥
यस्यां यस्यां तदारूढ्य करोत्युत्प्लवनं किल ।
शीघ्रं तत्पद्मिकाख्येषु स्थाने नयति देहिनः ॥

मयोक्तं । वयस्य कोऽस्य भावितस्यार्थः । अकलङ्केनोक्तं । आकर्णय ।

यल्लेश्याध्यवसायेषु म्रियन्ते किल देहिनः ।
आरूढचित्तासादृशु जायन्ते ते भवान्तरे ॥
असङ्ख्याध्यवसायेषु तच्चित्तं वर्तमानकम् ।
विचित्रयोनिरूपस्य भवस्यास्य विधायकम् ॥
सदोषं भवहेतुस्ते समान्येषां च देहिनाम् ।
निर्दोषं मोक्षहेतुस्ते चित्तं भो घनवाहन ॥
एवेदं चित्तमद्रक्षं तस्मादन्तर्धनं परम् ।
धर्मोऽधर्मः सुखं दुःखं यत्र सर्वं प्रतिष्ठितम् ॥

जीवाच्च भावचित्ताच्च नास्ति भेदः परस्परम् ।
आत्मातो रचितस्तेन चित्तं येनेह रचितम् ॥
अथार्थे भोगलौल्येन यावद्धावति सर्वतः ।
चित्तं कुतस्त्यस्ते तावत्सुखगन्धोऽपि विद्यते ॥
यदेदं निःस्पृहं भूत्वा परित्यज्य बहिर्भ्रमम् ।
स्थिरं संपत्स्यते चित्तं तदा ते परमं सुखम् ॥
भक्ते स्तोतरि कोपान्धे निन्दाकर्तरि चोत्थिते ।
यदा समं भवेच्चित्तं तदा ते परमं सुखम् ॥
स्वजने स्नेहसम्बद्धे रिपुवर्गेऽपकारिणि ।
स्यात्तुल्यं ते यदा चित्तं तदा ते परमं सुखम् ॥
शब्दादिविषयग्रामे सुन्दरेऽसुन्दरेऽपि च ।
एकाकारं यदा चित्तं तदा ते परमं सुखम् ॥
गोशीर्षचन्दनालेपिवासीछेदकयोर्यदा ।
अभिन्नचित्तवृत्तिः स्यात्तदा ते परमं सुखम् ॥
सांसारिकपदार्थेषु जलकल्पेषु ते यदा ।
अश्लिष्टं चित्तपद्मं स्यात्तदा ते परमं सुखम् ॥
दृष्टेषूद्दामलावण्यबन्धुराङ्गेषु योषिताम् ।
निर्विकारं यदा चित्तं तदा ते परमं सुखम् ॥
यदा सविकसारमादर्थकामपराङ्मुखम् ।
धर्मे रतं भवेच्चित्तं तदा ते परमं सुखम् ॥
रजस्तमोविनिर्मुक्तं स्तिमितोदधिसन्निभम् ।
निष्कम्पोत्सं यदा चित्तं तदा ते परमं सुखम् ॥

तथाहि ।

यावत्संसारिजीवोऽस्मान् न जानीते महाप्रभुः ।
विपदस्तावदेवैता देवास्माकं रिपूद्भवाः ॥
यदा तु स विजानीयादस्माकं रूपमञ्जसा ।
तदा संपोषितास्तेन भवामो रिपुघातकाः ॥
इयं च दृश्यते देव चित्तवृत्तिमहाटवी ।
यथाधुना मनाक् शुभ्रा गाढतामसवर्जिता ॥
तथाहं तर्कयामीदं देवोऽसौ सर्वनायकः ।
अस्मद्विशेषविज्ञानसमीपे ननु वर्तते ॥
वयं हि तामसे मग्ना न दृष्टास्तेन जातुचित् ।
अधुना दर्शनस्यास्ति वैमल्यं तस्य कारणम् ॥

एवं च स्थिते ।

तं कर्मपरिणामाख्यं पृष्ट्वा राजानमुत्तमम् ।
पार्श्वे संसारिजीवस्य प्रेष्यतां कोऽपि मानवः ॥
ततोऽनुकूलितस्तेन देव कालेन भूयसा ।
भविष्यत्येव निर्मिथ्यं सोऽस्मद्दर्शनलालसः ॥
ततश्चारित्रधर्मेण सद्बोधं प्रति भाषितम् ।
साधु भो गदितं साधु ब्रूहि कः प्रेषणोचितः ॥
ततश्चारित्रधर्माय सद्बोधेन निवेदितम् ।
अयं सदागमस्तत्र देव प्रस्थापनोचितः ॥
सकृशः परिचयस्तस्य यद्दानेन भविष्यति ।
तदास्मद्दर्शनाकाङ्क्षा तस्य संपत्स्यते ध्रुवम् ॥

स कर्मपरिणामाख्यस्ततोऽस्मान्ज्ञापयिष्यति ।
तस्मै वयं भविष्यामस्ततः प्रभुविघातुकाः ॥
ततश्चारित्रधर्मेण प्रपन्नं मन्त्रिभाषितम् ।
प्रवर्तितो यथादिष्टं मां प्रत्येष सदागमः ॥
उक्तश्च राज्ञा सद्बोधः किमेषोऽपि प्रहीयताम् ।
सम्यग्दर्शनसत्नामा तस्य पार्श्वे महत्तमः ॥
सद्बोधेनोदितं देव त्वादरेण महत्तमः ।
तस्य संसारिजीवस्य गतः पार्श्वे न संशयः ॥

किं च ।

सदागमोऽपि सफलो युक्तोऽनेनोपपद्यते ।
अनेन सहितः सोऽस्मान् सर्वानप्यवभोत्स्यते ॥
किं तु नावसरोऽद्यापि तेन नैष प्रहीयते ।
प्रस्तावरहितं कार्यं न कुर्वन्ति विचक्षणाः ॥

नृपतिनोक्तं ।

कदा पुनरहो मन्त्रिन् प्रस्तावोऽस्य भविष्यति ।
सद्बोधेनोदितं देव समाकर्णय कथ्यते ॥
यदा सदागमेनोच्चै रञ्जितोऽसौ भविष्यति ।
पार्श्वे तस्य तदा देव प्रेषणीयो महत्तमः ॥
भूयो भूयो युतोऽनेन वीर्यमासादयेद्यदा ।
संसारिजीवः प्रस्तावस्तदास्याप्युपपत्स्यते ॥
ततोऽभ्युपगते वाक्ये मन्त्रिणस्तेन भ्रभुणा ।
समागतः क्रमेणायं मत्समीपे सदागमः ॥

मैत्रीकारुण्यमाध्यस्थ्यप्रमोदोद्दामभावनम्।
यदा मोचैकतानं तत्तदा ते परमं सुखम्॥
इति चित्तं विहायान्यो नास्ति भो घनवाहन।
नरस्य सुखसन्दोहे सिद्धो हेतुर्जगत्त्रये॥
ततोऽहमकलङ्कस्य तादृशैर्वचनामृतैः।
सिक्तोऽगृहीतसङ्केते मनाक् प्रह्लादमागतः॥

यतः।

निबिडापीह तादृशैर्मम दृष्टान्तमुद्गरैः।
विदारिताकलङ्केन भूयसी कर्मपद्धतिः॥
कर्मस्थितिमतीत्याहं भूयिष्ठां पूर्ववर्तिनीम्।
अभ्यर्णः संस्थितो भद्रे कर्मग्रन्थेः सुदुर्भिदः॥

इतश्च।

यद्वामदेवप्रस्तावे मया पूर्वं निवेदितम्।
स्मरसि त्वं विशालाचि बुधसूरिविचक्षदा॥
ततोऽगृहीतसङ्केता तं प्रतीदमभाषत।
न स्मरामि विशेषेण स्मारयातस्त्वमेव मे॥
ततः संसारिजीवेन सा प्रोक्ता तारलोचना।
इदं निवेदितं भद्रे सवृत्तं बुधसूरिणा॥
यथा मत्पुचकः पूर्वं देशकालिकया गतः।
आगतश्च वद्दोः कालादिचारी नाम दारकः॥
मार्गानुसारितायुक्तो भवचक्रं निरीक्ष्य सः।
समागतो रहस्यस्थो मह्यमेतन्न्यवेदयत्॥

यदुत।

चारित्रधर्मराजेन महामोहनरेश्वरः।
सबलो बलयुक्तेन युध्यमानो मयेक्षितः॥
ततश्चारित्रधर्मीयं सैन्यं निर्जित्य दर्पितः।
वेष्टयित्वा स्थितस्तात महामोहनराधिपः॥
अथ तत्तादृशं वीक्ष्य निरुद्धं तेन दर्पिणा।
बलं चारित्रधर्मीयमागतोऽहं तवान्तिके॥

अगृहीतसङ्केतयोक्तं।

स्मृतं स्मृतं मया तात सर्वमेतन्निवेदितम्।
पूर्वमेव त्वया घ्राणदोषदर्शनकाम्यया॥
अतः परं पुनर्यच्च तात किंचिद्विचेष्टितम्।
तन्मह्यं स्मृतपूर्वाय सर्वमाख्यातुमर्हसि॥
ततः संसारिजीवेन सा प्रोक्ता मृगलोचना।
एषोऽहं कथयिष्यामि समाकर्णय साम्प्रतम्॥
चित्तवृत्तिमहाटव्यां तन्निरुद्धं समन्ततः।
स्थितं चारित्रधर्मस्य सैन्यं कालमनन्तकम्॥
ततस्तदाकलङ्कस्य समीपे मम तिष्ठतः।
सैन्ये यस्तत्र वृत्तान्तः संपन्नस्तं निबोध मे॥
सर्वं विषण्णमालोक्य तद्बलं रिपुपीडितम्।
चारित्रधर्ममुद्दिश्य सद्बोधः समभाषत॥
न कर्तव्यो विषादोऽत्र देवास्माभिर्यतोऽधुना।
मन्मनोरथवृक्षस्य दृश्यते कुसुमोद्गमः॥

इतश्च।

प्रयुक्तः पूर्वमेवासीन्महामोहादिभिर्बली।
ज्ञानसंवरणो नाम मत्समीपे नराधिपः॥
स हि चारित्रधर्मीयं तिरोधत्ते सदा बलम्।
महामोहमहानीकं सर्वदा पोषयत्यलम्॥

एवं च स्थिते।

तद्बलेनैव निश्चिन्ता निर्नष्टभयकारणाः।
स्थिता रिपूश्चिराकृत्य महामोहादयः सदा॥
ततः सदागमं वीक्ष्य प्रत्यासन्नं समागतम्।
ज्ञानसंवरणः शीघ्रं लीनलीनो व्यवस्थितः॥
अथाकलङ्कः संप्राप्तो ध्यानारूढस्य सन्निधौ।
गुरोस्तस्य मया सार्धं विहितं पादवन्दनम्॥
समाप्तध्यानयोगेन धर्मलाभपुरःसरम्।
सूरिणा कोविदाख्येन तेन सम्भाषणं कृतम्॥
अथाकलङ्कपृष्टस्य कुर्वतो धर्मदेशनाम्।
तस्य पार्श्वे महात्मैष मया दृष्टः सदागमः॥
ज्ञापितश्चाकलङ्केन यथा भो घनवाहन।
आराधनीयः साधूनामेषामेष सदागमः॥
एते ह्यस्य सदादेशं कुर्वन्ति नतमस्तकाः।
एषोऽस्य सूरिर्जानीते गुणसम्भारगौरवम्॥
तदेष ते हितो भद्र धर्माधर्मविवेचकः।
अतः सदुपदेशार्थमेव विज्ञातुमर्हसि॥

ममामीषां च साधूनां सूरेश्चास्य परिस्फुटम् ।
यज्ज्ञानं भद्रे तज्जातमस्मादेव सदागमात् ॥
अतोऽयं कोविदाचार्यः सम्बन्धं ते करिष्यति ।
सार्धं सदागमेनोच्चैरमुना हितकारिणा ॥
ततस्त्वमस्य सम्बन्धात्सर्वमात्महिताहितम् ।
क्रमेण ज्ञास्यसे तात तदेनं शीघ्रमाश्रय ॥
ततस्तदुपरोधेन मया भद्रे सदागमः ।
प्रतिपन्नस्तदा किंचित्तुष्टेनैवान्तरात्मना ॥
ज्ञापिताश्च गुणाः केचित्तेन कोविदसूरिणा ।
दर्शितं चास्य विज्ञानं श्रद्धानं मम नाभवत् ॥

केवलं ।

अकलङ्कोपरोधेन विदधे चैत्यवन्दनम् ।
ददामि दानं साधुभ्यो भावशून्यमहं तदा ॥
एवं च भद्रकः किंचिदकलङ्कानुरोधतः ।
संजातोऽहं तदा भद्रे नमस्कारादिपाठकः ॥
अकलङ्कस्तु संभाष्य मातापित्रादिकं जनम् ।
प्रतिपन्नस्तदा दीक्षां कोविदाचार्यसंनिधौ ॥

ततश्च ।

सुसाधुपरिवारेण तेन कोविदसूरिणा ।
सार्धं गतो विहाराय सोऽन्यत्र मुनिचर्यया ॥

इतश्च ।

यावत्सदागमस्तत्र मत्समीपमुपागतः ।

महामोहबले तावज्जातं यत्तन्निबोध मे ॥
ज्ञानसंवरणं ज्ञात्वा सदागमभयातुरम् ।
ततः प्रोक्तो महामोहो रागकेसरिमन्त्रिणा ॥
एतावन्तं वयं कालं निश्चिन्ता देव संस्थिताः ।
यद्बले न स विचस्तो ज्ञानसंवरणो नृपः ॥

यतः ।

वष्टः सदागमस्तत्र गत्वाभ्यर्णे व्यवस्थितः ।
देव संसारिजीवस्य विरुद्धः स च भूपतेः ॥
नोपेक्षणीयं देवेन तस्मादेतत्प्रयोजनम् ।
कुठारच्छेद्यतां कुर्यान्नखच्छेद्यं न पण्डितः ॥
अथामात्यवचः श्रुत्वा माहामोही महासभा ।
सा सदागमरोषेण सर्वा क्षोभमुपागता ॥
कृतभ्रुकुटिहुङ्कारा दष्टोष्ठा भूमिताडिनः ।
एककालं महायोधाः सर्वे भाषितुमुद्यताः ॥

कथं ।

मया स देव हन्तव्यो गत्वा पापः सदागमः ।
इत्येकैको महायोधो महामोहमभाषत ॥
तेनापि गदितं वत्साः कुर्वन्तीदं भवादृशाः ।
किं तु स्वयं स हन्तव्यो मया गत्वा दुरात्मकः ॥
येनाभिभूतः पापेन ज्ञानसंवरणो नृपः ।
मत्प्रयुक्तः स्वहस्तेन स मे वर्धनमर्हति ॥

अन्यच्च ।

समुदायात्मको वत्सा वर्तेऽहं भो भवादृशाम् ।
अतो मया हतः सर्वैर्युष्माभिर्हत एव सः ॥

तथा ।

गते मयि गताः सर्वे यूयं घातार्थमर्थतः ।
अतो गच्छाम्यहं वत्सा यूयमत्रैव तिष्ठत ॥

किं तु ।

प्रतिजागरणीयोऽहं गतस्तत्रान्तरान्तरा ।
सर्वैरेव यथायोगं भवद्भिः स्वामिवत्सलैः ॥

अन्यच्च ।

योऽयं परिग्रहो वत्सा वल्लभो मे विशेषतः ।
रागकेसरिपुत्रस्य सागरस्य वयस्यकः ॥
नाहमेनं परित्यज्य तत्र गन्तुं समुत्सहे ।
अयमेव महावीर्यः सहायो मम सुन्दरः ॥

ततश्च ।

अहमेकं गृहीत्वैनं तत्सहायं परिग्रहम् ।
गच्छामि त्वरितं तत्र सदागमजिघांसया ॥
ततो विज्ञाय निर्बन्धं सर्वैः प्रणतमस्तकैः ।
एवं विधीयतां देव तद्वचः परिपूरितम् ॥
ततः समागतौ भद्रे महामोहपरिग्रहौ ।
मत्समीपं हतोत्साहौ मया चेमौ विलोकितौ ॥
ततो मे स्नेहसम्बन्धस्ताभ्यां सार्धं सुनिर्भरः ।
अनाद्यभ्यासयोगेन संजातस्तारलोचने ॥

इतश्चोपरतस्तातः स जीमूतो नरेश्वरः।
अहं च स्थापितो राज्ये बन्धुमन्त्रिमहत्तमैः॥
प्रणताः सर्वसामन्ता रिपवो भृत्यतां गताः।
ततः परिणतं राज्यं भूरिभूतिमनोहरम्॥
स च पुण्योदयस्तस्य मम राज्यस्य कारणम्।
महामोहयुतेनासौ किं तु नो लक्षितो मया॥

इतश्च।

शरीरं विषया राज्यं विविधाश्च विभूतयः।
यच्च पौद्गलिकं किंचिच्चित्तावन्धविधायकम्॥
सदागमस्तदाचष्टे यथेदं चणभङ्गुरम्।
दुःखात्मकं मलक्लिन्नं निःस्वभावं बहिश्चरम्॥
तदत्र मूर्छां मा कार्षीर्मा कार्षीर्घनवाहन।
आत्मा ते ज्ञानसद्वीर्यदर्शनानन्दपूरितः॥
ततस्तत्रैव युक्तस्ते चित्तावन्धो नरोत्तम।
येन त्वं निर्वृतिं यासि सतताह्लादसुन्दराम्॥
महामोहस्तु मे सर्वं तद्राज्यं तास्च सम्पदः।
गात्रं शब्दादिभोगांश्च यच्चान्यदपि तादृशम्॥
स्थिरं सुखात्मकं चारु निर्मलं हितमुत्तमम्।
इत्येवं कथयत्युच्चैरुपदेशं च यच्छति॥

यदुत।

नास्ति जीवो न वा देवो न मोचो न पुनर्भवः।
न पुण्यपापे सद्भूते भूतमात्रमिदं जगत्॥

अतो यावदयं देहो विद्यते घनवाहन ।
यथेष्टचेष्टया तावत्पिब खाद दिवानिशम् ॥
सद्भोगैः प्रीणयात्मानं मानयामललोचनाः ।
सुखं भुंच्व यथाकामं मा मूढवचनं कृथाः ॥
परिग्रहस्तु मां ब्रूते यथा भो घनवाहन ।
हिरण्यधान्यरत्नादिसम्भारं कुरु यत्नतः ॥
यः प्राप्तं पालयत्यर्थमप्राप्तं ढौकयत्यलम् ।
न च सन्तोषमादत्ते तस्य सौख्यमनारतम् ॥
अहं तु चिंतयस्यापि वाक्यमाकर्ण्य तादृशम् ।
ईषद्दोलायितश्चित्ते यावज्जातः सुलोचने ॥
महामोहबलेनासौ ज्ञानसंवरणो नृपः ।
तावद्भयं परित्यज्य मम पार्श्वे व्यवस्थितः ॥
ततः सदागमेनोक्तं यत्तदार्य मनोहरम् ।
तस्यार्थो न मया ज्ञातस्तेन चित्तं न रञ्जितम् ॥
यदाहतुः पुनर्भद्रे महामोहपरिग्रहौ ।
तल्लग्नं मामके चित्ते यथा रङ्गः सुपाचिते ॥
ततोऽहं तत्परित्यज्य देववन्दनपूजनम् ।
नमस्कारादिपाठं च संजातो भोगमूर्छितः ॥
दानं च साधुवर्गादेर्विनिवार्य ततः परम् ।
धनसङ्ग्रहणे रक्तः पीडयामि करैर्जनम् ॥
सर्वसांसारिकार्येषु मूर्छा गाढं विवर्धते ।
स महामोहवीर्येण रोचते न सदागमः ॥

तथा।

परिग्रहस्य वीर्येण सर्वथा न्यूनचेतसः।
न ममेच्छा तदा पूर्णा प्राप्तैः सर्वधनैरपि॥
ततो मां तादृशं मत्वा दूरीभूतः सदागमः।
लब्धात्मलाभौ संतुष्टौ महामोहपरिग्रहौ॥
अथान्यदा समायातः सोऽकलङ्कयुतः पुनः।
सुसाधुभिः समाकीर्णः सूरिः कोविदनामकः॥
ततोऽकलङ्कदाक्षिण्यादृतोऽहं तस्य वन्दकः।
तदाकलङ्कसूरिश्च वन्दितो मुनिभिर्युतः॥

इतश्च।

ज्ञानालोकेन विज्ञातं तेन कोविदसूरिणा।
मदीयं चरितं लोकादकलङ्केन चाखिलम्॥
ततः प्रोक्तोऽकलङ्केन सूरिर्नाथ निवेद्यताम्।
सदागमस्य माहात्म्यं घनवाहनभूभुजे॥
तथा दुर्जनसङ्गे च ये दोषाः सन्ति देहिनाम्।
निवेदनीयास्तेऽप्यस्मै विशेषं येन बुध्यते॥
ततः सदागमे भक्तो दुष्टसम्पर्कवर्जितः।
इहामुत्र च येनायं सुखसन्दोहमाप्नुते॥

कोविदसूरिणाभिहितं। एवं क्रियते। समाकर्णयतु महाराजः। ततोऽकलङ्कोपरोधेन श्रवणाय स्थितोऽहं सूरेः प्रकृतरः। सूरिणाभिहितं।

अस्ति चमातङ्कं नाम नगरं। तत्र स्वमलनिचयो नाम राजा।

तस्य तदनुभूतिर्नाम महादेवी। तयोश्च कोविदबालिशाभिधानौ द्वौ तनयौ। इतश्च जन्मान्तरे तस्य कोविदस्यासीदनेन सदागमेन सह परिचयः। ततो यावत्पुनर्दृष्टोऽयं तावदीहापोहमार्गणगवेषणं कुर्वतः संजातं तस्य जातिस्मरणं प्रवृद्धश्चित्तानन्दः। गृहीतोऽयं हितगुरुबुद्ध्या। निवेदितं बालिशाय यदस्य स्वरूपं। न प्रतिपन्नं तेन पापात्मना। इतश्च कर्मपरिणाममहाराजेन प्रहिता तयोः कोविदबालिशयोः स्वयंवरा श्रुतिर्नाम कन्यका। तस्याश्च प्रहितोऽग्रगामी वृष्टोऽतिचतुरः सम्बन्धघटनापटुः सङ्गो नाम दासदारकः। आगत्य च वृतौ द्वावपि तौ तया भ्रातरौ। परिणीता सा ताभ्यां। अस्ति च तयोः कोविदबालिशयोः परिग्रहे निजदेहो नाम पर्वतः। तत्रास्ति मूर्धाभिधानमुपरि महाकूटं। तस्योभयपार्श्वयोर्विद्येते सपरिच्छेदे श्रवणाभिधे द्वे अपवरिके। दृष्टे ते तया। अभिरुचितस्तस्यास्तयोर्निवासः। ततः स्थिता तयोरेव सा भर्तृनुज्ञाता सती। तत्र च कृतनिवासा सा श्रुतिस्ताभ्यां कोविदबालिशाभ्यां सार्धं विचरतीति।

इतश्च तां समासाद्य परितुष्टः स बालिशः।
ततश्च चिन्तयत्येवं महाहर्षवशं गतः॥
धन्योऽहं कृतकृत्योऽहं यस्येयं मम सुन्दरी।
मनोहरा श्रुतिर्भार्या संपन्ना पुण्यकर्मणः॥
ततस्तं तादृशं मत्वा श्रुतौ स्नेहपरायणम्।
बालिशं मधुरैर्वाक्यैः स सङ्गः समभाषत॥
अत्यन्तसुन्दरी देव देवेन हितकारिणा।

देवेन सार्धं स्वामिन्याः संयोगो घटितो ह्ययम् ॥

तथाहि ।

रूपं वयः कुलं शीलं लावण्यं च परस्परम् ।
दम्पत्योः प्रेमसहितमनुरूपं सुदुर्लभम् ॥
एतच्च युवयोः सर्वं संपन्नं पुण्यकर्मणा ।
केवलं वर्धनीयोऽयं प्रेमाबन्धो मनोहरः ॥
ततः स बालिशेनोक्तः शठात्मा दासदारकः ।
यथा कथं स वर्धेत स प्राह प्रियसेवनात् ॥
बालिशः प्राह किं तस्याः प्रियं सक्त निवेद्यताम् ।
सक्तेनोक्तं यथा देव प्रियोऽस्या मधुरो ध्वनिः ॥
बालिशः प्राह यद्येवं ततस्तस्य निषेवणम् ।
अश्रान्तः कारयाम्येनां साधु साधु निवेदितम् ॥
महाप्रसाद इत्येवं ब्रुवाणः स च दारकः ।
स्नेहान्निवेशितस्तेन हृदये बालिशेन भोः ॥
ततश्च काकलीगीतवेणुवीणाकलस्वनम् ।
तां श्रुतिं श्रावयन्नेष बालिशो हृदि मोदते

चिन्तयति च ।

अहो सुखमहो स्वर्गस्तथाहो मम धन्यता ।
यस्येदृशी श्रुतिर्भार्या सततानन्ददायिका ॥

ततश्च ।

हृदये दारकं कृत्वा तं सक्तं स्नेहनिर्भरः ।
श्रुतेः स लालनं कुर्वंस्तास्ते नित्यं कलस्वनैः ॥

त्यक्तं तेनान्यकर्तव्यं धर्माद्दूरेण संस्थितः ।
पिङ्गप्रायतया जातो हास्यस्थानं विवेकिनाम् ॥
इतश्च कोविदेनापि प्रश्नितोऽयं सदागमः ।
मद्यमेषा हिता भार्या किं वा नेति निवेद्यताम् ॥
ततः सदागमेनोक्तं न हिता ते नरोत्तम ।
समक्षेयं श्रुतिर्भार्या तथाकर्णय कारणम् ॥
इयं हि प्रहिता पूर्वं रागकेसरिमन्त्रिणा ।
इदं जगद्वशीकर्तुं पश्चमानुषमध्यगा ॥

इतश्च ।

स कर्मपरिणामस्य भ्राव्यो रागकेसरी ।
प्रसिद्धश्चरटो लोके तस्यामात्यो विशेषतः ॥
स कर्मपरिणामाख्यः सार्वभौमो नराधिपः ।
शुभाशुभकरत्वेन लोके विख्याततां गतः ॥

एवं च स्थिते ।

इयं चरटकन्येति मत्वा नाङ्गीकरिष्यति ।
अयं जनस्ततस्तेन रागकेसरिमन्त्रिणा ॥
दासं दत्त्वाग्रतः स्वीयं सङ्गं सम्बन्धकारिणम् ।
महाराजसुतात्वेन ख्यापितेयं श्रुतिः पुरा ॥
तत्कर्मपरिणामोऽस्या जनकस्तेन गीयते ।
सुतेयं परमार्थेन रागकेसरिमन्त्रिणः ॥
जगतो वञ्चकत्वेन या च तेन दुरात्मना ।
प्रयुक्तेयं सुतस्तस्या हितत्वं हन्त विद्यते ॥

ततश्च ।

यद्यपीयं हता भार्या भवता भद्रवञ्चिका ।
मा कार्षीर्भद्र विश्वासं तथाप्यस्यां कदाचन ॥
न चेयं शक्यतेऽद्यापि विहातुं निजपल्लिका ।
केवलं वर्जनीयोऽयं सर्वथा दासदारकः ॥
अनेन रहितात्यन्तं श्रुतिः सङ्गेन पापिना ।
इयं न विद्यमानापि भद्र ते दोषकारिणी ॥

यतः ।

अनिष्टशब्दविद्विष्टा मधुरध्वनिलोलुपा ।
अस्मात्संजायते सङ्गाच्छ्रुतिरेषा न तु स्वयम् ॥
यावच्च प्रेरयत्येषा रागद्वेषपरायणा ।
त्वां सङ्गसहिता तात तावत्ते दुःखमाभिका ॥
अतोऽस्मिन् वर्जिते सङ्गे शब्दश्रवणतत्परा ।
भवत्यपीयं मध्यस्था न ते तात विबाधिका ॥
तदेष वत्स दुष्टात्मा सर्वथा दासदारकः ।
दुःखकारणभूतस्ते सङ्गस्त्यजनमर्हति ॥
ततः प्रपद्य नम्रेण तद्गुदागमभाषितम् ।
कोविदेन परित्यक्तः स सङ्गः श्रुतिदारकः ॥
ततः श्रुत्वा युतोऽप्येष शब्दौत्सुक्यविवर्जितः ।
आवयन्नपि तान्शब्दाँल्लोके श्लाघ्योऽभवत्सुखी ॥
एवं च लसमानौ तौ श्रुत्वा कोविदबालिशौ ।
सङ्गत्यागग्रहाज्जातौ सुखदुःखप्रपूरितौ ॥

अथास्ति तुङ्गशिखरो बहिरङ्गो महागिरिः ।
तत्रान्यदा समारूढौ भूप कोविदबालिशौ ॥
तत्रास्ति शिखरे रम्भं विशालं देवनिर्मितम् ।
अदृष्टमूलं मातुर्व्येगत्वा भूमौ प्रतिष्ठितम् ॥

इतश्च ।

एकं गान्धर्वमिथुनं किन्नरं च तथापरम् ।
गेये परस्परस्पर्द्धा तदा जातानयोर्द्वयोः ॥
ततः परीक्षकैर्युक्ते ते रम्भे तत्र दैविके ।
एकान्तमिति विज्ञाय परीक्षार्थमुपागते ॥
अथ ताभ्यां समारब्धं मधुरं कर्णपेशलम् ।
परस्परेर्ष्यया गीतं परिपाट्या मनोरमम् ॥
ततस्तौ शिखरारूढौ भूप कोविदबालिशौ ।
रम्भस्थमिथुनोद्गीतं श्रुत्वा गाढं प्रबोधितौ ॥

ततश्च ।

हृदयस्थितमङ्केन बालिशेन दुरात्मना ।
सा श्रुतिः स्थापिता द्वारे तस्याकर्णनतत्परा ॥
तस्यामर्पितसद्भावः सोऽपि तादात्म्यमागतः ।
रसेन निर्भरीभूतो न वेदयति किंचन ॥
ततः स तेन मङ्केन स्ववीर्येण तथा हृतः ।
गण्डशैलसमो रम्भे द्रागाहृत्य पतितो यथा ॥
दृहदास्फोटपातेन तेन गान्धर्वकिन्नराः ।
गात्रपातादवष्टब्धा बालिशे रोषमागताः ॥

ततोऽभिहितमेतैः परस्परं अरे रे ।

कस्कोऽयं लात लातेति ततो मङ्क्षु बालिशः ।
चूर्णितः समकं सर्वैर्दुःखभारेण मारितः ॥

इतश्च ।

सदागमोपदेशेन त्यक्तसङ्गः स कोविदः ।
तत्र गीते तदा मूर्छां श्रुत्वा युक्तोऽपि नो गतः ॥
ततस्तं पतितं दृष्ट्वा बालिशं हन्यमानकम् ।
तस्मान्नूर्णमपक्रान्तो गिरेः शृङ्गात्स कोविदः ॥
सद्धर्मघोषनामानं सूरिमासाद्य सुन्दरम् ।
जातो बालिशवृत्तान्तं दृष्ट्वा साधुः प्रबुद्धधीः ॥
क्रमाच्च गुरुणा तेन निजस्थाने निवेशितः ।
स एषोऽहं महाराज विज्ञेयः कोविदस्त्वया ॥
तदेवं शचुमित्रेण तेन सङ्गेन नाशितः ।
महादुःखभराक्रान्तो भ्राता मे भूप बालिशः ॥
अहं तु मोचितोऽनेन सर्वथा हितकारिणा ।
सदागमेन निःशेषात्तादृशाद्दुःखजालकात् ॥
जातश्च सतताह्लादः साम्प्रतं लब्धसंयमः ।
अत एवास्य निर्देशमधुनापि करोम्यहम् ॥
तदेषोऽखिलभूतानां हितकारी सदागमः ।
दुष्टान्तरङ्गलोकेन मैत्री पर्यन्तदारुणा ॥
एवं स्थिते महाराज पुरुषेण हितैषिणा ।
त्यक्तव्यो दुष्टसम्पर्को न च त्याज्यः सदागमः ॥

ततश्चेदं गुरोर्वाक्यमाकर्ण्यात्यन्तपेशलम्।
भद्रे ऽगृहीतसङ्केते तदा मे हृदि संस्थितम्॥
अये मां त्याजयत्येष महामोहपरिग्रहौ।
तथैव कारयत्युच्चैरादरं च सदागमे॥

एवं च स्थिते।

अहं किं करवाणीति यावच्चिन्तामुपागतः।
तावन्ममाशयज्ञानादकलङ्केन जल्पितम्॥

यदुत।

बुद्धं भगवतो वाक्यं किं वा नो घनवाहन।
मयोक्तं सुष्ठु भो बुद्धं स प्राह क्रियतामिदम्॥

ततो गाढरूढतयाकलङ्केन सार्धं प्रणयस्याचिन्त्यप्रभावतया भगवत्कोविदसूरिसन्निधानस्य प्रत्यासन्नवर्तितया कर्मग्रन्थिस्थानस्य प्रत्युत्तरदानसामर्थ्यविकलतया च प्रतिपन्नं तदाकलङ्कवचनं अभ्यर्णीभूतो भूयः सदागमः अनुशीलितं चैत्यवन्दनादिकं अनुगुणितं पूर्वपठितादिकं प्रवर्तितं पुनर्दानादिकं ईषद्दूरीभूतौ महामोहपरिग्रहौ द्रव्यतोऽकलङ्कलज्जया न पुनर्भावसारतया। ततोऽहं विगतमूर्छ इव सांसारिकपदार्थेषु संतुष्टचित्त इव विभवनिचयेषु तदाकलितोऽकलङ्केन। ततो गतः सोऽन्यत्र विहाराय सह सूरिणा।

ततस्तं दूरगं मत्वा महामोहपरिग्रहौ।
भूयोऽप्युन्नमितौ भद्रे दूरीभूतः सदागमः॥
ततः शिथिलितं कृत्यं विशता धर्मदेशना।

संजातोऽहं पश्चोस्तुल्यस्तद्दीर्घास्ते पलाशकाः ॥
ततो विषयमूर्छान्धो धनसञ्चयतत्परः ।
भूरिकन्याहिरण्यार्थं पीडयामि महीजनम् ॥
अन्तःपुरसहस्राणि भूरिभोगपिपासया ।
हिरण्यभृतकूपानां मीलितानि शतानि च ॥
अहिरण्यीकृता पृथ्वी महामोहवशेन च ।
तत्पापं न जगत्यस्ति यत्तदा न कृतं मया ॥
स च पुण्योदयोऽभीष्टं सर्वं ढौकयते मम ।
मया तु तन्न विज्ञातं ततोऽसौ कुपितो मनाक् ॥
ततश्च मे महादेवी नाम्ना मदनसुन्दरी ।
अत्यन्तवल्लभाऽभूत्सा मृता शूलेन विह्वला ॥
अत्रान्तरे समायातः स्वामिमूलं विनीतकः ।
प्रतिजागरको भद्रे शोकनामा मनुष्यकः ॥
स प्रणम्य महामोहं स्वामिनं विहितादरः ।
ततश्चावसरं ज्ञात्वा मामालिङ्गति मायया ॥
ततोऽहं कृतपूत्कारो दैन्याक्रन्दनरोदनम् ।
स्मृत्वा स्मृत्वा करोम्युच्चैर्देवीं मदनसुन्दरीम् ॥
त्यक्तः शरीरसत्कारो राज्यकार्यं प्रमादितम् ।
जातो ग्रहगृहीताभस्ततोऽहं दुःखपूरितः ॥
अथ मामकवृत्तान्तं कथंचिज्जनवार्तया ।
श्रुत्वाकलङ्कः कृपया मत्समीपमुपागतः ॥
ततः स मां महाभागो दृष्ट्वा शोकवशीकृतम् ।

विमुक्ताशेषसल्लत्यं इयमेदमभाषत ॥
किमिदं भोः समारब्धं भवता घनवाहन ।
किं मे विस्मारितं वाक्यं किं वा त्यक्तः सदागमः ॥
किमेष दुष्टलोकेन भवानेवं खलीकृतः ।
कृतं च ज्ञाततत्त्वेन किमिदं बालचेष्टितम् ॥
यां च ते स्मरतो नित्यं देवीं मदनसुन्दरीम् ।
शोकोऽयं बाधते चित्तं तत्कार्यं किं न बुध्यसे ॥
तथाहि ।
सर्वेऽमी जन्तवो नित्यं कृतान्तमुखकोटरे ।
वर्तन्ते ऽतः क्षणं भूप यज्जीवन्ति तदद्भुतम् ॥
स हि नापेक्षतेऽवस्थां प्रमादम्बनसुन्दराम् ।
दलयत्येव भूतानि मत्तवद्गन्धवारणः ॥
यद्यत्सुन्दरसत्पद्मं जगनेत्रमनोहरम् ।
तत्तन्निपातयत्येष कृतान्तहिमशीकरः ॥
न सम्या न धनं भूरि न वैद्या न च भेषजम् ।
न बान्धवा न देवेन्द्रा मृत्यो रक्षन्ति देहिनम् ॥
इत्यदृष्टप्रतीकारे ज्ञाते मरणविड्वरे ।
भिल्लोऽयं मार्ग इत्येवं ज्ञात्वा को विक्रमो भवेत् ॥
तदेवं कुरुते नित्यमश्रान्तो धर्मदेशनाम् ।
सोऽकलङ्को महाभागो मत्तः शोकगवेषया ॥
अहं पुनर्महामोहस्मरकृतो न लक्षये ।
नष्टबुद्धिः प्रमादेन तं शोकमनुवर्तयन् ॥

कथं ।

हा बाले हा प्रिये मुग्धे हा चार्वङ्गि वरानने ।
हा पद्मनेत्रे हा सुभ्रु हा कान्ते वल्गुभाषिणि ॥
हा भर्तृवत्सले देवि हा हा मदनसुन्दरि ।
क्व गतासि विहायेमं रुदन्तं घनवाहनम् ॥
दीयतां दर्शनं तूर्णं संभाषो मे विधीयताम् ।
क्रीयतां मामके देहे वैक्लव्यमपनीयताम् ॥
इत्येवं प्रलपन्नुच्चैरकलङ्कस्य धीमतः ।
भद्रे तत्तादृशं वाक्यं न जानामि विचेतनः ॥
दयापरीतचित्तोऽसौ ततो मां वीक्ष्य तादृशम् ।
अकलङ्कस्तदा भद्रे पुनः प्राह महामतिः ॥

यथा भो भो महाराज घनवाहन न युक्तमीदृशं भवादृशां विधातुं बालचरितं। तत्परित्यज क्लीबतां। उररीकुरु धीरतां। स्वस्थतां नयान्तःकरणं। स्मरात्मानं। विरहयैनमेकान्तेनाहितं महामोहं। मुञ्च शोकं। शिथिलय परिग्रहं। अनुवर्तय सदागमं। समाचर तदुपदेशं। जनय मम चित्तप्रमोदं। किं विस्मृतं भवतोऽधुनैव तत्साधुनिवेदितं भवप्रदीपनकं। किं न स्मरसि तत्संसारापानकं। किं न चिन्तयसि तं भवारघट्टं। किं न ध्यायसि तं सकर्मकजीवचट्टमठवृत्तान्तं। किं न पर्यालोचयसि तां मनुष्यजन्मरत्नद्वीपदुर्लभतां। किं न निर्विद्यसे वसंस्तत्र जन्मसन्तानवट्टमार्गे। किं विस्मारयसि तां चित्तवानरलीवह्रूपतरलतां। किं नानुशीलयसि तस्यैव सततं रचणं। किं संभ्रमीषि तेषु विषयविषवृक्षेषु।

किं लुठसि तस्मिन्नर्थनिचयसंज्ञे पत्रकुसुमफलरजःकचवरे। किं निपातयसि जानन्नपि मोक्षमार्गमात्मानं घोरेषु महानरकेषु। किं नारोहयसि तेनोपायेनात्मानं तत्र सततानन्दे शिवालयमठे। संसारे हि निवसतां महाराज देहिनां करतलस्थानि व्यसनानि सुलभाः प्रियजनविप्रयोगाः अदूरगा महाव्याधयः प्रत्यासन्नानि दुःखानि अवश्यंभावीनि मरणानि। ततः पुरुषस्य विमलविवेक एवात्र त्राणं नापरमिति। ततोऽहं भद्रे अगृहीतसङ्केते गाढप्रसुप्त इव प्रतिबोधकध्वनिपरंपरया विषघूर्णित इव सस्फुरमन्त्रापमार्जनया मदिरामत्त इव शीघ्रभयदर्शनतया मूर्छित इव सलिलशीकरव्यजनक्रियया उन्मत्तक इव सुवैद्यप्रयुक्तभेषजमालिकया तयाकलङ्कवचनपद्धत्या संजातः प्रत्यागतचेतनः॥ ततः शोकेन प्रणम्याभिहितो महामोहः। यथा देव सजाम्यहं। नायमकलङ्को मह्यमिहामितुं ददाति। महामोहः प्राह। वत्स विषमोऽयमकलङ्कः प्रतारयति शीघ्रोऽमुं घनवाहनं। आवयोरपि यत्किमप्यत्र भविष्यति तथाद्यापि जानीमः। तद्गच्छ तावत्त्वं। केवलं पुनः प्रतिजागरणं विधेयं केनापि भवतामावयोरिति। शोकेनोक्तं। यदाज्ञापयति देवः। ततो गतः शोकः। प्रतिपन्नं मयाकलङ्कवचनं वल्लभीकृतः सदागमः अवधीरितौ मनाङ् महामोहपरिग्रहौ उज्ज्वलितं पूर्वपठितं विहितोऽपूर्वश्रुतग्रहणादरः कारितानि जिनभवनबिम्बादीनि प्रवर्तितानि यात्रास्नात्रपात्रदानप्रभृतीनि। ततः हृतो मया तावदेष गुणभाजनमिति संतुष्टोऽकलङ्कः। अत्रान्तरे प्रियमित्रपरिग्रहोन्मादकेन विधुरितहृदयः प्रहृत्तो मत्समीपागमनाय

महामोहप्रतिजागरकः सागरः। दृष्टोऽनेन रागकेसरी। कृता तेनानुज्ञा। बहुलिकयोक्तं। तात यत्र सागरो गच्छति तत्र मयापि यातव्यं। यतो विदितमेवेदं तातस्य न खल्वेष सागरः चणमपि मया विना वर्तते। रागकेसरिणोक्तं। वत्से यद्येवं ततो गच्छतु भवती। किं चेयमपि कृपणता सागरस्य शरीरभूता जीवितभूता च वर्तते। तदेषापि गच्छतु येनास्य धृतिः संपद्यते। सागरेणोक्तं। तात महाप्रसादः। ततः समागतानि तानि मदभ्यर्णं। दृष्टौ तद्दर्शनेन महामोहपरिग्रहौ। समालिङ्गितोऽहं कृपणतया। ततः प्रवृत्ता ममेच्छा। यदुत किमनेन समादृष्टपरलोकसाधनेच्छया दृष्टसुखहेतुना धनेन व्ययितेन प्रयोजनं। अयं चाकलङ्कः प्रतिदिनं मामुत्साहयति। यथा यदि भावस्तवकरणेनाद्यापि तवोत्साहः ततो महाराज घनवाहन द्रव्यस्तवकरणे तावदादरं कुरुष्वेति। व्ययितं च तद्द्वारेण बहुतमं धनं वर्तते। तदत्र किं करवाणीति चिन्तयतो मे विहितं बहुलिकयालिङ्गनं। ततः प्रादुर्भूता मे कुबुद्धिः। यथा प्रेषयामीतः केनचिद्वचनविन्यासेन तावदेनमकलङ्कं। ततो न भविष्यति ममायं धनव्ययः। ततोऽभिहितो मयाकलङ्कः। यथा भदन्त मदुपकारार्थमिहागता यूयं। अतः संपादितो ममोपकारः। संपूर्णा भवतां मासकल्पः। ततस्ते युष्मदर्थमुन्मनीभविष्यन्ति भगवन्तः कोविदाचार्याः। संजनिष्यतेऽस्माकमुपालम्भः। ततो विहरत यूयं। वयं च करिष्यामो युष्मदादेशं। न भगवद्भिश्चिन्ता कार्येति। तदाकर्ण्य विहृतोऽकलङ्कः। प्राप्तो गुरुसमीपं।

ततो भूयोऽपि धर्मार्थे विनिवार्य धनव्ययम् ।
संजातः सागरादेशादहं रक्तः परिग्रहे ॥
ततः परिग्रहेणोक्तः सागरो मित्रवत्सल ।
नीयमानः स्वयं साचादहं भो रचितस्त्वया ॥
त्वत्तोऽपि मे विशेषेण संपन्ना भ्रातृवत्सला ।
एषा कृपणता मित्र मम जीवितदायिका ॥
गाढं बकुलिकाप्येषा ज्ञेया मदुपकारिणी ।
सोऽकलङ्को महाशत्रुर्गाढं निर्वासितो यया ॥
तद्वार्त विहितं चारु यदागत्य नरोत्तम ।
संदर्शितार्थके भक्तिः पालितोऽयं त्वया जनः ॥
एवं च भाषमाणं तं महामोहः परिग्रहम् ।
प्रत्युवाच यथा वत्स साधु साधूदितं त्वया ॥
अयं हि सागरो वत्स सर्वस्वं मम जीवितम् ।
मदीयवीर्यं निःशेषं भावतोऽत्र प्रतिष्ठितम् ॥
अयं निर्मिथ्यभक्तो मे सागरो मामके बले ।
मत्पुत्रो राज्ययोग्योऽयमयं ते रक्षणक्षमः ॥
एवं चोल्लासितस्तेन महामोहेन सागरः ।
संजातो मां वशीकृत्य स सदागमबाधकः ॥
ततो विवर्धिताकाङ्क्षो दूरीकृतसदागमः ।
संजातस्त्यक्तकृत्योऽहं यथा पूर्वं तथा पुनः ॥
ततो मदीयवृत्तान्तं समाकर्ण्य कृपापरः ।
भूयः प्रचलितो भद्रे सोऽकलङ्को मदन्तिकम् ॥

ततः कृतप्रणामेन तेन कोविदसूरयः।
विज्ञापिता व्रजामीति दीपयित्वा प्रयोजनम्॥
अथ निश्चित्य सद्भावं प्राहुः कोविदसूरयः।
निरर्थकोऽयं ते क्लेशस्ततो मा गास्तदन्तिकम्॥

तथाहि।

यावत्तस्य समीपस्थौ महामोहपरिग्रहौ।
तावन्नाद्यापि कर्मण्यः स तात घनवाहनः॥

यतः।

आगच्छन्ति तयोः पार्श्वे नियमात्सागरादयः।
तेषामाश्रयभूतौ तौ सर्वेषां मूलनायकौ॥
वशे च वर्तमानस्य तस्य तेषां दुरात्मनाम्।
क्वोपदेशाः क वा धर्मः क सदागमसौलकः॥
बधिरे कर्णजापोऽयमन्धे नृत्तप्रदर्शनम्।
ऊषरे बीजनिक्षेपस्तस्य या धर्मदेशना॥

यतः।

अत्यल्पस्तस्य संस्कारस्तावकीनेन जायते।
वचनेन यतिर्गुर्वी स्वाध्यायस्य भवादृशाम्॥

अन्यच्च।

बोधितो बोधितो भूयः स शेते भावनिद्रया।
यावदेतौ समीपस्थौ महामोहपरिग्रहौ॥
तदलं ते गतेनार्य घनवाहनसन्निधौ।
स्वकार्यहानिदे ह्यर्थे न वर्तन्ते विचक्षणाः॥

अकलङ्केनोक्तं ।

भदन्तानर्थहेतुभ्यां ताभ्यां सार्धं तपस्विनः ।
कदा पुनर्वियोगः स्याद्घनवाहनभूभुजः ॥
गुरुणोक्तं विजानन्ति तं प्रायेण भवादृशाः ।
चारित्रधर्मराजस्य प्रसिद्धो यो महत्तमः ॥
चारित्रधर्मयुक्तेन स्ववीर्येण विनिर्मिता ।
तेनास्ति मानसी कन्या विद्या नाम मनोहरा ॥
सा सुरूपा विशालाक्षी जगदाह्लादकारिणी ।
विज्ञातविश्वभावार्था सर्वावयवसुन्दरी ॥
विलसन्ती च सा कन्या सततोद्दामलीलया ।
संसारातीतलावण्या मुनीनामपि वल्लभा ॥
सा सर्वसम्पदां मूलं सा सर्वक्लेशनाशनी ।
निरन्तानन्दसन्दोहदायिका सा निगद्यते ॥
अतस्तां कन्यकां विद्यां यदासौ घनवाहनः ।
लप्स्यते भोक्ष्यदामुष्मान्महामोहो वियोक्ष्यते ॥

यतः ।

सा कन्या निजवीर्येण विरुद्धानेन पापिना ।
न विद्यते महावस्था अनयोस्तेन हेतुना ॥

किं च ।

तथा निरीहता नाम कन्यान्या विद्यतेऽनघा ।
चारित्रधर्मराजस्य दुहिता सा मनोरमा ॥
विरतेः कुक्षिसंभूता भाचोरत्यन्तपूजिता ।

शान्तिधर्मराजीये राज्ये सा सर्वसारिका ॥
महत्तमस्य साभीष्टा सद्बोधस्यातिवल्लभा ।
सन्तोषतन्त्रपालेन स्वामिभक्तेन वर्धिता ॥
स्वभावसुन्दरा बाला संपूर्णेच्छा न वाञ्छति ।
वस्त्रालङ्कारमाल्यादिसंपाद्यं सा विभूषणम् ॥
स्वर्णेन विविधैर्भोगैर्विचित्रै रत्नराशिभिः ।
न शक्या लोभमानेतुं कन्यका सा निरीहता ॥
सा निःशेषजगद्वन्द्या सा मुनीनां मनोहरा ।
सा दुःखोच्छेदिका धन्या सा चित्तानन्ददायिका ॥
तां कन्यां चारुलावण्यां यदासौ घनवाहनः ।
लप्स्यते विलयं यायात्तदा नूनं परिग्रहः ॥
विरोधोऽस्ति तया सार्धं यतस्तस्य दुरात्मनः ।
अतस्तां वीक्ष्य पापोऽसौ गाढभीतो विलीयते ॥

अकलङ्केनोक्तं ।

कदा पुनरसौ धन्ये ते कन्ये परिणेष्यति ।
तयोर्दर्शनकारिण्यौ भदन्त घनवाहनः ॥

कोविदसूरिणोक्तं ।

भूयसाद्यापि कालेन तयोर्लाभो नरोत्तम ।
सम्भयोश्च भवेन्नूनं स तयोः परिणायकः ॥
अथाकलङ्कः प्रत्याह युष्माकं यदि रोचते ।
ततोऽहं लम्भयामीति ते कन्ये घनवाहनम् ॥
गुरुराह महाभाग नाधिकारो भवादृशाम् ।

कन्ययोः प्रापणेऽद्यापि मयोरेतेन हेतुना ॥
स कर्मपरिणामाख्यस्ते कन्ये दापयिष्यति ।
घनवाहनराजाय नोऽपरो दापकस्तयोः ॥
दाप्यमाने पुनस्तेन ते स्यातां कन्यके यदा ।
हेतुभावं भजन्त्येव तदा युष्मादृशा अपि ॥

एवं च स्थिते ।

स एव योग्यतां मत्वा क्वचित्ते दापयिष्यति ।
कन्ये सुखप्रदे धन्ये घनवाहनभूभुजे ॥
अतो विहाय तच्चिन्तां स्वाध्यायध्यानतत्परः ।
विमुक्तावस्तुनिर्बन्धस्तिष्ठार्य त्वं निराकुलः ॥
ततस्तथेति भावेन प्रतिपद्य गुरोर्वचः ।
स्थितोऽकलङ्को निश्चिन्तस्तदा भद्रे निरातुरः ॥
अहं तु तौ समाश्रित्य महामोहपरिग्रहौ ।
आगत्यागत्य तद्भृत्यैरेकैकेन कदर्थितः ॥

तथाहि ।

एके गच्छन्ति तद्भृत्याः प्रत्यागच्छन्ति चापरे ।
अन्ये तिष्ठन्ति मत्पार्श्वे किंचिदाभाष्य कारणम् ।
किं चात्र बहुनोक्तेन समासात्ते निवेद्यते ॥
भूरिभाषितया त्वं मां वाचालं मावजीगणः ।
चित्तवृत्तिमहाटव्यां या नदी सा प्रमत्तता ॥
तत्तद्विलसितं नाम यत्तस्याः पुलिनं पुरा ।
वर्णितं तत्र योद्दिष्टश्चित्तविक्षेपमण्डपः ॥

तृष्णा च वेदिका तस्यां विपर्यासाख्यविष्टरम् ।
तत्रिषण्णो महामोहस्तस्याविद्या वपुर्लता ॥
विमर्शेन प्रकर्षाय या सा पूर्वं निवेदिता ।
स्मरसि त्वं विशालाक्षि चित्ते सर्वमिदं न वा ॥
ततोऽगृहीतसङ्केता प्राह बाढं स्मरामि भोः ॥°
संसारिजीवस्तां प्राह यद्येवं चारुलोचने ।
ततस्ते ये विमर्शेन प्रकर्षाय विवर्णिताः ॥
मिथ्यादर्शनसंज्ञाद्या भूयांसो वेदिकास्थिताः ।
अन्ये सेवापरास्तत्र स्थिता मुत्कलमण्डपे ॥
ते सर्वे भूभुजो भद्रे सकलत्राः सबान्धवाः ।
सभृत्यपरिवाराश्च प्रत्येकं समुपागताः ॥
महालोष्टे समीपस्थे तदा मे सर्वनायके ।
न सोऽस्ति कश्चित्तत्सैन्ये येनाहं न निषेवितः ॥

ततश्च ।

गृद्धो विमूर्छितस्तेषु भावेषु भवभाविषु ।
ततोऽहं नष्टसन्मार्गो महामूढतया तदा ॥
सदागमं परित्यज्य विधाय मतिविभ्रमम् ।
मिथ्यादर्शनसंज्ञेन भूयोऽहं बाधितस्तदा ॥
पापानि धर्मबुद्ध्याहं दारुणानि पुनस्तदा ।
भूरिशः कारितो भद्रे कुदृष्ट्या तन्महेलया ॥
शब्दादिविषयग्रामे निःसारे साधुनिन्दिते ।
विधापितो मनःप्रीतिं रागकेसरिणा पुनः ॥

तस्य भार्या पुनर्या सा मूढता नाम विश्रुता ।
तद्वशेन मया नैव विज्ञाता भवदुष्टता ॥
तथा द्वेषगजेन्द्रोऽपि सनिमित्तानिमित्तकम् ।
कुर्वन्नप्रीतिसन्तापं नितरां मे विजृम्भितः ॥

तथा ।

तस्याविवेकिता भार्या कार्याकार्यविचारणम् ।
कुर्वन्तं वारयत्युच्चैस्तदा मां वशवर्तिनम् ॥

तथा ।

शब्दे रूपे रसे गन्धे स्पर्शे चात्यन्तलोलुपः ।
वशीकृतोऽहं संपन्नो रागकेसरिमन्त्रिणा ॥
प्राप्तेषु गाढमूर्च्छान्धो ऽप्राप्ताकांक्षाविडम्बितः ।
कृतो भोगेषु तस्यैव भार्यया भोगतृष्णया ॥

तथा ।

निर्वादितसुखो हा हा हासितोऽहं निरर्थकम् ।
हासेन बहुशो भद्रे सद्गाम्भीर्यविरोधिना ॥
मूत्रान्त्रक्लेदजाम्बालमलपूर्णेषु योषिताम् ।
गात्रेषु रमितो भद्रे रत्याहं बहुशस्तदा ॥
अरत्यापि महोद्वेगसन्तापाक्रान्तमानसः ।
कृतोऽहं भूरिशो भद्रे कारणैरपरापरैः ॥
मरिष्यामीति विश्रान्तो राज्यं वा मे हरिष्यते ।
इत्यादि कारणं प्राप्य भयेनाहं विनाटितः ॥
मरणं स्निग्धबन्धूनामिष्टनाशादिकं तथा ।

हेतुं संप्राप्य शोकेन भूयो भूयो विडम्बितः ॥
तत्त्वमार्गवियुक्तात्मा मिथ्याबुद्ध्या तिरोहितः ।
विवेकिहास्यतां नीतस्तदाहं हि जुगुप्सया ॥

तथा।

रागकेसरिणः पुत्रा येऽष्टौ पूर्वं विवर्णिताः ।
सुता द्वेषगजेन्द्रस्य ये चाष्टौ परिकीर्तिताः ॥
तैस्तदा मे कषायाख्यैर्महामोहपितामहे ।
समीपस्थे कृतं यत्तु तदाख्यातुं न पार्यते ॥
ज्ञानप्रकाशलेशेन रहितो भावतस्तदा ।
ज्ञानसंवरणेनाहं प्रबलेन कृतः पुनः ॥

तथा ।

कुर्वन् घुरघुराराव काष्ठवन्नष्टचेतनः ।
दर्शनावरणेनाहं स्वापितो गतदर्शनः ॥

तथा ।

क्वचिदाह्लादितोऽत्यन्तं क्वचित्सन्तापविक्लवः ।
कृतोऽहं तेन चार्वङ्गि वेदनीयेन भूभुजा ॥

तथा ।

आयुष्कनामकेनापि नरेन्द्रेण सुलोचने ।
घनवाहनरूपेण तदाहं धारितश्चिरम् ॥

तथा ।

तेन नामाभिधानेन भूभुजा वरवीचणे ।
शरीरे मामके चित्रं निजवीर्यं निदर्शितम् ॥

तथा गोत्रान्तरायाभ्यां स्वमाहात्म्यं वरानने ।
कृतमेव ममात्यर्थं चरितार्थं तदा पुनः ॥

तथा ।

रौद्रार्तध्यानसंयुक्तः पापात्मा पापचेष्टितः ।
विष्टितोऽहं विशालाचि तेन दुष्टाभिसन्धिना ॥
तथान्यैरपि तत्काले महामोहे समीपगे ।
ममाविर्भावितं भद्रे स्वं स्वं वीर्यं महाभटैः ॥
अकलङ्केन मुक्तत्वादनाथ इव निर्भयैः ।
इत्थं खलीकृतोऽत्यन्तं तैरहं भावशत्रुभिः ॥
अथान्यदा समायातो मत्कदर्थनकाम्यया ।
महामोहनरेन्द्रस्य समीपे मकरध्वजः ॥
स च स्वीयां रतिं भार्यां रागकेसरिमन्त्रिणम् ।
पञ्चमानुषसंयुक्तं तच्च तस्य कुटुम्बकम् ॥
एतां सर्वां समासाद्य सामग्रीं कार्यसिद्धये ।
संनद्धबद्धकवचस्तदा प्राप्तो रणेक्षणे ॥
ततस्तुष्टो महामोहो मकरध्वजमीक्षणात् ।
सोऽप्यासाद्य महामोहं परं हर्षमुपागतः ॥
ततस्तेन युतः साचात्संनद्धो गन्धवारणः ।
संपन्नोऽसौ महामोहो जातो मेऽत्यन्तबाधकः ॥
शब्दरूपरसस्पर्शगन्धलुब्धोऽन्धसंनिभः ।
गाढं निर्नष्टसद्बोधः संजातोऽहं ततस्तदा ॥
गर्ताशूकरसङ्काशो विषयाशुचिकर्दमे ।

रात्रिंदिवं निमग्नात्मा स्थितोऽहं विगतत्रपः॥
सुभूयसापि कालेन न भोगैस्तृप्तिमागतः।
घृतपानेन किं जातः पीनगण्डोऽत्र वानरः॥
भुञ्जानस्य च मे भोगान् वर्धते भोगतृष्णिका।
सुतरामुल्लसत्येव जलेन वडवानलः॥
अकलङ्कोपदेशास्ते शशाङ्ककरनिर्मलाः।
तदा मे विस्मृताः सर्वे महामोहघनावृताः॥
ततो मां तादृशं दृष्ट्वा श्रावशत्रुविचेष्टितम्।
न मेऽवसर इत्येवं गतो दूरं सदागमः॥
यथाभिमतकामांश्च संपादयति मे तदा।
असौ पुण्योदयोऽहं तु विमूढस्तं न लक्षये॥
ततो विमुक्तनिःशेषराज्यकार्यो दिवानिशम्।
अन्तःपुरगतः स्त्रैणं भुञ्जानोऽहमवस्थितः॥

तथा।

यां यां नारीं प्रपश्यामि नगरे चारुविग्रहाम्।
कुलजामकुलजां वा यां वा कश्चिन्निवेदयेत्॥
तां तां सर्वां समाहृत्य जनेभ्यो सत्त्ववत्तया।
अन्तःपुरे प्रवेश्याहं करोमि निजपत्निकाम्॥
न जानामि महापापं नापेक्षे कुललाञ्छनम्।
गणयामि न साधुभ्यो वारकं मन्त्रिमण्डलम्॥
ततो विरक्ताः सामन्ताः पुरं सोद्वेगमागतम्।
तादृशाधमशीलेन लज्जिता मम बान्धवाः॥

पदातयोऽपि संपन्ना मम निन्दाविधायकाः ।
गुणाः सर्वत्र पूज्यन्ते सम्बन्धो नात्र कारणम् ॥
अहं तु तादृशीं लोकाध्मानानोऽप्यात्मगर्हणाम् ।
महामोहवशीभूतो निन्द्यकर्मरतः स्थितः ॥
या नीचकुलसंजाता याश्चागम्याः स्त्रियो नृणाम् ।
सर्वाः स्वेऽन्तःपुरे चिप्तास्ता मया पापकर्मणा ॥
अथासीच्च कनिष्ठो मे भ्राता नीरदवाहनः ।
लज्जापरो विनीतात्मा प्रख्यातः सारपौरुषः ॥

ततश्च ।

मन्त्री विरक्तैः सामन्तैः पौरमन्त्रिमहत्तमैः ।
एकवाक्यतया सर्व्वैः स प्रोक्तो रहसि स्थितः ॥

यदुत ।

अगम्यगमनासक्तो निर्मर्यादो विमूढधीः ।
नष्टधर्मा यशोसुक्तो य एवं कुलदूषणः ॥
सोऽयं सिंहासनस्थेव सारमेयो नराधमः ।
अस्य योग्यो न राज्यस्य कुमार घनवाहनः ॥
अनेन हारितं राज्यं वंश्यानां लाघवं कृतम् ।
न युज्यते ततोऽस्माकं विनाशोऽयमुपेक्षितुम् ॥
अतोऽयं प्रतिराज्येषु वृत्तान्तो नावगम्यते ।
यावत्तावत्कुमारोऽत्र राजा भवितुमर्हति ॥
अन्यथा नैव ते भ्राता न राज्यं न च भूतयः ।
न वयं न यशो नैव नगरं भो भविष्यति ॥

एवं चोक्तः स तैर्युक्तियुक्तं नीरदवाहनः।
तथैव दृष्टतच्चेष्टः पर्यालोचमुपागतः॥
इतश्च मामको भद्रे वयस्यो दुष्टचेष्टितैः।
गाढमुद्वेजितश्चित्ते नष्टः पुण्योदयस्तदा॥
पापं चात्यर्गलीभूतं मद्बुद्धा भावबान्धवः।
द्राघीयसी च संजाता भूयः सा कर्मणः स्थितिः॥
ततश्च वचनं तस्य यल्लोकैर्मन्त्रितं पुरः।
तच्चित्ते युक्तियुक्तत्वाल्लग्नं मे भ्रातुरुच्चकैः॥

ततश्च।

एवं भवतु तेनोक्तैस्तैर्लोकैर्वैरिकैरिव।
आगत्याहं दृढं बद्धो मदिरामदविह्वलः॥
तावतः परिवर्गस्य मध्ये जातो न कश्चन।
मत्पक्षे सजनो भद्रे येन मा मेति जल्पितम्॥
ततो नरकपालाभैस्तैर्बद्धा नरकोपमे।
क्षिप्तोऽहं चारके सुभ्रु ज्ञातिमन्त्रिमहत्तमैः॥
स च संस्थापितो राज्ये राजा नीरदवाहनः।
महाकलकलेनोच्चैर्नृत्यद्भिस्तोषनिर्भरैः॥
दुष्टाः कुस्वामिनाशेन तुष्टाः सुस्वामिनो गुणैः।
ते पौरसैनिका लोकास्ततः किं किं न कुर्वते॥
अहं तु चारके तत्र पुरीषमलपिच्छिले।
मूत्रान्त्रक्लेदजाम्बालदुर्गन्धे गर्भसन्निभे॥
क्षुधाक्षामोदरो बद्धः परिभूतो विगर्हितः

स्मृतदुश्चेष्टितैः क्रुद्धैर्बालकैरपि ताडितः ॥
अनेकयातनास्थाने स्ववर्गेणावधीरितः।
प्राप्तः शारीरसंतापं नरकेष्विव नारकः ॥
महामोहवशीभूते राज्यभ्रष्टे तथा मयि।
यः संजातो मनस्तापः स व्याख्यातुं न पार्यते ॥
तथाहि।
ममेदं विपुलं राज्यं मामकीना विभूतयः।
अधुनान्ये प्रभोक्तार इति शोकेन पीडितः ॥
सुखलालितदेहोऽहमधुना कीदृशी गतिः।
सर्वस्य परिभूतोऽहमित्यरत्या कदर्थितः ॥
लुम्पन्ति मामकमिदं रत्नस्वर्णादिकं जनाः।
एते हा हा हतोऽस्मीति बाधितो धनमूर्छया ॥
तदेवं नरकाकारे चारके दुःखपूरितः।
तत्राहं संस्थितो भद्रे सुचिरं पापकर्मणा ॥
परिवारसमेतस्य महामोहस्य दोषतः।
तथाप्यहं न निर्विण्णः संसाराचारलोचने ॥
क्रोधान्धस्तेषु लोकेषु चित्तकल्लोलदूषितः।
रौद्रध्यानानुगो नित्यं भूरिकालमवस्थितः ॥
अथ जीर्णा क्रमेणैव गुडिका मे चिरन्तनी।
ततो वितीर्णा सा मह्यं भवितव्यतयापरा ॥
गतः पापिष्ठवासायां पुरि सप्तमपाटके।
अहं तस्याः प्रभावेण जातः पापिष्ठरूपकः ॥

गृहे तत्राप्रतिष्ठाने निर्भिन्नो वज्रकण्टकैः ।
सागराणां त्रयस्त्रिंशन्न्यसन् कन्दुकलीलया ॥
तदन्ते गुडिकादानाद्भवितव्यतया तथा ।
पञ्चाक्षपशुसंस्थानमानीय शफरीकृतः ॥
पुनर्नीतोऽप्रतिष्ठाने समानीतस्ततोऽप्यहम् ।
कृतश्च गुडिकादानाच्छार्दूलाकारधारकः ॥
भूयः पापिष्ठवासायां नीतोऽहं तुर्यपाटके ।
ततोऽप्यानीय विहितो मार्जाराकारधारकः ॥
तदेवंविधरूपाणि जनयन्त्या मुहुर्मुहुः ।
दुःखसागरविस्तारं दर्शयन्त्या क्षणे क्षणे ॥
तदसंव्यवहाराख्यं विहाय नगरं परम् ।
प्रायः समस्तस्थानेषु भ्रमितोऽहं महेलया ॥
युक्तः सपरिवारेण महामोहेन सुन्दरि ।
कुर्वाणो निजभार्याज्ञां क काहं न विनाटितः ॥
तथा परिग्रहेणाहं संज्ञया निजभार्यया ।
युक्तेन बहुशो भद्रे योनौ योनौ विडम्बितः ॥

यतः ।

गृहकोकिलिकासर्पमूषिकाकारधारकः ।
दृष्टो निधानमासाद्य तत्राग्रे विक्लो मृतः ॥
एवं चानन्तकालं मे भ्रमतो गजगामिनी ।
घर्षणाघूर्णनन्यायात्प्रसन्ना भवितव्यता ॥

अन्यच्च ।

भ्रान्ता इव मया सार्धं भ्रमतोऽनन्तवर्त्मनि ।
किंचित्ते दुर्बलीभूता महामोहादयस्तदा ॥
पापं च प्रतनूभूतमीषत्कर्मस्थितिस्तथा ।
पुनर्ग्रन्थिः समीपस्था संजाता मे वरानने ॥
ततो मनुजगत्यन्तः पाटके भरताभिधे।
साकेतेऽहं पुरे नीतो भवितव्यतया तया ॥
वणिजस्तस्य नन्दस्य भार्यास्ति घनसुन्दरी ।
जनितस्तत्सुतत्वेन गुडिकादानयोगतः ॥
प्रतिष्ठितं च मे नाम यथायममृतोदरः ।
अथ क्रमेण संप्राप्तो यौवनं काममन्दिरम् ॥
दृष्टः सुदर्शनो नाम सुसाधुः कानने मया ।
कृपापरीतचित्तेन कृता मे तेन देशना ॥
ततो भूयो मया भद्रे महात्मायं सदागमः ।
विलोकितः समीपस्थस्तस्य साधोर्महात्मनः ॥
किंचिद्भद्रकभावत्वान्नमस्कारादिपाठकः ।
जातोऽहं श्रावकाकारधारको द्रव्यतस्तदा ॥
ततस्तदनुभावेन पुरेऽहं विबुधालये ।
भवचक्रस्थिते नीतो गुडिकायाः प्रभावतः ॥

तत्र च ।

भावना व्यन्तरा ज्योतिश्चारिणः कल्पवासिनः ।
पाटकेषु वसन्त्येते त्रिबुधाः कुलपुत्रकाः ॥
दशाष्टपञ्चभेदास्ते त्रयः पूर्वे यथाक्रमम् ।

कल्पस्थास्तदतीताश्च द्विभेदास्तुर्यपाटके ॥
कल्पस्था द्वादशावासमंस्थिताः समुदाहृताः।
नवपञ्चनिवासस्थास्तदतीताः प्रकीर्तिताः ॥
तत्राद्ये पाटके भद्रे जातोऽहं भावनकदा।
आद्यभेदस्थितेष्वेव विबुधः कुलपुत्रकः ॥

ततश्च।

गतस्य तत्र पद्मात्रि विस्मृतो मे सदागमः।
स्थितोऽयमपि मां हित्वा कुर्वाणः कालयापनाम् ॥
ततो महर्द्धिसंपन्नः सार्धं पल्योपमं मुदा।
सुखं यथेष्टं भुञ्जानः स्थितोऽहं चारुलीलया ॥
तदन्ते गुडिकां दत्त्वा भार्यया तुष्टचित्तया।
पुरेऽहं मानवावासे समानीतः पुनस्तया ॥
तत्रास्ति बन्धुदत्तस्य वणिजः प्रियदर्शना।
भार्या तस्याः सुतत्वेन जातोऽहं चन्द्रनामकः ॥
संप्राप्तयुवभावेन सुन्दराख्यो मुनीश्वरः।
दृष्टो मया समीपस्थस्तस्य चायं सदागमः ॥
शिक्षितं पुनरप्यस्य सम्बन्धि ज्ञानमल्पकम्।
जातश्चाहं तदा भद्रे श्रमणो भाववर्जितः ॥
गतस्तदनुभावेन भूयोऽहं विबुधालये।
महर्द्धिविबुधस्तत्र जातो व्यन्तरपाटके ॥
न नीतो विस्मृतत्वेन मया तत्र सदागमः।
गतेन मानवावासे पुनश्च प्रविलोकितः ॥

एवं विचरतानन्ते भवचक्रे पुनः पुनः ।
तथानन्तेन कालेन मया भार्यानियोगतः ॥
अयं सदागमो भद्रे महात्मा प्रविलोकितः ।
अनन्तवारा दृष्टोऽपि विस्मृतश्च पुनः पुनः ॥
विस्मृते च पुनर्भ्रान्तं भवचक्रं निरन्तकम् ।
आसादितः कथंचिच्च पुनरेव सदागमः ॥

यतः ।

अनन्तवाराः संपन्नः श्रावकोऽहं सुलोचने ।
द्रव्यतो यतिरूपश्च तत्र दृष्टः सदागमः ॥
विमुच्येमं महाभागं भूयो भूयोऽन्तरान्तरा ।
भ्रान्तः समस्तस्थानेषु कृता नानाविडम्बनाः ॥
कुतीर्थिकयतिश्चाहं सदागमविदूषकः ।
अनन्तवाराः संपन्नो भवचक्रे निरन्तके ॥
अन्यच्च भ्रमतस्तत्र भवचक्रे समाखिले ।
क्वचिद्दीर्घा क्वचिद्ध्रस्वा संजाता कर्मणः स्थितिः ॥
क्वचिच्च प्रबला जाता महामोहादिशत्रवः ।
क्वचित्सदागमो जातः प्रबलस्तन्निवारकः ॥
ततश्चानन्तवाराभिर्यावदभ्यासमागतः ।
अयं सदागमस्तावज्जातं यत्तन्निबोध मे ॥
सा किंचिन्निर्मलीभूता चित्तवृत्तिर्महाटवी ।
ततश्चावसरं ज्ञात्वा प्रस्थितः स महत्तमः ॥
उक्तश्चानेन सद्बोधो मत्समीपागमेच्छया ।

आर्थं विज्ञाप्यतां देवः साम्प्रतं गम्यतां मया ॥
यस्त्वया पूर्वनिर्दिष्टो देवस्याग्रे नरोत्तम।
सोऽधुना वर्तते लग्नः प्रस्तावो हन्त मादृशाम् ॥

सद्बोधेनोक्तं।

प्राह प्राक्कृदितं तात सम्यक् संलक्षितोऽवधिः।
ततो विज्ञापितस्तेन सद्बोधेन नरेश्वरः ॥

ततश्च।

चारित्रधर्मराजेन वचनात्तस्य मन्त्रिणः।
प्रहितो मत्समीपेऽसौ सम्यग्दर्शननामकः ॥

तेन चोक्तं।

विद्येयं नीयतां देव प्राभृतं कन्यकानघा।
तस्य संसारिजीवस्य येन तोषोऽस्य जायते ॥
सद्बोधः प्राह नाद्यापि प्रस्तावोऽस्या महत्तम।
नयने हन्त विद्यायास्तच्चाकर्णय कारणम् ॥
स हि संसारिजीवस्तां मुग्धबुद्धिर्न भोत्स्यते।
विशेषतस्ततस्तावत्सामान्येन प्रपत्स्यते ॥

एवं च स्थिते।

यावन्न तात्त्विकं रूपं तवानेनावधारितम्।
तावन्न युज्यते दातुमेषा तस्मै सुकन्यका ॥
अज्ञातकुलशीलो हि कुर्यादस्याः पराभवम्।
ततः स्याच्चित्तसंतापो मादृशां तन्निमित्तकः ॥
ततो गच्छ विना विद्यां त्वं तावत्तस्य सन्निधौ।

कालेन भूयसा रूपं भोक्ष्यते हि स तावकम् ॥

ततश्च।

यदा स्यात्तेन विज्ञातं रूपं तव परिस्फुटम्।
तदाहमागमिष्यामि विद्यामादाय तेऽन्तिके ॥
सद्गागमस्य सानाथ्यं महामोहादितानवम्।
तथा संसारिजीवस्य सुखस्वादादिवेदनम् ॥
देवे चाभिमुखीभावस्तस्य दर्शनकाम्यया।
विद्यया रहितस्यापि गच्छतस्तत्र ते गुणाः ॥
ततो यदादिशत्यार्यो यच्चाज्ञापयति प्रभुः।
इत्युक्त्वा प्रस्थितस्तूर्णं मत्समीपं महत्तमः ॥
इतश्चाहं तदा भद्रे नगरे जनमन्दिरे।
सूनुरानन्दनन्दिन्योर्जातो नाम्ना विरोचनः ॥
ततः संप्राप्ततारुण्यः कानने चित्तनन्दने।
गतस्तत्र मया दृष्टो धर्मघोषो मुनीश्वरः ॥
इतश्च मे तदा छ्त्वा वर्तते कर्मपद्धतिः।
महामोहादयो जातास्तनवो भावशत्रवः ॥

ततश्च।

प्रणम्य तं महाभागं निषण्णः शुद्धभूतले।
ज्ञातोऽहं भद्रकस्तेन ज्ञानालोकेन धीमता ॥

किं च।

कुर्वता मानसानन्दमुत्पतचरणोपमम्।
ततो मे कर्तुमारब्धा मुनिना धर्मदेशना ॥

कथम् ।

मनुजजन्मजगत्यतिदुर्लभं जिनमतं पुनरत्र विशेषतः ।
तदिदमाप्य नरेण सुमेधसा विठपनीयमतोऽपि परं पदम् ॥
इतरया पुनरेव निरन्तके निपतितस्य सुभीमभवाम्बके ।
कुशलशम्बलमुत्कलमौदृनं ननु विनातुलदुःखपरंपरा ॥
इदमवेत्य जनेन विजानता कुशलकर्म भवोदधितारकम् ।
इह विधेयमहो विफलं मुधा न करणीयमिदं नरजन्मकम् ॥

अत्रान्तरे प्रत्यचीभूतो मे तस्य मुनेः समीपे भूयोऽपि भगवानयं सदागमः। ततो बुद्धं मया तस्य मुनेर्वचनं। अभिहितं च। यन्मया कर्तव्यं तदादिशन्तु भगवन्तः। मुनिनोक्तं। भद्राकर्णय। अवधीरणीयो भवता भवप्रपञ्चः। आराधनीयो विलीनरागद्वेषमोहोऽनन्तज्ञानदर्शनवीर्यानन्दपरिपूर्णः परमात्मा। वन्दनीयास्तदुपदिष्टमार्गवर्तिनो भगवन्तः साधवः। प्रतिपत्तव्यानि जीवाजीवपुण्यपापास्रवसंवरनिर्जराबन्धमोचलक्षणानि नव तत्त्वानि सर्वथा। पेयं जिनवचनामृतं। नेयं तदङ्गाङ्गीभावेन। अनुष्ठेयमात्महितं। उपचेयं कुशलानुबन्धिकुशलं। विधेयं निष्कलङ्कमन्तःकरणं। छेयं कुविकल्पजल्पजालं। अवसेयं भगवद्वचनसारं। विज्ञेयं रागादिदोषद्वन्दं। लेयं सुगुरुसदुपदेशभेषजं। देयं सततं सदाचरणे मानसं। अवगेयं दुर्जनप्रणीतकुमतवचनं। निसेयं महापुरुषवर्गमध्ये स्वरूपं। स्थेयं निष्प्रकम्पचित्तेनेति। एवं चोपदिशति मधुरभाषिणि भगवति धर्मघोषतपस्विनि संप्राप्तोऽसौ सम्यग्दर्शननामा महत्तमः। विलोकितो दुर्भेदकर्मग्रन्थिभेदद्वारेणासौ मया। ततः

संजातं मे तत्र मुनिवचने स्वल्पा श्रद्धानं। प्रतिपन्नोऽसौ हितबन्धुबुद्ध्या मह्त्तमः। अभिहितो मुनिवरः। यदाज्ञापयति नाथस्तदेवाहं करिष्ये। ततोऽभिवन्द्य तं मुनिवरं गतोऽहं स्वभवने।

ततः प्रभृति जातोऽहं सम्यग्दर्शनसंयुतः।
तत्त्वश्रद्धानपूतात्मा विशिष्टज्ञानवर्जितः॥
तदेव सत्यं निःशङ्कं यज्जिनेन्द्रैः प्रवेदितम्।
एतावन्मात्रतुष्टोऽहं तदा जातो वरानने॥
सदागमो हि विज्ञानं स्वमावेदयते तदा।
केवलं सूक्ष्मभावेषु न मे बोधः प्रवर्तते॥
न संजातास्तदा सूक्ष्मविविक्तज्ञानहेतवः।
गुरवः पटुवाचोऽपि विना मे निजयोग्यताम्॥

यतः।

स्वयोग्यतैव चार्वङ्गि श्रद्धानज्ञानकारणम्।
गुरवः केवलं तस्यां भवन्ति सहकारिणः॥

तथाहि।

अकलङ्के तथा लग्ने बोधार्थं मे सकोविदे।
न श्रद्धानं ममोत्पन्नं तदा यत्नशतैरपि॥
ततः परं पुनर्जातोऽनन्तवारा वरानने।
सदागमेन सम्बन्धः श्रद्धाशून्यस्तथाप्यभूत्॥
अतो यदा यदा पुंसो यावती योग्यता भवेत्।
तदा तदा भवत्यस्य तावानेव गुणोद्भवः॥

अतः श्रद्धानमात्रं मे सूक्ष्मज्ञानविवर्जितम् ।
धर्मघोषोपदेशैस्तैः संजातं योग्यतानुगम् ॥

अन्यच्च ।

पल्योपमपृथक्त्वे तु क्षीणे कर्मस्थितेस्तदा ।
गृहिधर्मो मया दृष्टः सामान्यान्न विशेषतः ॥
पालितानि तदादेशाद्व्रतानि नियमास्तथा ।
केचित्तदा मया भद्रे श्रद्धासंशुद्धबुद्धिना ॥
ततस्तदनुभावेन सत्पुरे विबुधालये ।
कल्पवासिषु नीतोऽहं गुडिकादानपूर्वकम् ॥
अथ सौधर्मकल्पेऽहं भास्वराकारधारकः ।
समुत्थितः क्षणार्धेन शयनात्तच्च कीदृशम् ॥
दिव्यपल्यङ्कसत्तूलीरचितं सोपधानकम् ।
कोमलामलसच्चेलच्छादितं चित्तनन्दनम् ॥
सुमनोगन्धसद्धूपलसदामोदसुन्दरम् ।
दिव्यांशुकवरोल्लोचदृष्टिगोचरवन्धुरम् ॥
तत्र चोद्देलमानेन बाहुयुग्मेन विस्मितः ।
किरीटकटकेयूरहारकुण्डलभूषितः ॥
भूषाङ्गरागताम्बूलवनमालाविराजितः ।
उपविष्टः क्षणाज्जातो द्योतिताखिलदिक्पथः ॥
ततोऽलं जय नन्देति जय भद्रेति भाषिणः ।
सहेला ललना लोका लोलल्लोचनचारवः ॥
स्तुवन्तो मां मनोहारिवचनैः कर्णपेशलैः ।

देवोऽसि स्वामिकोऽस्माकमिति किङ्करतां गताः॥
ततोऽहं विस्मयोत्फुल्ललोचनः पर्यचिन्तयम्।
तां मन्दृद्धिं विलोक्येदं किं मया सुकृतं कृतम्॥
ततः प्रादुरभूज्ज्ञानं विमलं विमलेक्षणे।
मया विरोचनाख्यानेन सर्वावधारिता॥
अत्रान्तरे समायातौ महत्तमसदागमौ।
तौ च दृष्ट्वा मया ज्ञातं माहात्म्यमनयोरिदम्॥
ततस्तौ पूर्ववद्भद्रे प्रतिपन्नौ स्वबान्धवौ।
कृतं चोत्थाय निःशेषं कर्तव्यं विबुधोचितम्॥

तथाहि।

विविधरत्नसदीधितिरञ्जिते विकचनीरजखण्डसुमण्डिते।
गुरुनितम्बपयोधरचारुभिः सह वधूभिरमञ्जि सरोवरे॥
तदनु निर्मलस्फाटकनिर्मितं विशदरत्नविराजितकुट्टिमम्।
लघु सलीलमवाप्य जिनालयं सुदृढभक्ति कृतं जिनवन्दनम्॥
अथ सुनिर्मलपद्मकसञ्चयं मणिमयं जिनभाषितमक्षरम्।
पुलककारि रसेन तु वाचितं लघु विधाय मनोरमपुस्तकम्॥

ततो यथेष्टशब्दादिसंभोगमुदिताशयः।
सागरदितयं तत्र किंचिदूनं व्यवस्थितः॥
तदन्ते मानवावासमानीय विहितस्तया।
आभीरोऽहं कलन्दाख्यः सूनुर्मदनरेणयोः॥

इतश्च।

तत्रायातस्य चार्वङ्गि मम तौ चाहबान्धवौ।

तदेते वङ्गगो दृष्टास्तयोऽपि वरबान्धवाः ।
जाताश्च सुखदास्तत्र विमुक्ताश्चान्तरान्तरा ॥

अन्यच्च ।

दृष्टश्च केवलोऽप्येषोऽनन्तवाराः मदागमः ।
न त्वनेन विना दृष्टः स सम्यग्दर्शनः क्वचित् ॥

अन्यच्च ।

यत्र यत्र समीपस्थः संजातौ मे महत्तमः ।
तत्र तत्र वयस्यो मे जातः पुण्योदयः पुरा ॥
तेन चोत्पादिताः सर्वा यथेष्टा भोगसम्पदः ।
वसतो मानवावासे पुरे च विबुधालये ॥

तथा ।

स्थिता कर्मस्थितिर्लघ्वी भीतभीताश्च शत्रवः ।
अन्तर्लीनाः स्थिता भद्रे महामोहादयस्तथा ॥
यत्र यत्र पुनर्जाताः प्रबला भावशत्रवः ।
मत्तः पुण्योदयो नष्टस्तत्र तत्र वरानने ॥
नष्टे च तत्र जाता मे सर्वा दुःखपरंपरा ।
भ्रमितोऽनन्तकालं च भवितव्यतया तया ॥

तथा ।

स्थितिर्द्राघीयसी जाता कर्मणः क्लिष्टतां गतम् ।
मानसं च पुनर्जातं तत्त्वश्रद्धानवर्जितम् ॥
अत एवोत्कटा जाता यत्र यत्र महारयः ।
ते मत्तस्तत्र तत्रैतौ दूरीभूतौ सुबान्धवौ ॥

विशेषः पुनरेषोऽत्र कथ्यते ते निराकृतः ।
स मिथ्यादर्शनाख्येन सम्यग्दर्शननामकः ॥
ज्ञानसंवरणेनापि दूरं नीतः सदागमः ।
क्वचित्तावपि निर्जित्य ताभ्यामपि निराकृतौ ॥
एवं चानन्तकालं ते जयभङ्गपरायणाः ।
देशकालबलं प्राप्य जाता भद्रे परस्परम् ॥

अन्यच्च ।

मामकः पक्षपातोऽभूद्वयोरेव विशेषतः ।
तयोरेव तदा जातो जयो भङ्गस्तदन्ययोः ॥
अन्यदा मानवावासमध्यवर्तिनि सुन्दरे ।
पुरे सोपारके पत्न्या नीतोऽहं नीरजेक्षणे ॥
वणिजः शालिभद्रस्य भार्यास्ति कनकप्रभा ।
जातस्तस्याः सुतोऽस्मीति तत्र नाम्ना विभूषणः ॥
अथ सूरिं सुधाभूतमासाद्य शुभकानने ।
पुनर्दृष्टौ मया भद्रे सद्वृत्तसदागमौ ॥

ततश्च ।

तत्त्वश्रद्धानसंपन्नो भावतो विरतिं विना ।
जातो गुरूपरोधेन श्रमणोऽहं तदानघे ॥
ततो गृहीतलिङ्गस्य साधुमध्येऽपि तिष्ठतः ।
जातं मे कर्मदोषेण वैभाग्यनिरतं मनः ॥
ततः प्रबलतां प्राप्य महामोहादयः पुनः ।
जातौ च भावतो दूरे सद्वृत्तसदागमौ ॥

मागतौ विस्मृतत्वेन महत्तमभद्रागमौ॥
सुतरां विस्मृतौ भद्रे'न दृष्टश्च तदा मया।
यद्विधर्मो यतस्ताभ्यां स निर्मुक्तो न दृश्यते॥
प्राचीनवासनायस्मात् केवलं पापभीरुकः।
स्थितो भद्रकभावेन तत्राहं हंसगामिनि॥
पुनस्तदनुभावेन सत्पुरे विबुधालये।
ज्योतिश्चारिषु नीतोऽहं गुडिकादानपूर्वकम्॥
स्थितस्तत्रापि सद्भोगसम्पत्तिप्रीणितेन्द्रियः।
सुचिरं किं तु तौ दृष्टौ महामोहपरिग्रहौ॥
संजातश्च तयोर्भूयः पक्षपातो दृढत्तरः।
नितरां विस्मृतावेतौ महत्तमसदागमौ॥
ततो जीर्णावसाने तां वितीर्य गुडिकां पुनः।
पञ्चाक्षपशुसंस्थाने नीतोऽहं ब्रष्टया तया॥
विहितो दर्दुराकारधारकः कैलिशीलया।
ततः परं पुनर्भूरि भ्रमितोऽदेवितर्दकम्॥
नानाविधेषु स्थानेषु भ्रमयित्वा स्वभार्यया।
आनीय मानवावासं पुरे काम्पिल्यनामके॥
धराया वसुबन्धोश्च सूनुर्वासवनामकः।
कृतोऽहं कृतसत्कर्मा राजपुत्रो मनोरमः॥
तत्र चासाद्य गाम्भ्याख्यं सूरिं सद्धर्मदेशकम्।
दृष्टाविमौ पुनर्भद्रे महत्तमसदागमौ॥
ततः परिचयादाभ्यां तनूभूताः पुनर्मम।

ग्रहवः सुहृदाभासा महामोहादयस्तदा ॥
अथाहमनयोः प्राप्य माहात्म्यं चारुभाषिणि ।
द्वितीयकल्पे संप्राप्तः सत्पुरे विबुधालये ॥
तत्रस्थस्यापि संपन्नौ ममैमौ स्मृतिगोचरौ ।
भुक्तं च सुचिरं दिव्यं सुखं तत्र मयातुलम् ॥
ततो मनुजगत्यन्तः पाटके काञ्चने पुरे ।
आगतस्य महामोहदोषतो विस्मृताविमौ ॥
इत्थं संख्याधिका वारा दृष्टो दृष्टः पुनः पुनः ।
सदागमयुतो भद्रे नष्टोऽसौ मे महत्तमः ॥

यतः ।

विना विरतिभावेन संख्यातीतेषु धामसु ।
श्रद्धानमात्रसंतुष्टो जातोऽहं श्रावकः पुरा ॥

तथा ।

स्वकुलादुपरोधाद्वा कश्चिच्छ्रद्धानसंयुतः ।
जातः श्रमणवेषोऽहं विरत्या रहितो हृदि ॥

अन्यच्च ।

संख्यातीता मया वारा यत्र यत्र विलोकितः ।
महत्तमः पुनर्दृष्टस्तत्र तत्र सदागमः ॥
गृहिधर्मोऽपि तन्मूले दृष्टः सामान्यरूपतः ।
कश्चित्क्वचिच्च दृष्टोऽपि स महत्तमपार्श्वगः ॥
सम्यग्दर्शनयुक्तौ च गृहिधर्मसदागमौ ।
सामान्यरूपौ तौ भद्रेऽसंख्यातौ विलोकितौ ॥

ततो निमित्तमासाद्य निमित्तविरहेण वा।
स्वभावादेव सम्पन्नस्तदाहं परनिन्दकः॥
तपस्विनां सुशीलानां मदनुष्ठानचारिणाम्।
अन्येषामपि कुर्वाणो निन्दां नो शङ्कितस्तदा॥

किं बहुना।

तीर्थेश्वराणां सङ्घस्य श्रुतस्य गणधारिणाम्।
आशातनां दधानेन मया पृष्टं न वीचितम्॥

एवं च।

गृहीतयतिवेषोऽपि पापात्मा गुणदूषकः।
महामोहवशाज्जातो मिथ्यादृष्टिः सुदारुणः॥
ततोऽतिघोरदुर्भेदकर्मसङ्घातपूरितः।
संजातोऽहं पुनर्भद्रे तादृश्या पापचेष्टया॥
ततोऽनन्तं पुनः कालं दुःखसागरमध्यगः।
प्रायः समस्तस्थानेषु भ्रमितोऽहं स्वभार्यया॥
समस्तद्रव्यराशेश्च भुवनोदरचारिणः।
तदा स्पृष्टं मयोपाधिं भ्रमता वर्गणेचया॥
न सा विपन्न तद्दुःखं न सा गाढविडम्बना।
लोकेऽस्ति यन्मया प्राप्ता न सोढा तदा मया॥

एवं वदति संसारिजीवे विस्मितमानसा।
जातागृहीतसङ्केता किंचिद्भावार्थकोविदा॥
तथा प्रज्ञाविशालापि श्रुत्वा तत्तादृशं वचः।
अत्यन्तजातसंवेगा चिन्तयामास मानसे॥

यदुत।

अहो संसारिजीवस्य महामोहपरिग्रहौ।
मन्येऽहं सर्वपापेभ्यः सकाशादतिदारुणौ ॥

तथा।

क्रोधादिभ्यो यदा जातमस्यानर्थकदम्बकम्।
तदा नानेन कथितः सम्यग्दर्शनमौलकः ॥
ततस्तैर्निर्गुणस्यास्य यत्तादृक्षं विजृम्भितम्।
आलोच्यमानं तन्मेऽद्य नाश्चर्यं प्रतिभासते ॥
आभ्यां पुनरिदं सर्वं सम्यग्दर्शनमौलके।
संजातेऽपि कृतं दीर्घसंसारपतनादिकम् ॥
तदेतौ सगुणस्यापि यावनर्थविधायकौ।
तावेव दारुणौ नूनं महामोहपरिग्रहौ ॥

अथवा।

यत्रेमौ तत्र ते सर्वे सन्ति क्रोधादयः स्फुटम्।
समुदायात्मकस्तेषां महामोहो हि वर्णितः ॥
परिग्रहोऽपि सर्वेषां तेषामाधारतां गतः।
स हि लोभसखो लाभो महामोहबलेऽधिकः ॥
तदेतौ गुणघाताय सर्वेषां मूलनायकौ।
जातौ संसारिजीवस्य यत्तत्राश्चर्यमीदृशम् ॥

किं च।

सद्भूतगुणघाताय सन्ति क्रोधादयोऽप्यमम्।
अनयोस्तु विशेषार्थमनेनेत्थमुदाहृतम् ॥

विमलमपि गुरूणां भाषितं भूरि भव्याः
प्रबलकलिलहेतुर्यो महामोहराजः।
स्थगयति, गुरुवीर्योऽनन्तसंसारकारी
मनुजभवमवाप्तास्तस्य मा भूत वश्याः॥

सकलदोषभवार्णवकारणं त्यजत लोभसखं च परिग्रहम्।
इह परत्र च दुःखभराकरे सजत मा बत कर्णसुखे ध्वनौ॥

एतन्निवेदितमशेषवचोभिरत्र प्रस्तावने तदिदमात्मधिया विचिन्त्य।
सत्यं हितं च यदि वो रुचितं कथंचित्तूर्णं तदस्य करणे घटनां कुरुध्वम्॥

इत्युपमितिभवप्रपञ्चकथायां महामोहपरिग्रह-
श्रवणेन्द्रियविपाकवर्णनो नाम सप्तमः
प्रस्तावः समाप्तः॥

# अथ अष्टमः प्रस्तावः ।

अथास्ति मानवावासे सत्पुरं सततोत्सवम् ।
सप्रमोदमिति ख्यातमचिन्त्यगुणभूषितम् ॥
दानवारिक्षताह्लादो महेभगतिविभ्रमः ।
पुरंदरसमो यत्र नरवर्गो विराजते ॥
रूपलावण्यनेपथ्यनिर्विशेषोऽमरीजनैः ।
विलासिनीजनो यत्र नेत्रोन्मेषैर्विभिद्यते ॥
तत्रारिकरिसङ्घातविपाटितकटस्थलः ।
निर्व्याजपौरुषख्यातो राजास्ति मधुवारणः ॥
सर्वसाधारणं कृत्वा वितीर्णं येन नो धनम् ।
रूपरचितदारेण यौविद्ला न धारिताः ॥
तस्यास्ति पद्मपत्राक्षी रूपलावण्यशालिनी ।
प्रधानवंशसंभूता महादेवी सुमालिनी ॥
या हृदि न्यस्तराजापि राज्ञो हृदयवर्तिनी ।
इत्थं दर्शितचित्रापि विचित्रगुणयोगिनी ॥
अथ पुण्योदयेनाहं संयुक्तो निजभार्यया ।
भद्रेऽगृहीतसङ्केते तस्याः कुक्षौ प्रवेशितः ॥
निष्क्रान्तः कालपर्यायात्सर्वावयवसुन्दरः ।
कृत्स्नः सोऽपि मया सार्धं जातः पुण्योदयोऽनघे ॥
जाते च मयि संजातमानन्दरसनिर्भरम् ।

अन्यच्च ।

तेऽप्याभ्यां हन्त निर्मुक्ता न सन्त्येव कदाचन ।
किं तु प्रवर्तकावेतौ ते तु ज्ञेयाः पदातयः ॥
अस्यैव च विशेषस्य सिद्ध्यर्थममुना कृता ।
दोषसन्दर्शिकामीषां क्रमेणेत्यमुदाहृतिः ॥
समस्तानर्थसार्थस्य तदित्थं जनकाविमौ ।
अस्य संसारिजीवस्य महामोहपरिग्रहौ ॥
तथापि लोकः पापात्मा गुरुवाक्यशतैरपि ।
नाचरत्यनयोस्त्यागं तत्र किं वत कुर्महे ॥
एषापि दुष्टा व्याख्याता श्रुतिः कोविदसूरिणा ।
तथापि रज्यतेऽत्यर्थमस्यामेष जडो जनः ॥
अथ प्रज्ञाविशालां तां गाढं संवीक्ष्य भाविताम् ।
स भव्यपुरुषोऽवादीदम्ब किं चिन्तितं त्वया ॥
तयोक्तं पुत्र ते सर्वं कथयिष्ये निराकुला ।
दत्तावधानस्त्वं तावदस्य वाक्यं निशामय ॥

किं च ।

वत्स मोत्तालतां कार्षीः किलेदं न समाप्यते ।
कथितप्रायमेतेन सर्वमात्मविचेष्टितम् ॥
ततस्तूष्णीं स्थिते तत्र राजपुत्रे ससादरम् ।
संसारिजीवः प्रोवाच शेषामात्मकथानिकाम् ॥

उक्तं च तेन ।

अन्यदा भार्यया भद्रे नीतोऽहं भद्रिले पुरे ।

सुतः स्फटिकराजस्य जातोऽहं विशदस्तदा ॥
विमलानन्दनस्यास्स्तारुण्ये वर्तमानकः ।
सुप्रबुद्धमुनिं दृष्ट्वा प्रबुद्धो जिनशासने ॥
अतो भूयो मया दृष्टौ महत्तमसदागमौ ।
गृहिधर्मयुतो भद्रे पालिताश्च व्रतादयः ॥
तत्त्वश्रद्धानशुद्धात्मा स्थितश्चाहं चिरं तदा ।
किं तु सूक्ष्मपदार्थेषु विविक्तज्ञानवर्जितः ॥
ततस्तदनुभावेन जातः पुण्योदयोऽनघः ।
नीतस्तृतीयकल्पेऽहं सत्पुरे विबुधालये ॥
तथाभिमतशब्दादिभोगसम्मर्दसुन्दरे ।
धारयित्वा सुखेनोच्चैस्तत्र सागरसप्तकम् ॥
ततोऽपि मानवावासे ततश्च विबुधालये ।
इत्थं च कारितो भद्रे भूरिवारा गमागमम् ॥

किं बहुना ।

बान्धवत्रययुक्तेन द्वादशापि विलोकिताः ।
प्रत्येकं ते मया कल्पाः क्वचिन्मुक्तश्च बान्धवैः ॥

एवं च स्थिते ।

ततो द्वादशकल्पस्थो मानवावाससम्मुखम् ।
प्रस्थानं कारितो भद्रे भवितव्यतया तया ॥ इति

उद्दामनृत्तसंगीतं मधुवारणमन्दिरम् ॥

तथा।

विहितं च नरेश्वरतोषकरं वररासकलासविलासधरम्।
बहुवादनखादनगानपरं मदिरामदघूर्णितचारुनरम् ॥
विलयाजननर्तितवामनकं कृतकुब्जककञ्चुकिहासनकम्।
विहितार्थिमनोरथपूरणकं कृतलोकचमत्कृति वर्धनकम् ॥

ततः समुचिते काले महानन्दपुरःसरम्।
जनकेनैव मे नाम स्थापितं गुणधारणः ॥
पश्चाभिश्चारुधात्रीभिर्लालितोऽमरवद्दिवि।
ततोऽहं वृद्धिमायातः सुखसागरमध्यगः ॥

इतश्च।

सगोत्रो मत्पितुर्मित्रं जीवितादपि वल्लभः।
नरेन्द्रोऽस्ति विशालाचस्तस्य सूनुः कुलंधरः ॥
स सप्रमोदे तत्रैव तातस्नेहेन संस्थितः।
ततो ममापि संपन्नः स वयस्यः कुलंधरः ॥
स च स्वस्थाशयो धन्यः सुरूपः सुभगः कृती।
समस्तगुणसंपन्नः सत्य एव कुलंधरः ॥
ततः संवर्धमानोऽहं तेन सार्धं सुमेधसा।
संजातोऽर्पितसद्भावः स्नेहनिर्भरमानसः ॥

ततश्च।

समं कृतकलाभ्यासौ क्रीडारम्भपरायणौ।
संप्राप्तौ चारुतारुण्यमावां मदनमन्दिरम् ॥

इतश्च नन्दनाकारं पुरदूरे मनोरमम् ।
आह्लादमन्दिरं नाम तत्रास्ति वरकाननम् ॥
तच्च चित्तचमत्कारि लोचनाह्लाददायकम् ।
अत्यन्तमावयोर्जातं सेवितं च दिने दिने ॥
अन्यदा गतयोस्तत्र दूरवर्ति परिस्फुटम् ।
योषितोर्द्वितयं किंचिद्दृष्टिगोचरमागतम् ॥
तत्रैका रूपलावण्यविलासैः कामगेहिनीम् ।
हसतीव विशालाक्षी द्वितीया न तु तादृशी ॥
अथ सा सुन्दरी दूराच्चक्षुर्गोचरचारिणम् ।
मां भ्रूलताधनुर्मुक्तैर्दृष्टिबाणैरताडयत् ॥

तथा ।

चूतशाखां समालम्ब्य लीलयोल्लासितस्तनी ।
अजिहीर्षद्विलासेन चार्वङ्गी मामकं मनः ॥

तथा ।

चकितं विस्मितं स्निग्धं साकूतमतिलज्जितम् ।
यद्विलिङ्गैः क्षणाच्चित्तं तत्स्वरूपं मयेक्षितम् ॥
ततस्तां तादृशीं वीक्ष्य मनोनयननन्दनीम् ।
निर्मिथ्यार्पितसद्भावां रञ्जितं मम मानसम् ॥

ततो मया चिन्तितं ।

किमियं सा रतिः साक्षात्किं पुरंदरकामिनी ।
किं वा लक्ष्मीरमुत्रैत्य वर्तते तनुधारिणी ॥
एवं च विस्मयक्षीबपदस्मेरैरितः ।

यावद्विकारलेशेन युक्तो जातः शुभानने ।
तावन्निरीक्षितस्तेन साकूतं ज्ञातचेतसा ।
वयस्येन मयाप्युच्चैराकारवरणं कृतम् ॥
चिन्तितं च मया हन्त लज्जाकारि विवेकिनाम् ।
इदं सकामया दृष्ट्या यत्परस्त्रीनिरीक्षणम् ॥
तदस्यां दृष्टिपातं मे दृष्ट्वा निर्मलचेतसा ।
अहो कुलंधरेणात्र न जाने किं विचिन्तितम् ॥
ततो लज्जाभरेणाहं मुखं तस्य पुनः पुनः ।
अपश्यतः परीक्षार्थं तदात्वयं निभालये ॥
अथ विज्ञातमद्भावः कलाकौशलकोविदः ।
निगूढं काकलीं कृत्वा मामाह स कुलंधरः ॥
कुमार किं स्थितेनात्र गम्यतामधुना गृहे ।
क्रीडितं सुहतीं वेलामपराह्णो हि वर्तते ॥
मयोक्तं रोचते यत्ते तदेव क्रियतामिति ।
ततो गृहे गतावावां कृतं च दिवसोचितम् ॥
अथ रात्रौ विविक्तायां शय्यायां मम तिष्ठतः ।
सा चेतसि कुरङ्गाक्षी झटित्कृत्य पुनरागता ॥
नाभविष्यच्च नेदिष्ठो यदि पुण्योदयोऽनघः ।
तथा मे वर्तमानस्य तदा भद्रे सहायकः ॥

ततः ॥

सा शल्यभूता मे चित्ते विशन्ती मुहुर्मुहुः ।
अकरिष्यदवस्थां यां सारव्यातुं नैव पार्यते ॥

केवलं निकटस्थायी यतः पुण्योदयोऽनघः ।
ममाभूत्तेन सा जाता नात्यर्थं बत बाधिका ॥
अनघः स करोत्येव यतः पुण्योदयो नृणाम् ।
सांसारिकपदार्थेषु निराबन्धमिदं मनः ॥
तथापि तामनुस्मृत्य मनाक् चिन्तामहं गतः ।
यथा कस्य पुनः सा स्यान्नीलनीरजलोचना ॥
चिन्तयित्वा गतो निद्रां विभाता च विभावरी ।
प्रभाते च समायातो मत्समीपं कुलंधरः ॥
ईषद्दर्शनलोभेन तस्याः सोऽभिहितो मया ।
वयस्य किं व्रजावोऽद्य पुनराह्लादमन्दिरे ॥
ततः कुलंधरेणोक्तं स्मितबन्धुरया गिरा ।
किमिदं गम्यते किं ते विस्मृता तत्र कुञ्चिका ॥
अये ज्ञातो ममानेन भाव इत्यवधार्य च ।
मया सोऽभिहितो मित्र परिहासो विमुच्यताम् ॥
गम्यतां पुनरुद्याने का कस्येति च वीक्ष्यताम् ।
उचिता कन्यका चेति नेति वा सा परीक्ष्यताम् ॥

अन्यच्च ।

परभार्यां यदीच्छेऽहं विकल्पमिति मा कृथाः ।
कन्यका चेन्न मुञ्चामि तामिन्द्रस्यापि धावतः ॥
ततः कुलंधरः प्राह मित्र मोत्तालतां गमः ।
गच्छावः क्रियते सर्वं यद्वयस्याय रोचते ॥
ततो गतौ पुनस्तत्र कानने तन्निरूपितम् ।

स्थानं यत्र पुरा दृष्टं योषितोर्द्वितयं परम्॥
अथादृष्ट्वा पुनस्तत्र तां कुरङ्गमवीक्षणाम्।
अहं तल्लिप्सया किंचिच्चित्तोद्वेगेन पीडितः॥

ततश्च।

वने पर्यट्य तं नूनं वीक्षमाणो मुहुर्मुहुः।
कुलंधरयुतो यावन्निषण्णस्तस्य भूतले॥
तावत्तूर्णपदन्यासैः पत्रमर्मरनिस्वनम्।
आकर्ण्य कस्यचित्पृष्ठे वलिता मम कन्धरा॥
अथैका मध्यमावस्था दृष्टा नारी सुविग्रहा।
द्वितीया सा समायाता यासीत्तस्या द्वितीयिका॥

ततः सकुलंधरेण मया कृतमभ्युत्थानं नामितमुत्तमाङ्गं। ततः सविशेषं विलोकितोऽहं तया प्रौढनार्या कृतमानन्दोदकबिन्दुपरिप्लुतनयनयुगलं। अभिहितं च। वत्स चिरं जीव मदीयजीवितेनापि। कुलंधरोऽप्युक्तः। पुत्र दीर्घायुर्भव त्वं। अस्ति भवद्भ्यां सह किंचिदक्तव्यं। अतो राजपुत्रमुपवेशयितुमर्हति वत्सः। कुलंधरेणोक्तं। यदादिशत्यम्बा। ततः प्रमृष्टमनेन भूतलं। उपविष्टानि वयं। ततो मामुद्दिश्य तयाभिहितं। वत्साकर्णय।

अस्ति विद्याधरालयो वैताढ्यो नाम महागिरिः। तत्र गन्धसमृद्धं नाम नगरं। तदधिपतिर्विद्याधरचक्रवर्ती कनकोदरो नाम राजा। तस्याहं कामलता नाम महादेवी। न चाभूत्तस्यापत्यं। गतो भूरिकालः। विषण्णोऽसौ निरपत्यतयाहं च। ततोऽपत्यार्थं प्रयुक्तानि भेषजानि विहिता ग्रहशान्तयः दत्तान्युपयाचितशतानि

पृष्टा नैमित्तिकाः उपचरिता मन्त्रवादिनः विन्यासितानि तन्त्राणि पीतानि मूलजालानि कृतानि कौतुकानि निःसारिता अवश्रुतयः शोधितानि जातकानि अवतारिताः प्रश्नाः प्रार्थिताः प्रशस्तस्वप्नाः अभ्यर्थिता योगिन्यः कृतं सर्वं यदुक्तं किंचित्केनापीति। ततो मध्यमे वयसि प्रादुर्भूतो मे गर्भः। प्रहृष्टो राजा। क्रमेण च प्रसूताहं। जाता देहप्रभया दिक्चक्रवालमुद्भासयन्ती दारिका। निवेदिता राज्ञे। परितुष्टोऽसौ। कारितं महावर्धनकं। प्रतिष्टितं प्रशस्तदिने नाम मदनमञ्जरीति। वर्धिता सा सुखसन्दोहेन। संजातेयमत्यन्तमभीष्टा जनकप्रियपदातिनरसेनवञ्जरिकादुहिता तस्याः प्रियसखी लवलिका। ग्राहिता सार्धमनया सा सकलाः कलाः। प्राप्ता यौवनं। ततः कलासौष्ठवेन रूपातिशयेन च न ममोचितः पुरुषोऽस्तीति बुद्ध्या संजाता पुरुषद्वेषिणी सा वत्सा मदनमञ्जरी। तच्च लवलिकावचनेन विज्ञाय तदाकूतं विषण्णाहं। निवेदितं महाराजाय। संजातोऽसौ सचिन्तः कथमियं करिष्यत इति। ततः समुत्पन्नास्य बुद्धिः। कारितोऽनेन स्वयंवरामण्डपः। समाहूताः सर्वे विद्याधरनरेन्द्राः। समागता वेगेन। कृतास्तत्प्रतिपत्तयः। विरचिता मञ्चाः। स्थिताः सर्वे यथास्थानं। उपविष्टः स्वयंवरामण्डपमध्ये सपरिकरो राजा। प्रविष्टाहं विरचितवरनेपथ्यालङ्काराङ्गरागमाल्यादिविच्छित्तिरचनां गृहीत्वा वत्सां मदनमञ्जरीं सह लवलिकया। तां चापहसितामरसुन्दरीलावण्यां कन्यामुपलभ्य प्रबलचित्तक्षोभैरसमुन्नममाना अपि तस्यां विनिविष्टदृष्टिचेष्टाः स्थिताश्चित्रन्यस्ता इव निस्पन्दाः सर्वे ऽम्बरचराः।

वर्णिता मया नामतो गोत्रतो विभवतो निवासतो रूपतो गुण-तश्चिह्नतश्च प्रत्येकमेते । तद्यथा । वत्से मदनमञ्जरि ।

एषोऽमितप्रभो नाम विद्युद्दत्तस्य नन्दनः ।
अतुलर्द्धिश्च वास्तव्यः पुरे गगनवल्लभे ॥
सुराकारधरोऽशेषकलाकौशलकोविदः ।
केतौ चारुमयूरेण लसतालं विराजते ॥

तथा ।

एष भानुप्रभो नाम नागकेशरिनन्दनः ।
महर्द्धिको महावीर्यो गान्धर्वपुरनायकः ॥
कमनीयाकृतिर्वत्से भूरिविद्याविशारदः ।
आकरो गुणरत्नानां प्रसिद्धो गरुडध्वजः ॥

तथा ।

अयमपि च रतिविलासो रतिमित्रसुतो महर्द्धिसंपन्नः ।
तदधिपतिरेष निवसति रथनूपुरचक्रवालपुरे ॥
कनकावदातवपुरेष निखिलविज्ञानगुणगणोपेतः ।
ननु पश्य मदनमञ्जरि वरवानरकेतुयष्टियुतः ॥

तदेवं यावदेकैकं वर्णयामि नरेश्वरम् ।
तावद्विषादमापन्ना वत्सा मदनमञ्जरी ॥

तथाहि ।

दृष्टा सा तदा मया दुर्भगनारीव सपत्नीगुणेषु विपन्नतसुभट इव शत्रुवीर्येषु समत्सरवादीव प्रतिवादिसौष्ठवेषु सेर्ष्यवैद्य इव प्रतिवैद्यकौशलेषु सोत्सेकविज्ञानिक इव प्रतिविज्ञानिकनैपुणेषु

केनचित्सादरमुपवर्ण्यमानेषु तेषु विद्याधरनरेश्वरेषु मया तथा श्लाघ्य-मानेषु दृष्टी अपातयन्ती संजाता गाढं विद्राणवदना वत्सा मदन-मञ्जरी। ततो हा किमेतदिति विचिन्त्य मयाभिहिता सा। यथा वत्से मदनमञ्जरि किमभिरुचितः कश्चिदेतेषां मध्ये वत्साये विद्याधरनरेन्द्रः। तयोक्तं। अम्ब तूर्णमपक्रमामो वयमितः स्थानात्। अलमेतेषां दर्शनेन। शिरो दुष्यति ममानेन युष्मदुपवर्णितालीक-तद्गुणश्रवणेन। तदाकर्ण्य विषण्णाहं। निवेदितं राज्ञे। गतोऽसौ चिन्तां। अभिहितमनेन। नीयतां भवने वत्सा मा भूच्चित्तदुःखा-सिकयास्याः शरीरापाटवमिति। ततस्तां गृहीत्वा निर्गताहं स्वयंवरा-मण्डपात्। प्राप्ता स्वभवनं। विषण्णेयं लवलिका। अभिहितमनया। यथाम्ब कः पुनर्भर्तृदारिकायाः परिणयनोपायो भविष्यति। मयोक्तं। वत्से लवलिके वयमपि न जानीमः। अतिदुष्कररोचिकेयं तव प्रियसखी। प्रष्टव्येयमेव भवत्या यदत्र करणीयं। समाप्तोऽस्माक-मिदानीं मन्दभाग्यानां पर्यालोचगोचर इति वदन्ती स्थूलमुक्ता-फलकलापकल्पैर्नयनसलिलबिन्दुसन्दोहै रोदितुं प्रवृत्ताहं। लव-लिकयोक्तं। स्वामिनि मुञ्च विषादं। प्रश्नयिष्याम्यहं भर्तृदारिकां। न खल्वेषा विनयसर्वस्वं स्वजननीजनकयोः मनापकारिणी भवि-ष्यति। कथयिष्यति यदत्र करणीयं। ततश्चैवं स्वस्थीकृताहमनया लवलिकया॥

इतश्च ते विद्याधराः स्वयंवरमण्डपादत्वरामेव निर्गच्छन्ती-मवलोक्य तां वत्सां मदनमञ्जरीं हृतसर्वस्वा इव नष्टरत्ननिधाना इव मुद्गरताडिता इव विगलितविद्या इव सर्वथा भ्रष्टच्छाया

विलक्षीभूताः सकोपाः सन्तः कनकोदरनरेन्द्रमसंभाष्य निर्गताः स्वयंवरमण्डपाद्गता गृहैलैकां दिशं। ततो राजा प्राप्तः शोकातिरेकं। लङ्घितं वर्षमिव तद्दिनं। समागता रजनी। न दत्तं च प्रादोषिकमास्थानं। सुप्तके वल्लनया, गमितप्राया चिन्तया विनिद्रेणैव राज्ञा विभावरी। ततोऽतिभरेण लब्धोऽनेन निद्रालवः। जातं तत्र स्वप्नदर्शनं। दृष्टानि जायतेव चत्वारि मानुषाणि द्वौ पुरुषौ द्वे ललने। तैरभिहितं। महाराज कनकोदर किं सुप्तस्त्वं उत जागर्षि। नृपतिराह जागर्मि। तैरुक्तं। यद्येवं ततो मुञ्च विषादं। निरूपितोऽस्माभिः पूर्वमेव वरो मदनमञ्जर्याः स एव भविष्यति। अलं भवतामन्यवरान्वेषणेन। अस्माभिरेव च द्रव्याः संपादिताः खल्वस्यास्ते विद्याधरनरेन्द्राः। यतो न प्रयच्छामो वयमेनामन्यस्मै वरायेति ब्रुवाणानि तानि गतान्यदर्शनं॥

अत्रान्तरे संजातः प्राभातिकतूर्यनिर्घोषः। प्रबुद्धो राजा। स्मृतः स्वप्नार्थः प्रहृष्टचेतसा। पठितं कालनिवेदकेन।

उद्गच्छन्नेष भो लोका भास्करः कथयत्यलम्।
मा शङ्कं चित्तसन्तापं मा हर्षं मा च विक्लवम्॥
यथैवानादिसिद्धोऽयमस्माकं भो दिने दिने।
उदयादिक्रमः सर्वस्तथा वोऽपि भवे भवे॥

एतच्चाकर्ण्य चिन्तितं नरपतिना। अये युक्तमुक्तमनेन। समर्थितः स्वप्नार्थः। तथाहि। यथा देवरूपैः पूर्वनिरूपित एवास्माभिर्मदनमञ्जरीवर इत्युक्तं तथानेनापि पठता भास्करस्य प्रतिदिनमुदयप्रतापास्तमयादर्शनपुनरुदयादिवद्देहिनां जन्मनि जन्मनि, सुख-

दुःखलाभादिकं सर्वं चिरनिरूपितमेवोपनमते तदत्र तत्र विषादादिनेत्यावेदितमिति। अतः सुतन्वितमेवेदं सर्वमास्ते। किं नश्चिन्तयेत्याकलय्य निराकुलीभूतो राजा॥

इतश्च किमधुना कर्तव्यमिति पृष्टा लवलिकया मदनमञ्जरी। तयोक्तं। यदि तातोऽम्बा च मामुत्कलयति ततोऽहं स्वयमेव पर्यट्य वसुन्धरामात्माभिरुचितं वरं वृणोमीति। ततः कथितं मे लवलिकया तद्वचनं। निवेदितं मया राज्ञे। चिन्तितमनेन। सुन्दरमेवेदं मन्त्रितं वत्सया। अयमेव तस्य देवनिर्दिष्टस्य वरस्य लाभोपाय इति विचिन्त्यानुज्ञाता वत्सा मदनमञ्जरी। ततो गृहीत्वेमामात्मसहचरीं लवलिकां निर्गता सा वरार्थं सकलभूतलावलोकनाय। गतानि कतिचिद्दिनानि। स्थितौ राजाहं च वत्सास्नेहेन सोन्मादकौ दिशो निभालयन्तौ। अन्यदा समागतेयं सविषादा लवलिका। दृष्ट्वा चेमां द्राक्कृत्य पतितमावयोर्हृदयं हा किमितीयमेकाकिनी सविषादा चोपलभ्यत इति भावनया। कृतोऽनया प्रणामः। मयोक्तं। अपि भद्रे लवलिके कुशलं वत्सायाः। अनयोक्तं। अम्ब कुशलं। मयोक्तं। क्व पुनरिदानीं वर्तते वत्सा। अनयोक्तं। आकर्णयत्वम्बा। अस्ति तावदितो निर्गत्य विलोकितमावाभ्यामनेकग्रामनगरादिविभूषितं विविधवृत्तान्तभूरिभूमण्डलं। प्राप्ते सप्रमोदपुरं। दृष्टं ततो बहिराह्लादमन्दिरमुद्यानं। संजातमावयोस्तद्विलोकनकुतूहलं। स्थिते तस्योपरिष्टात्। दृष्टौ सुरवरकुमाराकारधारकौ तत्र द्वौ राजपुरुषौ। तयोश्चैकमवलोकयन्ती प्राप्तात्यन्तमशरीरशरप्रहारगोचरं प्रियसखी। ततस्तद्वेदना-

भरनिःसहेवावतीर्णा मया सार्धं भूतले। स्थिता तयोर्दृष्टिगोचरे मनागदूरवर्तिनि चूतवने तमेव राजकुमारमनिमिषिताची निरीचमाणा। ततः पातिता तेनापि तदभिमुखं दृष्टिः।

ततः साम्प्रतमिक्तेव चित्तेव सुखसागरे।
तस्मिन्नवसरे दृष्टा मया यान्ती रसान्तरम्॥
प्रावृट्काले यथाकर्ण्य मेघशब्दं मयूरिका।
विजृम्भते तथा बाला तं दृष्ट्वास्य विजृम्भिता॥
विलासबन्धुरं वक्त्रं सरसं च शरीरकम्।
कचित्कदम्बपुष्पाभं धारयन्ती मयेचिता॥
नृत्यतीव रसाचेपाज्ज्वलतीव मुहुर्मुहुः।
हसतीव विशालाची दृष्टिं ददति वल्लभे॥
ततस्तां तादृशीं वीच्य तत्र निचिप्तमानसाम्।
कर्तुं प्रवृत्ता सङ्कल्पमहं हर्षमुपागता॥

यदुत।

अहो विदग्धा निर्मिथ्यमहो दुष्कररोचिका।
तथापि तोषितानेन सुयूना भर्तृदारिका॥
अहो अस्य सुरूपत्वमहो लावण्यपूर्णता।
अहो युक्तोऽनयोर्योगो रतिमन्मथयोरिव॥
अहो घटितमेवेदं मिथुनं ननु वेधसा।
सद्भावमीलनादेव संपन्नं नः समीहितम्॥
अथ चणात्स केनापि कारणेन ससम्भ्रमः।
सार्धं तेन वयस्येन ततः स्थानाद्गतो युवा॥

गते च तत्र सा बाला शून्या तरलतारिका ।

संजाता विह्वलात्यन्तं यथा नष्टनिधानिका ॥

ततो मयोक्तं । भर्तृदारिके यद्यभिरुचितस्तुभ्यमेष तरुणस्ततो गम्यतां तातम्बासमीपे । निश्चितमेषोऽस्यैव मम्मोदपुराधिपतेर्मधुवारणराजस्य सूनुर्भविष्यति । कस्यान्यस्येदृशो रूपातिशयः । ततो दाप्यतामस्मै तातेनात्मा । किमधुना विलम्बितेनेति । तयोक्तं । सखि लवलिके रुचितोऽयं मे जनः । केवलं साशङ्कं मम हृदयं । न रुचिता प्रायेणाहमस्मै । कथमन्यथा तूर्णमपक्रमणं । मयोक्तं । स्वामिनि मा मैवं वोचः ।

तथाहि ।

> किं न ते प्रहिता दृष्टिः किं न जातः सतोषकः ।
>
> स राजपुत्रस्त्वां दृष्ट्वा येनेत्थमभिधीयते ॥
>
> अत्यर्थं रुचितासि त्वं शङ्कां मुञ्च वरानने ।
>
> मधौ मधुकरायेव सरसा चूतमञ्जरी ॥
>
> वैदग्ध्यादेव तेनेदं स्वत्रापक्रमणं कृतम् ।
>
> ततोऽनुष्ठीयतामेतत्स्वामिन्या मम भाषितम् ॥

ततः स्वस्थीभूता किंचिद्राजदुहिता । तयाप्युक्तमथ । सखि लवलिके नाहं गन्तुं पारयामि । अस्वस्थं मे शरीरं । न च शोभते मयेदमुद्यानं । ततो गच्छतु तूर्णं भवती संपादयितुं तातम्बयोर्वार्तामिति । ततो मयस्यितामिवर्तकं तस्या निरंतं स्नापयित्वा तां शुभतरुगहनमध्ये रचयित्वा शिशिरपल्लवशयनीयं कारयित्वा स चलितुमितः स्थानात्प विधेयमन्यदपि किंचिदसमञ्जसमित्यथार्थं

शपथशतानि समागताहं चणान्निर्धूतासिश्यामलं गगनमुत्पतन्ती वेगेन। इत्येतदाकर्ण्य देवोऽम्बा च प्रमाणं। ततो राज्ञोक्तं। देवि तावत् त्वं त्वरया गच्छ तत्समीपं। संधीरय वत्सां मदनमञ्जरीं। अहं तु सामग्रीं विधायागमिष्यामि। यतः साशङ्कं मे मनः सकोपा निर्गतास्ते विद्याधराः प्रयुक्तश्च तद्वृत्तान्तोपलम्भाय मया चटुलः ततः कृतसामग्रीकस्यैव मे तत्र गन्तुं युक्तं। नेतव्यं च तत्र गच्छद्भिः किंचित्प्राभृतं। अतस्तद्गृह्णतो भविष्यति मे कालविलम्बः। तत्तूर्णं गच्छतु देवी। मयोक्तं। यदाज्ञापयत्यार्यपुत्रः। ततः पुरस्कृत्येमां लवलिकां गृहीत्वा चात्मवल्लभां दासदारिकां धवलिकां समागताहं वेगेन। दृष्टा तत्रैव शिशिरपल्लवशयनीये निषण्णा परमयोगिनीव निरालम्बनं किंचिद्ध्यायन्ती वत्सा मदनमञ्जरी। तया तु न लक्षितमस्मदागमनं। उपविष्टा वयं निकटे। लवलिकयोक्तं। भर्तृदारिके समागतेयमम्बा। किमेवं तिष्ठसि। ततो लब्धा वत्सया चेतना मोटितमनया शरीरकं व्यापारिते लोचने विलोकिताहं। ततः ससम्भ्रममुत्थाय निपतिता सा मच्चरणयोः। मयोक्तं। वत्से मदीयजीवितेनापि चिरं जीव। तूर्णमाप्नुहि हृदयवल्लभं अविधवा भव सुभगा संपद्यस्वेति। ततश्चोत्थाप्य समालिङ्गिता समाघ्राता मूर्धदेशे स्थापिता निजोत्सङ्गे चुम्बिता वदनकमलेऽभिहिता च। वत्से मदनमञ्जरि धीरा भव मुञ्च विषादं सिद्धमेव पश्य समीहितं। अयमागत एव वर्तते ते जनकः। घटिकाः खल्वत्र प्रयोजनं जल्पन्तीति। ततः कुतो ममेयन्ति भागधेयानीति शनैर्वदन्ती स्थिताधोमुखी वत्सा।

अत्रान्तरे गतोऽस्तं दिनकरः समुल्लसितं तिमिरं विस्फुरितस्तारकानिकरः वियुक्ताश्चक्रवाकाः मुकुलितं कमलवनं निलीनाः शकुनयः प्रसारिताः कौशिकाः प्रहृष्टा भूतवेतालाः समुद्गतः शशधरः विलसिता चन्द्रिका। ततश्चित्तप्रमोदकारिणीभिः कथाभिर्विनोदयन्तीभिस्तां वत्सां मदनमञ्जरीमतिवाहितास्माभिः कथंचिद्रजनी। समुद्गतो दिनकरः। मयोक्तं। हले लवलिके *स्थिता गगनमार्गे निरूपय निजस्वामिवर्तनीं किमसौ चिरयति।* ततो यदाज्ञापयति स्वामिनीति वदन्ती स्थितेयं नभस्तले लवलिका। स्थित्वा च क्षणमात्रं समवतीर्णा सहर्षा। मयोक्तं। हले किं सहर्षासि किं समागतस्तेः स्वामी। अनयोक्तं। अम्ब नाद्यापि समागतः स्वामी। किं तु समागतौ तौ राजकुमारौ। निरीक्षितं च ताभ्यां भर्तृदारिकादर्शनार्थं समस्तमुद्यानं। केवलमतिगहनतयास्य प्रदेशस्य न दृष्टा भर्तृदारिका। ततोऽसौ भर्तृदारिकाहृदयदयितः सविषादः सन्नुक्तस्तेन द्वितीयेन। यथा कुमार गुणधारण स्तोकितां तावत्तदैव चूतवने तस्यैव च चूतस्याधो यत्र दृष्टासीद्भवता सा चटुलपवनचलितकुवलयदलल्लोललोचना हृदयतस्करी। किमन्यत्र पर्यटितेन। कदाचिद्दैवयोगात्पुनस्तत्रैवोपलभ्यत इति। तेनोक्तं। एवं भवतु। ततो गतौ तौ तदभिमुखं। इदमम्ब मे हर्षकारणं। वत्सयोक्तं। भवतु मातः किमेवं मां प्रतारयसि। ततोऽनया तत्प्रत्यायनार्थं शतानि शपथशतानि। तथापि न प्रत्यायिता वत्सा मदनमञ्जरी। मयोक्तं। हंहो लवलिके किमनेन बहुना। दर्शय तावन्मे कुमारं येन तं स्वयमेवेहानीय वत्सामाह्लादयामि।

ऽनयोक्तं। एषा सञ्जास्मि प्रवर्ततामम्बा। ततो विमुच्य वत्सासमीपे तां धवलिकां प्रवृत्ताहं। ततश्च नीताहमेवमनया लवलिकया भवतः समीपं। तदेषोऽत्र कुमार परमार्थः।

वत्सां कण्ठगतप्राणां तां मे दुष्कररोचिकाम्।
उत्थायानुग्रहं कृत्वा कुमारो द्रष्टुमर्हति॥

ततो विलोकितं मया कुलंधरवदनं। तेनोक्तं। कुमार गम्यतां कोऽत्र विरोधः। ततः कृतमस्माभिस्तत्र गमनं। दृष्टा यथानिर्दिष्टा मदनमञ्जरी। ततोऽहं निमग्न इव सुखामृतमये महाह्रदे अवतीर्ण इव रतिरसमये महासमुद्रे वर्तमान इव सर्वानन्दसन्दोहे परिपूर्ण इव सर्वमनोरथभरेण प्रीणिताशेषेन्द्रियग्राम इव सर्वोत्सवसमुदये संजातस्तद्दर्शने सतीति। तया सापि मामवलोक्य प्रायः स एवायमिति हृष्टा चिराद्दृष्ट इत्युत्कण्ठिता कुतस्त्यागमनमिति सवितर्का स्वप्नोऽयं भवेदिति सविषादा स्थिरः प्रत्यय इति जातनिर्णया विरहेऽपि जीवितेति सलज्जा कथं मामेष प्रतिपद्यत इति सोद्वेगा निरीक्षते मामयमिति सप्रमोदेति संपर्का संकीर्णरसनिर्भरहृदया। अत एव चालंकृता पुलकजालकेन विभूषिता स्वेदबिन्दुमौक्तिकनिकरेण बन्धुरा समुत्ताल्श्वसितपवनेन हृदयहारिणी सुललितलतेव कम्पमाना सर्वथा।

अनाख्येयं रसं कंचिदत्यन्तप्रीतिनिर्भरा।
मया सा स्निग्धलोलाक्षी भजन्ती प्रविलोकिता॥

ततोऽभिहिता कामलतया। वत्से किं जातस्तेऽधुना लवलिकावचने संप्रत्ययः। ततः स्मितेन रञ्जयन्ती मम हृदयमिव

सुधाधवलेनापि विमलकपोलौ स्थिता साधोमुखी। जातः सर्वेषां प्रमोदः। अत्रान्तरे

लसद्भूषणरत्नौघप्रभाजालैः समन्ततः।
प्रकाशितनभोभागैर्देवाकारानुकारिभिः॥
भूरिविद्याधरैः सार्धं शक्रवच्चारुलीलया।
रत्नैर्मला विमानौघमागतः कनकोदरः॥
सप्रमोदपुरं वीक्ष्य सोऽवतीर्णः सखेचरः।
आह्लादमन्दिरं प्राप्तो दृष्टोऽस्माभिः सविस्मयम्॥

ततः कृतमस्माभिरभ्युत्थानं। नामितमुत्तमाङ्गं। विहिता प्रतिपत्तिः। उपविष्टाः सर्वे यथास्थानं। विलोकितोऽहं स्निग्धदृष्ट्या सुचिरं कनकोदरेण। नूनं स एवायमिति निश्चित्य तुष्टचेतसा पृष्टा कामलता। कथितोऽनया वृत्तान्तः। कनकोदरेणोक्तं। देवि निर्वर्टितमेव वत्साया दुष्करोचिकालमीदृशपुरुषरत्ने यथानया कृतो मनोनिर्बन्धः। न खलु शची पुरंदरादन्यत्र स्वचित्तं निवेशयते। कामलतयोक्तं। एवमेतत्कास्यत्र सन्देहः॥ अत्रान्तरे समागतो वेगेन चटुलः। तेन च निवेदितं किमपि कनकोदराय कर्णाभ्यर्णे। ततोऽलमत्र कालविलम्बेनेति कामलतां प्रति वदता समालोच्य सह कुलंधरेण तत्रैव स्थाने संक्षेपतः कारितोऽहं पाणिग्रहणं मदनमञ्जर्याः। कनकोदरेण निर्वर्तितो विवाहानन्दः प्रकटितानि तानि वज्रवैडूर्येन्द्रनीलमहानीलकर्केतनपद्मरागमरकतचूडामणिपुष्पराग-चन्द्रकान्तरुचकमेचकादनर्घरत्नराशिपरिपूरितानि विमानानि। ततोऽभिहितः कुलंधरः कनकोदरेण। भद्र राजपुत्र कोशार्थमे-

तेषामिहानयनं। ततो यथास्माकं हर्षवृद्धये स्वीकृता मदनमञ्जरी वत्सा तथैतान्यपि स्वीकर्तुमर्हति राजपुत्रः। कुलंधरेणोक्तं। यूयमेव प्रमाणं। किमत्र राजपुत्रस्य। न खलु गुरवो यथेष्टं कारयन्तो राजपुत्राभ्यर्थनां कर्तुमर्हन्ति। ततः परितुष्टः कनकोदरः कृतकृत्योऽहमिदानीं। निश्चिन्तीभूता वत्सा मदनमञ्जरीति भावनया गता परमपरितोषं कामलता। हृष्टो लवलिकादिः परिजनः। तथाहि।

कन्या शोककरी जाता चिन्ताहृदर्धमानिका।
वितर्ककारिणी दाने दौर्गत्ये गाढदुःखदा॥
सानुरूपाय रूप्याय धार्मिकाय धनैर्युता।
किल निश्चिन्तताहेतुः सद्भर्त्रे प्रतिपादिता।
अतस्तां रत्नपूगाढ्यां दत्त्वा मदनमञ्जरीम्।
मन्यते स्म हृष्टः संपन्नः सबन्धुः कनकोदरः॥

अत्रान्तरे

सप्रमोदपुरस्याग्रे मेघजालमिवातुलम्।
विद्याधरबलं दूराद्दृश्यते स्म नभस्तले॥
तच्च चक्रासिह्णीरकुन्तनाराचभीषणम्।
शक्तिप्रासधनुर्दण्डगदाशूलभयानकम्॥
मेघुद्धेतिप्रभाजालकरालं दर्पनिर्भरम्।
असंख्यवल्गदुद्दामखेचराधिपसङ्कुलम्॥
सिंहनादमहोत्कृष्टिनिध्वानभृतदिक्पथम्।
संनद्धबद्धकवचयोधान्धभटदारुणम्॥

अथ मल्लमश्रीशौण्डीरस्पर्धमानं तदुच्चकैः।
चणादागतमभ्यर्णे दृष्टमस्माभिरुन्मुखैः ॥

ततः कनकोदरेणोक्तं।

भो भो विद्याधरास्तूर्णं मल्लीभवत सम्मुखाः।
सोऽयं चटुलवृत्तान्तः साम्प्रतं स्फुटतां गतः ॥

तथाहि।

सकोपा ये गताः पूर्वं मामसंभाष्य मण्डपात्।
स्थितास्ते मौलकेनैव मत्सराध्मातचेतसः ॥
त एते खेचराः सर्वे पर्यालोच्य परस्परम्।
समागतास्त्वरैर्माला दत्तां मदनमञ्जरीम् ॥
एतेषामिदमाकूतं किलायं गुणधारणः।
हीनो भूगोचरोऽस्मत्तो वयं विद्याधरोत्तमाः ॥
तदेते निपतन्त्यत्र यावदाह्लादमन्दिरे।
प्रेरयामः चणात्तावद्गरुडा इव वायसान् ॥
अपसारयत वेगेन भूमिगोचरस्त्वयकाः।
मत्तो यूयममीषां हि मिथ्यामानं खगोचरम् ॥
अथ तत्स्वामिनो वाक्यमाकर्ण्य रणशालिनः।
समुत्पतितुमारब्धास्ते भूमिष्ठा नभश्चराः ॥

अथान्तरे मया चिन्तितं।

अहो न सुन्दरं जातमिदमेतेन हेतुना।
यतो मत्कारणेऽमीषां प्रलयोऽत्र भविष्यति ॥
अथोत्पतितुकामेषु तेषु तत्सम्मुखं तदा।

नभःस्थिते परानीके यज्जातं तन्निबोध मे ॥
निर्व्यापारं गताटोपं निःशब्दं स्थिरलोचनम्
केनचिच्चेष्टितं नीतं स्तम्भिता तद्बलद्वयम् ॥
ततो निष्पन्दमन्दाक्षं तत्सैन्यद्वितयं तदा ।
भूम्याकाशस्थमन्योन्यं चित्रन्यस्तमिवेक्षते ॥
अथ तेषां नभःस्थानां गतोऽहं दृष्टिगोचरम् ।
समं मदनमञ्जर्या निविष्टो वरविष्टरे ॥
ततोऽस्मद्दर्शनात्तेषां सर्वेषां मनसि स्थितम् ।
अहो रूपमहो मूर्तिरहो कान्तिरहो गुणाः ॥
अहो धैर्यमहो स्थैर्यं नरस्यास्य महात्मनः ।
अहो मदनमञ्जर्याः पर्यालोचितकारिता ॥
यथायमीदृशो भर्ता गृहीतः स्वपरीक्षया ।
अमुनैव वयं नूनं स्तम्भिता निजतेजसा ॥
तथाहि ।
समं मदनमञ्जर्या दृश्यते सुस्फुटः स्वयम् ।
अयं सह वयस्येन राजपुत्रो न शेषकाः ॥
तद्दुष्टं कृतमस्माभिर्नरत्नं यदीदृशम् ।
जिघांसितं महापापैः प्राप्तमेतद्धि तत्फलम् ॥
तदेष स्वामिकोऽस्माकं वयमस्य पदातयः ।
एवं चिन्तयतां तेषां प्रशान्तो मत्सरानलः ॥
ततस्ते तत्क्षणादेव मेनचिन्मुत्कलीकृताः ।
आगत्य पादयोस्तूर्णं पतिता मे नभश्चराः ॥

अथाभिधातुमारब्धा ललाटे कृतकुड्मलाः।
धन्तव्यं दुष्कृतं नाथ भवतास्ते ह्यधुना वयम्॥
ततस्तच्चेष्टितं दृष्ट्वा संपन्नो गतमत्सरः।
जातश्च मुत्कलो भद्रे ससैन्यः कनकोदरः॥
ततो नभश्चराः सर्वे क्षमयन्तः परस्परम्।
आनन्दोदकपूर्णाक्षाः संजाता बान्धवाधिकाः॥
तं च वृत्तान्तमाकर्ण्य स राजा मधुवारणः।
जनको मे समायातस्तत्रैवाह्लादमन्दिरे॥

ततश्च।

मयाम्बरचरैः सर्वैः कृताभ्युत्थानमादरात्।
समं मदनमञ्जर्या नतं तातांह्रिपङ्कजम्॥
ततोऽस्मान्तःपुरैः सार्धं गोपलोकाश्च ते मया।
खेचरैश्च प्रणामादिविधिना बहुमानिता॥

तदनन्तरं च।

आनन्दपुलकोद्भेदसुन्दरं दधता वपुः।
हर्षनीरभृताक्षेण तातेनालिङ्गनं कृतम्॥
ततः कुलंधरेणासौ वृत्तान्तो निखिलस्तदा।
स्फुटो विनयनम्रेण यथावृत्तो निवेदितः॥
अथ ते खेचराः सर्वे तातस्याग्रे प्रभाषिताः।
देवोऽयं स्वामिकोऽस्माकं त्वत्पुत्रो जीवदायकः॥
अयं धन्यः कृतार्थोऽयं भूषितानेन मेदिनी।
अचिन्त्यवरवीर्योऽयं नास्ति लोकेऽप्यमूदृशः॥

ततोऽम्बरचरैरेवं स्तूयमानं विलोक्य माम्।
तातः प्रह्लादमापन्नो जननी च सुमालिनी॥

तथाहि।

अन्तःपुरं पुरं सैन्यं बालवृद्धैः समाकुलम्।
मद्भूतिं तादृशीं दृष्ट्वा संजातं हर्षनिर्भरम्॥
ततः सर्वे प्रमोदेन सप्रमोदे तदा पुरे।
प्रवेष्टुकामास्तोषेण जनाः किं किं न कुर्वते॥

तथाहि।

गगनचारिगणे वियति स्थिते मयि च तातयुते जयकुञ्जरे।
करिवरान्तरवर्तिकुलंधरे करिणिकानिहिते दयिताजने॥
विविधलासविलासपरायणे प्रमदनिर्भरगायनबन्धुरे।
वरविभूषणमाल्यमनोहरे विबुधवृन्दसमे निखिले जने॥
ननु परिस्फुटमेव तदा नरैः प्रमुदितास्यसौख्यभरोद्धुरैः।
अमरलोकसमानमिदं वनं पुरवरं च सुदेति विनिश्चितम्॥
पृथुनितम्बपयोधरचारुभिः प्रमदनृत्तपरैः प्रमदाजनैः।
इति विलासशतैरवलोचने प्रविशति स्म स सर्वजनः पुरे॥

ततो विद्याधरैः सार्धं सबन्धुः कनकोदरः॥
तातेनाह्लादितोऽत्यर्थं दानसन्मानपूजनैः॥

किं बहुना।

सर्वरत्नमयं किं वा किं वाम्टतविनिर्मितम्॥
किं वा सुरसमापूर्णं किं वा वाग्गोचरातिगम्॥
गाढाह्लादकरं चित्ते पूर्णसर्वमनोरथम्।

भद्रेऽग्रहीतसङ्केते लङ्घितं मम तद्दिनम् ॥

तथाहि ।

संप्राप्तं कामसर्वस्वं लब्धा मदनमञ्जरी ।
लाभाच्च रत्नराशीनां संपूर्णोऽयमनोरथः ॥

तथा ।

तातम्बाचित्ततोषेण बन्धुपौरसुखेन च ।
रिपूणां प्रतिघातेन जातश्चित्तोत्सवो महान् ॥
ततश्चाह्लादसन्दोहपरिपूरितमानसः ।
स्थित्वा प्रदोषे तातादिसहितोऽहं यथेच्छया ॥
ततः सकलसामग्रीसनाथे देवतद्दिवि ।
सार्धं मदनमञ्जर्या स्थितः संवासवद्दानि ॥
तत्रावगाहितो दिव्यः सुरतामृतसागरः ।
केवलं लौल्यसुभलाभामञ्जि नितरां मया ॥
लब्धनिद्रासुखोऽत्यन्तं प्रबुद्धः सह कान्तया ।
कृतं प्रभातकर्तव्यं तातम्बावन्दनादिकम् ॥
अथायातः प्रभातेऽसौ मत्समीपं कुलंधरः ।
स मां प्रत्याह दृष्टोऽद्य मया स्वप्नः स कीदृशः ।
मानुषाणि मया पञ्च भो दृष्टानि परिस्फुटम् ।
त्रयः पुमांसो द्वे नार्यौ तैरेदं तव भाषितम् ॥

यदुत ।

य एष सुधमन्दोषमागरो गुणधारणे ।
संजातोऽयं कृतोऽस्माभिः स सर्वो माच संभ्रमः ॥

तथान्यदपि यत्किंचिदस्य पूर्वं परत्र च।
संपद्येत तदस्माभिस्तन्वितं भो कुलंधर ॥
एवं तानि ब्रुवाणानि मानुषाणि ममाग्रतः।
गतान्यदर्शनं बुद्धस्ततोऽहं गुणधारण ॥
न जाने कानि तान्यत्र मानुषाणि विशेषतः।
तन्वयन्ति सदा यानि कार्याणि तव भावतः।
मयोक्तं कथ्यतामेष तातादिभ्यस्त्वयाधुना।
स्वप्नो विज्ञायते येन भावार्थोऽस्य परिस्फुटः॥
ततो निवेदितस्तेन विद्वत्सङ्गतपूरिते।
तातास्थाने निजस्वप्नो मदयसेन धीमता ॥
ततस्तातादिभिः सर्वैरेकवाक्यतया तदा।
निजबुद्ध्या विनिश्चित्य स्वप्नार्थोऽयं प्रभाषितः॥
अनुकूलानि वर्तन्ते देवरूपाणि कानिचित्।
यैरीदृशी कुमारस्य कृता कल्याणमालिका ॥
तैरेव प्रियमित्राय कुमारस्य निवेदितम्।
तोषात्स्वप्नान्तरे सर्वं यथास्माभिरिदं कृतम् ॥
एतच्चाकर्ण्य मे चित्ते पूर्वापरविरोधतः।
स्मृत्वा कामलतावाक्यं सन्देहः समजायत ॥
यतो मया चिन्तितं।
कनकोदरराजेन किं चत्वारि पुरा तथा।
किं वा कुलंधरेणाद्य पञ्च दृष्टानि तानि वै ॥
कानि वा देवरूपाणि ममैवं कार्यचिन्तनम्।

अनुकूलानि कुर्वन्ति किं वोरीकृत्य कारणम् ॥
सर्वथा सर्वमेवेदं गहनं प्रतिभासते ।
ममाद्यापि न जानेऽहं किमत्र बत कारणम् ॥

एवं च स्थिते ।

यद्यतीन्द्रियवेत्तारं कंचित्पश्यामि सन्मुनिम् ।
ततः पृष्ट्वात्मसन्देहमेनं कुर्यां विनिर्णयम् ॥
तदेवंविधसङ्कल्पात्सन्देहकलितोऽप्यहम् ।
तदा तातादिनिर्दिष्टं स्वप्नार्थं तं न दूषये ॥
अथ ते खेचराः सर्वे दिनानि कतिचित्तदा ।
कनकोदरसंयुक्ताः संस्थिता मम मन्दिरे ॥
अथाह्लादात्स्तचोदग्रैर्णितास्ते यथेच्छया ।
स्वस्थानमन्यदा प्राप्ता भृत्यभावं प्रपद्य मे ॥
ततो मदनमञ्जर्या सार्धं मे रतिसागरे ।
निमग्नस्यामरस्येव लीलया यान्ति वासराः ॥
वर्धते च तया सार्धमाह्लादोऽस्तदायकः ।
सद्भावमौक्तिकासारः प्रेमाम्भो मनोहरः ॥
तातचिन्तितकार्यस्य प्रणताखिलभूभुजः ।
न मे तदा विशालाचि चिन्तागन्धोऽपि विद्यते ॥

किं च ।

विद्याधरोपनीतैश्च माण्डभूपादिभिर्मम ।
संपूर्णसर्वकामत्वाञ्जाता दृप्तिसुखासिका ॥
तदेवं सौन्दर्यसौमात्मा प्रविष्टः सुखसागरे ।

स्थितोऽहं तत्र चार्वङ्गि सभार्यः सकुलंधरः ॥
अन्यदा मित्रयुक्तेन गतेनाह्लादमन्दिरे ।
सभार्येण मया दृष्टः कन्दनामा मुनीश्वरः ॥
ततो विनयनम्रोऽहं प्रणिपत्य यतीश्वरम् ।
तस्याग्रे भूतले शुद्धे निषण्णो धर्मकाम्यया ॥
अथ प्रह्लादजननी चेतसः कर्णपेशला ।
विहिता मे यतीन्द्रेण तेन सद्धर्मदेशना ॥
तं चाकर्णयता भद्रे विशुद्धेनान्तरात्मना ।
आविर्भूतौ मया दृष्टौ पुनस्तौ वरबान्धवौ ॥
ततश्च प्रत्यभिज्ञातौ यथायं स सदागमः ।
अयं चासौ महाभागः सम्यग्दर्शननामकः ॥
अथ प्रपन्नौ भावेन तौ मया वरलोचने ।
गुरुवाक्यप्रबुद्धेन भद्रे हिततया नरौ ॥

इतश्च ।

वेदनीयनरेन्द्रस्य पदातिः परिकीर्तितः ।
यः सातनामा राजेन्द्रः सत्पुरे विबुधालये ॥
सोऽत्यन्तं मयि रक्तात्मा मित्रभावविधित्सया ।
पूर्वमेव मया सार्धं मम्रमोदेऽप्युपागतः ॥
प्राक् केवलं तिरोभूतः सोऽकार्षीन्मे सुखासिकाम् ।
आविर्भूतस्तदा जातो यदा जातौ सुबान्धवौ ॥

ततश्च ।

या सत्कलत्रसौधभोगजन्या सुखासिका ।

तदानीं गुरुमूले मे सानन्दगुणतां गता ॥

अन्यच्च ।

तदा कुलंधरेणापि महत्तमसदागमौ ।
तथा मदनमञ्जर्या तौ प्रपन्नौ यथा मया ॥
ततोऽधिकतरं तुष्टस्तदाहं स च से मुनिः ।
विशेषतः करोत्येव भूयः सद्धर्मदेशनाम् ॥

अत्रान्तरे ।

चित्तवृत्तिमहाटव्यां लीनलीनाः प्रकम्पिताः ।
भयेन रोधकं हित्वा महामोहादयः स्थिताः ॥

ततश्च ।

चारित्रधर्मराजेन मन्त्री सद्बोधनामकः ।
इदमुक्तस्तदा भद्रे मनाक् संतुष्टचेतसा ॥

यदुत ।

सुन्दरोऽवसरो गन्तुं विद्यामादाय तेऽधुना ।
आर्य संसारिजीवस्य पार्श्वे गाढं फलप्रदः ॥

तथाहि ।

शुभ्रीभूताधुना किंचिच्चित्तवृत्तिमहाटवी ।
निवृत्तो रोधकोऽस्माकमीषद्दूरे च शत्रवः ॥
तं कर्मपरिणामाख्यं ततः पृष्ट्वा नरेश्वरम् ।
गच्छ त्वं शीघ्रमादाय विद्यामेनां सुकन्यकाम् ॥
कन्दमाधुनमीपस्थः साम्प्रतं स वरैर्मया ।
विज्ञातस्तच्च यावश्यं भवन्तं प्रतिपत्स्यते ॥

सद्बोधेनोदितं देव युक्तमेतन्न संशयः ।
किं तु कालविलम्बोऽत्र युक्तोऽद्यापि प्रयोजने ॥
स हि पुण्योदयस्तस्य स च शातो वयस्यकः ।
कियन्तमपि तत्कालमेतौ भोगफलप्रदौ ॥
अतोऽद्यापि बलादेतौ गृहे तं गुणधारणम् ।
शब्दादिसुखसंपूर्णे वात्सल्याद्धारयिष्यतः ॥

एवं च स्थिते ।

अध्यास्ते स गृहं यावदनुवर्तनया तयोः ।
शब्दादिविषयग्रामं सुखहेतुं च मन्यते ॥
तावन्न युज्यते देव मम गन्तुं तदन्तिके ।
नयनं न च विद्याया जाघटीति कथंचन ॥
केवलं प्रेष्यतामेष देवेन निजदारकः ।
तदन्तिकेऽधुना तूर्णं गृहिधर्मः सभार्यकः ॥
प्रस्तावोऽस्याधुना देव तत्समीपेऽतिसुन्दरः ।
गन्तुं सपरिवारस्य वर्तते कार्यसाधकः ॥
गतमात्रमिमं देव स भावेन प्रपत्स्यते ।
भविष्यतीष्टा तस्यास्य भार्या सद्गुणरक्तता ॥

किं च ।

यदा सदागमस्तावत्तस्य पार्श्वे गतः पुरा ।
तदायं द्रव्यतस्तेन भृरिवारा विलोकितः ॥
यदा तु तत्पार्श्वगतः सम्यग्दर्शननामकः ।
मदत्तमोऽतिवात्सल्याद्धीतस्तेनाप्ययं तदा

पल्योपमश्यवक्ते च लङ्घिते तेन भावतः ।
प्रपन्नो गृहिधर्मोऽयं पूर्वमासीत्ततः परम् ॥
यदा यदा पुनर्दृष्टौ मद्दत्तमसदागमौ ।
असंख्या भावतो वाराः प्रपन्नोऽयं तदा तदा ॥
अधुना केवलं देव यतोऽभ्यर्णं गतो मम ।
तेनैष हन्त तत्पार्श्वे विशेषेण मदीयते ॥
तत्तूर्णं यातु तत्पार्श्वे रञ्जयत्वेष मद्गुणैः ।
प्रस्तावो मादृशां तत्र ततो स्थाने भविष्यति ॥

अन्यच्च ।

महामोहादिमल्लानामस्मिन्नवृत्तेर्विशृङ्खलता ।
गृहिधर्मेऽपि तत्रस्थे भवेदेव विशेषतः ॥

तथा ।

स स्यादभिमुखोऽस्माकमचेपेण दिदृक्षया ।
अनेन गृहिधर्मेण पार्श्वस्थेन प्रचोदितः ॥
चेतःसुखासिका गुर्वी सन्तुष्टिः कर्मलाघवम् ।
भवभीतेरभावश्च गृहिधर्मेण ते गुणाः ॥
तस्मात्प्रस्थाप्यतामेष गृहिधर्मस्तदन्तिके ।
यास्यामोऽवसरं ज्ञात्वा पश्चात्तत्रैव वयं पुनः ॥
तदिदं मन्त्रिणो वाक्यं श्रुत्वा सप्रीतिनिर्मलम् ।
चारित्रधर्मराजेन प्रहितो निजदारकः ॥
स कर्मपरिणामस्य गत्वा मूलं तदाज्ञया ।
समागतो ममाभ्यर्णं तत्रैवाह्लादमन्दिरे ॥

अथ कन्दमुनेश्चार्वीं शृण्वतो धर्मदेशनाम् ।
आविर्भूतो ममायेऽसौ मुनिना च प्रकाशितः ॥
गुणरक्ततया युक्तस्तथा द्वादशमानुषैः ।
मयातः प्रतिपन्नोऽसौ बन्धुबुद्ध्या नरोत्तमः ॥
तथा कुलंधरेणापि कान्तया च सबान्धवः ।
प्रपन्नो गृहिधर्माख्यो जातात्यन्तं सुखासिका ॥
अथ कन्दमुनिः पृष्टः सन्देहं पूर्वचिन्तितम् ।
तं मया स्वप्नसंबद्धं सद्भावार्थबुभुत्सया ॥
ततः कन्दमुनिः प्राह स्वप्नार्थस्य विनिर्णयः ।
अस्यातीन्द्रियवेत्तारं विना नैवोपलभ्यते ॥
सन्ति मे केवलालोकभास्करा वरसूरयः ।
गुरवो निर्मला नाम दूरदेशविहारिणः ॥

एवं च ।

तत्पादमूलं यास्यामि वन्दनार्थमहं यदा ।
तदा तान्प्रश्नयिष्यामि भद्र तावकसंशयम् ॥

यतः ।

योऽयं स्वप्नदयाज्जातः सन्देहस्ते मनोगतः ॥
विविक्तं तस्य भावार्थं विशास्यन्ति महाधियः ॥

मयोक्तं ।

भदन्त यदि तेऽत्रैव गुरवस्ते कथंचन ।
आगच्छेयुस्ततस्तस्मात्सुन्दरादपि सुन्दरम् ॥
मुनिराह महाभाग गतोऽहं वचनेन ते ।

गुरून् विज्ञाप्य ते नूनं पूरयिष्ये मनोरथम् ॥
अथवा केवलालोकालोकिताखिलचेतसः ।
विज्ञाय भवतश्चित्तमागमिष्यन्ति ते स्वयम् ॥
केवलं गृहिधर्मेऽत्र सम्यग्दर्शनसंयुते ।
मद्दागमे च कर्तव्यो भवता तावदादरः ॥

ततश्च ।

इदं कन्दमुनेर्वाक्यमाकर्ण्य श्रुतिपेशलम् ।
महाप्रसाद इत्येवं ब्रुवाणोऽहं सभार्यकः ॥
समितश्च तदा भद्रे विनयानतमस्तकः ।
प्रणम्य तं महाभागं काननाद्भवने गतः ॥
ततः सोऽपि महाभागो मुनिर्मुनिवरैर्युतः ।
गतो निर्मलसूरीणां गुरूणां पादवन्दकः ॥
अथ कालक्रमाद्भद्रे स राजा मधुवारणः ।
तदा लोकान्तरीभूतः पिता मे लब्धधर्मकः ॥
ततो राज्येऽभिषिक्तोऽहं बन्धुमन्त्रिमहत्तमैः ।
महानन्दविमर्दैन हर्षनिर्भरमानसैः ॥
ततः परिणतं राज्यं रक्तं मे राजमण्डलम् ।
यत्रवः किङ्करीभूता वशीभूताश्च खेचराः ॥

किं बहुना ।

महतोऽपि ममाज्ञायां वर्तन्ते नतमस्तकाः ।
वर्धते कोशदण्डौ च जायन्ते सर्वसम्पदः ॥

किं च ।

तत्रास्ति यन्न दुःखाय वस्तु सांसारिकं जनाः ॥

एवं च स्थिते ।

अमूर्ताः सर्वभावज्ञास्त्रैलोक्योपरिवर्तिनः ।
क्षीणसङ्गा महात्मानः केवलं सुखमासते ॥
सर्वद्वन्द्वविनिर्मुक्ताः सर्वाबाधाविवर्जिताः ।
सर्वसंसिद्धसत्कार्याः सुखं तेषां किमुच्यताम् ॥

किं च ।

जन्माभावे जरामृत्योरभावो हेतुभावतः ।
तदभावे च निःशेषदुःखाभावः सदैव हि ॥
परमानन्दभावश्च तदभावे हि शाश्वतः ।
व्याबाधाभावसंसिद्धं सिद्धानां सुखमिष्यते ॥

अथवा ।

त्यक्तबाह्येतरग्रन्था निःस्पृहा भावचारके ।
संतुष्टा ध्यानयोगेन प्रशमामृतपायिनः ॥
निःसङ्गा निरहङ्कारा निर्मलीभूतचेतसः ।
सुखिनः केवलं लोके देहिनोऽपि सुसाधवः ॥
सुखमेव च वाञ्छन्ति सर्वे जगति जन्तवः ।
तच्च नास्त्येव संसारे विहायैकां सुसाधुताम् ॥
तदिदं भो महासत्त्वा विनिश्चित्य विधीयताम् ।
विमुच्यासारसंसारं भवद्भिः सा सुसाधुता ॥
ततो भद्रे तदा मह्यं प्रलघूभूतकर्मणः ।
इदं भगवतो वाक्यं चित्ते ऽत्यन्तं सुखायितम्

चिन्तितं च मया ।

करोमीदं यदादिष्टं भदन्तैः सुखकारणम् ।
ततः कृतं मया भद्रे प्रव्रज्याभिमुखं मनः ॥

अत्रान्तरे विरतवचसि भगवति वचनसुधासेकवर्षिणि निर्मलसूरिकेवलिनि कन्दमुनिना बद्धकरकमलमुकुलं विधाय ललाटपट्टेऽभिहितमनेन । भगवन्निह जगति कस्य दुःशकः कालविलम्बः कर्तुं । भगवतोक्तं । जिज्ञासोर्गुरुमूले सन्देहस्य । कन्दमुनिराह । यद्येवं ततो गुणधारणराजस्यदानीं संशयमपनेतुमर्हन्ति भगवन्तः । भगवतोक्तं । एवं क्रियते । मयोक्तं । महाप्रसादः । तथा कन्दमुनिं प्रत्यभिहितं । भदन्तानुगृहीतोऽहं भगवता भगवन्तं प्रश्नयिता सुतरामनेन वचनविन्यासेन । कन्दमुनिनोक्तं । महाराजानुग्रहार्हा एव यूयं । साम्प्रतं भगवद्वचनमाकर्ण्यतां । स्थितोऽहं प्रह्वतरो नतोत्तमाङ्गः । ततो भगवतोक्तं । महाराज गुणधारणायं ते सन्देहः । यथा यानि कनकोदरराजेन स्वप्ने दृष्टानि चत्वारि मानुषाणि यानि कुलंधरेण पञ्चोपलब्धानि कतमानि तानि कथं वा मदीयकार्यपरंपरानिर्वर्तकानि किमु वैकेन चत्वारि अपरेण पञ्च तानि तथा किंदेवरूपाणि तानि किं वार्थशून्यं स्वप्नमात्रं तद्द्वयमपीति न संशयः । मयोक्तं । भगवन्नेवमिदं यदादिष्टं भगवता । भगवानाह । महाराज यद्येवं ततो महतीयं कथा कथं निवेद्यतां कथं वा श्रूयते । मयोक्तं । तथापि ममानुग्रहेण कथयन्तु भगवन्तः । ततः कथिता भगवतासंव्यवहारनगरादारभ्य सर्वा सर्वसंविधानकोपेता संक्षेपेण मदीयवक्तव्यता । अभिहितं च ।

नाकुञ्चितं क्वचिच्चापं न कृता कोपदारुणा।
दृष्टिस्तथापि मे जातं राज्यं कण्टकवर्जितम् ॥
तथाप्येवंविधे ऽनल्पसुखसन्दोहकारणे।
विद्यमानेऽपि नो जातं मम लौल्याकुलं मनः ॥

किं तर्हि।

सदागमे सदोद्योगी सम्यग्दर्शनतत्परः।
पुण्योदयेन संयुक्तो गृहिधर्मे कृतादरः ॥
सातेनाह्लादितो नित्यं स्थितोऽहं सकुलंधरः।
समं मदनमञ्जर्या देववद्दिवि लीलया ॥
एवं च तिष्ठतस्तत्र मग्नस्यानन्दसागरे।
साम्राज्ये मम चार्वङ्गि भूरिकालोऽतिलङ्घितः ॥
अथान्यदा ममास्थाने प्रविश्य प्रियदारकः।
कल्याणो नाम मामेवं प्रणिपत्य व्यजिज्ञपत् ॥

यदुत।

आह्लादमन्दिरे देव देवदानवपूजिताः।
समागता महाभागा निर्मला नाम सूरय. ॥
तच्छ्रुत्वाहं तदा भद्रे कल्याणवचनं मुदा।
न मामि देहे नो गेहे न पुरे न जगत्त्रये ॥
ततोऽङ्गलग्नसंयुक्तं तस्मै संतुष्टचेतसा।
दीनाराणां मया लक्षं दापितं प्रियभाषिणे ॥
ततः सर्वादरेणाहं सवयस्यः सभार्यकः।
निर्गतो नगराद्द्रष्टुं सूरीणां पादवन्दकः ॥

अथामरकृते दिव्ये सत्कार्तस्वरभास्वरे ।
ते सूरयो मया दृष्टाः कमले स्थितमूर्तयः ॥
वेष्टिता मुनिवृन्देन देवदानवखेचरैः ।
तेभ्यो नतोत्तमाङ्गेन कुर्वाणा धर्मदेशनाम् ॥

ततश्च ।

हृद्यदानन्दरोमाञ्चभूषितः सह राजकैः ।
अहं भक्त्या विहायेदं नारेन्द्रं चिह्नपञ्चकम् ॥

तद्यथा ।

छत्रं खड्गं किरीटं च वाहनं च सचामरम् ।
ततः कृतोत्तरासङ्गः प्रविष्टः सूर्यवग्रहे ॥
ततो भगवतः सम्यग् द्वादशावर्त्तवन्दनम् ।
दत्त्वा यथाक्रमं शेषान्प्रणम्य मुनिपुङ्गवान् ॥
लब्धाशीर्वादतुष्टात्मा भूयो नत्वा मुनीश्वरम् ।
प्रीतः सपरिवारोऽहं निषण्णः शुद्धभूतले ॥
अथ कर्मविषोत्तारकारिणी भव्यदेहिनाम् ।
अमृतचारिवाक्येन गुरुणारम्भि देशना ॥

कथं ।

भो भव्याः शरणं धर्मो नास्त्यन्यस्ततभ्रमे ।
लसदुद्दामदुःखौघसङ्कुले भवचक्रके ॥
मरणाय भवे जन्म कायो रोगनिबन्धनम् ।
तारुण्यं जरसो हेतुर्वियोगाय समागमः ॥
निमित्तं विपदां लोके देहिनां सर्वसम्पदः ।

तदेवमस्ति ते महाराज त्वच्चित्तवृत्तौ विविधनगराकराद्याकुल-मन्तरङ्गमहाराज्यं। केवलमभिभूय तान् युष्मद्धितकरणशीलांश्चारित्र-धर्मराजादीन् बहिष्कृत्य च भवन्तं महामोहादिभिस्तदियन्तं कालमुद्दालितमासीत्। असावपि कर्मपरिणामो भवतः प्रति-कूलतया तदेव महामोहादिबलं पुष्णाति स्म। साम्प्रतं पुनरसौ भवतोऽनुकूलो वर्तते। तेनैव च भवन्तं प्रति प्रगुणीकृतात्मीय-महादेवी कालपरिणतिः प्रसादिता ते भार्या भवितव्यता प्रकटीकृतो निजमहत्तमस्तेऽङ्गभूतः स्वभावः प्रोत्साहितस्तव सहचरः पुण्योदयः। तथावधीरिताः किंचिन्महामोहादयः आश्वासिता-श्चारित्रधर्मराजादयः दर्शिता ते पूर्वमत्यन्तसुखमालिका। यतःप्रभृति पुनस्ते वल्लभीभूतः सदागमोऽभीष्टीभूतः सम्यग्दर्शनाख्यो महत्तमः तत आरभ्यानुकूलतरोऽसौ कर्मपरिणामो वर्तते। ततो जनिता सपरिवारेण तेन विबुधालये निवसतस्ते विशिष्टतरा सुखपद्धतिः। अधुना मधुवारणराजमन्दिरमवाप्तस्य ते सुखसन्दोह-सिद्धये सुतरां प्रोत्साहितोऽसौ तव वयस्यः पुण्योदयः। ततस्तेन संपादितेयं तव बहिरङ्गभार्या मदनमञ्जरी। तेनैव च महापुरुष-तया किलाहं कोऽत्र कार्यसम्पादनस्य नूनमेतान्येव सकलकार्याणि घटयन्तीति मन्यमानेन कामरूपितया दर्शितानि स्वप्ने कनको-दरराजस्य तान्येव कर्मपरिणामकालपरिणतिस्वभावभवितव्यता-लक्षणानि निरूपितोऽस्माभिरेव वरो मदनमञ्जर्याः ततोऽलं भवतामन्यवरान्वेषणेनेति ब्रुवाणान्येवं स्थलार्थेऽपि मानुषरूपतया। तेषु च विद्याधरेषु वैमुख्यमस्या मदनमञ्जर्यास्तेनैव तव वयस्येन

पुण्योदयेन जनितं। किं तु महानुभावतया तदपि कर्मपरिणामादिभिर्विहितमिति स्वप्ने तन्मुखेनैवानेन प्रकाशितं। ततोऽभिहितः कर्मपरिणामेन पुण्योदयः। यद्द्यार्य न सुन्दरमाचरितं भवता यदेवं कृत्वा स्वयमेव प्रयोजनं तथापि त्वयात्मा प्रच्छादितो वयं पुनरेवं तत्कर्तृतया प्रकाशितानि। पुण्योदयः प्राह। देव मा मैवमाज्ञापयत यूयं। आदिप्रकारी खल्वेष किङ्करजनो यूयमेवात्र परमार्थतः कर्तृणि। तान्येव च मया कनकोदरराजाय प्रकटितानि। ततः किमत्रानुचितं। कर्मपरिणामेनोक्तं। आर्य सत्यमेवमिदं। तथापि त्वमेवात्र परमो हेतुः यतो न सुखसाधनानि सुन्दरकार्याणि भवद्विरहे वयमपि कर्तुं पारयामः। ततः प्रकाशनीयः स्वल्पात्मापि भवता। नान्यथा मे चित्तनिर्वृतिरिति। पुण्योदयेनोक्तं। यदाज्ञापयति देवः। ततः कुलंधराय स्वप्ने प्रकाशितानि पुनरात्मपञ्चमानि तान्येव पुण्योदयेन ख्यापिता च सकलकार्यसाधकता। तदेवमेतानि महाराज मानुषाणि तथैव तेषां चतुर्णां पञ्चानां च दर्शने कारणमेतान्येव वा ते सम्बन्धीनि निःशेषप्रयोजनानि तन्वयन्ति। मा कार्षीः सन्देहमिति। मयोक्तं। भगवन्निदानीं योऽयं मदनमञ्जरीलाभादराज्यंपश्चो मम निरुपमः सुखामृतसागरावगाहः किमेषोऽपि तेनैव कर्मपरिणामादिभिरुत्साहितेन पुण्योदयेन जनितः। भगवानाह। बाढमपि च महाराज न केवलमेष एव जनितस्तेनानेन किं तर्हि पूर्वमप्यमुना पुण्योदयेन विहितानि भवतो भूयांसि सुन्दरप्रयोजनानि। तथाहि। नन्दिवर्धनावस्थायां जनितमनेन कनकमञ्जरीसम्बन्धः रिपुदारणकाले

विहितो नरसुन्दरीमीलको वामदेवदशायां घटिता सद्गुणनिर्मलेन निर्मिथ्यवत्सलेन विमलेन सह मैत्री धनशेखरावसरे संपादिता नानाविचित्रा रत्नराशयो घनवाहनभावे समुत्पादितो निर्व्याजविमुक्तकलङ्कस्य तवोपर्यकलङ्कस्य तादृशः स्नेहभावः। आविर्भावितं तत्तादृशं महाराज्यं। तथा विरचिताः सर्वस्थानेषु सुखपद्धतयः। केवलं न विज्ञातं वयस्यपुण्योदयस्य तदा भवता माहात्म्यं। भवतारोपितो हिंसावैश्वानरमृषावादशैलराजस्तेयबहुलिकामैथुनसागरपरिग्रहमहामोहादिषु निःशेषदोषपुञ्जेष्वपि गुणसन्दोहः। मयोक्तं। भदन्त यदि ममायं सुखपरंपराहेतुः पुण्योदयो वयस्यः प्रागप्यासीत् ततः किमिति मे तावन्ति दुःखकदम्बकानि संजातानि किमिति वानन्तकालमित्यमदर्वितर्दकं परिभ्रमणं मे संपन्नमिति। भगवानाह। महाराज यद्येवं ततः समूलमेतत्ते कथयिष्ये येन समस्तस्ते सन्देहो विदलतीति। मयोक्तं। भगवन्ननुग्रहो मे। भगवतोक्तं। महाराज कथितं तावत्तुभ्यमिदं। यथा। असंव्यवहारनगरे संसारिजीवाभिधानो वास्तव्यः कुटुम्बिकस्त्वमसि। तत्र चेदमनादिरूढमन्तरङ्गं चित्तवृत्तौ महाराज्यमिदं च चारित्रधर्मराजादिकं महामोहनरेन्द्रादिकं च तत्र सैन्यद्वयं परस्परविरुद्धमपि सकलकालमवस्थितमेवाभूत्। स तु कर्मपरिणामो राजा तावकीनं वीर्यमुपलक्षयन्नेव निजवर्गतया महामोहादिबललोऽपि भवतोऽत्र बलद्वये साधारणमात्मानं दर्शयति। ज्वलदितापकः खल्वेष स्वरूपेण यदा यदेव तयोर्बलवत्सैन्यमुपलभते तदा तदेवोपबृंहयति। तस्य च कर्मपरिणामस्य द्वौ सेनापती

एकः पापोदयो द्वितीयोऽयमेव पुण्योदय इति। स च पापोदयस्ते गाढं प्रतिकूलः स्वरूपेण। अत एव कर्मपरिणामस्य सम्बन्धि यत्तव वैरिभूतमेकान्तेनासुन्दरं सैन्यं तदेवायमधिकुरुते । पुण्योदयस्तु तवानुकूलः। अत एव कर्मपरिणामस्य सत्कं यत्ते बन्धुभूतं सुन्दर-मनीकं तदेवायमधिकुरुते । स च पापोदयस्तवानादिरूढोऽसंव्यव-हारनगरादारभ्याभिव्यक्तरूपः सखाभूदेव । ततः सुप्रसिद्धत्वान्न दर्शितस्ते क्वचिदप्यसौ विशेषतो भवितव्यतया । ततस्त्वयेदं महाराज गुणधारण समस्तं माहात्म्यं यत्ते संपन्नमनन्तकालमेवं परिभ्रमणं संभूता भूरिदुःखसन्ततयः परिकल्पितं हिंसादिषु हितत्वं स लक्षितोऽयं हितकरणशीलः पुण्योदयः । अन्यच्च । तेनैव पापोदयेन बहिष्कृतस्त्वं तस्माच्चित्तवृत्तिवर्तिनः स्वकीया-दन्तरङ्गमहाराज्यात् । तेनैव चाभिभूय प्रच्छादितं तव स्वाङ्गिक-मेकान्तहितं चारित्रधर्मराजादिकमन्तरङ्गबलं । तेनैव चानवरतं पारितोषिकमेकान्ताहितमपि बन्धुभूतं च दर्शितं महामोहादि-सैन्यं वष्टतया च प्रकटितस्ते पुरतो वत्सलमित्ररूपतयात्मा । तथायमपि पुण्योदयस्तदा । तेन पापोदयेनानुबद्धो यद्यपि ते सुखकारणमभूत् तथापि न कल्याणपरंपराहेतुतां प्रतिपन्न इति । तस्मान्न वराकस्य दोषः किं तर्हि तस्यैव दुरात्मनः सर्वोऽप्ययं दोष इति । मयोक्तं । भगवन्निदानीं किमित्यसौ पापोदयस्तूष्णीमास्ते । भगवतोक्तं । महाराज न स्वतन्त्रः खल्वसौ किं तर्हि सोऽप्यमीषां कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनामायत्तो वर्तते । ततोऽमीभिरेव साम्प्रतं भवतः सकाशाद्दूरीकृतोऽसौ दुरात्मा ।

तथाहि । यतः प्रभृति भवत्समीपममीभिरनुज्ञातः समागतः सदागमस्तत एवारभ्य निर्वर्तिता तस्यामीभिः प्रवलता । ततः ।

ईषद्दूरस्थितस्तेऽसौ न जातो दुःखकारणम् ।
पापोदयोऽवकाशस्तु लब्धः पुण्योदयेन च ॥
ततः सदागमे प्रीतिः संजाता तेऽन्तरान्तरा ।
संपन्नं च सुखं भूप तन्माहात्म्येन किंचन ॥
क्वचित्पापोदयो भूयस्तैरेव निकटीकृतः ।
ततस्त्वं दुःखितो जातः परित्यक्तः सदागमः ॥

एवं च ।

आलोच्यालोच्य यत्नात्यमेकवाक्यतया पुरा ।
अमीभिर्भूप निःशेषभवत्कार्यविचिन्तकैः ॥
अनन्तवाराः संसारे पुण्योदयसमन्वितः ।
पापोदयं तिरोधाय मीलितस्ते सदागमः ॥
यदा तु गृहिधर्मेण सम्यग्दर्शननामकः ।
युक्तः पार्श्वे तवानीतोऽमीभिरेव स्वतेजसा ॥
तदा पुनरसौ त्यक्तोऽमीभिर्दूरतरीकृतः ।
पापोदयः सैन्ययुतस्तव चोत्पादितं सुखम् ॥
यतः पुण्योदयोपेतो नीतस्त्वं विबुधालये ।
आनीतो मानवावासे कृता कल्याणमालिका ॥
पुनश्च सर्वैः संभूय तैरेव निकटीकृतः ।
पापोदयः ससैन्यस्ते त्याजिताश्च सुबान्धवाः ॥
एवं चासंख्यशस्तास्ते कृतौ विरहमीलकौ ।

अमीभिर्यावदानीतस्त्वमत्र नृपमन्दिरे ॥
ततोऽधुनास्ति दूरस्थो गाढं पापोदयस्तव ।
ससैन्यो वर्तते तेन तूष्णीमास्ते नरोत्तम ॥
तैः कर्मपरिणामाद्यैरेते तु निकटीकृताः ।
साम्प्रतं ते महाभागाः सातपुण्योदयादयः ॥

किं च ।

न विद्यतेऽनुबन्धोऽस्य तेन पापोदयेन भोः ।
तेनायं तेऽधुना भूप जातः पुण्योदयोऽनघः ॥
अनेन तेऽधुना यस्या सौख्यनिर्मुक्तमानसा ।
ईदृशीयं महाराज जनिता सुखमालिका ॥

किं बहुना ।

चेष्टन्ते सर्वकार्येषु सुन्दरासुन्दरेषु ते ।
तान्येव स्वप्नदृष्टानि मानुषाणि न संशयः ॥
यदा हि प्रतिकूलानि वर्तन्ते तानि ते तदा ।
पापोदयं पुरस्कृत्य दुःखमुत्पादयन्त्यलम् ॥
अनुकूलानि तान्येव कारणैरपरापरैः ।
पुण्योदयेन ते सात कारयन्ति सुखासिकाम् ॥
यत्प्राप्तं प्राप्स्यते यच्च भवताच शुभाशुभम् ।
नित्यं तचोपयुक्तानि तान्येव ननु कारणम् ॥
मयोक्तं भगवन्नत्र विधातव्ये शुभाशुभे ।
किमकिंचित्करो॰वृत्तं सर्वथाहं यतात्मना ॥
सूरिराह महाराज नैवं मंस्थाः कदाचन ।

परिवारस्तवामूनि भवानेवाच नायकः ॥

तथाहि।

भवतो योग्यतापेचं चेष्टन्ते सर्वकर्मसु।
ते कर्मपरिणामाद्यास्त्वच्छुभाशुभहेतवः ॥
ततस्ते निजयोग्यत्वं प्रधानं भूप कारणम्।
सुन्दरेतरवस्तूनां ते पुनः सहकारिणः ॥
राजत्नादिरूढा सा विद्यते तव योग्यता।
यया संपादितः सर्वः प्रपञ्चोऽयममूदृशः ॥
तया विना पुनः सर्वे सुन्दरेतरवस्तुषु।
ते कर्मपरिणामाद्याः किं कुर्वन्तु वराककाः ॥
ततस्त्वमत्र प्राधान्यात्कारणत्वेन गीयसे।
सुन्दरेतरकार्याणां सर्वेषामात्मभाविनाम् ॥
मयोक्तं नाथ यद्येवं मम कार्यप्रसाधनम्।
ततः किमियदेवात्र कारणानां कदम्बकम् ॥
किंचान्यदपि विद्येत मम कार्यप्रसाधकम्।
सूरिराह महाराज समाकर्णय साम्प्रतम् ॥
यास्त्यसौ निर्वृतिर्नाम नगरी सुमनोहरा।
निरन्तानन्दसन्दोहपरिपूर्णा निरामया ॥
तस्यामनन्तवीर्याढ्यः सर्वज्ञः सर्वदर्शनः।
अनन्तानन्दसंपूर्णः सुस्थितः परमेश्वरः ॥
यो विद्यते महाराज सर्वस्य जगतः प्रभुः।
सुन्दरेतरकार्याणां स ते परमकारणम् ॥

अनेकोऽप्येकरूपोऽसौ गीयते वरसूरिभिः।
अचिन्त्यवीर्ययुक्तात्मा परमात्मा स गद्यते ॥
स बुद्धः स विरिञ्चाख्यः स विष्णुः स महेश्वरः ॥
निष्कलः स जिनः प्रोक्तो दृष्टतत्त्वैर्महात्मभिः ॥
न चेच्छया करोत्येष तव कार्यपरंपराम्।
वीतरागो गतद्वेषो निरिच्छोऽयं यतो मतः ॥
यथा तु कुरुते तात तवायं सुन्दरेतरम्।
कार्यजातं तथा वच्मि साम्प्रतं विशदाक्षरैः ॥
सिद्धा भगवतस्तस्य निश्चला सुप्रतिष्ठिता।
अस्त्याज्ञा सर्वलोकानामाकालं करुणोचिता ॥
यदुत।
निरन्धकारा कर्तव्या चित्तवृत्तिः प्रभास्वरा।
गोक्षीरहारनीहारकुन्देन्दुविशदा सदा ॥
गृहीत्वा रिपुबुद्ध्या च महामोहादिकं बलम्।
अनुक्षणं निहन्तव्यं घोरसंसारकारणम् ॥
बन्धुबुद्ध्यावधार्येदं पोषणीयं च सर्वदा।
चारित्रधर्मराजाद्यं सैन्यं कल्याणकारणम् ॥
इयमेतावती तस्य सर्वलोकसमाश्रया।
वर्तते नृपतेराज्ञा विधातुर्हितकारिणी ॥
संपूजनेन ध्यानेन स्तवेन व्रतचर्यया।
इयमेव विधातव्या तदाज्ञा तस्य सेवकैः ॥
निषिद्धाचरणैः सर्वैरियमेव विराध्यते।

तदुक्तवादद्वादशाङ्गार्थः सर्वोऽप्यस्यां व्यवस्थितः ॥
तां च यो यावतीं लोके विदधाति नरः सदा।
अजानन्नपि तद्रूपं तस्य तावद्भवेत्सुखम् ॥

केवलं।

यस्तु तां लङ्घयन्नाज्ञां विपरीतं विचेष्टते।
जानन्नपि च तद्रूपं स भवेद्दुःखभाजनम् ॥
यो यावत्कुरुते मोहात्तदाज्ञालङ्घनं जनः।
तस्य तावद्भवेद्दुःखं यथा तत्करणे सुखम् ॥

एवं च स्थिते।

तदाज्ञालङ्घनाद्दुःखं तदाज्ञाकरणात्सुखम्।
यतः संपद्यते सर्वं सर्वेषामपि देहिनाम् ॥
अणुमात्रमपि नन्वास्ति भुवनेऽत्र शुभाशुभम्।
तदाज्ञानिरपेक्षं हि यज्जायेत कदाचन ॥
तेनेच्छारागविद्वेषरहितोऽपि स भूपतिः।
निर्वृतिस्थोऽपि कार्याणां ज्ञेयः परमकारणम् ॥
स एव परमो हेतुरतस्ते गुणधारण।
सुन्दरेतरकार्याणां सर्वेषां नात्र संशयः ॥
तदाज्ञालङ्घनात्पूर्वं जाता ते दुःखमालिका।
अधुना तत्करत्वेन सुखलेशोऽयमीदृशः ॥
यदा तु तस्य संपूर्णामाज्ञप्तिं तां करिष्यसि।
तदा यः सुखसन्दोहस्तस्य विज्ञास्यसे रसम् ॥
तदेवं परमार्थेन सर्वेऽमी तव हेतवः।

प्रधानगुणभावेन विज्ञेयाः सर्वकर्मसु ॥
एकेनापि विना भूप कार्यसिद्धिर्न विद्यते ।
अमीषां प्रोक्तहेतूनां समाजः कार्यकारकः ॥
मयोक्तं कारणग्रामः किं पूर्णोऽयं निवेदितः ।
एतावानेव किं वास्ति नाथान्यदपि कारणम् ॥
सूरिराह महाराज प्रायशः प्रतिपादितः ।
एतावानेव हेतूनां मौलकः कार्यसाधकः ॥
अत्रैव शेषहेतूनामन्तर्भावो हि विद्यते ।
यथा यदृच्छानियती प्रविष्टे भवितव्यताम् ॥
ततो निर्नष्टसन्देहस्तदाहं वरलोचने ।
प्रतिपद्य गुरोर्वाक्यं तत्तथेति कृताञ्जलिः ॥
पृष्टवानपरं सूरिं सन्देहं मानसे स्थितम् ।
*गाढमद्भुतहेतुत्वात्पूर्वकाले वितर्कितम्* ॥

यदुत भगवन्

एकं भूमौ तथाकाशे वर्तमानं द्वितीयकम् ।
तदाम्बरचरं सैन्यं स्तम्भितं केन हेतुना ॥
सूरिराह महाराज तत्रापि परकारणम् ।
सैव पुण्योदयो ज्ञेयः शेषकारणचोदितः ॥
केवलं तस्य वीर्येण प्रमधा वनदेवता ।
तत्रोपरि तया सर्वं स्तम्भितं तद्बलद्वयम् ॥
रचितं मरणं तेषां शेखराणां तवेच्छया ।
विमुक्तास्तदभिप्रेता अमिता यान्यत्रोपमाः ॥

तथापि च कृतं कार्यं कृतं तेनाभिधीयते ।
यतः प्रचोदकस्तस्याः सैव पुण्योदयोऽनघः ॥
अयं हि कार्यं कुर्वाणः सुन्दरं ते नरोत्तम ।
संप्रेर्य कारयत्यन्यैर्हेतुभिर्न पुनः स्वयम् ॥
पापोदयोऽपि कुर्वाणस्तव कार्यमसुन्दरम् ।
प्रचोद्य कारयत्यन्यैर्हेतुभिर्न पुनः स्वयम् ॥
तदन्ये हेतवो भूप सुन्दरेतरवस्तुषु ।
अप्रधानास्त्वया ज्ञेयास्तावेव परमौ यतः ॥

तथाहि।

पूर्वं पापोदयेनैव कारणैरपरापरैः ।
कारितानि विचित्राणि दुःखानि बहुशस्तव ॥
इदानीं कारयत्येष स्वसामर्थ्येन ते सुखम् ।
निमित्तमात्रं बाह्यानि वस्तूनि गुणधारण ॥

मयोक्तं । भगवन्नष्टो मेऽधुना समस्तसन्देहः । अवधारितमिदं मया भगवद्वचनेन । यदुत । यदाहमज्ञानात्तिष्ठामि निर्वृतिनगरीपरमेश्वरमहाराजसुस्थिताज्ञालङ्घने करोमि भावान्धकारमलिनां चित्तवृत्तिं पोषयामि महामोहादिबलं तदा तत्तादृशं मदीयस्वरूपमालोक्य प्रतिकूलतां गतानि कर्मपरिणामकालपरिणतिस्वभावभवितव्यतादीनि तेन कर्मपरिणामसेनापतिना पापोदयेन मत्प्रतिकूलात्मीयानीकसहितेन मम विविधदुःखपरंपरां तत्सम्पादकपरापरबाह्याभ्यन्तरवस्तुप्रेरणद्वारेण जनयन्ति । यदा पुनरहं स्वयोग्यतामपेक्ष्य तस्यैव भगवतः सुस्थितमहानृपतेः प्रमादेनावाप्त-

संज्ञानो भवामि ततस्तदाज्ञायां वर्ते विदधामि भावतमःचालनेन निर्मलां चित्तवृत्तिं प्रीणयामि चारित्रधर्मराजादिकं सैन्यं तदा तत्तादृशं मदीयचरितमाकलय्यानुकूलतां गतानि कर्मपरिणाम-कालपरिणतिस्वभावभवितव्यतादीनि अनेन द्वितीयेन कर्मपरिणामसेनापतिना पुण्योदयेन मदनुकूलात्मीयसैन्यसहितेन मम सुखपरंपरां तज्जनकान्यबाह्याध्यात्मिकवस्तुप्रचोदनमुखेनैव संपादयन्ति । तदेषां सामग्री जनिका न पुनरेकं किंचित्कस्यचिज्जनकमस्तीति । केवलं यदादिष्टं भगवद्भिर्यथायं तवामुना पुण्योदयेनेदानीमीदृशः सुखलेशः संपादित इत्यनेन वाक्येन जनितो मे कुतूहलातिरेकः। यतश्चिन्तितं मया। अये यस्मिन्नहनि मया लब्धा मदनमञ्जरी तथावाप्ता अनर्घेया भूरिरत्नराशयः प्रशमितं चिन्तितमात्रेण खेचराणां रणविड्वरं समुत्पन्नस्तेषां परस्परं बन्धुभावः गताः सर्वेऽपि मम भृत्यतां जनितस्तातम्बादिपरितोषः प्रादुर्भूतो महोत्सवः समुत्पादितो नागरकानन्दः प्राप्ता मद्भवने ऽम्बरचराः विहितं तातेन तत्सन्मानादिकं श्लाघितोऽहं सर्वैः उद्भासितो यशःपटहः तद्दहर्मम सुखनिर्भरतया ऽमृतमयमिव प्रतिभासितमासीत् । तथा वर्धमाने मदनमञ्जर्या सह प्रेमावन्धे जाते कन्दमुनिदर्शने मित्रतामुपगतेषु मातमद्रागमसम्यग्दर्शनगृहि-धर्मेषु परिणते महाराज्ये विलसतो यथेच्छया सुखमन्दोहपरि-पूर्णतया संजाता मम देवलोकसुखेऽप्यवज्ञा । तथाधुना दृष्टे भगवति वन्दिते सविनयं नष्टे सन्देहे पश्यतो भगवद्वदनकमल-माकर्णयतो वचनामृतं मम सुखातिरेको वाग्गोचरातीतो वर्तते ।

तत्कथं भगवद्भिरादिष्टं यथाधुना संपादितस्तवानेन पुण्योदयेनायं सुखलेश इति। तथाहि यद्ययमपि सुखलवस्तर्हि कीदृशं पुनस्तत्संपूर्णं सुखं स्यादिति संजातो मे मनसि वितर्कः। ततः कथयन्तु भगवन्तः कीदृशं पुनः शरीरिणस्तत्संपूर्णं सुखमिति। निर्मलसूरिणोक्तं। महाराज गुणधारण स्वानुभवेनैव विज्ञास्यसि त्वं तत्स्वरूपं किं तस्य कथनेन। मयोक्तं। भदन्त कथं। भगवानाह। महाराज परिणेष्यसि त्वं दश कन्यकाः। भविष्यति ताभिः सह सद्भावसारस्ते प्रेमाबन्धः। ततस्तदोद्दामलीलया विलसतस्ते तन्मध्ये यत्सुखं संजनिष्यते तदपेक्षया सुखलव एवायमधुनातनो वर्तते। मयोक्तं। भगवन्नवधारितमिदानीं मया यथाहमेनामपि मदनमञ्जरीं परित्यज्य भगवत्पादमूले प्रव्रजितको भविष्यामि तत्कथमहं कन्यकादशकं परिणेष्ये। भगवतोक्तं। अवश्यं त्वया परिणेतव्यास्ताः कन्यकाः। किं च युक्तमेव ताभिः प्रव्राजयिष्यामो भवन्तं। न विरुध्यते ताभिः सार्धं प्रव्रज्या। किं वा तद्रहितस्य ते प्रव्रजितेन। न वलते हि प्रव्रजितो विरहितस्तादृशकुटुम्बिनीभिः। ततस्ताः परिणीय नियमाद्भवता प्रव्रजितव्यमिति। एतच्चाकर्ण्य किमेवं भगवान् भाषत इति विमर्शेन स्थितोऽहं विस्मितः। कन्दमुनिनोक्तं। भदन्त कतमास्ताः कन्यकाः याः परिणेतव्या महाराजेन। भगवानाह। यास्ताः पूर्वं निवेदिता मयास्यैव चिरन्तनवृत्तान्तं कथयता ता एव ताः कन्यका नान्याः। कन्दमुनिराह। भदन्त विस्मृतास्ता मेऽधुना। अतो ममानुग्रहेण यत्र ता वर्तन्ते यस्य वा सम्बन्धिन्यो यन्नामिका वा सर्वमिदं निवेदयितुमर्हन्ति भगवन्तः। भगवतोक्तं। आकर्णय।

अस्ति चित्तसौन्दर्यं नाम नगरं। तत्र शुभपरिणामो राजा। तस्य निष्प्रकम्पताचारुते द्वे भार्ये। तयोर्यथाक्रमं चान्तिदये कन्यके विद्येते। तथापरमस्ति शुभ्रमानसं नाम नगरं। तत्र शुभाभिसन्धिर्नरेन्द्रः। तस्य वरतावर्यते देव्यौ। तयोर्मृदुतासत्यते कन्यके संजाते इति। तथान्यदस्ति विशदमानसं नगरं। तत्र शुद्धाभिसन्धिर्नरेश्वरः। तस्य शुद्धतापापभीरुते ग्टहिण्यौ। तयोश्च ऋजुताचौरते नाम द्वे कन्यके संभूते इति। तथा शुभचित्तपुरेऽस्ति सदाशयो नरपतिः। तस्य वरेण्यता देवी। तस्या द्वे कन्यके। तद्यथा। ब्रह्मरतिर्मुक्तता चेति। तथान्यास्ति तेनैव सम्यग्दर्शनेन स्ववीर्येण निर्वर्तिता मानसीविद्या नाम कन्यका। तथापरा चारित्रधर्मराजस्य विरतेर्महादेव्याः कुचिसंभूतास्ति निरीहता नाम कन्येति। तदेतानि तान्यार्य कन्दमुने तासां दशानामपि कन्यकानां वासाभिजननामानि ते निवेदितानि। कन्दमुनिनोक्तं। नाथ महाप्रसादः। केवलं कथं पुनरेताः कन्यकाः प्राप्या महाराजेन। भगवतोक्तं। आलोच्य सह कालपरिणत्यादिभिर्गृहीला तदनुमतिं कृत्वा पुरतः पुण्योदयं गत्वा तेषु पुरेषु अनुकूल्य तज्जननीजनकान् स एव कर्मपरिणामो दापयिष्यति समस्ता अपि ताः कन्यका महाराजायेति। केवलमनेनाप्यभ्यसनीयाः स्तुणाः करणीयात्मयोग्यता येनानुकूलतरो भवत्येनं प्रति स कर्मपरिणामः तद्दानाभिमुखा जायन्ते स्वयमेव तासां पितरः तास्र स्वत एवानुरज्यन्तेऽस्य। ततो भवति निष्कृचिमः प्रेमाबन्धः। न खलु राजाक्रान्त्या प्रेमाबन्धो घटितः सुघटितो भवति न च

घटयितुं शक्यत इति। कन्दमुनिराह। भदन्त किमत्र वक्तव्यमधुनैवायं भगवद्वचनकरणेन यथार्थो भविष्यति गुणधारणः। तत्करोत्येवैष यदाज्ञापयन्ति भगवन्तः। केवलमादिशन्तु विशेषेण नाथाः के पुनरनेन तासां कन्यकानां लाभाय सद्गुणाः सततमनुशीलनीयाः। भगवतोक्तं।

आर्य क्षान्तिमभिवाञ्छता तावदनेन भावनीया समस्तजन्तुषु मैत्री सहनीयः परविहितः परिभवः अनुमोदनीयस्तद्द्वारेण परप्रीतियोगः चिन्तनीयस्तत्सम्पादनेनात्मानुग्रहः निन्दनीयः परिभावकदुर्गतिहेतुतयात्मा श्लाघनीयाः परकोपकारणभावरहिता धन्यतया भगवन्तो मुक्तात्मानः ग्रहीतव्याः कर्मनिर्जरणहेतुतया न्यक्कारकर्तारो हितबुद्ध्या प्रतिपत्तव्याः संसारासारत्वदर्शितया त एव गुरुभावेन सर्वथा विधेयं निष्प्रकम्पमन्तःकरणमिति।

दयां पुनः परिणिनीषतानेन सर्वथा वर्जनीयः स्तोकोऽपि परोपतापः दर्शनीयः सर्वदेहिनां बन्धुभावः प्रवर्तितव्यं परोपकारकरणे नोदासितव्यं परव्यसनेषु सर्वथा भवितव्यं समस्तजगदाह्लादकरामृतासयधारिणेति॥

मृदुतां पुनरार्य विवाहयिषता महाराजेन मोक्तव्यो जातिवादः परित्याज्यः कुलाभिमानः वर्जनीयो बलोद्रेकः रहयितव्यः रूपोत्सेकः परिहर्तव्यस्तपोवष्टम्भः निराकरणीयो धनगर्वः निर्वामनीयः श्रुताहङ्कारः अपचेतव्यो लाभमदः शिथिलयितव्यो वाल्लभ्यकाशयः सेवनीया नम्रता अभ्यसनीयो विनयः सर्वथा कर्तव्यं नवनीतपिण्डोपमं हृदयमिति॥

तथा परिहरतः परेषां मर्मोद्घट्टनं वर्जयतः पैशुन्यं विमुञ्चतो ऽवर्णवादं शिथिलयतो वाक्पारुष्यं गर्हयतो वक्रोक्तिं अनाचरतः परिहासं अवदतोऽलीकवचनं त्यजतो वाचाटतां विदधतो भूतार्थोद्भावनं प्रगुणीभविष्यति गुणानुरक्ता महाराजस्य स्वयमेव सा सत्यतेति।

तथा निर्भर्त्सयता कौटिल्यं दर्शयता सर्वत्र सरलभावं परित्यजता परवञ्चनं विमलयता मानसं समनुशीलयता प्रकटाचारतां अनुवर्तयता सद्भावप्रधानतां सर्वथा कुर्वता प्रगुणदण्डोपममात्मान्तःकरणं महाराजेन सा ऋजुता वशीकर्तव्येति।

तथा धारयति परपीडाभीरुतां निराकुर्वति परद्रोहबुद्धिं वर्जयति परधनहरणं लक्षयति तदपायहेतुतां पश्यति दुर्गतिभयं महाराजे संजातानुरागागमिष्यति स्वयंवरा सा नूनमचोरतेति।

मुक्तां पुनरभिलषतार्थं महाराजेन मात्मीभावमानेतव्यो विवेकः द्रष्टव्यो बाह्याभ्यन्तरग्रन्थाद्विषः स्वस्थात्मा शमनीया ग्रन्थिपिपासा धारणीयं भावतो बहिरन्तश्चालग्नमन्तःकरणं सर्वथा पङ्कजलाभ्यामिवार्थकामाभ्यामश्लिष्टः पद्मवञ्जनयितव्यो निजभाव इति।

ब्रह्मरतिं पुनः पाणौ जिघृक्षता मुने महाराजेन प्रतिपत्तव्याः समस्ता अपि मातर इव सुरनरतिरश्चां नार्यः न वक्तव्यं तदमतौ न कार्या तत्कथा न भजनीया तन्निषद्या न विलोकनीयानि तदिन्द्रियाणि न स्थातव्यं रतिश्रमिथुनकुड्यान्तर्ये न स्मरणीयं पूर्वललितं नाहरणीयः प्रणीताहारः रक्षणीया तदतिमात्रा न करणीया शरीरराढा सर्वथोद्दलनीया रताभिलाषितेति।

तथा सर्वपुद्गलद्रव्याणां देहधनविषयादीनां भावयते सतत-मनित्यतां चिन्तयते गाढमशुचिरूपतां ध्यायते दुःखात्मकतां लक्षयते चात्मभिन्नस्वभावतां विरहयते सकलं कुवितर्कजालं विम्रते समस्तवस्तुतत्त्वमस्मै महाराजाय गुणधारणाय स सद्बोधः समानीय दास्यति तां सम्यग्दर्शनात्मजां विद्याकन्यकामिति।

तथा वित्तमन्तापायेच्छा मनोदुःखाय भोगाभिलाषो मरणाय जन्म वियोगाय प्रियसङ्गमः कोशकारकीटस्येव तन्तुसन्तानरचना निबिडात्मबन्धनाय जीवस्य सङ्गपरता क्लेशायासाय सकलं सङ्गजालं प्रवृत्तिर्दुःखं निवृत्तिः सुखमित्येवमनवरतं भावयतो महाराजस्य भविष्यति गाढमनुरक्ता सा निरीहतेति।

तदेते सद्गुणास्तासां दशानामपि कन्यकानामवाप्तये महाराजेनाभ्यसनीयाः। अन्यच्चैवं कुर्वतोऽस्यानुकूलतयैवावसरं विज्ञाय दर्शयिष्यति समस्तं चारित्रधर्मराजादिकं निजबलं स कर्मपरिणामः। ततः प्रत्येकमनुरूपशुणाभ्यासेनैवात्मन्यनुरागमानेतव्यास्ते महाराजेन सुभटाः। ततः स्वाम्यनुरक्तास्ते निराकरिष्यन्ति तन्महामोहादिसैन्यं। ततोऽयमवाप्तभावराज्यः स्वबलकलितो विनिर्जितभावशत्रुस्ताभिः प्रियकामिनीभिः सार्धं लसमानोऽत्यन्तसुखितो भविष्यति महाराजः। तदिदमेशनेन तावदनुष्ठेयमिति। कन्दमुनिराह। भदन्त कियता पुनः कालेन महाराजस्येदं सेत्स्यति प्रयोजनं। भगवतोक्तं। आर्य षण्मासमात्रेण। ततो मयोक्तं। नाथ त्वरयति मामतीव प्रव्रज्याग्रहणायान्तःकरणं। भूयांश्चैष कालविलम्बः। तत्कथमिदं। भगवानाह। राजसमलमत्र त्वरया। इयमेव

हि परमार्थतः प्रव्रज्या यदस्य मदुपदिष्टस्यानुष्ठानं । द्रव्यलिङ्गं हि भवता गृहीतं पूर्वमप्यनन्तवाराः । न चैतद्भूतिकरव्यतिरेकेण भवतस्तेन द्रव्यलिङ्गेन कश्चिद्विशिष्टतरः सम्पादितो गुणः। तदलं तावत्ते तदर्थमुत्तारितेनेदमेव मदुपदिष्टं कुर्वाणस्तिष्ठेति । कन्दमुनिनोक्तं । भदन्त केन पुनः क्रमेण महाराजेन ताः कन्यकाः परिणेतव्याः । भगवतोक्तं । आर्य मदुपदेशमनुतिष्ठतोऽस्य समीपमागमिष्यत्यसौ विद्यामादाय सद्बोधो मन्त्री विवाहयिष्यत्यनेन तां कन्यकां स्थास्यत्यस्य समीपस्थः । ततः किमनेन बहुना । यदसौ किमपि ब्रूते तदेवानेनानुष्ठेयं । आनाय्येवासौ प्राप्तकालं सर्वं कारयितुं । तस्यागमने हि समाप्स्यतेऽस्मादृशामुपदेशावकाशः । तस्मात्स एव सद्बोधः सर्वच महाराजेन प्रमाणीकर्तव्य इति । मयोक्तं । नाथ महाप्रसाद इच्छामोऽनुशास्तिं । ततोऽभिवन्द्य सपरिवारः सपरिकरं भगवन्तं प्रविष्टोऽहं नगरे । प्रारब्धोऽनुष्ठातुं भगवदुपदेशं । गच्छन्ति दिनानि भगवत्पर्युपासनया ॥ अन्यदा भावयतो भगवदुपदिष्टा भावना रात्रौ समागता मे निद्रा । प्रबुद्धस्तथैव भावयन् । ततः प्रवृद्धा गाढतरं भावनाः । ततो रात्रिशेषे संजातो मे प्रमोदातिरेकः । ततः किमेतदिति विस्मितोऽहं यावदागतो मत्समीपं सद्बोधो मन्त्री । विलोकितोऽसौ मया । तदर्पणं च

आनन्ददायिका दृष्टेः सर्वावयवसुन्दरा ।
आशिश्रयाहृदमा धवलामलशोभना ॥
तत्त्वावगमसंवेगनामकं स्तनमण्डलम् ।
धारयन्ती नितम्बं च प्रशमाख्यं मनोहरम् ॥

सर्वथा

स्पृहणीयगुणोपेता चित्तनिर्वाणकारिका।
सा चिरं स्तिमिताक्षेण मया विद्यावलोकिता॥

ततश्च।

सा सद्बोधेन मे दत्ता परिणीता मयानघा।
जातः सदागमादीनामानन्दो लङ्घिता निशा॥
प्रभाते तु समुत्थाय परिवारविवेष्टितः।
गतोऽहं भगवन्मूलं वन्दिताः सर्वसाधवः॥
ततो विनयनम्रेण विहिताञ्जलिना मया।
समस्तं रात्रिवृत्तान्तं पृष्टा निर्मलसूरयः॥

यदुत

सा किं मे तादृशी नाथ प्रवृत्ता वरभावना।
किं वा तादृक्समुद्भूतो हर्षोल्लासोऽतिसुन्दरः॥
सूरिराह महाराज समाकर्णय कथ्यते।
स कर्मपरिणामाख्यस्तुष्टस्ते साधुकर्मणा॥
ततस्तेन स्वयं गत्वा सद्बोधोऽयं सविस्तरः।
प्रोत्साहितो यथा गच्छ भजस्व गुणधारणम्॥
अथ चारित्रधर्मेण सार्धमालोच्य पण्डितः।
ततः प्रचलितोऽयं ते समीपगमनेच्छया॥
विज्ञायामुं च वृत्तान्तं महामोहादिशत्रवः
पापोदयं पुरस्कृत्य पर्यालोचमुपागताः॥

विषयाभिलाषेणोक्तं।

विनष्टाः साम्प्रतं यूयं सद्बोधो ह्रतको यदि ।
तस्य संसारिजीवस्य पार्श्वे यायात्सुवंष्टकः ॥
तत्साम्प्रतं यथाशक्त्या कुरुध्वं यत्नमुत्तमम् ।
मार्गे तिष्ठत सर्वेऽपि तस्य स्खलनतत्पराः ॥
ततः पापोदयेनोक्तमार्य किं क्रियतेऽधुना ।
यदा देवोऽपि नः स्वामी तेषां पक्षे व्यवस्थितः ॥

तथाहि ।

स कर्मपरिणामाख्यो देवोऽस्मत्पक्षपूरकः ।
यदासीत्तैः पुराभूम बलवन्तस्तदा वयम् ॥
उदासीनोऽपि यद्येष स्याद्देवोऽत्र बलद्वये ।
तथापि युज्यतेऽस्माकं योद्धुं तैः सार्धमञ्जसा ॥
इदानीं देवनिर्दिष्टो यः पुनर्याति सत्वरम् ।
सोऽयं सद्बोधसचिवो नैव स्खलनमर्हति ॥
न चाधुना ममादेशो देवकीयोऽत्र विद्यते ।
योद्धव्ये सर्वथा यस्मात्तेन दूरीकृता वयम् ॥
तदेवं संस्थिता एवं प्रस्तावं लब्धुमर्हथ ।
यातु यावदयं तस्य पार्श्वे सद्बोधनामकः ॥
एतस्माकर्ण्य वचनं रोषेण स्फुरिताधरः ।
रणाय चलितः शीघ्रं ज्ञानसंवरणो नृपः ॥

उक्तं च तेन ।

यद्ययं प्रतिपक्षो मे तत्पार्श्वे याति लीलया ।
मया किं जीवितेनेह जननीक्लेशकारिणा ॥

यूयं हि यात मा यात भयेन श्लथसन्धयः।
मया यातव्यमेवास्य प्रतिस्खलनकाम्यया ॥
चलिते चाभिधायेत्थं ज्ञानसंवरणे नृपे।
लज्जया चलितास्तेऽपि सर्वे पापोदयादयः ॥
रुद्धस्यागत्य तैर्मार्गस्तदा सद्बोधमन्त्रिणः।
साशङ्काः केवलं सर्वे भोः किमत्र भविष्यति ॥

इतश्च।

चारित्रधर्मराजीयं सैन्यं सद्बोधमन्त्रिणः।
तदानुव्रजनं कुर्वदागतं तावतीं भुवम् ॥
ततः परस्पराघातचण्डनिर्घोषभीषणम्।
आयोधनं दृढस्पर्धमालग्नं बलयोस्तयोः ॥

अपि च।

विशदशङ्खसमप्रभमेकतो मधुकरच्छविसन्निभमन्यतः।
त्रिपथगायमुनाजलवत्तदा मिलदलं प्रविभाति बलद्वयम् ॥
रथविसृष्टसयोधमहारथं गजघटापतितापरवारणम्।
हयनिरुद्धलसद्धरिसाधनं वरपदातिनिपातितपत्तिकम् ॥
अथ विपाटितयोधशतोत्कटं प्रकटविस्मयकार्यपि योगिनाम्।
अभवदुद्भटपौरुषशालिनोस्तदिति सङ्कुलयुद्धमनीकयोः ॥

ततस्तं तादृशं वीक्ष्य संशयारूढमुच्चकैः।
स कर्मपरिणामाख्योऽचिन्तयत्तत्प्रयोजनम् ॥

अये।

मया तावन्न कर्तव्यश्चित्तभेदविधायकः।

प्रकटः पक्षपातोऽत्र सर्वसाधारणो ह्ययम् ॥

यतः ।

कृते मत्तो विरज्यन्ते पक्षपाते स्वबान्धवाः ।
महामोहादयोऽतो मे युक्तं नाकाण्डविड्वरम् ॥

तथाहि ।

अद्य चारित्रधर्मोऽयं वल्लभं मे महाबलम् ।
गुणाः संसारिजीवस्य सुन्दरं प्रतिभासते ॥
अथ दोषेषु वर्तेत भूयोऽप्येष यथा पुरा ।
ततश्चिरन्तनस्थित्या गतिर्मे निजबान्धवाः ॥
तस्मात्प्रच्छन्नरूपेण तस्येदं हितकारकम् ।
बलं चारित्रधर्मीयमहं पुष्णामि साम्प्रतम् ॥
येनेदं जीयतेऽनेन बलं पापोदयादिकम् ।
न च मत्तो विरज्यन्ते महामोहादिबान्धवाः ॥
ततः सम्यग्विनिश्चित्य तेनोपायं महात्मना ।
तथा मदुपदिष्टास्ते वर्धिता वरभावनाः ॥
यावत्तु भावनारूढः स्थितस्त्वं गुणधारण ।
तावत्तत्प्रबलीभूतं सद्बोधसहितं बलम् ॥

यतः ।

मणिमन्त्रौषधादीनां भावनानां विशेषतः ।
अचिन्त्यमिह विज्ञेयं वीर्यमाश्चर्यकारकम् ॥
ततो यथा यथा भूप प्रवृद्धास्तत्र भावनाः ।
तथा तथा रणे क्षीणा महामोहादयः स्वयम् ॥

ततः प्रबलतां प्राप्य चणादेव विनिर्जितम्।
तेन सद्बोधसैन्येन बलं पापोदयादिकम् ॥
सर्वे प्रहारिताः प्रायो महामोहादिशत्रवः।
चूर्णितः स विशेषेण ज्ञानसंवरणो नृपः ॥
स्थिता निष्पन्दमन्दास्ते सर्वे पापोदयादयः।
निर्वाहितः स्वसैन्येन सद्बोधः सह विद्यया ॥
गते चाभ्यर्णतां भूप तव सद्बोधमन्त्रिणि।
स तादृशस्तदा जातो हर्षोल्लासोऽतिसुन्दरः ॥
सद्बोधसचिवो दृष्टः परिणीता च कन्यका।
राजन्पुनस्त्वया सर्वं ज्ञातमेव ततः परम् ॥
तदिदं कारणं भूप भावनानां विवृद्धये।
हर्षोल्लासाय चापन्नं रात्रौ ते नात्र संशयः ॥

मयोक्तं।

अधुना किं प्रकुर्वन्ति ते ममान्तरशत्रवः।
सूरिराह महाराज कुर्वते कालयापनाम् ॥

किं च।

उदीर्णास्ते गता नाशमुपशान्तास्तथापरे।
सर्वेऽपि चित्तवृत्तौ ते लीनलीनतया स्थिताः ॥
पुनः प्रस्तावमासाद्य कृत्वा ते सर्वमीलनम्।
सङ्ग्रामाय लगिष्यन्ति मत्सराध्मातचेतसः ॥
ततस्त्वया महाराज सद्बोधदर्शनात्तदा।
चारित्रधर्मसुभटैर्वारणीयाः पृथक् पृथक् ॥

मयोक्तं। यदाज्ञापयति नाथः।

इतश्च संपूर्णो मासकल्पः। ततो गतास्तेऽन्यत्र भगवन्तो निर्मलसूरयः। विशेषतोऽनुष्ठिता मया तदुपदेशाः प्रसादितमन्तःकरणं परिकर्मितं शरीरं विहितश्चित्तवृत्तौ मे सद्बोधेन प्रवेशः। दर्शितौ सामान्यतः समाधिनामानौ द्वौ पुरुषौ धवलौ वर्णेन चारू दर्शनेन सुखदौ स्वरूपेण। ततोऽभिहितं सद्बोधेन। देव विशेषतो धर्मशुक्लाभिधानाविमौ पुरुषौ प्रवेशकौ भवतोऽन्तरङ्गराज्ये। तदनयोर्महानादरो विधेयः। मयोक्तं। यदादिशत्यार्यः। ततो दर्शिताः सद्बोधेन विद्युत्पद्मस्फटिकवर्णाः सुन्दराकारधारिण्यः सुखस्वरूपा लेश्या इति गोत्रेण पीतपद्मशुक्ला इति नाम्ना प्रसिद्धास्तिस्रो नार्यः। अभिहितं च तेन। यदा देव

प्रथमस्य नरस्येमास्तिस्रोऽपि परिचारिकाः।

शुक्लैवैका द्वितीयस्य जायते परिपोषिका॥

तदेतासु सम्यग्वर्तितव्यं देवेन। न वर्तेते खल्वासामभावे तव परमोपकारिणाविमौ पुरुषौ। अनयोश्च बलेन भवता तद्राज्यमासादनीयं। ततः सम्यक् पोषणीया देवेनेमा नार्य इति। मयोक्तं। एवं करिष्ये। ततः प्रवृत्तोऽहं तदुपदेशकरणे प्रविशामि पुनः पुनश्चित्तवृत्तौ विलसामि सह विद्यया सम्प्रयामि मुहुर्मुहुः सद्बोधेन सार्धं सम्मानयामि सदागमसम्यग्दर्शनगृहिधर्मान्। एवं च कुर्वतो मे गते भगवति लक्षितं किंचिदूनं पक्षमासमात्रं। संजातो मद्गुणैः समावर्जितहृदयः कर्मपरिणामः। ततो गतस्तथैव तेषु नगरेषु गमितास्ते राजानः। हताः सर्वे मे निजनिज-

कन्यकादानाभिमुखाः। ततः समागतो मन्मूलं। प्रवेशितोऽहं तेन पुरस्कृतपुण्योदयेन कालपरिणत्यादिपरिवारोपेतेन कर्मपरिणामेण तासां कन्यकानां विवाहार्थं सपरिकरश्चित्तवृत्तौ। ततस्तस्मिन् सात्त्विकमानसवर्तिविवेकगिरिशिखरनिविष्टे जैनसत्पुरे समाहूतास्ते समस्ताः शुभपरिणामादयः समागताः सपरिवाराः। कृतस्तेषां समुचितोपचारः। गणितं विवाहदिनं।

अत्रान्तरे संजातो महामोहादिबले सर्वसमाजः। प्रवृत्तः पर्यालोचः। अभिहितं विषयाभिलाषेण। देव यद्यनेन संसारिजीवेनेमाः चान्त्यादिकाः कन्यकाः परिणीताः स्युस्ततः प्रक्षीणा एव वयमिति मन्तव्यं। अतो नास्माभिरुपेक्षात्र विधेया कर्तव्यः सर्वथा यत्नोऽवलम्बनीयं साहसं मोक्तव्यो विषादः।

भयं हि तावत्कर्तव्यं यावद्भयो न दृश्यते।
प्रयोजनस्य तत्प्राप्तौ प्रवर्तव्यं सुनिर्भयैः॥

ततोऽनुमतं तन्मन्त्रिणो वचनं महामोहेन। समर्थितं शेषसुभटैः। विहिता सामग्री। संनद्धं बलं। समागतास्ते संभूय रणोत्साहेन केवलं दृष्टभयतया कर्मपरिणामप्रतिकूलताभीरुतया च पर्याकुलाश्चित्तेन। ततः पृष्टामीभिः सविनयं भवितव्यता। यथा भगवति किमस्माकमधुना प्राप्तकालमिति। तयोक्तं। भद्रा न युक्तस्तावद्भवतां रणारम्भः। यतः समादृतोऽयमधुनार्यपुत्रः कर्मपरिणामेन मिलिता विशेषतः शुभपरिणामादयः संजातमार्यपुत्रस्याधुना विशेषतो निजबलदर्शनौत्सुक्यं दर्शयिष्यति तदपि कर्मपरिणामः करिष्यत्यार्यपुत्रस्तस्य पोषणं ततोऽधुना रणेन लगतां

भवतां सर्वप्रलयः संपत्स्यते । तस्मात्कालयापनां कुर्वन्तस्तावददृष्टसेवया तिष्ठत यूयं । यदा तु भवतां प्रस्तावो भविष्यति तदाहमेव निवेदयिष्ये । दत्तावधानो हि भवत्प्रयोजने सकलकालमहं वर्ते । का भवतां चिन्ता ॥ ततस्तदनुरोधेनोपसंहृतस्तैः प्रकटसङ्ग्रामारम्भः । केवलं तथापि वेष्टतया प्रयुक्ता एव तैः प्रच्छन्नस्थितैरपि निजनिजा योगशक्तयः । ततस्तन्माहात्म्येन संजाता मम चेतसि कल्लोलाः । यथेदमादिष्टं भगवता यदुत परिणीतासु तासु कन्यकासु भवन्तमहं प्रव्राजयिष्ये । अतिदुष्करा च प्रव्रज्या तुल्या बाहुभ्यां स्वयंभूरमणतरणेन । नैष्ठिकं यत्यनुष्ठानं । सुखलालितं मे शरीरं । संभविनो रोगातङ्काः । तत्र क्षमिष्यते प्रायो दीर्घकालं मे क्षुद्वृत्तिता । कातरहृदया च वराकी मदनमञ्जरी बाधिष्यते द्राघीयसा यावज्जीविकमदीयवियोगेन । इत्यादि चिन्तयतश्च मे संजातो मनाङ्मनोभङ्गः । ततश्चिन्तितं मया । तत् किं । न परिणयामि तावदेताः तिष्ठामि यथासुखासिकया गमयामि यौवनं स्वाधीनाश्च ममैताः ततः पश्चात्काले परिणीय प्रव्रजिष्यामीति । अयं च सर्वोऽपि दूरवर्तिनि सद्बोधे मम स्वगतः पर्यालोचः ॥ अत्रान्तरे समागतः सद्बोधः । निवेदितो मयास्मै निजाभिप्रायः । सद्बोधः प्राह । देव न सुन्दरमिदं मन्त्रितं देवेन । क्षतिकरमिदमात्महितस्य विमर्शकं सुमन्दोद्यमानां चिक्रमेतदशताया । न च स्वाभाविकमेतन्मन्त्रणं देवस्य किं तर्हि विलसितमिदं तेषां पापात्मनां महामोहादीनां । ते हि निधिग्रहणकाम इव वेतालाः पर्युपस्थिता साम्प्रतं हतात्मधामा विप्रकरणाय देवस्य ।

तत्र वञ्चनीयस्तैरात्मा देवेन । ततो लग्नं सद्बोधभाषितं मच्चित्ते । अभिहितं च मया । आर्य कथं पुनरमी निराकर्तव्याः । सद्बोधेनोक्तं । देव निजबलेन । मयोक्तं । दर्शय मे निजबलं । सद्बोधेनोक्तं । एष सज्जोऽस्मि केवलं तद्दर्शने कर्मपरिणामस्याधिकारः । कर्मपरिणामेनोक्तं । आर्य मयादिष्टेन त्वयामी दर्शिताः परमार्थतो मयैव ते दर्शिता भवन्ति । तस्मात् करोतु विकल्पं दर्शयत्वार्यः । सद्बोधेनोक्तं । यदादिशति महाराजः । ततः प्रवेशितोऽहं सद्बोधेन चित्तसमाधानमण्डपे । दर्शितास्चारित्रधर्मराजादयः । विहिता तैर्मे प्रतिपत्तिः । सम्मानिताः प्रत्येकं मया । गताः पदातिभावं नियुक्ता रिपुनिराकरणे सह चतुरङ्गसेनया ॥

ततस्तेषां समुत्साहमालोक्य रणशालिनाम् ।
प्रत्येकं प्रभुणा राज्ञां कृतं सन्मानतोषणम् ॥
दूरादेव भयोद्भ्रान्ता महामोहादयस्तदा ।
पापोदयं पुरस्कृत्य नष्टास्ते मृत्युभीरवः ॥
तैस्तु भग्नास्तदावासाः शोधिता सा महाटवी ।
रिपुनाशेन लब्धा च लोके जयपताकिका ॥
केवलं ते दुरात्मानः किंचित्क्षयमुपागताः ।
किंचित्प्रशान्ततां गत्वा संस्थिता बकचर्यया ॥
ततो महाविमर्देन विवाहोऽतिमनोरमः ।
प्रारब्धो मे तदा कर्तुं मुदितान्तरबान्धवैः ॥
स्थापिताः प्रथमं तावत्तत्राष्टौ चारुमातरः ।
तासां च विहिता पूजा प्रयत्नेन यथोचिता ॥

निवेदितं च मे वीर्यं सद्बोधेन पृथक् पृथक् ।
मातृणां यत्तदा तासां तत्ते भद्रे निवेदये ॥
आद्या हि कुरुते माता युगमात्रप्रलोकिनम् ।
मुनिलोकं पुरे जैने मार्गे व्याक्षेपवर्जितम् ॥
सद्बुद्धिपूतवाक्येन तथ्यं पथ्यं मिताक्षरम् ।
द्वितीया भाषयत्येवं माता यतिजनं सदा ॥
तृतीयमाता निःशेषदोषनिर्मुक्तमक्षमा ।
आहारमेषयत्येव यतिलोकेन कारणे ॥
चतुर्थमाता मुनिभिः सुदृष्टं सुप्रमार्जितम् ।
पात्राद्यादाननिक्षेपं कारयन्ती विजृम्भते ॥
यत्किंचित्स्यात्परित्याज्यं देहाहारमलादिकम् ।
स्थण्डिले पञ्चमी माता तन्नीत्या त्याजयत्यलम् ॥
षष्ठी माता पुनर्नित्यं साधुचित्तमनाकुला ।
रक्षन्ती क्षपयत्येव दोषमज्ञातमक्षमा ॥
सप्तमी कारणाभावे माता मौनविधायिका ।
साधूनां कारणे वाक्यदोषरक्षणतत्परा ॥
अष्टमी कूर्मवन्नीनं मुनिलोकमकारणे ।
धारयेत्कारणे कायदोषविप्लवधारिका ॥
तदिमा मातरश्चात्र स्थापिताः प्रथमे दिने ।
पूजिताश्च विधानेन जैनसत्पुरमारिकाः ॥
ततश्चित्तसमाधाने तत्रैवाभ्यन्तरमण्डपे ।
नैव निःस्पृहता वेदिर्विशेषेण समारिता ॥

विनिर्मितं च धर्मेण प्रदीप्तं निजतेजसा।
तत्राग्निकुण्डं विस्तीर्णं कृतं सर्वं यथोचितम्॥
तैजसीपद्मशुक्लाभिर्जननीभिश्च सादरम्।
स्नानाङ्गरागभूषादि वधूकर्म विनिर्मितम्॥
ताभिरेव तथाशेषैः सर्वैः सामन्तपार्थिवैः।
स्नापितोऽहं विलिप्तश्च भूषितो वासितोंऽशुकैः॥

ततः प्रवृत्तो विवाहानन्दः। स्थितः सद्बोध एव पुरोहितः। हूयन्ते कर्मनामिकाः समिधः। चिप्यन्ते सद्भावनाहुतयः। विकीर्यन्ते कुवासनाभिधाना लाजाञ्जलयः। ततः कारितोऽहं सदागमेनैव सांवत्सरतां भजतातिसुन्दरे शुभलग्नांशे पाणिग्रहणं क्षान्तिदारिकायाः। अत्रान्तरेऽतिहर्षेण विजृम्भिताः शुभपरिणामादयः विलसिता निष्प्रकम्पतादयः प्रवृत्तो महाप्रमोदः भ्रान्तानि मण्डलानि। एवं च क्रमेण तस्मिन्नेव शुभलग्ने परिणीताः शेषा अपि मयाष्टौ दयादिकन्यकाः। उपविष्टः सहितस्ताभिस्तस्मिन्नेव जीववीर्यनामके विस्तीर्णे वरासने। ततः समानन्दिताश्चारित्रधर्मराजादयः। प्रवृत्ता विविधास्तद्विलासाः। इतश्च

यदैव विहिता सा कन्या परिणीता मया पुरा।
तदैवासौ महामोहः प्रक्षीणः परमार्थतः॥

किं तु।

सर्वेषां समुदायात्मा सारभूतः स वर्तते।
दग्धरज्जुसमाकारस्तेन पार्श्वे मे स्थितः॥
यदा तु परिणीतास्ताः क्षान्त्यादिवरकन्यकाः।

सर्वा वैश्वानरादीनां प्रतिपक्षतया स्मृताः ॥
तदा सोऽनीकसंस्थितः पापोदयसमन्वितः ।
चारित्रधर्मराजादिनाश्रितोऽपि तथा पुरा ॥
लीनोऽपि लीनतरतां हिंसावैश्वानरादिभिः ।
सार्धं तैर्नवभिस्तस्माद्दूराद्दूरतरं गतः ॥
तथास्थितेषु तेषूच्चैः शान्ताबाधः प्रमोदितः ।
आश्लिष्टो वरनारीभिः स्वसैन्यपरिवारितः ॥
अन्तरङ्गविलासेन लसदुद्दामलीलया ।
स्वसंवेदनतो वेद तदा सत्यं मुनेर्वचः ॥
तथा शुभपरिणामस्य मयान्या अपि कन्यकाः ।
तत्सिध्यकम्पताजातास्तदा बह्वो विवाहिताः ॥
एताश्च ता धृतिश्रद्धामेधाविविदिषासुखाः ।
मैत्रीप्रमुदितोपेक्षाविज्ञप्तिकरुणादिकाः ॥
ततस्तेन सुभार्याणां वृन्देन सह लीलया ।
अत्यर्थं निर्भरीभूता लसतो मे सुखासिका ॥
चिन्तितं च मया ।
स एष सुखसन्दोहो यः पूर्वं सूचितो मम ।
भगवद्भिर्मया हन्त साक्षादेवानुभूयते ॥
यावच्चैवं प्रमोदाढ्यः सप्रमोदे तदा पुरे ।
स्थितोऽहं तत्र संप्राप्तास्तावत्सिर्मलसूरयः ॥
स्थिताः सपरिवारास्ते तत्रैवाह्लादमन्दिरे ।
गत्वा समस्तसामग्र्या वन्दिताः सादरं मया ॥

ततो विधाय नमेण ललाटे करकुड्मलम्।
भद्रे भगवतामग्रे मयेदं भाषितं तदा॥
सर्वो भगवदादेशः संपन्नः साम्प्रतं यदि।
नाथ तद्दीयतां दीक्षा प्रसादः क्रियतामिति॥
सूरिराह महाराज संपन्ना तव भावतः।
अतो भागवती दीक्षा तस्याः किं दीयतेऽधुना॥

तथाहि।

यदेतत्तव संपन्नं गृहेऽपि वसतोऽधुना।
इदमेव विधातव्यं यतिलिङ्गेऽपि विशेषतः॥
तथापि व्यवहारोऽत्र लङ्घनीयो न पण्डितैः।
अतस्ते साम्प्रतं भूप द्रव्यलिङ्गं विधीयते॥

किं च।

भावलिङ्गबहिश्चिह्नमिदं हेतुरपीष्यते।
तद्दीयते महाराज लिङ्गं ते द्रव्यतोऽधुना॥

मयोक्तं। नाथ महाप्रसादः। ततो विधायाष्ट दिनानि जिनमुनिपूजां समुत्पाद्य नागरकानन्दं संभाव्य बन्धुवर्गं पूरयित्वार्थिसङ्घातं स्थापयित्वा निजसुतं जनतारणाभिधानं राज्ये समाप्य तत्कालोचितं निःशेषं कृत्यविधिं सह मदनमञ्जर्या युक्तः कुलंधरेण प्रधानपरिजनेन च निष्क्रान्तो निर्मलसूरिपादमूले विधानेनाहमिति। ततोऽभ्यस्तः समस्तः साधुक्रियाकलापः। वश्यीभूतो गाढतरं सदागमः। शिक्षितानि तदुपदिष्टान्येकादशाङ्गानि कालिकोत्कालिकश्रुतानि च। तथाभीष्टतरीभूतः सम्यग्दर्शनः।

संजातश्चारित्रधर्मे चित्तावस्थः। विज्ञातं विशेषतस्तत्सैन्यं। पालितौ नितरां संयमतपोयोगौ। भग्नानि सुतरां प्रमत्ततानद्यादीनि रिपुक्रीडास्थानानि। निर्मलीकृता चित्तवृत्तिः। तदेवं गुरुचरणशुश्रूषारतो विहृतोऽहं भूरिकालं मुनिचर्ययेति। तदन्ते विहिता संलेखना कृतमनशनविधानं। तद्दर्शनात्तुष्टा मे भवितव्यता। दत्तापरा गुडिका। तत्तेजसा नीतोऽहं विबुधालये कल्पातीतेषु विबुधेषु। स्थापितः प्रथमग्रैवेयके। तत्र च।

मनोहारिणि पर्यङ्के दिव्ये दिव्यांशुकावृते।
शुभ्रातिनिर्मलाकारः स्थितोऽहममृतोपमे॥
तत्सागरोपमाण्युच्चैस्त्रयोविंशतिमुत्तमम्।
शान्तात्मा विगताबाधमनुभूय सुखामृतम्॥
ततो मनुजगत्यन्तःपातुकं वरपाटकम्।
तदैरावतमायातो भद्रे भार्यानियोगतः॥
तत्र सिंहपुरे जातः सुतो वीणामहेन्द्रयोः।
अहं गङ्गाधरो नाम क्षत्रियः ख्यातपौरुषः॥
जातिस्मरणसंपन्नो दीक्षामादाय सुन्दराम्।
कृत्वा च पूर्ववत्कृत्यं सुघोषाचार्यसंनिधौ॥
तदन्ते च विधानेन पूर्वयावर्णितक्रमात्।
ग्रैवेयके द्वितीयेऽहं गतो भार्यानियोगतः॥
परिपाट्यानया भद्रे कृताः पञ्च गमागमाः।
भावदीक्षां समादाय ग्रैवेयकनिवासिषु॥
एकैकवृद्धा संजाता स्थितिस्तत्र ममानघे।

सागरोपमतो यावत्पञ्चमे सप्तविंशतिः ॥
शरीरचित्तनिर्वाणी शर्मसन्दोहदायिका।
इह तत्र च जाता मे चार्वी कल्याणमालिका ॥
ततश्च षष्ठवारायां भरते शङ्खनामके।
पुरे मनुजगत्यन्तर्धातकीखण्डमण्डले ॥
पुत्रो भद्रामहागिर्योर्जातोऽहं सिंहनामकः।
नरेन्द्रवंशे सद्भोगः सुन्दराकारधारकः ॥
अथ यौवनसंस्थेन धर्मबन्धुमहामुनिम्।
प्राप्य भागवती दीक्षा मयाप्ता वरलोचने ॥
ततः क्रियाकलापेन साधूनां चारुगामिनि।
विहतोऽहं समस्तावः सूत्रार्थग्रहणोद्यतः ॥
अथ स्वल्पेन कालेन द्वादशाङ्गः सदागमः।
सपूर्वः सातिशेषो मे सर्वथा बन्धुतां गतः ॥
पुराप्यस्य मया ज्ञातं विज्ञानं बहुशो बहु।
किं तु संपूर्णपूर्वाणि न प्राप्तानि कदाचन ॥
तदा तु लोककालेन विज्ञातं लीलया मया।
निःशेषमस्य विज्ञानं सर्वं पूर्वैः समन्वितम् ॥
ततोऽधिगतसूत्रार्थो गुरुणा धर्मबन्धुना।
स्थापितोऽहं निजस्थाने सूरिसङ्घस्य पश्यतः ॥
ततश्च दृष्टदामन्दो देवदानवमानवैः।
आचार्यस्थापनायां मे चमत्कारकारकः ॥
गुरुणा प्रेषलोकेश्च प्राथितोऽहं मुहुर्मुहुः।

धन्यस्त्वं कृतकृत्योऽसि येन ज्ञातः सदागमः ॥

तथा ।

वस्त्रालङ्कारमाल्यैश्च पूजिता लोकबान्धवाः ।
विहिता सङ्घपूजा च विधिना वसनाशनैः ॥

किं च ।

ते देवास्ते महाभागा मुनयस्ते च सज्जनाः ।
ममाकृष्टा गुणैः सर्वैर्नम्राः किङ्करतां गताः ॥
तथान्तेवासिनोऽनेके पण्डिता विनयोद्यताः ।
स्वीयगच्छान्तरेभ्यश्च मम पार्श्वमुपागताः ॥
ततो विचरतश्चित्रग्रामाकरपुरादिषु ।
कुर्वतश्च प्रबन्धेन व्याख्यानमतिसुन्दरम् ॥
अनेकवादसङ्घट्टाटव्यां वाक्खड्गयष्टिना ।
कुतीर्थमत्तमातङ्गकुम्भनिर्भेदकारिणः ॥
स्वशास्त्रपरशास्त्राणां स्फुटगर्भार्थदर्शिनः ।
पूजितस्य महाराजसामन्तपरमेश्वरैः ॥
उद्दामवर्णसत्कीर्तिशब्दश्लाघापुरःसरः ।
उल्लासितो यशोरूपो जनैर्मे पटहोऽनघः ॥

तथा ।

धन्योऽसि कृतकृत्योऽसि भूषिता नाथ मेदिनी ।
त्वयावतरता मर्त्ये परमब्रह्मरूपिणा ॥
निर्मिथ्यं सत्यसिंहस्त्वमित्येवं नतमस्तकाः ।
तीर्थिका अपि मां सर्वे स्तुवन्तः पर्युपासते ॥

एवमाचार्यके जाते सर्वलोकमनोहरे ।
भद्रेऽगृहीतसङ्केते यज्जातं तन्निबोध मे ॥
तां तादृशीं समुदीक्ष्य समृद्धिं भुवनाद्भुताम् ।
ईर्ष्ययेव महापापा रुष्टा मे भवितव्यता ॥
चिन्तितं च तया हन्त प्रतिपन्नः पुरा मया ।
योऽसाववसरस्तेषां महामोहादिभूभुजाम् ॥
स एष वर्तते लग्नः साम्प्रतं कार्यसाधकः ।
आग्रामृता वराकास्ते पुरा मदाज्ञतः स्थिताः ॥
तत्तेषां लक्षयाम्येनं प्रस्तावमधुनातनम् ।
येन ते लब्धमाहात्म्या जायन्ते सुखभाजनम् ॥
एवं निश्चित्य ते सर्वे भद्रे पापोदयादयः ।
ज्ञापिताः कार्यगर्भार्थं भवितव्यतया तया ॥

किं च ।

ते कर्मपरिणामाद्यास्ते च मे बान्धवोऽनघाः ।
विमूढा नष्टचेष्टाकाः खगाक्षा विहितास्तया ॥

ततश्च ।

पापोदयं पुरस्कृत्य महामोहादयस्तदा ।
पुनः संस्थापनं कृत्वा प्रवृत्ता मम सम्मुखम् ॥
केवलं जातशङ्कैस्तैर्दृष्टात्यन्तभयैः पुरा ।
कः स्याद्यो विजयोपाय इति प्रारब्धि मन्त्रणम् ॥

विषयाभिलाषेणोक्तं । इदमत्र प्राप्तकालं । अभ्यर्णीभवतु तावत्तस्य सम्यग्दर्शनो ज्ञानसंवरणः । निकटीभवतु शैलराज-

सहितानि गौरवाभिधानानि चीणि मानुषाणि । तदनु प्रहेतव्यावार्ताशयरौद्राभिसन्धिनामानौ द्वौ पुरुषौ । तयोश्च परिचारिका यास्यन्ति स्वत एव कृष्णनीलकपोताभिधाना लेश्या इति गोचेण प्रसिद्धास्तिस्रो नार्यः। वयं तु तावत्प्रमत्ततानदीं पुनः संस्थाप्य प्रवाहयामो मण्डपादीनि च भूयः समारयामः। एवं च कुर्वतां भविष्यत्यक्लेशेनैवास्माकं प्रभाव इति। ततः प्रतिभातं तन्मन्त्रिणो वचनं सर्वेषामपि महामोहादिभूभुजां । ततस्तैस्तत्समर्थितं वाक्येन प्रारब्धं क्रियया ।

ततो मे निकटस्थेषु तेषु जातेषु सुन्दरि ।
पूर्वोदितेषु सर्वेषु यज्जातं तन्निशामय ॥
तामालोकयतो गुर्वीं यशस्संमानपूजनाम् ।
आत्मनश्चित्तकल्लोलाः समुत्पन्ना ममेदृशाः ॥

यदुत ।

अहो ममातुलं तेजस्तथाहो मम गौरवम् ।
अहो जगति पाण्डित्यमन्यासाधारणं मम ॥
अहो युगप्रधानोऽहं यथातिक्रान्तभाविनोः ।
कालयोरपि मादृशो न भूतो न भविष्यति ॥
सर्वा विद्याः कलाः सर्वाः सर्वे चातिशयाः परम् ।
अहो विमुच्य भुवनं मय्येव ननु संस्थिताः ॥
नरेन्द्रः पूर्वपर्याये सुरूपो भोगलालितः ।
अधुना लीदृशः सूरिरहो नाहं लघुः पुमान् ॥
महत्कुलं महत्तेजो, महती श्रीर्महत्तपः ।
महती च मम प्रज्ञा सर्वं हि महतां महत् ॥

एवंविधविकल्पैश्च साहङ्कारस्य मे तदा।
समं तेनानुबन्धेन शैलराजो विजृम्भितः॥

तथा।

यत्रासौ तत्र नियमान्मिथ्यादर्शनवश्यता।
ज्ञानसंवरणस्यापि विलासो विद्यते ध्रुवः॥
ताभ्यां वशीकृतश्चाहं मलिनीभूतचेतनः।
जानन्नपि न जानामि शास्त्रगर्भार्थमञ्जसा॥
पठामि पाठयाम्यन्यं व्याचक्षे शास्त्रसंहतिम्।
भावार्थं न च बुध्येऽहं तद्वशीभूतमानसः॥
केवलं मे परिभ्रष्टं सार्धं पूर्वचतुष्टयम्।
पाश्चात्यं हन्त तत्काले शेषज्ञानं न विस्मृतम्॥
अत्रान्तरे प्रयत्नेन चित्तवृत्तौ ममानघे।
प्रवाहिता नदी तूर्णं रिपुभिः सा प्रमत्तता॥
ततो विजृम्भितान्युच्चैर्निजवीर्येण सुन्दरि।
तानि गौरवसंज्ञानि मानुषाणि विशेषतः॥

कथं।

ईदृशः शिष्यवर्गो मे वस्त्रपात्रादयस्तथा।
अहं पूज्यो जने मां हि वन्दन्ते देवदानवाः॥
ममाणिमादयः सर्वा विद्यन्ते भावभूतयः।
इत्युत्सेकपरो भूत्वा प्रार्थयामि च भाविनीः॥

तथा।

आस्वादितेषु लब्धेषु रसेषु परमा रतिः।

आविर्भूतातिलौल्यान्मे प्रार्थनानागतेषु च ॥
शय्यासनादिसंपाद्ये वस्त्राहारादिगोचरे ।
सुखे शारीरिके तोषः प्राप्ते शौल्यं च भाविनि ॥
जातं मे चिंतयस्यापि तदानीं वशवर्तिनः ।
विहारोपविहारं च जातोऽहं शिथिलस्तदा ॥
गौरवचिंतयेनापि ततो मे च्युतचेतसः ।
आर्ताशयोऽपि संपन्नो दुष्टसङ्कल्पकारकः ॥
स च रौद्राभिसन्धिर्मे न जातो बाधकस्तदा ।
आर्ताशयसमीपस्थः केवलं सोऽप्यवस्थितः ॥
ततस्ता अपि संपन्नास्तिस्रस्तत्परिचारिकाः ।
तस्यैव वर्धनोद्युक्ता मम दौःशील्यकारिकाः ॥
इतश्च चित्तविक्षेपो मण्डपो वेदिका च सा ।
चित्तवृत्तौ कृता सज्जा विष्टरं च समारितम् ॥
चारित्रधर्मराजाद्याश्चित्तवृत्तौ तिरोहिताः ।
जातः श्रमणवेषोऽपि मिथ्यादृष्टिरहं तदा ॥
ततो लब्धावकाशैस्तैरेवं सर्वैररातिभिः ।
आयुर्नामा च संदिष्टः स राजा मम भार्यया ॥

यदुत ।

निरूपयार्यपुत्रस्य भद्र स्थानं मनोहरम् ।
साम्प्रतं चारुवासार्थं योग्यमीदृशकर्मणाम् ॥

तेनोक्तं । भगवति निरूपितमेवास्य निवासस्थानं । यतो मिलितः साम्प्रतं महामोहबले ऽमुष्य चरितेन विरञ्जितहृदयः

कर्मपरिणामः। पुरस्कृतस्तेन पापोदयः। प्रस्थापितोऽहमेकाच-निवासनगरे। आकारितौ च ततस्तीव्रमोहोदयात्यन्ताबोधौ महत्तमबलाधिकृतौ। दृष्टश्च केनचित्कारणेन वेदनीयस्योपरि कर्मपरिणामः। ततः सर्वस्वमपहृत्य कृतोऽभावकिंचित्करः। तत-स्ताभ्यां तीव्रमोहोदयात्यन्ताबोधाभ्यां महानेन सपरिवारेण मया भगवत्या च तस्मिन्नेवैकाचनिवासनगरेऽधुना निवस्तव्यं। किमत्र निरूपणीयं। जानाति चेदं सर्वं स्वयमेव भगवती। केवलं मयि दयां कुर्वती मामेवमुल्लापयति। भवितव्यतयोक्तं। भद्रायुष्क सत्यमेवमिदं। तथाहि।

नियोगो यत्र ते जातस्तत्रावश्यं तया मया।
स्थाने महार्यपुत्रेण वस्तव्यं शेषकैरपि॥

केवलं।

त्रिभागमात्रमद्यापि स्थातव्यस्येह तिष्ठति।
ततोऽतिलङ्घिते तत्र यास्यामो भद्र लीलया॥
तेनोक्तं भगवत्येव जानीते केऽत्र मादृशाः।

किं च।

संपूर्णां कार्यतां विद्धः सामग्रीं गमनोचिताम्॥
ततस्तैः प्रबलीभूतैः सर्वैरेव वरानने।
अत्यन्तशिथिलो मार्गे कृतोऽहं सुखलम्पटः॥
मोष्णो मे मा च शीतं मे मा सन्त्वन्ये परीषहाः।
एवं सुखासिकाशीलस्त्यक्तमार्गस्तदाभवम्॥

ततस्तदन्ते रहितो विधानेन संमूढया चेतनया प्रबलैः शारी-

रदोषैरलचयन्नात्मानं जीर्णायां प्राचीनगुडिकायामास्थाय ताम-परां नीतोऽहं तत्रैकाचनिवासनगरे । स्थापितो वनस्पतिपाटके तेन पूर्वोदितेन प्रासादापवरकन्यायेन । स्थितः कियन्तमपि कालं भचयन्नपरापरगुडिकां । ततोऽन्यदा नीतोऽहं शेषपाटकेषु तदन्य-नगरेषु च । कदाचिदानीतः पञ्चाचपशुसंस्थाने ।

ततो विशुद्धभावत्वान्नीतोऽहं विबुधालये ।
कृताश्च बहवस्तस्माद्भूयस्तत्र गमागमाः ॥

तथाहि ।

पञ्चाचपशुसंस्थानाद्भूरिशो व्यन्तरादिषु ।
अकामनिर्जरां प्राप्य गतोऽहं शुभभावतः ॥

तथा ।

विशिष्टपरिणामेन क्वचित्कल्पोपपातिषु ।
सौधर्माद्येषु संपन्नो विबुधाकारधारकः ॥

किं बहुना ।

गृहिधर्मसमेतेन सम्यग्दर्शनसंयुजा ।
उत्कृष्टतस्ततः स्थानादष्टौ कल्पा मयेचिताः ॥

तथा ।

बहुशो मानवावासमवाप्तोऽहं सुलोचने ।
कर्माकर्मान्तरद्वीपभूमिजेषु नृषु स्थितः ॥

तत्र ।

अकर्मभूमिजातोऽहमेकं द्वे त्रीणि वा मुदा ।
स्थितः पल्योपमान्यूचैः कल्पपादपपालितः ॥

तावद्व्यूतमानस्य सत्कान्ताभोगमोदितः ।
सुखाहारविहारस्य विशुद्धाशयबन्धुरः ॥
तदन्ते भार्यया युक्तो गतोऽहं विबुधालये ।
आस्वाद्य गुडिकां चार्वीं पूर्वोक्तविधिना तथा ॥
भूरिवाराः प्रजातोऽहमन्तर्द्वीपवासिषु ।
असंख्यवर्षायुष्को गतश्च विबुधालये ॥

तथा ।

कर्मभूमिषु जातेन यदज्ञानान्मया कृतम् ।
जलज्वलनशैलादिपतनं विषभक्षणम् ॥
पञ्चाग्नितपनाद्यं वा रज्ज्वाद्युद्बन्धनादि वा ।
कर्मशुद्धेन भावेन धर्मबुद्ध्यान्यथापि वा ॥
प्राप्तं तदापि तद्भद्रे मत्पुरं विबुधालयम् ।
किं तु किल्बिषिकावासे जातो व्यन्तरपाटके ॥

तथा ।

कृत्वा बालतपो घोरं सरोषो वैरतत्परः ।
तपोगौरवयुक्तोऽहं गतो भवनवासिषु ॥

तथा ।

तापसव्रतमासाद्य तदनुष्ठानभावतः ।
ज्योतिश्चारिषु नीतोऽहं बहुशो निजभार्यया ॥

तथा ।

प्राप्य भागवतीं दीक्षां तपोनिष्टप्तदेहकः ।
युक्तः क्रियाकलापेन ध्यानाभ्यासपरायणः ॥

केवलं ।

सर्वज्ञभाषितं किंचित्पदं वाक्यमथाक्षरम् ।
अश्रद्दधानो मूढलात्सम्यग्दर्शनवर्जितः ॥
गतोऽहं भूरिशो भद्रे सर्वग्रैवेयकेष्वपि ।
आगतो मानवावासं भूयो भूयोऽन्तरान्तरा ॥
अस्य च भ्रमणस्यैव भद्रे जानीहि कारणम् ।
तस्मिंश्चाचार्यताकाले शैथिल्यं यन्मया कृतम् ॥

इतश्च ।

तदैव निर्मलीकृत्य चित्तवृत्तिं निहत्य च ।
रिपुवर्गं स्थितो राज्ये गतः स्यां निर्वृतावहम् ॥
तदिदमखिलं जातं भूयोभ्रमणलक्षणम् ।
निजाया दुष्टचेष्टायाः फलं नान्यस्य कस्यचित् ॥

अगृहीतसङ्केतयोक्तं ।

न केवलमिदं तात समस्तं यन्निवेदितम् ।
त्वयेह वत तत्सर्वं निजं चेष्टाविजृम्भितम् ॥

तथाहि ।

यद्यवर्तिष्यथास्तात सर्वदा त्वं निरापदि ।
तस्यां सुस्थितराजस्य सदाज्ञायां शिराश्रयः ॥
नाभविष्यत्ततो दीर्घा तवेयमतिदारुणा ।
भीषणा श्रूयमाणापि तीव्रानर्थपरंपरा ॥

संसारिजीवेनोक्तं ।

चारु चारूदितं सुभ्रु संप्रति त्वं हि वर्तसे ।

नाम्नाऽगृहीतसङ्केता भावतस्तु विचक्षणा ॥
तदाकर्णय चार्वङ्गि साम्प्रतं येन हेतुना।
जातोऽहमीदृशावस्थस्तस्कराकारधारकः ॥
अगृहीतसङ्केतयोक्तं। निवेदयतु भद्रः। संसारिजीवेनोक्तं।
तस्माद्ग्रैवेयकादन्यादानीतोऽहं महेच्छया।
पुरीं मनुजगत्यन्तःपातिनीं क्षेमनामिकाम् ॥
इतश्च जानात्येव भवती यथा
अनेकापणमालाढ्ये भूरिविस्तारसुन्दरे।
महाविदेहरूपेऽत्र हट्टमार्गेऽतिदूरगे ॥
वसन्ति चित्ररूपाणि सत्पुराण्यन्तरान्तरा।
ततः क्षेमपुरी सास्य हट्टमार्गस्य मध्यगा ॥
सुकच्छविजयस्थानमिदं भद्र निगद्यते।
यत्र स्थिता वयं यूयं पुरी सा च मनोहरा ॥
तस्यां च क्षेमपुर्यां।
अभूद्रातितामिस्रबर्हणस्तेजसां निधिः।
राजा युगंधरो नाम भास्कराकारधारकः ॥
तस्य दर्शनमात्रेण प्रोत्फुल्लमुखपङ्कजा।
आसीदिष्टा महादेवी नलिनी नाम विश्रुता ॥
अथागृहीतसङ्केते भवितव्यतया तया।
तस्याः प्रवेशितः कुक्षावहं पुण्योदयान्वितः ॥
इतश्च।
तस्यां रात्रौ सुशय्यायां सा सुप्ता कमलेक्षणा।

चतुर्दश महास्वप्नानवलोक्य समुत्थिता ॥
ततः प्रहृष्टयाख्यातास्ते युगंधरभूभुजे ।
तथा फलोपलम्भार्थं महास्वप्ना गजादयः ॥
तेनाप्युक्तं यथा देवि देवदानवपूजितः ।
कुलप्रदीपस्ते पुत्रश्चक्रवर्ती भविष्यति ॥
ततः प्रोत्फुल्लनेत्रा सा भर्तुर्वाक्यं मनोहरैः ।
अभिनन्द्य तदुल्लापैर्गर्भं धारयतेऽनघा ॥
ततः संपूर्णकालेन सुन्दराकारधारकः ।
पुण्योदययुतो जातस्तोयाहृष्टोऽहमन्यथा ॥
अथ गत्वा प्रियङ्कर्या हर्षगद्गदया गिरा ।
प्रोत्फुल्लनेत्रया स्थाने तातायाहं निवेदितः ॥
ततः पुलकचार्वङ्गः स दत्त्वा पारितोषिकम् ।
दानं तस्यै यथाकाममादिदेश महोत्सवम् ॥
अथ विलासविभूषणबन्धुरः सरसनर्तनवादनसुन्दरः ।
मदविघूर्णितलोकमनोहरः प्रववृते मम जन्ममहोत्सवः ॥
गानपानवरखादनवल्गो मानदानमदनादरवल्गः ।
तातवाक्यवशतो विलसन्तस्तत्र गाढमुदिता ननु सन्तः ॥
यथैकं तद्दिनं भद्रे तथान्यद्दिनपञ्चकम् ।
गतमुद्दामलीलाभिर्वर्धदुत्सवसुन्दरम् ॥
ततः प्रयत्नतः सर्वैस्तातामात्यान्धवादिभिः ।
षष्ठिकाजागरो रम्यः कृतो मे नाकविभ्रमः ॥
ततो महाप्रमोदेन लङ्घिते मासमात्रके ।

प्रतिष्ठितं च मे नाम यथायमनुसुन्दरः॥
अथ संवर्धमानोऽहं धात्रीपञ्चकलालितः।
कुमारभावमापन्नो गृहीताः सकलाः कलाः॥
ततश्च यौवनस्थोऽहं यौवराज्येऽभिषेचितः।
तातेन महता भद्रे विमर्देन मनोरमे॥
अथासौ भास्कराकारस्तातोऽस्तं समुपागतः।
मलिनी च गता तेन सार्धं माता ममानघा॥
ततो यावत्करिष्यन्ति किल राज्येऽभिषेचनम्।
सामन्तास्तावदुत्पन्नं चक्ररत्नं ममातुलम्॥

तथा।

जातानि शेषरत्नानि सुन्दराणि चयोदश।
निधयश्च समायाता नव यक्षैः सुरक्षिताः॥
ततोऽयं चक्रवर्तीति मत्वा सर्वे नराधिपाः।
गताः किङ्करतां मेऽत्र सुकच्छविजये तदा॥
ततो निर्जित्य निःशेषं षट्खण्डं भूमिमण्डलम्।
क्षेमपुर्यां स्थितेनैव प्रतापेन समार्जितम्॥
ततो द्वादश वर्षाणि द्वात्रिंशद्भिर्महीभुजाम्।
सहस्रैरभिषेको मे किरीटाटोपराजिनाम्॥
ततो देवीसहस्राणां चतुःषष्ट्या सहाखिलम्।
कुवलयाक्षनेत्राणां भुञ्जानो भोगसंहतिम्॥
कुर्वाणो जनतानन्दं दधानश्चक्रवर्तिताम्।
महाभूतिविमर्देन भूरिकालमहं स्थितः॥

किं बहुना ।

चतुर्भिरधिकाशीतिपूर्वलक्षाणि लीलया ।
उद्दामराज्यसम्भोगं कृत्वाहं चारुलोचने ॥
निर्गतः पश्चिमे काले स्वपुर्यां राजलीलया ।
षट्खण्डविजयस्यापि स्वस्य दर्शनकाम्यया ॥
पुराकरादिसंकीर्णां तां पर्यट्य वसुन्धराम् ।
अहमत्र समायातः सत्पुरे शङ्खनामके ॥

ततश्च ।

पश्चात्कृत्वा बलं शेषं राजवृन्दभवेष्टितः ।
प्राप्तश्चित्तरमं चेदमुद्यानं नन्दनोपमम् ॥

इतश्च ।

यानि गुणधारणावस्थायामभूवंस्तद्यथा प्रथमो मे धर्मदेशकः कन्दमुनिः तथा वयस्यः कुलंधरो भार्या च मदनमञ्जरी तान्यप्याखेटितानि भवितव्यतया भ्रमितानि भवचक्रे दर्शितानि सुन्दरासुन्दररूपेण । ततः स कन्दमुनिः कथित्समतवङ्कलिका-सम्पर्कः समानीतोऽत्रैव सुकच्छविजयस्यान्तर्भूते हरिपुरे । तत्र च भीमरथो राजा । तस्य च सुभद्रा नाम महादेवी । तयोश्चास्ति समन्तभद्रो नाम तनयः । ततः प्रवेशितोऽसौ कन्दः सुभद्राकुक्षौ निर्गतः क्रमेण जाता दारिका । प्रतिष्ठितं तस्या नाम महा-भद्रेति । इतश्च समन्तभद्रः संप्राप्य सुघोषमाचार्यं संजातवैराग्यः संभाष्य पितरौ निष्क्रान्तः । संपन्नः संपूर्णद्वादशाङ्गधरः । स्थापितो गुरुभिः सूरिपदे । सापि च महाभद्रा संप्राप्ता यौवनं परिणीता

गन्धपुराधिपतिना पद्मावतीरविप्रभपुत्रेण दिवाकरेण। गतोऽसौ कालवशेनास्तं। प्रतिबोधिता समन्तभद्रसूरिणा महाभद्रा। गृहीतानया भागवती दीक्षा। संजातैकादशाङ्गधारिणी गीतार्था। स्थापिता गुरुभिः प्रवर्तिनीपदे। ततः सा सुसाध्वीभिः परिवारिता विहरन्ती संप्राप्ता रत्नपुरे। तत्र च मगधसेनो राजा। तस्य च सुमङ्गला नाम महादेवी। इतश्च सा मदनमञ्जरी जनिता तत्सुतात्वेन भवितव्यतया तया। कृतं तस्याः सुललितेति नाम। प्राप्ता क्रमेण यौवनं संपन्ना पुरुषद्वेषिणी। लङ्घितो भूरिकालः। नेष्टो वरगन्धोऽप्यनया। ततः कथमियं वरिष्यत इति संजाता जननीजनकयोश्चिन्ता। ततो महाभद्रां समागतामाकर्ण्य गृहीत्वा तां सुललितां प्रियपुत्रिकां गतौ तदुपाश्रये वन्दनार्थं देवीनरेन्द्रौ। वन्दिता सपरिकरा भगवती। दत्तोऽनया परमपदकल्पपादपनिरुपहतबीजभूतो धर्मलाभः। विहिताऽमृतप्रवाहकल्पा सद्धर्मदेशना। ततः सा सुललिता परिस्फुटमबुध्यमानापि भगवतीवचनभावार्थमत्यन्तमुग्धतया पूर्वपरिचयादुत्पन्नस्नेहरागा भगवतीवदनकमलावलोकनान्निजलोचने क्वचिदन्यत्र नेतुमपारयन्ती पितरं प्रत्याह। तात मया भगवत्याश्चरणयुगलं पर्युपासितव्यम्। तदनुजानातु मां तातो येनाहमनयैव सार्धं सर्वत्र विचरामीति। तदाकर्ण्य प्रमुदिता सुमङ्गला। नृपतिराह। देवि अलमत्र रुदितेन। करोतु वत्सा समीहितं। अयमेवास्या विनोदनोपायो भविष्यति। केवलं भगवतीपार्श्वस्थयानया सामग्रीयुक्तया गृहस्थयैव सत्या पर्यटितव्यं न चास्मदपृच्छयानया

प्रव्रज्याजल्पोऽपि विधेयः। सुललितयोक्तं। तात महाप्रसादः। ततः सा सुललितानया महाभद्रया प्रवर्तिन्या सह तथैव नानादेशेषु विचरितुं प्रवृत्ता। केवलं कर्मोदयान्न प्रवर्तते तस्याः पाठः न लगति सामाचारीक्रमः न बुध्यते च सा परिस्फुटमपि कथ्यमानमागमार्थं। अन्यदा समायाता भगवती महाभद्रात्र शङ्खपुरे। स्थिता नन्दस्य श्रेष्ठिनो घंघशालायां। इतश्चात्र शङ्खपुरे मम मातुलः श्रीगर्भो नाम राजा। तस्य च महाभद्रामात्याख्या कमलिनी नाम महादेवी। सा च निरपत्या। तदर्थं ददात्युपयाचितव्रतानि पिबत्यौषधमूलजातानि। ततो भवितव्यतया स कुलंधरो भूरिषु भवेषु कृतकुशलाभ्यासः प्रवेशितस्तस्याः कुक्षौ। दृष्टोऽनया स्वप्नो यथा सुन्दराकारधरः पुरुषो वदनेन मे प्रविश्य हृदयेन निर्गत्य केनचिन्नरेण सार्धं ततो गतः। कथितोऽनया भर्त्रे स स्वप्नः। तेनोक्तं। भविष्यति ते पुत्रः। केवलमचिरेण कंचन गुरुं प्राप्य प्रव्रजिष्यति। तदाकर्ण्य तुष्टा कमलिनी। ततस्तृतीये मासि संजातोऽस्याः कुशलकर्मकरणमनोरथः। संपादितः श्रीगर्भराजेन। संपूर्णकाले च जातो दारकः। परितुष्टो राजा। कारितस्तज्जन्मानन्दः। इतश्च समुत्पन्नविमलकेवलालोकः समागतोऽसौ समन्तभद्राचार्यः। स्थितोऽत्रैव चित्तरमे कानने। निर्गता तद्वन्दनार्थं महाभद्रा। कथंचिच्च विज्ञातः सुललितया। संजातः कथंचिद्राजदारकजल्पः। भगवतोक्तं। एष भव्योऽभ्यस्तकुशलकर्मा राजपुत्रो न स्थास्यति भवने ग्रहीष्यति प्रव्रज्यां भविष्यति सर्वज्ञागमधारकः। तदाकर्ण्यागता निजोपाश्रये महाभद्रा। इतश्च तस्य नरेन्द्रतनयस्य

पौण्डरीक इति प्रतिष्ठितमभिधानं। विहितो नामकरण प्रमोदः। इतश्च सा सुललिता कुतूहलपरतया विचरन्ती प्राप्ता तच चित्तरमे कानने। दृष्टः सङ्घमध्यस्थोऽनया स समन्तभद्रसूरि-र्नृपतिसुतगुणसन्दोहं वर्णयमानः। उक्तं च भगवता। यतोऽयं शुभेन कर्मपरिणामेन अनुकूलीभूतया कालपरिणत्या अस्यां मनुजगतौ जनितस्तस्मादेवंविधगुण एवायं भविष्यति। भव्यपुरुषो हि सुमतिः सन्निखिलैर्गुणैर्युज्यत एव। कोऽत्र सन्देहः। ततस्त-दाकर्ण्य हृष्टाः सर्वे लोकाः। सुललितया चिन्तितं। कथं काल-परिणतिकर्मपरिणामयोर्जनकत्वं कथं चैष भाविगुणजातं जानाति। ततो गत्वा वसतिं पृष्टानया महाभद्रा। तथा चिन्तितं। अत्यन्त-मुग्धेयं सुललिता। ततोऽयमेवास्याः प्रतिबोधनोपाय इति संचिन्त्य युक्तितः समर्थितं महाभद्रया कालपरिणतिकर्मपरिणा-मयोर्जनकत्वं। उत्पादयामि च सदागमगोचरामस्याः प्रीतिमिति चिन्तयन्त्याभिहितमनया। भद्रे स तथा लोकमध्ये व्याचचाणः सदागमस्त्वयावलोकितः। स हि भगवान् भूतभवद्भविष्यद्भावाविः-शेषानाविर्भावयत्येव। नात्यत्र सन्देहः। तत्प्रसादादेव मयापीदं समस्तं विज्ञातं। चिरपरिचितः स मे भगवान्महाप्रभावस्तेत्यादि वर्णितं सदागममाहात्म्यं। कथितं च तस्य तथा परितोषकारणं। सुललितयाभिहितं। भगवति ममापि विधेहि तेन भगवता सह परिचयं। महाभद्राह। बाढं। ततो नीतानया समन्तभद्रसूरि-समीपे सुललिता। तद्दर्शनाज्जातः सुललितायाः प्रमोदः। संपन्नः

कथितगुणेषु प्रत्ययः। अभिहितमनया। भगवति वञ्चिताहमियन्तं कालं भगवत्या यदेष न दर्शितो मे महाभागः सदागमः। अहो ते स्वार्थपरता। तदतः परं भगवति दर्शनीयो मे दिने दिने भगवान् येनाहमपि भगवत्या सदृशी पण्डिता भवामि। महाभद्रयोक्तं। एवं करिष्ये। ततः प्रारब्धा ताभ्यां प्रतिदिनं भगवत्पर्युपासना। लङ्घितो मासकल्पः। ततो भगवानाह। महाभद्रे चीणजङ्घाबलासि त्वमधुना न शक्नोषि विहर्तुं। अतस्तिष्ठ त्वमत्रैव शङ्खपुरे। वयं तु विहरामस्तावत्। पुनरागमिष्यामः। युष्मत्प्रतिजागरणमेवेहास्माकं मासकल्पकरणे कारणं। अन्यथा हि न कल्पते साध्वीमसहायिते चेत्रे साधूनां कर्तुं मासकल्पः। ग्लानप्रतिजागरणं पुष्टमालम्बनं। प्रतिचरणीयश्च भवत्या पौण्डरीकोऽयं राजदारकः। भविष्यत्येष वर्धमानो मे शिष्यः। ततस्तथेति प्रतिपन्नं सूरिवचनं महाभद्रया। विहृता भगवन्तः।

प्राप्तः क्रमेण पौण्डरीकः कुमारभावं। प्रादुर्भूतोऽस्य यथानिर्दिष्टो गुणकलापः। जातोऽयं स्नेहप्रतिबद्धहृदयो महाभद्रायां। समागता भूयो भगवन्तः समन्तभद्रसूरयः। नीतस्तद्दर्शने महाभद्रया पौण्डरीकः। स च भाविभद्रतया दृष्टतन्मूर्तिदर्शनेन रञ्जितस्तद्गुणकलापेन प्रीणितस्तद्वचनाकर्णनेन। शुद्धमुग्धबुद्धितया च महाभद्रां प्रत्याह। भगवति किंनामायं महाभागः। तया चिन्तितं। सरलहृदयोऽयं राजपुत्रो रञ्जितश्च भगवद्गुणैरिति लक्ष्यते। तदस्यापि जनयाम्येतद्द्वारेणैव सर्वशास्त्रागमविषयां भक्तिमिति संचिन्त्याभिहितमनया। भद्र सदागमोऽयमभिधीयते। पौण्डरी-

केणोक्तं । भगवति यद्यस्मातातयोः प्रतिभाति ततोऽहमस्यैव भगवतः सकाशे गृहाभ्यागमार्थं । महाभद्रयोक्तं । युक्तमिदं । ततो निवेदितस्तदभिप्रायो महाभद्रया कमलिन्यै श्रीगर्भराजाय च । संजातस्तयोः प्रमोदः । ततो गत्वा महानन्देन समर्पितस्ताभ्यां भगवतो निजतनयः । ततः कुरुते स प्रतिदिनमागमाधिगमं पौण्डरीकः ।

ततोऽत्रैव चित्तरसे काननेऽत्रैव च मनोनन्दने चैत्यभवने महत्समुदयमध्यस्थिते भगवति समन्तभद्रसूरौ धर्मं व्याचक्षाणे स्थितायां महाभद्रायां निकटवर्तिनि पौण्डरीके समागतायां सुललितायां धर्मकथाक्षिप्तहृदये भव्यलोके समुल्लसितो महीयबलकलकलः । तच्छ्रवणादुत्कर्णिता परिषत् । ततः सुललितया महाभद्रां प्रत्युक्तं । भगवति किमेतत् । सा प्राह । नाहं जाने । ततो भगवता तयोः सुललितापौण्डरीकयोः प्रतिबोधायेदमुक्तं । यथा महाभद्रे किं न जानीषे त्वं प्रसिद्धैव तावदियं मनुजगतिर्नगरी प्रख्यातो ऽयं महाविदेहरूपो हट्टमार्गो यत्राधुना सर्वेऽपि वयमास्महे । ततो ऽद्य संसारिजीवो नाम तस्करो गृहीतः सलोप्त्रको दुष्टाशयादिभिर्दण्डपाशिकैः दर्शितः कर्मपरिणाममहाराजाय । ततस्तेन दृष्ट्वा कालपरिणतिं स्वभावादींश्चाज्ञापितोऽसौ वध्यतया । ततः सोऽयं संसारिजीवः खल्वेवं वेष्टितस्तैः राजपुरुषैर्महाकलकलेन हट्टमार्गमध्येन नगर्या निःसार्य नीत्वा च पापिपञ्जरनामके वध्यस्थाने दुःखमारेण मारयिष्यते । तदेष तस्मिन्नीयमाने कोलाहलः श्रूयते । सुललितयोक्तं । भगवति ननु शङ्खपुरमिदं न मनुजगतिः चित्तरसं चेदं काननं

न दृष्टमार्गः श्रीगर्भश्चाच राजा न कर्मपरिणामः। तत्किमित्येवं भगवन्तो जल्पन्ति। भगवानाह। धर्ममौलेऽगृहीतसङ्केता त्वमसि। न जानीषे परमार्थं। सुललितया चिन्तितं। ही ममाप्यपरं नाम कृतं भगवता। ततः स्थिता विलक्षितवदना। महाभद्रया बुद्धो भगवद्वाक्यार्थः। चिन्तितमनया। कश्चिदेष कृतभूरिपापो नरकगामी भगवता जीवो निर्दिष्टः। ततः संजाता महाभद्रायाः करुणा। अभिहितमनया। भगवन् किमेष कथंचिन्मोचयितुं पार्यते तस्करो न वेति। भगवानाह। आर्ये तव दर्शनेनास्मत्समीपागमनेन च भविष्यत्यस्य मोक्षः। महाभद्रयोक्तं। भदन्त गच्छाम्यहमस्याभिमुखं। भगवतोक्तं। गच्छ। ततः करुणापरिगतहृदया गता महाभद्रा मदभ्यर्णं। अभिहितोऽहं। यथा भद्र भगवन्तं सदागमं शरणं प्रतिपद्यस्वेति। ततः समानीतोऽहमेवं वदन्त्या भगवत्समीपं। दृष्टोऽहमेवं वध्यतस्कराकारधारकः समस्तपरिषदा। ममापि भगवन्तमवलोकयतोऽनाख्येयसुखरसनिर्भरतया समागता मूर्छा। लब्धचेतनेन प्रतिपन्नः शरणतया भगवान्। माभैर्दानीम समाश्वासितोऽहं भगवता। दूरीभूता भगवद्भयेन किङ्कते राजपुरुषाः। ततो विस्रब्धीभूतोऽहं पृष्टस्तया व्यतिकरं। कथितश्च मयैवमात्मवृत्तान्तो विस्तरेण। अयं च भद्रे भगवतः समन्तभद्रसूरेर्महाभद्रायाः पौण्डरीकस्य भगवत्याश्च सम्बन्धी वृत्तान्तः प्रतीतोऽपि तव सर्वविदर्थं मया निवेदितः येन ते मदीयकथिते सुनिर्णीतमेवायं कथयतीति सर्वच सम्प्रत्ययो भवति। संजातस्तेऽधुना सम्प्रत्ययः। सा प्राह। बाढमात्मगोचरः संजातः।

केवलं यदि त्वमनुसुन्दरनामा चक्रवर्ती ततः किमित्येवं तस्कराकार-धारको दृश्यसे। अयं मे ऽधुना सन्देहः। स प्राह। भद्रे युवयोः प्रतिबोधनार्थं मयेदं बहिरपि तस्कररूपं विरचितं यतो ऽहमन्तरङ्गं चौर्यमुद्दिश्य भवतां पुरतो भगवता संसारिजीवो नामायं तस्करः कलकलेनेत्थं वध्यो नीयते लग्न इत्याख्यातः। ततो गतायां मम सम्मुखं महाभद्रायां तद्दर्शनानुभावात्संजाते प्रबोधे मया चिन्तितं। यद्यप्येषा प्रज्ञाविशाला महाभद्रा जानात्येवेदं भगवदादिष्टं मदीयमन्तरङ्गं चौर्यं ततो लक्षयति भावतो मम तस्करतां तथाप्यस्पष्टीत-सङ्केताद्यापि सा सुललिता न जानीते गन्धमप्यस्य व्यतिकरस्य। ततश्चक्रवर्तिरूपधारिणं मामुपलभ्य भवेदस्याः सदागमवचने विप्रत्ययो न जानीते किंचिदयं सदागमो यतश्चक्रवर्त्यप्यनेन तस्करोऽभिहित इति भावनया। किं चासावपि पौण्डरीकोऽनेनैव द्वारेण प्रतिबोधितो भविष्यति। भव्यपुरुषो ह्यसौ सुमतिश्च वर्तते। विज्ञास्यति मामकीनवृत्तान्तश्रवणोत्तरकालमस्य सर्वस्य परिस्फुटमेदं-पर्यं। भविष्यत्यस्य प्रबोध इत्येवं विचिन्त्य विरचितमिदमन्तरङ्गात्म-रूपसूचकं वैक्रियकरणलब्ध्या मया बहिरपि सर्वमेवंविधं रूपमिति। सुललितयोक्तं। कीदृशं पुनस्तदन्तरङ्गं चौर्यं यद्भवता विहितं। कथं वा तवेदृशी विडम्बना। कथं वात्मगतं परगतं च निःशेषं वृत्तान्तजातं जानाति भवान्। इत्येतत्सर्वं निवेदयितुमर्हति भद्रः। अनुसुन्दरेणोक्तं। अस्ति तावदागतोऽहमन्त्यग्रैवेयकात् समुत्पन्नोऽत्र सुकच्छविजये क्षेमपुर्यां युगन्धरनलिनीपुत्रतया ऽनुसुन्दराभिधानः। अत्रान्तरे प्रोत्साहितास्ते भवितव्यतया महामोहादयः। कथं।

सम्यग्दर्शनदूरस्थो यावदेषोऽत्नसुन्दरः ।
यतध्वं तावदेवात्र यूयं भोः स्वार्थसिद्धये ॥

इतरथा ।

कथंचित्तं समासाद्य परिपोष्य निजं बलम् ।
भवतां प्राग्वदेवायं बाधकारी भविष्यति ॥

अन्यच्च ।

अक्लेशेन वशं याति साम्प्रतं भवतामयम् ।
सद्बोधाद्यैर्हतो भूयो दुर्ग्रहोऽयं भविष्यति ॥
ततोऽधुना यथाशक्त्या हत्वेमं वशवर्तिनम् ।
चित्तवृत्तिमहाराज्यं स्यात यूयं निराकुलाः ॥
ततस्तच्चोदितैर्भद्रे वल्गमानैर्निरङ्कुशैः ।
बालकालात्समारभ्य तैरहं परिवेष्टितः ॥
अहं तु तेषां मध्यस्थो ध्यान्ध्यान्धीभूतचेतनः ।
विस्मृताशेषसद्बन्धुः पुनस्तन्मयतां गतः ॥
ततः समस्तैः पापैः संप्रयुज्य निजं निजम् ।
वीर्यं हतोऽहं भूयोऽपि पापार्जनपरायणः ॥

कथं ।

कौमारे वर्तमानोऽहं प्रवृत्तो मांसभक्षणे ।
मद्यपाने रतो द्यूते जन्तुसङ्घातपीडके ॥
यौवने वर्तमानेन पारदार्यादयस्तथा ।
लोके प्रभवतात्यर्थं प्रमद्य विहिता मया ॥

तथा ।

रक्ताशोकतले यावदुत्तीर्य वरवारणात् ।
आलोक्य काननं दिव्यं संस्थितस्तद्दिदृचया ॥
राजपुत्राश्च मे यावद्विनीताश्चाटुकारिणः ।
वदन्तो देव देवेति दर्शयन्ति वनश्रियम् ॥
तावद्देषा महाभागा सुसाध्वीपरिवारिता ।
आगच्छन्ती महाभद्रे महाभद्रा विलोकिता ॥
अथ निःशेषरूपेभ्यो व्यावृत्ता कीलितेव मे ।
अस्यां निपतिता दृष्टिः संजातात्यन्तनिश्चला ॥
एषापि मां प्रपश्यन्ती संपन्ना स्नेहबन्धुरा ।
निःस्पृहापि महाभागा पूर्वाभ्यासेन सुन्दरि ॥
अथ प्राप्ता ममाभ्यर्णे चिन्तयन्ती गुरोर्वचः ।
अयं नरकगामीति करुणागतचेतना ॥

ततः कन्दमुनिकाले गुणधारणेन सता मया नितरामेतद्गोचरस्याभ्यस्ततया बहुमानस्यानुशीलिततया विनयस्य प्रतिपन्नतया हृदयस्य भाविततया गौरवस्यानुष्ठिततया वत्सलभावस्य प्रादुर्भूतश्चेतसि मे विमर्शः । यदुत कैषा पुनर्भगवती या दृष्टमात्रापि मे हृदयमेवमाह्लादयति नयने शीतलयति शरीरं निर्वापयति अमृतकुण्ड इव मां चिपतीति । ततः कृतो मया भगवत्याः शिरःप्रणामः । दत्तोऽनया धर्मलाभाशीर्वादः अभिहितं च । भो भो महाराज ।

मोक्षसम्पापके प्राप्ते मानुष्ये ते नरोत्तम ।
उन्मार्गगमनान्नैवं गन्तुमन्यत्र युज्यते ॥

निजकर्मापराधेन तस्कराकारधारिणः ।
वध्यस्य नीयमानस्य कृत्वा भावविडम्बनाम् ॥
किं राज्यं सुविलासाः के के भोगाः का विभूतयः ।
किं वा स्वास्थ्यं महाराज चिन्तयेदं स्वतेजसा ॥

किं च, मद्दर्शनात्तदा समुत्पन्नविमर्शायाः संजातमस्या भगवत्या महाभद्राया जातिस्मरणं। स्मृतस्तेन कन्दमुनिकाशादारभ्य समस्तो वृत्तान्तः । प्रादुर्भूतं तदनुसारेण शुभाध्यवसायादवधिज्ञानं । दृष्टं तेन मदीयमपि विचरणं । ततोऽभिहितमनया ।

किं न स्मरसि राजेन्द्र यत्तदा गुणधारणः ।
भवन्नुद्दामलीलाभिर्ललितस्त्वं ममाग्रतः ॥
साम्पराक्षतःपुरं प्राप्य सुखसम्भारपूरितः ।
स्थितो यद्भावराज्ये त्वं तत्किं ते विस्मृतं किल ॥
किं न निर्मलसूरीणां वचनानि स्मरन्ति ते ।
भवप्रपञ्चो यैस्तुभ्यमनन्तोऽपि निवेदितः ॥
यत्प्रसादादवाप्तानि तथा ग्रैवेयकादिषु ।
सुखानि शरणं तेऽस्मै केवलं हि सदागमः ॥
तद्बुध्यस्व महाराज तूर्णं मा मुह्य साम्प्रतम् ।
अहं हि ते समायाता बोधार्थं करुणापरा ॥
अत्रान्तरे च विज्ञाय प्रस्तावं मम सम्मुखम् ।
पुनः प्रवृत्तः सद्बोधः सम्यग्दर्शनसंयुतः ॥
स चान्तरारिवर्गेण रुद्धस्तेन दुरात्मना ।
न शक्नोति समाभ्यर्णमागन्तुं तमसा पथि ॥

स्थितेन चक्रवर्तित्वे महारम्भपरिग्रहाः ।
पापर्द्धयोऽन्यदोषाश्च निरपेक्षेण सेविताः ॥
सर्वत्र मूर्छितो गृद्धो विभ्रतौ विषयेषु च ।
एतावन्तमहं कालं स्थितोऽत्यन्तसुखी किल ॥
एवं च वर्तमानेन मया ते भावशत्रवः ।
विस्मृत्य पूर्ववृत्तान्तं बन्धुबुद्ध्यावधारिताः ॥

ततस्तैर्लब्धप्रसरैर्मे मलिनतरीकृता चित्तवृत्तिः नितरामभिभूतं चारित्रधर्मराजबलं धारितं निरुद्धमभ्यन्तरे तिरोहितं तत्कान्त्यादिकं सुतरामन्तरङ्गमन्तःपुरं । बहिर्भावितोऽहं प्रभुभावात् । प्रकाशितं कर्मपरिणामराज्यं । प्रबलीभूतः पापोदयः । बलितमुद्दामतया महामोहसैन्यं । संस्थापितानि निजनगरादीनि । प्रवृत्ता वोढुं महापूरेण प्रमत्ततानदी । विस्तीर्णीभूतं तद्विलसितं । प्रत्यग्रीकृतश्चित्तविक्षेपमण्डपः । समारिता तृष्णावेदिका । संस्कृतं विपर्यासविष्टरं । परिपोषिता महामोहेन निजाविद्यागात्रयष्टिः । सर्वथा पुनर्नवीभूता समस्ता सामग्री । ततः प्रवृत्तोऽमीषां पर्यालोचः । अभिहितं विषयाभिलाषेण ।

भो भोः सर्वे महीपालाः संचिन्तयत मद्वचः ।
दृष्टदाहाः पुरा यूयं किं वा वः परिकथ्यते ॥
मन्दादरेण निर्नाशं तादृशं वीक्ष्य पूर्वकम् ।
मन्दादरो न युक्तो वः साम्प्रतं कर्तुमत्र भोः ॥
तथा यतध्वमधुना यूयं निष्कण्टकं हि वः ।
यथा संपद्यते राज्यमाकालं सुप्रतिष्ठितम् ॥

ततः प्रतिभातं तत्तेषां मन्त्रिवचनं। अभिहितमेतैः। किं पुनरत्र क्रियत इति। मन्त्रिणोक्तं। इदमिदं च कुरुतेति। ततस्तदुपदेशेन प्रोत्साहितोऽहं ग्राहितश्च स्वयमेव तैः चेतस्थितं कर्मपरिणामसत्कं वर्णनाविरचितं प्रभूतमकुशलनामकं द्रव्यजातं ग्राहयित्वा, च तैरेव ज्ञापितश्चौरतयाहं कर्मपरिणामराजस्य। ततस्तेनादिष्टं। यथा विडम्बनापुरःसरं पापिपञ्जरे नीत्वेमं दुःखमारेण मारयत। तदाकर्ण्य हृष्टास्ते दुरात्मानः। ततो विलिप्तोऽहं कर्ममलभस्मना चर्चितो राजसैरैर्विकहस्तकैः खचितस्तामसैमृणमषीपुण्ड्रकैर्विनाटितः प्रबलरागकल्लोलपरंपरानामिकया लुलमानया कणवीरमुण्डमालया विडम्बितो हृदये घूर्णमानया कुविकल्पमल्लतिरूपया शरावमालया ध्रियमाणेनोपरि पापातिरेकनामकेन जरत्पिटकखण्डेन बद्धाकुशलनामिका लोप्त्रस्वरूपा गलके आरोपितो महत्यसदाचाराभिधाने रासभे वेष्टितः हतान्तमन्त्रिभिर्दुष्टाशयादिभिः समन्ताद्राजपुरुषैर्निन्द्यमानो विवेकिलोकेन समुपहसता कषायाभिधानडिम्भकलकलेन श्रूयमाणेन शब्दादिसम्भोगनामकेन विरसविषमडिण्डिमध्वनिना विजृम्भमाणेन बहिरङ्गलोकसमुदयविलासरूपेण दुर्दान्तजनाट्टहासेन निःसारितोऽहमेव वध्यभूमेरभिमुखं तैर्महामोहादिभिर्महाविदेहरूपहट्टमार्गे निजदेशदर्शनलोलाव्याजेनेति। ततस्तैरानीतोऽहमसुं प्रदेशं। अतो युष्माभिर्मदीयवलकलकलः। गता मम समुखं तथा महाभद्रा। इतयाहं तदा।

> निःशेषं वृत्तमस्यक्ता स्वमेव्यं राजसौम्यया।
> संप्राप्तयेदमुद्धारं राजवसभवेष्टितः॥

ततो भगवतीवाक्यं सूर्यांशुनिकरेरितम्।
सूर्यकान्तसमं दीप्तं जीववीर्यं वरासनम्॥
ततस्तस्य प्रकाशेन तत्तमः प्रलयं गतम्।
लग्नमायोधनं रम्यं चित्तवृत्तौ च सैन्ययोः॥
ततो बलेन निर्भिद्य रिपुवर्गं विबन्धकम्।
समागतौ च मे पार्श्वं तौ सद्बोधमहत्तमौ॥

ततः प्रवृत्तो मे विमर्शः। यदुत किमेषा भगवती जल्पतीति। ततश्चोहापोहमार्गेण गवेषणं कुर्वतो मे समुत्पन्नं जातिस्मरणं। स्मृता गुणधारणावस्था। ततस्तदनुसारेण वर्धमानशुभाध्यवसायस्य मे समागतः सद्बोधवयस्यो विनिर्जित्यात्मप्रतिपक्षमवधिः। तद्बलेन दृष्टा मयासंख्येया द्वीपसमुद्राः। विलोकितोऽसंख्येय एव भवप्रपञ्चः प्रादुर्भूतं सिंहाचार्यकालाभ्यस्तं पूर्वपर्यन्तं सहातिशयैः समस्तश्रुतं आकलितः परिस्फुट इव निर्मलसूरिनिवेदितः समस्तोऽप्यात्मसंसारविस्तारः। तदारात् पुनरसंख्येयतया दृष्टः साक्षादेव निजः परिभ्रमणवृत्तान्तः। ततः पूर्वोक्तेन कारणेन विरचय्येत्थं तस्कररूपतया बहिरपि विडम्ब्यमानमात्मानं समागतो ऽहमिह सर्म महाभद्रया। तदारात्प्रतीत एव ते मदीयव्यतिकरः। ततो भद्रे सुललिते मदनमञ्जरीयमिति प्रसर्पितस्नेहतन्तुना अत्यन्तमुग्धेयमदृष्टपरमार्था वराकीति संजातकरुणातिरेकेण सर्वज्ञागमगोचरबहुमानेन क्लिष्टकर्मविलयतो भवत्यास्तपस्विन्याः प्रतिबोध इति भगवतोऽस्य सदागमस्य पादप्रसादादखिलं मयेदमवधारितमिति

षट्‌रागमे वक्रमानमुत्पादयता संक्षेपेणाप्यनन्ततया षण्मासकथनीयो भगवन्माहात्म्यादेव प्रहरत्रयेणैव निवेदितोऽयमगृहीतसङ्केते इत्युत्-पता मया कुतूहलपरायै भवत्यै स्वयमपि संवेगोपात्तेन समस्तो-ऽप्यात्मभवभ्रमणप्रपञ्चः। तदीदृशं भद्रे तदन्तरङ्गं चौर्यं यन्मयाधुना विहितं इदृशी च तत्र विडम्बना। एवं चाहं स्वगतं परगतं च वृत्तान्तजातं जानामीति।

एतच्चाकर्ण्य विस्मिता सुलखिता भाविता हृदये। पौण्डरी-केणापि गृहीतो मनाग्भावार्थः। ततोऽभिहितमनेन। आर्य किं पुनरधुना ते चित्तवृत्तौ वर्तते। अनुसुन्दरेणोक्तं। आकर्णय।

यावत्संवेगमापन्नः प्रारब्धो निजचेष्टितम्।
निवेदयितुमित्थं भोः पुरतो भवतामहम्॥
तावच्चारित्रधर्मोऽसौ स्वसैन्यपरिवारितः।
प्रस्ताव इति विज्ञाय चलितो मम सम्मुखम्॥

तेन चागच्छता

आनन्दितं स्ववीर्येण पुरं सात्त्विकमानसम्।
अत्यन्तशुभ्रतां नीतो विवेकवरपर्वतः॥
शिखरं चाप्रमत्तत्वं कृतमुच्चैस्तरां वरम्।
उद्दासितं च भूयोऽपि पुरं जैनं प्रतिष्ठितम्॥
स च चित्तसमाधानो मण्डपोऽपि समारितः।
सा च निःस्पृहतावेदिः पुनः सज्जा विनिर्मिता॥
तत्रोल्लसत्प्रभाजालं जीववीर्यं वरासनम्।
कृतं तेन स्वसैन्यं च सर्वथा परितोषितम्॥

ततस्त्वागच्छतस्तस्य परिपूर्णतयाध्वनि।
सर्वप्राणेन तन्नग्नं महामोहमहाबलम्॥
दृष्टं प्रत्यक्षतः सर्वं तच्च युद्धं मयातुलम्।
ततः परिसरे रम्ये चित्तवृत्तेरनीकयोः॥
ततः सद्बोधयुक्तेन सम्यग्दर्शनसंयुता।
मयावष्टम्भितो जातः स राजा जयभाजनम्॥
ततो विघटिताशेषपरपक्षः स्वलीलया।
अवाप्तजयलक्ष्मीकः प्रचुराज्यं निपीड्य च॥
गृहीलान्तःपुरं सर्वं मामकीनं चिरन्तनम्।
राजा चारित्रधर्मोऽसौ मत्समीपमुपागतः॥
ते च निर्नष्टसर्वस्वाः किंचिच्छेषस्वजीविताः।
दीनाः क्षीणा दृढं लीना महामोहादयः स्थिताः॥
चित्तवृत्ताविदं भद्र वर्तते मम साम्प्रतम्।
यच्छत्रवः प्रलीनास्ते प्रहृष्टा वरबान्धवाः॥

अन्यच्च।

प्रपद्य त्रिजगद्वन्द्यं लिङ्गं सर्वज्ञभाषितम्।
अधुना पोषणीयोऽसौ बन्धुवर्गो मयान्तरः॥

एवं च वदता तेनानुसुन्दरेणोपसंहृतं तद्विहिततस्कररूपं आविर्भावितं स्वाभाविकं चक्रवर्तिस्वरूपं कृतसङ्केततया निवृत्ता तस्करविडम्बनासामग्री। समायाता मन्त्रिमहत्तमसामन्ताः। निवेदितस्तेभ्यो निजोऽभिप्रायः। प्राप्तकालतया प्रतिभातोऽमीषां। ततः पुरन्दराय निजसुताय समर्पितान्यनुसुन्दरेण राज्यचिह्नानि

अयं भवतां राजेति स्थापिता राजसमूहाः । सविनयं प्रतिपन्नमेतैः । निर्वर्तितं भगवदभिषेकपूजादिकं निःशेषकरणीयं । निर्गतः सपौरान्तःपुरः श्रीगर्भराजः । कृतानेन सर्वेषामुचिता प्रतिपत्तिः । पुनर्मीलिता परिषत् । प्रवृत्तो महानन्दः ।

तत् क्षणेन तादृशं दृष्ट्वात्यद्भुतमुत्तमम् ।
मुग्धा सुललितात्यन्तं जाता चित्ते चमत्कृता ॥
संजातः पौण्डरीकोऽपि सतोषो विस्मितेक्षणः ।
दृष्ट्वा तत्तादृशं साक्षादनुसुन्दरचेष्टितम् ॥
अथ विज्ञापनापूर्वमनुसुन्दरभूभुजा ।
उत्साहिते तदा सूरौ प्रव्रज्यां दातुमुद्यते ॥
सोऽनुसुन्दरराजेन्द्रः करुणागतचेतनः ।
तां राजपुत्रीं भूयोऽपि प्रत्युवाच ससंभ्रमम् ॥
भद्रे सुललिते बोधस्तवाद्यापि न मानसे ।
संजातो वर्तसे मुग्धे तेनैवं चकितेक्षणा ॥
दोलायमानचित्ता त्वमीषद्भावार्थकोविदा ।
संजाता साम्प्रतं किं तु वेत्सि नो तत्त्वनिर्णयम् ॥
त्वद्बोधार्थं मया ह्येवं गाढनिर्वेदकारकः ।
भवप्रपञ्चो निःशेषः स्वकीयः परिकीर्तितः ॥
तदनेन श्रुतेनेत्थं किं ते नाद्यापि जायते ।
अनन्तदुःखविस्तारे निर्वेदो भवचारके ॥

किं च ।

यत्ते पुरोपमानेन स्वजीवस्य विडम्बनम् ।

मयासंव्यवहारेषु जीवेषु प्रतिपादितम् ॥
तत्किं नो लचितं मुग्धे किं वा नो भावितं यदि।
भवत्या येन निर्व्यया संसारे कुरुषे रतिम् ॥
एकेन्द्रियादिभेदेषु यच्च तिर्यक्षु तिष्ठता।
अनुभूतं मया दुःखं स्फुटं च तव कीर्तितम् ॥
न बुद्धस्तस्य भावार्थः किं त्वयाद्यापि मानसे।
एवं निराकुला मुग्धे येनाद्यापि विलम्बसे ॥
मोचसाधनयोग्येऽपि लब्धे मानुष्यके ऽबले।
हिंसाक्रोधातुरो यां च प्राप्तोऽहं दुःखमालिकाम् ॥
सा किं विभाविता बाले सभावार्था यदि त्वया।
किं वा कथानिकामात्रं भवत्या परिचिन्तितम् ॥
तथा मानमृषावादस्तेयमायापरायणः।
लोभमैथुनदोषान्धो यदहं प्रविडम्बितः ॥
तदप्याकर्ण्य ते मुग्धे यदि नो द्रावितं मनः।
कालदष्टं ततो मन्ये हन्त तद्वज्रनिर्मितम् ॥

तथा।

अनर्थसार्थहेतू तौ महामोहपरिग्रहौ।
मया निवेदितौ श्रुत्वा सर्वदोषसमाश्रयौ ॥
यत्तदैव न बुद्धासि स्थिता त्वं विस्मितेचणा।
तेनागृहीतसङ्केता मया प्रोक्ता पुनः पुनः ॥

किं च।

बाले जडे तथा मन्दे अधमे बालिशेऽपि च।

य: प्रोक्त: स्पर्शनादीनामिन्द्रियाणां सुदारुण: ॥
विपाक: सोऽपि चेदत्र भवत्या नावधारित: ।
अवेदिका ततो मन्ये काष्ठभूतासि सुन्दरि ॥

तथा ।

यत्तन्मनीषिणो वृत्तं यच्च वैचक्षणं वच: ।
या देशना बुधस्योच्चैर्यच्चोत्तमविचेष्टितम् ॥
यच्च कोविदविज्ञानमिन्द्रियाणां निबर्हणे ।
तदाकलय्य को नाम संसारान्न विरज्यते ॥

अन्यच्च ।

अरिबन्धूपमं यत्ते मया मुग्धे निवेदितम् ।
चित्तवृत्तिस्थितं साक्षादन्तरङ्गबलद्वयम् ॥
तच्चाप्याकर्ण्य वृत्तान्तं यदि न प्रतिबुध्यसे ।
तव बोधे विधातव्ये नास्त्युपायस्ततो ऽपर: ॥

तथा ।

तदाकलय्य तादृक्षं वृत्तं कानकशेखरम् ।
तच्च तादृशमालोच्य सौजन्यं नारवाहनम् ॥
विमलं मलहीनस्य विमलस्य च चेष्टितम् ।
त्यागं हरिनरेन्द्रस्य संचिन्त्य कृतविस्मयम् ॥
विवेकमकलङ्कस्य समाकर्ण्य च तादृशम् ।
मुनीनां भूरिरूपं च श्रुत्वा वैराग्यकारणम् ॥
तथापि यदि ते चित्तं बालिके न विरज्जितम् ।
हन्त काकडुकप्राया ततस्त्वं नात्र संशय: ॥

ततोऽगृहीतसङ्केतेत्युच्यमाना मुहुर्मुहुः।
मादृशान्येन वा मुग्धे न शेषं गन्तुमर्हसि॥

तथा।

किं न स्मरसि तद्वाले यत्त्वं मदनमञ्जरी।
सती सती समानीता तया पुण्योदयादिभिः॥
तत्सुखं तादृशः स्नेहस्ते विलासा मनोहराः।
तद्राज्यं ते च वृत्तान्ता सर्वं किं विस्मृतं तव॥
कन्दसाधुं समासाद्य प्रबुद्धा जिनशासने।
समं कुलंधरेणोच्चैर्यत्तदा तच्च बुध्यसे॥
समाख्यन्निर्मलाचार्यः केवलालोकभास्करः।
भवप्रपञ्चं मेऽनन्तं समक्षं ते स्फुटाक्षरैः॥
किं न बुद्धस्त्वया सोऽयं किं वा नैवावधारितः।
येनैवं कीर्त्यमानेऽपि तत्र शून्येव तिष्ठसि॥
विन्यासेनामुना वाले तव बोधविधित्सया।
मया संसारविस्तारः स एव प्रतिपादितः॥
यथा मे पथिकस्येव सर्वेऽमी वासकोपमाः।
एकरूपस्य भूयांसः संपन्ना विविधा भवाः॥
ततः संसारिजीवोऽहमेकरूपोऽपि भावतः।
संसारे नाटकाकारे नानाकारैर्विनाटितः॥
तदेनमपि चेच्छ्रुत्वा निर्वेदस्ते न जायते।
संसारचारकात्तस्मात्ततः किं करवामहै॥

किं च।

नगराण्यन्तरङ्गाणि यानि ये तेषु सूचिताः ।
राजानस्तन्महादेव्यस्ताभ्यां या दृश कन्यकाः ॥
प्रत्येकं तद्गुणा दिव्या विवाहः स च तादृशः ।
तत्राष्टौ मातरो याश्च व्युत्पत्त्यर्थं निवेदिताः ॥
तदिदं सर्वमाकर्ण्य न बुद्धा यदि बालिके ।
हन्त पाषाणभूतायास्ततस्ते किं निवेद्यताम् ॥

तथा ।

किं न स्मरसि तन्मुग्धे यन्मयि स्नेहतत्परा ।
प्रव्रज्यां प्रतिपन्नासि निर्मलाचार्यसंनिधौ ॥
कृत्वा तपस्ततः स्वर्गं प्राप्तासि सुखमालिकाम् ।
भवचक्रे पुनर्भ्रान्त्वा पुनरत्र समागता ॥

किं च ।

संवेगार्थं यदाख्यातं सम्यग्दर्शनदूषणीम् ।
आशातनां तथा कृत्वा जिनादीनां सुदुःखितः ॥
उपार्धपुद्गलावर्तं यथाहमटितो भवे ।
एतावन्तं पुनः कालं किं त्वया तन्न चेतितम् ॥

तथा ।

चतुर्दशापि विज्ञाय पूर्वाणि यदहं गतः ।
भूयोऽप्यनन्तकायादौ मद्गोचरदोषतः ॥
तदप्याकर्ण्य संजाता किं न चित्ते चमत्कृतिः ।
तावकेऽद्यापि येनेत्थं निःसंवेगेव लक्ष्यसे ॥
अवेहि सूक्ष्मबोधेन पूर्वं तन्नामकं वचः ।

विचारय निजे चित्ते सभावार्थं पुनः पुनः ॥
मा मुह्य मारं बुध्यस्व मा विलम्बस्व बालिके।
येन संपद्यते सर्वः सफलो मे परिश्रमः ॥

एवं च वदति तत्रानुसुन्दरराजे समागतमूर्छोऽसौ निपतितः पौण्डरीकः। किमेतदिति संजाता ससंभ्रमा परिषत्। समाकुलीभूतः श्रीगर्भराजः। हा पुत्र किमिदं किमिदमिति वदन्ती तरलिता कमलिनी। समाश्वासितोऽसौ वायुदानेन। ततः प्रोत्फुल्ललोचनः स पितरं प्रत्याह। तातानेनानुसुन्दरराजेन वैक्रियं तस्कररूपं धारयतात्यन्तविरुद्धमिवात्मभ्रमणमाख्यातं तदागमनात्पूर्वमासीत्। ततो ममाबुध्यमानस्य संजातस्तदा विकल्पः यथानया प्रज्ञाविशालया महाभद्रया भगवत्या सार्धं विचार्येदं सभावार्थं भोत्स्ये। यावताधुनेमां सुललितामनुशिष्यमाणामाकर्णयतो मे संजातः कश्चिदनाख्येयः प्रमोदः। तद्वशेन संपन्नेयं चैतन्यनिःसहता। ततः प्रादुर्भूतं मे जातिस्मरणं। भूतपूर्वोऽहमस्य कुलंधरो नाम वयस्यकः। श्रुतो मया तदा निर्मलसूरिणा निवेद्यमानोऽस्य भवप्रपञ्चः। ततः स एवायमनेनेत्थमाख्यात इति त्रुटितो मेऽधुना सन्देह इति। विरक्तं च मे भवचारकाच्चित्तं। ततोऽनुजानीत यूयं येनाहमनेनैव सह दीक्षां गृह्णामीति। तदाकर्ण्य प्ररुदिता कमलिनी। श्रीगर्भराजेनोक्तं। देवि मा रोदीः। यतः।

स्वप्नसूचित एवायं पौण्डरीको नरोत्तमः।
जातस्ते भावुकोऽवश्यं शुद्धधर्मप्रसाधकः ॥

तत्रास्य धारणं युक्तमावयोः किं तु युज्यते।
अनुमजनमेवास्य निर्मिथ्यस्नेहसूचकम् ॥

तथाहि।

बालश्चेत्कुरुते धर्ममेष भोगसुखोचितः।
ततः किं युज्यते स्थातुमावयोर्भवचारके ॥
ततः कमलिनी प्राह हर्षगद्गदया गिरा।
साधु साधु महाराज प्रतिभातमिदं मम ॥
ततोऽनुज्ञाप्य तं पुत्रं यावत्तौ कृतनिश्चयौ।
प्रव्रज्याग्रहणे जातौ स्वयं देवीनरेश्वरौ ॥
तावत्तैर्द्राविताश्चर्यमनुसुन्दरभाषितैः।
ससंभ्रमा च तद्वीक्ष्य पौण्डरीकादिचेष्टितम् ॥
तामुद्दिश्य महाभद्रां प्रबद्धाञ्जलिबन्धुरा।
सा राजपुत्री संवेगात्सानुक्रोशमवोचत ॥
निवेदय महाभागे किं मया पापया कृतम्।
पुरा दुश्चरितं येन जाताहमियमीदृशी ॥
विज्ञातसर्वभावार्थो धन्योऽयं राजदारकः।
संजातः क्षणमात्रेण प्रसङ्गश्रवणादपि ॥
मह्यं पुनरयं साक्षान्मामेवोद्दिश्य सादरम्।
एवं निवेदयत्युच्चैर्महाभागः सविस्तरम् ॥
तथापि मन्दभाग्याहं बोद्धुकामापि चेतसा।
स्फुटं वचनभावार्थं न बुध्ये पशुसन्निभा ॥

ततो महाप्रभावतया सदागमबहुमानस्य गुरुतया संवेगस्य सरलतया हृदयस्य कल्याणहेतुतया भगवत्सन्निधानस्य प्रत्यासन्नतया मोक्षस्य विघटितं भूरिकर्मजालं। पादपतिताया एव संजातं जातिस्मरणं। दृष्टः साक्षादिव मदनमञ्जर्यादिको वृत्तान्तः। ततः समुल्लसितः प्रमोदः। समुत्थाय च निपतितानुसुन्दरचरणयोः। तेनोक्तं। सुललिते किमेतत्। सा प्राह। यद्भगवतः प्रसादाद्भगवति तत्संपन्नमधुना मे। यतः संजातं जातिस्मरणं संपन्नस्तावकवचननिर्णयः विरतं संसारचारकाच्चित्तं। तदनुगृहीताहं मन्दभाग्या भगवता भवता च। अनुसुन्दरेणोक्तं। आर्ये स्वभक्तमनुगृह्णात्येवायं भगवान्। नास्त्यत्र सन्देहः। तथाहि।

अहं भगवतानेन नरकं प्रति गामुकः।
भावचौर्येण बद्धोऽपि साक्षादेवं विमोचितः॥
पापिष्ठा अपि ये सत्त्वाः समासाद्य सदागमम्।
एनं भक्तिं प्रकुर्वन्ति मुच्यन्ते ते न संशयः॥

अन्यच्च।

कृच्छ्रेण किल बुद्धाहं मन्दभाग्येति चिन्तया।
न चावभावना कार्या त्वया भद्रे स्वगोचरे॥
यतोऽहमपि तैः पूर्वमकलङ्कादिभिस्तथा।
न बोधितो यदासीन्मे प्रबलं भूरिपातकम्॥
स्वयोग्यतां पुनः प्राप्य विलीने पापकर्मणि।
त्वत्तः कृच्छ्रतरेणाहं प्रबुद्धो जैनशासने॥
यदा ह्यस्य विलीयेत पापं कालादिहेतुभिः।

जीवस्तदा प्रबुध्येत गुरवः सहकारिणः ॥

सुललितयोक्तं । आर्य सत्यमेवमिदं । विनष्टा मेऽधुना मनस्यव-भावना । केवलं प्रतिपन्नं मया निजजननीजनकयोर्यथाननुज्ञातया प्रव्रज्यानामापि न ग्राह्यं । तत्कथं भविष्यति । अनुसुन्दरेणोक्तं । आर्ये मा भैषीः । समागतावेव ते जननीजनकौ । अत्रान्तरे समुच्छ्रितो बहलो बलकलकलः । स्तोकवेलायां च प्रविष्टावेव मनोनन्दने जिनभवने सपरिकरो मगधसेनराजः सह सुमङ्गलया । ततः प्रणिपत्य जिनेश्वरमभिवन्द्य सूरिसाधुवर्गं च कृताभ्युत्थान-प्रणामः सुललितया प्रणम्य चानुसुन्दरराजमुपविष्टस्तत्समीपे । सुमङ्गलापि विहितनिःशेषप्रतिपत्तिर्विधाय सुललितालिङ्गन-माघ्राय मूर्धदेश उपविष्टा तदन्तिके । आनन्दभराद् गद्गदवागाह ।

वत्से समुत्सुकत्वेन तव दर्शनलालसौ ।
आवां राज्यं परित्यज्य त्वत्समीपमुपागतौ ॥
जनकस्ते रतिं वत्से न प्राप्नोति त्वया विना ।
अन्दभाग्यस्तथा स्नेहादेष दन्दह्यते जनः ॥
कठोरहृदयत्वेन निर्दयत्वेन वा पुनः ।
त्वया निरन्तरं वत्से दत्ता वार्तापि नावयोः ॥

सुललितयोक्तं ।

अम्ब किं बहुनोक्तेन मां प्रयच्छ यथास्थितः ।
युवयोः स्नेहसद्भावो नूनं व्यक्तीभविष्यति ॥

यतः ।

अहं युष्मदनुज्ञाता प्रव्रज्यां पारमेश्वरीम् ।

अन्यच्च ।

एवामेष परिच्छेदः संजातो ज्ञानपूर्वकः ।
त्रयाणामपि धन्यानामनुसुन्दरवाक्यतः ॥
अहं पुनर्न जानेऽच किं करोम्यन्धकल्पिका ।
शून्या ग्रामेयकाकारा स्पष्टसद्बोधवर्जिता ॥
तदिदं मे महाभागे स्वयं बुद्धा सदागमम् ।
पृष्ट्वा कथय निःशेषं कस्य पापस्य जृम्भितम् ॥
ततस्तां तादृशीं वीक्ष्य बाष्पप्लुतविलोचनाम् ।
राजपुत्रीं कृपावेशादब्रवीदनुसुन्दरः ॥

उक्तं च तेन । यथा मुग्धे सुललिते यदि तवास्ति स्वदुश्चरितजिज्ञासा ततोऽहमेव तत्ते निवेदयामि अलं भगवत्याच प्रयोजने प्रयासितया । सुललितयोक्तं । अनुग्रहो मे । निवेदयत्वार्यः । अनुसुन्दरेणोक्तं । अस्ति तावद्गुणधारणेन सता मया सार्धं मदनमञ्जरी संजातवैराग्या प्रव्रजितासि त्वं । अभ्यस्तः क्रियाकलापः । कृतानि भूरितपश्चरणानि । केवलं प्रवृत्ता॰ तदा ते॰ दुर्बुद्धिः । यदुत यद्य कर्तव्यं तदेव क्रियतां किमनेन बहुना रोलेन । ततो न सुखायितस्ते स्वाध्यायकोलाहलः न रुचिता वाचना न प्रतिभाता प्रच्छना नाभिमता परावर्तना नानुष्ठिता त्वयानुप्रेक्षा नानुशीलिता धर्मदेशना । किं तर्हि प्रतिभासिता ते प्रचला अभीष्टा स्वाध्यायोद्वेगेन मौनव्रतचारिता न च संजातस्तव तीव्रोऽभिनिवेशः यतो न विहिता ज्ञानवतां प्रत्यनीकता न कृतमान्तरायिकं न जनितस्तदुपघातः नाचरितस्तत्प्रद्वेषः नासे-

वितस्त्विद्भवः न संपादिता महाशातना किं तु तया कुबुद्धा तेन ज्ञानगर्विष्ठेन तया च प्रमादपरतया कृता भवत्या लघी-यसी श्रुताशातना। ततः समुपार्जितमिदमीदृशं कर्म यत्प्रभा-वादसंख्येयकालं भ्रान्तासि भवचक्रके जातासि चैवंविधा त्वं जडबुद्धिरिति। किं च सुललिते पूर्वभवाभ्यासादेव प्रायशः प्राणिनां भूयांसोऽनुवर्तन्ते भावाः। तथाहि। यथा तदा त्वं मदनमञ्जरी सती पुरुषद्वेषिणी संजाता तथेहापि। अत एव सखीभिर्ब्रह्मचर्यनिरततया ब्राह्मणी त्वमाकारिता। तत्किं मिलत्येष ते प्रत्ययः। सुललितयोक्तं। आर्य किं चात्र भवद्वचने न मिलति। केवलमहमत्र मन्दभाग्या येवमपि कथ्यमाने भास्करोदये कौशि-कवत्तमःपूरितेव तिष्ठामीति। वदन्ती स्थूलमुक्ताफलनिकरमिव नयनसलिलबिन्दुवर्षं मोक्तुं प्रवृत्ता। ततोऽभिहिता सानुसुन्दर-राजेन। राजपुत्रि मुञ्च विषादं। क्षीणप्रायं तेऽधुना तत्कर्म। कुरुष्व सदागमे भगवति भक्तिं। गच्छेमं शरणं। एतदाराधनमूलं हि देहिनां तत्त्वज्ञानं। अज्ञानतमोदलने भास्करभूतो भगवान्। धन्यासि त्वं यास्य पादमूलं प्राप्ता। ततोऽमीभिर्वचनैः पवनैरिव संधुक्षिततीव्रसंवेगानला सा सुललिता सदागमोऽयमिति बुद्ध्या पतिता भगवत्समन्तभद्रसूरिचरणयोः। अभिहितं च।

अज्ञानपङ्कमग्नाया जगन्नाथ सदागम।
त्वमेव मन्दभाग्याया ममोत्तारणवत्सलः॥
शरणं त्वं महाभाग त्वं स्वामी त्वं च मे पिता।
तदेष विमलो नाथ क्रियतां किंकरो जनः॥

अधुनैव ग्रहीष्यामि संसारोत्तारकारिणीम् ॥
ततो यदि युवां सेऽद्य वारणं न करिष्यथः।
प्रव्रज्यां च मया सार्धं निर्विकल्पं ग्रहीष्यथः ॥
ततो मम तयामीषां जनानामुपरि स्फुटम्।
प्रतीतः स्नेहसद्भावो यौष्माकीणो भविष्यति ॥८

एतच्चाकर्ण्य मगधसेननरेन्द्रः सुमङ्गलां प्रत्याह। देवि दत्तो वत्सयावयोर्मुखबन्धः विहितादित एव निरुत्तरता। सुदृष्टपरमार्थेयमधुना वर्तते। कथमन्यथेदृशो वचनविन्यासः। ततो न भवत्येवेयमयुक्तकारिणी। साधु चोक्तमनया। युक्तमेवावयोरनया सह प्रव्रजनं। निर्मिथ्यस्नेहसारसूचकमिदं विशेषतः प्राप्तकालमावयोः। सुमङ्गलयोक्तं। यदाज्ञापयति देवः। ततो हृष्टा सुललिता पतिता महाप्रसाद इति वदन्ती द्वयोरपि चरणयोः। कथितश्चानया संक्षेपतस्तयोरनुसुन्दरादिवृत्तान्तः। संजातः सुमङ्गलामगधसेनयोस्तं श्रुत्वा तोषातिरेकः। प्रादुर्भूतो भावतोऽपि चरणपरिणामः। याचितः सूरिः प्रव्रज्यां। उपबृंहितौ गुरुणा।

ततः समुल्लसत्तोषहृदुत्सवसुन्दरम्।
निपतद्देवसङ्घातसुद्योतितदिगन्तरम् ॥
विलसत्तूर्यनिर्घोषसंक्षुब्धभुवनोदरम्।
अनन्तभूरिविस्तारपूजासत्कारबन्धुरम् ॥
दानसन्मानसङ्गानविधानकरणोद्यतैः।
भूरिभव्यैः समापूर्णं मुनिवृन्दैश्च चारुभिः ॥

तदानुसुन्दरादीनां सद्बोधाध्यक्षणक्षणे।
क्षणमात्रेण संजातं मनोनन्दनकाननम् ॥
ततो मगधसेनेन श्रीगर्भेण च भूभुजा।
स्वीयं पुरंदरायैव राज्यं पात्यतयार्पितम् ॥
ततो निर्वर्त्य निःशेषकर्तव्यं सूरिभिस्तदा।
दीक्षितानि क्षणेनैव सर्वाणि विधिपूर्वकम् ॥
अथ संवेगसद्धर्मसमृतास्वादसन्निभा।
सद्धर्मदेशनाकारि गुरुभिः कलभाषया ॥
तदन्ते ते जातसंतोषाः शेषलोकाः कथंचन।
यथायथं गताः स्थानं देवाश्च हृदि भाविताः ॥
प्रस्थिताश्च महाभद्रासहिता गुरुभिस्तदा।
साध्यः सर्वा निजस्थानमुपदिश्य यथोचितम् ॥
अथादित्योऽपि तद्दृष्ट्वा गुरोः श्रुत्वा च देशनाम्।
शक्तोऽहं नेति मत्वेव गतो द्वीपान्तरे तदा ॥
कृतावश्यककर्तव्ये स्वाध्यायध्यानतत्परे।
ततः साधुगणे जाते प्रदोषे चातिलङ्घिते ॥
अत्यन्तपरितुष्टात्मा कृतकृत्यतयात्मनः।
विविक्ते ध्यानमापन्नो राजर्षिरनुसुन्दरः ॥

ततो विशुध्यमानाभिर्लेश्याभिः संप्राप्तोपशमश्रेणी संपन्नः क्रमेणाथावुपशान्तमोहः। भगवदुपदेशाच्च विज्ञाय तस्मिन्नेव क्षणे तन्निर्याणकालं स्थिताः समाधिकारिणस्तदभ्यर्णे मुनयः। अत्रान्तरे समाप्तमायुष्कं। ततो विमुच्य देहपञ्जरं गतः सर्वार्थसिद्धिविमानं।

संजातस्त्रयस्त्रिंशत्सागरोपमो महर्द्धिर्देवः। प्रभाते विज्ञाय तमनुसुन्दरमुनिव्यतिकरं मीलितश्चतुर्विधोऽपि श्रीश्रमणसङ्घः। विधिना परित्यक्तं मुनिभिस्तच्छरीरं। कृता नरामरैस्तत्पूजेति।

अथ सद्धर्मदायीति ममासाविति चिन्तया।
पूर्वाभ्यस्तदृढस्नेहतन्तुबद्धवशेन च॥
अनुसुन्दरवृत्तान्ते संपन्ने त्वरया तया।
चित्ते सुललिता साध्वी किंचिच्छोकेन पीडिता॥
ततः शोकापनोदार्थं तस्यास्ते वरसूरयः।
सर्वेषामेव पुरतस्तेषामित्थं प्रभाषिता॥
आर्ये न शोचनीयोऽसौ महात्मा नरसत्तमः।
येनैकदिनमात्रेण साधितं सत्प्रयोजनम्॥
यथा पापभरं कृत्वा प्रवृत्तो नरकं प्रति।
यदि गच्छेत्तथैवाच ततः शोच्यो भवोदधौ॥
यः पुनः प्राप्य सद्धर्मं निर्धूय निजकल्मषम्।
सर्वार्थसिद्धिं संप्राप्तो नासौ शोकस्य गोचरः॥
शोचनीयः सतामिष्टो नरः संयमदुर्बलः।
स हि सर्वत्र संसारे भ्रमेद्दुःखभरेरितः॥
न शोचनीयः स्निग्धेन मृतः संयमवान् नरः।
स हि संसारचक्रेऽपि तिष्ठेदानन्दपूरितः॥
स एव च बिभेत्युच्चैर्मरणे समुपस्थिते।
येन नो चरितो धर्मः परलोकसुखावहः॥
सद्धर्मपथ्यपाथेयं यस्मादाय प्रतीच्छते।

मरणं तस्य तत्प्राप्तौ न भीः किं तु महोत्सवः ॥
ज्ञानदर्शनचारित्रतपोरूपाथनाशिनी ।
आराधना चतुःस्कन्धा यस्य स्यात्तस्य किं मृतम् ॥
आनन्दोत्पादकास्तेऽत्र भगवन्तो मुनीश्वराः ।
ये चालयित्वा पापौघं मृताः पण्डितमृत्युना ॥
इत्यार्येऽनार्यकार्येभ्यो निवृत्तो योऽनुसुन्दरः ।
मृतः स शोचनीयस्ते कथं सिद्धप्रयोजनः ॥

किं च ।

स्थितिक्षयात्ततश्च्युत्वा पुष्करार्धस्य भारते ।
अयोध्यायां स गान्धारराजसूनुर्भविष्यति ॥
नाम्ना चामृतसारोऽसौ पद्मिनीचित्तनन्दनः ।
भविष्यति लसद्भूतिर्देववद्दिवि लालितः ॥
क्रमेण यौवनं प्राप्तः कलाकौशलकोविदः ।
विपुलाशयनामानमाचार्यं प्राप्य सुन्दरम् ॥
संभाष्य पितरौ युक्त्या सद्दीक्षां पारमेश्वरीम् ।
ग्रहीष्यति विशुद्धात्मा चरिष्यति चिरं तपः ॥
ततो निर्धूय निःशेषं कर्मजालं समाधिना ।
भवप्रपञ्चं निर्मुच्य यास्यत्येव शिवालये ॥

एवं च स्थिते ।

सर्वेषां स प्रमोदस्य कारणं भव्यदेहिनाम् ।
आर्ये न शोकसन्तापकारणं स नरोत्तमः ॥
अथान्तरे प्रणम्याह पौण्डरीकमहामुनिः ।

इदं निवेदितं नार्यैर्वृत्तं भावि महात्मनः॥
सुन्दरेतरलोकानां तेषामाकालभाविनाम्।
चित्तवृत्तौ पुनस्तस्य को वृत्तान्तो भविष्यति॥

गुरुभिरुक्तं। आकर्णय।

गृहीतभावदीक्षस्य त्यक्तसङ्गस्य तस्य भोः।
साधोरमृतसारस्य सतस्तत्र भवे पुनः॥
क्षान्तिर्दया च ते भार्ये मृदुतासत्यते च ते।
ऋजुताचौरते ये च ते ब्रह्मरतिमुक्तते॥

तथा

विद्यानिरीहते यच्च स्थितं लीनतया पुरा।
मैत्र्यं चारित्रधर्माद्यं सर्वमाविर्भविष्यति॥
तथान्याश्च धृतिश्रद्धामेधाविविदिषासुखाः।
मैत्रीप्रमुदितोपेक्षाविज्ञप्तिकरुणादयः॥
तस्यान्तरङ्गसङ्घार्याश्चित्तवृत्तौ महात्मनः।
सुखसन्दोहदायिन्यो भविष्यन्ति यथा पुरा॥
ततस्तत्तादृशं राज्यमनन्ताह्लादसुन्दरम्।
पालयंश्चिखिलांस्तत्र रिपूनुन्मूलयिष्यति॥
आरूढः क्षपकश्रेण्यां पुनरेष महाबलः।
चतुरो घातिसंज्ञांस्तान् सर्वथा चूर्णयिष्यति॥
संप्राप्य केवलालोकं कृत्वा जगदनुग्रहम्।
विधाय च समुद्घातं सर्वयोगान्निरुध्य च॥
अथ पर्यन्तकालेऽसौ शैलेशीं प्राप्य सत्क्रियाम्।

निःशेषं रिपुसङ्घातं सर्वथा दलयिष्यति ॥
ततो विहितकृत्योऽसौ संपूर्णो निजबान्धवैः ।
संप्राप्तो निर्वृतौ पुर्यां भोक्ष्यते राज्यसत्फलम् ॥
अनन्तानन्दसंज्ञानवीर्यदर्शनपूरितः ।
निर्नष्टसकलाबाधः सर्वकालं भविष्यति ॥
इतश्च तेन सा त्यक्ता कुभार्या भवितव्यता ।
महामोहबले क्षीणे तदा शोकं करिष्यति ॥

कथं ।

दुर्बुद्धा बत जातैवमहं भग्नमनोरथा ।
महामोहादिसैन्ये या संजाता पक्षपातिनी ॥
समस्तमपि जानत्या न विज्ञातमिदं मया ।
प्रसिद्धं निखिले लोके यद्बालैरपि गीयते ॥

किं तत् ।

ध्रुवाणि यः परित्यज्य अध्रुवाणि निषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥
यद्वा ममापि को दोषो रूढेयमपि वर्तिनी ।
मुह्यत्येव जनो ह्येष समस्तः स्वप्रयोजने ॥
एवं निश्चित्य सा शेषजनकार्यपरायणा ।
स्थित्वाबभावना तूष्णीं संस्थिता भवितव्यता ॥
तदिदं ते समासेन पौण्डरीकसुने मया ।
आनुसुन्दरमाख्यातमन्तरङ्गं विचेष्टितम् ॥
एतच्चाकर्ण्य ते तुष्टाः पौण्डरीकादिसाधवः ।

चित्ते सुललिता जाता सर्वथा शोकवर्जिता ॥
ततः सा चिन्तयामास गाढं संविग्नमानसा ।
पूर्वबोधमनुस्मृत्य यथाहं गुरुकर्मिका ॥
तदिदं मामकं नूनं जीवरत्नं न शुध्यति ।
संवेगानिलसारेण विना तीव्रतपोऽग्निना ॥
एवं विचिन्त्य सा धन्या महत्तराणामनुज्ञया ।
कष्टैस्तपोभिरात्मानं निस्तताप कृतोद्यमा ॥

कथं ।

चतुर्थषष्ठदशमद्वादशादिविचित्रया ।
रराज रागनिर्मुक्ता रत्नावल्या विराजिता ॥
विचित्रचर्यासुवर्णेन निर्मितास्याश्चतुर्लता ।
शरीरे संस्थिता रम्या शुभ्रशुभे कनकावली ॥
चतुर्थादितपःकर्मसन्मौक्तिकविशुद्धया ।
ददृशे सा महाभागा मुक्तावल्या विभूषिता ॥
लघुभिश्च महद्भिश्च सिंहविक्रीडितैस्तथा ।
क्रीडानिवृत्तबुद्ध्यापि क्रीडितं सिंहलीलया ॥
तथा भद्रा महाभद्रे सर्वतोभद्रया सह ।
भद्रोत्तरा च प्रतिमा चकार तनुभूषणम् ॥
आचाम्लवर्धमानेन वर्धमाना प्रतिक्षणम् ।
क्रियमाणेन सा जज्ञे ध्यानेन गतकल्मषा ॥
चान्द्रायणं चरन्त्या च निजं कुलनभस्तलम् ।
तयैवोद्योतितं मन्ये चन्द्रलेखासमानया ॥

आसेव्य यवमध्यानि वज्रमध्यानि चानघा ।
साऽलं सुललिता जाता निःस्पृहा भवचारके ॥
तदेवमादिभिर्धन्या तपोभिर्निजकल्मषम् ।
सा तदा लब्धसद्वीर्या चालयन्ती व्यवस्थिता ॥
इतश्च पौण्डरीकोऽपि ज्ञानाभ्यासपरायणः ।
कालक्रमेण संपन्नो गीतार्थो विजितेन्द्रियः ॥
ततोऽसावागमार्थस्य सर्वसारं सुनिर्मलम् ।
जिज्ञासुर्विनयेनेत्थं गुरुं पप्रच्छ भावतः ॥
भदन्त द्वादशाङ्गस्य विस्तीर्णस्योदधेरिव ।
भगवद्भाषितस्यास्य किं सारमिति कथ्यताम् ॥
समन्तभद्रगुरुभिस्ततः प्रोक्तमिदं वचः ।
आर्य सारोऽत्र विज्ञेयो ध्यानयोगः सुनिर्मलः ॥
यतः ।
मूलोत्तरगुणाः सर्वे सर्वा चेयं बहिष्क्रिया ।
मुनीनां श्रावकाणां च ध्यानयोगार्थमीरिता ॥
तथाहि ।
मनःप्रसादः साध्योऽत्र मुक्त्यर्थं ज्ञानसिद्धये ।
अहिंसादिविशुद्धेन सोऽनुष्ठानेन साध्यते ॥
अतः सर्वमनुष्ठानं चेतःशुद्ध्यर्थमिष्यते ।
विशुद्धं च यदेकाग्रं चित्तं तद्ध्यानमुत्तमम् ॥
तस्मात्सर्वस्य सारोऽस्य द्वादशाङ्गस्य सुन्दर ।
ध्यानयोगः परं शुद्धः स हि साध्यो मुमुक्षुणा ॥

शेषानुष्ठानमप्येवं यत्तदङ्गतया स्थितम् ।
मूलोत्तरगुणाद्यं तत्सर्वं सारमुदाहृतम् ॥
अथाकर्ण्य गुरोर्वाक्यं पौण्डरीकमहामुनिः ।
पुनः प्रोवाच शान्तात्मा ललाटे कृतकुड्मलः ॥
भदन्त बालकालेऽपि समासीदति कौतुकम् ।
मोक्षमार्गे ततः पृष्टा मया भूरिकुतीर्थिकाः ॥
यथा भो भो महाभागाः किं तत्तत्त्वं परं मतम् ।
निःश्रेयसकरं सारं रहस्यं परमाक्षरम् ॥
ततो यथायथं सर्वैर्मतमाश्रित्य तैर्मम ।
निवेदितं परं तत्त्वं तीर्थिकैस्तच्च कीदृशम् ॥
एके प्राहुर्यथा सर्वं हिंसादि क्रियतामिति ।
केवलं बुद्धिलेपोऽत्र रक्षणीयो मुमुक्षुणा ॥

यतः ।

यस्य बुद्धिर्न लिप्येत हत्वा सर्वमिदं जगत् ।
आकाशमिव पङ्केन नासौ पापेन लिप्यते ॥
अन्ये प्राहुर्यथा सर्वं पापं कृत्वा हि मानवाः ।
मुच्यन्ते क्षणमात्रेण ये स्मरन्ति महेश्वरम् ॥

यतः ।

छित्त्वा भित्त्वा च भूतानि कृत्वा पापशतानि च ।
स्मरेदेकं विरूपाक्षं सर्वपापैः प्रमुच्यते ॥
अन्यैस्तु पापशुद्ध्यर्थं विष्णुध्यानमुदाहृतम् ।
तद्धि शेषमलक्षालि यतः प्रोक्तमिदं वचः ॥

अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ।
यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥
अन्ये पापाशनं मन्त्रं प्राहुः पापनिबर्हणम् ।
अन्ये वायुजयं प्राज्ञाः प्राहुर्मोक्षस्य साधनम् ॥

यथा ।

ध्यानेनोद्वर्तते यत्तत्पौण्डरीकं हृदि स्थितम् ।
विघाटितदलं रम्यं मनोलिसुखदं परम् ॥
तद्द्वारेण निलीयेत मनोलिः परमे पदे ।
तस्य यो लभ्यते नादस्तत्तत्वमपरे जगुः ॥
तथान्ये पूरकं प्राहुः कुम्भकं रेचकं तथा ।
तस्यैव पुण्डरीकस्य पवने प्रविघाटिकम् ॥
अन्ये प्राहुः पुनर्बिन्दुं कुन्देन्दुस्फटिकप्रभम् ।
तिर्यगूर्ध्वमधश्चैव सर्पन्तं ज्ञानकारणम् ॥
अन्ये परां शिरां प्राहुरूर्ध्वाधो लेपितां किल ।
परमाक्षरमाचा सा सैवामृतकलोच्यते ॥
नासाग्रे भ्रूलतामध्ये बिन्दुं देवमथापरे ।
तुषारहारविमलं ध्येयमाहुश्चलस्थिरम् ॥
आग्नेयमण्डले स स्यान्मीलिते रक्तवर्णकः ।
माहेन्द्रे पीतकः कृष्णो वायव्ये वारुणे सितः ॥

तत्र ।

पीतः सुन्दरविन्दुेन रक्तमापेषु चिन्त्यते ।
कृष्णोऽभिचारिके कार्ये पुष्टिदो धवलो मतः ॥

अन्येऽप्याहुर्यथा साध्यो नाडीमार्गो मुमुक्षुणा।
इडापिङ्गलयोर्ज्ञेयं नाड्योः सञ्चारकर्म च॥
नाडीचक्रस्य विज्ञेयः प्रचारो दक्षिणेतरः।
तद्द्वारेण च मन्तव्यं बहिष्कालबलादिकम्॥
पद्मासनं विधायोच्चैर्घण्टानादायतं कलम्।
ॐकारोच्चारणं प्राहुरपरे शान्तिदायकम्॥

तथान्ये प्राहुर्यथा।

आ नाभेः सरलं प्राणं विसतन्तुसमं शनैः।
मूर्धान्तस्तालुरन्ध्रेण निर्गच्छन्तं विचिन्तयेत्॥
आदित्यमण्डलस्थं वा वक्षोराजीवसंस्थितम्।
आद्यं पुमांसमपरे तथा ध्येयतया विदुः॥
चक्षुषोर्भ्रूसंस्थितं नित्यं पुमांसं परमं तथा।
लसदंशुशताकीर्णं ध्येयमाहुर्मनीषिणः॥
आकाशमात्रमपरे विश्वमन्ये चराचरम्।
आत्मस्थं चित्तमित्याहुरपरे ब्रह्म शाश्वतम्॥

एवं च स्थिते।

यथा नार्यैर्समाख्यातो द्वादशाङ्गस्य सारकः।
ध्यानयोगस्तथा तीर्थ्यैः स एव प्रतिपादितः॥
तत्किं सर्वेऽपि ते तीर्थ्या भवेयुर्मोक्षसाधकाः।
ध्यानयोगबलेनैव सारो यद्येष वर्तते॥
किं चेदं ध्येयनानात्वमपरापरयोगिनाम्।
एकश्च मोक्षे संसाध्ये बलवान्मम संशयः॥

तदेनमधुना नाथ रूढं सन्देहपादपम् ।
स्ववाक्यदन्तिसंवीर्यादुन्मूलयितुमर्हथ ॥

सूरिणोक्तं ।

आर्य सामान्यगीतार्थस्त्वमेवं तेन भाषसे ।
विशेषतो न विज्ञातमैदम्पर्यं जिनागमे ॥
एते हि तीर्थ्याः सर्वेऽपि कूटवैद्यसमानकाः ।
जिनसद्वैद्यशास्त्रस्य पल्लवग्राहिणो मताः ॥

तथा चात्र कथानकं ।

एतस्मिन्नगरे भूरिरोगग्रस्तसमस्तलोके विद्यते कश्चिदेक एव महावैद्यः । स चोत्पन्नदिव्यज्ञानः स्रष्टा समस्तसंहितानां नाशको निःशेषरोगाणामुपकारनिरतो लोकानां । तथापि ते लोका अधन्यतया न प्रतिपद्यन्ते तस्य वचनं केचित्तु धन्यतमाः प्रतिपद्यन्ते । स चानवरतं विधत्ते स्वशिष्येभ्यो व्याख्यानं । तच्चोपश्रुत्या प्रसङ्गागतैरवधारितं स्वबुद्ध्या कियदप्यन्यधूर्तैः । ततस्ते तन्मवमात्रतुष्टाः स्वपूजार्थं वैद्यकमाचरितुमारब्धाः । तेषां तु लोकानामधन्यतयैव ते नितरां प्रतिभासन्ते । ततस्तैः पण्डितंमन्यतया विरचिता निजनिजसंहिताः । ग्रथितानि कैश्चित्तान्युपश्रुत्यावधारितानि सद्वैद्यवचनान्यनुसरद्भिः कानिचित्तासां मध्ये वचनानि । अन्यैः पुनरेकान्तविपरीतसद्वैद्यवचनानामतिपाण्डित्याभिमानेन संहिता विहिताः । विविधरुचयश्च ते रोगिणो नागरकाः । ततस्तेषामपि कूटवैद्यानां मध्ये कश्चिदेव केषांचिच्चित्ते प्रतिभाति नापरः । ततः प्रसिद्धिं गताः सर्वेषां समन्विन्यो वैद्यशाखाः व्याख्याताः सर्वैर्विने-

येभ्यो निजनिजमंहिता वाचालतया। प्रसिद्धास्तेऽपि महावैद्यतया।
अवधीरित इव भूरिलोकैरसौ मौलमहावैद्यः ।

एवं च स्थिते ।

ये ते मौलमहावैद्यसत्क्रियां विधिपूर्वकम् ।
कुर्वन्ति रोगिणस्तावत्ते भवन्त्येव नीरुजः ॥

किं च ।

तत्र जीवति सद्वैद्ये रोगैर्मुक्ता यथा जनाः ।
तस्यां सुवैद्यशालायां भूयांसो विहितक्रियाः ॥
तथा मृतेऽपि सा शाला सविनेया समंहिता ।
संजाता सर्वलोकानां रोगच्छेदविधायिनी ॥
ये पुनः कूटवैद्यानां रोगिणो गोचरं गताः ।
तेषां ते रोगजालेन नितरां परिपीडिताः ॥

किं च ।

यथा जीवन्तु तच्छाला लोकानामपकारिकाः ।
मृतेष्वपि तथा जाताः सविनेयाः ससंहिताः ॥
यस्तु तास्वपि दृश्येत वैद्यशालासु कश्चन ।
विशेषो रोगिणां हन्त रोगतानवलक्षणः ॥
सर्वरोगविमोक्षो वा कथंचिद्दैवयोगतः ।
तासु स्थितानां शालासु यदि जायेत देहिनाम् ॥
सोऽपि तेषां गुणो नूनं सर्वव्याधिनिबर्हिणाम् ।
यानि सद्वैद्यशास्त्रस्य गृहीतानि पदानि तैः ॥

तथाहि ।

येस्तानि न गृहीतानि सर्वथा दुष्टबुद्धिभिः ।
एकान्तेनैव ते जाता व्याधिवृद्धिविधायकाः ॥

किं बहुना ।

सा महावैद्यशालेका ज्ञेया रोगनिवर्हणी ।
तत्संहितानुसारेण शेषा अपि कदाचन ॥

यतः ।

वातः पित्तं कफश्चेति सर्वरोगविधायकम् ।
दोषत्रयं विजानीते सुवैद्यस्तस्य भेषजम् ॥
कूटवैद्या न जानन्ति स्वयं तत्र विरोधतः ।
तेभ्यो योऽपि विशेषः स्याद्धन्यानां रोगिणां क्वचित् ॥
सोऽयं घुणाक्षरन्यायः स्याद्दोषत्रयहानितः ।
तस्मात्स एव सद्वैद्यस्तत्र रोगचिकित्सकः ॥

तदिदं ते समासेन मया वैद्यकथानकम् ।
पौण्डरीक समाख्यातं सन्देहदलनं परम् ॥
भवोऽत्र नगरं ज्ञेयः सर्वरोगप्रपीडितः ।
एकस्तत्र महावैद्यः सर्वज्ञः परमेश्वरः ॥
संजातः केवलज्ञानः शिष्टसिद्धान्तसंहितः ।
सर्वलोकोपकारी च कर्मरोगनिवर्हणः ॥
तथापि गुरुकर्माणः संसारोदरचारिणः ।
भूयांसो न प्रपद्यन्ते जीवास्तं परमेश्वरम् ॥
ये भव्या लघुकर्माणो जीवा धन्यतमाः परम् ।
त एव तं प्रपद्यन्ते सद्वैद्यं परमेश्वरम् ॥

सदेवमनुजायां च स सभायां यदातुलम्।
शिष्येभ्यो देशयत्युच्चैर्मोक्षमार्गं जगद्गुरुः॥
तदा देवा मनुष्याश्च केचित्तां कलुषाशयाः।
प्रसङ्गेनागतास्तत्र शृण्वन्ति जिनदेशनाम्॥
अनेकनयगम्भीरां तां श्रुत्वा मन्दबुद्धयः।
अन्यथा कल्पयन्त्येते मिथ्यात्वाध्मातचेतसः॥
ततस्ते जिनसद्देशाद्दुपसृत्य बहिर्गताः॥
स्वशास्त्राणि प्रकुर्वन्ति कूटवैद्यसमानकाः॥

तत्र।

ये तावदास्तिकाः केचित्तीर्थ्याः सांख्यादयो मताः।
जिनवाक्यानुसारेण तैर्ग्रन्थेषु कियन्त्यपि॥
कृतानि चारुवाक्यानि शेषमभ्यूहितं स्वयम्।
स्वपाण्डित्याभिमानेन कूटवैद्यैरिवाखिलम्॥
ततः सर्वज्ञसद्वाक्यभूषितानि महीतले।
तच्छास्त्राण्यपि राजन्ते प्रसिद्धिं प्रगतानि च॥
ये पुनर्नास्तिकाः पापा बृहस्पतिसुतादयः।
सर्वं तैर्जिनशास्त्रस्य विपरीतं विकल्पितम्॥
तेऽपि वाचालताधारास्तयाविधजने गताः।
प्रसिद्धिं तस्करस्येह प्रागल्भ्यं हि महत्तरम्॥

तथा।

नानारुचित्वाल्लोकानां प्रतिभान्ति यथाशयम्।
केषांचिदेव ते तीर्थ्याः केचिदेव न चापरे॥

अन्यच्च।

कणभक्षाक्षपादाद्या ये तीर्थ्याः शास्त्रकारिणः।
तैस्तानि निजशास्त्राणि शिष्येभ्यः कथितानि भोः॥
प्रवर्तितानि तीर्थानि शिष्टानुष्ठानमालिका।
तदिदं वैद्यशालानामुत्थानमभिधीयते॥

एवं च स्थिते।

ये सर्वज्ञमहावैद्यशालायां कर्मरोगिणः।
चिकित्सां कुर्वते धन्यास्ते भवन्त्येव नीरुजः॥
आस्तिकेषु च तीर्थ्येषु कर्मरोगस्य तानवम्।
तद्दृश्यते तथा सर्वं मोक्षो वा श्रूयते क्वचित्॥
सोऽपि सर्वज्ञवाक्यानां तेषामेव गुणो ननु।
यानि तैर्निजशास्त्रेषु ग्रथितानि कथंचन॥
यद्वा जातिस्मरादीनां तेषां सर्वज्ञभाषितम्।
हृदि स्थितं भवत्येव कर्मरोगनिबर्हणम्॥
यथा दोषत्रयं वैद्यः शारीरं तु चिकित्सति।
रागद्वेषमहामोहांस्तथा सर्वज्ञ एव हि॥
तस्माच्चास्त्येव सर्वज्ञवैद्यशास्त्रबहिःस्थिता।
चिकित्सा कर्मरोगाणां नूनमेतेन हेतुना॥

तथाहि।

एकान्तविपरीता ये जैनशास्त्रस्य नास्तिकाः।
एकान्तेनैव ते पापा दीर्घसंसारकारकाः॥
तथापि क्लिष्टजन्तूनां तद्वाक्यमर्थकामयोः।

सदेवमनुजायां च स सभायां यदातुलम्।
शिष्येभ्यो देशयत्युच्चैर्मोक्षमार्गं जगद्गुरुः॥
तदा देवा मनुष्याश्च केचित्तां कलुषाशयाः।
प्रसङ्गेनागतास्तत्र शृण्वन्ति जिनदेशनाम्॥
अनेकनयगम्भीरां तां श्रुत्वा मन्दबुद्धयः।
अन्यथा कल्पयन्त्येते मिथ्यात्वाध्मातचेतसः॥
ततस्ते जिनसद्देशादुपश्रुत्य बहिर्गताः॥
स्वशास्त्राणि प्रकुर्वन्ति कूटवैद्यसमानकाः॥

तत्र।

ये तावदास्तिकाः केचित्तीर्थ्याः सांख्यादयो मताः।
जिनवाक्यानुसारेण तैर्ग्रन्थेषु कियन्त्यपि॥
कृतानि चारुवाक्यानि शेषमभ्यूहितं स्वयम्।
स्वपाण्डित्याभिमानेन कूटवैद्यैरिवाखिलम्॥
ततः सर्वज्ञसद्वाक्यभूषितानि महीतले।
तच्छास्त्राण्यपि राजन्ते प्रसिद्धिं प्रगतानि च॥
ये पुनर्नास्तिकाः पापा बृहस्पतिसुतादयः।
सर्वं तैर्जिनशास्त्रस्य विपरीतं विकल्पितम्॥
तेऽपि वाचालताधारास्तथाविधजने गताः।
प्रसिद्धिं तस्करस्येह प्रागल्भ्यं हि महत्तरम्॥

तथा।

नानारुचित्वाल्लोकानां प्रतिभान्ति यथाशयम्।
केषांचिदेव ते तीर्थ्याः केचिदेव न चापरे॥

अन्यच्च ।

कणभक्षाक्षपादाद्या ये तीर्थ्याः शास्त्रकारिणः ।
तैस्तानि निजशास्त्राणि शिष्येभ्यः कथितानि भोः ॥
प्रवर्तितानि तीर्थानि शिष्टानुष्ठानमालिका ।
तदिदं वैद्यशालानामुत्थानमभिधीयते ॥

एवं च स्थिते ।

ये सर्वज्ञमहावैद्यशालायां कर्मरोगिणः ।
चिकित्सां कुर्वते धन्यास्ते भवन्त्येव नीरुजः ॥
आस्तिकेषु च तीर्थ्येषु कर्मरोगस्य तानवम् ।
तद्दृश्यते तथा सर्वं मोक्षो वा श्रूयते क्वचित् ॥
सोऽपि सर्वज्ञवाक्यानां तेषामेव गुणो ननु ।
यानि तैर्निजशास्त्रेषु ग्रथितानि कथंचन ॥
यद्वा जातिस्मरादीनां तेषां सर्वज्ञभाषितम् ।
हृदि स्थितं भवत्येव कर्मरोगनिवर्हणम् ॥
यथा दोषत्रयं वैद्यः शारीरं तु चिकित्सति ।
रागद्वेषमहामोहांस्तथा सर्वज्ञ एव हि ॥
तस्मात्तास्वेव सर्वज्ञवैद्यशास्त्रबहिःस्थिता ।
चिकित्सा कर्मरोगाणां नूनमेतेन हेतुना ॥

तथाहि ।

एकान्तविपरीता ये जैनशास्त्रस्य नास्तिकाः ।
एकान्तेनैव ते पापा दीर्घसंसारकारकाः ॥
तथापि क्लिष्टजन्तूनां गृद्धानामर्थकामयोः ।

सदेवमनुजायां च स सभायां यदातुलम् ।
शिष्येभ्यो देशयत्युच्चैर्मोक्षमार्गं जगद्गुरुः ॥
तदा देवा मनुष्याश्च केचित्तां कलुषाशयाः ।
प्रसङ्गेनागतास्तत्र शृण्वन्ति जिनदेशनाम् ॥
अनेकनयगम्भीरां तां श्रुत्वा मन्दबुद्धयः ।
अन्यथा कल्पयन्त्येते मिथ्यात्वाघातचेतसः ॥
ततस्ते जिनसद्वैद्यादुपसृत्य बहिर्गताः ॥
स्वशास्त्राणि प्रकुर्वन्ति कूटवैद्यसमानकाः ॥

तत्र ।

ये तावदास्तिकाः केचित्तीर्थ्याः सांख्यादयो मताः ।
जिनवाक्यानुसारेण तैर्ग्रन्थेषु कियन्त्यपि ॥
कृतानि चारुवाक्यानि शेषमभ्यूहितं स्वयम् ।
स्वपाण्डित्याभिमानेन कूटवैद्यैरिवाखिलम् ॥
ततः सर्वज्ञसद्वाक्यभूषितानि महीतले ।
तच्छास्त्राण्यपि राजन्ते प्रसिद्धिं प्रगतानि च ॥
ये पुनर्नास्तिकाः पापा बृहस्पतिसुतादयः ।
सर्वं तैर्जिनशास्त्रस्य विपरीतं विकल्पितम् ॥
तेऽपि वाचालतासारास्तथाविधजने गताः ।
प्रसिद्धिं तस्करस्येह प्रागल्भ्यं हि महत्तरम् ॥

तथा ।

नानारुचित्वाल्लोकानां प्रतिभान्ति यथाशयम् ।
केषांचिदेव ते तीर्थ्याः केचिदेव न चापरे ॥

अन्यच्च ।

कणभक्षाक्षपादाद्या ये तीर्थ्याः शास्त्रकारिणः ।
तैस्तानि निजशास्त्राणि शिष्येभ्यः कथितानि भोः ॥
प्रवर्तितानि तीर्थानि शिष्टानुष्ठानमालिका ।
तदिदं वैद्यशालानामुत्थानमभिधीयते ॥

एवं च स्थिते ।

ये सर्वज्ञमहावैद्यशालायां कर्मरोगिणः ।
चिकित्सां कुर्वते धन्यास्ते भवन्त्येव नीरुजः ॥
आस्तिकेषु च तीर्थ्येषु कर्मरोगस्य तानवम् ।
तद्दृश्यते तथा सर्वं मोक्षो वा श्रूयते क्वचित् ॥
सोऽपि सर्वज्ञवाक्यानां तेषामेव गुणो ननु ।
यानि तैर्निजशास्त्रेषु ग्रथितानि कथंचन ॥
यद्वा जातिस्मरादीनां तेषां सर्वज्ञभाषितम् ।
हृदि स्थितं भवत्येव कर्मरोगनिबर्हणम् ॥
यथा दोषत्रयं वैद्यः शारीरं तु चिकित्सति ।
रागद्वेषमहामोहांस्तथा सर्वज्ञ एव हि ॥
तस्मात्तात्त्वेव सर्वज्ञवैद्यशास्त्रबहिःस्थिता ।
चिकित्सा कर्मरोगाणां नूनमेतेन हेतुना ॥

तथाहि ।

एकान्तविपरीता ये जैनशास्त्रस्य नास्तिकाः ।
एकान्तेनैव ते पापा दीर्घसंसारकारकाः ॥
तथापि क्लिष्टजन्तूनां गृद्धानामर्थकामयोः ।

त एव प्रतिभान्त्युच्चैर्नास्तिकाः साम्प्रतेक्षिणाम् ॥
तदेवमार्य शेषाणि तीर्थानि जिनभाषितात्
विनिर्गतानि तेनेदं व्यापकं जिनदर्शनम् ॥

एवं च स्थिते।

यद्रागद्वेषमोहानां प्रतिपक्षतया स्थितम्।
सत्यं भूतदया ब्रह्म शौचमिन्द्रियनिग्रहः ॥
औदार्यं सुन्दरं वीर्यमाकिञ्चन्यमलोभता।
गुरुभक्तिस्तपो ज्ञानं ध्यानमन्यच्च तादृशम् ॥
आस्तिकेष्वपि तीर्थेषु तत्स्वरूपेण सुन्दरम्।
किं तु नो राजते तेषु यथा याचितभूषणम् ॥
तद्धि स्वकल्पितैः शेषैः सर्वज्ञवचनातिगैः।
यागहोमादिभिः सार्धं मीलितं न विराजते ॥
समस्तोपाधिशुद्धानां गुणानां प्रतिपादकम्।
तदेवं सर्वतीर्थेषु स्थितं सर्वज्ञदर्शनम् ॥
तच्च सद्भाविकं जैनं तीर्थं सर्वगुणात्मकम्।
सर्वत्र संस्थितं ज्ञेयं न लिङ्गं धर्मकारणम् ॥
अतो मदुक्तमार्गेण यथा ते तीर्थिकास्तथा।
ध्यानयोगबलेनैव किं स्युर्मोक्षस्य साधकाः ॥

तत्र।

शुद्धानुष्ठानविकलं ध्यानं यद्दुष्टशीलिनः।
ध्यायन्ति तद्वचोमात्रं नास्थाकारि विवेकिनाम् ॥
यतोऽत्र तण्डुलस्येव जीवस्य तुषसन्निभे।

शुद्धे मले सदाचारध्यानाच्छोध्यस्तथेतरः ॥
यः पुनर्मलिनारम्भी वहिर्ध्यानपरो भवेत्।
नासौ ध्यानाद्भवेच्छुद्धः सतुषस्तण्डुलो यथा ॥
सर्वोपाधिविशुद्धेन ततो जीवेन साध्यते।
ध्यानयोगः परं श्रेष्ठो यः स्यान्मोक्षस्य साधकः ॥
यत्र स्यात्तादृशो जीवो निर्मलात्मा कथंचन।
स तीर्थिकोऽपि भावेन वर्तते जिनशासने ॥
तस्माज्जैनेन्द्रमेवैकं शासनं भवनाशनम्।
तीर्थिका अपि तत्रस्था भवन्त्येव भवच्छिदः ॥

किं बहुना।

वातपित्तकफानां भो निःशेषगदकारिणाम्।
शमाद्यारोग्यजननं यथा लोके सुभेषजम् ॥
तत्कूटभिषजापीह प्रयुक्तं परमार्थतः।
कश्चिद्गुणाचरन्यायाद्यथा सद्वैद्यसम्मतम् ॥
तथा सर्वमनुष्ठानं यद्भवेन्नाशकारणम्।
सरागद्वेषमोहानां चित्ताखिलमलात्मनाम् ॥
तल्लोके सर्वतीर्थेषु साक्षाज्जैनेऽपि वा मते।
यथा तथा कृतं स्यात्तु श्रेयं सर्वज्ञसम्मतम् ॥
यत्पुनश्चित्तमालिन्यकारकं मोक्षवारकम्।
यतिश्रावकरूपेण कुर्युः कर्म मतादिनः ॥
तज्जैनेन्द्रमताद् गाढं बहिर्भूतं न संशयः।
किं पुनर्लौकितीर्थानां कर्तव्यं बहुदोषलम् ॥

तदिदं भावसत्तीर्थमवतीर्य तरन्ति भोः।
संसारसागरं जीवाः पर्याप्तं वेपचिन्तया॥
यच्च ते ध्येयनानात्मय सन्देहकारणम्।
समाकर्णय तत्रापि परमार्थो निवेद्यते॥
पापं हि दुष्टकल्लोलैः पुण्यं गृह्णाति सुन्दरैः।
चैत्तैरात्मा तयोभाभ्यामौदासीन्येन मुच्यते॥
स्वभाव एष जीवस्य यत्तथापरिणामभाग्।
बध्यते पुण्यपापाभ्यां माध्यस्थ्ये तु विमुच्यते॥
ते च हिंसाद्यनुष्ठानाद् भ्रमकालुष्यकारकात्।
जायन्ते चित्तकल्लोला यथापथ्याद्गदास्तनौ॥
तथाहिंसाद्यनुष्ठानात् स्थैर्यनैर्मल्यकारकात्।
जायन्ते शुभकल्लोलाः पथ्यादिव सुखासिकाः॥
चित्तजालोपसंहारि यत्पुनर्ध्यानमीदृशम्।
औदासीन्यं मतं तद्धि निर्जरामात्रकारणम्॥
तदत्र तन्निरोद्धव्यं चित्तजालं मुमुक्षुणा।
तच्च नानाविधोपायै रागद्वेषादिसूदनैः॥
ततो यत्तीर्थिकैः मोक्षो यः प्रोक्तो जिनशासने।
भावतीर्थे स्थितः सोऽयं मध्ये-भावो न दुष्यति॥

यतः।

बहिर्विशुद्धकर्तव्याः साधयन्ति मुमुक्षवः।
मोक्षं नानाविधैर्ध्येयैर्माध्यस्थ्यं तत्र कारणम्

किं तु।

परमात्मादयो ध्येया यथा संवेगकारिणः ।
जीवस्य चेतसोऽत्यर्थं न हि बिन्द्वादयस्तथा ॥
आलम्बनविशेषेण चेतसः सुन्दरेतरम् ।
स्वरूपं जायते सिद्धं स्वसंवेदनतो ह्यदः ॥

किं तु ।

नानारुचित्वाज्जीवानां कस्यचित्स्यात्कथंचन ।
चेतःशुद्धिरतश्चित्रा मौनीन्द्री मार्गदेशना ॥
ततो विशुद्धचित्तानां शुद्धमाध्यस्थ्यशालिनाम् ।
केषांचित्तेऽपि बिन्द्वाद्याः सुविशुद्धेर्विधायकाः ॥

इतरथा ।

तत्त्वं विज्ञाय ये मूढाः प्रवर्तन्तेऽर्थकामयोः ।
तद्बलेनैव निश्चिन्ता योगिनोऽत्र वयं किल ॥
तेषां ज्ञानसुलूकानां यादृक् सूर्योदयेऽमले ।
कोटरान्तःप्रविष्टानां तादृग् ज्ञेयं महात्मभिः ॥
ते ह्यज्ञानतमोलिप्ताः सद्दृष्टिप्रसरं विना ।
कौशिका इव लीयन्ते नितरां भवकोटरे ॥
योगे ज्ञानांशुदीप्ताङ्गे परिस्फुरति भास्करे ।
हृदये हि कुतस्तिष्ठेदर्थकामस्पृहातमः ॥
तस्मान्निर्मलचित्तानां वैराग्याभ्यासशालिनाम् ।
चित्रमालम्बनं प्राप्य माध्यस्थ्यं च प्रवर्तते ॥
अतोऽमी ये पुरा प्रोक्ता ध्येयभेदाः कुतीर्थिकैः ।
निष्यन्दबिन्दुभूतास्ते सुजैनमतवारिधेः ॥

तत्कूटवैद्यशालावदन्यदर्शनमालिका ।
स्वरूपेण सदा ज्ञेया कर्मरोगविवर्धनी ॥
तत्रस्थानां पुनर्यः स्यात्कर्मरोगचयः क्वचित् ।
विशेषो वा स विज्ञेयः सर्वज्ञवचनाद्गुणः ॥
इयं सद्वैद्यशालावदाकार्श्च तन्मतात्मिका ।
कर्मरोगहरी ज्ञेया द्वादशाङ्गी सुसंहिता ॥
यद्दोषच्छेदनं लोके किंचित्स्यात्सुन्दरं वचः ।
तद्गुणाकररूपायां सर्वमस्यां प्रतिष्ठितम् ॥
यत्पुनर्बुद्धिलेपेन विना हिंसादिसुन्दरम् ।
समस्तपापनाशस्य स्मृतिमात्रेण देवयोः ॥
मोक्षमित्यादिकं पूर्वं तीर्थ्यैस्तत्त्वबहिश्चरैः ॥
निर्युक्तिकं वचोमात्रं तत्तु हास्यं विवेकिनाम् ॥

ततश्चेदं गुरोर्वाक्यमाकर्ण्य पुनरब्रवीत् ।
पौण्डरीकमुनिस्तत्त्वविस्पष्टकरणेच्छया ॥
यथा नाथ वयं ब्रूमो व्यापकं जिनदर्शनम् ।
तथा तीर्थ्या यदि स्वीयं ब्रूयुस्तत्र किमुत्तरम् ॥
तथाहि निजबुद्ध्या ते सर्वे सर्वज्ञवादिनः ।
परतीर्थतिरस्काराः स्वीयदर्शनगर्विताः ॥
देवे धर्मे निजे तत्त्वे मोचे चाविष्टबुद्धयः ।
तेऽन्यदर्शनमस्तीति स्वप्नान्तेऽपि न जानते ॥

एवं च स्थिते ।

यथा ते दर्पितास्तीर्थ्या दर्शनेन यथायथम् ।

तथा नाथ वयं स्वेन को विशेषः परस्परम् ॥
ततो विनिर्णयं नाथाः सुन्दरं कर्तुमर्हथ ।
मच्चित्तं जायते येन सुमेरुशिखरोपमम् ॥
ततो विमलसद्दन्तदीधितिच्छुरिताधरः ।
तन्निर्णयविधानाय गुरुरित्यमभाषत ॥
एतन्निवेदितं व्यापि मया तत्सुविनिश्चितम् ।
यत्सम्यग्दृष्टिभिर्दृश्यं भाविकं जैनदर्शनम् ॥
तत्रोपलब्धे जीवानां स्वयमेव मलोद्भवाः ।
एता हि विनिवर्तन्ते मोहिन्यो भेदबुद्धयः ॥
एकः प्रभाषते देवः सर्वज्ञः सर्वदर्शनः ।
वीतरागो गतद्वेषो महामोहादिसूदनः ॥
सकलो भुवनभर्तासौ सशरीरो निगद्यते ।
निष्कलो मोक्षमापन्नः स एव भुवनप्रभुः ॥
इदं स्वरूपं निश्चित्य यैः स देवोऽवधारितः ।
तेषां नानाविधाः शब्दा भेदबुद्धिं न कुर्वते ॥

तथाहि ।

स बुद्धः प्रोच्यतां लोके ब्रह्मा विष्णुर्महेश्वरः ।
जिनेश्वरोऽपि वा हन्त नार्थभेदस्तथापि च ॥
य एवं तं परिज्ञाय भजेत्तस्यैव स प्रभुः ।
ममास्ति तव नास्तीति सर्वो मत्सरविभ्रमः ॥
यस्यैव भावतोऽभीष्टस्तस्यासौ कुरुते शिवम् ।
न शङ्करेण पानीयं चण्डालस्यापि वार्यते ॥

निःशेषक्लेशनिर्मुक्तः स समः सर्वदेहिनाम्।
विज्ञातः कुरुते मोचं तातीया कस्य जाह्नवी॥
संसारिणां हि नानात्वमात्मनां कर्मनिर्मितम्।
कर्मप्रपञ्चनिर्मुक्तः परमात्मा न भिद्यते॥
स देवः परमात्माख्यः शुद्धबोधप्रभावकः।
अशरीरोऽप्यनन्तेन वीर्येण भवमोचकः॥
विज्ञातो यैर्महाभागैः प्रतिपन्नश्च भावतः।
तेषां निर्णीतरूपाणां विवादः कुत्र कारणे॥

केवलं।

ये कल्पयन्ति तं मूढा रागद्वेषमलाविलम्।
ते ज्ञाततत्त्वरूपैस्तैर्वार्यन्ते करुणापरैः॥
तदेवं तात्त्विकस्तावद्देवस्तुभ्यं निवेदितः।
यः प्रमाणप्रसिद्धत्वादेकः सर्वप्रवादिनाम्॥
धर्मोऽप्येको जगत्यत्र विज्ञेयः पारमार्थिकः।
कल्याणमालिकाहेतुः शुद्धः शुद्धगुणात्मकः॥
क्षमामार्दवसच्छौचतपःसंयमसुक्तयः।
सत्यब्रह्मार्जवत्यागा एते धर्मगुणा दश॥
दशलक्षणकं धर्ममेनं विज्ञाय पण्डिताः।
स्वर्गापवर्गदातारं विवदन्ते न केनचित्॥
यस्तस्य वैपरीत्येन कल्प्यते मूढमानवैः।
धर्मस्तं वारयन्तीमे करुणाक्रान्तबुद्धयः॥
तदेष धर्मः सर्वत्र यः प्रमाणप्रतिष्ठितः।

एकः स वर्णितस्तुभ्यं पौण्डरीकमुने मया ॥
तथाच मोक्षमार्गो यः संगीतस्तत्त्वसंज्ञकः ।
सोऽप्येक एव विज्ञातः पण्डितैः परमार्थतः ॥

तथाहि ।

मुक्तं कैश्चित्तदाख्यातं क्लेशाशुद्धिस्तथापरैः ।
शक्तिस्तथात्मनो वीर्यं यल्लभ्यं योगिभिः परम् ॥
तदिदं शब्दभेदेन भिद्यते नार्थतो ध्रुवम् ।
तथास्याचरणेऽप्यत्र ध्वनयो भेदिनः परम् ॥

यतः ।

अदृष्टकर्मसंस्कारा पुण्यापुण्ये शुभाशुभे ।
धर्माधर्मौ तथा पाशाः पर्यायास्तस्य कीर्तिताः ॥
एतच्च सत्त्ववीर्यादिशब्दवाच्यं यदिष्यते ।
इदं स्वहानिवृद्धिभ्यां कारणं भवमोक्षयोः ॥
क्षीयमाने भवन्त्यस्मिन् भवे सर्वा विपत्तयः ।
वर्धमाने पुनः सर्वाः संभवन्ति विभूतयः ॥
इदमेव चतुष्कोटिविशुद्धमपरे विदुः ।
ऐश्वर्यज्ञानवैराग्यधर्मरूपास्तु कोटयः ॥
रजस्तमोभ्यां तत्तत्त्वमावृतं न प्रकाशते ।
विपरीतास्तु जायन्ते तस्यैश्वर्यादयो गुणाः ॥

यत्र ।

रजोवशादवैराग्यमनैश्वर्यं तमोवशात् ।
तमसश्चैव माहात्म्यादज्ञानाधर्मसंभवः ॥

यत्रैकं तत्र नियमाद्वितीयमपि विद्यते।
रजस्तमोभ्यामेवं हि भवितव्यं सदा सह ॥
सर्वथा मलिनं सत्त्वं हेतुः संसारदुःखयोः।
तदेव विमलं वीर्यं कारणं सुखमोक्षयोः ॥
तल्लाभार्थमिमे सर्वे तपोध्यानव्रतादयः।
विचित्रा हेतवो लोके तत्तत्त्वं पारमेश्वरम् ॥
ज्ञानं तद्गोचरं यस्माच्छ्रद्धानं च तदाश्रयम्।
क्रिया च वर्धनी तस्य मोक्षमार्गः स कीर्तितः ॥
एतच्च तत्त्वं यैः सत्त्वैर्विज्ञातं शुद्धबुद्धिभिः।
मेरुनिष्कम्पचित्तानां तेषां भ्रान्तिः कुतस्तिका ॥
केवलं वारयन्तीमे मूढलोकं कृपापराः।
तत्त्वमार्गात्परिभ्रष्टं यान्तमर्दवितर्दकम् ॥
तदिदं ते समासेन तत्त्वं साद्भाविकं मया।
आख्यातं यद्विनिश्चित्य घटन्ते चारुयोगिनः ॥
इदं चाविचलं लोके यथैकं मागतः स्थितम्।
तथा मोक्षोऽप्यनेनैकसाध्यः महाद्सुन्दरः ॥
आत्मनोऽनन्तसद्बोधदर्शनानन्दवीर्यिणः।
अमूर्तस्याचिद्रूपस्य स्वरूपस्थितिलक्षिणः ॥
संसिद्धिर्निर्वृतिः शान्तिः शिवमक्षयमव्ययम्।
अमृतं ब्रह्म निर्वाणं ध्वनयस्तस्य वाचकाः ॥
समस्तमितिकर्तव्यं श्रेयःप्रभृत्यर्थमीरितम्।
श्रेयःप्राप्तिरस्तु मोक्षाय स चैवंविधलक्षणः ॥

तद्बुद्धितारतम्येन यद्देवमनुजादिषु ।
अनुषङ्गात्सुखं तत्तु हेयपक्षे प्रतिष्ठितम् ॥
तदेवंविधसद्देवधर्मतत्त्वनिवेदकम् ।
यच्छास्त्रमीदृशस्यैव मोक्षस्य प्रतिपादकम् ॥
दृष्टेष्टाव्याहतं सर्वं प्रमाणेन प्रतिष्ठितम् ।
तदेकमिह सर्वत्र व्यापकं परिकीर्तितम् ॥
इमं च तस्य भावार्थं परिज्ञाय विशेषतः ।
तस्यैर्विविधैः शब्दैर्यथेष्टमभिधीयते ॥
वैष्णवं वा यदुच्येत ब्राह्मणं वा निगद्यताम् ।
माहेश्वरं वा गीयेत बौद्धं वाप्यभिधीयताम् ॥
जैनेन्द्रं वा निवेद्येत ज्ञातार्थैरिह मानवैः ।
अविनष्टे हि भावार्थे शब्दभेदो न दुष्यति ॥
अर्थेन हि प्रसीदन्ति शब्दमात्रेण नो बुधाः ।
संतुष्येद्देव इत्युक्तो मूर्ख एव निरर्थकम् ॥

एवं च स्थिते ।

एवंविधार्थं चेत्तेऽपि वदेयुस्तीर्थिकाः स्वकम् ।
दर्शनं व्यापकत्वेन न विवादोऽस्ति तैः सह ॥
आच्छादितानां मोहेन पौण्डरीकमहामुने ।
बहूनि दर्शनानीति मोहोऽयं संप्रवर्तते ॥
तस्यापाये पुनः पुंसां सद्बुद्धेर्गोचरं गते ।
अत्र सद्दर्शने नूनं भेदबुद्धिर्निवर्तते ॥
आत्मा साधारणो ह्येष सर्वेषामपि वादिनाम् ।

समलो न विजानीते मोक्षमार्गं यथास्थितम् ॥
मलक्षये पुनस्तस्य मोक्षमार्गो यथास्थितः ।
यत्र तत्र स्थितस्यापि हठादेव प्रकाशते ॥
ततश्चेदं विनिश्चित्य दर्शनं पारमार्थिकम् ।
स मुञ्चेदाग्रहं स्वीयं तथा चोक्तं मनीषिभिः ॥
रिक्तस्य जन्तोर्जातस्य गुणदोषानपश्यतः ।
विलब्धा बत केनामी सिद्धान्तविषमग्रहाः ॥
अहं चारुरचारुस्त्वं मदीयं चारु दर्शनम् ।
न त्वदीयमिति स्पष्टं मत्सरस्य विजृम्भितम् ॥

किं बहुना ।

यावन्तो देहिनो लोके यथावस्थितदृष्टयः ।
ते सर्वेऽप्यत्र वर्तन्ते तात्त्विके शुद्धदर्शने ॥
निर्नष्टममकारास्ते विवादं नैव कुर्वते ।
अथ कुर्युस्ततस्तेभ्यो दातव्यैवैकवाक्यता ॥
ये त्वक्षीणमलत्वेन विपरीतविलोकिताः ।
स्वतीर्थं व्यापकत्वेन संगिरन्ते समत्सराः ॥
तेषां जात्यन्धकल्पानामपकर्णनमुत्तरम् ।
अथवा तत्त्वमार्गं ते बोधनीयाः प्रयत्नतः ॥
न मोहदलनादन्यो ह्युपकारो महत्तमः ॥

अतो यदुक्तं भवता । यदुत

स्वतीर्थं व्यापि चेत्तीर्थ्या ब्रूयुस्तत्र किमुत्तरम् ।
तदिदं ते मयाख्यातं प्रतिघातविवर्जितम् ॥

यावद्दृष्टिविवादाङ्गनिःशेषनयसागरे ।
कुदृष्टिसरितः सर्वाः पतन्तीर्द्रक्ष्यसि स्फुटम् ॥
तावत्ते सर्वसन्देहा यास्यन्ति प्रलयं तदा ।
ज्ञास्यसि त्वं यथा नास्ति सर्वज्ञवचनात्परम् ॥
ततो निर्नष्टसन्देहः प्रपद्य गुरुभाषितम् ।
संजातः पौण्डरीकोऽसौ विशेषागमतत्परः ॥
कालक्रमेण संपन्नो द्वादशाङ्गस्य पारगः ।
समन्तभद्रसूरीणामसौ पादप्रसादतः ॥
अनन्तगमपर्यायः सातिशेषः सविस्तरः ।
सर्वज्ञागमसद्भावः सर्वोऽस्य मनसि स्थितः ॥
ततोऽनुयोगोऽनुज्ञातः सगच्छस्तस्य सूरिभिः ।
दत्तमाचार्यकं स्वीयं कृतमानृण्यमात्मनः ॥
आचार्यस्थापनायां च तस्यामरनरैर्मुदा ।
कृता विधानतो देवसङ्घपूजा दिनाष्टकम् ॥
ततः समन्तभद्राख्या हित्वा स्वं देहपञ्जरम् ।
ते सूरयः शिवं प्राप्ता कृतकृत्या महाधियः ॥
अथावाप्तावधिज्ञानो मनःपर्यायसंयुतः ।
जातः स पौण्डरीकाख्यः सूरिः शासनदीपकः ॥
स भव्यपौण्डरीकाणां सूर्यवद्देशनांशुभिः ।
विजहार हरन्निद्रां महामोहतमोमयीम् ॥
अपरापरदेशेषु सुचिरं मुनिपर्षदा ।
विहृत्य शिष्यवर्गं च निष्पाद्य गुणभूषितम् ॥

दानशीलतपोभावधर्मयामचतुष्टयम्।
पालयित्वा दिनाकारं प्रकाशजिनशासनम्॥
विज्ञायायुष्कपर्यन्तं पौण्डरीकदिवाकरः।
ततः संलेखनाव्याजं सन्ध्यारागं चकार सः॥
स्वस्थाने स्थापितस्तेन सूरिः स्वभ्यस्तसत्क्रियः।
साधुर्धनेश्वरो नाम निःशेषागमपारगः॥
ततस्तं विहितानुज्ञं पुरस्कृत्य धनेश्वरम्।
आचार्यं निजगच्छं च सोऽनुशिष्टिं ददाविमाम्॥
धन्यस्त्वं येन विज्ञातः संसारगिरिदारकः।
वज्रवद्दुर्भिदश्चायं महाभाग जिनागमः॥
इदं चारोपितं यत्ते पदं सत्सम्पदां पदम्।
अत्युत्तममिदं लोके महासत्त्वनिषेवितम्॥
धन्येभ्यो दीयते तात धन्या एवास्य पारगाः।
गत्वास्य पारं ते धन्याः पारं गच्छन्ति संसृतेः॥
भीतं संसारकान्तारात्समर्थस्य विमोचने।
साधुवृन्दमिदं सर्वं भवतः शरणागतम्॥
संप्राप्य गुणसन्दोहं निर्मलं पारमेश्वरम्।
त्राणं संसारभीतानां धन्याः कुर्वन्ति देहिनाम्॥
तदेते भावरोगार्तास्त्वं च भावभिषग्वरः।
अतस्त्वयामी सज्जीवा मोचनीयाः प्रयत्नतः॥
शृणुष्व मोचयत्येतानप्रमत्तो हितोद्यतः।
यद्भवद्यो दृढं मोचे निःस्पृहो भवचारके॥

कल्पोऽयमिति कृत्वा तमीदृशोऽयं प्रचोदितः।
निजप्रख्यानुरूपं हि चेष्टितव्यं सदा त्वया॥
अनुशिष्टिं विधायेत्थं सूरेस्तस्य कृतानतेः।
सूरयः पौण्डरीकाख्याः प्राहुः शिष्यगणं ततः॥
युष्माभिरपि नैवैष सुखवोहित्थसन्निभः।
संसारसागरोत्तारी विमोक्तव्यः कदाचन॥
प्रतिकूलं न कर्तव्यमनुकूलतरैः सदा।
भाव्यमस्य गृहत्यागो येन वः सफलो भवेत्॥
अन्यथा जन्तुबन्धूनामाज्ञालोपः कृतो भवेत्।
ततो विडम्बना शेषा भवेदत्र परत्र च॥
ततः कुलवधून्यायात्कार्ये निर्भर्त्सितैरपि।
यावज्जीवं न मोक्तव्यं पादमूलममुष्य भोः॥
ते ज्ञानभाजनं धन्यास्ते सद्दर्शननिर्मलाः।
ते निष्प्रकम्पचारित्रा ये सदा गुरुसेविनः॥
एवं वदत्सु वीरेषु तेषु सद्धर्मसूरिषु।
तथेति तद्वचः सर्वं प्रपद्य प्रणतिं गताः॥
ततो विहितकर्तव्यः परित्यज्य गणं क्रमात्।
स सूरिः पौण्डरीकाख्यो गतः सद्गिरिकन्दरम्॥
अस्थिचर्मावशेषेण वपुषा धीरमानसः।
परीषहतितिक्षार्थं स्थितः शुद्धशिलातले॥

तत्र च।

कृतपञ्चनमस्कारो भावसारं मुहुर्मुहुः।

स दत्तालोचनः सम्यक् सिद्धानाधाय चेतसि ॥
प्रणिधानं महाभागः कारणं धर्मशुक्लयोः।
ध्यानयोस्तीव्रसंवेगश्चकारेत्थं विशुद्धधीः ॥
ज्ञानदर्शनचारित्रवीर्याराधनतत्परः।
एक एवान्तरात्मा मे व्युत्सृष्टमधुनापरम् ॥
रागद्वेषमहामोहकषायमलधूनकः।
विशुद्धः साम्प्रतं वर्ते स्नातकोऽहं समाहितः ॥
क्षाम्यन्तु सर्वसत्त्वा मे क्षान्तिर्मे सर्वजन्तुषु।
निर्वैरः साम्प्रतं शान्तः क्षेत्रज्ञो मम वर्तते ॥
यदन्तर्यामिनः किंचिद्यद्भिर्भूतं पुरा मया।
गृहीतं स्वीयबुद्ध्या तद्व्युत्सृष्टमधुनाखिलम् ॥
तीर्थेश्वरा महात्मानः सिद्धा निर्धूतकल्मषाः।
सद्धर्मः साधवश्चेति भवन्तु मम मङ्गलम् ॥
एतानेवोत्तमत्वेन गृह्णामि भुवनेऽप्यहम्।
एतानेव प्रपद्येऽहं शरणं भवभीरुकः ॥
निवृत्तसर्वकामोऽहं मनोजालनिरोधकः।
बन्धुः समस्तभूतानां सूनुवत्सर्वयोषिताम् ॥
स्थितः सामायिके शुद्धे सर्वयोगनिरोधिनि।
व्युत्सृष्टचेष्टं मां सिद्धाः पश्यन्तु परमेश्वराः ॥
यच्च दुश्चरितं किंचिदिहान्यत्र च मे भवेत्।
संजातं जातसंवेगस्तन्निन्दामि पुनः पुनः ॥
सर्वोपाधिविशुद्धोऽहं ममैयमधुना गतिः।

साक्षात्केवलिनस्तत्त्वं भगवन्तो विजानते ॥

सर्वथा ।

भवप्रपञ्चविरतो मोक्षैकगतचेतसा ।
समर्पितो मयात्मैष जिनानां जन्मनाशिनाम् ॥
त एव महात्मानः सद्भावार्पितचेतसः ।
स्वग्रस्ताशेषकर्मांशच्छेदं कुर्वन्तु मेऽधुना ॥
इत्येवं प्रणिधानेन स महात्मा शिलातले ।
व्युत्सृष्टकायो निःसङ्गः पादपोपगमे स्थितः ॥
परीषहचमूं सर्वां विनिर्जित्य स्वतेजसा ।
तिर्यग्देवमनुष्याणामुपसर्गांश्च भैरवान् ॥
प्रनष्टभूरिकर्मांशो धर्मध्यानमनुत्तमम् ।
अतिलंघ्य ततः शुक्लं पूरयामास सत्तमम् ॥
अशेषकर्मजालं च वीर्यज्वलनदीपितम् ।
विधाय क्षपकश्रेणामारूढः क्रमशो दहन् ॥
ततो भस्मीकृते वीर्याद्घातिकर्मचतुष्टये ।
संप्राप्तः केवलालोकं सोऽनन्तज्ञानगोचरम् ॥
ततः प्रादुरभूत्तत्र देवसङ्घश्चतुर्विधः ।
आकृष्टः सद्गुणैस्तस्य पूजार्थं हि महात्मनः ॥
ततो दुन्दुभयो दिव्या दध्वनुर्मधुरस्वनाः ।
जगुः किंनरसङ्घाता ननृतुर्देवयोषितः ॥
अपनिन्ये रजः सर्वं ववृषे गन्धवारि च ।
प्रकीर्यते स्म देवौघैः पुष्पवृष्टिर्मनोहरा ॥

भ्रमद्भ्रमरविस्तारतारझङ्कारबन्धुरः ।
स प्रदेशः क्षणाज्जातो दिव्यगन्धैर्विसर्पिभिः ॥
गोशीर्षचन्दनालिप्तं दिव्यसद्धूपवासितम् ।
चक्रुर्देहं मुनीन्द्रस्य देवाः सद्भक्तिनिर्भराः ॥
तथा लसत्किरीटास्ते तुष्टुवुश्च मुनीश्वरम् ।
दधुः पादरजस्तस्य शिरसा पापशुद्धये ॥
एवं प्रमोदसन्दर्भनिर्भरे वैबुधे गणे ।
पार्श्वस्थे स महाभागः समुद्घातमुपागतः ॥
ततः समीकृताशेषकर्मांशः क्षणमाचकम् ।
स्थित्वा योगचयं धीरो निरुरोध क्रमेण सः ॥
ततश्च तन्निरोधेन शैलेशीं प्राप्य सत्क्रियाम् ।
देहचयविनिर्मुक्तः स प्राप परमं पदम् ॥
ततो विशेषपूजां ते विधायानन्दनिर्भराः ।
गता देवा निजस्थानं तद्भक्त्या धूतकल्मषाः ॥

अन्यच्च ।

स्वक्रमेणामुना सापि महाभद्रा प्रवर्तिनी ।
हत्वा कर्म गता मोक्षं किं तु भक्तपरिज्ञया ॥
तथा सुललितासाध्व्यास्तैस्तपोभिस्तथाविधैः ।
क्षाराद्यैरिव संजातं चित्तरत्नं सुनिर्मलम् ॥
ततः सापि क्रमेणेत्थं संत्यज्य तनुपञ्जरम् ।
गता कर्मचयं हत्वा मोक्षं भक्तपरिज्ञया ॥
ते तु श्रीगर्भराजाद्याः साधवः सुतपोधनाः ।

सुमङ्गलाद्याः साध्व्यश्च देवलोकमुपागताः ॥

किं बहुना।

यावद्भिर्गन्तुभिस्तत्र मनोनन्दनकानने।
समन्तभद्रसूरीणां पादमूलमुपागतैः ॥
इदमाकर्णितं धन्यैरनुसुन्दरचेष्टितम्।
दूरस्थैरपि खेटेन कौतुकेनापि विस्मितैः ॥
तावतां भव्यजन्तूनां श्रुतेन जनितं तदा।
भवप्रपञ्चविरतं मनो नूनमनेन भोः ॥
ततः कैश्चिल्लता दीक्षा कैश्चिद्धर्मो गृहस्थितैः।
केचित्सम्यक्त्वमापन्नाः केचित्संवेगमागताः ॥

एवं च स्थिते।

भवद्भिरपि विज्ञातमेवं कथयतो मम।
भो भो भव्याः सभावार्थमिदं वृत्तं महात्मनः ॥
ततोऽनुष्ठीयतां तूर्णं यस्मात्तस्यास्य सन्निभम्।
येनैष जायते सद्यः सफलो मे परिश्रमः ॥
यतस्तुल्यः समस्तानां प्रायः संसारचारिणाम्।
जीवानामेष वृत्तान्तो मया योऽत्र निवेदितः ॥
तदेतदपि संश्रुत्य चरितं निजसन्निभम्।
न युज्यतेऽत्र भो भव्या विधातुमवधीरणा ॥

तथाहि।

यथासौ पौण्डरीको जम्बूद्वीपे पूर्वविदेहवर्तिनि सुकच्छवि-
जयान्तर्गते शङ्खपुरे कमलिनीश्रीगर्भराजपुत्रतयापि जातस्तेन

भगवता समन्तभद्रसूरिणा तस्यैव शङ्खपुरस्य सम्बन्धिनि चित्तरमकाननान्तर्भूते मनोनन्दने चैत्यभवने वर्तमानेन भूरिभव्यानां पुरतस्तत्पक्षपातेन मनुजगतावेष राजदारकोऽनुकूलाभ्यां कालपरिणतिकर्मपरिणामाभ्यां सुमतिर्भव्यपुरुषो जनित इति हत्वा भविष्यति निःशेषगुणाधार इति ख्यापितस्तदिदं सर्वेषां लघुकर्मणां भव्यमनुष्याणां समानं वर्तते । यतो नानाक्षेत्रोत्पन्ना अपि सर्वे मनुजगतौ वर्तन्ते बहिरङ्गविविधजननीजनका अपि सर्वे परमार्थतस्ते कालपरिणतिकर्मपरिणामयोः पुत्रा भवन्त्येव बहुविधाभिधाना अपि सुमतिभव्यपुरुषत्वं न व्यभिचरन्तीति सदागमः सर्वदा ख्यापयति ॥ यथा च सा महाभद्रा समन्तभद्रसूरिवचनेनादित एव प्रतिबुध्य प्रव्रजिता प्रज्ञाविशाला जाता तथैवेहोत्तमपुरुषाः सर्वज्ञागमोपदेशात् संजाततत्त्वावबोधाः प्रथममेव साधवः संपद्यन्ते त एव च परमार्थतः प्रज्ञाविशाला इति । यथा च तस्याः सुललितायाः पूर्वभवाभ्यासवशेन संपन्नस्तया महाभद्रया सह स्नेहसम्बन्धः स च गुणकरोऽभूत् तथेह गुरुकर्मणामपि केषांचिज्ज्ञाविभद्राणां भव्यजन्तूनां कथंचिद्भवत्येव सुसाधुभिः सार्धं घटना सा च भवत्येव तेषां गुणकरी । सम्यक्सम्पादको हि कल्याणमित्रयोगो जनको योग्यताया आकरो गुणरत्नानां सूचको भाविकल्याणपरंपरायाः अमृतयोग इव निर्घातकः कर्मविषविषमारकस्य ॥ यथा च तया महाभद्रया तस्याः सुललितायाः समन्तभद्रसूरिद्वारेण सदागमे भक्तिर्जनिता पौण्डरीकस्य च तथैव धात्रीभावमिवात्मनो दर्शयन्त्या कृतश्च तेन भगवता सह परिचयः तथा-

केवलं तथा प्रतिबोध्यमाना अगृहीतसङ्केता भविष्यथ यूयं गलता-लुघोषका गुरूणां। तथापि गुरुभिः प्रतिबोधनीया एव युष्मा-भिरपि प्रतिबोद्धव्यमेव। यथा स्वदुश्चरितपश्चात्तापेन सद्भूतगुण-पक्षपातभारो निखिलकर्ममलविलयकारी सदागमबहुमानस्तस्याः सुलक्षितायाः प्रतिबोधकारणं संपन्नः तथा भवद्भिरपि तथैव स विधेयो येन संपद्यते भवतामपि विशिष्टतत्त्वावबोध इति।

इह पै।

श्रेयांसब्रह्मदत्तादिजातिस्मरणतुल्यकः।
ज्ञेयोऽनुसुन्दरादीनां तदुत्पादः सयुक्तिकः॥

एतच्चागमे मतिवासनायाः

असंख्यकालोऽनुज्ञातो वचो नास्ति च वारकम्।
सुभूरिभवभावेऽपि तच्चास्ति विरोधिता॥

आदितः पुनरारभ्य प्रस्तावभावार्थोऽयम्।

कुशलकर्मविपाकवशादहो जगति किंचिदिहास्ति न दुर्लभम्।
सकलभोगसुखाधिकसुन्दरैः शमसुखं प्रतिभाति च धीमताम्॥
परमकोटिगतोऽपि पुनर्नरः प्रबलतामुपगम्य निपात्यते।
खलमलैरतिभीमभवोदधौ यदि न वेत्ति स तां तदरातिताम्॥
नरकयोग्यकृताशुभकर्मकः पुनरुपैति शिवं गतकल्मषः।
यदि सदागमबोधपरायणः क्षणमपि प्रकरोति शुभं नरः॥
इदमवेत्य मनोमलवर्जनं लघु विधाय सदागमसेवनम्।
कुरुत तेन हि याथ शिवं यथागमवशादनुसुन्दरपार्थिवः॥

अन्यच्च।

नितः समस्तोऽप्यस्य भवप्रपञ्चः। तत्परिपाकलभ्यस्तु विच्छेदको प्रपञ्चस्यास्य परमेश्वरानुग्रहः। स हि कारणं विमलज्ञानस्य। तद्बलादेवायमात्मा जानीते यदुत परमेश्वराज्ञाकरणजनिते मम सुखदुःखे भवमोक्षौ च लेश्याविशोधनं तदाज्ञाकरणं लेश्यामालिन्यजननं तदाज्ञाविराधनं। ततः प्रवर्तते लेश्याविशोधकेषु सद्भूतगुणेषु निवर्तते लेश्यामालिन्यजनकेभ्यः समस्तदोषेभ्यः। ततोऽत्यन्तविशोधितां लेश्यामपि विहाय भवत्यलेश्यः। अतः स्वरूपे स्थितः स एवात्मा संपद्यते परमेश्वरः परमात्मेति। यथा च तदनुसुन्दरचरितं तस्य भगवतः समन्तभद्रसूरेः प्रत्यक्षं महाभद्रा च कथ्यमानं तद्बुध्यते स्म तथा संसारिजीवचरितं भगवतः सर्वज्ञागमस्य प्रतीतं सुसाधवस्य निवेद्यमानं प्रज्ञाविशालतया स्वत एव बुध्यन्ते परेभ्यश्च प्रतिपादनसमर्था भवन्ति। यथा च तेन पौण्डरीकेण सुललितासुद्दिश्य × × × × × × × × × × × × × × तदनुसुन्दरराजचरितमवगतं विहितं च तदनुगमानुरूपं तथा यूयमपि भो भव्या इदं संसारिजीवचरितमनुभवागमसिद्धमवबुध्यध्वं अवबोधानुरूपं चाचरत विरहयत कषायान् स्थगयतास्रवद्वाराणि निराकुरुतेन्द्रियगणं दलयत सकलं मनोमलजालं पोषयत सद्भूतगुणगणं मुञ्चत भवप्रपञ्चं यात तूर्णं शिवालयं येन यूयमपि सुमतयो भव्यपुरुषा भवथ। अथ नास्ति भवतां तादृशी लघुकर्मता. ततो यथा सुललिता भूयो भूयः प्रचोदिता मत्पथं मुक्तमुक्तनिर्भर्त्सिता बहुविधमुपालब्धा पुनः पुनः स्मारिता सती गुरुकर्मिकापि प्रतिबुद्धा तथा बुध्यध्वं।

केवलं तथा प्रतिबोध्यमाना अगृहीतसङ्केता भविष्यथ यूयं गलतालुशोषका गुरूणां। तथापि गुरुभिः प्रतिबोधनीया एव युष्माभिरपि प्रतिबोद्धव्यमेव। यथा स्वदुश्चरितपश्चात्तापेन सद्भूतगुणपक्षपातसारो निखिलकर्ममलविलयकारी सदागमबहुमानस्तस्याः सुललितायाः प्रतिबोधकारणं संपन्नः तथा भवद्भिरपि तथैव स विधेयो येन संपद्यते भवतामपि विशिष्टतत्त्वावबोध इति।

इह च।

श्रेयांसमहाद्दत्तादिजातिस्मरणतुल्यकः।
ज्ञेयोऽनुसुन्दरादीनां तदुत्पादः सयुक्तिकः॥

अतश्चागमे मतिवासनायाः

असंख्यकालोऽनुज्ञातो वचो नास्ति च वारकम्।
सुभूरिभवभावेऽपि तस्मान्नास्ति विरोधिता॥

आदितः पुनरारभ्य प्रस्तावभावार्थोऽयम्।

कुशलकर्मविपाकवशादहो जगति किंचिदिहास्ति न दुर्लभम्।
सकलभोगसुखाधिकमुच्चकैः शमसुखं प्रतिभाति च धीमताम्॥
परमकोटिगतोऽपि पुनर्नरः प्रबलतामुपगम्य निपात्यते।
खलमहैरतिभीमभवोदधौ यदि न वेत्ति स तां तदरातिताम्॥
नरकयोग्यकृताशुभकर्मकः पुनरुपैति शिवं गतकल्मषः।
यदि सदागमबोधपरायणः क्षणमपि प्रकरोति शुभं नरः॥
इदमवेत्य मनोमलवर्जनं लघु विधाय सदागमसेवनम्।
कुरुत तेन हि याथ शिवं यथागमवशादनुसुन्दरपार्थिवः॥

अन्यच्च।

इदमनन्तभवभ्रमसूचकं मलवशादनुसुन्दरचेष्टितम् ।
यदिह जातमतः परिकीर्तितं मतिविकाशनकारि सुदेहिनाम् ॥
न च नियोगत एव भवेदियं गदितपद्धतिरत्र नरे नरे ।
सकृदवाप्य जिनेन्द्रमतं यतः शिवमितः प्रगता बहवो नराः ॥
त्रिचतुरेषु भवेषु तथापरे बहुमताः पुनरन्यविधानतः ।
विविधभव्यतया भवदारणं निजनिजक्रमतो दधिरे नराः ॥
तदिदमत्र सुगुह्यमहो जना यदि विधत्त परं परमादरम् ।
मलविशोधनमेव सुमेधसा लघु विधेयमिहाप्य जिनागमम् ॥
एतन्निःशेषमत्र प्रकटितमखिलैर्युक्तिगर्भैर्वचोभिः
प्रस्तावे भावसारं तदखिलमधुना शुद्धबुद्ध्या विचिन्त्य ।
भो भव्या भाति चित्ते यदि हितमनघं चेदमुच्चैस्तरां
वस्तत्तूर्णं मेऽनुरोधाद्विदितफलमलं स्वार्थसिद्धौ कुरुध्वम् ॥

उत्सूत्रमेव रचितं मतिमान्द्यभाजा
किंचिद्यदीदृशि मयात्र कथानिबन्धे ।
संसारसागरमनेन तरीतुकामै-
स्तत्साधुभिः कृतकृपैर्मयि शोधनीयम् ॥

इत्युपमितिभवप्रपञ्चायां कथायां
पूर्वसूचितमीलकवर्णनो नामाष्टमः प्रस्तावः समाप्तः ॥
॥ समाप्तेयमुपमितिभवप्रपञ्चकथेति ॥

---